वामनजयादित्यविरचिता

# काशिका

## न्यास-पदमञ्जरी-भावबोधिनी-सहिता

दशमो भागः

सम्पादकः
प्रो॰ जयशङ्कर लाल त्रिपाठी

तारा बुक एजेन्सी

प्राच्यभारतीग्रन्थमाला—३५
*Prācyabhāratīgranthamālā*—35

# का शि का

दशमो भागः

प्रो० जयशङ्कर लाल त्रिपाठी

*Prācyabhāratīgranthamālā*—35

# KĀŚIKĀ

**(A COMMENTARY ON PĀṆINĪ'S GRAMMAR)**

of

VĀMANA & JAYĀDITYA

with

**NYĀSA** or **KĀŚIKĀ-VIVARAṆAPAÑJIKĀ**

of

JINENDRABUDDHI

and

**PADAMAÑJARĪ**

of

HARADATTA MĪŚRA

with

**BHĀVABODHINĪ**

Hindi Exposition by Prof. JAYA SHANKAR LAL TRIPATHI

*Critically Edited by*

**Prof. Jaya Shankar Lal Tripathi**

Vyākaraṇācārya (Goldmedalist), M.A., Ph.D., D. Litt.

Department of Sanskrit, Faculty of Arts, Banaras Hindu University

*Foreword by*

**Prof. Bishwanath Bhattacharya**

Ex. Mayūrabhañja Professor & Head, Department of Sanskrit

Banaras Hindu University

**Volume X**

[ Adhyāyas 8.1-8.4 ]

**TARA BOOK AGENCY**

Varanasi

प्राच्यभारतीग्रन्थमाला—३५

श्रीमद्वामन-जयादित्य-विरचिता

पाणिनीयाष्टाध्यायीसूत्रवृत्तिः

# का शि का

श्रीमज्जिनेन्द्रबुद्धिविरचितया 'न्यासा'परपर्यायकाशिकाविवरणपञ्जिकाख्यया
विद्वद्वरश्रीहरदत्तमिश्रविरचितया 'पदमञ्जरी'-समाख्यया च व्याख्यया सहिता
प्रो॰ जयशङ्करलालत्रिपाठिविचितया 'भावबोधिनी' हिन्दीव्याख्यया च विभूषिता

सम्पादकः

**प्रो॰ जयशङ्कर-लाल-त्रिपाठी**

व्याकरणाचार्यः (लब्धस्वर्णपदकः), एम॰ ए॰, पी-एच्॰ डी॰, डी॰ लिट्॰

संस्कृत-विभागः, कला-संकाय, काशी-हिन्दू-विश्वविद्यालयः

प्रस्तावकः

**डॉ॰ विश्वनाथ-भट्टाचार्यः**

मयूरभञ्ज प्रोफेसर, भूतपूर्वः विभागाध्यक्षः, संस्कृत-विभागः, कला-संकायः

काशी-हिन्दू-विश्वविद्यालयः

## दशमो भागः

[ ८.१-८.४ अध्यायात्मकः ]

**तारा बुक एजेंसी**

वाराणसी

२००० तमः ख्रिष्टाब्दः ]    [ २०५७ तमो वैक्रमाब्दः

# PUBLISHER'S NOTE

We have the pleasure in presenting the Tenth Volume of Kāśikā with Nyāsa and Padamañjarī along with the new Hindi-exposition Bhāvabodhinī by Dr. Jaya Shankar Lal Tripathi.

The learned editor of the present edition Dr. Jaya Shankar Lal Tripathi, Professor in the Department of Sanskrit, Banaras Hindu University has taken great pains and care in editing the text and Hindi exposition. He has provided, in addition to Hindi exposition, critical notes and references which, we are sure, will render this edition more useful and valuable than all the earlier editions.

The whole work shall be completed in eleven volumes as follows :

| *Volume* | *Adhyāya/Pāda* | *to Adhyāya/Pāda* |
|---|---|---|
| I | 1/1 | 1/2 |
| II | 1/3 | 2/2 |
| III | 2/3 | 3/2 |
| IV | 3/3 | 4/1 |
| V | 4/2 | 5/1 |
| VI | 5/2 | 5/4 |
| VII | 6/1 | 6/2 |
| VIII | 6/3 | 7/1 |
| IX | 7/2 | 7/4 |
| X | 8/1 | 8/4 |
| XI | | Indices |

We hope that the present edition shall be appreciated and warmly welcomed by students and scholars alike.

'वाग्वै पराच्यव्याकृताऽवदत् तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते'।

—तै॰ सं॰ ६.४.७.३

तस्माद् यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।
तस्य प्रवृत्तितत्त्वज्ञस्तद्ब्रह्मामृतमश्नुते ।।

(भर्तृहरिः १।३१)

# FOREWORD

The present tenth volume of the Kāśikā covers the last eighth chapter of the Aṣṭādhyāyī. I feel happy to present the volume to the world of letters and congratulate the learned editor, Dr. Jaya Shankar Lal Tripathi, my colleague on the successful completion of the whole textual part of the scheme of publicaiton of the Kāśikā along with two commentaries and his own Hindi exposition of the *vṛtti*.

In the foreword of the earlier volumes, I drew the attention of the discerning scholars to the salient features of this edition and noted that flawlessly printed text, critical notes and carefully executed comprehensive Hindi rendering were the most laudable achievements of the editor. I am happy to note that Dr. Tripathi has maintained all these distinctions in the present volume as well.

One additional point, however, is noteworthy, a large number of sūtrās of the Aṣṭādhyāyī deals with accents and as such the Kāśikā quotes a number of vedic words and sentences by way of illustrations. Dr. Tripathi has taken pains to provide accent-marks in all Vedic illustrations. This has been a desiderative for long. The latest editor of the Kāśikā to use accentuation, to my mind, was Prof. Aryendra Sharma. Dr. Tripathi has revived the right tradition and all Sanskritists would appreciate how painstaking is the process. On this count also, Dr. Tripathi deserves unstinted praise.

"*Ā Paritoṣād viduṣām*" has been the established norm of a scholar's assessment in India and I am sure that Sankritists, especially those devoted to the study of Pāṇinian Vyākaraṇa will be happy with the present volume. In the end, I would urge the learned editor to complete the last XIth volume also of this ambitious scheme as early as possible.

Let Lord Viśvanātha provide him with the right *adhyavasāya*.

**Bishwanath Bhattacharya**
*Ex. Professor and Head*
Department of Sanskrit
Banaras Hindu University
Varanasi-5

# सङ्केत-सूची

| | | |
|---|---|---|
| अथर्व०, अ०वे० | = | अथर्ववेद |
| अ०-को० | = | अमरकोश |
| उ० सू० | = | उणादिसूत्र |
| ऋ० | = | ऋग्वेद |
| आप० श्रौ० | = | आपस्तम्ब श्रौतसूत्र |
| आश्व० गृ० | = | आश्वलायन गृह्य० |
| ऐ० ब्रा० | = | ऐतरेयब्राह्मण |
| का० वा० | = | कात्यायनवार्तिक |
| का० सं० | = | काठकसंहिता |
| ग० सू० | = | गणसूत्र |
| गो० ब्रा० | = | गोपथब्राह्मण |
| जै० सं० | = | जैमिनीयसंहिता |
| तै० आ० | = | तैत्तिरीयआरण्यक |
| तै० प्रा० | = | तैत्तिरीयप्रातिशाख्य |
| तै० ब्रा० | = | तैत्तिरीयब्राह्मण |
| तै० सं० | = | तैत्तिरीयसंहिता |
| धा० पा० | = | धातुपाठ |
| नि० | = | निरुक्त |
| प० | = | परिभाषा |
| परि० | = | परिभाषेन्दुशेखर: |
| पार० गृ० | = | पारस्करगृह्यसूत्र |
| पा० शि० | = | पाणिनीयशिक्षा |
| पा० सू० | = | पाणिनीयसूत्र |
| फि० सू० | = | फिट्सूत्र |
| म० भा० | = | महाभाष्य |
| मा० सू० | = | माहेश्वरसूत्र |
| मै० सं० | = | मैत्रायणीसंहिता (यजुर्वेदीया) |
| वा० प० | = | वाक्यपदीय |
| वा० सं० | = | वाजसनेयीसंहिता |
| व्या० पं० | = | व्याडिपरिभाषा |

# सम्पादकीयम्

**आपः पवित्रं परमं पृथिव्या अद्भ्यः पवित्रं परमं हि मन्त्राः ।**
**तेषां च सामर्थ्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः ।।**

(वाक्यपदीयम् कां. १ का. १४)

समस्त-संसारस्य ज्ञातासु प्राचीनतमासु भाषासु सर्वा अप्यतिशेते संस्कृतभाषेति निर्विवादं तथ्यम्। भारतधरामनादिकालाद् विभूषयन्ती स्ववैशिष्ट्यैरियं भाषा विरोधिनां नानाविधान् कुत्सितप्रयासान् तिरस्कुर्वन्ती साम्प्रतमपि न केवले भारतवर्षे प्रत्युत समग्रेऽपि संसारे स्वकीर्ति-पताकां समुत्त्थापयन्ती विराजतेतराम्। का शक्तिः? को वाः गुणः? किं वा वैशिष्ट्यमस्याः भाषाया यस्मादियं सर्वदैव सर्वोपरि दृश्यते? अस्य समाधानं झटितीदमेव वक्तुं शक्यते यदस्या व्याकरणस्य वैज्ञानिकत्वं विविध-चिन्तक-लोकानामनवरतप्रयासस्य सुफलत्वमेवात्र परमं कारणम्।

ऐतिहासिकानां नेदं तिरोहितं यत् संस्कृतभाषाया मूलं वैदिकी भाषा। तस्याः विकसितेयं लौकिकीभाषापदं धारयन्ती समये-समये नैकैराचार्यैर्व्याकरणनियमैर्नियमिता। तेषां समेषामाचार्याणां विषये न बहु ज्ञायते। केवलं पाणिनिरेव वैयाकरणेषु सर्वेषु मूर्धन्यतमोऽधुनेति सर्वजनस्वीकृतं तथ्यम्। पाणिनिना व्याकरणस्य लक्ष्यत्वेन लौकिका वैदिकाश्चोभयविधाः शब्दाः गृहीताः। अत एव स्थले-स्थले वैदिक-शब्दरूपाणां विषयेऽपि पाणिनिना नियमाः प्रदर्शिताः। उभयत्र दृश्यते चैक एव भेदः। लौकिकशब्दानां विषये स नियामकत्वेन सूत्राणि निर्दिशति। परन्तु वैदिकशब्दानां यथाभूतानामेव साधुत्वाङ्गीकारात् तत्र लोकस्य विचारशक्तेरप्रभावात् तेषां कृते 'सिद्धस्य गतिश्चिन्तनीये'ति रीतिमनुसृत्य नियमान् निर्दिशति। एवञ्चैकत्र स स्वतन्त्रः परत्र चास्वतन्त्रः। साम्प्रतमेकं पाणिनीयमेव व्याकरणं येनोभयविधशब्दानामनुशासनं विधीयते।

पाणिनेरत्यल्पाक्षराणां सूत्राणां समीक्षारूपेण कात्यायनेन वार्तिकानि प्रणीतानि। महद् दौर्भाग्यं वैयाकरणानां यदद्य कात्यायनीयवार्तिकानां प्रामाणिकमविकलं रूपं नैव प्राप्यते। केवलं पातञ्जलमहाभाष्यानुसारेणैव तेषां ज्ञानं क्रियते। महाभाष्ये चान्येषामपि वार्तिककाराणां वचनानि विद्यन्ते। तत्र केषुचित् प्रसङ्गेषु महाभाष्यकारेण स्वयमेवापरेषामाचार्याणां नामोल्लेखो विहितः। बहुषु स्थलेषु च स्पष्टतया ज्ञानं कर्तुं न शक्यते।

महाभाष्यकारस्य विषये किमधिकं लिख्यताम्? महाभाष्यं विना पाणिनीयं व्याकरणं न केवलमपूर्णमेव प्रत्युताबोध्यमपि। एतेषां महत्त्वं सर्वविदितमेव। अत एव 'त्रिमुनि व्याकरणम्' इति प्रसिद्धिः शब्द-शास्त्रसम्प्रदायेऽतीवप्रसिद्धा। एषां त्रयाणामाचार्याणां महत्त्वं न केवलं शब्दानुशासन-दृष्ट्यैव, प्रत्युत भाषाशास्त्रदृष्ट्यापि। आधुनिकाः प्राच्य-प्रतीच्योभयविधभाषाशास्त्रिणः एषां महत्त्वं मुक्तकण्ठमुद्घोषयन्ति।

महाभाष्ये पाणिनीयव्याकरणमतिविस्तरेण क्वचित् सरलया क्वचिच्चासरलया रीत्या व्याख्यातम्। एतस्य सम्यगध्ययनाय महान् श्रमः कालो धैर्यञ्चापेक्ष्यते। एतद्विचार्यैव मन्ये सूत्रवृत्तीनां प्रणयनमारब्धम्। प्राप्तासु सर्वासु वृत्तिषु काशिका सर्वातिशायिनीति सर्वेऽपि जानन्ति स्वीकुर्वन्ति च। सेयं वृत्तिः सुदीर्घकालादारभ्याद्यावधि व्याकरणशास्त्रस्याध्ययनकारिणां मध्येऽतीव लोकप्रिया। स्वनाम्नश्चारितार्थ्यं कुर्वतीयं काशिका बहुशो व्याख्यातापि पौनःपुन्येन व्याख्यामपेक्षते।

उपलब्धेषु काशिकायाः प्रकाशितेषु संस्करणेषु केषुचिन्मूलमात्रमेव, केषुचित् टिप्पण्यः, केषुचित् न्यासापदमञ्जर्यावेव केषुचित् सूत्रवृत्तेरेव हिन्द्यामनुवादः, केषुचिच्च स्वपाण्डित्यप्रदर्शनार्थं काशिकायाः कश्चनांश एव प्रकाशितः। साम्प्रतं राष्ट्रभाषामाध्यमेन, विशेषत उत्तरभारते, संस्कृतस्याध्ययनाध्यापने प्रचलतः, तत्र च हिन्दी-व्याख्याया अभावे विद्यार्थिनः कष्टमनुभवन्तो दृश्यन्ते। विशेषरूपेण व्याकरणच्छात्राणां महती व्यथा न दुनोति कस्य शाब्दिकस्य हृदयम्? इदमेव प्रमुखं कारणमस्या नवीनायाः भावबोधिन्याख्यायाः हिन्दीव्याख्यायाः लेखने प्रकाशने च।

संस्कृतभाषायामुपनिबद्धानां व्याकरणादि-शास्त्राणामेका विशिष्टा पद्धतिः व्याख्यानस्य। सा च संस्कृतभाषामाध्यमेन सारल्येन सम्पादयितुं शक्यते। अत एव समेषां प्रमुखानां मूलग्रन्थानां व्याख्यानमिव काशिकाया अपि संस्कृतभाषायां नैकानि व्याख्यानानि। तेषां साहाय्यन्तरा न शक्या काशिका यथार्थतो बोद्धुम्। अतोऽस्मिन् संस्करणे संस्कृत-व्याख्याद्वयी हिन्दी-व्याख्या च समायोजिता सर्वेषां बोधसौकर्याय।

**काशिकायाः व्याख्याः**

१. न्यासः (= काशिकाविवरणपञ्जिका)

२. पदमञ्जरी

३. भावबोधिनी (हिन्दी-व्याख्या)

**१. न्यासः (काशिका-विवरणपञ्जिका)**

काशिकावृत्तेरियं व्याख्या महावैयाकरणेन आचार्य-जिनेन्द्रबुद्धिपादेन (८०० ई.) विरचिता काशिका-विवरणपञ्जिकाऽपरपर्याया 'न्यास' इति नाम्नाऽतीव विख्याता। अस्या वैशिष्ट्यमवर्णनीयम्। अस्यां न केवलं सूत्रणामाशय एव स्पष्टीकृतः, अपितु गम्भीरस्थलानां भाष्यानुसारेण विवरणं महदुपकारकम्। शब्दरूपाणां प्रक्रियाविषये त्वियं व्याख्याल्पज्ञानामपि परमोपकारिकेति न तिरोहितं विदुषां छात्राणाञ्च।

**२. पदमञ्जरी**

एषा प्रौढा व्याख्या विद्वद्वरेण श्रीमता हरदत्तेन (११०० ई.) प्रणीता। अस्यां व्याख्यायां प्रौढत्वं शब्दशास्त्रीय- पाण्डित्यं च विलोक्य चमत्कृता भवन्ति अध्येतारः। हरदत्तस्य सूक्ष्मेक्षिका परमं प्रमोदमुत्पादयति शब्दशास्त्ररसिकान् मनसि। अस्यां महाभाष्यानुसारेण गम्भीराः विषयाः पाण्डित्यप्रदर्शनपूर्वकं व्याख्याताः। शब्द-शास्त्रीयपाण्डित्य-प्राप्तयेऽवश्यमेवेयं व्याख्याध्येतव्येत्यत्र न वैमत्यं शाब्दिकानाम्।

**३. भावबोधिनी (हिन्दी-व्याख्या)**

एषाभिनवा हिन्दीव्याख्या न केवलं सूत्राणां वृत्तीनां वा वर्तते। अस्यां व्याख्यायां काशिकायां प्रतिपादितानां समेषां विषयाणां सरलया हिन्दीभाषया व्याख्या विहिता। गम्भीर-स्थलानां स्पष्टीकरणं **'विमर्श'** इति शीर्षकाभ्यन्तरे विहितम्। काशिकायामुदाहरणरूपेण प्रदर्शितानां शब्दानां प्रक्रिया सारल्येनापेक्षितसूत्रप्रदर्शन-पूर्वकं प्रतिपादिता येन सूत्राशयज्ञानेन सहैव शब्दानां प्रक्रियाक्रमोऽपि सुखेन ज्ञातुं शक्यः।

**प्रस्तुतसंस्करणस्य वैशिष्ट्यानि**

१. सम्पूर्णकाशिकावृत्तेः हिन्दीभाषायां प्रथमा विशदा व्याख्या।

२. काशिकावृत्तौ प्रदर्शितानामुद्धरणानां यथासम्भवं तत्तन्मूलग्रन्थानुसारं संशोध्य मूलस्थाननिर्देशपूर्वकं संयोजनम्।

३. उदाहरणरूपेणोपस्थापितानां वैदिकांशानां स्वरांङ्कनप्रदर्शनपूर्वकं समुल्लेखः।

४. न्यासस्य पदमञ्जर्याश्च यत्र तत्र संशोधनम्।

५. पाठनिर्धारणे महाभाष्यस्य प्रामाण्यम्।

**सङ्ख्यानिर्देशः**

अस्मिन् संस्करणे स्थानत्रये सङ्ख्योल्लेखो विहितः। तत्र सूत्रेभ्यः पूर्वं विलिखिता सङ्ख्याऽष्टाध्यायीसूत्रक्रमस्य सूचिका, यथा ३६१५ सर्वस्य द्वे॥१॥ (२१३९)—अनया अष्टाध्याय्यां सूत्रस्य का सङ्ख्येति ज्ञायते। द्वितीया सङ्ख्या अष्टाध्यायी-क्रमागत-पादस्यान्तर्गतसूत्रस्य निश्चितां सङ्ख्यां सूचयति। तृतीया च सङ्ख्या सूत्रेभ्यः पश्चात् कोष्ठके (२१३९) निर्दिष्टा। इयं संख्या निर्णयसागरमुद्रणालयतः प्रकाशितायां वैयाकरणसिद्धान्तकौमुद्यां समुल्लिखितां सूत्रसङ्ख्यां सूचयति। एतेनाध्येतॄणां शोधच्छात्राणाञ्च सौविध्यं भविष्यतीति स्पष्टम्। अत्र विषये पूज्यपादाः गुरुकल्पाः प्रोफेसर आर्येन्द्रशर्म-महाभागा ममोपजीव्यत्वेनाश्रिता इति तान् प्रति कृतज्ञतां प्रकटयामि।

**आभार-प्रदर्शनम्**

संस्कृत-व्याकरणस्य गाम्भीर्यं दुर्बोधत्वञ्च न कस्माच्चिदपि संस्कृतज्ञात्तिरोहितम्। अतो व्याकरणशास्त्रीयग्रन्थानां सम्पादनमथ च संस्कृतेन व्याख्यानमथवा हिन्दीमाध्यमेन व्याख्यानं साहसमात्रमेवोच्येत तथापि विलोक्य व्याकरणजिज्ञासुच्छात्राणां कष्टं विचिन्त्य च शास्त्ररक्षणं स्वनैतिकमनुष्ठानं मयाऽल्पज्ञया स्वधिया न सुधियामपितु श्रद्धावतां जिज्ञासूनां कृते यथाज्ञानं किञ्चिद्व्याख्यातमनूदितं च हिन्द्याम्। यद्यनया 'भावबोधिन्या'-ख्ययाऽभिनवया हिन्दी-व्याख्ययाऽनेन च नूतनसम्पादितेन संस्करणेन चाल्पमपि हितं स्यादध्येतॄणां तदा मन्ये स्वपरिश्रमस्य साफल्यम्।

अत्र व्याख्यायां सम्पादनकर्मणि च ये केऽपि प्रमादाः स्युस्ते मदज्ञानमूलका एव, यानि च वैशिष्ट्यानि तानि गुरुचरणप्रसादसमधिगतानि बोध्यानि। अतोऽत्र दिवङ्गतानामपि प्रातःस्मरणीयानां गुरुचरणानां स्मरणं कृतज्ञतायाः प्रकाशनञ्चानिवार्यं कर्म। अत्र क्रमे प्रथमं सकल-शास्त्र-पारङ्गतेभ्यः समधिगतं-शब्द-ब्रह्मसायुज्येभ्यः श्री-सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये नव्यव्याकरणविभागाध्यक्षचरेभ्यः गुरुवर्येभ्यः श्रीमन्मुरलीधरमिश्रमहोदयेभ्यः स्वकीयां हार्दिकीं कृतज्ञतां प्रकटयामि। तत्रैव विभागेऽध्यक्षचरेभ्यः पण्डित-प्रवरेभ्यः श्रीमद्भूपेन्द्रपतित्रिपाठिमहोदयेभ्योऽथ च श्रीमत्कालिकाप्रसादशुक्लमहादयेभ्यश्च हार्दिकं कार्तज्ञ्यं प्रकटयामि। तस्मिन्नेव विभागे प्राध्यापकपदमलङ्कृतवद्भ्यः शास्त्रार्थधुरन्धरेभ्यः श्रीमद्रूपनारायण-झा-महोदयेभ्यः एवमेव प्राचीन-व्याकरणविभागाध्यक्षचरेभ्यः श्रीमद्देवदत्तशर्ममहोदयेभ्यः, अथ च व्युत्पत्तिविधावप्रतिमेधेभ्यः श्रीमद्रामप्रसाद-त्रिपाठिमहोदयेभ्यः साहित्यविभागाध्यक्षचरेभ्यः श्रीमद्द्विजेन्द्रनाथमिश्रमहोदयेभ्यः, कर्णपुरनगरस्थ-दयानन्द-एङ्ग्लोवैदिक-महाविद्यालयेऽध्यक्षपदमलङ्कृतवद्भ्यः विविधशास्त्रपारङ्गतेभ्यः श्रीमद्हरिदत्तशास्त्रिमहोदयेभ्यः, राँचीविश्वविद्यालये संस्कृतविभागाध्यक्षचरेभ्यः सहृदयेभ्यः श्रीमद्दिनेश-प्रसादपाण्डेय-महोदयेश्च स्वकीयं हीर्दिकमाभारं प्रदर्शयामि।

काशीहिन्दूविश्वविद्यालये कलासङ्कायान्तर्गत-संस्कृत-विभागे सुदीर्घकालपर्यन्तं विभागाध्यपदं सङ्कायाध्यक्षपदञ्चालङ्कृतवद्भ्यः प्राच्य-प्रतीच्योभयविधशास्त्रमर्मज्ञेभ्यः स्वर्गीयेभ्यः प्रोफेसर-सिद्धेश्वरभट्टाचार्य-

महोदयेभ्योऽथ च तत्रैव विभागे उपाचार्यपदमलङ्कृतवद्भ्यः पण्डितश्रीमत्कान्तानाथशास्त्रिवर्येभ्यश्च स्वश्रद्धाञ्जलिततिं समर्प्य कातज्ञ्यं प्रकटयामि। तस्मिन्नेव विभागे बहुशोऽध्यक्षपदमलङ्कृतवन्तः नवीनचिन्तननिपुणाः साहित्यशास्त्रप्रवीणाः प्रोफेसरविश्वनाथभट्टाचार्यमहोदयाः प्रस्तुतग्रन्थस्य प्राक्कथनं विलिख्य मामतीवानुगृहीतवन्त इति तान् प्रति हार्दिकीं कृतज्ञतां ज्ञापयामि।

काशीस्थ-तारा-प्रिंटिंग-वर्क्स इति संस्थानस्याधिपतीनां परैः प्रकाशयितुमशक्यानामपि दुर्लभानां संस्कृत-ग्रन्थानां पुनः प्रकाशने भव्यरूप-प्रदाने च सदैव दत्तावधानानां श्रीमद्रमाशङ्करपण्ड्यामहोदयानामथ च स्वपितृ-पदानुयायिनां तदुद्देश्यपूर्त्तये निरन्तरसंलग्नानां श्रीमद्रविप्रकाशपण्ड्यामहोदयानाभामारो हृदयेनोररीक्रियते। अनयोर्महाशययोः सत्प्रयासेनौदार्येण चेदं संस्करणं हृदयावर्जकं सद् विपश्चितां समक्षमागतं प्रकाशितं भूत्वा। अत आभ्यां महानुभावाभ्यां पुनः पुनः हार्दिकान् धन्यवादान् वितरन् प्रमोदमनुभवामि।

अस्य महतः कार्यस्य सम्पूर्त्यवसरे स्वसहचारिणीं श्रीमतीमुर्मिलात्रिपाठिमहोदयां धन्यवादैरनेकशो भूषयामि यया गार्हस्थ्यजञ्जालमेकाकिन्यैव सोढ्वाऽध्ययनलेखनादिकर्मणि मम सदैव सर्वविधः सहयोगः प्रादायि अर्धाङ्गिनीति नाम्नश्च सार्थक्यञ्चाकारि। ममात्मजः श्रीवागीशत्रिपाठी शोधच्छात्रः कृषिविज्ञाने, ममात्मजा श्रीमतीपूनम-त्रिपाठी रसायनशास्त्रे विशिष्टं शोधकार्यं विधायोच्चाध्ययनार्थममेरिकायां पुनः शोधार्थं गतवती तत्रस्थितः तस्याः पतिःश्रीप्रसूनवन्द्योपाध्यायश्च एते सर्वेऽपि बहुशो यदाकदा प्राग्रूपसंशोधनादिकार्येषु मम साहाय्यमाचरितवन्त एतदर्थमेतेभ्योऽपि हार्दिकाशीर्वादान् वितरामि।

अत्र गुरुतरकर्मणि ये केऽपि दोषास्ते ममाज्ञानमूलका एव यत् किमपि वैशिष्ट्यं तद् गुरुचरण-प्रसादादधिगतमेव। इदं सर्वं विश्वेश्वरीदेव्यै अन्नपूर्णायै काशीश्वराय विश्वेशाय विश्वनाथाय च समर्प्य परमं सन्तोषमनुभवामि।

शरत्पूर्णिमा २०५७
१२.१०.२००० ई.

विनयावनतः
**जयशङ्करलाल-त्रिपाठी**
संस्कृत-विभागः, कलासङ्कायः
काशी-हिन्दूविश्वविद्यालयः, वाराणसी

# भूमिका

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।**

(वाक्यपदीयम् १।१)

संस्कृत भाषा के व्याकरण की श्रेष्ठता सर्वस्वीकृत है। संस्कृत भाषा के व्याकरण के आचार्यों की एक विशाल परम्परा रही है[१]। दुर्भाग्यवश अधिकांश आचार्य नाममात्र शेष हैं। उन आचार्यों के विभिन्न सम्प्रदाय प्रचलित थे[२]। उनमें ऐन्द्र सम्प्रदाय और माहेश्वर सम्प्रदाय के विषय में अधिक सामग्री प्राप्त है। पाणिनि को माहेश्वर सम्प्रदाय का सर्वाधिक प्रतिष्ठित आचार्य माना जाता है। विश्व के वैयाकरणों में आचार्य पाणिनि का स्थान सर्वोपरि है—यह एक निर्विवाद तथ्य है[३]। आचार्य पाणिनि सूत्रशैली के उद्भावक आचार्यों में मूर्धन्य हैं। संस्कृत भाषा के विशालतम शब्दभण्डार को व्याकरणशास्त्रीय नियमों की परिधि में बाँध लेना पाणिनि का ही कौशल है। पाणिनि (ई.पू. ५००) के समय संस्कृत बोलचाल के रूप में प्रयुक्त होती थी—इसके अनगिनत प्रमाण और उदाहरण हैं[४]। स्वसमकालिक भाषा का गम्भीर अध्ययन तथा चिन्तन करने के पश्चात् पाणिनि ने सूत्रों का प्रणयन किया था। उन्होंने वैदिकी भाषा के लिये भी सूत्र बनाये परन्तु वे नियामक न होकर सिद्ध (वेदप्रयुक्त) शब्दरूप के प्रक्रियाप्रदर्शकमात्र हैं[५]। परन्तु लौकिक भाषा पर उनके सूत्रों का पूर्ण नियन्त्रण स्वीकार किया जाता है। पाणिनि के समय के उत्तरवर्ती युग में भी संस्कृत शब्दावली का प्रयोग बोलचाल की भाषा में होता रहा। भाषा-प्रवाह में यदाकदा परिवर्तन होना स्वाभाविक है। पाणिनि की दृष्टि में भविष्य के शब्दरूप नहीं आ सकते थे। अतः उनके लिये नवीन नियम बनाने की आवश्यकता थी। साथ ही पाणिनि के सूत्रों का क्षेत्र कहीं संकुचित होने लगा था और कहीं व्यापक। कई शब्द दूसरे अर्थों में प्रयुक्त होने लगे थे। अतः इन सभी अपेक्षाओं को पूर्ण करने की आवश्यकता थी। और भी, पाणिनि ने जैसे अपने पूर्ववर्ती आचार्यों के मतों की समीक्षा की थी और उनमें यत्र तत्र असहमति भी प्रदर्शित की थी ठीक वैसे ही उनके सूत्रों की भी समीक्षा अपेक्षित हो गई थी। इन सभी बातों को ध्यान में रख कर आचार्य कात्यायन (ई.पू. ३००) ने वार्तिक लिखे। इनमें उपर्युक्त सभी बातें दिखलाई देती हैं। कुछ विद्वान् अज्ञानवश कात्यायन को पाणिनि का विरोधी मानते हैं परन्तु यह तर्कसंगत नहीं है। यदि कात्यायन के वार्तिकों को पूर्णरूप से अलग कर दिया जाय तो पाणिनि के सूत्र अधूरे रह जायेंगे। इस अज्ञान के मूल में है पाणिनि का उत्तरभारतीय होना और कात्यायन का दक्षिणभारतीय।

---

१. संस्कृत व्याकरण का इतिहास-युधिष्ठिर मीमांसक, प्रथम भाग, द्वितीय अध्याय।

२. ब्राह्ममैशानमैन्द्रं च प्राजापत्यं बृहस्पतिम्। त्वाष्ट्रमापिशलं चेति पाणिनीयमथाष्टमम्।।
इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः। पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः।।
ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्। सारस्वतं चापिशलं शाकल्यं पाणिनीयकम्।।

३. द्र. संस्कृत व्याकरण का इतिहास, प्र.भा., पृ. १९८-२००।

४. द्र. प्रत्यभिवादेऽशूद्रे. (पा.सू. ८।२।८३) आदि सूत्रों की व्याख्यायें।

५. दृष्टानुविधिश्छन्दसि—परि.।

कात्यायन ने सूत्रों पर समीक्षात्मक वार्त्तिक लिखे थे[६]। उनकी शैली भी सूत्रात्मक ही थी। अतः पाणिनि के सूत्रों तथा वार्तिकों का वास्तविक आशय समझाने के लिये व्याख्यान की आवश्यकता थी। साथ ही कात्यायन के समीक्षात्मक वार्तिकों का मूल्यांङ्कन भी करना आवश्यक था। इस की पूर्ति का सफल प्रयास किया आचार्य पतञ्जलि ने[७]। आचार्य पतञ्जलि (ई.पू. १५०) ने महाभाष्य ग्रन्थ लिखकर पाणिनीय व्याकरण को जिस ऊँचाई पर प्रतिष्ठित कर दिया है कि वहाँ तक अब किसी अन्य की पहुँच असम्भव ही लगती है। अद्वितीय मेधावी पतञ्जलि के विषय में बहुत कुछ लिखा जा चुका है। उनकी एक बात सर्वाधिक महत्त्वपूर्ण है कि वे वैयाकरण होते हुये भी भाषा के प्रचलित रूप के ही प्रयोग के समर्थक रहे हैं[८] भले ही वह रूप व्याकरण-शास्त्र के नियमों के विपरीत क्यों न हो। दूसरे शब्दों में, आचार्य पतञ्जलि रूढ़िवादी अन्धानुयायी न होकर भाषा के जीवन्त शब्दरूप के प्रयोग के पूर्ण पक्षधर हैं। यह उदारता संस्कृतज्ञों में जब से समाप्त हो गयी तभी से संस्कृत भाषा बोलचाल के क्षेत्र में सिकुड़ती गयी, बोलने वाले कम होते गये।

पतञ्जलि ने व्याकरण के प्रक्रियापक्ष तथा दार्शनिक पक्ष—दोनों पर पर्याप्त विचार व्यक्त किये हैं। यदि पतञ्जलि ने अपना महाभाष्य न लिखा होता तो अन्य व्याकरणों के समान पाणिनि का व्याकरण भी अपूर्ण रह जाता। इनके योगदान को भुलाया नहीं जा सकता। यही कारण है जिससे उत्तरवर्ती व्याकरणों में यह उक्ति प्रचलित हो गई—'यथोत्तरं मुनीनां प्रामाण्यम्'[९]। कुछ विद्वान इस उक्ति का यथार्थ आशय न समझ कर पाणिनि तथा पतञ्जलि में विवाद मान लेते हैं। वास्तव में पतञ्जलि प्रयुक्त रूप के ही साधुत्व का समर्थन करते हैं भले ही वह पाणिनि के सूत्र के विपरीत हो। पतञ्जलि के विचार आधुनिक भाषाविज्ञान के नियमों के सर्वथा अनुकल हैं। यहाँ दोनों आचार्यों में विरोध न मानकर विकसित प्रयुक्त शब्दरूप और व्याकरणशास्त्रनियमित शब्दरूप में विकसित शब्द रूप को ही मानना चाहिये—इतना ही पतञ्जलि और उपर्युक्त उक्ति के समर्थक आचार्यों का आशय है। इसी कारण पतञ्जलि ने सूत्रों और वार्त्तिकों के अतिरिक्त अपनी 'इष्टियाँ'[१०] कल्पित कीं। ये इष्टियाँ भी हमारे लिये सूत्र और वार्त्तिक से कम महत्त्व की नहीं हैं।

इन तीनों आचार्यों के समन्वित प्रयास का ही उत्कृष्ट फल है पाणिनीय व्याकरण की सर्वोत्तमता। इसलिये 'त्रिमुनि व्याकरणम्'[११] यह कथन सर्वथा उपयुक्त है। किसी के भी योगदान को कम नहीं माना जा सकता। तीनों आचार्यों के वैदुष्य की तुलना करना संकीर्ण मानसिकता का परिचायक है।

**पाणिनीय अष्टाध्यायी के वृत्तिग्रन्थ**

पाणिनि को स्वयं भी यह ज्ञान था कि उनके सूत्रों का वास्तविक तात्पर्य समझना व्याख्या के बिना संभव नहीं है। अत एव उन्होंने स्वयं भी सूत्रों पर वृत्ति लिखी थी[१२]। दुर्भाग्यवश वह आज उपलब्ध नहीं है। पाणिनि

६. अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम्। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥१॥
उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते। तं ग्रन्थं वार्तिकं प्राहुः वार्तिकज्ञा मनीषिणः॥२॥

७. प्रभुदयाल अग्निहोत्री, पतञ्जलिकालीन भारत।

८. द्र. 'प्राप्तिज्ञो देवानां प्रियः, न तु इष्टिज्ञः'। (म.भा. २।४।५६)

९. कैयटप्रदीप १।१।२९, न बहुव्रीहौ १।१।२९, सिद्धान्तकौमुदी, प्रदीपोद्घोत ३।१।८७।

१०. महाभाष्यकार द्वारा उद्भावित वचन 'इष्टि' कहे जाते हैं।

११. द्र. संख्या वंश्येन २।१।१९ सिद्धान्तकौमुदी उदा.।

१२. १।४।१ सूत्र महाभाष्य में—"कथं' त्वेतत् सूत्रं पठितव्यम्। किमाकडारादेका संज्ञा, आहोस्वित् प्राक्कडारात् परं कार्यमिति। कुतः पुनरयं सन्देहः? उभयथा ह्याचार्येण शिष्याः सूत्रं प्रतिपादिताः—केचिदाकडारादेकासंज्ञेति, केचित् प्राक्कडारात् परं कार्यम्।"
काशिका ४।१।११७ में—"शुङ्गाशब्दं स्त्रीलिङ्गमन्ये पठन्ति ततो ढकं प्रत्युदाहरन्ति-शौङ्गेय इति। द्वयमपि चैतत् प्रमाणमुभयथा सूत्रप्रणयनात्।"

के उत्तरकाल में अनेक आचार्यों ने वृत्तिग्रन्थ लिखे थे। उनमें कुछ के नाम प्रसिद्ध हैं'—१.माथुरीवृत्ति। इसका उल्लेख महाभाष्य में है। २. कुणिवृत्ति। इसकी चर्चा भर्तृहरि तथा कैयट ने की है। ३. व्याडिवृत्ति। इसका संकेत न्यासव्याख्या में मिलता है। ४. श्वोभूति-वृत्ति। इसका संकेत महाभाष्य[१३] में तथा न्यास में मिलता है। ५. चुल्लिभट्टि-वृत्ति। ६. निर्लूरवृत्ति। न्यासकार ने इन दोनों का भी उल्लेख किया है। (७) चूर्णिवृत्ति। इसके विषय में भी कुछ संकेत प्राप्त होते है।

काशिका वृत्ति के उत्तरकाल में भी कुछ वृत्तिग्रन्थ लिखे गये जिनकी संख्या लगभग तीस है। इनमें आज प्रसिद्ध और उपलब्ध ग्रन्थ हैं—१. पुरुषोत्तम देव की भागवृत्ति। २. भट्टोजिदीक्षित का 'शब्दकौस्तुभ'। ३. अन्नम्भट्ट की 'मिताक्षरा'। ४. विश्वेश्वर पण्डित की 'व्याकरणसिद्धान्तसुधानिधि। ५. ओरम्भट्ट की 'व्याकरण-दीपिका'। ६. स्वामी दयानन्द का 'अष्टाध्यायी-भाष्य'।

**वृत्ति-ग्रन्थ का तात्पर्य**

'वृत्ति' शब्द '√ वृतु वर्तने' धातु से क्तिन् प्रत्यय करने पर निष्पन्न होता है। इसी के आधार पर कैयट ने लिखा है—'वर्तनं' वर्त्तो वृत्तिः[१४]। न्यासकार ने वृत्ति पद का अर्थ लिखा है—'पाणिनि-प्रणीतानां सूत्राणां विवरणम्'[१५]। पदमञ्जरीकार हरदत्त मिश्र ने—'सूत्रार्थप्रधानो ग्रन्थो वृत्ति[१६]' ऐसा लिखा है। इन सभी का निष्कर्ष यही है कि जिस ग्रन्थ में प्रधानरूप से सूत्रार्थ समझाने का प्रयास किया जाता है उसे 'वृत्ति' कहना चाहिये। इस लक्षण पर काशिका पूर्णरूप से खरी उतरती है। इसलिये इसे काशिका वृत्ति नाम दिया गया।

**काशिका वृत्ति का वैशिष्ट्य**

पूर्ववर्ती तथा परवर्ती वृत्ति-ग्रन्थों की तुलना में काशिका की कुछ ऐसी विशेषतायें हैं जिनके कारण आज यह सर्वोपरि वृत्तिग्रन्थ माना जाता है। पस्पशाह्निक में भाष्यकार ने व्याख्या के लिये यह लिखा है—'न केवलानि चर्चापदानि व्याख्यानम्—'वृद्धिः, आत्, ऐज्' इति। किं तर्हि? उदाहरणम् प्रत्युदाहरणम्, वाक्याध्याहारः—इत्येतत्समुदितं व्याख्यानं भवति'[१७]। इसके आधार पर काशिका में प्रत्येक सूत्र के उदाहरण, प्रत्युदाहरण और अनुवृत्ति के विषय में स्पष्टतया लिखा गया है। उदाहरण प्रायः महाभाष्य से लिये गये हैं। परन्तु कहीं-कहीं अन्यत्र से भी लिये गये हैं। इसमें कात्यायन के वार्तिकों का पूर्ण उपयोग किया गया है परन्तु कुछ ऐसे वचन भी लिखे गये हैं जिनका उल्लेख वार्तिक ग्रन्थ में नहीं है। यह यद्यपि महाभाष्य को आधार मानकर लिखी गयी है परन्तु कुछ स्थलों पर काशिकार ने अपने स्वतन्त्र दृष्टिकोण को रखने में संकोच नहीं किया है। महाभाष्य से पूर्ववर्ती वृत्तियों में उसका उपयोग नहीं हो सकने से उनमें वह प्रौढ़ता नहीं संभव थी। काशिकाकार ने महाभाष्य का तथा अन्य उपयोगी ग्रन्थों का नवनीत रखने का प्रयास किया है। इसीलिये काशिका आज तक सर्वोत्कृष्ट बनी हुई है।

---

१३. (क) यत्तेन प्रोक्तं न च तेन कृतम् माधुरीवृत्तिः। (म.भा. ४।३।११) अन्येन कृता माथुरेण प्रोक्ता माथुरी वृत्तिः'। काशिका ४।३।१। (ख) एषां व्यावृत्त्यर्थं कुणिनापि तद्धितग्रहणं कर्तव्यम्। भाष्यदीपिका पृ. २३०। कुणिना प्राग्ग्रहणमाचार्यनिर्देशार्थं व्यवस्थितविभाषार्थं चेति व्याख्यातम्। अन्येन तु प्राग्ग्रहणं देशविशेषणम्। (कैयट १।१।७५) (ग) केचित् श्वोभूतिव्याडिप्रभृतयः 'श्र्युकःकिति' ७।२।११ इत्यत्र द्विककारनिर्देशेन गकारः प्रश्लिष्ट इत्येवमाचक्षते। न्यास ७।२।११। (घ) वृत्तिः पाणिनीयसूत्राणां विवरणं चुल्लिभट्टिनिर्लूरादिविरचितम्। न्यासः।

१४. प्रदीप ५।१।११९।

१५. न्यास प्रथम भाग पृ.।

१६. पदमञ्जरी प्रथम भाग पृ.।

१७. पस्पशा.।

**काशिका के रचयिता**

यह विचित्र संयोग है कि एक ग्रन्थ काशिका के दो रचयिता माने जाते हैं। इस विषय में निम्न तथ्य ध्यान देने योग्य हैं—

१. सर्वप्रथम चीनी यात्री इत्सिंग ने 'वृत्तिसूत्र' नामक ग्रन्थ का रचयिता जयादित्य को माना है[१८]। वामन का कोई उल्लेख नहीं है। मैक्समूलर ने इस नाम को नहीं माना और स्वयं 'वृत्तिसूत्र' नाम का समर्थन किया[१९]। महाभाष्य में 'वृत्तिसूत्र' का उल्लेख है। इस आधार पर कुछ लोग इत्सिंग का संकेत महाभाष्य की ओर मानते हैं। परन्तु वे यह ध्यान नहीं देते कि इत्सिंग ने स्पष्ट शब्दों में 'वृत्तिसूत्र' को जयादित्य की ही रचना लिखा है। भाषावृत्ति के व्याख्याकार सृष्टिधराचार्य ने भी जयादित्य को ही काशिका के रचयिता के रूप में लिखा है। डॉ. बेवर तथा मोनियर विलियम ने वामन को ही काशिका का रचयिता माना है। मैक्समूलर ने वामन और जयादित्य दोनों को ही रचयिता माना है। भट्टोजि दीक्षित के कथन के आधार पर कीलहार्न भी इन दोनों को काशिका का रचयिता मानते हैं।

कुछ ऐसे प्रमाण भी मिलते हैं जिनसे प्रतीत होता है कि जयादित्य और वामन दोनों ने अलग-अलग वृत्ति लिखी थी। इन दोनों का कुछ-कुछ भाग मिलाकर एक रूप देकर दोनों को रचयिता मानकर किसने और कब यह समस्या उत्पन्न करा दी, कहना कठिन है।

ऐसा प्रतीत होता है कि इन दोनों विद्वानों की शैली एक जैसी देखकर, दोनों के वैदुष्य का लाभ सामान्य अध्येता को मिल सके—इस भावना से किसी ने दोनों को एक में मिला दिया और दोनों को रचयिता का गौरव दे दिया। यद्यपि 'वामन-जयादित्य' ऐसा उल्लेख होने से ऐसा लगता है कि आदि का अंश वामन ने और बाद का जयादित्य ने लिखा है। परन्तु ऐसा नहीं है। यह व्युत्क्रम तो द्वन्द्व समास के नियम के अनुसार हुआ है। द्वन्द्व में अल्पाच् पहले रहता है इसी से वामन का नाम पहले लिखा गया है। वास्तव में आदि का भाग जयादित्य का और उत्तर भाग वामन का लिखा हुआ है। यहाँ यह ध्यान रखना परमावश्यक है कि काव्यालङ्कार के प्रणेता और काशिका के प्रणेता वामन नामक दो अलग-अलग व्यक्ति हैं क्योंकि काव्यालङ्कार के प्रणेता वामन का काल १२वीं शती माना गया है जब कि काशिका के व्याख्याता न्यासकार जिनेन्द्रबुद्धि का काल अष्टमशती के बाद कथमपि नहीं माना जा सकता।

अब यह प्रश्न उठना स्वाभाविक है कि आठ अध्यायों में कितने अध्याय जयादित्य ने लिखे हैं और कितने वामन ने? अधिकांश विद्वानों की धारणा है कि आदि के चार अथवा पाँच अध्याय जयादित्य ने और बाद के चार अथवा तीन अध्याय वामन ने लिखे हैं। उ. [२०]कीथ के विचार से भी प्रथम पाँच अध्याय जयादित्य ने लिखे हैं। पं. युधिष्ठिर मीमांसक[२१] पं. बलदेव उपाध्याय[२२] डॉ. सत्यकाम वर्मा[२३] और पं. रमाकान्त[२४] मिश्र ने अनुसार प्रथम पाँच जयादित्य ने शेष तीन वामन ने लिखा है।

---

१८. इत्सिंग की भारतयात्रा, अनूदित द्वारा सन्तराम बी.ए., पं. भगवदत्त द्वारा सम्पादित सं. १९२५ परिच्छेद ३४ पृ. २६८।

१९. प्रोफेसर दिनेशचन्द्र भट्टाचार्य, परिभाषावृत्ति भूमिका पृ. २-३।

२०. ए.बी. कीथ।

२१. सं.व्या. का इति, पृ. ४२४।

२२. संस्कृत शास्त्रों का इतिहास पृ. ४८२।

२३. संस्कृत व्याकरण का उद्भव और विकास पृ. २६३।

२४. संस्कृत व्याकरण का संक्षिप्त इति. पृ. ८२।

**काशिका रचना काल**

काशिका वृत्ति के रचयिता के समान इसका रचनाकाल भी कम विवादित नहीं है। ऊपर लिखा जा चुका है कि सर्वप्रथम इत्सिंग ने 'वृत्तिसूत्र' के रचयिता के रूप में जयादित्य का ही नाम लिखा है वामन का नहीं। इत्सिंग के अनुसार जयादित्य की मृत्यु ६६१ ई. के आसपास हुई थी। इस आधार पर काशिका की रचना का काल सप्तम शताब्दी का पूर्वार्द्ध सिद्ध होता है।

मैक्समूलर का कहना है कि कश्मीर के एक राजा का नाम जयापीड था और इसी का नाम जयादित्य भी था। वामन इसके सभा-पण्डित थे। जयादित्य का काल ८वीं शती है। अत: काशिका का भी वही काल होना चाहिये। इससे एक संकेत यह भी संभव है कि वामन ने ही पूरी वृत्ति लिखी हो और आधा भाग अपने आश्रयदाता राजा के नाम से प्रसिद्ध करने के लिये अपने साथ जयादित्य का भी नाम रचयिता के रूप में लिख दिया हो। ऐसे अनेक उदाहरण हैं जहाँ कवियों ने अपने आश्रयदाता के नाम से अपनी रचनायें लिखीं थीं'।

काशिका में 'शिशुक्रन्द्रयमसभ-द्वन्द्वेन्द्र-जननादिभ्यश्छ:' (४।३।८८) सूत्रवृत्ति में द्वन्द्व के उदाहरण के रूप में 'वाक्यपदीयम्' का उल्लेख किया गया है। निश्चित ही यह भर्तृहरि के प्रसिद्ध ग्रन्थ का नाम है। यद्यपि भर्तृहरि का काल भी कम विवादग्रस्त नहीं है तथापि युधिष्ठिर मीमांसक ने ३४३ ई. और प्रो. साधुराम ने ३०० ई. माना है। जब कि प्रो. कुन्हन राजा ने ५५० ई. और प्रो. अय्यर ने स्वसम्पादित वाक्यपदीय की भूमिका में ४५० ई. सिद्ध किया है। निष्कर्ष यह है कि भर्तृहरि छठीं शती के पूर्व हुये थे। अत: काशिका उनके बाद लिखी गयी सिद्ध होती है।

काशिका में 'संघे चानौत्तराधर्ये' (३।३।४२) इस सूत्रवृत्ति में प्रत्युदाहरण के रूप में 'प्रमाणसमुच्चय:' शब्द लिखा गया है। यह प्रसिद्ध बौद्ध दार्शनिक विद्वान् दिङ्नाग द्वारा लिखा गया प्रसिद्ध ग्रन्थ है। अत: दिङ्नाग के उत्तरकाल में काशिका की रचना सिद्ध होती है और यह काल ६ठीं शती तक ही खींचा जा सकता है।

काशिकाकार ने 'प्रकाशन-स्थेयाख्ययोश्च' (१।३।२३) सूत्र की वृत्ति में 'स्थेय' के उदाहरण के रूप में किरातार्जुनीय महाकाव्य के तृतीय सर्ग का १४वाँ श्लोकार्ध उद्धृत किया है—'जहातु नैनं कथमर्थसिद्धि: संशय्य कर्णादिषु तिष्ठते य:'। अत: काशिका की रचना भारवि में बाद ही होनी चाहिए। भारवि का काल ६ठीं शती माना जाता है। अत: काशिका इसके बाद की रचना सिद्ध होती है।

काशिका में भट्टिकाव्य तथा शिशुपालवध के पद्य उदाहरण के रूप में कहीं भी उद्धृत नहीं है। वलभी के राजकुल में श्रीधरसेन नाम के चार राजा हुये जिनका काल ५०० ई. से ६५० ई. के मध्य माना जाता है। अत: इस आधार पर काशिका की अन्तिम सीमा ६५० ई. से बाद मानना उचित नहीं है।

शिशुपालवध का कोई पद्य काशिका में नहीं उद्धृत है। इसके विपरीत शिशुपालवध में 'वृत्ति' और 'न्यास' का स्पष्ट उल्लेख है—'अनुत्सूत्रपदन्यासा सद्वृत्ति: सन्निबन्धना। शब्दविद्येव नो भाति राजनीतिरपस्पशा'।

माघ का काल ६७५ ई. के आस-पास माना जाता है। इससे भी ६५० ई. के पूर्व ही काशिका की रचना सिद्ध होती है। माघ के आधार पर न्यास की रचना भी ६५० से पूर्व मानी जानी चाहिए।

उपलब्ध विभिन्न मतों का निष्कर्ष इस प्रकार है—

| | |
|---|---|
| भर्तृहरि का काल | ४५०-५०० ई. |
| दिङ्नाग का काल | ४८०-५०० ई. |

| | |
|---|---|
| भारवि का काल | ५००-६०० |
| काशिकाकार का काल | ५५०-६५० |
| भट्टिकाव्य का काल | ६४१ |
| न्यासकार | ६००-६५० |
| भामह | ६३० के लगभग |
| माघ | ६५०-७०० |

कुछ विद्वानों के काशिका का काल निम्न माना है—

| | |
|---|---|
| डॉ. गोल्डस्ट्रकर | १३वीं शती |
| डॉ. बुर्नेल | १२वीं शती |
| आई. एस.पावटे | २री शती |
| प्रो. रंगाचार्य | ९वीं शती |
| प्रो. मैकडॉनल | ७००वीं शती |
| प्रो. वरदाचार्य | ६ठीं शती |
| प्रो. श्रीशचन्द्र चक्रवर्ती | ६५० ई. |
| प्रो. बेल्वल्कर | ६५० ई. |
| प्रो. दिनेशचन्द्रभट्टाचार्य | ६५०-७५० |
| पं. युधिष्ठिर मीमांसक | ६५०-७००[२५] |

उपर्युक्त मतों में एक लम्बी अवधि के मध्य में काशिका का रचनाकाल प्रतीत होता है। यदि किसी विशेष बात पर दुराग्रह न किया जाय तो मेरी दृष्टि में काशिका की रचना छठीं के शतीके उत्तरार्ध में मानना उचित है।

**काशिका का रचना-स्थान**

'काशिका' शब्द सुनने से ही यह प्रतीत होता है कि इसकी रचना काशी में हुई होगी। 'काश्यादिभ्यष्ठञ्ञिठौ' (४।२।११६) सूत्र से 'काशि' शब्द से ञिठ प्रत्यय करने पर 'काशिका' बनता है— 'काशिषु भवा' यह व्युत्पत्ति है। यही सोंच कर पदमञ्जरीकार हरदत्त ने यह लिखा है—'काशिकेति देशतोऽभिधानम्—काशिषु भवा[२६]'। इसी कथन का अनुकरण अधिकांश विद्वानों ने किया है और इसकी रचना काशी में हुई है, ऐसा माना।

परन्तु देशविशेष के साथ इस महनीय ग्रन्थ का नाम जोड़ना इसके महत्त्व को कम करना है। अतः इसकी व्युत्पत्ति 'काशयति = प्रकाशयति सूत्रार्थमिति काशिका' यही मानना अधिक तर्कसंगत है। इसीलिये व्याख्याकार सृष्टिधर ने यही व्युत्पत्ति मानी है[२७]। इस बात की पुष्टि में काशिका के आदि के श्लोक भी ध्यान देने योग्य हैं जिनमें उन्होंने काशिका की विशेषतायें लिखीं हैं—

---

२५. 'काशिका' का समालोचनात्मक अध्ययन पृ. ४७-४८ से साभार उद्धृत।

२६. पदमञ्जरी प्र.भा.पृ.।

२७. भाषा-वृत्त्यर्थविवृति ८।४।६८।

**इष्ट्युपसंख्यानवती शुद्धगणा विवृतगूढसूत्रार्था।**
**व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम।।**[२८]

इसमें अथवा अन्य श्लोकों में काशीक्षेत्र का कोई सम्बन्ध नहीं दिखाई देता है।

एक बात यह भी विचारणीय है कि इसके रचयिता जयादित्य और वामन का जन्मस्थान कश्मीर माना जाता है। अत: काशिका शब्द को सीमित अर्थ में बाँधने से इस ग्रन्थ की गरिमा घटती है। अत: रघुवीर[२९] वेदालंकार के अनुसार कश्मीर का क्षेत्र ही काशिका का रचना-स्थान मानना उचित है।

## काशिकाकार की शैली

काशिका एक वृत्तिग्रन्थ है। वृत्ति का आशय सूत्रार्थ-प्रधान व्याख्या ग्रन्थ है। अत: इस काशिका में सूत्रों के अर्थ को अधिक से अधिक स्पष्ट करने का प्रयास किया गया है। व्याकरण-पदार्थ का विवेचन करते हुए महाभाष्यकार ने स्पष्ट लिखा है—"न केवलं चर्चापदानि व्याख्यानम्—वृद्धिः आत् ऐज् इति। किं तर्हि? उदाहरणं प्रत्युदाहरणं वाक्याध्याहारः इत्येतत्समुदितं व्याख्यानं भवति"[३०]। काशिकाकार ने इसी पद्धति को अपनाया है। उन्होंने सूत्रार्थ-विवेचन के लिये सर्वप्रथम अनुवृत्ति वाले अंश को लिखा है। बाद में सामान्य रूप से सूत्रार्थ लिखा है। फिर उसके संभावित सभी उदाहरण देने का प्रयास किया है। बाद में प्रत्युदाहरण दिये हैं। इसमें अनुवृत्त अंश का सम्बन्ध भी बताया गया है। अधिकार सूत्रों की सीमा भी स्पष्ट रूप से बतायी गई है। अत: सूत्रार्थ समझने में कहीं सन्देह नहीं रहता है।

इतना ही नहीं अपनी प्रतिज्ञा के अनुसार प्राचीन वृत्तिग्रन्थ, महाभाष्य, धातुपारायण, नामपारायण आदि ग्रन्थों में विखरे विषयों का भलीभाँति समायोजन करके एक आदर्श व्याख्या-ग्रन्थ बनाया है।

यद्यपि काशिकाकार ने मुख्यरूप से महाभाष्य से सामग्री ली है तथापि जहाँ अन्य ग्रन्थों में भी उपयोगी सामग्री दिखाई दी, उसका भी पूर्ण उपयोग किया है। इसीलिये उन्होंने आदि में ही यह लिख दिया कि प्राचीन वृत्तिग्रन्थों, महाभाष्य और धातुपारायण, नामपारायण आदि में जो उपयोगी बातें मिलीं उनके सार का संग्रह इस काशिका में किया गया है।

महाभाष्य के अतिरिक्त अन्य ग्रन्थों से सहायता का स्पष्ट प्रमाण यह है कि जिन सूत्रों पर महाभाष्य में कोई चर्चा नहीं है। उन पर भी काशिकाकार ने समान पद्धति में ही विचार किया है। भाष्य के सभी रहस्य जो सामान्य अध्येता के लिये उपयोगी दिखाई दिये उनका संकलन करके काशिकाकार ने श्रम और समय बचाने का सराहनीय प्रयास किया है। यही कारण है कि 'काशिका' का समुचित अध्ययन कर लेने पर महाभाष्य समझने में कम कठिनाई होती है।

## काशिका में विवेचित सूत्रों की संख्या

व्याकरण वेदाङ्ग माना जाता है। इसलिये व्याकरण के सूत्रों को भी अपरिवर्तनीय रखने का प्रयास प्राचीन काल से होता रहा है। परन्तु किसी-किसी आचार्य ने एक सूत्र का योग-विभाग करके दो सूत्रों की कल्पना कर डाली। किसी ने वार्तिक को भी सूत्र मान लिया और किसी ने गणसूत्र को भी पाणिनतीय सूत्र ही मान लिया।

---

२८. काशिका का मङ्गलाचरणपद्य।

२९. काशिका का समालोचनात्मक अध्ययन पृ. ५७।

३०. महाभाष्य पस्पशा.।

अतः पाणिनि के सूत्रों की वास्तविक संख्या क्या थी—यह एक विचारणीय प्रश्न बन गया। पाणिनि की अष्टाध्यायी में प्रत्येक अध्याय में चार पाद हैं और उनमें निम्नलिखित संख्या में सूत्र हैं—

| अध्याय | पाद | | | | योग |
|---|---|---|---|---|---|
| | प्रथम | द्वितीय | तृतीय | चतुर्थ | |
| प्रथम | ७५ | ७३ | ९३ | ११० | ३५१ |
| द्वितीय | ७२ | ३८ | ७३ | ८५ | २६८ |
| तृतीय | १५० | १८८ | १७६ | ११७ | ६३१ |
| चतुर्थ | १७८ | १४५ | १६८ | १४४ | ६३५ |
| पञ्चम | १३६ | १४० | ११९ | १६० | ५५५ |
| षष्ठ | २२३ | १९९ | १३९ | १७५ | ७३६ |
| सप्तम | १०३ | ११८ | १२० | ९७ | ४३८ |
| अष्टम | ७४ | १०८ | ११७ | ६८ | ३६७ |
| | | | | | ३९८१ |

कुछ विद्वान जिनमें सिद्धान्त-कौमुदीकार भट्टोजिदीक्षित भी सम्मिलित हैं, उन्होंने 'एति सञ्ज्ञायामगात्[३१]' तथा 'नक्षत्राद्वा'[३२] इन दो गणसूत्रों को भी पाणिनि के सामान्य सूत्रों के ही रूप में लिखा है—देखें समासाश्रयविधि प्रकरण में 'सुषामादिषु च' ८।३।९८ सूत्र के बाद। काशिका के कुछ सम्पादकों ने भी इन दोनों गणसूत्रों को पाणिनीय सूत्रों में समाविष्ट करके ३९८३ सूत्र माने हैं। वास्तव में गणपाठ में इनका स्पष्ट उल्लेख होने से सूत्रों में सम्मिलित करना तर्कसंगत नहीं है। इसलिये प्रस्तुत संस्करण के दशम भाग ''सुषामादिषु च'' ८।३।९८ सूत्र पर न्यास, पदमञ्जरी और टिप्पणी में इसका स्पष्टीकरण देखा जा सकता है। यदि इन दो सूत्रों को नहीं मिलाते हैं तो उपर्युक्त ३९८१ संख्या ही सिद्ध होती है। अब यदि इसमें चतुर्दशसूत्री को भी मिला दिया जाय तो कुल सूत्रसंख्या ३९९५ हो जाती है। इसीलिये स्वरसिद्धान्त-चन्द्रिका में यह कारिका पठित है—

**चतुःसहस्त्री सूत्राणां पञ्चसूत्रविवर्जिता।**
**अष्टाध्यायी पाणिनीया सूत्रैर्माहेश्वरैः सह।।**[३३]

यह सौभाग्य की ही बात है कि पाणिनि के इन सूत्रों में गणसूत्र ही समाविष्ट हुये। परन्तु कुछ अल्पज्ञ विद्वानों ने 'वृद्धस्य च पूजायाम्' और 'यूनश्च कुत्सायाम्' इन दो वार्तिकों को भी काशिका में सूत्ररूप में सम्मिलित मान लिया—४।१।१६६, ४।१।१६६। यहाँ पर कैयट ने स्पष्ट शब्दों में लिखा है—'सूत्रेषु तु कैश्चित् 'वृद्धस्य च पूजायाम्' इति वार्तिकदर्शनात् प्रक्षिप्तम् (४।१।१६३)। 'यूनश्च कुत्सायाम्' इति सूत्रमनार्षमिति वचनम्' (४।१।१६२)।

निष्कर्ष यह है कि गणसूत्रों और वार्तिकों को नहीं सम्मिलित करने पर पाणिनि के मूल सूत्र ३९८१ और १४ माहेश्वर सूत्र मिला देने पर ३९९५ हो जाते हैं। प्रस्तुत संस्करण में यही स्वीकार किया गया है।

३१. सिद्धान्तकौमुदी सूत्र संख्या १०२३।
३२. सिद्धान्तकौमुदी सूत्रसंख्या १०२४।
३३. काशिका मङ्गलाचरण।

**काशिकाकार का योगदान**

काशिकाकार के समक्ष पाणिनीय व्याकरण पूर्ण रूप से प्रतिष्ठित हो चुका था। त्रिमुनि की ग्रन्थत्रयी के साथ-साथ अनेक व्याख्यान-ग्रन्थ भी लिखे जा चुके थे फिर भी काशिकाकार ने यह वृत्ति लिखने का प्रयास क्यों किया—यह जिज्ञासा काशिका के अध्येता के मन में उठती ही है।

यहाँ यह कहा जा सकता है कि काशिकाकार के समय तक पाणिनीय व्याकरण के अतिरिक्त अन्य नवीन व्याकरण भी प्रचलित हो चुके थे। काशिकाकार ने दुराग्रह नहीं किया। पाणिनि से भिन्न वैयाकरणों के भी कुछ मतों को वहाँ स्वीकार किया जहाँ पर पाणिनीय परम्परा से निर्वाह संभव नहीं था। इनमें कातन्त्र तथा चान्द्र व्याकरण प्रमुख हैं। यही नहीं, कहीं-कहीं अपनी ओर से नवीन इष्टियों की भी कल्पना की। उन शब्दों के साधुत्व का उपपादन किया जो पाणिनीय नियमों से संभव नहीं हो रहे थे।

गणपाठ की शुद्धता के लिये काशिकाकार का योगदान अविस्मरणीय है। इन्होंने काशिका के प्रारम्भ में ही 'शुद्धगणा' विशेषण लगा कर गणपाठ की शुद्धता का दावा किया है। काशिकाकार ने एक सफल संक्षेपकर्ता के रूप में अपने को प्रस्तुत किया है। इन्होंने अपने सामने उपलब्ध वृत्ति, भाष्य, धातुपारायण तथा नामपारायण आदि विविध ग्रन्थों का परिशीलन करने के बाद उनके सार का संग्रह काशिका में प्रस्तुत किया है।

**वृत्तौ भाष्ये तथा धातु-नाम-पारायणादिषु।**
**विप्रकीर्णस्य तन्त्रस्य क्रियते सारसङ्ग्रहः।।**[३४]

काशिकाकार का निम्न वचन भी ध्यान देने योग्य है—**'व्याकरणस्य शरीरं परिनिष्ठित-शास्त्रंकार्यमेतावत्'**।[३५] इसे लिखते हुये काशिकाकार ने यह घोषित कर दिया कि अब व्याकरणशास्त्र का उद्देश्य पूरा हो गया। यही कारण है कि आगे दार्शनिक विषयों को लेकर जितना विवाद चलता रहा उतना शब्दरूप-सिद्धि या सूत्रार्थ के विषय में नहीं चला।

काशिकाकार ने विभिन्न विद्वानों के मतों को अपनी काशिका में उद्धृत किया है। इसके लिये इन्होंने लगभग एक सौ पच्चीस स्थानों पर—'केचित्, अपरे, अन्ये, इतरे' आदि संकेतों को लिखा है जिनसे अन्य आचार्यों के प्रति इनका आदरभाव प्रकट होता है। पाणिनिद्वारा प्रयुक्त अनेक संज्ञा शब्द पूर्वाचार्यों द्वारा स्वीकृत थे इसका भी इन्होंने स्पष्ट उल्लेख किया है। इससे उन शब्दों के प्रयोग से संभावित दोष और गुण का श्रेय प्राचीन आचार्यों को ही दिया जाना उचित है।

सूत्रों के स्वरूप और उनके योग-विभाग के विषय में भी काशिकाकार का हस्तक्षेप दिखाई देता है। सूत्रों के उदाहरण प्रस्तुत करते समय काशिकाकार ने प्राचीन उदाहरणों को ही सर्वाधिक महत्त्व दिया है। इस विषय में वे महाभाष्य के अनुयायी दिखाई देते हैं। परन्तु कहीं-कहीं परम्परागत उदाहरण न देकर नवीन उदाहरण भी दिये हैं। ये भी किसी प्राचीन वृत्तिग्रन्थ में या व्याख्यान-ग्रन्थ में अवश्य रहे होंगे—ऐसा मानना उचित है। इसके विपरीत नव्य प्रक्रिया-ग्रन्थों में प्राय: नवीन कल्पित उदाहरण अधिक प्राप्त होते हैं।

काशिकाकार ने अनेक वचन, श्लोक, श्लोकवार्तिक भी उद्धृत किये हैं जिनका संकेत महाभाष्य में नहीं प्राप्त होता है। इनमें कुछ अन्य आचार्यों के तथा कुछ काशिकाकार के अपने वचन भी हो सकते हैं। काशिका

३४. वही।
३५. वही।

की इन्हीं विशेषताओं के कारण न केवल भारतीय अपितु अन्य देशों के विद्वानों ने भी मुक्तकण्ठ से इसकी प्रशंसा की है।

आधुनिक अध्ययन-शैली की दृष्टि से काशिका का अत्यन्त महत्त्व है। इसमें पाणिनि की अष्टाध्यायी की विशिष्ट शैली की पूर्ण सुरक्षा करते हुये अपेक्षित विषयों का सरल शब्दों में ज्ञान कराने में काशिकाकार की जितनी भी प्रशंसा की जाय, कम है। यही कारण है कि नव्यव्याकरण के अनेक ग्रन्थों के अध्ययन-अध्यापन की लोकप्रियता होने पर भी काशिका का महत्त्व आज भी उसी प्रकार है जिस प्रकार प्राचीनकाल में था।

**प्रस्तुत संस्करण का वैशिष्ट्य**

**प्रस्तुत संस्करण के वैशिष्ट्यों** का प्रतिपादन पूर्ववर्ती सभी भागों में किया जा चुका है। एक ही बात और **कहनी है कि इस संस्करण** में समायोजित 'भावबोधिनी हिन्दी-व्याख्या' उस कमी को पूरा करती है जो **अष्टाध्यायी-क्रम से अध्ययन** करने वाले छात्रों की देखी जाती है। यह कमी प्रक्रिया-सम्बन्धी है। इस संस्करण **में भावबोधिनी हिन्दी-व्याख्या** में अधिकांश शब्दों की सिद्धि की प्रक्रिया सरल शब्दों में लिखी गई है। काशिका द्वारा **सूत्रार्थ का स्पष्ट** ज्ञान और हिन्दी व्याख्या द्वारा प्रक्रिया-सम्बन्धी ज्ञान संभव होने से व्याकरण-शास्त्रीय अध्ययन प्राय: पूर्ण हो जाता है।

भावबोधिनी व्याख्या यद्यपि अनुवाद-प्रधान है तथापि स्पष्टीकरण के लिये अपेक्षित अधिक विषयों को कोष्ठक के अन्तर्गत रख दिया गया है। इसमें मूल का अनुवाद और उसकी व्याख्या दोनों का पृथक् पृथक् ज्ञान हो सकता है। जहाँ बहुत गम्भीर व्याख्येय विषय है वहाँ 'विमर्श' में उसे विस्तार से समझाया गया है।

यहाँ यह कहना आवश्यक है कि इस संस्करण का मुख्य उद्देश्य सम्पूर्ण काशिका को हिन्दी माध्यम से स्पष्ट करना है। अत: प्रसङ्गत: काशिका के मूलभाग का कहीं-कहीं ही संशोधन किया जा सका है। अभी भी उसमें बहुत कुछ संशोधन करना शेष है। यही बात न्यास तथा पदमञ्जरी व्याख्याओं के विषय में भी समझनी चाहिये। भविष्य में यदि सम्भव हुआ तो इन सभी विषयों पर आवश्यक कार्य किया जायगा।

**प्रस्तुत संस्करण की पद्धति**

प्रस्तुत संस्करण को अधिक से **अधिक उपयोगी बनाने** का यथासंभव प्रयास किया गया है। इसमें प्रत्येक सूत्र के साथ तीन प्रकार की **संख्यायें में दी गई हैं।** १. सूत्र से पूर्ववर्ती संख्या अष्टाध्यायी के समस्त सूत्रों का क्रम प्रदर्शित करती है। २. सूत्र **के बाद दो संख्यायें हैं। इनमें** प्रथम संख्या उस पाद में सूत्र की वर्तमान संख्या सूचित करती है। ३. संख्या जो **कोष्ठक के अन्तर्गत दी गई है** वह निर्णयसागरीय सिद्धान्त-कौमुदी में प्रदर्शित सूत्र-संख्या को सूचित करती **है। उससे प्रक्रिया-क्रम** समझने में सरलता होगी क्योंकि काशिका के सूत्र को सिद्धान्त-कौमुदी में सरलता से **देखा जा सकता है।**

कात्यायन के वार्तिक तथा **अन्य आचार्यों** के वचन भी स्पष्ट शब्दों में लिखे गये हैं।

महाभाष्यकार की इष्टियों को भी अलग से लिखा गया है।

गणपाठ में प्रत्येक शब्द को अलग-अलग लिखा गया है।

वैदिक उद्धरणों के सन्दर्भ भी यथासम्भव दिये गये हैं। इनका आधार ओस्मानिया विश्वविद्यालय हैदराबाद से प्रकाशित काशिका को माना गया है। स्वरों के संकेत भी उसी के आधार पर लिखे गये हैं।

इन उपर्युक्त विशेषताओं के कारण प्रस्तुत संस्करण की उपयोगिता स्वत: सिद्ध है।

# काशिका में विवेचित विषयों का संक्षिप्त परिचय

प्रस्तुत संस्करण में दश भागों में काशिका प्रकाशित की गई है. इस अन्तिम भाग के अध्येता को सम्पूर्ण काशिका के विषयों का संक्षिप्त परिचय कराने के लिये नीचे विवरण दिया जा रहा है—

**(तृतीय-अध्याय का तृतीयपाद)**

**(षष्ठ-अध्याय का द्वितीयपाद)**

**(सप्तम-अध्याय का चतुर्थपाद)**

चूँकि अष्टाध्यायी की व्याख्या काशिका वृत्ति है अत: उसकी विषयवस्तु ही काशिका की भी विषयवस्तु है। इस दृष्टि से प्रथम तथा द्वितीय अध्याय वाक्यों से पदों के विवरण का है। तृतीय से पञ्चम अध्याय पदों के प्रकृति-प्रत्यय के विभाग से सम्बद्ध हैं। षष्ठ से अष्टम तक प्रकृति-प्रत्ययों के साथ-साथ आगम आदेश का संयोजन कर परिनिष्ठित पदों के निर्माण (व्युत्पत्ति) से सम्बद्ध हैं।

# विषयानुक्रमणिका

❧ ● ❧

* तस्मै श्रीगुरवे नमः *

# काशिकावृत्तिः

## अथ अष्टमाध्याये प्रथमः पादः

### ३६१५. सर्वस्य द्वे ॥ १ ॥ (२१३९)

'सर्वस्य' इति च 'द्वे' इति चैतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः 'पदस्य' (८।१।१६) इत्यतः प्राक् 'सर्वस्य द्वे भवतः' इत्येवं तद्वेदितव्यम् । वक्ष्यति—'नित्यवीप्सयोः' (८।१।४) इति, तत्र सर्वस्य स्थाने द्वे

**न्यासः**

सर्वस्य द्वे ॥ स्वरितलिङ्गासङ्गादधिकारत्वमस्यावगम्याह—सर्वस्येत्यादि । वक्ष्याम इति । व्याख्यास्याम इत्यर्थः । प्राक् पदस्येति । 'पदस्य' इति वक्ष्यमाणो यो योगस्तस्मात् प्रागित्यर्थः । 'पदस्य' इति वक्ष्यमाणस्य योगस्यानुकरणमेतत् । विभक्तिस्त्वनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वादसत्यर्थवत्त्वे प्रातिपदिकत्वाभावान्न भवति, यथा—गवित्ययमाहेति । सर्वस्य द्वे भवत इत्येवं तद्वेदितव्यमिति । इति-करणोऽर्थनिर्देशार्थः । 'सर्वस्य द्वे भवतः' इति योऽयमर्थः प्रतीयत एतदर्थरूपं तद् वक्ष्यमाणं वेदितव्यमित्यर्थः ।

वक्ष्यतीति सूत्रकारः ।

तत्रेति । 'नित्यवीप्सयोः' इत्यत्र योगे । इह द्वौ पक्षौ सम्भवतः—स्थाने द्विर्वचनम्, द्विष्प्रयोगो द्विर्वचनञ्चेति । कथं कृत्वा ? सर्वस्येति शब्दानुशासनप्रस्तावात् सर्वस्य शब्दस्येति गम्यते । यद् द्विशब्दश्चायम्

**पदमञ्जरी**

सर्वस्य द्वे ॥ 'नित्यवीप्सयोः' इत्येवमादीनां विधेयकार्यिणोरनिर्देशेन साकाङ्क्षत्वात्स्वरितत्वाच्चाधिकारोऽयम्, तदाह—सर्वस्येति द्वे इति चेति । 'सर्वस्य' इत्युक्ते यत्प्रतीयते, 'द्वे' इति चेत्युक्ते यत्प्रतीयते, एतदर्थस्वरूपमित्यर्थः । यद्यपि 'स्वं रूपम्' इति वचनादुभयोरपि स्वरूपग्रहणं युक्तम्, तथापि 'नाम्रेडितस्यान्त्यस्य तु वा', 'नित्यमाम्रेडिते डाचि' इति द्विरुक्तस्य शब्दस्य सत्तामङ्गीकृत्य कार्यविधानात्तदभावः । न हि द्वयोरन्यतरस्य वा स्वरूपग्रहणे द्विरुक्तेऽच्छब्दस्य सम्भवः, तथा 'तस्य परमाम्रेडितम्' इति पूर्वपराभावादनुपपन्नं स्यात् । तस्मादर्थग्रहणम् । सर्वशब्दश्चायं द्रव्यप्रकारावयवकात्स्न्र्यवृत्तिः, द्रव्यकात्स्न्र्ये यथा—सर्वस्वं ददातीति, यच्च यावच्च स्वं तत्सर्वं ददातीति गम्यते । प्रकारकात्स्न्र्ये यथा—सर्वान्नीनो भिक्षुरिति, सर्वप्रकारकमन्नं भक्षयतीति गम्यते । अवयवकात्स्न्र्ये यथा—सर्वः पटो दग्ध इति, सर्वावयवः पटो दग्ध इति गम्यते । इह तु पर्यादीनां विशिष्टार्थानां शब्दानामुपादानाद् द्रव्यप्रकारकात्स्न्र्ययोरसम्भवः । यत्रापि किञ्चिन्नोपादीयते 'नित्यवीप्सयोः' इति, तत्रापि विशेषानुपादानादेव सर्वस्य शब्दस्य सिद्धम् । तस्मादवयवकात्स्न्र्यवृत्तिर्गृह्यते । परः सर्वस्य द्वे भवतः, न कश्चिदवयवो द्विर्वचनेन वर्ज्यत इत्यर्थः ।

**भावबोधिनी**

गणेशं शारदां नत्वा गुरुपितृपदाम्बुजम् ।
अष्टमेऽध्यायेऽमुं पादं व्याचष्टे 'जयशङ्करः' ॥

अब अष्टम अध्याय में प्रथम पाद प्रारम्भ हो रहा है :—

'सबका' और 'दो [ होते हैं ]' इन दोनों का अधिकार समझना चाहिये । इस सूत्र से लेकर आगे 'पदस्य' ( ८।१।१६ ) इससे पहले तक जो कहेंगे उसे 'सबके दो होते हैं' ऐसा समझना चाहिये । उदा० कष्ठ

**भवतः। के द्वे भवतः? ये शब्दतश्चार्थतश्चोभयथान्तरतमे। एकस्य पचतिशब्दस्य द्वौ पचतिशब्दौ भवतः—पचतिपचति। ग्रामोग्रामो रमणीयः।**

**न्यासः**

'आ दशभ्यः संख्याः संख्येये वर्त्तन्ते' इति संख्येयवचनः, तच्चेह संख्येयं शब्दरूपं वा स्याद्, आवृत्तिर्वा? 'द्वे' इत्यपि निर्देशो नपुंसकलिङ्गेन वा स्यात्? स्त्रीलिङ्गेन वा? तत्र यदा नपुंसकलिङ्गेन निर्देशः, तदा शब्दरूपे संख्येये। यदा तु स्त्रीलिङ्गेन निर्देशः, तदा शब्दस्यावृत्तौ उच्चारणलक्षणे क्रिये। तत्र यदा शब्दरूपे विधीयेते तदा सर्वस्येति स्थानषष्ठीयं सम्पद्यते; अनियतसम्बन्धत्वात् 'षष्ठी स्थानयोगा' इति न्यायात्। अस्मिन् दर्शने 'स्थाने द्विर्वचनम्' इत्येष पक्षो भवति। यदा तु द्वे आवृत्ती विधीयेते तदा 'द्विष्प्रयोगो द्विर्वचनम्' इत्येष पक्षो जायते। अस्मिन् दर्शने स्थान्यादेशभावो नास्ति। आवृत्तिर्हि क्रिया, तस्याश्चेह शब्दः साधनम्। न च क्रियायाः साधनस्य च स्थान्यादेशभाव उपपद्यते। यदि हि स्यात्, शब्दस्य स्थानिनो निवृत्तिधर्मत्वान्निवृत्तिरेव स्यात्, ततश्च क्रियाया अभाव एव स्यात्। न हि शब्देन विनोच्चारणक्रियोपपद्यते; तस्याः शब्दधर्मत्वात्। तस्मात् यदा द्वे आवृत्ती विधीयेते तदा 'द्विष्प्रयोगो द्विर्वचनम्' इत्येष पक्ष उपजायते। अस्मिंस्तु पक्ष आवृत्तिशब्दापेक्षया सर्वस्येति 'कर्तृकर्मणोः कृति' इदि कृद्योगलक्षणा कर्तृषष्ठी वेदितव्या। सर्वो हि शब्द आवर्त्यमान एवावृत्तिक्रियायाः कर्ता भवति। अत्राद्यं पक्षमाश्रित्यैतदुक्तम्—**सर्वस्य स्थाने द्वे भवत इति।**

कथं पुनः स्थाने द्विर्वचनपक्ष आश्रितः? कथं पुनर्नाश्रयितव्यः? सदोषत्वात्। स्थाने द्विर्वचने पुनः—श्वलिट् श्वलिट्, वाग्वागिति 'पूर्वत्रासिद्धम्'—इत्यसिद्धत्वात् पूर्वं ढत्वादिभ्यो द्विर्वचने कृते ढत्वादयोऽत्र न सिद्ध्यन्ति; अपदान्तत्वात्? नैष दोषः; वक्ष्यति ह्येतत्—'पूर्वत्रासिद्धीयमद्विर्वचने' इति। अपि च

**पदमञ्जरी**

अत्र 'आ दशभ्यः संख्याः संख्येये वर्तन्ते' इति 'द्वे' इत्यस्य संख्येयापेक्षायां शब्दानुशासनप्रस्तावाच्छब्दरूपे संख्येये 'षष्ठी स्थानेयोगा' इति वचनात्सर्वस्येति स्थानषष्ठी, सर्वस्य पर्यादेः स्थाने द्वे शब्दरूपे भवत इत्यर्थः, यथा—'अस्तेर्भूः' इति, तदा 'स्थाने द्विर्वचनम्' इत्ययं पक्षो भवति। शब्दसम्बन्धिनि तूच्चारणे संख्येये स्थान्यादेशभावो न सम्भवति, निवृत्तिधर्मा हि स्थानी शब्दश्चेन्निवृत्तः कस्योच्चारणं स्यात्। अतोऽध्याहृतोच्चारणशब्दापेक्षया 'कर्तृकर्मणोः कृति' इति सर्वस्येति कर्मणि षष्ठी, सर्वस्य पर्यादेर्द्वे उच्चारणे भवतः, सर्वः पर्यादिर्द्विरुच्चारणीय इत्यर्थः, तदा 'द्विःप्रयोगो द्विर्वचनम्' इत्येष पक्षो भवति।

तत्र प्रथमं पक्षं दर्शयति—**सर्वस्य स्थान द्वे भवत इति। के द्वे इति।** विशेषानुपादानाद् ये केचन

**भावबोधिनी**

जायगा—'नित्य और वीप्सा अर्थों में' (८।१।४), वहाँ—सबके स्थान में दो हो जाते हैं। कौन-कौन दो हो जाते हैं? जो शब्दरूप तथा अर्थ की दृष्टि से दोनों प्रकार से सदृशतम होते हैं [ वे दो हो जाते हैं ]। एक 'पचति' शब्द के दो 'पचति' शब्द हो जाते हैं—पचति पचति। [ एक 'ग्रामः' के दो 'ग्रामः' शब्द हो जाते हैं— ] 'ग्रामो ग्रामो रमणीयः। ( गाँव-गाँव अर्थात् हरेक गाँव सुन्दर है। )

**विमर्श**—यह अधिकार सूत्र है और आगे 'पदस्य' इस सोलहवें सूत्र तक 'सर्वस्य' तथा 'द्वे भवतः' का सम्बन्ध किया जाता है।

दो होते हैं—इस विषय में दो पक्ष माने जाते हैं; (१) सबके स्थान पर दो आदेश हो जाते है। और (२) सबका दो बार प्रयोग ( उच्चारण ) कर दिया जाता है।

'द्वे' यह संख्यावाची नहीं अपितु संख्येयवाचक है। यह संख्येय शब्दरूप हो सकता है और आवृत्ति भी। जब शब्दरूप को विधेय माना जाता है तब 'सर्वस्य' इसमें स्थान-षष्ठी मानकर 'सबके स्थान में दो बार प्रयोग होता है।' क्योंकि 'षष्ठी स्थानेयोगा' सूत्र से ऐसी प्रतीति हो जाती है। यही पूर्वोक्त प्रथम पक्ष का आशय है।

जब दो आवृत्ति विधेय हैं तब 'दो बार प्रयोग होना = दो होना है।' इसमें दो बार उच्चारण करना ही

**न्यासः**

नित्येऽर्थे वीप्सायाञ्च यः शब्दो वर्तते तस्य द्विर्वचनं विधीयते, न च ढत्वादिष्वकृतेषु नित्यादावर्थे पदस्य वृत्तिरुपपद्यते। तस्मात् पूर्वं ढत्वादिभिरेवात्र भवितव्यम्, पश्चाद् द्विर्वचनेनेत्येष क्रमः। इह तर्हि विसंविसम्, मुसलम्मुसलमित्यत्र 'आदेशप्रत्यययोः' इति षत्वं प्राप्नोति। अयमप्यदोषः; यस्मादादेशो यः सकारस्तस्य षत्वं विधीयते, न ह्यत्रादेशः सकारः, किं तर्हि ? तदवयवः। इह तर्हि नृभिर्नृभिरित्यत्र 'रषाभ्यां नो णः समानपदे' इति णत्वं प्राप्नोति ? एषोऽप्यदोषः; कार्यिणो नकारस्य रेफादिना निमित्तेन यदा सर्वदा समानपदस्थत्वमेवं सति णत्वेन भवितव्यमिति। किं वक्तव्यमेतत् ? न; कथं तर्हि अनुच्यमानं लभ्यते ? समानग्रहणसामर्थ्यात्। यदि हि यत्र समानपदस्थत्वमसमानपदत्वञ्च तत्रापि स्यात्, समानग्रहणमनर्थकं स्यात्। नृभिरिति शब्दस्य नकारस्य द्विर्वचन एव कृते रेफेण निमित्तेन समानपदस्थत्वम्, नाऽकृते। तस्माददुष्ट एव स्थाने द्विर्वचनपक्ष इति युक्त एवाश्रयितुम्। के द्वे इति। एवं मन्यते—विशिष्टे द्वे एवेष्येते, इह च विशेषानुपादानादनियमेन ये केचन शब्दरूपे प्राप्नुत इति 'स्थानेऽन्तरतमः' इति परिभाषया व्यवस्था भविष्यतीत्यनेनाभिप्रायेणाह—**ये शब्दतश्चेत्यादि**। इह केषाञ्चित् शब्दानां शब्दत एवान्तरतम्यम्, यथा—बिभीतकादिवाचिनामक्षादिशब्दानाम्। केषाञ्चिदर्थत एव, न शब्दतः, यथा—तरुपादपादिशब्दानाम्। केषाञ्चिदुभयत एव, यथा—द्वयोः पचतिशब्दयोस्तिङन्तयोः। तत्रोभयथा यत्रान्तरतम्यमस्ति तत्र यथा स्यादित्येवममुर्थभयोर्ग्रहणम्। एतच्च 'स्थानेऽन्तरतमः' इति परिभाषायास्तमब्ग्रहणाल्लभ्यते। ते एवोभयथान्तरतमे दर्शयितुमाह—**एकस्येत्यादि**। अथ 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति स्वरूपग्रहणाद् द्विशब्दादेश एव कस्मान्न भवति ? द्विवचनेन निर्देशात्। स्वरूपग्रहणे तु सति द्विशब्दस्यैकत्वादेकवचनेनैव निर्देशं कुर्यात्, द्विवचनेन तु निर्देशः कृतः, तस्मान्नेदं स्वरूपग्रहणम्, अतो न भवति द्विशब्दादेशप्रसङ्गः। यतश्चायम् 'तस्य परमाम्रेडितम्' 'अनुदात्तञ्च' इत्याह, ततो विज्ञायते—न द्विशब्दादेश इति। द्विशब्दादेशे हि सति भेदनिबन्धनत्वात् परस्य द्विशब्दस्य चाभिन्नत्वात् परत्वमेव तावन्न द्विशब्दादेशे स्यात्, कुतः पुनराम्रेडितसंज्ञा, अनुदात्तत्वञ्च ! यदि च द्विशब्द आदेशः स्याद्, 'अव्यक्तानुकरणस्यात इतौ' इत्यनुवर्त्तमाने 'नाम्रेडितस्यान्त्यस्य तु वा' इत्याम्रेडितावयवस्याच्छब्दस्य पररूपत्वप्रतिषेधो नोपपद्यते, न द्विशब्दस्याच्छब्दोऽवयवोऽस्ति। एतेन सर्व-

**पदमञ्जरी**

द्वे प्राप्नुत इति प्रश्नः। इतरोऽप्यन्तरतमपरिभाषामाश्रित्याह—**शब्दतश्चेति**। बिभीतकादिवाचिनामक्षादिशब्दानां शब्दत एवान्तर्यम्, तरुपादपादीनामर्थत एव, द्वयोस्तु पचतिशब्दयोरुभयथान्तर्यम्; तत्र ते एव यथा स्यातामित्युभयग्रहणम्। ते एवोभयान्तरतमे दर्शयति—**एकस्येति**।

ननु चास्मिन्पक्षे राजाराजा, वाग्वाक्, लिट्लिट्, गोधुग्गोधुक्, शब्दप्राट्शब्दप्राट्, उपानदुपानत्, गौर्गौरित्यत्र नलोप-कुत्व-ढत्व-घत्व-षत्व-धत्व-दीर्घत्वा-( वृद्धी ) नामसिद्धत्वादकृतेष्वेतेषु द्विर्वचने कृते पदस्य स्थाने समुदायस्यादिष्टत्वात्तस्यैव स्थानिवद्भावेन पदत्वं नावयवयोरिति पूर्वत्र भागे नलोपादीनि न स्युः, उत्तरत्र तु समुदायपदत्वेनापि सिद्ध्यति ? ननु च नलोपादीन्यतरङ्गाणि पदत्वमात्रापेक्षत्वाद्, द्विर्वचनं तु बहिरङ्गं वीप्साद्यर्थापेक्षत्वात्, ततश्च तेषु कृतेषु द्विर्वचनं भविष्यति ? एवमपि कृतानामपि तेषां द्विर्वचने कर्तव्येऽसिद्धत्वान्नकारादियुक्तस्य द्विर्वचनमिति पुनः पूर्वपदे निमित्ताभावान्न स्युरेव, यथा औजढदित्यत्र कृतानामपि ढत्वादीनामसिद्धत्वात् हत इत्येतस्य द्विर्वचनेऽभ्यासे हकारस्यैव श्रवणं भवति ? नैष दोषः;

**भावबोधिनी**

मुख्य है। अतः स्थान्यादेशभाव की कल्पना नहीं की जाती है। इस पक्ष में 'आवृत्ति' शब्द को मान कर 'कर्तृकर्मणोः कृति' सूत्र से कृद्योग में कर्तृ षष्ठी समझनी चाहिये, क्योंकि आवर्त्यमान ( आवृत्ति-क्रियाश्रय ) शब्द ही आवृत्ति क्रिया का आश्रय बनता है। दोनों पक्षों में पहले 'स्थानपक्ष' का विचार है और अन्त में 'आवृत्ति पक्ष' का। स्थानी शब्द का आदेश के साथ शब्दरूप तथा अर्थ दोनों दृष्टियों से सादृश्य अपेक्षित है। अतः जब दोनों प्रकार का सादृश्य सम्भव होता है तभी दो होते हैं केवल शब्द या केवल अर्थ के साम्य से नहीं।

**यदा तु 'द्विःप्रयोगो द्विर्वचनम्', तदा स एव पचतिशब्दो द्विरावर्त्तते, तस्य द्वे आवृत्ती भवतः। सर्वस्येति किम्? विस्पष्टार्थम्।**

**न्यासः**

शब्दस्यापि स्वरूपग्रहणं प्रतिक्षिप्तम्। यदि हि सर्वशब्दस्य स्वरूपग्रहणं स्यात्, तस्यैव हि द्विर्वचनं स्यात्। ततश्च पूर्ववदाम्रेडितसम्बधिनोऽच्छब्दस्य पररूपत्वप्रतिषेधो नोपपद्येत, 'नित्यवीप्सयोः' इत्यत्र नित्यग्रहणं चानर्थकं स्यात्। तत्र हि नित्येऽर्थे वीप्सायाञ्च वर्त्तमानस्य द्विर्वचनं विधास्यते। न च सर्वशब्दस्य नित्येऽर्थे वृत्तिरस्ति, तिङ्क्षु नित्यता; 'अव्ययकृत्सुच्सुप्सु वीप्सा' इति वचनात्। तस्मात् सर्वस्येत्यत्रार्थग्रहणम्। सर्वशब्दोऽयमिह सकले कलावति वर्त्तते, तेन पचतीत्यादेः कृत्स्नस्य शब्दस्य द्विर्वचनं भवतीत्यलमतिप्रसङ्गेन। एवं तावत् स्थाने द्विर्वचनपक्षमाश्रित्य 'सर्वस्य स्थाने द्वे भवतः' इत्युक्तम्।

इदानीम् 'द्विष्प्रयोगो द्विर्वचनम्' इति पक्षमाश्रित्याह—**यदा त्वित्यादि।** तुशब्दः पूर्वस्मात् पक्षाद् विशेषस्य प्रदर्शकः[1], तत्रान्तरतम्येन द्वे शब्दरूपे आदिश्येते। इह तु स एव शब्दो द्विरावर्त्यते द्विरुच्यत इत्यर्थः। **द्वे आवृत्ती भवत इति।** द्वे उच्चारणक्रिये भवत इत्यर्थः। कथम् 'पुनर्द्विष्प्रयोगो द्विर्वचनम्' इति

**पदमञ्जरी**

वक्ष्यत्येतत् 'पूर्वत्रासिद्धीयमद्विर्वचने' इति, ततश्च परत्वादन्तरङ्गत्वाद्वा नलोपादिषु कृतेषु तद्युक्तस्यैव द्विर्वचनं भविष्यति।

यानि तर्हि पदकार्याणि नाकृते द्विर्वचने प्राप्नुवन्ति, तानि न स्युः; तद्यथा किङ्किमिति—'वा पदान्तस्य' इति परसवर्णविकल्पः, अपचन्नपचन्निति ङमुट्, अग्नाअग्नाविति वलोपः, छायाच्छायेति तुग्विकल्पः, वृक्षान्वृक्षानिति पदान्तस्य' इति णत्वप्रतिषेधः, अजेऽजे इति, 'एङः पदान्तादति' इति पूर्वरूपत्वम्। किं चात्र 'स्वरितो वानुदात्ते पदादौ' इत्येष विधिर्न स्यात्, उत्तरभागस्यापदत्वात्; तथाऽपदत्वात्तदाश्रयाणि कार्याणि प्राप्नुवन्ति, तद्यथा—अङ्गेनाङ्गेनेत्यतो गुणे पररूपत्वं स्यात्, पयःपय इति 'सोऽपदादौ' इति सत्वप्रसङ्ग इत्येषा दिक्। अतो द्वयोरपि पृथक्पदत्वमेषितव्यम्; तदुच्यते—यदि प्रत्यस्तमितावयवभेद एक एवादेशः स्याद्, 'द्वे' इति द्विर्वचनमनुपपन्नं स्यात्; ततः 'द्वे' इति वचनादेकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयेते, तत्र स्थानिवद्भावेन समुदायस्यापि पदत्वं स्वतः, एवं चावयवयोरपीति समुदायस्यावयवयोश्च पदकार्याणि भविष्यन्ति। एवमपि विसंविसम्, मुसलंमुसलमिति 'आदेशप्रत्यययोः' इति षत्वप्रसङ्गः? नैष दोषः; नैवं विज्ञायते—आदेशस्य सकार इति, कथं तर्हि? आदेशो यः सकार इति। अत्र च समुदायस्य समुदाय आदेशः, न सकारमात्रस्य सकारमात्रमिति न भविष्यति। इह तर्हि नृभिर्नृभिरिति समुदायस्य पदत्वाद्रेफनकारयोः समानपदस्थत्वाद्रषाभ्यामिति णत्वप्रसङ्गः? एषोऽप्यदोषः; तत्र समानग्रहणं न कर्त्तव्यम्, 'पदे' इत्येवास्तु, तत्रापदस्थयोर्निमित्तनिमित्तिनोरसम्भवादेकत्वविवक्षार्थमेव पदग्रहणमिति समानपदस्थत्वं सिध्यति, ततश्च समानग्रहणाद् यत्र समानपदस्थत्वमेव, तत्र णत्वम्। इह तु स्थानिवद्भावादेकपदत्वम्। वस्तुतस्तु पदद्वयात्मक आदेश इति पृथक्पदस्थमिति णत्वाभावः। तदेवं निर्दोषः 'स्थाने द्विर्वचन' पक्षः।

इदानीं द्वितीयं पक्षं दर्शयति—**यदा त्विति। द्विरावर्त्तत इति।** उच्चार्यमाणस्य शब्दस्य यो व्यापार उच्चारणं नाम सेहावृत्तिर्विवक्षिता! द्विरुच्चरतीत्यर्थः। **द्वे आवृत्ती भवत इति।** द्वे उच्चारणक्रिये भवत

**भावबोधिनी**

द्वितीय पक्ष ( आवृत्ति ) में किसी साम्य की अपेक्षा नहीं होती है क्योंकि उसी शब्दविशेष की दो आवृत्ति कर दी जाती है, दो बार उच्चारण कर दिया जाता है। यही आगे प्रस्तुत किया जा रहा है— ]

(अनु०) किन्तु जब 'दो बार प्रयोग = उच्चारण करना दो बार कहना है' तब तो वह 'पचति' शब्द ही दो बार आवृत्त कर दिया जाता है, उस 'पचति' शब्द को दो आवृतियाँ हो जाती है।

[ सूत्रस्थ ] 'सर्वस्य' यह स्पष्टता के लिये ही है।

---

१. 'विशेषणार्थः'–इति पाठा०।

**न्यासः**

पक्ष आश्रयितव्यः ? कथं च नाश्रयितव्यः ? सदोषत्वात् । द्विष्प्रयोगे हि—आम् पचसि पचसि देवदत्त इत्यत्र 'आम एकान्तरमामन्त्रितमनन्तिके' इति निघातप्रतिषेधो न प्राप्नोति; आमन्त्रितस्य पदद्वयेन व्यवधानादेकान्तरताया अभावात् । स्थाने पुनर्द्विर्वचने ह्येकपदस्यायमादेश इति सत्यप्यादेशस्य स्वगते भेदे स्थानिवद्भावादेकत्वव्यपदेशे सत्येकान्तरता भवतीति निघातप्रतिषेधः सिध्यति ? नैष दोषः; धर्मभेदादुपचरितो हीह भेदः, स्वगतस्त्वभेद एव; अन्यथा वृत्तिरेव न स्यात् । एकस्यैव हि वस्तुन आवृत्तिः क्रियते । तस्माद् भिन्नत्वाद् वस्तुन इहैव सुतरामेकान्तरता सिध्यति । इह तर्हि पौनःपुन्यमिति ? अत्र 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ् न प्राप्नोति, पौनःपुनिक इत्यत्र च 'कालाट्ठञ्' इति ठञ् न प्राप्नोति; अप्रातिपदिकत्वात् । अप्रातिपदिकत्वं त्वर्थवत्समुदायानां समासस्यैवेति समासग्रहणस्य नियमार्थत्वात् । स्थाने द्विर्वचने पुनर्यद्यपि सुबन्ततया स्वाश्रया प्रातिपदिकसंज्ञा नास्ति, तथापि स्थानिवद्भावात् प्रातिपदिकग्रहणे ग्रहणात् प्रातिपदिकं भवति । यद्यपि चास्य स्थानी प्रत्ययलक्षणेन सुबन्तः, तथाप्यप्रत्यय इति प्रातिपदिकसंज्ञायाः प्रतिषेधो न भवति; प्रातिपदिकसंज्ञायाः प्रत्ययलक्षणेनाप्रत्यय इति प्रतिषेधो न भवतीत्यस्यार्थस्य 'न ङिसम्बुद्धयोः' इत्यनेन ज्ञापितत्वात् । द्विष्प्रयोगे द्विर्वचनेऽपि न दोषः । अत्र समासग्रहणं हि तुल्यजातीयस्यैव प्रातिपदिकसंज्ञां निवर्त्तयति । कश्च तुल्यजातीयः ? यस्य भेदसंसर्गद्वारेण समुदायार्थ उपजायते । कस्य चैवंविधोऽर्थ उपजायते ? वाक्यस्य । नित्यादिश्चायमर्थः पदावस्थायां न दृष्ट एव । द्विरुक्तिकाले दृश्यमानः पदान्तरेण न भिद्यते, नापि संसृज्यत इति कुत एवम्प्रकारस्य समासग्रहणान्निवृत्तिः ! अथ वाऽऽचार्यप्रवृत्तिर्ज्ञापयति—भवत्येवञ्जातीयेभ्यस्तद्धितोत्पत्तिरिति, यदयं कस्कादिषु कौतस्कुतशब्दं पठति । कुतः कुतः आगत इति 'अव्ययात्त्यप्' इति त्यपि प्राप्तेऽस्मादेव निपातनादण् ।

**पदमञ्जरी**

इत्यर्थः । न पुनर्मुख्ये एवावृत्ती द्वे भवतः, तथा सति त्रिर्वचनप्रसङ्गात् । नन्वस्मिन्पक्षे आं पचसि-पचसि देवदत्त३—इत्यत्रावृत्तिभेदनिबन्धनया द्वित्वसंख्यया स्वाश्रयस्यैकत्वस्य निवर्त्तनादेकान्तरताया अभावाद् 'आम एकान्तरम्' इति निघातप्रतिषेधो न स्याद्यथा किरिणेत्यादावावृत्तिभेदनिबन्धनेनापि द्व्यच्त्वेन स्वाश्रयस्यैकाच्त्वस्य निवर्तनात् 'सावेकाचः' इति विभक्त्याद्युदात्तत्वं न भवति, तद्वत् । स्थाने द्विर्वचने तु समुदायस्यापि स्थानिवद्भावेन पदत्वात्सिध्यति, तथा पौनःपुन्यमिति पुनःपुनर्भवितरि वर्तमानात्पुनःपुनशब्दाद्भावे ष्यञिष्यते; पुनःपुनर्भवः पौनःपुनिक इति च 'कालाट्ठञ्,' तत्र द्विःप्रयोगे पदस्य विज्ञायमाने समुदायस्य वीप्सालक्षणेनार्थेन सत्यप्यर्थवत्त्वेऽर्थवत्समुदायानां समासग्रहणं नियमार्थमित्यप्रातिपदिकत्वात्तद्धितो न स्यात्; सुबन्तादुत्पत्तिपक्षेऽपि समुदायस्यासुबन्तत्वान्न स्यादेव, पक्षान्तरे तु स्थानिवद्भावादुभयमप्यस्तीति सिध्यति । यद्यप्यस्य स्थानी सुबन्तः, तथापि सुब्लुकि कृते 'न ङिसम्बुद्धयोः' इति निषेधाज्ज्ञापकात् प्रत्ययलक्षणेन 'अप्रत्ययः' इति निषेधाभावात्प्रातिपदिकत्वमव्यावृत्तमिति ? अत्रैवं भाष्ये परिहार उक्तः—पचसिपचसीत्यर्थरूपयोः समानत्वात्स एव पचशब्दः, स एव च तिङ्, ततश्च यः पूर्वस्माद्विहितः स परस्मादपि, यश्च पर-

**भावबोधिनी**

**विमर्श**—भाव यह है कि 'सर्वस्य' के प्रयोग के दो फल सम्भव हैं १—'अलोऽन्त्यस्य' को रोक कर सबके स्थान पर दो करना । २—षष्ठ्यर्थ का ज्ञान कराना । इनमें 'अलोऽन्त्यस्य' इसकी शंका नहीं करनी चाहिये क्योंकि शब्दरूप तथा अर्थ इन दोनों के सादृश्य पर दो शब्दरूप होते हैं ये स्वतः अनेकाल् बन जाते हैं, अतः 'अनेकाल्शित् सर्वस्य' सूत्र से सम्पूर्ण का ही द्विर्वचन होगा, अन्त्यमात्र का नहीं । षष्ठी के अर्थ ( स्थान्यादेशभाव ) की प्रतीति भी फल नहीं है क्योंकि आगे प्रायः सभी सूत्रों में षष्ठी उच्चारित ही है । उसके आधार पर उसी-उसी का दो बार प्रयोग होगा । इसलिये 'सर्वस्य' का कोई विशेष फल नहीं है । साधारण व्यक्ति तत्काल ज्ञान कर सके इसीलिये 'सर्वस्य' लिखा गया समझना चाहिये ।

**न्यासः**

सर्वस्येति वचनमिह 'अलोऽन्त्यस्य' निवृत्त्यर्थं वा स्यात् ? षष्ठ्यर्थप्रतिपत्त्यर्थं वा ? तत्र त्वलोऽन्त्यनिवृत्त्यर्थं तावन्नोपपद्यते। तथा हि—शब्दतश्चार्थतश्चान्तरमाभ्यां द्वाभ्यां शब्दरूपाभ्यां भवितव्यम्। ये चैवम्प्रकारे ते नियोगतोऽनेकाल्स्वरूपे इत्यन्तरेणापि सर्वग्रहणेन 'अनेकाल्शित्सर्वस्य' इति सर्वस्यैव भविष्यतः, नान्त्यस्य। षष्ठ्यर्थप्रतिपत्त्यर्थमपि सर्वग्रहणं नोपपद्यते। तथा हि—यत्र तावत् षष्ठ्युच्चार्यते 'परेर्वर्जने' इत्यादौ, तत्र षष्ठ्युच्चारणादेव षष्ठ्यर्थस्य प्रतिपत्तिर्भविष्यति। 'नित्यवीप्सयोः' इत्यत्र यद्यपि षष्ठी नोच्चार्यते, तथापि सर्वस्येति वचनमन्तरेणापि शक्यते षष्ठ्यर्थोऽवगन्तुम्। कथम् ? 'द्वे' इति ह्यादेशनिर्देशः, आदेशश्च सम्बन्धिनमपेक्षते, 'नित्यवीप्सयोः' इति चार्थनिर्देशः, न चार्थनिर्देशे स्थान्यादेशसम्बन्ध उपपद्यते। तस्मान्नित्यवीप्सयोर्यः शब्दो वर्त्तते तस्य द्वे भवतः—इत्येवं वाक्यार्थः स्थाने द्विर्वचनपक्षे तावदगम्यते। यदा 'द्विष्प्रयोगो द्विर्वचनम्', तदापि विना सर्वस्येति वचनेन षष्ठ्यर्थोऽवगम्यत एव। एवं ह्यावृत्तिर्हि क्रिया, तस्या अवश्यं साधनेन संबंधिना भवितव्यम्; तदायत्तत्वादात्मलाभस्य क्रियायाः। तस्माद्यत्तस्याः क्रियायाः साधनं तस्य द्वे भवत इति विस्पष्टैव षष्ठ्यर्थप्रतिपत्तिर्भवतीत्यभिप्रायेणाह—**सर्वस्येति किमिति। विस्पष्टार्थमिति।** य एवं न शक्नोति सर्वादेशं षष्ठ्यर्थं वा प्रतिपत्तुम्, तं प्रति सुखप्रतिपत्तये सर्वस्येत्युच्यत इति भावः।

**पदमञ्जरी**

स्मात्स पूर्वस्मादपि, तदादिग्रहणं च पदसंज्ञायामनुवर्त्तते, तत्र समुदायस्यावयवयोश्च तुल्येऽपि तिङन्तत्वे समुदायस्यैव पदसंज्ञा भविष्यति द्विर्वचनवत्, तद्यथा—पपाचेत्यत्र समुदायस्यावयवानां च तुल्येऽप्येकाच्त्वे समुदायस्यैव द्विर्वचनं भवति, नावयवानाम्; तत्कस्य हेतोः ? शास्त्रहानेः, अवयवद्विर्वचने ह्यवयवान्तरे विषये समुदायविषये च शास्त्रं हीनं स्यात्, तद्वत्पदसंज्ञापि समुदायस्यैव भविष्यतीत्येकान्तरता युज्यते। पौनःपुन्यमित्यादौ तद्धितोऽप्युक्तेन न्यायेन समुदायस्य सुबन्तत्वात् प्रातिपदिकत्वाच्च सिद्ध्यतीति।

अत्रैवं चोदयन्ति—प्रागेव द्विर्वचनात् पचसीत्यस्यामवस्थायां प्रवृत्ता पदसंज्ञा किमिति पुनः कृतेऽपि द्विर्वचने प्रवर्त्तते, प्रवर्त्तमाना वा किमिति समुदायस्यैव प्रवर्त्तते, न तु प्रत्येकमवयवयोः, न ह्येवंविधो द्विर्वचनन्यायस्य विषय इति संयोगसंज्ञायामुक्तम्; निर्ग्लेयादित्यादौ त्रिष्वपि द्वयोः संयोगसंज्ञाभ्युपगमात्। किञ्च यत्र समुदायस्यैव पदत्वम्—अपचन्नपचन्नित्यादौ, तत्रावयवेषु पदकार्याभावप्रसङ्ग इति।

अपर आह—उच्चारणक्रियैवात्र परं भिद्यते, तद्भेदात्त्वौपचारिकः पदभेदः; तत्त्वतस्त्वेकमेव पदमित्येकान्तरता युज्यते, पौनःपुन्यमित्यादौ च वीप्सालक्षणेनार्थेन समुदायस्याप्यर्थवत्त्वात् प्रातिपदिकत्वम्। न च समासग्रहणान्निवृत्तिः; अतुल्यजातीयत्वात्। येषां हि भिन्नार्थानां सतां परस्परसम्बन्धमात्रमधिकं तत्समुदायस्यैव तुल्यजातीयस्य तेन निवृत्तिः। न चात्रैतदुभयमस्ति। न हि द्वयोः पुनः शब्दयोरर्थो भिद्यते, नापि तत्समुदाये तत्सम्बन्धोऽधिकः, किं तर्हि ? वीप्सारूपोऽन्य एवेति। यद्येवम्, किरिणेत्यादौ 'सावेकाचस्तृतीयादिः' इति विभक्तिस्वरः स्यात् ? तत्रापि ह्युच्चारणक्रियैव भिद्यते, तत्त्वतस्त्वेक एवेकारः। किञ्च—नित्यानां विभूनां वर्णानां तदात्मकानां च पदानां स्वरूपेण व्यवधानमव्यवधानं च न सम्भवतीत्युपलब्धिगतमेव तदाश्रयितव्यम्। तत्र च यथा पदभेदेऽप्युपलब्धिभेदः, तथा तदभेदेऽपीति कथमेकान्तरता। यदि च पौनःपुन्यमित्यादावुक्तेन न्यायेन समुदायस्यापि प्रातिपदिकत्वम्, हन्तैवं ग्रामोग्रामो रमणीय इत्यादावप्येवमेव प्रातिपदिकत्वे सति सुब्लुक् स्यात्, तस्मात्स्थाने द्विर्वचनमेवात्र रोचयामहे। अत एव 'स्थाने द्विर्वचनम्' पूर्वं **वृत्तिकारेण दर्शितम्**, पश्चात्सम्भवमात्रेण 'द्विःप्रयोगोऽपि' दर्शितः।

इह सर्वस्येति वचनमलोऽन्त्यनिवृत्त्यर्थं वा स्यात्, षष्ठ्यर्थप्रसिद्ध्यर्थं च। तत्र स्थाने द्विर्वचनपक्षे तावच्छब्दतोऽर्थतश्चान्तरतमाभ्यां द्वाभ्यामादेशाभ्यां भाव्यम्। ये चैवं प्रकारास्ते नियोगतोऽनेकाल्स्वभावाः—इत्यन्तरेणापि सर्वग्रहणम् 'अनेकाल्शित्सर्वस्य' इति सर्वस्य भविष्यति। षष्ठ्यर्थोऽपि 'परेर्वर्जने' इत्यादौ यत्र षष्ठ्युच्चार्यते तत्र तावत् सिद्धः; यत्रापि षष्ठी नास्ति—'नित्यवीप्सयोः' इति, तत्रापि सामर्थ्याल्लभ्यते—नित्यवीप्सयोर्यः शब्दस्तस्य द्वे भवत इति। द्विःप्रयोगपक्षे त्वलोऽन्त्यविधिप्रसङ्ग एव नास्ति; स्थानषष्ठ्य-

**अथ पदस्येत्येव कस्मान्नोच्यते ? नैवं शक्यम्, इह हि न स्यात्—प्रपचति, प्रपचतीति। इह द्रोग्धा, द्रोढा—इति घत्वढत्वयोरसिद्धत्वादकृतयोरेव तयोर्द्विर्वचनं प्राप्नोति, तत्र पश्चाद्विकल्पे सत्यनिष्टमपि स्यात्—द्रोग्धा द्रोढा, द्रोढा द्रोग्धेति। तस्माद्वक्तव्यमेतत्—**

**न्यासः**

**अथेत्यादि**। एवं मन्यते—'पदस्य' इत्युच्यमाने समासतद्धितवाक्यानां द्विर्वचननिवृत्तिः कृता भवति, उत्तरत्र च 'पदस्य' इति वक्तव्यं न भवति। एतदेव हि 'पदस्य' इति वचनं तत्रानुवर्त्तिष्यते। अनुच्यमाने 'पदस्य' इत्येतस्मिन्, समासस्यापि द्विर्वचनं स्यात्—पर्वणिपर्वणि सप्तसप्त पर्णान्यस्य सप्तलीति सप्तपर्ण इति; तद्धितस्यापि द्वौ द्वौ पादौ ददाति 'पादशतस्य संख्यादेः' इत्यादिना वुन्—द्विपदिकां ददातीति; वाक्यस्यापि—ग्रामेग्रामे पानीयमिति। 'पदस्य' इति चोत्तरत्र न वक्तव्यं भवति। **नैवं शक्यमिति**। अत्र कारणमाह—**इह हीत्यादि**। **प्रपचतीति**। वाक्यमेतत्; पदसमुदायात्मकत्वात्। अत्र 'पदस्य' इत्युच्यमानेऽस्य द्विर्वचनं न स्यात्। तस्मादशक्यं पदस्येति वक्तुम्। सप्तपर्णः, द्विपदिकां ददातीत्यत्र तु पदस्येत्युच्यमाने द्विर्वचनं न भविष्यति; समासतद्धिताभ्यामेवोक्तत्वात्। वीप्सायां ग्रामेग्रामे पानीयमित्यत्रापि न भविष्यति; अवयवद्विर्वचनेनेव वीप्सया द्योतितत्वादित्यभिप्रायः।

**इहेत्यादि**। 'द्रुह जिघांसायाम्', ततस्तृच्, द्रुह् + तृ इति स्थिते घत्वढत्वे प्राप्नुतः, द्विर्वचनं च, तत्र 'पूर्वत्रासिद्धम्' इति द्विर्वचने कर्त्तव्ये घत्वढत्वयोरसिद्धत्वादकृतयोरेव तयोर्द्विर्वचनं पूर्वं प्राप्नोति। कृते तस्मिन् पश्चाद् 'वा द्रुहमुहष्णुहष्णिहाम्' इति विकल्पे सत्यनिष्टमपि प्राप्नोति। नावश्यमिष्टमेव यद्ययं नियमो लभ्यते। यदेकस्य घत्वं भवति तदा द्वितीयस्यापि घत्वेन भवितव्यम्, यदा त्वेकस्य ढत्वं तदा द्वितीयस्यापि ढत्वेन भवितव्यमिति तदेष्टमेव स्यात्। न त्वेष नियमो लभ्यते; नियमकारणाभावात्। तस्मात् कदाचिदनिष्टमपि स्यात्। तत्र यदा पूर्वोत्तरयोरेकस्य घत्वं भवत्यपरस्य ढत्वम्, तदानिष्टमपि प्राप्नोति। यदोभयोरपि घत्वं ढत्वं वा भवति, तदेष्टं स्यात्। तस्मादनिष्टनिवृत्त्यर्थम् 'पूर्वत्रासिद्धीयमद्विर्वचने' इति

**पदमञ्जरी**

भावात्। षष्ठ्यर्थोऽपि लभ्यत एव, उच्चारणस्य शब्दधर्मत्वाद्। अतो नार्थः सर्वग्रहणेनेत्यभिप्रायेणाह—**सर्वस्येति किमिति**। **विस्पष्टार्थमिति**। य एवं प्रतिपत्तुमसमर्थः, तं प्रति सुखप्रतिपत्तये सर्वस्येत्युच्यत इत्यर्थः। **अथेत्यादि**। एवं मन्यते—समासतद्धितवाक्यनिवृत्त्यर्थमवश्यम् 'पदस्य' इति वक्तव्यम्। समासनिवृत्त्यर्थं तावत्—सप्तपर्णोऽष्टापदम्, अत्र सप्तसंख्यानि पर्णानि वीप्स्यन्ते, न तु तद्वान्वृक्ष इति वीप्सायामेकत्वस्यानन्तर्भावात्प्रागेव विभक्तेर्द्विवचनप्रसङ्गः, पदाधिकारात्तु न भवति; तद्धितः—द्विपदिकां ददाति, अत्र द्वित्वसंख्यायुक्तः पदार्थो वीप्स्यत इति स्त्रीत्वैकत्वलक्षणयोर्लिङ्गसंख्ययोरनन्तर्भावात्प्राक् तद्धितोत्पत्तेः समासे कृते प्राप्तं द्विर्वचनं पदत्वाभावान्न भवति; वाक्यम्—ग्रामेग्रामे पानीयम्, अत्र वाक्यस्यापदत्वाद् द्विर्वचनं न भवति ग्रामे पानीयमिति। किञ्चोत्तरत्र पदस्येति न वक्तव्यं भवति; 'पदस्य पदात्' इत्यस्यैवानुवृत्तेरिति। **नैवं**

**भावबोधिनी**

(अनु०) प्रश्न यह है कि 'पदस्य' (पद का द्वित्व होता है)—यही क्यों नहीं कहा जाता है ? [ पद का ही द्वित्व मानने पर समास, तद्धित तथा वाक्य के द्वित्व का अतिप्रसंग नहीं आयेगा ? ] ऐसा नहीं किया जा सकता, क्योंकि इसमें द्वित्व नहीं हो सकेगा—प्रपचति, प्रपचति। [ प्र + पचति यहाँ दोनों की पद संज्ञा होने से पदसमुदाय वाक्य बन जाता है इसका द्वित्व सम्भव नहीं होगा। अतः 'पदस्य' कहना ठीक नहीं है। ] यहाँ 'द्रोग्धा' तथा 'द्रोढा' इनमें घत्व तथा ढत्व के असिद्ध हो जाने से बिना ( घत्व, ढत्व ) किये गये ही उन शब्दरूपों का द्वित्व प्राप्त होता है। इनमें बाद में विकल्प में अनिष्ट रूप भी होने लगेगा—द्रोग्धा, द्रोढा, द्रोढा द्रोग्धा। इसलिये यह कहना होगा—'पूर्वत्रासिद्धम् का विषय द्वित्व में नहीं माना जाता है।'

'पूर्वत्रासिद्धीयमद्विर्वचने' ( पु० प० ९२ ) इति।

न्यासः

वक्तव्यम्। 'पूर्वत्रासिद्धम्' इत्यस्मिन्नधिकारे भवं पूर्वत्रासिद्धीयं नलोपादिकार्यम्, गहादित्वाच्छः, ततो द्विर्वचनादन्यत्रासिद्धं भवति, न तु द्विर्वचने।

अथ वा—पूर्वत्र सपादसप्ताध्याय्यामसिद्धं पूर्वत्रासिद्धम्, तदेव नलोपादिकार्यम्, तत्र भवं पूर्वत्रासिद्धीयम्। तत् पुनस्तस्यैव नलोपादेरसिद्धत्वम्, तद् द्विर्वचनादन्यस्मिन् कर्त्तव्ये भवति, न तु द्विर्वचन एव। एतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'न मु ने' इत्यत्र नेति योगविभागः कर्त्तव्यः, तेन द्विर्वचने कर्त्तव्येऽसिद्धत्वं न भविष्यतीति। असति चासिद्धत्वे द्रुहेस्तृचि कृते पूर्वं विकल्पेन घत्वम्, 'झषस्तथोर्धोऽधः' इति धत्वम्, 'झलां जश् झशि' इति जश्त्वम्—घकारस्य गकारः, ततो द्विर्वचनम्—द्रोग्धाद्रोग्धेति। यदा तु घत्वं नास्ति तदा 'हो ढः' इति ढत्वम्, पूर्ववद्धत्वम्, ष्टुत्वञ्च, 'ढो ढे लोपः' इति पूर्वढकारलोपः, ततो द्विर्वचनम्—द्रोढाद्रोढेति इष्टमेव सिध्यति। यदि तर्हि 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्येतद्वक्तव्यम्, तदा 'पूर्वत्रासिद्धम्' इत्यत्र औजढदित्यस्य सिद्धये यद्वक्ष्यति—'ढत्वष्टुत्वढलोपादोनामसिद्धत्वाण्णौ यष्टिलोपस्तस्य स्थानिवद्भावाद् हत् इत्येतद् द्विरुच्यते' इति—तद् विरुध्यते? नास्ति विरोधः; 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्यासर्वविषयत्वात्। कथं विज्ञायते? 'उभौ साभ्यासस्य' इत्यस्य सूत्रस्यारम्भात्। यदि हि 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्येतत् सर्वविषयकं स्यात्, एवं सति 'अनितेः' इत्यनेन कृतणत्वस्य द्विर्वचनेन भवितव्यमिति सिद्धम्—प्राणिणिषतीत्यादिकं रूपम्, किम् 'उभौ साभ्यासस्य' इत्यनेन सूत्रारम्भेण? आरभ्यश्च, ततो ज्ञायते—'पूर्वत्रासिद्धीयमद्विर्वचने' इत्येतदसर्वविषयमिति।

यस्तु मन्यते—आष्टमिकं द्विर्वचनमभिप्रेत्यैतद् वक्तव्यमिति, तदयुक्तम्; तस्य 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' इत्यत्र विषुषुपुरित्यस्य सिद्धयर्थं यद् वक्ष्यति—'षुपिभूतो द्विरुच्यते' इति, तद्विरुध्यते; यदि हि षाष्ठिके द्विर्वचने कर्तव्ये षत्वस्यासिद्धत्वं नास्ति, एवं षुपिभूतस्य द्विर्वचनं लभ्यते, नान्यथा। तस्मात् पूर्व एव परीहारः साधुः।

पदमञ्जरी

शक्यमिति। अस्याप्ययमभिप्रायः—'पदस्य' इत्युच्यमानेऽपि सप्तपर्णाभ्यामित्यादौ स्वादिषु पूर्वस्य पदत्वाद् द्विर्वचनप्रसङ्गः; तस्मादेवमत्र परिहारो वाच्यः—यद्वीप्सायुक्तम्, न अदः प्रयुज्यते; किं पुनस्तत्? पर्वणि-पर्वणि सप्तपर्णान्यस्येति, यच्च प्रयुज्यते न तद्वीप्सायुक्तम्—सप्तपर्णान्यस्येति पर्णशब्दे इति। तद्धिते तु तद्धितेनैवोक्तत्वाद् द्विर्वचनाभावः, स हि 'वीप्सायाम्' इत्युच्यते। वाक्यस्यापि द्विर्वचनं न भवति; पदद्विर्वचनेनोक्तत्वाद्वीप्सायाः। तस्मात् समासादिनिवृत्त्यर्थं तावत्पदाधिकारो न कर्त्तव्य इति।

प्रत्युत क्रियमाणे पदाधिकारेऽव्याप्तिलक्षणो दोष इत्याह—इह हि न स्यादिति। प्रपचतीति। धातूपसर्गसमुदायः क्रियाविशेषवाची। अडादिव्यवस्थार्थं तु धातूपसर्गयोः पृथक् कल्पनम्, ततश्च क्रियाधर्मो नित्यता समुदायस्येति तस्यैव द्विर्वचनम्। इहेत्यादि। द्रुहस्तृचि विहिते 'व द्रुहमुह' इति घत्वढत्वे प्राप्नुतः, द्विर्वचनं च; तत्र घत्वढत्वयोरसिद्धत्वात्पूर्वं द्विर्वचनं प्राप्नोति। अस्तु, को दोषः? तत्राह—तत्रेति। पक्षाद्विकल्पे प्रवर्त्तमाने यदा परत्र ढत्वं तदा पूर्वत्रापि ढत्वमेवेति नियमाभावात् घत्वमपि कदाचित् स्यात्। एवं घत्वेऽपि द्रष्टव्यम्—परत्र घत्वं पूर्वत्र ढत्वमिति। एतच्चैकस्या आकृतेश्चारितः प्रयोगो न द्वितीयस्यास्तृतीयस्याश्च भवतीति न्यायमनाश्रित्योक्तं द्रष्टव्यम्। अयं च न्यायः 'कृञ्चानुप्रयुज्यते लिटि' इत्यत्रैव व्याख्यातः।

पूर्वत्रासिद्धीयमिति। 'पूर्वत्रासिद्धम्' इत्यस्मिन्नधिकारे भवं नलोपादिकार्यं पूर्वत्रासिद्धीयम्, तद् द्विर्वचनादन्यत्रासिद्धं भवति। अथ वा—पूर्वस्यां सपादसप्ताध्याय्यामसिद्धं नलोपादि पूर्वत्रासिद्धम्, तत्र भवमसिद्धत्वं पूर्वत्रासिद्धीयम्; तद् द्विर्वचने कर्त्तव्ये न भवति, ततश्च घत्वे ढत्वे वा प्रवृत्ते तद्युक्तस्यैव द्विर्वचनमिति नास्ति दोषः।

'सर्वस्य' इत्येतदेव वा कृतं सर्वकार्यप्रतिपत्त्यर्थं द्रष्टव्यम् ॥

**३६१६. तस्य परमाम्रेडितम् ॥ २ ॥ (८३)**

तस्य द्विरुक्तस्य यत्परं शब्दरूपं तदाम्रेडितसंज्ञं भवति । [1]चौर चौर३ वृषल वृषल३ दस्यो दस्यो३ घातयिष्यामि त्वा, बन्धयिष्यामि त्वा ।

**न्यासः**

**सर्वस्येत्येतदेवेत्यादि** । वाशब्दः पूर्वप्रयोजनापेक्षया विकल्पार्थः । अथ वा—नैवं विस्पष्टार्थं सर्वग्रहणम् । किं तर्हि ? कृतसर्वकार्यस्य प्रतिपत्त्यर्थं कृतम् । षत्वं ढत्वादिकार्यं यस्य तस्य प्रतिपत्तिः प्रतीतिर्यथा स्यादित्येवमर्थं सर्वग्रहणं द्रष्टव्यम् । एतत् कथम् ? सर्वशब्दोऽयं मत्वर्थीयाकारप्रत्ययान्तः—सर्वं कार्यमस्यास्तीति सर्वः, अर्शआदित्वादच्, तेन कृतसर्वकार्यस्य द्विर्वचनं भवतीत्युक्तं भवति ॥ १ ॥

**तस्य परमाम्रेडितम्** ॥ 'तस्य'इत्यवयवषष्ठी । तस्य द्विरुक्तस्य यत् परमवयवभूतं शब्दरूपं तस्याम्रेडितसंज्ञा विधीयते । अथ द्विष्प्रयोगाद्विर्वचनपक्षे कथं परमिति व्यपदेशः ? कथञ्च न स्यात् ? तस्य भेदनिबन्ध-

**पदमञ्जरी**

**सर्वस्येत्येतदेवेत्यादि** । पूर्वं 'पूर्वत्रासिद्धीयमद्विर्वचने' इति वचनाश्रयेण द्रोढाद्रोढेति साधितम्, इदानीम् 'सर्वस्य' इत्यनेन साधितमित्येकस्मिन्साध्ये द्वयोर्हेत्वोर्विकल्पः । कथं पुनः 'सर्वस्य' इत्यनेन कृतसर्वकार्यप्रतिपत्तिः ? अर्शआद्यच्प्रत्ययान्तोऽयं सर्वशब्दः—सर्वं कार्यं यस्मिन्नस्ति तदिदं सर्वम्, तस्य द्वे भवतः । सर्वेषु कार्येषु द्विर्वचनमित्यर्थः ॥ १ ॥

**तस्य परमाम्रेडितम्** ॥ 'तस्य' इत्यवयवयोगे षष्ठी, परशब्दोऽवयववचनः । 'दिक्शब्दाञ्चूत्तरपद' इत्यत्र यद्यपि 'दिशि दृष्टः शब्दो दिक्शब्दः'—इत्याश्रयणात्सम्प्रत्यदिक्शब्दत्वेऽपि पञ्चमी विहिता, तथाप्य-

**भावबोधिनी**

अथवा 'सबका' इसको ही किये गये सभी कार्यों की प्रतिपत्ति ( ज्ञान ) के लिये समझना चाहिये । [ अतः 'सर्वस्य' का ग्रहण सोद्देश्य है केवल स्पष्टता के लिये नहीं है । ]

**विमर्श**—'पदस्य' का ग्रहण करने पर 'प्रपचति' इस पदसमुदाय का द्वित्व नहीं होगा । यदि पदनिष्पत्ति के पूर्व भी द्वित्व माना जा सकता है तो दो विकल्पों वाले लक्ष्य में अव्यवस्था बन सकती है । उदाहरणार्थ जिघांसार्थक द्रुह् +तृच्, गुण—द्रोह् तृ में 'वा द्रुहमुहष्णुहष्णिहाम्' (८।२।३३) से ह् का घत्व और पक्ष में 'हो ढः' (८।२।३१) से ढत्व प्राप्त होता है, इसी अवस्था में प्रस्तुत सूत्र से द्वित्व भी करना है । परन्तु 'हो ढः' ( ८।२।३१ ) और 'वा द्रुहमुह' ( ८।२।३३ ) ये दोनों त्रैपादिक होने से प्रस्तुत सूत्र द्वित्वविधायक की दृष्टि में असिद्ध है । अतः घत्व-ढत्व के बिना किये गये शब्दरूप का द्वित्व होगा, उसके बाद घत्व और इसके विकल्प में ढत्व होगा । इसका दुष्परिणाम यह होगा कि एक घत्व का और दूसरा ढत्व का—द्रोग्धा, द्रोढा अथवा एक ढत्व का और दूसरा घत्व का—द्रोढा, दोग्धा रूप प्रसक्त होंगे । क्योंकि बाद में जब विकल्प किया जायगा तो उसमें ऐसा नियम नहीं बनाया जा सकता कि बाद में ढ है तो पहले भी ढ रहे अथवा पहले घ है तो बाद में भी घ रहे, इसके विपरीत भी होना सम्भव है ।

इस अतिप्रसङ्ग से बचने के लिये यह वचन कहना होगा—'पूर्वत्रासिद्धम्' ( ८।२।१) से सम्बद्ध असिद्धत्व द्विर्वचन में नहीं माना जाता ।' अतः असिद्धि नहीं होगी, घत्व-ढत्व सिद्ध रहेंगे, तभी द्वित्व होगा ।

दूसरा समाधान यह है कि 'सर्वस्य' में मत्वर्थक अच् प्रत्यय मानकर—सब कुछ है = हो चुका है जिसका ऐसे निष्पन्न शब्द रूप का ही द्वित्व होता है । इसलिये कोई दोष नहीं है ॥ १ ॥

उस दो बार कहे गये ( उच्चारित ) का जो बाद वाला शब्द रूप है उस की आम्रेडित संज्ञा होती है । उदा० चौर चौर ३ वृषल वृषल ३, दस्यो दस्यो ३ घातयिष्यामि त्वाम्, बन्धयिष्यामि त्वाम् । [ चोर चोर ३ वृषल वृषल ३, डकैत डकैत ३ तुझे मरवा दूँगा, बंधवा दूगा । इनमें 'वाक्यादेरामन्त्रितस्य' ८।१।८ इस सूत्र से

१. प्लुतं न कृत्वा त्रिवारं प्रकाशितः पाठोऽशुद्धः ।

आम्रेडितप्रदेशाः—'आम्रेडितं भर्त्सने' ( ८।२।९५ ) इत्येवमादयः ॥

**३६१७. अनुदात्तं च ॥ ३ ॥ (३६७०)**

अनुदात्तं च तद्भवति यदाम्रेडितसंज्ञम् । भुङ्क्तेभुङ्क्ते । पशून्पशून् ॥

**न्यास**

न्तत्वात् । पूर्वव्यपदेशो हि भेदनिबन्धनः । न च द्विष्प्रयोगद्विर्वचनपक्षे शब्दभेदोऽस्ति, आवृत्तिमात्रं हि तत्र भिद्यते, न शब्दः ? नैष दोषः; अभिन्नस्यापि शब्दस्य धर्मभेदादौपचारिकमन्यत्वं भविष्यति । भवति हि धर्मभेदादभिन्नेऽपि वस्तुनि भेदव्यवहारः । तथा हि वक्तारो वदन्ति—परुद् भवान् पटुरासीत् पटुतरश्चैषमोऽन्य एवासि संवृत्त इति । **चौर चौर इति** । 'एङ्ह्रस्वात् सम्बुद्धेः' इति सुलोपः, 'वाक्यादेरामन्त्रितस्य' इत्यादिना भर्त्सने द्विर्वचनम्, 'आम्रेडितं भर्त्सने' इति प्लुतः । **दस्यो दस्यो इति** । 'सम्बुद्धौ च' इति गुणः ।

अथ तस्यग्रहणं किमर्थम्, यावता 'द्वे' इत्यनुवर्तिष्यते, तत्रैवं विज्ञायते—द्वयोर्यत् परमिति ? नैवं शक्यम्; 'एकाचो द्वे प्रथमस्य' इत्यत्रापि परमाम्रेडितसंज्ञं स्यात् । तस्य ग्रहणे सति यत्रैतद्वक्ष्यमाणं द्विर्वचनं तस्य परमिति विज्ञायते । तेन न भवत्यतिप्रसङ्गः ।

आम्रेडितमिति महत्याः संज्ञायाः करणमन्वर्थसंज्ञाविज्ञानार्थम् । आम्रेड्यत आधिक्येनोच्यत इत्याम्रेडितम् । तेनेहापि भवति—अहो दर्शनीया, अहो दर्शनीया मह्यं रोचते मह्यं रोचत इति । दर्शनीयत्वस्य रुचेश्चाधिक्यं द्योतयितुमत्र द्रष्टव्यं द्विर्वचनम् । एतदेव महत्याः संज्ञायाः करणे ज्ञापकम्—आधिक्याभिधाने द्विर्वचनं भवतीति ॥ २ ॥

**अनुदात्तञ्च** ॥ प्रकृतिस्वरे प्राप्ते परस्यानुदात्तत्वमुच्यते । अनुदात्तशब्दश्चात्र परशब्दसामानाधिकरण्यान्न शास्त्रीयमनुदात्तमाह, किं तर्हि ? अन्वर्थो विज्ञायते—अविद्यमानमुदात्तमनुदात्तमिति । शास्त्रीये ह्यनुदात्ते गृह्यमाणे सम्बन्धार्थं परस्येति षष्ठ्युच्चारयितव्या स्यात् । तथा च 'अलोऽन्त्यस्य' स्यात् । अथापि सर्वस्येत्यनुवर्त्तेत, एवमपि वचनप्रामाण्यादेकाल एव सर्वादेशः प्रसज्येत । तस्मादन्वर्थस्यैव ग्रहणं युक्तम् । **भुङ्क्तेभुङ्क्त इति** । 'भुजोऽनवने' इत्यात्मनेपदम् । तस्मिन्कृते सति शिष्टस्वरत्वाद्धातुस्वरं बाधित्वा प्रत्ययस्वरः । श्नमि कृते यद्यपि तस्य स्वरः सतिशिष्टः, तथापि 'विकरणस्वरः सार्वधातुकस्वरं न बाधते' इति

**पदमञ्जरी**

स्मादेव निर्देशादवयववाचिभिर्योगे षष्ठी भवति एवं च पूर्वं कायस्येत्यादि सिद्धं भवति । उदाहरणे—'आम्रेडितं भर्त्सने' इति प्लुतः । तस्य ग्रहणं विषयावधारणार्थम्—तस्यैतस्यानन्तरस्य द्विरुक्तस्येति, तेन षाष्ठिके द्विर्वचने इयं संज्ञा न भवति । ननु आम्रेडितशब्दो निघण्टुषु प्रसिद्धः—'आम्रेडितं द्विस्त्रिरुक्तम्'[1] इति ? सत्यमर्थे प्रसिद्धः; इह तु शब्दे परिभाष्यते ।

महासंज्ञाकरणं पूर्वाचार्यानुरोधेन ॥ २ ॥

**अनुदात्तं च** ॥ परमित्यनेन सामानाधिकरण्यात्तस्य चाज्झलसमुदायरूपत्वादन्वर्थोऽत्रानुदात्तशब्दः—अविद्यमानमुदात्तमनुदात्तमिति । स्वरितेऽप्युदात्तस्य भावात्तस्यापि निवृत्तिः । एवमपि न ज्ञायते—केन स्वरेणाम्रेडितं प्रयोक्तव्यमिति ? उच्यते; उदात्तस्वरितौ तावन्निषिद्धौ, न चास्वरकस्याच उच्चारणं सम्भवति,

**भावबोधिनी**

भर्त्सन में द्वित्व होता है और परवर्ती की आम्रेडित संज्ञा होने से 'आम्रेडितं भर्त्सने' ( ८।२।९५ ) सूत्र से प्लुत हो जाता है । ]

'आम्रेडित संज्ञा के उपयोग-स्थल हैं—'आम्रेडितं भर्त्सने' ( ८।२।९५ ) इत्यादि के सदृश ॥ २ ॥

जिसकी आम्रेडित संज्ञा होती है वह अनुदात्त भी होता है । [ प्रकृति स्वरों के प्राप्त रहते अनुदात्त हो जाता है । यह यौगिक अनुदात्त है—अविद्यमानम् उदात्तम्—अनुदात्तम् । स्वरित में भी उदात्त रहता है उसकी भी

---

१. अ० को० १.६.१२

**३६१८. नित्यवीप्सयोः ॥ ४ ॥ (२१४०)**

**नित्ये चार्थे वीप्सायां च यद्वर्तते तस्य द्वे भवतः। केषु नित्यता? तिङ्क्षु नित्यता, अव्ययकृत्सु च। कुत एतत्? अभीक्ष्ण्यमिह नित्यता। अभीक्ष्ण्यं च क्रियाधर्मः। यां क्रियां कर्ता प्राधान्येनानुपरमं करोति तन्नित्यम्। पचतिपचति। जल्पतिजल्पति। भुक्त्वाभुक्त्वा व्रजति। भोजंभोजं व्रजति। लुनीहिलुनीहि इत्येवायं लुनाति।**

**न्यासः**

तेशब्द एव स्वरे प्रसक्ते 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः' इति सार्वधातुकस्यानुदात्तत्वम्, श्नसोरल्लोपे कृते 'अनुदात्तस्य च यत्रोदात्तलोपः' इति पुनस्तेशब्द उदात्तः, नित्ये चार्थे द्विर्वचनम्, तस्मिन् कृतेऽनेन परमनुदात्तं भवति। **पशून्पशूनिति**। 'कुर्भ्रश्च' इत्यतः 'कुः' इत्यनुवर्त्तमाने 'अर्जिदृशिकम्यमिपशिबाधाधामृजिपसितुग्धुग्दीर्घहकाराश्च' इति कुप्रत्ययः, दृशेः पशिरादेशश्च। पशुशब्दः प्रत्ययस्वरेणान्तोदात्तः, विभक्त्यकारेण सहैकादेशः, एकादेश उदात्तेनोदात्तः', वीप्सायां द्विर्वचनम्, अनेन परस्यानुदात्तत्वम् ॥ ३ ॥

**नित्यवीप्सयोः ॥ नित्ये चार्थे वीप्सायां चेति**। अनेन 'नित्यवीप्सयोः' इति सप्तमीयमर्थनिर्देशार्था, न तु षष्ठीयमिति दर्शयति। यदि ह्येषा षष्ठी स्यात्, तदा स्वरूपविधिः प्रसज्येत, ततश्च 'नित्यं क्रीडाजीविकयोः' इति, 'पादशतस्य संख्यादेर्वीप्सायाम्' इत्यादिनिर्देशो नोपपद्यते। इह नित्यशब्दोऽयं सर्वकालभाविनो य आत्माकाशादयः, येषामुत्पत्तिविनाशौ प्रयोक्तृभिर्नोपलभ्येते, तेष्वपि प्रयुज्यमानो लोके दृश्यते—नित्य आत्मा, नित्यमाकाशम्, नित्या द्यौरिति। आभीक्ष्ण्येऽपि—नित्यं प्रहसितः, नित्यं प्रजल्पित इति। तत्र यदीह सामान्येन तत्र नाम नित्यताऽभिधेयभावेन वर्त्तते तस्य नित्यार्थवाचिनो ग्रहणं स्याद्, आत्माकाशादिशब्दानामपि द्विर्वचनं प्रसज्येत—इत्यनेनाभिप्रायेणाह—**केषु नित्यतेति**। इतरो विदिताभिप्राय आह—**तिङ्क्षु नित्यताऽव्ययकृत्सु चेति**। अव्ययानि च तानि कृन्ति चेति कर्मधारयः। यद्यप्यात्माकाशादिशब्देष्वपि सर्वकालभावित्वलक्षणा नित्यताऽभिधेयभावेन वर्तते, तथापीह भावप्रधानेषु तिङ्क्ष्वव्ययकृत्सु चाभीक्ष्ण्यलक्षणा या नित्यता सैवात्राश्रीयते। ततोऽतिप्रसङ्गो न भवतीति भावः।

**पदमञ्जरी**

तत्र पारिशेष्यादनुदात्तत्वमेव भविष्यति। यद्वा—अनुदात्ताच्कमनुदात्तम्, आम्रेडितस्था अचोऽनुदात्ता भवन्तीत्यर्थः। **भुङ्क्तेभुङ्क्त इति**। 'भुजोऽनवने' इत्यात्मनेपदम्, तस्य 'तास्यनुदात्तेत्' इत्यनुदात्तत्वम्, श्नमः प्रत्ययस्वरः, तस्य 'श्नसोरल्लोपः' इत्यल्लोपे उदात्तनिवृत्तिस्वरेण भुङ्क्तेशब्दोऽन्तोदात्तः, द्विर्वचनेन परस्यानुदात्तत्वम्। पशुशब्दः कुप्रत्ययान्तोऽन्तोदात्तः ॥ ३ ॥

**नित्यवीप्सयोः ॥ नित्ये चार्थे वीप्सायां च यद्वर्त्तते इति**। अनेन सप्तमीयमर्थनिर्देशार्थेति दर्शयति। प्रयोक्तृधर्मभूता वीप्सा, न च सा ग्रामादिशब्दैरभिधीयते। पचतिपचतीत्यत्रापि वस्तुतो यन्नित्यं न तत्तिङन्तेनाभिधीयते। नित्यत्वं तु द्विर्वचनद्योत्यम्। तस्मादयमत्रार्थः—नित्यत्वे द्योत्यत्वेन विषयभूते, वीप्सायां च द्योत्यत्वेन विषयभूतायामिति। एषैव च तत्र वृत्तिः, शब्दस्य यद्वृत्ता तद्विषयता। यदि पुनरेषा षष्ठी स्यात्स्वरूपविधिः प्रसज्येत, ततश्च 'नित्यं क्रीडाजीविकयोः,' 'पादशतस्य संख्यादेर्वीप्सायाम्' इत्यादिनिर्देशो नोपपद्यते।

**भावबोधिनी**

निवृत्ति होती है। फलतः सभी अच् अनुदात्त ही होते हैं।] उदा० भुङ्क्ते भुङ्क्ते। पशून् पशून्। [ प्रथम शब्द रूप के अपने-२ विहित स्वर होवे है किन्तु बाद वाले आम्रेडित के सभी केवल अनुदात्त ही होते हैं। ] ॥ ३ ॥

नित्य अर्थ में तथा वीप्सा अर्थ में जो रहता है उसका द्वित्व हो जाता है, दो रूप हो जाते हैं। [ यहाँ रूप में सप्तमी-द्विवचन है षष्ठी-द्विवचन नहीं है। नित्य शब्द का प्रयोग आकाशादि के लिये भी होता है और आभीक्ष्ण्य ( = बाहुल्य अर्थ ) में भी, अतः इसका स्पष्टीकरण किया जा रहा है—] किन अर्थों में नित्यता होती है? तिङों में अव्ययों में और कृत् प्रत्ययों में। यहाँ आभीक्ष्ण्य ( बार बार होना ) नित्यता है। और यह आभीक्ष्ण्य

**न्यासः**

ननु च नित्यशब्दोऽयं सामान्यवचनः। न च सामान्यशब्दाः प्रकरणादिकमन्तरेण विशेषेऽवस्थातुमुत्सहन्ते। न चेह तथाविधं किञ्चित् प्रकरणादिकमस्ति, यतो विशेषेऽवस्थानं स्यात्, तत्कुतो नित्यताविशेषपरिग्रहो लभ्यते? इति मन्यमान आह—कुत एतदिति। आभीक्ष्ण्यमिह नित्यतेत्याश्रीयत इति शेषः। व्याप्तेराभीक्ष्ण्यवचनस्य नित्यशब्दस्य ग्रहणादिहाभीक्ष्ण्यलक्षणा नित्यताऽऽश्रीयते, पदस्य हि द्विर्वचनमुच्यते। तच्च पदं सुबन्तं तिङन्तं च, तत्र सुप्सु वीप्सेति वक्ष्यति। यदि च नित्यशब्दोऽयं कूटस्थवचनो गृह्यते, ततश्च कूटस्थमिति सुबन्तेष्वभिधेयभावेन वर्त्तत इति सुबन्तानामेव द्विर्वचनं स्यात्, न तिङन्तानाम्, नाप्यव्ययकृताम्। आभीक्ष्ण्यवचनस्य तु नित्यशब्दस्य ग्रहणे सति नित्यलक्षणं द्विर्वचनमाख्यातानामव्ययकृतां च भवति। वीप्सालक्षणश्चान्येषामिति सर्वं पदजातमनुगृहीतं भवति। तस्माद् व्याप्तेराभीक्ष्ण्यवचनस्य नित्यशब्दस्य ग्रहणादिह 'आभीक्ष्ण्यं नित्यता' इत्युपपन्नं भवति।

**आभीक्ष्ण्यमिह नित्यता**। सा च तिङक्ष्वव्ययकृत्सु चेति। कुत एतत्? इत्याह—**आभीक्ष्ण्यं चेत्यादि**। आभीक्ष्ण्यं हि पुनः पुनः प्रवृत्तिः। तच्च साध्यरूपायाः क्रियाया एव सम्भवतीति तस्या एव धर्मः, न तु द्रव्यस्य; तस्य सिद्धरूपस्यैव सुबन्तेनाभिधानात्। सा च क्रिया तिङन्तादिभिरेवाभिधीयत इति तेष्वेव नित्यता। कीदृशी पुनः सा क्रिया? आभीक्ष्ण्यलक्षणेन या नित्यत्वेन योगान्नित्यशब्देनोच्यते, इत्याह—**यामित्यादि**। **अनुपरमन्निति**। विरतिमकुर्वन्नित्यर्थः। **तन्नित्यमिति**। तत् क्रियारूपं वस्तु नित्यमित्यर्थः। **प्राधान्येनेति**। यदुद्दिश्य क्रियाप्रवृत्तिस्तत् प्रधानम्, तस्य भावस्तथा। यद्यपि ग्रामं गन्तुमिच्छन् वृक्षमूलोपसर्पणं पुनः पुनः करोति, तथापि न तन्नित्यमिति। एतदुक्तं भवति—न ह्यसौ प्राधान्येन तत्करोति; तदुद्दिश्याप्रवृत्तेः। तेन ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीत्यत्र सत्यप्याभीक्ष्ण्ये द्विर्वचनं न भवति। **यां क्रियामित्यनेन** हि क्रिया धर्मिणी दर्शिता। **अनुपरमन्करोतीत्यनेनापि** तस्या आभीक्ष्ण्यं धर्मः।

**पचतिपचतीति**। तिङन्तस्योदाहरणम्। **भुक्त्वाभुक्त्वा, भोजंभोजमिति**। अत्र 'आभीक्ष्ण्ये णमुल्च' इति क्त्वाणमुलौ। **लुनीहिलुनीहीति**। 'क्रियासमभिहारे' इत्यादिना लोट्, तस्य हिरादेशः, 'लोट्धर्माणौ हिस्वौ भवतः' इति तत्रोक्तम्, तेन विकरणम्, 'ई हल्यघोः' इतीत्वम्। एतानि त्रीण्यव्ययकृतामुदाहरणानि।

**पदमञ्जरी**

यदि तु 'नित्यार्थविषयः शब्दो नित्यः' इत्युच्येत, वीप्सार्थविषयश्च वीप्सेति; तदा षष्ठ्याप्यदोषः? गौणत्वप्रसङ्गात्तदनाश्रितम्। नित्यशब्दोऽयं सर्वकालावस्थायिनो य आत्माकाशादयः, येषामुत्पत्तिविनाशौ प्रयोक्तृभिर्नोपलभ्येते, तेष्वपि प्रयुज्यमानो दृश्यते—नित्य आत्मा, नित्य आकाशः, नित्या द्यौरिति; आभीक्ष्ण्येऽपि—नित्यं प्रहसितः, नित्यं प्रजल्पित इति। तत्राविशेषादुभयोरपि ग्रहणादाकाशादिशब्दानामपि द्विर्वचनप्रसङ्ग इति मन्यमानः पृच्छति—**केषु नित्यतेति**।

अथ वा—नित्यशब्दस्य कूटस्थलक्षण एव मुख्योऽर्थः, शब्दान्तरसन्निध्यनपेक्षणात्। आभीक्ष्ण्यं तु क्रियापदप्रयोगसमधिगम्यं गौणोऽर्थः; अविच्छेदोपलब्धिसामान्यमाश्रित्य तत्र प्रयोगात्। ततश्च 'गौणमुख्ययोर्मुख्ये सम्प्रत्ययः' इति कूटस्थवाचिनामेव द्विर्वचनप्रसङ्ग इति मन्यमान आह—**केषु नित्यतेति**। इतरोऽपि विदिताभिप्राय आह—**तिङक्ष्विति**। अविशेषमेव मन्यमानः पृच्छति—**कुत इति**। **आभीक्ष्ण्यमिहेति**। अयमभिप्रायः—कूटस्थवचनग्रहणे तिङन्तानि न संगृहीतानि स्युः, आभीक्ष्ण्यलक्षणे तु नित्यत्वे गृह्यमाणे

**भावबोधिनी**

क्रिया में रहने वाला धर्म है। जिस क्रिया को कर्ता बिना रुके हुये (लगातार) करता रहता है वह नित्य है। तिङ् के उदा० पचति पचति। [लगातार पकाता है।] जल्पति जल्पति। [लगातार बोलता रहता है।] कृत् = अव्यय के उदा० भुक्त्वा भुक्त्वा व्रजति। भोजं भोजं व्रजति। ['आभीक्ष्ण्ये णमुल् च' से क्त्वा और णमुल् दोनों होते हैं। लगातार खा-खा कर जाता है।] लुनीहि लुनीहि इत्येवायं लुनाति। [क्रियासमभिहार में लोट् है। स्वरादिगण में आभीक्ष्ण्य का भी पाठ होने से यह उदाहरण दिया गया है।]

**क्त्वाणमुलोर्लोटश्च द्विर्वचनापेक्षायामेव पौनःपुन्यप्रकाशने शक्तिः। यङ् तु तन्निरपेक्षः प्रकाशयति—पुनःपुनः पचति पापच्यत इति।**

**यदा तु तत्र द्विर्वचनं तदा क्रियासमभिहारे पौनःपुन्यं द्रष्टव्यम्—पापच्यतेपापच्यत इति।**

**न्यासः**

एषां क्त्वादीनाम् 'कृदतिङ्' इति कृत्संज्ञा। अव्ययसंज्ञा तु क्त्वाप्रत्ययस्य 'क्त्वातोसुन्कसुनः' इति। णमुलस्तु 'कृन्मेजन्तः' इति। लोटस्तु स्वरादिष्वाभीक्ष्ण्यस्य पाठात्।

ननु चैते क्त्वाणमुल्लोटश्चाभीक्ष्ण्य एव विधीयन्ते, तत्र यथा पापच्यत इति क्रियासमभिहारे विधीयमानेन यङा पौनःपुन्यस्य प्रकाशितत्वाद् द्विर्वचनं न भवति, तथा क्त्वादिभिरपि तस्य प्रकाशितत्वान्न भवितव्यम्। अथ प्रकाशितेऽपि तस्मिंस्तु तद् भवति, पापच्यत इत्यत्रापि स्यात्? इत्यत आह—**क्त्वाणमुलोरित्यादि**। भिन्ना हि भावानां शक्तयः। तथा हि—यामेव क्रियां भारोद्वहनादिकां कश्चित् सहायसापेक्षः करोति, तामेवान्यः सहायनिरपेक्षः, तस्माद् यद्यपि चाभीक्ष्ण्ये क्त्वा णमुल्लोट् च विधीयते, तथापि तैर्नैवाभीक्ष्ण्यमभिव्यक्तं भवति। द्विर्वचनसापेक्षाणामेव तेषां पौनःपुन्यप्रकाशने शक्तिः, न केवलानाम्। तेन भवत्येव तदन्तस्य द्विर्वचनम्, यङस्तु द्विर्वचननिरपेक्षस्यापि पौनपुन्याभिव्यक्तौ सामर्थ्यमस्तीति तेनैवाभीक्ष्ण्यस्य द्योतितत्वात् पापच्यत इत्यत्र न भवति। आभीक्ष्ण्यप्रकाशनाय हि द्विर्वचनमुच्यते, एतच्च यङैव प्रकाशितमिति किं द्विर्वचनेन?

ननु च यङन्तस्यापि क्वचिद् द्विर्वचनमिष्यत एव, तच्च यङो द्विर्वचननिरपेक्षस्य पौनःपुन्यप्रकाशने शक्तौ सत्यां न सिध्यति? इत्याह—**यदा त्वित्यादि**। द्विप्रकारः क्रियासमभिहारः—पौनःपुन्यम्, भृशार्थश्च। तत्र यदा यङन्तेऽ द्विर्वचनं भवति तदा भृशार्थे यङ्। द्विर्वचनं तु तस्यैव भृशार्थस्य धर्मे पौनःपुन्ये, न हि तद् यङा प्रकाशितम्; तस्य भृशार्थे विहितत्वादित्यभिप्रायः। **क्रियासमभिहारे पौनःपुन्यं द्रष्टव्यमिति**। अत्र यद्यपि क्रियासमभिहारशब्दः सामान्यः, तथापि सामर्थ्याद् भृशार्थलक्षण एव क्रियासमभिहारे तस्य वृत्ति-

**पदमञ्जरी**

तल्लक्षणं द्विर्वचनं तिङन्तानाम्, वीप्सालक्षणं तु सुबन्तानामित्युभयानुग्रहो भवति। गौणोऽपि चार्थो लक्ष्यदर्शनवशादिहाश्रीयते—यथा 'शीतोष्णाभ्यां कारिणि', पार्श्वेनान्विच्छतीत्यादौ। उभयविधेऽपि नित्यत्वे गृह्यमाणे तद्वाचिनां सुबन्तानां स्वार्थ एव द्विर्वचनं स्यात्, न चैवं लोके प्रयोगोऽस्ति—आत्मात्मेति। एवं ह्युक्ते वीप्सा प्रतीयते, न तु स्वार्थः। तस्मादाभीक्ष्ण्यस्यैव ग्रहणमिति भवत्याभीक्ष्ण्यमिह नित्यता। सा च तिङ्क्ष्वव्ययकृत्सु चेति। एतत्कुतस्त्यम्? इत्याह—**आभीक्ष्ण्यं च क्रियाधर्म इति**। पौनःपुन्यम् = आभीक्ष्ण्यम्। तच्च साध्यरूपायाः क्रियाया एव सम्भवति, न द्रव्यस्य। यद्यपि क्रियाया अपि तस्या एव व्यक्तेः पुनः क्रिया न सम्भवति, तज्जातीयस्य तु पुनः करणं घटादिष्वपि सम्भवति; तथापि क्रियाविषयैव पुनः क्रियत इति प्रतीतिः। तद्वचनाश्च पुनः पुनः, आभीक्ष्ण्यम्, नित्यमित्यादयः शब्दाः, यथा युगपत्पृथगित्यादयः शब्दाः क्रियाविषयाः, तद्वत्। क्रिया च तिङ्क्ष्वव्ययकृत्सु चाभिधीयते, पाचकादिषु तु साधनं प्रधानम्। पाकादिष्वपि तु सिद्धता प्रधानम्, न क्रिया।

कीदृशी पुनः सा क्रिया यस्या आभीक्ष्ण्यं धर्मः? इत्याह—**यां क्रियामिति। तन्नित्यमिति।** नित्यशब्दस्य नपुंसकलिङ्गत्वात्तद्वृत्ति तच्छब्दस्यापि नपुंसकत्वम्, यथा—अणौ यत्कर्म णौ चेत्स कर्तेत्यत्र

**भावबोधिनी**

क्त्वा-णमुल् ( इनकी ) और लोट् की द्विर्वचन की अपेक्षा में ही पौनः पुन्यः ( आभीक्ष्ण्य ) अर्थ को प्रकाशित करने की शक्ति है। [ भाव यह है कि जब द्वित्व हो जाता है तभी इनसे पौनःपुन्य अर्थ प्रकट होता है। ] परन्तु यङ् प्रत्यय तो द्विर्वचन की अपेक्षा के बिना ही पौनः पुन्य अर्थ प्रकट करता है—पुनः पुनः पकाता है—इस अर्थ में पापच्यते। [ यङन्तरूप है। ] परन्तु यङन्त में भी जब द्वित्व होता है तब तो क्रियासमभिहार में पौनः पुन्य देखना चाहिए—पापच्यते पापच्यते। [ बार-बार पाकक्रिया समूह को करता है। यङ् प्रत्यय भृश अर्थ में और

**अथ केषु वीप्सा ? सुप्सु वीप्सा । का पुनर्वीप्सा ? व्याप्तिविशेषविषया प्रयोक्तुरिच्छा वीप्सा । का पुनः सा ? नानावाचिनामधिकरणानां क्रियागुणाभ्यां युगपत्प्रयोक्तुर्व्याप्तुमिच्छा वीप्सा ।**

### न्यासः

विज्ञायते, न हि पौनःपुन्येऽन्यस्य पौनःपुन्यस्य सम्भवोऽस्ति । **अथ कथं** पौनःपुन्ये यङ् भवति ? कथं च न स्यात् ? द्विर्वचनेनापवादेन बाधितत्वात् । यङः कोऽवकाश इति चेत् ? भृशार्थ एव ? नैष दोषः; पदस्य हि द्विर्वचनमुच्यते, धातोश्च यङ् । तथा कार्यिणोरतिभेदात् कुतो बाधा !

'नित्यवीप्सयोः' इत्युक्तम्, तत्र नित्यता तिङ्क्ष्वव्ययकृत्सु चेत्युक्तम् । वीप्सा तु न विज्ञायते—क्वाभिधेयभावेन वर्तते ? इति, अतस्तत्परिज्ञानार्थं पृच्छति—**अथ केषु वीप्सेति** । इतरो विदिताभिप्राय आह—**सुप्सु वीप्सेति** । सुपामेव तदभिव्यक्तौ सामर्थ्यात् । यदि सामान्येन व्याप्तुमिच्छा वीप्सा तदा चिकीर्षा-शब्दस्यापि द्विर्वचनं प्राप्नोति, तस्य करोतिक्रियया कटादेर्व्याप्तुमिच्छा तत्र वृत्तिरिति मन्यमान आह—**का पुनर्वीप्सेति । व्याप्तिविशेषविषयेत्यादि** । नानावाचिनामधिकरणानां क्रियादिसम्बन्धेन युगपद्व्याप्ति-विशेषः स विषयो यस्या इच्छायाः सा तथोक्ता । सैवंविधा **प्रयोक्तुरिच्छा वीप्सा** । प्रयोक्तुरित्यनेन प्रयोक्तु-धर्मो वीप्सा, नाभिधेयधर्म इति दर्शयति । कथं पुनर्व्याप्तिविशेषविषयेत्येष विशेषो लभ्यते ? विशब्दप्रयोगात् । यदि ह्यविशेषेण व्याप्तुमिच्छा वीप्साभिमता स्यात्, 'नित्येप्सयोः' इत्येवं ब्रूयात् ।

'व्याप्तिविशेषविषया प्रयोक्तुरिच्छा वीप्सा' इत्युक्तम्, स तु विशेषोऽनिर्दिष्टस्वरूपत्वान्न विज्ञायते, तदज्ञानाच्च तद्विशिष्टा वीप्सापि न ज्ञायत इत्यतः पृच्छति—**का पुनः सेति । नानावाचिनामित्यादि** । नाना-वाचिनाम्, अधिकरणानामिति—व्यधिकरणे षष्ठ्यौ । नाना = पृथग्भूताः, तान् वक्तुं शीलं येषां शब्दानां ते नानावाचिनः । तत्सम्बन्धिनामधिकरणानां वाच्यानामित्यर्थः । **क्रियागुणाभ्यामिति** । करणे तृतीया । **युगपदिति** । एककालम् । **प्रयोक्तुरिति** । वक्तुः । यो द्विर्वचनं प्रयुङ्क्ते तस्य । **व्याप्तुमिति** । सम्बन्धविशेषेणाप्तुम् । साकल्येन सम्बन्धुमित्यर्थः । **इच्छेति** । अभिलाषः । **वीप्सेति** । प्रादिसमासः—विशिष्टा ईप्सा वीप्सा ।

### पदमञ्जरी

पुंस्त्वम् । **लुनीहिलुनीहीति** । क्रियासमभिहारे लोट् । यद्यपि तिङन्तस्य दर्शितमुदाहरणं तथाप्यस्त्यत्र वक्त-व्यमिति पुनरुपन्यासः, तद्दर्शयति—**क्त्वाणमुलोर्लोटश्चेति** । 'समानकर्तृकयोः' इत्यादिनार्थान्तरेऽपि क्त्वाणमुलौ विहितौ, लोडपि विध्यादावर्थान्तरे विहित इति सामान्यशब्दत्वात् द्विर्वचनापेक्षा एव पौनःपुन्यं प्रकाशयन्ति । **यङ् तु तन्निरपेक्ष इति** । स हि क्रियासमभिहारं न व्यभिचरति, तत्किं तस्य तद्द्योतने द्विर्वचनापेक्षया ! ननु यङन्तस्यापि कदाचिद् द्विर्वचनमिष्यते, तत्कथम् ? इत्याह—**यदात्विति** । द्विविधो हि क्रियायाः सम-भिहारः—पौनःपुन्यम्, भृशार्थश्च । तत्र यदा द्विर्वचनं भवति, तदा भृशार्थे यङ्, तस्यैव पौनःपुन्यम्, द्योतयितुं द्विर्वचनम्, तस्य यङाऽद्योतितत्वादित्यर्थः । **वृत्तौ** च सामान्यशब्दस्यापि क्रियासमभिहारशब्दस्य भृशार्थलक्षणे क्रियासमभिहारे वृत्तिर्विज्ञेया । **पापच्यत इति** । सकला अवयवक्रियाः स्वयमेव सम्पादयन् पुनःपुनः पचतीत्यर्थः । लोडपि भवति—पापच्यस्व पापच्यस्वेत्येवायं पापच्यत इति । अथ नित्यतायां द्विर्वचनमुच्यमानं धातुमात्रस्य कस्मान्न भवति, स हि क्रियावचनः ? उच्यते; परिगृहीतसाधना क्रिया व्यवहारोपयोगिनी भवति, तदभिधानाच्च धातुमात्रस्य द्विर्वचनाभावः । पदाधिकारो वाश्रयणीयः । अनेनैवाभिप्रायेण पूर्वमुक्तम्—'अथ पदस्येत्येव कस्मान्नोच्यते' इति, अस्मिन्पक्षे सगतिकस्य द्विर्वचनं वक्तव्यमेव । एतेनैतदपि निरस्तम्—

### भावबोधिनी

पौनःपुन्य अर्थ में द्वित्व होता है । अतः जब यङन्त का द्वित्व करना हो तो भृश अर्थ में यङ् और पौनः पुन्य में द्वित्व मानना चाहिए । ]

प्रश्न है—किन में वीप्सा होती है ? सुपों ( सुबन्तों ) में, तो वीप्सा क्या है ? प्रयोक्ता की व्याप्तिविशेष-विषयिणी इच्छा वीप्सा है । तो वह क्या है ? नाना ( अर्थों ) के वाचक शब्दों के अधिकरणों ( वाच्यों, अर्थों ) का क्रिया और गुण के साथ एक साथ व्याप्त करने की प्रयोक्ता की इच्छा वीप्सा होती है ।

**नानाभूतार्थवाचिनां शब्दानां यान्यधिकरणानि वाच्यानि तेषां क्रियागुणाभ्यां युगपत्प्रयोक्तुमिच्छा वीप्सा । ग्रामोग्रामो रमणीयः । जनपदोजनपदो रमणीयः । पुरुषःपुरुषो निधनमुपैति ।**

**न्यासः**

**नानाभूतार्थवाचिनामित्यादिना** अनन्तरोक्तं वाक्यं विवृणोति । यत एवंविधा वीप्सा, तेन चिकीर्षत्यत्र द्विर्वचनं न भवति । चिकीर्षा हि कर्त्तुरिच्छा, न प्रयोक्तुः । यतश्चैवंविधा वीप्सा, तेन जातिवाचिनोपि द्विर्वचनं न भवति—निष्पन्नो यव इति । न हि जातिशब्दा नानाभूतार्थवाचिनः । यदा तु क्रमेण व्याप्तुमिच्छा तदापि न भवति—अयं ग्रामो रमणीयः, अयञ्च ग्रामो रमणीय इति । द्वन्द्वैकशेषयोरपि न भवति—अस्मिन् वने शोभना धवखदिरपलाशाः, अस्मिन् वने शोभना वृक्षा इति । अशेषविशेषव्याप्तावनभिमतायामप्येवं प्रयोगः क्रियत इति सर्वविशेषाविधानं न भवति, अतः प्रयोक्तुरप्यशेषान् विशेषान् व्याप्तुमिच्छा न जायते । बाहुल्येन तु शोभनत्वमाश्रित्यैवं वाक्यं प्रयोक्ता प्रयुङ्क्ते—ग्रामोग्रामो रमणीय इति । अत्र हि दिग्देशादिभेदेन भिन्नानां ग्रामाणां रमणीयत्वेन गुणेन प्रयोक्तुर्युगपद् व्याप्तुमिच्छा वीप्सा । **जनपदो जनपद इति ।** अत्रापि जनपदानाम् । **पुरुषः पुरुषो निधनमुपैतीति ।** अत्र पुरुषाणां निधनक्रियया । निधनम् = विनाश इत्यर्थः । क्रियागुणग्रहणमुपलक्षणार्थम् । द्रव्येणापि नानावाचिनामधिकरणानां युगपद्व्याप्तुं प्रयोक्तुर्येच्छा सा वीप्सैव । तेन ग्रामेग्रामे पानीयमित्यत्रादि द्विर्वचनं सिद्धं भवति । यस्तु 'द्रव्यस्य द्रव्यान्तरेण सह सम्बन्धो न भवति, सिद्धरूपत्वात्'—इत्याह, तस्य यदुक्तम्—'क्रियागुणद्रव्यैः साकल्येन कालाध्वनोः सम्बन्धोऽत्यन्तसंयोगः' इति, तद्वचनं व्याहन्यते ग्रामेग्रामे पानीयमित्ययं च शिष्टप्रयोगो नोपपद्यते । अथ कथं ग्रामशब्दोऽयं वीप्सायां वर्त्तते, यावता न तस्या वीप्साऽभिधेया, किं तर्हि ? जनाकीर्णो भूखण्डः[१] ? सत्यमेतत्; यद्येवम्, तथापि द्विर्वचनप्रतिपत्तिद्वारेण तस्या द्योतितत्वात् स तस्यां वर्त्तत इत्युच्यते । ग्रामो हि द्विर्वचनं प्रतिपद्यमानो वीप्सां द्योतयतीति तस्यां द्योतनद्वारेण वर्त्तते । अथ ग्रामो ग्राम इति कथमेकवचनम्, यावता बहुत्वाद्धि ग्रामाणां बहुवचनेनैव भवितव्यम्; अथ कृते द्विर्वचने ? नैतदस्ति; समुदाय एवात्र बहुत्वमुपजायते, न प्रत्येकम् ? उपात्तैकत्वसंख्येऽवयवेऽविरुद्धं ह्येकत्वं बहुत्वेन । तेनावयवाद् बहुवचनं न भवति । समुदायात् तर्हि कथं न भवति ? बहुत्वस्यावगतत्वाद् वीप्सया । स हि समुदायो वीप्सायां बहुत्वमन्तरेण न सम्भवतीति ताम् प्रकाशयन्नान्तरीयकत्वाद् बहुत्वमपि गमयति । ततोऽवगतार्थत्वाद् बहुवचनं न प्रयुज्यते ।

**पदमञ्जरी**

भृशार्थे सावकाशो यङ् पौनःपुन्ये परेण द्विर्वचनेन बाध्यत इति । कथमिदं निरस्तम् ? पदस्य द्विर्वचनं धातोर्यङ्, तत्रान्तरङ्गस्य न युक्तो बाध इति व्याख्यातम् ।

नित्यं वीप्सां व्याख्यास्यन् विषयं तावत्पृच्छति—**अथेति । सुप्सु वीप्सेति ।** सुपामेव तदभिव्यक्तौ समर्थत्वात् । एवं विषयमुक्त्वा स्वरूपं पृच्छति—**का पुनरिति ।** यदि सामान्येन व्याप्तुमिच्छा वीप्सा, तदा चिकीर्षतीत्यादौ द्विर्वचनप्रसङ्गः; करोत्यादिक्रियाभिः कटादीनां या व्याप्तुमिच्छा तद्वाचित्वात् । इतरो 'योगरूढिर्वीप्साशब्दः' इत्यभिप्रायेणाह—**व्याप्तिविशेषविषयेति । प्रयोक्तुरिच्छेति ।** अनेन नाभिधेया वीप्सा गृह्यते—वीप्सावाचिनो द्वे भवत इति, किं तर्हि ? प्रयोक्तृधर्मः, आबाधवत् । गतगत इत्युक्ते प्रियस्य चिरगमनादिना पीडितो वाक्यं प्रयुङ्क्त इति प्रतीयते, तेन चिकीर्षतीत्यादौ द्विर्वचनं भवतीति दर्शयति । व्याप्तिविशेषविषयेत्युक्तम्, स तु विशेषो नाद्याप्यभिहित इति पुनः पृच्छति—**का पुनरसाविति । नानावाचिनामित्यादि ।**

**भावबोधिनी**

[ पूर्वोक्त की ही व्याख्या करते हैं— ] नानाभूत ( अनेक होने वाले ) अर्थों के वाचक शब्दों के जो अधिकरण वाच्य अर्थ हैं उनका उनकी क्रिया और गुण के साथ एक साथ प्रयोग करने की इच्छा वीप्सा होती है । उदा० ग्रामो ग्रामो रमणीयः । [ गाँव गाँव रमणीय है । यहाँ रमणीयत्व गुण का सम्बन्ध प्रत्येक गाँव के साथ है । ] जनपदो जनपदो रमणीयः । [ जनपद जनपद अर्थात् सभी जनपद रमणीय है । ] पुरुषः पुरुषः निधनम् उपैति ।

१. 'ग्रामः' इति पाठः ।

**यत्तिङन्तं नित्यतया प्रकर्षेण च युक्तं ततः कृतद्विर्वचनात् प्रकर्षप्रत्यय इष्यते—पचतिपचतितरामिति।**

**इह तु आढ्यतरमाढ्यतरमानयेति प्रकर्षयुक्तस्य वीप्सायोग इष्यते ॥**

**न्यासः**

अथ यत् तिङन्तं नित्यतया प्रकर्षेण च युक्तम्, तत्र किं कृते द्विर्वचने प्रकर्षप्रत्ययेन भवितव्यम् ? अथ वा कृते प्रकर्षप्रत्यये द्विर्वचनेन ? इत्यत आह—**यत्तिङन्तमित्यादि**। अत्र विप्रतिषेधो हेतुः। तत्र द्विर्वचनस्यावकाशो यत्र नित्यार्थो विवक्षितः, न प्रकर्षः—पचतिपचतीति; प्रकर्षप्रत्ययस्यावकाशो यत्र प्रकर्षेण योगः, न नित्यतया—पचतितरामिति; यत्र तूभाभ्यां योगस्तत्र विप्रतिषेधेन द्विर्वचनं भवति—पचतिपचतितरामिति।

**पदमञ्जरी**

**पूर्ववृत्तिषु** पठितं वीप्सालक्षणम्, तद् व्याचष्टे—**नानाभूतार्थवाचिनामिति**। तत्र नानावाचिनामिति वचनाज्जातिवाचिनां द्विर्वचनं न भवति—ब्राह्मणो न हन्तव्यः, सम्पन्नो व्रीहिरिति। नहि जातिशब्दा नानाभूतार्थवाचिनः; जातेरेकत्वात्। युगपद्ग्रहणात्क्रमविवक्षायां द्विर्वचनाभावः; यथा—अस्मिन्वनेऽयं वृक्षः शोभनोऽयं वृक्षः शोभन इति क्रमेण शोभनत्वप्रतिपादने बहूनामपि शब्दानां प्रयोगो भवति, तथैकशेषोऽपि न भवति—अस्मिन्वने वृक्षाः शोभना इति; नानावाचित्वाभावात्। पृथगर्थपर्यवसायित्वं हि नानावाचित्वम्, न चैकशेषे तदस्ति। अत एव तत्र न प्रत्येकं विधेयसम्बन्धो नियमेन प्रतीयते। न हि 'ब्राह्मणेभ्यः शतं देयम्' इत्युक्ते नियमेन प्रत्येकं शतं देयं भवति। ब्राह्मणाय ब्राह्मणाय शतं देयमित्युक्ते प्रत्येकं शतं दीयते, तत्कस्य हेतोः ? पृथगर्थपर्यवसायितया पृथग्देयस्य सम्बन्धात्। यदा च पृथगर्थपर्यवसायिता, तदा यावन्तोऽर्था अभिधित्सिताः, तावन्तः शब्दाः पृथगेकैकपर्यवसायिनः प्रसक्ताः, तेषामनेन निवृत्तिः क्रियते—वीप्सायां द्वे एव प्रयोक्तव्ये, न तु बहु प्रयोक्तव्यमिति। कथं तर्हि निवृत्तानामर्थः प्रतीयते, यावता प्रत्येकपर्यवसायित्वे द्वयोरेव प्रतीतिः स्यात् ? उच्यते—

एकशेषे यथान्येषामर्थः शिष्टेन गम्यते।
तद्वदत्र विशेषेऽपि शिष्टाभ्यामितरार्थधीः ॥

यथैव हि वृक्षौ वृक्षा इत्येकशेषविषये शिष्यमाणमेव निवृत्तानामप्यर्थमाह, तथेहापि शिष्यमाणे द्वे एव विवक्षितानर्थानभिधास्यतः। न च बहुवचनप्रसङ्गः; परिगृहीतैकत्वानां बहूनामभिधानात्; अन्यथा प्रत्येकसम्बन्धस्याप्रतीतेः द्विर्वचनादुत्तरकालं सत्यामपि बहुत्वावगतावप्रातिपदिकत्वाद्बहुवचनाभावः, यथा—पश्य मृगो धावतीति सत्यपि दर्शनक्रियापेक्षे कर्मत्वे द्वितीयाभावः। एकैकमित्यत्र तु सत्यपि बहुव्रीहिवद्भावेन प्रातिपदिकत्वं परिगृहीतैकत्वस्यैकार्थस्य वीप्सायोगादन्तरङ्गत्वादेकवचनं भवति, न बहुवचनम्; बहुत्वप्रतीतेर्बहिरङ्गत्वात्। अस्यैवार्थस्य 'एकैकस्य प्राचाम्' इति निर्देशो लिङ्गमित्यलमियता। तदयमत्रार्थः—नानाभूतार्थवाचिनां यान्यधिकरणानि वाच्यानि तेषां सहविवक्षितानां पृथक् संख्यायुक्तानां प्रत्येकं क्रियया गुणेन वा व्याप्तुमिच्छा वीप्सेति। क्रियागुणग्रहणं द्रव्यस्याप्युपलक्षणम्। **ग्रामेग्रामे पानीयमिति**। द्रव्यव्याप्तेरुदाहरणम्। **पुरुषः पुरुषो निधनमुपैतीति**। निधनम्=मरणम्। जातस्य हि ध्रुवो मृत्युरित्यर्थः। अपर आह—साम्नां भक्तिविशेषः = निधनम्, सर्व एव ऋत्विजो निधनमुपयन्तीत्यर्थं इति।

**यत्तिङन्तमित्यादि**। अत्र विप्रतिषेधो हेतुः, द्विर्वचनस्यावकाशो यत्र नित्यता विवक्षिता, न प्रकर्षः—

**भावबोधिनी**

[ पुरुष पुरुष अर्थात् हर मनुष्य मृत्यु प्राप्त करता है। यहाँ निधन क्रिया के साथ पुरुषों का सम्बन्ध है। क्रिया-गुण को द्रव्य का भी उपलक्षण समझना चाहिए—ग्रामे ग्रामे पानीयम्। गाँव गाँव में पानी है। यहाँ पानीय द्रव्य का ग्रामों के साथ सम्बन्ध है। ]

जो तिङन्त नित्यता और प्रकर्ष से युक्त होता है उससे द्वित्व कर लेने के बाद प्रकर्ष अर्थ वाला प्रत्यय इष्ट है—पचति-पचतितराम्। [ पचति का द्वित्व करने के बाद ही प्रकर्षार्थक तरप् और आम् प्रत्यय किये जाते हैं। अतः प्रकर्षार्थक प्रत्यययुक्त का द्वित्व नहीं समझना चाहिए। ]

## ३६१९. परेर्वर्जने ॥ ५ ॥ (२१४१)

**परीत्येतस्य वर्जनेऽर्थे द्वे भवतः। परिपरि त्रिगर्तेभ्यो वृष्टो देवः। परिपरि सौवीरेभ्यः। परिपरि सर्वसेनेभ्यः। वर्जनम् = परिहारः।**

**न्यासः**

सुबन्तमपि तर्हि यद् वीप्सया प्रकर्षेण च युक्तम्, तस्मादत एव हेतोः कृतद्विर्वचनात् प्रकर्षप्रत्ययः स्यात्, ततश्चाढ्यतरमाढ्यतरमानयेति न सिध्येदित्यत आह—**इह त्वित्यादि**। यदि सुबन्तस्यैककालं वीप्सा प्रकर्षेण च योगः स्यात्, तदा स्यादयं प्रसङ्गः, स च नास्ति; यतः सुबन्तस्य प्रकर्षप्रत्ययेन संयुक्तस्य पश्चाद् वीप्सया योग इष्यते। कथम्? इह हि वीप्सा नाम पौरुषेयो धर्म इच्छाविशेषः, स च तथा प्रयोक्तुर्विदुषः प्रवर्त्तते यथा शब्दे नानिष्टमापद्यते, नापि प्रयोक्तरि। यदि प्रकर्षप्रत्ययात् प्राक् सहभावेन वा वीप्सा स्याच्छब्दे अनिष्टमापद्यते, तद्द्वारेण प्रयोक्तर्यपि, यथा—हेलयो हेलय इति ब्रुवत्सु पुरुषेषु, यज्ञेषु चानिष्टमापद्यते। तस्मात् प्रकर्षयोगविवक्षाया उत्तरकालं शिष्टस्य प्रयोक्तुर्वीप्सया भवितव्यमिति सिद्धमाढ्यतरमानयेति।

अपरः प्रकारः—इहापि तर्हि तत एव हेतोः कृते द्विर्वचने प्रकर्षप्रत्ययः स्यात्, ततश्चाढ्यतरमाढ्यतरमानयेति न सिध्यति?—इत्येतस्मिन् पूर्वपक्ष इदमाह—**इह त्वित्यादि**। प्रकर्षसाहचर्यात् प्रकर्षप्रत्ययः प्रकर्षशब्देनोक्तः। वीप्सासाहचर्याद् हि द्विर्वचनं वीप्साशब्देन। तदेतदुक्तं भवति—प्रकर्षप्रत्यययुक्तस्य द्विर्वचनेन योग इष्यत इति। अत्र चायमभिप्रायः—येन हेतुना युगपत् प्रकर्षेण नित्यतया च युक्तस्य पूर्वं द्विर्वचनं भवति, स विप्रतिषेधोऽत्र नास्ति; अतुल्यबलत्वात्। अतुल्यबलत्वं तु प्रकर्षप्रत्ययस्यान्तरङ्गत्वात्, द्विर्वचनस्य बहिरङ्गत्वात्। तथा हि ङ्याप्प्रातिपदिकादातिशायिको भवति, द्विर्वचनं तु पदस्य। 'असिद्धं बहिरङ्गमन्तरङ्गे' इति सिद्धासिद्धयोश्चायुक्तो विप्रतिषेधः। तस्मात् पूर्वं प्रकर्षप्रत्ययेन सुबन्ताद् भवितव्यम्, पश्चात् तदन्तस्य द्विर्वचनेनेति। ननु चातिशायिको नैवान्तरङ्गः, समर्थाद्धि स उपपद्यते, 'समर्थानां प्रथमाद्वा' इत्यधिकारात्, सामर्थ्यञ्च सुबन्तेनैव? नैतत्; उक्तं हि तत्रैव 'स्वार्थिकप्रत्ययावधिश्चायमधिकारः प्राग्दिशो विभक्तिरिति यावत्, स्वार्थिकेष्वस्योपयोगो नास्ति' इति। स्वार्थिकाश्चातिशायिकाः। तस्मादन्तरङ्गत्वादुत्पन्ने तस्मिन् पश्चात् सुबन्तस्य द्विर्वचनेन भवितव्यम् ॥ ४ ॥

**परेर्वर्जने ॥ परि-परि त्रिगर्त्तेभ्य इति।** 'अपपरी वर्जने' इति परेः कर्मप्रवचनीयसंज्ञायां सत्याम् 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी। **परिषिञ्चतीति।** सर्वतः सिञ्चतीत्यर्थः। 'उपसर्गात् सुनोति' इत्यादिना

**पदमञ्जरी**

पचतिपचतीति, प्रकर्षप्रत्ययस्यावकाशो यत्र प्रकर्ष एव विवक्ष्यते, न नित्यता—पचतितरामिति; उभयविवक्षायामुभयप्रसंगे परत्वाद् द्विर्वचनम्, ततः पुनःप्रसङ्गविज्ञानात्प्रकर्षप्रत्ययः। यद्वा—प्रतियोग्यपेक्षः प्रकर्षो बहिरङ्गः, पौनःपुन्यमन्तरङ्गमिति पूर्वं द्विर्वचनम्।

**इह त्वित्यादि**। इष्टिरेवेयम्। यद्वा—प्रकर्षयुक्ता एवाढ्यादय आनयनक्रियायामुपयुज्यन्त इति लघुप्रकर्षा एव वीप्स्यन्ते। किञ्च—कृतद्विर्वचनात्तरपि सत्याढ्यातरमिति भवितव्यम्, तथा च प्रकर्षार्थो गम्येत, न वीप्सेति पूर्वं प्रकर्षयोगः ॥ ४ ॥

**परेर्वर्जने ॥ परिपरि त्रिगर्तेभ्य इति।** 'अपपरी वर्जने' इति कर्मप्रवचनीयसंज्ञा, 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी। **परिषिञ्चतीति।** परिः सर्वतो भावे, 'उपसर्गात्सुनोति' इत्यादिना षत्वम्।

**भावबोधिनी**

किन्तु सुबन्त में तो 'आढ्यतरम् आढ्यतरम् आनय' ऐसा प्रकर्षयुक्त ( तरप्प्रत्ययान्त ) का वीप्सायोग इष्ट है। [ यह भाष्यकार की इष्टि है। ] ॥ ४ ॥

वर्जन=छोड़ना अर्थ में 'परि' इसका द्वित्व होता है। उदा० परि-परि त्रिगर्तेभ्यो वृष्टो देवः। [त्रिगर्त नामक देशों को छोड़कर पानी बरसा। ] परि परि सौवीरेभ्यो वृष्टो देवः। [ सौवीरसंज्ञक देशों को छोड़कर पानी बरसा। ] परि-परि सर्वसेनेभ्यः। [ सर्वसेन को छोड़कर पानी बरसा। ] वर्जन = छोड़ना। [ यहाँ 'अपपरी वर्जने' ( १।४।८७ ) से 'परि' की कर्मप्रवचनीय संज्ञा होती है और 'पञ्चम्यपाङ्परिभिः' ( २।३।१० ) सूत्र से पञ्चमी होती है। ]

वर्जन इति किम् ? ओदनं परिषिञ्चति ।

॥ परेवर्जनेऽसमासे वेति वक्तव्यम् ॥ (म० भा०) परिपरि त्रिगर्त्तेभ्यो वृष्टो देवः, परि त्रिगर्त्तेभ्यः । समासे तु तेनैवोक्तत्वाद्वर्जनस्य नैव भवति—परित्रिगर्त्तं वृष्टो देव इति ॥

## ३६२०. प्रसमुपोदः पादपूरणे ॥ ६ ॥ (३५९९)

**न्यास**

षत्वम् । **परेर्वर्जनेऽसमासे वेत्यादि** । परेर्वर्जनेऽर्थेऽसमासे विभाषा द्विर्वचनं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—'विभाषा वेष्टिचेष्ट्योः' इत्यतो मण्डूकप्लुत्या विभाषाग्रहणमनुवर्त्तते, तेनासमासे द्विर्वचनं परेर्वर्जने विभाषा भवतीति ।

'असमासे' इति वचनात् समासे तु नित्यमेव द्विर्वचनेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात् अतस्तां निराकर्तुमाह—**समासे त्वित्यादि** । यथा दध्नोपसिक्त ओदनो दध्योदन इतीहोपसिक्तशब्दः समासेऽन्तर्भूतः, तथा 'अपपरिबहिरञ्चवः पञ्चम्याः' इति समासे कृते तत्र वर्जनम् । परिशब्दस्तु समासेऽनर्थक एव, तेन वर्जनेऽर्थे वर्त्तमानस्य द्विर्वचनमुच्यमानं समासे न भवति । अथापि परिशब्दो वर्जनेऽर्थेऽर्थवान् स्याद् ? एवमपि समासेनैव वर्जनार्थप्रत्यायितत्वान्नैव द्विर्वचनेन भवितव्यम् । **परित्रिगर्त्तमिति** । समासादुत्पन्नस्य सोः 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्यम्भावः ॥ ५ ॥

**प्रसमुपोदः पादपूरणे** ॥ **प्रसमुपोद इति** । 'द्वन्द्वाच्चुदषहान्तात् समाहारे' इति समासान्तो न कृतः; समासान्तविधेरनित्यत्वात् । **पादपूरण इति** । 'यस्य च भावेन भावलक्षणम्' इति सप्तमीयम् । पादपूरणस्य भावेनोत्पत्तिलक्षणेन द्विर्वचनस्य भावो लक्ष्यते । ननु च द्विर्वचनात् प्राक् पादपूरणमसदेव, तत् कुतस्तस्य भावो द्विर्वचनस्य लक्षणं स्यात्, न हि तत् सत्त्वम् ? असारमेतत्; तदुत्पत्तिर्ह्यत्र भावः, सा

**पदमञ्जरी**

**परेर्वर्जन इत्यादि** । 'परेर्वर्जने' इत्यत्र 'असमासे' इति वक्तव्यम्, 'वा' इति च वक्तव्यम्, तेनासमास एव भवति, तत्रापि विकल्पेन ।

अन्यत्र तु नैव भवति, तदाह—**समासे त्विति** । **तेनैवोक्तत्वादिति** । ननु वाक्ये तावद्वर्जनं परेरेव द्योत्यम्, समासेऽपि परिः सन्निहितः, तत्किं समासस्य वर्जने शक्तिः कल्प्यते ? तत्राहुः—'जहत्स्वार्था वृत्तिः' इति पक्षे समास एव वर्ज्यमानोपसर्जने वर्जने वर्त्तते, अवयवौ त्वनर्थकाविति । यदा तु 'अजहत्स्वार्था वृत्तिः' इति पक्षः, तदा वाक्ये केवले वर्जने परिर्वर्तत इति तत्रैव द्विर्वने वर्त्तत इति द्विर्वचनाभावः ॥ ५ ॥

**प्रसमुपोदः पादपूरणे** ॥ प्रादीनां समाहारद्वन्द्वः, 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति समासान्तस्तु न

**भावबोधिनी**

वर्जन अर्थ में—इसका क्या फल है ? ओदनं परिषिञ्चति । [ यहाँ कर्मप्रवचनीय न होकर उपसर्ग संज्ञा ही है । अतः 'उपसर्गात् सुनोति-सुवति' से षत्व होता है । वर्जन अर्थ नहीं है । ]

॥ परि का वर्जन अर्थ में असमास में विकल्प से द्वित्व कहना चाहिये ।॥ उदा० परि परि त्रिगर्त्तेभ्यः वृष्टः देवः, परि त्रिगर्त्तेभ्यः वृष्टः देवः । [ यहाँ 'परि' की कर्मप्रवचनीय संज्ञा हो जाने पर 'विभाषा अपपरिबहिरञ्चवः पञ्चम्याः' ( २।१।११ ) से विकल्प से समास होता है । समासाभाव में यह वार्तिक विकल्प से द्वित्व करता है । वास्तव में सूत्र से वैकल्पिक द्वित्व समझना चाहिये क्योंकि समास में तो समास से ही वर्जन अर्थ प्रतीत होता है, द्वित्व की प्राप्ति नहीं है—यही लिख रहे हैं— ]

[ परि के ] समास में तो उस समास से ही वर्जन अर्थ के उक्त हो जाने से द्वित्व नहीं होता है—परित्रिगर्तं वृष्टो देवः । [ समास होता है और अव्ययीभाव होने से सु का अम् हो जाता है । ] ॥ ५ ॥

प्र, सम्, उप, उद्—इनका पादपूरण अर्थ में द्वित्व होता है, अर्थात् यदि द्विर्वचन से पाद की पूर्ति हो तो

प्र, सम्, उप, उत्—इत्येतेषां पादपूरणे द्वे भवतो द्विर्वचनेन चेत्पादः पूर्यते। प्रप्रायमग्निर्भरतस्य शृण्वे (ऋ० ७।८।४)। संसमिद्युवसे वृषन् (ऋ० १०।१९१।१) उपोप मे परामृश (ऋ० १।१२६।७)। किं नोदुदुहर्षसे दातवाउ[1] (ऋ० ४।२१।९)।

पादपूरण इति किम्? प्रदेवं देव्या धिया (ऋ० १०।१७६।२)। सामर्थ्याच्छन्दस्येवैतद्विधानम्। भाषायामनर्थकं स्यात्; प्रयोगाभावात्॥

## ३६२१. उपर्यध्यधसः सामीप्ये॥ ७॥ (२१४२)

उपरि, अधि, अधस्—इत्येतेषां द्वे भवतः सामीप्ये विवक्षिते। सामीप्यम्=प्रत्यासत्तिः कालकृता, देशकृता च। उपर्युपरि दुःखम्। उपर्युपरि ग्रामम्। अध्यधि ग्रामम्। अधोऽधो नगरम्।

**न्यासः**

चानिष्पन्नसत्ताकस्यैव भवति, न निष्पन्नसत्ताकस्य। न हि मृत्तिकावस्थायां सन्तो घटादय उत्पद्यन्ते। पादश्चेह विशेषानभिधानेऽपि सामर्थ्यादृच एव गृह्यते, न श्लोकस्य। लौकिको हि श्लोकः, लोके चार्थपरत्वादनर्थकस्य प्रयोगो नोपपद्यते॥ ६॥

**उपर्यध्यधसः सामीप्ये॥ सामीप्य इति।** प्रत्यासत्तावित्यर्थः। एतच्चोपर्यादीनां विशेषणम्। सामीप्यं देशकृतम्, कालकृतञ्च भवति। तत्रोपर्युपरि **ग्राममिति** देशकृतस्योदाहरणम्। समीपे ग्रामस्येत्यर्थः। द्वितीयात्र 'उभयसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु' इत्याद्युपसंख्यानात्। कालकृतस्योदाहरणम्—**उपर्युपरि दुःखमिति।** समीपं यद् दुःखमचिरकालातिक्रान्तमचिरकालभावि वा तदेवमुच्यते।

**पदमञ्जरी**

भवति; समासान्तविधेरनित्यत्वात्। **उदित्यं जातवेदसमिति** क्वचिदुदाहृतम्, तदयुक्तम्; न ह्यत्र द्वितीय उच्छब्दः, किं तर्हि? उशब्दः।

**सामर्थ्याच्छन्दस्येवैतद्विधानमिति।** किं सामर्थ्यम्? इत्याह—**भाषायामिति।** नात्र द्विर्वचनस्य किञ्चिद् द्योत्यम्, केवलं पादपूरणमेव कार्यम्, न चैवंविधस्य भाषायां प्रयोगोऽस्ति। क्वचित्तु **सामर्थ्यादित्यादि** न पठ्यते॥ ६॥

**उपर्यध्यधसःसामीप्ये॥** उपर्यादीनां योऽर्थस्तस्य सामीप्यद्योतनाय द्विर्वचनम्। सामीप्यम् = प्रत्यासत्तिः, तच्च देशकृतं कालकृतं वा। **उपर्युपरि दुःखमिति।** कालकृतस्योदाहरणम्। दुःखस्य सामीप्येनोपरिष्टादित्यर्थः। उभसर्वतसोः' इत्युपसंख्यानेन द्वितीया। **उपर्युपरि ग्राममिति।** ग्रामस्य सामीप्येनोपरिष्टाद्देश इत्यर्थः। **अध्यधि ग्राममिति।** अधिरुपरिभावे, यथा—'समिधं स्रुचं चाध्यधि गार्हपत्यं हृत्वा' इति। **अधोऽधो ग्राममिति।** ग्रामस्य सामीप्येनाधस्ताद् देश इत्यर्थः। यथा 'नवानधोऽधो बृहतः पयोधरान्'[2] इति।

**भावबोधिनी**

द्वित्व करना चाहिए। उदा० "प्र प्रायमग्निर्भरतस्य शृण्वे।" (ऋ० ७।८।४) [ 'प्र' का द्वित्व है। ] "संसमिद्युवसे वृषन्"। (ऋ० १०।१९१।१) [ यहाँ 'सम्' का द्वित्व है। उपोप मे परामृश। (ऋ० १।१२६।७) 'उप' का द्वित्व है। ] "किं नोदुदु हर्षसे दातवा उ।" (ऋ० ४।२१।९)। [ उत् = उ का द्वित्व है। ]

पाद की पूर्ति होने में—इसका क्या फल है? प्रदेवं देव्या धिया। [ यहाँ पाद पूरा ही है। अतः द्वित्व नहीं होता है। ]

सामर्थ्यवश केवल वेद में ही यह द्वित्वविधान है। भाषा में अनर्थक होगा, क्योंकि प्रयोग नहीं होता [ वेद में पादपूर्ति ही फल है। अतः वहीं होता है ]॥ ६॥

उपरि, अधि और अधस्—इनका द्वित्व होता है यदि सामीप्य अर्थ विवक्षित हो तो। सामीप्य = समीप होना, यह काल से होने वाला तथा देश (स्थान) से होने वाला [ लिया जाता है ]। उपरि उपरि दुःखम्। [ दुःख के समीप अर्थात् अभी अभी दुःख था या होने वाला है। यहाँ कालकृत सामीप्य है। ] उपर्युपरि

---

१. 'पादपूरणे इति भावलक्षणे सप्तमी'–इति पुस्तकान्तरेऽधिकम्।　　२. शिशु० १.४।

**सामीप्य इति किम् ? उपरि चन्द्रमाः ।**

**इह कस्मान्न भवति—उपरि शिरसो घटं धारयति ? औत्तराधर्यमेव विवक्षितं न सामीप्यमिति द्विर्वचनं न भवति ॥**

**३६२२. वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु ॥८॥ ( २१४३ )**

**एकार्थः पदसमूहः = वाक्यम् । वाक्यादेरामन्त्रितस्य द्वे भवतः असूया-सम्मति-कोप-कुत्सन-भर्त्सनेषु यदि तद्वाक्यं भवति ।**

**न्यासः**

**अथेह कस्मान्न भवति—उपरि शिरसो घटं धारयतीति,** अस्ति ह्यत्र घटेन शिरसः प्रत्यासत्तिः ? इत्याह—**उपरि शिरसो घटमित्यादि ।** नहीह शास्त्रे वस्तुनः सत्तैव शब्दव्युत्पत्तेः प्रधानं कारणम्, किं तर्हि ? तद्विवक्षापि, सा चेह नास्ति । औत्तराधर्यमात्रस्य विवक्षितत्वात् । तेनेह न भवति द्विर्वचनम् । द्वितीययापि न भवितव्यम्; नाम्रेडितत्वात् ॥ ७ ॥

**वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु ॥** आख्यातं साव्ययकारकविशेषणं वाक्यम्, तस्यादिर्वाक्यादिः । असूयादीनपेक्षमाणस्यापि गमकत्वात् समासः । **असूयासम्मतिकोपकुत्सनभर्त्सनेषु यदि तद्वाक्यं भवतीति ।** एतेनासूयादीनां वाक्यं प्रति विशेषणभावं दर्शयति । ननु चामन्त्रितस्य विशेष्यत्वात् प्राधान्यम्, वाक्यस्य विशेषणत्वादप्राधान्यम्, तत्र प्राधान्यादामन्त्रितं प्रत्येवैषां विशेषणत्वं युक्तम् ? नैतदस्ति; आमन्त्रितविशेषणत्वे हि सति तेषामसूयादिवृत्तेरेवामन्त्रितस्य द्विर्वचनं स्याद्—असूये असूय इत्यादौ वाक्ये,

**पदमञ्जरी**

उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ।
अधोऽधो दर्शने कस्य महिमा नोपजायते ॥

इति तु वीप्सायां द्विर्वचनम् ।

**उपरि चन्द्रमा इति ।** अत्र भूगतमपेक्ष्योपरिभावस्य सामीप्यं नास्ति । **उपरि शिरस इत्यादि ।** न हि वस्तुसत्तैव शब्दव्युत्पत्तेः प्रधानं कारणम्, किं तर्हि ? विवक्षा, सा चेह नास्ति । शिरस उपरिष्टाद् घटं धारयति नाधस्तादिति ह्यत्र विवक्षितम् । सामीप्यं तु वस्तुतः सम्भवति ॥ ७ ॥

**वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु ॥ एकार्थः पदसमूहो वाक्यमिति ।** यथाह भगवाञ्जैमिनिः—अर्थैकत्वादेकं वाक्यं साकांक्षे चेद्विभागे स्यात्[1]" इति । क्वचित्तु 'एकतिङ्पदसमूहो वाक्यम्'

**भावबोधिनी**

ग्रामम् । [ गाँव के समीप = ऊपर । ] अध्यधि ग्रामम् । [ गाँव के समीप ऊपर ] अधोअधः नगरम् । [ नगर के समीप नीचे । इनमें नीचे या ऊपर में सामीप्य की प्रतीति रहती है । ]

सामीप्य में—इसका क्या फल है ? उपरि चन्द्रमाः । [ चन्द्रमा ऊपर है । यहाँ अतिशय दूरी प्रतीत होती है । क्योंकि चन्द्रमा हजारों मील दूर है । ]

यहाँ क्यों नहीं होता है—उपरि शिरसो घटं धारयति । [ सिर के ऊपर घड़ा रखता है । ] ? औत्तराधार्य ही विवक्षित है न कि सामीप्य, इसलिये द्वित्व नहीं होता है । ] [ घड़ा का ऊपर रखना = औत्तराधार्य ही वक्ता का अभीष्ट है क्योंकि शिर के ऊपर ही घट रखता है नीचे नहीं—यही विवक्षित है । किन्तु सूत्र तो सामीप्य अर्थ रहने पर ही द्वित्व करता है । यदि सामीप्य अर्थ विवक्षित हो तो द्वित्व होने में बाधा नहीं होनी चाहिए । ] ॥ ७ ॥

एक विशिष्ट अर्थ वाला पदसमूह वाक्य होता है । वाक्य के आदि में प्रयुक्त आमन्त्रित ( सम्बोधनान्त ) का द्वित्व होता है यदि वह वाक्य असूया, सम्मति, कोप, कुत्सन और भर्त्सन—इन अर्थों में प्रयुक्त होता हो तो, अर्थात् उपर्युक्त कोई अर्थ रहना चाहिये ।

---

१. मीमांसासूत्रम् २.१.४६ ।

**तत्र परगुणानामसहनम् = असूया। पूजा = सम्मतिः। कोपः = क्रोधः। निन्दनम् = कुत्सनम्। अपकारशब्दैर्भयोत्पादनम् = भर्त्सनम्। एते च प्रयोक्तृधर्माः, नाभिधेयधर्माः।**

**असूयायां तावत्—माणवक३ माणवक अभिरूपक३ अभिरूपक रिक्तं ते आभिरूप्यम्।**

**सम्मतौ—माणवक३ माणवक अभिरूपक३ अभिरूपक शोभनः खल्वसि।**

**कोपे—माणवक३ माणवक, अविनीतक३ अविनीतक इदानीं ज्ञास्यसि जाल्म।**

**कुत्सने—शक्तिके३ शक्तिके, यष्टिके३ यष्टिके रिक्ता ते शक्तिः।**

**न्यासः**

माणवक माणवकेत्यादौ तु वाक्ये न स्यात्। वाक्यविशेषणत्वं ह्यसूयादीनां सर्वत्र भवति। तस्माद् वाक्यविशेषणतैवासूयादीनां युक्ता; व्याप्तेः। कदा पुनर्वाक्यमसूयादिषु भवति ? यदा तस्मिन्वाक्ये प्रयुज्यमाने असूयादयो गम्यन्ते। असहनम् = अक्षान्तिः। पूजनम् = शब्देन गुणाविष्करणम्। **एते च प्रयोक्तृधर्मा इति।** यो वाक्यं प्रयुङ्क्ते तस्यैते धर्मा गुणविशेषा इत्यर्थः। प्रयोक्तृधर्मत्वं च तेषां प्रयोक्तरि वृत्तेः। **नाभिधेयधर्मा इति।** अभिधेये तेषामवृत्तेः। न हि यथा माणवकादावभिधेय आभिरूप्यादयो धर्मा वर्त्तन्ते, तथासूयादयः। तथा हि—'माणवका माणवक आभिरूपका अभिरूपक रिक्तं त आभिरूप्यम्'—इत्येवं वाक्यप्रयोगे प्रयोक्तृगता एवासूयादयः प्रतीयन्ते, न तु माणवकादिगताः। **रिक्तमिति।** असारमित्यर्थः।

**शक्तिके शक्तिक इति।** कुत्सिता शक्ता। 'प्रागिवात् कः', 'केऽणः' इति ह्रस्वः, टाप्, 'प्रत्ययस्थात्' इतीत्वम्, 'सम्बुद्धौ च' इत्येत्वम्। **आम्रेडितस्यैवेति।** भर्त्सने यदुक्तमिहोदारणं तदधिकृत्यैतदुक्तम्; न तु 'आम्रेडितं भर्त्सने' इत्यनेनाम्रेडितस्यैव प्लुतः क्रियते, अपि तु पर्यायेण; 'भर्त्सने पर्यायेण' इति वचनात्। **शोभनः खल्वसि** माणवकेत्यत्रास्ति पूजनम्, न त्वामन्त्रितं वाक्यादि। **उदारो देवदत्त** इत्यत्रास्ति पूजनम्। वाक्यादित्वञ्चोदारशब्दस्य, न त्वामन्त्रितत्वम्।

**पदमञ्जरी**

इति पठ्यते, एका तिङ्विभक्तिर्यत्र स एकतिङ्। क्वचित्तु न किञ्चिदपि वाक्यलक्षणं पठ्यते। **असूयासम्मतिकोपकुत्सनभर्त्सनेषु यदि तद्वाक्यं भवतीति।** यद्यपि वाक्यादेरिति समासे गुणीभूतं वाक्यम्, तथाप्यसूयादीनां तेनैव सम्बन्धः—असूयादिषु यद्वाक्यं तदादेरिति, न तु प्रधानेन वाक्यादिनाऽऽमन्त्रितेन। प्रयोक्तृधर्मा ह्यसूयादयो नाभिधेयधर्माः, ते च वाक्येनैव द्योत्यन्ते, नामन्त्रितेन। उदाहरणेषु सम्मतावनुकम्पायां कन्, इतरत्र कुत्सिते कः। **रिक्तम्** = शून्यम्, क्षुद्रमित्यर्थः। शक्तियष्टिशब्दाभ्यां तद्वत्योः स्त्रियोर्वर्तमानाभ्यां कुत्सिते कः। एवं हि कुत्सनम्, सम्बोधनं च समीचीनं भवति। **भर्त्सने त्वित्यादि।** यद्यपि 'भर्त्सने पर्यायेण' इति वचनात्पूर्वस्यापि तत्र पर्यायेण प्लुतो भवति, तथापि भर्त्सने यदुक्तमिहोदाहरण तदधिकृत्येदमुक्तम्—**आम्रेडितस्यैवेति।**

**भावबोधिनी**

इनमें दूसरे के गुणों को न सहना करना—असूया है। पूजा = सम्मति। कोप = क्रोध। कुत्सन = निन्दन, निन्दा करना। अपकार-सूचक शब्दों से भय उत्पन्न करना—भर्त्सना है। और ये सभी प्रयोक्ता में रहने वाले धर्म (विशेषतायें) हैं न कि अभिधेय में (जिसके लिए इनको कहा जा रहा है)। [ भाव यह है कि जो वाक्य प्रयोग करने वाला है उसमें असूया आदि भाव रहते हैं किन्तु जिनके लिये वाक्यप्रयोग किया जा रहा है उनमें ये विशेषतायें नहीं रहती हैं। ]

(१) पहले असूया अर्थ में उदा०—माणवक३ माणवक अभिरूपक३ अभिरूपक रिक्तं ते आभिरूप्यम्। [ बालक बालक, सुन्दर सुन्दर, तुम्हारी सुन्दरता नहीं है, बहुत कम है। वस्तुतः सुन्दर होने पर भी असूया के कारण ऐसा कहता है। यहाँ द्वित्व करने के बाद "स्वरितमाम्रेडितेऽसूयासम्मति-कोप-कुत्सनेषु" (८।२।१०३) सूत्र से प्रथम शब्द रूप स्वरित प्लुत हो जाता है इसीलिए प्लुत का चिह्न लिखा गया है। ]

(२) सम्मति अर्थ में उदा०—माणवक ३ माणवक अभिरूपक ३ अभिरूपक शोभनः खल्वसि। [ लड़के लड़के सुन्दर सुन्दर तुम वास्तव में बहुत सुन्दर हो। [यहाँ भी द्वित्व के बाद पूर्वोक्त सूत्र से प्रथम का स्वरित प्लुत होताहै।]

[1]भर्त्सने—चौर चौर वृषल वृषल३ घातयिष्यामि त्वा, बन्धयिष्यामि त्वा।

असूयादिषु 'स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु' (८।२।१०३) इति पूर्वपदस्य प्लुतः। भर्त्सने तु 'आम्रेडितं भर्त्सने' (८।२।९५) इत्याम्रेडितस्यैव प्लुतः।

वाक्यादेरिति किम्? अन्तस्य मध्यस्य च मा भूत्—शोभनः खल्वसि माणवक। आमन्त्रितस्येति किम्? उदारो देवदत्तः।

**न्यासः**

ननु चासूयायाः कुत्सनं कार्यम्, भर्त्सनं कोपस्य, तत्र कुत्सनभर्त्सनयोर्द्विर्वचने कृते ततः प्रतीयमानाभ्यां कुत्सनभर्त्सनाभ्यां कोपासूययोरपि प्रतीतिर्भविष्यति; कार्यस्य कारणाव्यभिचारात्, तस्मात् कोपासूययोर्ग्रहणं न कर्तव्यमेव? नैवम्; न हि कोपासूयाप्रभवे एव कुत्सनभर्त्सने। तथा हि—पित्रादयः पुत्रादीननसूयन्तोऽपि कुत्सयन्ति, अकुप्यन्तोऽपि भर्त्सयन्ते। यद्यपि तदानीं कायवाग्विकारोऽस्ति, तथापि न त्वसावसूया, नापि कोपः; तयोश्चैतसिकत्वात्। अतः कार्यकारणभावस्याभावात् कुत्सनभर्त्सनप्रतीत्या कोपासूययोः प्रतीतिर्नोपपद्यते।

**पदमञ्जरी**

**शोभनः खल्वसि माणवकेति**। अत्र माणवकशब्दस्य द्विर्वचनं न भवति। ननु च नानसूयन् कुत्सयते, न चाकुपितो भर्त्सयते, ततः कोपासूययोर्द्विर्वचनं विधीयमानं भर्त्सनकुत्सनयोरपि सिद्ध्यति; कारणत्वेन तत्रापि कोपासूययोर्भावात्, ततश्च नार्थः कुत्सनभर्त्सनग्रहणेन? नैतदस्ति;

गुरवो हि हितैषित्वादकुप्यन्तोऽपि भर्त्सनम्।
कुर्वते भर्त्स्यमानास्तु कुपितान्प्रतियन्ति तान्॥

**भावबोधिनी**

(३) कोप अर्थ में उदा०—माणवक ३ माणवक अविनीतक ३ अविनीतक इदानीं ज्ञास्यसि जाल्म। [लड़के लड़के, धृष्ट धृष्ट, दुष्ट तुम अभी जान जाओगे कि मैं क्या करूँगा।]

(४) कुत्सन अर्थ में उदा०—शक्तिके, शक्तिके ३ यष्टिके ३ यष्टिके रिक्ता ते शक्तिः।

विमर्श—कुत्सिता शक्ता—यहाँ कुत्सा अर्थ में 'क', टाप्, 'केऽणः' से ह्रस्व, "प्रत्ययस्थात्" सूत्र से इत्व करने पर 'शक्तिका' बनता है। शक्ता स्त्री की शक्ति की कुत्सामें यह वाक्य है। शक्तिवाली शक्तिवाली तेरी शक्ति समाप्त है। यष्टी यष्टी तेरी शक्ति समाप्त है। यहाँ न्यासकार ने कुत्सा अर्थ में क प्रत्यय आदि किया है। किन्तु 'यष्टिके यष्टिके' की व्युत्पत्ति नहीं दी है। पदमञ्जरीकार ने मत्वर्थ में लक्षणा मानी है। महाभाष्य में भी विशेष चर्चा नहीं है। यहाँ का प्रस्तुत उदाहरण कुछ अशुद्ध प्रतीत होता है। वास्तव में 'शक्तियष्ट्योरीकक्' (४।४।५९) सूत्र से 'तदस्य प्रहरणम्' अर्थ में ईकक् प्रत्यय करके आदिवृद्धि आदि के बाद—शाक्तिकी और याष्टिकी रूप बनाकर सम्बोधन में 'शाक्तिके, याष्टिके' इनका द्वित्व करना चाहिये। शक्ति एक आयुध होता था। उसको धारण करने वाले की कुत्सा करना अभीष्ट है। इसीलिये सिद्धान्तकौमुदी में—"कुत्सने—धानुष्क ३ धानुष्क वृथा ते धनुः" ऐसा ही उदाहरण दिया गया है।

(अनु०) (५) भर्त्सन में उदा०—चौर ३ चौर वृषल ३ वृषल घातयिष्यामि त्वा, बन्धयिष्यामि त्वा। [चोर चोर, शूद्र शूद्र तुझे मरवा दूँगा, तुझे बँधवा दूँगा।]

असूयादि (चार) अर्थों में 'स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु (८।२।१०३) से पूर्वपद का प्लुत हो जाता है। परन्तु भर्त्सन अर्थ में आम्रेडित (बाद वाले) का ही प्लुत होता है। [यह अन्तर ध्यान रखना चाहिये। आम्रेडित का प्लुत और उदात्त होता है। अन्य में पहले वालों का प्लुत और स्वरित होता है। 'भर्त्सने पर्यायेण' इस वार्तिक के अनुसार दोनों में किसी का भी प्लुत किया जा सकता है।]

---

१. अस्योदाहरणे पूर्वपदस्य प्लुतयुक्तः प्रकाशितः पाठोऽशुद्धः, आम्रेडितस्यैव प्लुतविधानादिति 'भर्त्सने पर्यायेण' इति स्वीकारे तूभयत्र प्लुतः साधुः।

**असूयादिष्विति किम् ? देवदत्त गामभ्याज शुक्लाम् ॥**

## ३६२३. एकं बहुव्रीहिवत् ॥ ९ ॥ (२१४४)

**एकमित्येतच्छब्दरूपं द्विरुक्तं बहुव्रीहिवद्भवति । बहुव्रीहिवत्त्वे प्रयोजनम्—सुब्लोपपुंवद्भावौ । एकैकमक्षरं पठति । एकैकयाऽऽहुत्या जुहोति ।**

**न्यासः**

अथ कोपासूयाप्रभवे एव विशिष्टे कुत्सनभर्त्सने, ये ते गृहीत्वा कोपासूययोरनुमानं करिष्यत इति चेत् ? न; विशेषस्यावधारयितुमशक्यत्वात् । तथा हि—यथाऽसूयन्कुत्सयति तथानसूयन्नपि । यथा कुप्यन्नपि भर्त्सयते तथाऽकुप्यन्नपि । तस्मात् कोपासूययोरपि ग्रहणं कर्तव्यम् ॥ ८ ॥

**एकं बहुव्रीहिवत् ॥** यद्यविशेषेणैकशब्दस्य बहुव्रीहिवद्भावो विधीयते, तदैकमित्यत्रापि स्यादिति मन्यमानोऽतिप्रसङ्गं परिजिहीर्षुराह—**एकमित्येतद् द्विरुक्तं बहुव्रीहिवद्भावो भवतीति** । कथं पुनर्द्विरुक्तमित्येष विशेषो लभ्यते, यावता नायं सूत्रोपात्तः ? एवं मन्यते—वीप्साऽनुवर्तते, वीप्सायाञ्च पूर्वमेव द्विर्वचनं विहितम् । न च तदेकशब्दस्यानेन बहुव्रीहिवद्भावेन बाध्यते; अन्यथा हि 'एकैकस्य प्राचाम्' इति निर्देशो नोपपद्येत । तस्माद् वीप्साग्रहणानुवृत्तेर्द्विरुक्तस्यैकशब्दस्यायं बहुव्रीहिवद्भावो विज्ञायत इति । किं पुनर्बहुव्रीहिवद्भावे प्रयोजनमित्याह—**बहुव्रीहिवत्त्व इत्यादि** । यद्यपि सुब्लुक्पुंवद्भावौ बहुव्रीहावित्येवं नोच्येते, तथाप्येतौ तत्र दृष्टावित्यस्मिन्नतिदेशे तयोः प्रवृत्तिः प्रयोजनम् । **एकैकमिति** । वीप्सायां द्विर्वचने कृते यथा चित्रगुरित्यादौ बहुव्रीहौ 'सुपो धातुप्रातिपदिकयोः' इति सुब्लुग्भवति, तथेहाप्यतिदेशेन । अतिदेशेनैव समासे प्रातिपदिकत्वात्

**पदमञ्जरी**

विनाप्यसूयया कुत्सां कुर्वन्तीति पृथक्कयोः ।
निर्देशः सूत्रकारेण विहितः सूक्ष्मदर्शिना ॥
सामृतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः ।
लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः ॥

अभिप्राये दुष्टे लालनेऽपि दोषा भवन्ति, विपर्यये तु ताडनेऽपि गुणा इत्यर्थः ॥ ८ ॥

**एकं बहुव्रीहिवत् ॥** अत्र यदि केवलो बहुव्रीहिवद्भावोऽनिर्दिष्टविषयोऽनेन विधीयेत, ततश्चेहापि प्राप्नोति—एक इति, ततश्च सुब्लुक् स्यात् । अस्तु, बहुव्रीहिवद्भावादपरः सुः प्रभविष्यति ? नैव चात्र सुब्लुक् प्राप्नोति, एक इत्यस्य प्रत्ययान्तत्वेनाप्रातिपदिकत्वात् । 'कृत्तद्धितसमासाश्च' इत्यत्र च समासग्रहणं नियमार्थम्, न विध्यर्थमिति तेनापि नास्ति प्रातिपदिकत्वम् । इह तर्ह्येकेति पुम्वद्भावः प्राप्नोति ? स्यादेतत्—'द्वे' इत्यधिकाराद् द्विर्वचनसन्नियोगेन विधीयमानो बहुव्रीहिवद्भावस्तदभावादिह न भवतीति । अथ तदपि द्विर्वचनं तेन विधीयमानमत्र कस्मान्न भवति ? तस्माद्वक्तव्योऽस्य विषयः । अत आह—**एकमित्येतच्छब्दरूपं**

**भावबोधिनी**

वाक्य के आदि का—इसका क्या फल है ? अन्त्य या मध्य के आमन्त्रित का द्वित्व न होने लगे ।

शोभनः खलु असि माणवकः ! [ यहाँ अन्त का द्वित्व नहीं होता है । ]

आमन्त्रित का—इसका क्या फल है ? उदारो देवदत्तः । [ यहाँ सम्बोधन नहीं है । ]

असूया आदि अर्थों में ही—इसका क्या फल है—देवदत्त ! गाम् अभ्याज शुक्लाम् । [ देवदत्त ! सफेद गाय को हांक, आगे चला । यहाँ सामान्य ज्ञान है । अतः द्वित्व नहीं होता है । ] ॥ ८ ॥

एक इस शब्दरूप का द्वित्व किया गया रूप बहुव्रीह के समान हो जाता है । बहुव्रीहि के समान होने में प्रयोजन है—सुप् का लोप तथा पुंवद्भाव । उदा० एकैकम् अक्षरं पठति । [ वीप्सा अर्थ में एकम् एकम् द्वित्व के बाद प्रस्तुत सूत्र से बहुव्रीहिवद्भाव करने से समास मान कर प्रातिपदिक संज्ञा और "सुपो धातुप्रातिपदिकयोः" ( २।४।७१ ) से सुप् अम् का लुक्—एक + एक 'वृद्धिरेचि' ( ६।१।८५ ) से वृद्धि 'एकैक' बनाने के बाद कर्मसंज्ञा

**सर्वनामसंज्ञाप्रतिषेधस्वरसमासान्ताः समासाधिकारविहिते बहुव्रीहौ विज्ञायन्ते। तेनातिदेशिके बहुव्रीहौ न भवन्ति। एकैकस्मै—'न बहुव्रीहौ' (१।१।२९) इति प्रतिषेधो न भवति; बहुव्रीहिरेव यो**

**न्यासः**

सुः, 'अतोऽम्' इत्यम्भावः। **एकैकयेति।** पूर्ववद् विभक्तेर्लुक्, 'स्त्रियाः पुंवत्' इत्यादिना यथा दर्शनीयभार्यं इत्यत्र बहुव्रीहौ पुंवद्भावो भवति, तथेहाप्यतिदेशेन, तृतीयैकवचनम्, 'आङि चापः' इत्येत्वम्, अयादेशः। ननु चासत्यपि पुंवद्भावे 'वृद्धिरेचि' इति वृद्धावपि कृतायामेतत् सिध्यत्येव ? यद्यप्येतत् सिध्यति, तथापि गतगतेत्येतद् 'आबाधे च' इति द्विर्वचने कृते न सिध्यति। तस्मादुत्तरसूत्रे पुंवद्भावो बहुव्रीहिवदित्यस्यातिदेशस्यैव प्रयोजनत्वेनोच्यते। एकैकयेत्येतत्तु 'एकमित्येष नपुंसकलिङ्गेन निर्देशोऽतन्त्रम्' इत्येतत् सूचयितुमुक्तम्। अतन्त्रत्वं तु सूत्रेनिर्देशस्य 'अर्धं नपुंसकम्' इत्यत्र नपुंसकग्रहणेन ज्ञापितम्। यदि सौत्रो निर्देशस्तन्त्रमभविष्यद्, अर्धमित्यत्र तत एव निर्देशाल्लिङ्गविशेषे सिद्धे नपुंसकमिति नावक्ष्यत्। अथ पूर्वपदप्रकृतिस्वरत्वमपि प्रयोजनं कस्मान्नोच्येत ? विशेषाभावात्। परस्य निघाते कृते पूर्वपदप्रकृतिस्वर एव भविष्यति।

यदि तर्हि बहुव्रीहौ यद् दृष्टं तदतिदिश्यते, सर्वनामसंज्ञाप्रतिषेध-स्वर-समासान्तानामप्यतिदेशः प्राप्नोति ? इत्यत आह—**सर्वनामसंज्ञेत्यादि।** कथं पुनरेते सर्वनामसंज्ञाप्रतिषेधादयः समासाधिकारे विहिते बहुव्रीहौ शक्या विज्ञातुम् ? उच्यते; सर्वनामसंज्ञाप्रतिषेधस्तावद् 'बहुव्रीहौ' इत्यनुवर्त्तमाने पुनर्बहुव्रीहिग्रहणाच्च शक्यते विज्ञातुम्। तस्य ह्येतत् प्रयोजनमुक्तम्—बहुव्रीहिरेव यो बहुव्रीहिस्तत्र प्रतिषेधो यथा स्यात्, बहुव्रीहि-

**पदमञ्जरी**

**द्विरुक्तमिति।** सत्यम्; 'द्वे' इत्यनुवर्त्तते, न च तेन द्विर्वचनं विधीयते, किं तर्हि ? अन्येन विहितमनूद्य तत्र बहुव्रीहिवद्भावो विधीयते। क्व चान्येन द्विर्वचनं विहितम् ? वीप्सायाम्। यदि पुनर्वीप्साग्रहणमनुवर्त्य तत्र बहुव्रीहिवद्भावो विधीयेत ? नैवं शक्यम्; बहुव्रीहिवद्भावेन द्विर्वचनं बाध्येत। अथ यदि वीप्सायां द्वे इत्येवमुभयमनुवर्त्य द्विर्वचनं बहुव्रीहिवद्भावः—इत्युभयमनेन विधीयते, न दोषो भवति। **वृत्तिकारस्तु** किमनया वीप्साग्रहणानुवृत्त्येति 'द्वे' इत्येवान्ववीवृतत्।

**सुब्लोपपुंवद्भावाविति।** यद्यप्येतौ बहुव्रीहाविति नोच्येते, तथापि तत्र दृष्टावित्येतयोरतिदेशः। क्वचित्तु वृत्तावेवायमर्थः पठ्यते। **एकैकमिति।** एकमित्यस्य द्विर्वचने द्वयोरपि सुपोर्लुकि सति पुनर्बहुव्रीहिवद्भावादेव सुप्। **एकैकयेति।** टाबन्तात्तृतीया, तदन्तस्य द्विर्वचनम्, सुब्लुकि पुंवद्भावेन पूर्वभागे टापो निवृत्तिः। कः पुनरत्र टापो निवृत्तौ सत्यामसत्यां वा विशेषः ? अवग्रहेऽस्ति विशेषः—ऐकैकयेत्येक—एकयेति भवति। उत्तरत्र च गतगतेत्यादौ पुंवद्भावस्य प्रयोजनम्।

ननु यदि यच्च यावच्च बहुव्रीहौ दृष्टं कार्यं तस्य सर्वस्यातिदेशः; सर्वनामसंज्ञाप्रतिषेधः, स्वरः, समासान्त इत्येते विधयः प्राप्नुवन्ति ? अत आह—**सर्वनामसंज्ञाप्रतिषेधस्वरसमासान्ता इति। न बहुव्रीहाविति प्रतिषेधो न भवतीति।** तत्र हि 'विभाषा दिक्समासे बहुव्रीहौ' इत्यतः 'बहुव्रीहौ' इत्यनुवर्त्तमाने पुनर्बहुव्रीहिग्रहणम्—बहुव्रीहिरेव यो बहुव्रीहिस्तत्र यथा स्याद्, बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूदिति। तेन संज्ञाप्रतिषेधस्तावत्समासाधिकारे बहुव्रीहौ विज्ञायते। **नन, सुसु इति।** 'आबाधे च' इति द्विर्वचनम्। नन करोति, सुसु जागर्तीत्यादिवाक्यैकदेश उदाहृतः। **नञ्सुभ्यामित्यन्तोदात्तत्वं न भवतीति।** तत्र हि 'वनं

**भावबोधिनी**

द्वितीया एकवचन में रूप बना है।] एकैकया आहुत्या जुहोति। [ एकया एकया में भी बहुव्रीहिवद्भाव से विभक्ति लुक्—एका एका में 'स्त्रियाः पुंवद्भाषितपुंस्कात्' (६।३।३२) से पुंवद्भाव के बाद वृद्धिरूप एकादेश—एकैका। आहुति का विशेषण होने से तृतीया एकवचन का रूप होता है।]

[ बहुव्रीहिवद्भाव का अतिदेश मान लेने पर क्या सभी कार्य होते हैं ? ] सर्वनामसंज्ञा का प्रतिषेध [ 'न बहुव्रीहौ' सूत्र से ], स्वर तथा समासान्त ( कप् प्रत्यय ) तो 'समासाः' इस अधिकार में जो बहुव्रीहि है उसी में किये जाते हैं। इस कारण अतिदेश से होने वाले बहुव्रीहि में पूर्वोक्त कार्य नहीं किये जाते हैं। अतः—'एकैकस्मै'

बहुव्रीहिरिति विज्ञानात्। नन, सुसु—'नञ्सुभ्याम्' ( ६।२।१७२ ) इत्यन्तोदात्तत्वं न भवति। ऋक्ऋक्, पूःपूः—'ऋक्पूः' ( ५।४।७४ ) इति समासान्तो न भवति ॥

**न्यासः**

वद्भावेन यो बहुव्रीहिस्तत्र मा भूदिति। एवञ्चार्थात् समासाधिकारविहित एव बहुव्रीहौ प्रतिषेधो विज्ञायते। न हि ततोऽन्यो बहुव्रीहिरेव बहुव्रीहिर्भवति; एकैकस्मै इत्यादेबहुव्रीहिवद्भावेन बहुव्रीहिवत्त्वात्। 'नञ्सुभ्याम्' इत्यनेनापि 'बहुव्रीहाविदमेतत्तद्भ्यः' इत्यतो बहुव्रीहिग्रहणेऽनुवर्तमाने नञ्सुभ्यां परस्य बहुव्रीहावन्तोदात्तत्वं विधीयते, न तु तयोरपि; यस्मात् सुनञाविह निमित्तत्वेनोपात्तौ। न च निमित्तयोः कार्यित्वं युक्तम्। यथोक्तम्[1]—'नेमौ रहौ कार्यिणौ, किं तर्हि ? निमित्तमिमौ द्विर्वचनस्य' इति। तस्माद् यत्र बहुव्रीहौ नञ्सुभ्यामन्यत् परभूतं शब्दरूपं तत्रान्तोदात्तत्वं विधीयते। ततश्च स्वरोऽपि सामर्थ्यात् समासाधिकारे विहिते बहुव्रीहौ विज्ञायते, न हि ततोऽन्यत्र नञ्सुभ्यामन्यच्छब्दरूपं परमस्ति। ननु, सुस्वित्यत्र नञ्सुभ्यां सुनञोरेव परभूतत्वाद् 'आबाधे च' इति द्विर्वचनम्, बहुव्रीहिवद्भावश्च। अथ वा—'स्वरविधौ समासस्य' इत्यतः समासग्रहणमनुवर्तते, तेन च बहुव्रीहिं विशेषयिष्यामः—समासो यो बहुव्रीहिरिति। ननु च ननन्, सुस्वित्येतावपि समासावेव, अस्ति ह्यनयोरेव बहुव्रीहिवद्भावेनोत्पादिता समाससंज्ञा, ततश्च विशिष्यमाणेऽपि समासग्रहणे न बहुव्रीहौ स्वरः प्राप्नोतीत्येव ? नैष दोषः; विशिष्यते हि समासग्रहणेन बहुव्रीहिः, न कश्चिदसमासो बहुव्रीहिरस्ति, तत्र विशेषणसामर्थ्यादतिदेशद्वारेण यस्य समाससंज्ञा तस्य न भवति। स च समासाधिकारे विहितो बहुव्रीहिरिति विज्ञायते। ननु च समासग्रहणेन बहुव्रीहौ विशिष्यमाणे विशेषणसामर्थ्याद् विशिष्टस्य बहुव्रीहेरिदं ग्रहणमित्येतावन्मात्रं निश्चीयते, तत्र तु विशिष्टे बहुव्रीहौ सन्देह एव ? उच्यते; भवति व्याख्यानतो विशेषप्रतिपत्तिः; न हि सन्देहादलक्षणमित्यदोषः। समासान्तविधावपि 'समासाच्च तद्विषयात्' इत्यतः समासग्रहणमनुवर्तते। तत्र समासाधिकारादेव समासान्तत्वे वक्ष्यमाणानां प्रत्ययानां सिद्धे समासग्रहणानुवृत्तिर्विशिष्टे समासे

**पदमञ्जरी**

समासे' इत्यतः सिंहावलोकितन्यायेन 'समासे' इति सम्बध्यते, 'बहुव्रीहाविदमेतत्तद्भ्यः' इत्यतः 'बहुव्रीहौ' इति च। तत्र बहुव्रीहेः समासत्वाव्यभिचारे पुनः समास इति विशेषणं समासाधिकारविहितबहुव्रीहिपरिग्रहार्थम्। अथात्र 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वे सति कः स्वरो भवति ? अत्र हि चत्वारः स्वराः प्राप्नुवन्ति—समासान्तोदात्तत्वम्, पूर्वपदप्रकृतिस्वरः, 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वम्, आम्रेडितानुदात्तत्वं च। तत्र 'नञ्सुभ्याम्' इत्ययं स्वरो न भवतीत्युक्तम्। आम्रेडितानुदात्तत्वमपि न भवति, किं कारणम् ? कार्यातिदेशे तावदिदमेव कार्याणां विधायकमिति परत्वादाम्रेडितानुदात्तत्वं बहुव्रीहिस्वरेण बाध्यते। शास्त्रातिदेशेऽपि विरुद्धस्य स्वाश्रयस्यातिदेशेन निवर्त्तनान्नैवाम्रेडितानुदात्तत्वं भवति, 'बहुव्रीहौ प्रकृत्या' इत्यत्र च न समासग्रहणमनुवर्त्तते, तेन बहुव्रीहिवद्भावात्पूर्वपदप्रकृतिस्वरो भवन् समासान्तोदात्तत्वं बाधते। ऋगृगिति। 'आबाधे च' इति द्विर्वचनम्। ऋक्पूरिति समासान्तो न भवतीति। तत्र हि 'समासाच्च तद्विषयात्' इत्यतः 'समासात्' इत्यनुवर्त्तमाने पुनः समासग्रहणं समासाधिकारे विहितो यः समासस्तत्परिग्रहार्थम्। तेनातिदेशिके समासे समासान्तो न भवतीति। एवमेते संज्ञाप्रतिषेधादयः समासाधिकारविहिते बहुव्रीहौ विज्ञायन्ते।

**भावबोधिनी**

यहाँ 'न बहुव्रीहि है' ( १।१।२९ ) इस सूत्र से सर्वनाम संज्ञा का प्रतिषेध नहीं होता है क्योंकि बहुव्रीहि होता हुआ ही जो बहुव्रीहि है उसी में प्रतिषेध किया जाता है। [ इस कारण एकस्मै, एकस्मै—एकैकस्मै इस आतिदेशिक में सर्वनामसंज्ञा होने में बाधा नहीं है। ]

न न, सु सु [ यहाँ "आबाधे च" सूत्र से बहुव्रीहिद्भाव होने पर भी ] "नञ् सुभ्याम्" (६।२।१७२) सूत्र से अन्तोदात्त नहीं होता है। ऋक् ऋक्, पूः पूः—इनमें [ बहुव्रीहिवद्भाव होने पर भी ] "ऋक्पूरब्धूः पथामानक्षे"

१. 'हयवरट्' सूत्रे भाष्यकारेणेति शेषः।

## ३६२४. आबाधे च ॥ १० ॥ (२१४५)

**आबाधनमाबाधः = पीडाप्रयोक्तृधर्मः, नाभिधेयधर्मः; तत्र वर्त्तमानस्य द्वे भवतः, बहुव्रीहिवच्चास्य कार्यं भवति। गतगतः। नष्टनष्टः। पतितपतितः। गतगता। नष्टनष्टा। पतितपतिता। प्रियस्य चिरगमनादिना पीड्यमानः कश्चिदेवं प्रयुङ्क्ते प्रयोक्ता॥**

**न्यासः**

समासान्तत्वं यथा स्यादित्येवमर्थं विज्ञायते। स पुनर्विशिष्टः समासो यः समासाधिकारे विहितः स एव व्याख्यानाद् वेदितव्यः। अथ ननेत्यत्र 'नलोपो नञः' इति नलोपः कस्मान्न भवति, अस्ति तस्यापि बहुव्रीहौ दर्शनम्? नैष दोषः; 'नलोपो नञः' इत्यत्र हि उत्तरपदाधिकारोऽनुवर्त्तते—उत्तरपदे परतो नलोपो विधीयते। नञ् च कार्यित्वेनोपात्तः, कार्यिणश्चेह निमित्तभावो नोपपद्यत इति नञोऽन्यस्मिन्नुत्तरपदे लोपेन भवितव्यम्, यथा—अब्राह्मण इति, न तु तस्मिन्नेवेति कुतो नकारलोपस्य प्रसङ्गः? ॥ ९ ॥

**आबाधे च ॥ आबाधनमाबाध इति।** भावे घञ्। यद्यत्राबाधोऽभिधेयधर्म आश्रीयते, तदा बाधितपीडितादिशब्दानामेव द्विर्वचनं स्यात्, न तु गतादिशब्दानाम्। प्रयोक्तृधर्म आश्रीयमाणे सर्वत्र भवति। तस्माद् व्याप्तिन्यायात् प्रयोक्तृधर्म एवाश्रीयते, इत्याह—**प्रयोक्तृधर्म इति। तत्र वर्त्तमानस्येति।** द्विर्वचनप्रतिपत्तिद्वारेण, बहुव्रीहिवद्भावप्रतिपत्तिद्वारेण च तत्प्रकाशनात् तत्र तस्य वृत्तिर्वेदितव्या, न तु तदभिधानात्। न हि गतादयः शब्दाः कथञ्चिदाबाधनमभिदधति। चकारो वाक्यभेदमाचष्टे। तेन द्वयमत्र विधीयते—एकेन वाक्येन द्विर्वचनम्, अपरेण च बहुव्रीहिवद्भावः। **गतगत इत्यादौ** पूर्ववत् सोर्लुक्। **गतगतेत्यादौ** तु पुंवद्भावः पूर्ववदेव। **प्रियस्य गमनादिनेत्यादि।** एतेन प्रयोक्तृधर्मताऽऽबाधस्येति दर्शयति। आदिशब्देन विनाशादेर्ग्रहणम् ॥ १० ॥

**पदमञ्जरी**

**वार्त्तिककारस्तु** सर्वमेवैतद्वाचनिकं मन्यते, यदाह—'सर्वनामस्वरसमासान्तेषु दोषः' इति। अथ ननेत्यत्र बहुव्रीहिवद्भावान्नलोपः कस्मान्न भवति? उच्यते; 'उत्तरपदे' इति वर्तते, नञ इति च कार्यिणो निर्देशः, तत्र साक्षाच्छिष्टेन कार्यित्वेन नञो निमित्तभावो बाध्यते, यथा—मद्रह्रदो भद्रह्रद इत्यत्र रेफस्य 'अचोरहाभ्यां द्वे' इति द्विर्वचनप्रसङ्गे उक्तम्—'नेमौ रहौ कार्यिणौ, किं तर्हि? निमित्तमिमौ द्विर्वचनस्य' इति। अयं तु परिहारः पूर्वत्रापि यथासम्भवं द्रष्टव्यः ॥ ९ ॥

**आबाधे च ॥ अबाधनमाबाध इति।** भावे घञ्। **प्रयोक्तृधर्मो नाभिधेयधर्म इति।** अभिधेयधर्मत्वे हि बाधितपीडितादिशब्दानामेव द्विर्वचनं स्यात्, न गतादिशब्दानाम्, प्रयोक्तृधर्मत्वे हि तेषामपि भवतीति व्याप्तिर्भवति। **तत्र वर्त्तमानस्येति।** द्विर्वचने सत्याबाधस्य गम्यमानत्वाद् गतादिशब्दानां तत्र वृत्तिः, न तु तदभिधानात्। **प्रियस्य चिरगमनादिनेति।** प्रयोक्तृधर्मत्वमाबाधस्य दर्शयति। आदिशब्देन नाशादेर्ग्रहणम् ॥ १० ॥

**भावबोधिनी**

(५।४।७४) सूत्र से समासान्त अ प्रत्यय नहीं होता है। [ वास्तव में किसी दोष का अतिप्रसङ्ग नहीं है। भाष्य के अनुसार न्यास और पदमञ्जरी में इसका स्पष्टीकरण किया गया है। ] ॥ ९ ॥

आबाधित करना—आबाध = पीड़ा, [ वाक्य के ] प्रयोक्ता में रहने वाला धर्म है, अभिधेय ( वाच्य ) में रहने वाला नहीं है। इस पीड़ा अर्थ में वर्तमान शब्द का द्वित्व होता है और इसका बहुव्रीहि के समान कार्य होता है, अर्थात् सुप्लोप तथा पुंवद्भाव होते हैं। उदा० गतगतः। ( चला गया ) नष्टनष्टः। (बिगड़ गया, समाप्त हो गया।) पतितपतितः। ( गिर गया, भ्रष्ट हो गया। ) [ बहुव्रीहि-वद्भाव के कारण समास प्रातिपदिकसंज्ञा सुप्लोप आदि कार्य हो जाते है। ] गतगता। ( चली गई। ) नष्टनष्टा। ( नष्ट=गायब हो गई ) पतितपतिता। [ पतित हो गई। इनमें गता, नष्टा, पतिता का द्वित्व करने के बाद पीड़ा अर्थ की प्रतीति होने से बहुव्रीहिवद्भाव से सुप्लुक् और पुंवद्भाव होते हैं। ] अपने प्रिय व्यक्ति के चिरकालिक गमन आदि के कारण पीड़ित होने वाला कोई प्रयोक्ता ( बोलने वाला ) ऐसे प्रयोग करता है। [ अतः प्रयोक्ता के ही मन की पीड़ा व्यक्त होती है, न कि जो चला गया या नष्ट हो गया उसकी पीड़ा। अतः प्रयोक्तृगत भावना के कारण द्वित्व और बहुव्रीहिवद्भाव होता है। ] ॥ १० ॥

**३६२५. कर्मधारयवदुत्तरेषु ॥ ११ ॥ (४१४६)**

**इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत्कार्यं भवतीत्येतद्वेदितव्यम् ।**

**कर्मधारयत्वे प्रयोजनम्—सुब्लोपपुंवद्भावान्तोदात्तत्वानि (म० भा०)। सुब्लोपः—पटुपटुः। मृदुमृदुः। पण्डितपण्डितः। पुंवद्भावः—पटुपट्वी। मृदुमृद्वी। कालककालिका।**

**कोपधाया अपि हि कर्मधारयवद्भावात् 'पुंवत्कर्मधारय' (६।३।४२) इति पुंवद्भावो भवति।**

**न्यासः**

**कर्मधारयवदुत्तरेषु ॥** कर्मधारयवत् कार्यं भवतीत्यनेन कार्यातिदेशोऽयमित्याचष्टे । कार्यातिदेशस्य फलमुत्तरत्र दर्शयिष्यते । **कर्मधारयवत्त्वे प्रयोजनमित्यादि** । तत्र सुब्लुग्—बहुव्रीहिवद्भावे, अस्मिन्नतिदेशे च साधारणं प्रयोजनम् । पुंवद्भावस्तु क्वचित् साधारणम्, क्वचिदसाधारणम्; यत्र हि पुंवद्भावस्य प्रतिषेधो नास्ति—पटुपट्वीत्यादौ, तत्र साधारणम्, यत्र तु 'न कोपधायाः' इत्यादिना पुंवद्भावप्रतिषेधोऽस्ति—कालककालिकेत्यादौ, तत्रासाधारणम् । तथा हि यस्य हि पुंवद्भावः प्रतिषिद्धस्तस्यापि 'पुंवत्कर्मधारय' इत्यादिना कर्मधारये पुंवद्भावो विधीयते । अन्तोदात्तत्वं त्वसाधारणमेव । यस्मात् कर्मधारय एव 'समासस्य' इत्यन्तोदात्तत्वं विधीयते, न बहुव्रीहौ; तत्र 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति पूर्वपदप्रकृतिस्वरस्य समासान्तोदात्तस्यापवादस्य विधानात् । तत्र यदसाधारणं प्रयोजनं तदिममतिदेशं प्रयोजयति, नेतरत् । तद्धि बहुव्रीहिवदित्यतिदेशस्यानुवृत्तावपि सिद्धत्येव । सति त्वन्यार्थेऽस्यारम्भे बहुव्रीहिवदित्यतिदेशस्यानुवृत्तिरपार्थिका; अनेनैव साधारणस्यापि सिद्धत्वात् । अतः सुब्लुगादिकमपि साधारणं कर्मधारयवत्त्वे प्रयोजनं न भवति । **पटुपट्वीति** । 'वोतो गुणवचनात्' इति ङीष् । स च पूर्वपदे पुंवद्भावेन निवर्तते । **कालककालिकेति** । अज्ञाताद्यर्थे 'प्रागिवात् कः', टाप्, 'केऽण' इति ह्रस्वः, पूर्ववदित्वम् । पुंवद्भावेन पूर्वपदे टाबित्वयोर्निवृत्तिः । कथं पुनरत्र पुंवद्भावः, यावता 'न कोपधायाः' इत्यस्य प्रतिषेधः कृतः ? इत्याह—**कोपधाया इत्यादि** । कर्मधारये हि 'पुंवत्कर्मधारय' इत्यादिना योगेन प्रतिषेधविषयेण पुंवद्भावो विहितः, तेन कोपधाया अपि पुंवद्भावो भवत्येव ।

ननु चाम्रेडितानुदात्तत्वमाष्टमिकम्, समासान्तोदात्तत्वं च षाष्ठिकम्, अतः परत्वादाम्रेडितानुदात्तत्वेनैव भवितव्यम्; न चैवं सति कर्मधारयवदित्यतिदेशस्य वैयर्थ्यं स्यात्, तस्य प्रयोजनान्तरे चरितार्थ-

**पदमञ्जरी**

**कर्मधारयवदुत्तरेषु ॥ कोपधाया अपि कर्मधारयवद्भावात् पुंवद्भावो भवतीति ।** तेन बहुव्रीहिवद्भावे प्रकृते कर्मधारयवद्भावो विधीयते इति भावः । **समासान्तोदात्तत्वमनेन विधीयत इति ।** कार्यातिदेशपक्षे

**भावबोधिनी**

इसके आगे के द्वित्वों में कर्मधारय के समान कार्य होता है—ऐसा समझना चाहिए ।

कर्मधारय हो जाने में ये प्रयोजन हैं—सुप्लोप, पुंवद्भाव और अन्तोदात्तत्व । सुप्लोप के उदा०—पटुपटुः । मृदुमृदुः । पण्डितपण्डितः । [ एक पटु, मृदु और पण्डित का द्वित्व आगे वाले 'प्रकारे गुणवचनस्य' सूत्र से होता है । तब यह कर्मधारयवद्भाव अतिदिष्ट होता है । इससे सुप् का लुप् और बाद में समास मानकर पुनः समूह से सुप् आदि होते है । ] पुंवद्भाव के उदा० पटुपट्वी । मृदुमृद्वी । कालककालिका । [ पट्वी तथा मृद्वी का द्वित्व करने के बाद कर्मधारयवद्भाव से 'पुंवत्कर्मधारय' (६।३।४०) सूत्र से पूर्वपद का पुंवद्भाव हो जाता है । 'काला' शब्द से अज्ञात आदि किसी अर्थ में 'क' प्रत्यय, टाप् 'प्रत्ययस्थात् कात्' सूत्र से इत्व—कालिका । द्वित्व के बाद कर्मधारयवद्भाव के कारण पुंवद्भाव हो जाने से टाप् और इत्व की निवृत्ति हो जाने से—कालककालिका बनता है ।]

[ यद्यपि कोपध के पुंवद्भाव का प्रतिषेध सामान्यरूप से किया गया है तथापि ] ककारोपध स्त्रीवाचक का भी कर्मधारयवद्भाव हो जाने से 'पुंवत्कर्मधारय' सूत्र से पुंवद्भाव होता ही है ।

अन्तोदात्तत्वम्—पटुपटुः। पटुपट्वी। समासान्तोदात्तत्वमनेनैव विधीयत इति परत्वादाम्रेडितानुदात्तत्वं बाध्यते।

अधिकारेणैव सिद्धे यद् 'उत्तरेषु' इति वचनं तद्विस्पष्टार्थम्॥

**३६२९. प्रकारे गुणवचनस्य॥ १२॥ (२१४७)**

प्रकारः—भेदः, सादृश्यं च। तदिह सादृश्यं प्रकारो गृह्यते। प्रकारे वर्तमानस्य गुणवचनस्य द्वे भवतः। पटुपटु। मृदुमृदु। पण्डितपण्डितः। अपरिपूर्णगुण इत्यर्थः। परिपूर्णगुणेन न्यूनगुणस्योपमाने सत्येवं प्रयुज्यते।

### न्यासः

त्वात्? इत्यत आह—समासान्तोदात्तत्वमनेनेत्यादि। शास्त्रातिदेशे हि शास्त्रेष्वतिदिष्टेषु तैरेव स्वदेशस्थैः कार्याणि क्रियन्त इत्याम्रेडितानुदात्तस्य समासान्तोदात्तत्वात् परत्वं स्यात्। न चायं शास्त्रातिदेशः, किं तर्हि? कार्यातिदेशः। कार्यातिदेशे सत्यतिदेशशास्त्रेणैव कार्यं विधीयते। तस्मादन्तोदात्तत्वमेव परम्। अतस्तस्मात् परत्वादाम्रेडितानुदात्तत्वं बाधते।

ननु चान्तरेणाप्युत्तरग्रहणं यथा 'प्रत्ययः' इत्येवमादीनामधिकाराणामुत्तरत्रावस्थानं भवति, तथास्यापि भविष्यति; अधिकाराणामुत्तरत्रानुवृत्तिदर्शनात्, तत् किमर्थम् 'उत्तरेषु' इति वचनम्? इत्याह—अधिकारेणैवेत्यादि। अधिकाराणां क्वचिल्लक्षणत्वस्य व्यवहारः, यथा 'शेषे' इत्यधिकारस्य लक्षणत्वमस्ति, तच्चाविस्पष्टम्; अन्येष्वधिकारेषु 'प्रत्ययः' इत्येवमादिष्वदृष्टत्वात्। तस्मादस्य विस्पष्टत्वं यथा स्यादित्येवमर्थमुत्तरेष्विति वचनम्। एतद्धि लक्षणत्वमस्य मा भूदित्येवमर्थं क्रियते। यदि तु लक्षणस्याधिकारेष्वसम्भवः स्यात्, उत्तरेष्विति वचनमनर्थकं स्यात्; व्यावर्त्याभावात्। अथ वा—सिंहावलोकितन्यायस्येत्यध्याहारः। प्रायेण ह्यधिकाराणामुत्तरत्रानुवृत्तिर्दृष्टेति सिंहावलोकितन्यायस्याविस्पष्टता; केषुचित् प्रत्ययादिष्वदृष्टत्वात्। तस्मात् तस्य विस्पष्टीकरणार्थमुत्तरेष्विति वचनम्। यदि सिंहावलोकितन्यायेन पूर्वत्रानुवृत्तेरधिकाराणां न सम्भव एव स्यात्, उत्तरेष्विति वचनमनर्थकं स्यात्; व्यावर्त्याभावात्॥ ११॥

**प्रकारे गुणवचनस्य॥ प्रकारो भेदः सादृश्यं चेति।** उभयत्रापि प्रकारशब्दस्य प्रयोगदर्शनात्। तत्र भेदे प्रयोगो दृश्यते—बहुभिः प्रकारैर्भुङ्क्ते। बहुभिर्भेदैः, विशेषैर्भुङ्क्त इत्यर्थः। सादृश्येऽपि—ब्राह्मणप्रकारोऽयं माणवकः। ब्राह्मणसदृश इत्यर्थः। **तदिह सादृश्यं प्रकारो गृह्यत इति।** कुत एतत्? लक्ष्यानुरोधात्। न हि कृतद्विर्वचनात् गुणवचनात् पदादिह भेदो गम्यते, किं तर्हि? सादृश्यम्। अत्र च शब्द-

### पदमञ्जरी

इदमुक्तम्। शास्त्रातिदेशे तु यद्यप्याम्रेडितानुदात्तत्वमेव परम्, तथापि न तद्भवति; विरुद्धस्य स्वाश्रयस्यातिदेशेन निवर्तनात्॥ ११॥

### भावबोधिनी

अन्तोदात्तत्व के उदा० पटुपटुः। पटुपट्वी। इसी के द्वारा समासान्त का उदात्तत्व किया जाता है इसलिये परवर्ती होने के कारण आम्रेडित (बाद वाले) के अनुदात्तत्व का बाध कर लेता है। [परवर्ती का आम्रेडित संज्ञा और अनुदात्तत्व पूर्वोक्त 'तस्य परमाम्रेडितम्' 'अनुदात्तं च' (८।१।२–३) सूत्रों से की गई है। परन्तु परवर्ती होने से प्रस्तुत सूत्र उसका बाध करके समास के ही अन्त का उदात्त करता है। यह कर्मधारयवद्भाव का यहाँ फल है।]

प्रस्तुत सूत्र अधिकार है अतः उत्तरसूत्रों में अनुवृत्ति होती ही है इसलिये 'उत्तरेषु' का ग्रहण विशेष स्पष्टता के लिये है। [और कोई फल नहीं है।]॥ ११॥

प्रकार = भेद और सादृश्य। तो यहाँ सादृश्य को प्रकार समझना चाहिए। प्रकार = सादृश्य अर्थ में वर्तमान गुणवाचक शब्द का द्वित्व होता है। उदा० पटुपटुः। मृदुमृदुः। पण्डितपण्डितः। [पटु, मृदु, पण्डित शब्द पटुत्व, मृदुत्व और पण्डितत्व—इन गुणों के वाचक हैं और सादृश्य अर्थ में वर्तमान हैं। अतः द्वित्व होता है। [सादृश्य

**जातीयरोऽनेन द्विर्वचनेन बाधनं नेष्यते।** पटुजातीयः। मृदुजातीयः—इत्यपि हि भवति। तत्कथम्? वक्ष्यमाणमन्यतरस्यांग्रहणमुभयोः शेषो विज्ञायते।

**प्रकार इति किम्? पटुर्देवदत्तः।**

**न्यासः**

शक्तिस्वाभाव्यं हेतुः। 'प्रकारे वर्त्तमानस्य' इति द्विर्वचनप्रतिपत्तिद्वारेण तद्द्योतनात् तत्र तस्य वृत्तिर्विज्ञेया। **परिपूर्णगुणेत्यादि।** एतेनोदाहरणे गुणवचनस्य सादृश्ये वृत्तिं दर्शयति। उपमानं हि सादृश्यम्। परिपूर्णः= सकलः पाटवादिर्गुणो यस्य स तथोक्तः। स एव न्यूनः=असकलोऽपरिसमाप्तो यस्य स तथोक्तः। जातीयरपि प्रकारवचन एव विधीयत इति नाप्राप्ते तस्मिन्निदमारभ्यत इति तद् बाधनं प्राप्नोति? इति यश्चोदयेत्, तं प्रत्याह—**जातीयरोऽनेन बाधनं नेष्यत इति।** कथं पुनरिष्यमाणमपि बाधनं न भविष्यति? वक्ष्यमाणस्यान्यतरस्यांग्रहणस्योभयोरपि योगयोः शेषभूतत्वात्। किं पुनः कारणं बाधनं नेष्यते? इत्याह—**पटुजातीयो मृदुजातीय इत्यपि हि भवतीति।** यस्तु पटुपटुजातीयो मृदुमृदुजातीय इति प्रायेण पुस्तकेषु पाठः स प्रमादकृतः। कुतः? एकस्य कार्यिणोऽनेकेषां कार्याणां प्राप्तौ बाध्यबाधकभावो भवति। इह तु पटुपटुमृदुमृदुशब्दाभ्यामेव प्रकारस्य द्योतितत्वात् तयोः पुनर्द्विर्वचनं न प्राप्नोति, नापि जातीयर्; तस्मादपपाठोऽयम्। **अग्निर्माणवकः, गौर्वाहीक इति।** अग्निशब्दो गोशब्दश्चात्राप्रकारे वर्त्तते। तथा ह्यग्निना माणवकस्य सादृश्यं गम्यते, गवा च वाहीकस्य। न हि तौ गुणवचनौ, किं तर्हि? द्रव्यवचनौ; माणवकवाहीकयोर्द्रव्यत्वात्।

**पदमञ्जरी**

**प्रकारे गुणवचनस्य॥ प्रकारो भेदः सादृश्यं चेति।** उभयत्रापि प्रकारशब्दस्य दृष्टत्वात्। भेदे तावत्—बहुभिः प्रकारैर्भुङ्क्ते, बहुभिर्भेदैः, विशेषैरिति गम्यते; सादृश्ये—ब्राह्मणप्रकारोऽयं माणवकः, ब्राह्मणसदृश इति गम्यते। **तदिहेति।** तदिति वाक्योपन्यासे। अव्ययं वा सप्तम्यर्थवृत्ति, तत्रेत्यर्थः। **सादृश्यं प्रकारो गृह्यत इति।** द्विरुक्तात् तस्यैव प्रतीतेः। अत्र चाभिधानस्वाभाव्यं हेतुः। **प्रकारे वर्तमानस्येति।** द्विर्वचनप्रवृत्तिद्वारेण तद्द्योतनात्तत्र वृत्तिः। **अपरिपूर्णगुण इत्यर्थ इति।** कथमेतत्? इत्याह—**परिपूर्णगुणेनेति।** यस्य पूर्णं पाटवम्, यः पटुकार्याणि करोति, तेन यदा न्यूनपाटवमुपमीयते, तदा पटुपटुरिति प्रयोगो भवति, तेनार्थादपरिपूर्णगुण इत्यर्थो भवति।

**जातीयरोऽनेन द्विर्वचनेन बाधनं नेष्यत इति।** तद्विधौ द्विविधस्यापि प्रकारस्य ग्रहणं मन्यते। **जयादित्यस्तु** तत्राह—'सामान्यस्य भेदको विशेषः प्रकारः' इति। इष्टिश्चेयम्, अन्यथा ब्राह्मणजातीय इत्यादावगुणवचने, पटुजातीय इत्यादौ गुणवचनेऽपि सादृश्यादन्यत्र भेदे चरितार्थस्य जातीयरो गुणवचनेषु सादृश्ये बाधः स्यात्।

**भावबोधिनी**

दो में ही होता है। अतः उत्कृष्ट गुण वाले की अपेक्षा कुछ न्यून गुण वाले को बताने के लिये ऐसे प्रयोग होते हैं। अतः उपमान गुणों से परिपूर्ण होता है। किन्तु उपमेय (प्रकृत व्यक्ति) कुछ कम होता है—] अपरिपूर्ण गुणों वाला—यह अर्थ है। क्योंकि परिपूर्ण गुणों वाले के साथ न्यून गुणों वाले के उपमान बनने पर ऐसे प्रयोग किये जाते हैं। [ फलतः पटुपटुः आदि से कुछ कम पटु की प्रतीति होती है। ]

इस द्विवचन ( द्वित्व ) के द्वारा जातीयर् का बाध करना इष्ट नहीं है—पटुजातीयः। मृदुजातीयः—यह भी होता ही है। [ भाव यह है कि 'प्रकारवचने जातीयर्' ५।३।६९ से जातीयर् प्रत्यय और प्रस्तुत सूत्र से द्वित्व होता है। दोनों में बाध्य-बाधकभाव नहीं है। द्वित्व भी होता और जातीयर् भी। ] तो यह कैसे होता है? आगे कहा जाने वाला 'अन्यतरस्याम्' का ग्रहण दोनों सूत्रों का शेष मान लिया जाता है। [ दोनों सूत्र वैकल्पिक हैं। अतः पक्ष में दूसरे की प्रवृत्ति होने में बाधा नहीं है ]।

प्रकार= सादृश्य में—इसका क्या फल है? पटुः देवदत्तः। [ इसमें पटुत्वगुण से परिपूर्ण ही देवदत्त की प्रतीति होती है। अतः सादृश्य न होवे द्विल्व नहीं होता है। ]

गुणवचनस्येति किम् ? अग्निर्माणवकः। गौर्वाहीकः। यद्यप्यत्राग्निशब्दः, गोशब्दश्च मुख्यार्थसम्बन्धादवधृतभेदं तैक्ष्ण्यजाड्यादिकमर्थान्तरे गुणविशेषमेव प्रतिपादयितुं प्रवृत्तः; तथापि सर्वदा गुणवचनो न भवतीति न द्विरुच्यते।

**॥ आनुपूर्व्ये द्वे भवत इति वक्तव्यम् ॥** ( म० भा० )। मूलेमूले स्थूलाः। अग्रेऽग्रे सूक्ष्माः। ज्येष्ठंज्येष्ठं प्रवेशय।

**न्यासः**

ननु चेमावपि गुणवचनावेव, तथा हि—यज्जातीयस्तैक्ष्ण्यादिर्गुणो वह्नौ दृष्टस्तज्जातीयमेव गुणविशेषमुपादाय सोऽयमित्यभेदोपचारेण सम्बन्धेनोपमानोपमेयभावेन वाऽग्निशब्दोऽयं माणवके वर्तते; तमेव गुणविशेषं प्रतिपादयितुं प्रवृत्तत्वात्। एवं गोशब्दोऽपि यज्जातीयो जाड्यादिर्गुणः सास्नादिमति दृष्टः, तज्जातीयमेव गुणविशेषमुपादाय पूर्वोक्तयोः सम्बन्धयोरन्यतरेण सम्बन्धेन वाहीके वर्तते, तस्यैव गुणविशेषस्य प्रतिपादनाय। तस्माद् गुणविशेषं प्रतिपादयितुं प्रवृत्ताविमावपि गुणवचनावेव, इत्याह—**यद्यप्यत्रेत्यादि**। यतः शब्दात् श्रुतिमात्रेण योऽर्थः प्रतीयते स तस्य मुख्योऽनुपचरितोऽर्थः। यस्त्वभेदोपचारादिना निमित्ते न कथञ्चिद् यत्नेन प्रतीयते, स गौण इति। उपचरित इत्यर्थः। अग्निशब्दात् श्रुतिमात्रेण पावकः प्रतीयते, गोशब्दाच्च सास्नादिमान्। अतोऽग्निशब्दस्य पावको मुख्योऽर्थः, गोशब्दस्य सास्नादिमान्। माणवकस्त्वग्निशब्दाद् यत्नेन प्रतीयते वाहीकोऽपि गोशब्दात्। तस्मादग्निशब्दस्य माणवको गौणोऽर्थः; गोशब्दस्यापि वाहीकः। मुख्येनार्थेन पावकादिना गौणस्य माणवकादेः सम्बन्धः। पूर्वोक्तयोः सम्बन्धयोरन्यतरो मुख्यार्थसम्बन्धः। तेन हेतुना करणेन वाऽवधृतो निश्चितो भेदो विशेषो यस्य तैक्ष्ण्यजाड्यादेर्गुणस्य स तथोक्तः। कथं पुनस्तेन सम्बन्धेन तस्य निश्चयो भवति ? तत्प्रतीतौ तत्प्रतीतेः। स हि गुणविशेषस्तस्य सम्बन्धस्य हेतुः; तस्मिन् सति तत्सद्भावात्। अतः सम्बन्धो द्विप्रकारोऽपि प्रतीतः सन् तत्प्रतीतिं जनयति, धूम इवाग्नौ। तमेवंविधं गुणविशेषमेव

**पदमञ्जरी**

**पटुर्देवदत्त इति**। परिपूर्णगुण एवात्र पटुशब्दो वर्त्तते, न तत्सादृश्यान्न्यूनगुणे।

**अग्निर्माणवक इति**। अग्निशब्दो वह्नौ वृत्तः सोऽयमतिसादृश्यनिमित्तादभेदोपचाराम्माणवके वर्त्तत इति द्रव्ये पूर्ववृत्तः सम्प्रत्यपि द्रव्यवचन इति गुणवचनो न भवति। एवं **गौर्वाहीक** इत्यत्र गोशब्दः सास्नादिमति वर्तित्वा वाहीके वर्तमानः। नन्वग्निशब्दोऽग्निगततैक्ष्ण्यं माणवके प्रतिपादयितुं प्रयुज्यत इति गुणवचन एव ? इत्यत आह—**यद्यप्यत्राग्निशब्द इति**। अग्निशब्दो माणवके प्रयुज्यमानो यादृशमग्नेस्तैक्ष्ण्यं परश्वादिभ्यो व्यावृत्तं तदेव प्रतिपादयति, न तैक्ष्ण्यमात्रमिति, गोशब्दोऽपि यादृशं गवां जाड्यं मनुष्येभ्यो व्यावृत्तं तदेव प्रतिपादयति, आश्रयविशेषसम्बन्धाद्धि तैक्ष्ण्यजाड्यादिकं भिद्यते, तदेवदाह—**मुख्यार्थसम्बन्धादवधृतभेदं तैक्ष्ण्यजाड्यादिकमिति**। शब्दान्तरसन्निधिमन्तरेण शब्दश्रवणमात्राद् योऽर्थः प्रतीयते स मुख्यः। विपरीतो गौण। अवधृतभेदम् = निश्चितभेदम्। आदिशब्देन पैङ्गल्यभारवहनादेर्ग्रहणम्। अर्थान्तरे, गौणे माणवके वाहीके च। **सर्वदा गुणवचनो न भवतीति न द्विरुच्यत इति**। 'प्रकारे वर्त्तमानस्य' इत्येव गुणवचनत्वे सिद्धे पुनर्गुणवचनग्रहणात् सर्वदा गुणवचनस्येत्याश्रीयते। न चायं सर्वदा गुणवचनः; प्राक् प्रकाराद् द्रव्यवचनत्वात्।

**भावबोधिनी**

गुणवाचक का—इसका क्या फल है ? अग्निः माणवकः। गौः वाहीकः। [ माणवक आग है। वाहीक देश वाला बैल है। ] यद्यपि इनमें अग्निशब्द और गोशब्द मुख्य अर्थ के सम्बन्ध से भेद धारण किये ( निश्चित रूप से भेद वाले ) तैक्ष्ण्य, जाड्य आदि को अन्य अर्थ ( माणवक और वाहीक ) में गुणविशेष को ही प्रतिपादित करने के लिये प्रवृत्त हुआ है तथापि ये अग्नि और गौ ) शब्द सदैव गुणवाची नहीं होते हैं इसलिये द्वित्व नहीं किया जाता है। [ भाव यह है कि जो शब्द स्वाभाविकरूप से सदैव गुण अर्थ कहते हैं उन्हीं का द्वित्व होता है। इसीलिये 'प्रकारे वर्तमानस्य' न कहकर 'प्रकारे गुणवचनस्य' में पुनः गुणवाचक का ग्रहण करना यही सिद्ध करता है कि जो सदैव गुण अर्थ कहता है उसी का द्वित्व होता है। ]

**॰ स्वार्थे अवधार्यमाणेऽनेकस्मिन् द्वे भवत इति वक्तव्यम् ॰ ( म० भा० ) । अस्मात् कार्षापणादिह भवद्भ्यां माषंमाषं देहि । स्वार्थं एतद् द्विर्वचनम्, न वीप्सायाम् । अत्र हि द्वावेव माषौ दीयेते, न सर्वे कार्षापणसम्बन्धिनो माषाः; तेन वीप्सा न विद्यते ।**

**न्यासः**

यद्यपि मुख्यादर्थादन्यस्मिन् गौणेऽर्थे गोशब्दोऽग्निशब्दश्च प्रतिपादयितुं प्रवृत्तः, तथापि सर्वकालं गुणवचनो न भवतीति न तद् द्विरुच्यते तथा हि—यदासावमुख्येऽर्थे साधर्म्येण माणवके वाहीके च प्रयुज्यते, तदा गुणवचनो भवति । यदा च वह्नौ सास्नादिमति च, तदा जातिवचनो द्रव्यवचनो वा । तत्र यदाऽग्निशब्दोऽग्नित्वे वर्त्तते गोशब्दोऽपि गोत्वे, तदा जातिवचनौ भवतः । यदा तु जात्युपलक्षिते जातिमति द्रव्ये, तदा द्रव्यवचनौ । तस्मात् सर्वकालमगुणवचनत्वान्न भवति तयोर्द्विर्वचनम् । एतच्च गुणवचनग्रहणाल्लभ्यते । प्रकारे हि वर्तमानः शब्दः सर्व एव गुणवचनः सम्पद्यते, उच्यते चेदं वचनम् गुणवचनस्येति, तत्र सर्वप्रकर्षावगतिर्विज्ञायते—साधीयान् यो गुणवचन इति । कश्च साधीयान् गुणवचनः ? यदि तर्हि सर्वदा यो गुणवचनस्तस्य द्विवर्वचनेन भवितव्यम्, तदा पटुशब्दस्यापि द्विर्वचनं न प्राप्नोतीति, सोऽपि यदा पाटवमात्रे गुणविशेषे वर्तते तदैव गुणवचनः; यदा तु तद्वति द्रव्ये तदा द्रव्यवचन एव ? नैतत्; न हि विशेषणमनभिदधता विशेष्यं शक्यमभिधातुम् । अतो विशेष्यं द्रव्यमभिदधता नियोगतो विशेषणमप्यभिधेयम् । तस्माद् द्रव्येऽपि वर्तमानः पटुशब्दस्तद्विशेषणमपि गुणमभिदधात्येव । इयांस्तु विशेषः—गुणमुपसर्जनीभूतमभिदधाति, द्रव्यं तु प्रधानभूतमिति ।

**आनुपूर्व्य इत्यादि** । अवीप्सार्थमिदम्; वीप्साया असम्भवात् । तुल्यजातीयानां हि भिन्नानां वीप्सा भवति, यथा—ग्रामाणाम् । सर्वे हि ते ग्रामत्वजात्यैकयाऽध्यासितत्वात् तुल्यजातीया दिग्देशादिभेदेन भिन्नाः ।

**पदमञ्जरी**

अत्र केचित्—'गुणमुक्तवान् गुणवचनः' इति गुणोपसर्जनद्रव्यवचनस्य द्विवर्वचनमिच्छन्ति । अन्ये तु गुणवचनस्य गुणिवचनस्य च अविशेषेणेच्छन्ति—शुक्लशुक्लं रूपम्, शुक्लशुक्लः पट इति । 'नवंनवं प्रीतिरहो करोति' इत्यत्र वीप्सायां द्विवर्वचनम्, अनेन तु द्विवर्वचने सुब्लोपप्रसङ्गः, यथा—नवनवावनवायुभिरादधे' इति । **मूलेमूले इति** । एकस्य वस्तुनो वेणुदलादेरेकमेव मुख्यमग्रं मूलं च, इतरेषां तु भागानामापेक्षिको मूलाग्रव्यपदेशः । स्थौल्यसौक्ष्म्ये अपि नैकरूपे, किं तर्हि ? यथामूलमुपचीयते स्थौल्यम्, यथाग्रं च सौक्ष्म्यमिति वीप्साया अत्रासम्भवः । इह 'मूलेमूले पथि विटपिनाम्' इति वीप्सायामेव द्विवर्वचनम् ।

**स्वार्थ इति** । अर्थान्तराभावप्रदर्शनार्थमिदमुक्तम् । **अस्मात्कार्षापणादिति** । अनेकमाषसमुदायः = कार्षापणम् । तत्र न सर्वे माषा दानक्रियया व्याप्यन्ते, किं तर्हि ? द्वावेवेति वीप्साया अभावः । ननु यथा द्वावेव माषौ निर्ज्ञातौ दानक्रियया व्याप्येते, तदा माषंमाषं देहि—इति वीप्सायां द्विवर्वचनं भवति; एवमनेकमाषसमुदायादपि कार्षापणाद् द्वयोरेवास्ति दानक्रियाव्याप्तिः ? नैवम्, तत्र हि सन्निहितस्यार्थस्य न कस्यचिद् वर्जनमस्ति; इह तु वर्जनमस्ति, यतो माषंमाषमसौ दत्वा शेषं पृच्छति—किमनेन क्रियतामिति । तदिदमुक्तम्—**अत्र हीति । माषं देहि द्वौ माषौ देहि त्रीन्माषानिति** । अनेन यथेच्छं देहीति विवक्षया अवधारणाभावं दर्शयति ।

**भावबोधिनी**

॰ आनुपूर्व्य = आगे पीछे होना अर्थ में द्वित्व होता है—ऐसा कहना चाहिए ।॰ मूले मूले स्थूलाः, अग्रे अग्रे सूक्ष्माः । [ जड़ जड़ में मोटे और आगे-आगे सूक्ष्म = पतले हैं । ] ज्येष्ठं ज्येष्ठं प्रवेशय । [ बड़े-बड़े को क्रमशः प्रवेश कराओ । इनमें आनुपूर्वी—आगे-पीछे का क्रम प्रतीत होने से द्वित्व होता है । ]

॰ स्वार्थ=अपना ही अर्थ अवधार्यमाण होने पर अनेक अर्थ में द्वित्व होता है ।॰ उदा० अस्मात् कार्षापणात् इह भवद्भ्यां माषं माषं देहि । [ अनेक माषनामक सिक्कों को मिलाकर बने हुये एक कार्षापण से आप दोनों को एक एक माष दे दो ।' ] यहाँ पर स्वार्थ में ही यह द्वित्व है वीप्सा में नहीं । क्योंकि यहाँ पर केवल दो ही माष दिये जाते हैं न कि कार्षापण में जितने भी होते हैं वे सभी, इसलिये वीप्सा नहीं है । [ यहाँ दान क्रिया के साथ माष+माष अर्थात् केवल दो का ही सम्बन्ध है अतः माष का स्वार्थ ही अवधार्यमाण है और अनेकों में है अतः द्वित्व होता है । ]

अवधार्यमाण इति किम् ? अस्मात् कार्षापणादिह भवद्भ्यां माषमेकं देहि, द्वौ माषौ देहि, त्रीन्वा माषान् देहि ।

अनेकस्मिन्निति किम् ? अस्मात् कार्षापणादिह भवद्भ्यां माषमेकं देहि ।

❀ चापले द्वे भवत इति वक्तव्यम् ❀ ( म० भा० ) सम्भ्रमेण प्रवृत्तिः = चापलम् । अहिरहिः बुध्यस्व बुध्यस्व । नावश्यं द्वावेव शब्दौ प्रयोक्तव्यौ, किं तर्हि ? यावद्भिः शब्दैः सोऽर्थोऽवगम्यते तावन्तः प्रयोक्तव्याः—अहिरहिरहिः बुध्यस्वबुध्यस्वबुध्यस्व इति ।

न्यासः

मूले मूले स्थूला इत्यादौ तु वेणुनडादीनां ये भागास्तेषामेकमेव मुख्यं मूलं यस्याधोभागान्तरं न सन्निविष्टम् । एवम् एकमेव च मुख्यमग्रं यस्योपरिभागान्तरं न सन्निविष्टम् । तथा हि वेणोर्मूलमित्युक्ते यस्याधोभागान्तरं नास्ति तत्रैव प्रतीतिरुपजायते । तथा वेणोरग्रमित्युक्ते यस्योपरिभागान्तरं नास्ति तत्रैव प्रतीतिरुपजायते; नेतरेषु । यस्तु तेषु मूलव्यपदेशोऽग्रव्यपदेशश्च, सोऽपेक्षाकृतः, उपरि सन्निविष्टमपेक्ष्य मूलव्यपदेशः, अधःसन्निविष्टमपेक्ष्याग्रमिति । तस्माद् यथा सर्वे ग्रामास्तुल्यजातीया न तथा वेणुभागा भवन्ति । ग्रामाणां हि न किञ्चिदपेक्षाकृतं ग्रामत्वम्, भागानां त्वेकस्यैव मुख्यं मूलत्वमग्रत्वञ्चानपेक्षाकृतम् । अनेकेषां[1] भागानां[1] तूभयम् । यत् तदपेक्षाकृतमेव तस्माद् भिन्नजातीयाः भागाः । न च भिन्नजातीयानां वीप्सा भवति, यथा—सास्नादिमतां गवां वाहीकानाञ्च । न हि गौर्गौरित्युक्ते वाहीकगतापि वीप्सा गम्यते । अपि चैतावानिहार्थो विवक्षितः—आनुपूर्व्येण वेणुनडादयः स्थूलाः सूक्ष्मा वेति प्रतीयते; न तु वीप्सा । ज्येष्ठं ज्येष्ठं प्रवेशयेति । अत्रानुपूर्व्यमात्रं विवक्षितम् । यः सर्वेषां ज्येष्ठस्तं तावत् प्रवेशय, ततस्तदन्येषां यो ज्येष्ठस्तं प्रवेशयेति । अन्यथा यद्यत्र ज्येष्ठानां वीप्सा स्यात् सर्वकनीयसः प्रवेशो न स्यात्; तस्य वीप्सयाऽविषयीकृतत्वात्, न ह्यसौ ज्येष्ठः । तस्मादत्रापि नास्ति वीप्सा । तेनानुपूर्व्ये द्वे भवत इत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—यथा 'शेषे' इति लक्षणञ्च अधिकारश्च; तथा 'सर्वस्य द्वे' इत्येतदपि लक्षणमधिकारश्च । तेनानुपूर्व्ये द्वे भवत इत्युत्तरत्रापि द्विर्वचनविधौ यथायोगमेवं व्याख्यानं कर्त्तव्यम् । यदि तर्हि 'सर्वस्य द्वे' इत्येतल्लक्षणमपि, एवं सति 'नित्यवीप्सयोः' इत्यादेर्वैयर्थ्यं प्रसज्येत ? न; प्रपञ्चार्थत्वात् । यथैव हि 'तत्र जातः' इत्येवमादीनां प्रपञ्चार्थत्वाद् वैयर्थ्यं न भवति, तथैव 'नित्यवीप्सयोः' इत्येवमादीनामपि योगानाम् ।

अस्मात् कार्षापणादिह भवद्भ्यां माषंमाषं देहीति । अत्र द्वावेवेत्यवधार्यते । द्वावेव देहि, नैकम्, नापि बहूनित्यर्थः । विनापि ह्येवकारप्रयोगेणावधारणं गम्यते; विवक्षितत्वाद्, यथा—पार्थो धनुर्धर इति । ननु किं पुनः कारणं वीप्सा न सम्भवति ? इत्याह—अत्र हीत्यादि । अनेन वीप्साया अभावं दर्शयति । कार्षापणो ह्यनेकमाषसमुदायः । न च सर्वे माषा दानक्रियया व्याप्तुमिष्यन्ते, अपि तु द्वावेवेति नास्त्यत्र वीप्सा—माषं देहि, द्वौ माषौ देहि त्रीन् माषान् देहीति । एकं माषं देहि, द्वौ वा, त्रीन् वा—इत्ययमत्रार्थो विवक्षितः, न त्ववधारणमिति द्विर्वचनं न भवति ।

पदमञ्जरी

चापल इति । प्रयोक्तृधर्मोऽयम्, तस्मिन् द्योत्ये सुबन्तस्य तिङन्तस्य च सर्वस्य वाक्यगतस्य पदस्य द्विर्वचनं नावश्यमिति नेदं शास्त्रीयं द्विर्वचनम्, किं तर्हि ? परप्रत्यायनायानेकस्य स्वतन्त्रपदस्य प्रयोग इत्यर्थः । एवं च कृत्वा आम्रेडितानुदात्तत्वाभावाद्यथाप्राप्तः स्वरो भवति ।

भावबोधिनी

अवधार्यमाण ( निश्चित किया जाना )—इसका क्या फल है ? अस्मात् कार्षापणात् इह भवद्भ्यां माषम् एकं देहि, द्वौ माषौ देहि त्रीन् वा माषान् देहि । [ इस कार्षापण से आपको एक माष दे दो, दो दे दो या तीन दे,दो—इस अर्थ में अवधारण की प्रतीति न होने से द्वित्व नहीं होता है । ]

अनेक में—इसका क्या फल है ? अस्मात् कार्षापणात् इह भवद्भ्याम् माषम् एकं देहि । [ इस कार्षापण से आपको एक ही माष दे दो—अतः अनेक अवधार्यमाण नहीं है । द्वित्व नहीं होता है । ]

---

१-१. 'अन्येषाम्' इति पाठा० ।

❀ क्रियासमभिहारे द्वे भवत इति वक्तव्यम् ❀ ( म० भा० )। स भवान् लुनीहिलुनीहीत्येवायं लुनाति ।

**न्यासः**

**सम्भ्रमेणेति** । त्वरया । **प्रवृत्तिरिति** । प्रवर्त्तनम् । **अहिरहिर्बुध्यस्वबुध्यस्वेति** । यद्ययं न बुध्यतेऽहं चैवं नावबोधयामि ततो नूनं दृष्ट एवायमहिनेति मत्वा सम्भ्रमेणैवं वाक्यं प्रयुङ्क्ते । 'क्रियासमभिहारे द्वे भवत इति वक्तव्यम्', 'आभीक्ष्ण्ये द्वे भवत इति वक्तव्यम्' इत्येवं वाक्यद्वयं लोडादिभिरेव तन्नित्यताया द्योतितत्वाद् द्विर्वचनं न प्राप्नोतीत्युपन्यस्तम् । **नित्य इत्यादिना** । 'नित्यवीप्सयोः' इत्यनेनैवात्र द्विर्वचनं सिद्धमिति दर्शयति । यथा च सिद्धं तथा तत्रैव 'क्त्वाणमुलोर्लोटश्च द्विर्वचनापेक्षया' इत्यादिना ग्रन्थेन प्रतिपादितम् ।

**पटपटाकरोतीति** । पटच्छब्दस्य डाचि विषयभूतेऽनुत्पन्न एव द्विर्वचनम् । ततः 'अव्यक्तानुकरणात् द्व्यजवरार्धादनितौ डाच्', 'नित्यमाम्रेडिते डाचि' इति तकारस्य पररूपत्वम् । **पटपटायत इति** । लोहितादिडाज्भ्यः क्यष्', 'वा क्यषः' इत्यात्मनेपदम् ।

**डाजन्तस्येति** । भाविडाजन्तमभिप्रेत्यैवमुक्तम् । तस्मात् डाचि विषयभूतेऽनुत्पन्न एवैतद् द्विर्वचनमिष्यते । अत एव **वृत्तिकारेण** 'अव्यक्तानुकरण' इत्यादौ सूत्रे उक्तम्—डाचीति विषयसप्तमीयमिति । अत्र 'नित्यमाम्रेडिते डाचि' इति पररूपविधानं ज्ञापकम् । तत्र ह्यत इति, अन्तस्येति च वर्तते । यदि डाचि परभूते द्विर्वचनमिष्यते, ततो डाचि विहिते पटच्छब्दस्य नित्यत्वात् टिलोपेनैव प्राग्भवितव्यम्; तथा च सत्यच्छब्दाभावात् तद् पररूपं नोपपद्यते तस्माद्विषयसप्तमीयम् । एवं कृत्वा 'नित्यमाम्रेडिते डाचि' इत्यत्र यदुक्तम्—'प्राक् टिलोपाद् द्विर्वचनमिष्यते' इति, तदुपपन्नं भवति । एवं हि प्राक् टिलोपाद् द्विर्वचनं सिध्यति, यदि डाचि विषयभूते तत्र तद्विधीयते; अन्यथा हि यदि तस्मिन् परभूते विधीयेत, ततो नित्यत्वात् प्राक् टिलोप एव स्यात्, न तु द्विर्वचनम् । **द्वितीयाकरोतीत्यादि** । 'कृञो द्वितीयतृतीय' इत्यादिना डाच् । **तदर्थमिति** । अव्यक्तानुकरणडाजन्तस्यैव द्विर्वचनं यथा स्यादित्येवमर्थम् । **केचिदिति** वचनात् केचिद् बहुलमिति न पठन्तीत्युक्तम् भवति । तेषामयमभिप्रायः—'सर्वस्य द्वे' इत्यनेनैवात्र द्विर्वचनं सिद्धम्, तद्धि लक्षणमधिकारश्च । तत्र 'विभाषा वेष्टिचेष्टयोः' इत्यतो विभाषाग्रहणमनुवर्तते, सा च व्यवस्थित-

**पदमञ्जरी**

**क्रियासमभिहार इति** । लोडन्तस्यैवेदं द्विर्वचनम्, न यङन्तस्य; लोटः समुच्चयेऽपि विधानात् क्रियासमभिहाराभिव्यक्तौ केवलस्य सामर्थ्याभावात् । यङ् तु क्रियासमभिहारविषय एवेति तद्द्योतने स्वयं सामर्थ्यान्नापेक्षते द्विर्वचनम् ।

**भावबोधिनी**

❀ चापल अर्थ की प्रतीति में भी द्वित्व होता है । ❀ घबड़ाहट से काम में लग जाना = चापल है । उदा० अहिः अहिः बुध्यस्व बुध्यस्व । [ साँप साँप, जागो जागो । ] यह आवश्यक नहीं है कि दो शब्दों का ही प्रयोग किया जाय । तो क्या ? जितने शब्दों से वह ( चापल ) अर्थ प्रतीत हो सके उतने का प्रयोग करना चाहिए—अहिः–अहिः–अहिः, बुध्यस्व–बुध्यस्व–बुध्यस्व । ( साँप साँप साँप जागो जागो जागो—ऐसा तीन बार भी प्रयोग सम्भव है । यहाँ कर्म-धारयवद्भाव हो जाने से द्वित्व या त्रित्व वाले शब्दरूपों को समास मानकर एक ही साथ लिखना चाहिए । अतः अलग-अलग पाठ अशुद्ध है । समझाने के लिये ही अलग–२ लिखा जा सकता है । ) ॥

❀ क्रियासमभिहार अर्थ में द्वित्व होता है, ऐसा कहना चाहिए । ❀ स भवान् लुनीहि लुनीहि इत्येवायं लुनाति । [ आप बार-बार काटते हैं । इस विषय में 'क्रियासमभिहारे लोट् लोटो हिस्वौ, वा च तध्वमोः' (४।३।४।२) सूत्र की व्याख्या में विशेष लिखा जा चुका है । लोट् सार्वकालिक है और इसके स्थान पर परस्मैपद में सभी रूपों में 'हि' आत्मनेपद में सभी रूपों में 'स्व' होता है । द्वित्व से क्रिया-समभिहार अर्थ की प्रतीति होती है । ]

आभीक्ष्ये द्वे भवत इति वक्तव्यम् ॐ ( म० भा० )। भुक्त्वाभुक्त्वा व्रजति। जोजं भोजं व्रजति। "नित्य" (८।१।४) इत्येव सिद्धम् इति तत्रोक्तम्।

ॐ डाचि द्वे भवतः इति वक्तव्यम् ॐ ( म० भा० )। पटपटाकरोति। पटपटायते।

अव्यक्तानुकरणडाजन्तस्य द्विर्वचनमिष्यते। इह न भवति—द्वितीयाकरोति, तृतीयाकरोति। तदर्थं केचिद् 'डाचि बहुलम्' इति पठन्ति।

**न्यासः**

विभाषा। तेनाव्यक्तानुकरणडाजन्तस्यैवात्र द्विर्वचनं भविष्यति, नान्यस्येति। ततो नार्थो बहुलग्रहणस्येति। **पूर्वप्रथमयोरित्यादि। अर्थातिशयविवक्षायामिति।** पूर्वप्रथमशब्दस्यातिशयः प्रकर्षः, तस्य विवक्षा वक्तुमिच्छा, तस्यां द्वे भवत इत्यतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु पूर्वमेव कृतम्। नाप्राप्ते आतिशायिके द्विर्वचनमिदमारभ्यमाणं तस्य बाधकं प्राप्नोति—इति यो मन्येत, तं प्रत्याह—**आतिशायिकोऽपि दृश्यत इति।** कथम्? 'सर्वस्य द्वे' इत्यनेनैव द्विर्वचनं विधीयते। अत्र विभाषाधिकाराद् विकल्पेन। तेन यदा नास्ति द्विर्वचनं तदातिशायिको भवति।

**डतरडतमयोरित्यादि।** 'कियत्तदोः' इत्यादिना डतरज्विहितः। 'वा बहूनां जातिपरिप्रश्ने' इत्यादिना डतमच्। समेन गुणेनाढ्यत्वादिना निरूपणा योभाविमावाढ्याविति एवमादिप्रकारा सा सम्प्रधारणा।

**पदमञ्जरी**

**आभीक्ष्य इति।** पूर्वेण वाक्येन क्रियासमभिहारसंशब्दनेन यो विहितस्तदन्तस्यैव द्विर्वचनमिति शङ्कमानं प्रत्यस्य वाक्यस्योपन्यासः। **नित्य इत्येव सिद्धमिति तत्रोक्तमिति।** 'नित्यवीप्सयोः' इत्यत्र हि 'क्त्वाणमुलोर्लोटश्च द्विर्वचनसापेक्षाणामेव पौनःपुन्यप्रकाशने शक्तिः' इत्युक्तम्। अन्ये त्वाहुः—'पुनःपुनः क्रियाया उत्पादनमाभीक्ष्ण्यम्। तथा हि—भुक्त्वाभुक्त्वा व्रजतीत्युक्ते सत्यपि क्रियाया विच्छेदे पुनःपुनर्भुङ्क्ते पुनःपुनर्व्रजतीति क्रियाऽऽवृत्तिः प्रतीयते, नित्यता तु क्रियाया अविच्छेदः; यथा जीवतिजीवतीत्युक्ते जीवत्येवायमिति प्रतीयते, न त्वसौ जीवित्वा म्रियते मृत्वा च जीवतीति, जीवनमेव त्वविच्छिन्नं प्रतीयते। तस्मादाभीक्ष्ण्यं नित्यमिति भिन्नावेतावर्थौ' इति।

अपर आह—भुक्त्वा व्रजतीत्यादौ क्त्वाणमुलन्तस्य यथा स्यात्, तिङन्तस्य च द्विर्वचने प्राप्ते आभीक्ष्ण्यसंशब्दनेन यो विहितस्तदन्तस्य यथा स्यात्, तिङन्तस्य मा भूदिति नियमार्थमिदमिति।

**डाचीति।** विषयसप्तमीयम्, तेनानुत्पन्न एव डाच्यकृतटिलोपस्य पटदित्यादेर्द्विर्वचनम्, ततः 'अव्यक्तानुकरणात्' इति डाचि टिलोपः, 'नित्यमाम्रेडिते डाचि' इति पररूपत्वम्। अपर आह—इदमेवाच्छब्दस्य पररूपविधानं लिङ्गम्—'डाचि' इति परसप्तम्यामपि टिलोपात्पूर्वं द्विर्वचनं भवतीत्यस्यार्थस्येति, तदसत्;

**भावबोधिनी**

* आभीक्ष्ण्य अर्थ में दो होते है, ऐसा कहना चाहिए। * भुक्त्वा भुक्त्वा व्रजति। भोजं भोजं व्रजति। यहाँ 'नित्यवीप्सयोः' से नित्य अर्थ में ही द्वित्व सिद्ध है ऐसा उसी सूत्र में कहा जा चुका है।

* डाच् परे रहते भी द्वित्व होता है ऐसा कहना चाहिए। * उदा० पटपटाकरोति। पटपटायते। [ पटत् इससे डाच् के विषय में उसे करने से पहले ही द्वित्व हो जाता है तब 'अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्' सूत्र से डाच्—पटत् पटत् डाच् + करोति। 'नित्यमाम्रेडिते डाचि' से पूर्ववर्ती तकार का पररूप पटपटत् + आ, डित् होने से टि ( अत् ) का लुक पटपटआ + करोति रूप होता है। इसी से 'लोहितादिडाज्भ्यः क्यष्' सूत्र से क्यष् प्रत्यय; 'वा क्यषः' से विकल्प से आत्मनेपद पटपटाय + ते। ]

अव्यक्त के अनुकरण में ही डाच् प्रत्ययान्त का द्वित्व इष्ट है। इसलिये यहाँ नहीं होता है—द्वितीयाकरोति तृतीयाकरोति। [ द्वितीयं कर्षणं करोति, तृतीयं कर्षणं करोति—आदि में "कृञो द्वितीय-तृतीयशम्बबीजात् कृषौ" (५।४।५८) सूत्र से डाच् होता है। अतः डाच् विषयभूत है किन्तु अव्यक्तानुकरण नहीं होने से

**❀ पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे भवत इति वक्तव्यम् ❀ ( म० भा० ) । पूर्वंपूर्वं पुष्प्यन्ति । प्रथमंप्रथमं पच्यन्ते । आतिशायिकोऽपि दृश्यते—पूर्वतरं पुष्प्यन्ति । प्रथमतरं पच्यन्त इति ।**

**❀ डतरडतमयोः समसम्प्रधारणयोः स्त्रीनिगदे भावे द्वे भवत इति वक्तव्यम् ❀ ( म० भा० ) । उभाविमावाढ्यौ । कतराकतरा अनयोराढ्यता । सर्व इमे आढ्याः । कतमाकतमा एषामाढ्यता ।**

**न्यासः**

स्त्रीलिङ्गशब्दः स्त्रीलिङ्गयोगात् स्त्रीत्युक्तः । निगद्यतेऽनेनेति निगदः—'पुंसि संज्ञायां घः' इति घः । स्त्रीनिगदो यस्य स स्त्रीनिगदो भावः । डतरडतमान्तयोः स्त्रीनिगदे भावे वर्त्तमानयोः शब्दयोः सम्प्रधारणायां विषयभूतायां द्वे भवतः । डतरडतमग्रहणमत्रोपलक्षणार्थं द्रष्टव्यम् । अत एव वक्ष्यति—'डतरडतमाभ्यामन्यत्रापि दृश्यते' स्त्रीनिगदग्रहणमप्युपलणार्थमेव । अत एवाभिधास्यति—'स्त्रीनिगदाद् भावादन्यत्रापि दृश्यते' इति । इहाढ्यत्वं कस्यचित् साधनसम्बन्धकृतम्, कस्यचिद् यत्नकृतम्, कस्यचिद् भाग्यसम्पत्कृतम् । तत्रोभाविमावाढ्यावित्युक्ते प्रतिपत्ता किंकृतमनयोराढ्यत्वमिति प्रतिपद्यमानः कतराकतराऽनयोराढ्यतेति वाक्यं प्रयुङ्क्ते, तदाढ्यता विभूतिपर्यायः स्त्रीनिगदो भावः । तत्र च डतरडतमान्ते वर्त्तेते; तां प्रष्टुं प्रवर्त्तितत्वात् ।

**पदमञ्जरी**

पतदित्यादौ टिलोपादुत्तरकालमप्यच्छब्दस्य सम्भवात् । **द्वितीयाकरोतीति** । 'कृञो द्वितीया' इत्यादिना डाच् । तर्त्तहि डाचि द्विर्वचनं वक्तव्यम् ? नं वक्तव्यम्; आचार्यप्रवृत्तिर्ज्ञापयति—'डाच्यव्यक्तानुकरणस्य द्विर्वचनं भवतीति, यदयम् 'नित्यमाम्रेडिते डाचि' इति पररूपत्वं शास्ति ।

**पूर्वप्रथमयोरिति** । पूर्वं, प्रथम—इत्येतयोर्द्विर्वचनं भवति, क्व ? अर्थातिशयविवक्षायाम् । अनयोर्योऽर्थस्तस्यातिशये विवक्षिते । **आतिशायिकोऽपि दृश्यत इति** । द्विर्वचनेन बाधे प्राप्ते वचनम् । अतिशयशब्दोऽनुशतिकादिषु द्रष्टव्यः । केचित्तु अर्थभेदादातिशायिकस्याबाध्यत्वमाहुः । तथा हि—'पूर्वतरं भुङ्क्ते' इत्युक्ते किमात्मसाध्यक्रियान्तरापेक्षं भोजनस्य पूर्वत्वम् ? अथ भोक्त्रन्तरसाध्यभोजनक्रियापेक्षम् ? इति सन्देहो भवति । एवं पूर्वतरं पुष्प्यतीत्युक्तेऽयमर्थो गम्यते न तावदेष किसलयितो यावदेष पुष्प्यतीति । पूर्वंपूर्वं पुष्प्यतीत्यस्मात्त्वन्येभ्यः पुष्पितृभ्योऽतिशयेन पूर्वं पुष्प्यतीत्यर्थः प्रतीयते ।

**डतरडतमयोरिति** । डतरडतमान्तस्य द्वे भवतः, समेनाढ्यत्वादिना धर्मेण सम्प्रधारणायां विषये । **स्त्रीनिगदे भाव इति** । भावः=भूतिः, सम्पत्=आढ्यता, निगद्यत इति निगदः, 'नौ गद' इत्यादिना कर्मण्यप् । स्त्रीशब्देन स्त्रीलिङ्गः शब्दोऽभिधीयते, स्त्रिया निगदः, कर्त्तरि षष्ठ्याः समासः । स्त्रीलिङ्गशब्दाभिधेयायां भूतौ वर्त्तमानस्येत्यर्थः । **कतराकतरा अनयोराढ्यतेति** । किं साधनसम्पत्कृता ? उत भाग्यकृता ? इति प्रश्नार्थः ।

**भावबोधिनी**

द्वित्व नहीं होता है । ] इस कार्य की उपपत्ति के लिये कुछ लोग 'डाचि बहुलम्' [ डाच् परे = विषय में बहुलरूप से द्वित्व होता है । ] ऐसा कहते है ।

❀ पूर्व तथा प्रथम का अर्थ के ही अतिशय की विवक्षा में द्वित्व होता है—ऐसा कहना चाहिए ।❀ उदा० पूर्वं पूर्वं पुष्प्यन्ति । प्रथमं प्रथमं पच्यन्ते । [ पहले पहले फूलते है । पहले पहले पक जाते हैं । यहाँ पूर्व और प्रथम के अर्थ का अतिशय है । द्वित्व होता है । ] अतिशय अर्थवाला प्रत्यय भी देखा जाता है—पूर्वतरं पुष्प्यन्ति, प्रथमतरं पच्यन्ते । [ प्रकर्षार्थक तरप् प्रत्यय भी होता है । अतः यह द्वित्व इस प्रत्यय का बाधक नहीं समझना चाहिए । ]

❀ डतर और डतम-प्रत्ययान्त का द्वित्व होता है यदि सम ( = बराबरी ) के सम्प्रधारण में स्त्रीलिङ्ग शब्द से सम्पन्नता कही जा रही हो तो । ❀ [ डतर-डतमान्त जो स्त्रीलिङ्ग में भाव = सम्पन्नता अर्थ में वर्तमान है उन शब्दों का सम सम्प्रधारण विषय हो तो द्वित्व होता हैं । ] उदा० उभौ इमौ आढ्यौ । कतराकतरा अनयोः आढ्यता [ इन दोनों की कौन कौन सी आढ्यता है ? अर्थात् साधनों से सम्पन्नता है या भाग्य से । ये दोनों आढ्य = सम्पन्न हैं । ऐसा सुनने पर किसी को जिज्ञासा होती है कि इनकी आढ्यता किस कारण ( आधार ) से है । वही यह प्रश्न करता है—कतरा कतरा अनयोः आढ्यता ? यहाँ डतर प्रत्ययान्त का द्वित्व होता है, स्त्रीलिङ्ग आढ्यता =

**डतरडतमाभ्यामन्यत्रापि हि दृश्यते—उभाविमावाढ्यौ। कीदृशीकीदृशी अनयोराढ्यता। तथा स्त्रीनिगदाद्भावादन्यत्रापि हि दृश्यते—उभाविमावाढ्यौ। कतरःकतरोऽनयोर्विभव इति।**

**❀ कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यम् ❀ ( म० भा० ) ❀ समासवच्च बहुलम् ❀ ❀ यदा न समासवत्प्रथमैकवचनं तदा पूर्वपदस्य ❀ अन्यमन्यमिमे ब्राह्मणा भोजयन्ति। अन्योऽन्यमिमे ब्राह्मणा भोजयन्ति। अन्योऽन्यस्य ब्राह्मणा भोजयन्ति। इतरेतरं भोजयन्ति। इतरेतरस्य भोजयन्ति।**

**न्यासः**

**कर्मव्यतीहार इत्यादि।** कर्मव्यतीहारः=क्रियाविनिमयः। एकस्यान्यभोजनादपरस्यापीतरो भोजनादिः। समासवद्भावोऽनेन बहुलं विधीयते। द्विर्वचनं तु 'सर्वस्य द्वे' इत्यनेनैव सिद्धम्। स च समासवद्भावो बहुलवचनादन्योऽन्यशब्दे न भवत्येव। इतरेतरशब्दे तु नित्यम्। असमासपक्षे पूर्वपदस्य प्रथमैकवचनं कर्तव्यम्। **अन्योऽन्यमिमे ब्राह्मणा भोजयन्तीति।** अन्यमित्यस्य द्वितीयैकवचनान्तस्य द्विर्वचनम्। अत्र समासवद्भावो नास्तीति पूर्वपदस्य प्रथमैकवचनम्। तस्य च 'ससजुषो रुः', 'अतो रोरप्लुतादप्लुते' इत्युत्वम्, 'आद् गुणः', 'एङः पदान्तादति' इति पूर्वरूपत्वम्—एते विधयो विधेयाः। **अन्योऽन्यस्येति।** षष्ठ्यन्तस्य द्विर्वचनम्। अन्योऽन्यसम्बन्धिनं पुत्रादिकं भोजयन्ति। अन्योऽप्यन्यस्येत्यर्थः। **इतरेतरं भोजयन्तीति।** द्वितीयान्तस्य द्विर्वचने कृते समासवद्भावात् सुब्लुक्, समासस्यान्तोदात्तत्वञ्चाम्रेडितानुदात्तत्वापवादः। समासवद्भावादेव प्रातिपदिकत्वे सति द्वितीयैकवचनम्, अमि पूर्वत्वम्। **इतरेतरस्येति।** षष्ठ्यन्तस्य द्विर्वचनम्। सुब्लुकि कृते समासप्रातिपदिकत्वात् पुनः षष्ठ्येकवचनं भवति।

**पदमञ्जरी**

**कर्मव्यतिहार इति।** क्रियाव्यतिहारे इत्यर्थः। तत्र द्विर्वचनं नित्यम्, समासवद्भावस्तु बहुलम्। तत्रान्योऽन्यशब्दे समासवद्भावाभावात्सुब्लुक्, समासान्तोदात्तत्वं च न भवति, आम्रेडितानुदात्तत्वं भवति। इतरेतरशब्दे तु नित्यः समासवद्भाव इति सुब्लुक्समासस्वरौ भवतः। **अन्योऽन्यमिति।** द्वितीयैकवचनान्तस्य द्विर्वचनम्। **अन्योऽन्यस्येति।** षष्ठ्येकवचनान्तस्य। अन्योऽन्यसम्बन्धिनः पुत्रादीनित्यर्थः। **स्त्रीनपुंसक-**

**भावबोधिनी**

भाव=सम्पन्नता का वाचक है। इसी प्रकार आगे भी समझना चाहिए—] सर्वे इमे आढ्याः कतमा कतमा एषाम् आढ्यता। [ ये सभी आढ्य=सम्पन्न हैं। किन किन कारणों से इनकी आढ्यता है। ] डतर-डतम प्रत्ययान्त से भिन्न का भी द्वित्व देखा जाता है—उभौ इमौ आढ्यौ, कीदृशी कीदृशी अनयोः आढ्यता। [ यहाँ कीदृशी का द्वित्व होता है। ] तथा स्त्रीलिङ्ग वाले से भाव = सम्पत्तिवाची से भिन्न शब्द में भी द्वित्व देखा जाता है—उभौ इमौ आढ्यौ। कतरः कतरः अनयोः विभवः। [ यहाँ 'विभवः' यह पुंलिङ्ग है फिर भी द्वित्व होता है। न्यास, पदमञ्जरी, सिद्धान्तकौमुदी आदि में भी इस दिशा में कुछ नहीं लिखा है। समास सामान्यरूप से वैकल्पिक होता है। इसीलिये यहाँ कुछ नहीं किया गया है। ]

❀ कर्मव्यतिहार में सर्वनाम का द्वित्व होता है, ऐसा कहना चाहिए।❀ और बहुलरूप से समासवत् होता है।❀ जब समासवत् नहीं होता है तब पूर्वपद का प्रथमा एकवचन होता है।❀ उदा० अन्यम् अन्यम् इमे ब्राह्मणा भोजयन्ति। अन्योऽन्यम् इमे ब्राह्मणा भोजयन्ति। [ अन्यम् का द्वित्व, बहुलरूप से समासवद्भाव का अभाव अर्थात् समासवद्भाव नहीं होता है तब सुप्लुक् नहीं होता है। और पूर्वपद का प्रथमा एकवचन हो जाता है इसके फलस्वरूप अन्य + सु + अन्यम् में स् का रुत्व, उत्व, गुण, पूर्वरूप होने पर अन्योऽन्यम् यह रूप होता है। सिद्धान्तकौमुदी में "असमासवद्भावे पूर्वपदस्य सुपः सुर्वक्तव्यः" ऐसा कहा गया है। और यह 'सु' आदेश सभी विभक्तियों में होता है। इसलिये षष्ठ्यन्त के भी उदाहरण दिये गये हैं— ] अन्योन्यस्य ब्राह्मणाः भोजयन्ति। इतरेतरं भोजयन्ति। इतरेतरस्य भोजयन्ति। [ षष्ठ्यन्त प्रयोग में एक दूसरे के सम्बन्धी को भोजन कराते हैं—यह अर्थ समझना चाहिए। यहाँ

❀ स्त्रीनपुंसकयोरुत्तरपदस्य वाम्भावो वक्तव्यः ❀ ( म० भा० ) । अन्योऽन्यामिमे ब्राह्मण्यौ भोजयतः । अन्योऽन्यं भोजयतः । इतरेतरां भोजयतः । इतरेतरं भोजयतः । अन्योऽन्यामिमे ब्राह्मणकुले भोजयतः । [1]अन्योऽन्यमिमे ब्राह्मणकुले भोजयतः । इतरेतरामिमे ब्राह्मणकुले भोजयतः । इतरेतरमिमे ब्राह्मणकुले भोजयतः ॥

**न्यासः**

**स्त्रीनपुंसकयोरित्यादि ।** स्त्रीनपुंसकयोर्यत् सर्वनाम कर्मव्यतीहारे वर्त्तते तदुत्तरपदस्य विकल्पेनाम्भावो वक्तव्यः । उत्तरपदस्येत्यवयवसम्बन्धे षष्ठी, तेनोत्तरपदस्य या विभक्तिरवयवभूता तस्या अयमादेशो भवति । स्थाने षष्ठ्यां ह्यस्यामनेकाल्त्वात् सर्वादेशः स्यात् । **अन्योन्यामिमे ब्राह्मण्यौ भोजयत इति ।** अन्यामित्यस्य द्विर्वचनम्, विभक्तेराम्भावः, पूर्वपदस्य बहुलवचनाद् ह्रस्वत्वम्, पूर्ववद्रुत्वादि । **अन्योन्यमित्यत्र** उत्तरपदस्यापि पूर्ववद् ह्रस्वत्वादिः । **इतरेतरां भोजयत इति ।** समासवद्भावे सति सर्वनाम्नो वृत्तिमात्रे पुंवद्भावेन टापो निवृत्ति । एवमितरेतरमित्यत्रापि ॥ १२ ॥

**पदमञ्जरी**

**योरिति ।** उत्तरपदस्थाया विभक्तेराम्भावः; अन्यथाऽनेकाल्त्वात्स सर्वस्योत्तरपदस्य स्यात् । तत्र 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पूर्वोत्तरपदयोर्द्वयोरपि पुंवद्भावे कृते पक्षे आम्विधिः । अन्याशब्दस्यं तु द्विर्वचने समासवद्भावाभावाद्बहुलवचनात्स्त्रियां टापो निवृत्तिः । नपुंसके च 'अद्डुतरादिभ्यः' इत्यस्य निवृत्तिः । वार्तिकेषु 'कर्मधारयवत्' इति न सम्बध्यत इति सुब्लुगादि न भवति ॥ १२ ॥

**भावबोधिनी**

ध्यान रखना चाहिए कि बहुलग्रहण के कारण 'अन्य' तथा 'पर' का समासवद्भाव नहीं ही होता है किन्तु 'इतर' का नित्य समासवद्भाव होता है । अतः पूर्वपद के सुप् का 'सु' नहीं किया जाता हैं । ]

❀ स्त्रीलिङ्ग तथा नपुंसकलिङ्ग शब्दों में उत्तरपद की विभक्ति का विकल्प से आम्भाव होता है । ❀ उदा० अन्योन्याम् इमे ब्राह्मण्यौ भोजयतः । अन्योऽन्यम् इमे भोजयतः । [ जब आम् होता है तब पहला रूप है । पक्ष में 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' वचन से पुंवद्भाव, द्वितीया एकवचन में अम् होकर दूसरा रूप होता है ] । इतरेतरां ब्राह्मण्यौ भोजयतः । इतरेतरं भोजयतः । नपुंसकलिङ्ग के उदा० अन्योऽन्याम् इमे ब्राह्मणकुले भोजयतः । अन्योऽन्यम् इमे ब्राह्मणकुले भोजयतः । इतरेतरम् इमे ब्राह्मणकुले भोजयतः । [ एक आम् आदेश वाला और दूसरा सामान्य पुंलिङ्गवद्भाव वाला रूप होता है । इसमें उत्तरपद का भी ह्रस्वत्व आदि हो जाता है । ]

**विमर्श**—यहाँ 'कर्मधारयवदुत्तरेषु' इसका अधिकार होने से सभी स्थलों में कर्मधारय मान कर होने वाले सुप्लुक् पुंवद्भाव आदि होने चाहिए, फलतः 'मूले मूले स्थूलाः' आदि कैसे होते हैं ? इसका समाधान कैयट प्रदीप में यह लिखा है—'वार्तिकेषु कर्मधारयवदिति न सम्बध्यते इति सुब्लोपादि न भवति ।' यही कारण है कि 'कर्मव्यतिहारे सर्वनाम्नो द्वे, समासवच्च बहुलम्' ऐसा अतिरिक्त वार्तिक में कहा गया ।

यहाँ उत्तरपद की विभक्ति का जो 'आम्' आदेश कहा गया है वह केवल द्वितीया एकवचन का ही होता है अथवा सभी विभक्तियों का—यह विवादग्रस्त है । 'बहुलग्रहण' के बल से लक्ष्यों की उपपत्ति और अतिप्रसङ्ग का वारण करना चाहिए ॥ १२ ॥

---

१. प्रकाशितेषु प्रायः सर्वेषु संस्करणेषु इदं विकल्पक्षीयं वाक्यं प्रमादात् परित्यक्तम्, औचित्याद् भाष्यादावुपलम्भाच्च अत्र समावेशितमिति त्रिपाठी ।

## ३६२७. अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् ॥ १३ ॥ ( २१४८ )

**प्रिय, सुख—इत्येतयोरन्यतरस्यां द्वे भवतः अकृच्छ्रे द्योत्ये। कृच्छ्रम् = दुःखम्, तदभावोऽकृच्छ्रम्। प्रियप्रियेण ददाति। सुखसुखेन ददाति। प्रियेण ददाति। सुखेन ददाति। अखिद्यमानो ददातीत्यर्थः।**

**अकृच्छ्र इति किम्। प्रियः पुत्रः। सुखो रथः॥**

## ३६२८. यथास्वे यथायथम् ॥ १४ ॥ (२१४९)

**यो य आत्मा यद्यदात्मीयं तत्तद्यथास्वं तस्मिन् यथायथमिति निपात्यते। यथाशब्दस्य द्विर्वचनं नपुंसकलिङ्गता च निपात्यते। ज्ञाताः सर्वे पदार्था यथायथम्। यथास्वभावमित्यर्थः। सर्वेषां तु यथायथं यथात्मीयमित्यर्थः॥**

### न्यासः

**अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्** ॥ नञत्र विपक्षे वर्त्ततेऽधर्मानृतादिवत्। कृच्छ्रम् = दुःखम्, प्रयत्नः = प्रयास इत्यर्थः; स पुनः प्राणिधर्मः। कृच्छ्रविपक्षोऽकृच्छ्रम् प्राणिधर्म एव, यस्मिन् सति प्रयत्नमन्तरेणैव दानादिक्रियां सम्पादयति। तत्र वर्त्तमानयोः प्रियसुखशब्दयोर्द्वे भवतः। **प्रियप्रियेण ददाति**। विना प्रयासेन ददातीत्यर्थः। तृतीयैकवचनान्तस्य द्विर्वचने कृते सुब्लुकि च पुनस्तृतीयैकवचनमेव समासवद्भावेन भवति। **प्रियः पुत्रा, सुखो रथ इति**। नात्र प्रियसुखशब्दौ कृच्छ्रविपक्षे प्राणिधर्मविशेष वर्त्तेते, किं तर्हि ? द्रव्ययोः। पुत्रो हि प्रीणातीति कृत्वा प्रिय इत्युच्यते, रथोऽपि सुखयतीति कृत्वा सुखः॥ १३॥

**यथास्वे यथायथम्** ॥ **यथास्वमिति**। 'यथाऽसादृश्ये' इति वीप्सायामव्ययीभावः। स्वशब्दो ह्यात्मवचनः, आत्मीयवचनो वा—इति दर्शयितुमाह—**यो य आत्मेत्यादि**। **यथायथमिति**। 'ह्रस्वो नपुंसके' इति ह्रस्वः॥ १४॥

### पदमञ्जरी

**अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्** ॥ **प्रियप्रियेणेति**। तृतीयैकवचनान्तस्य द्विर्वचने कर्मधारयवद्भावात् सुब्लुकि पुनस्तदेव वचनम्। अत्यन्तदयितमपि वस्त्वनायासेन ददातीत्यर्थः॥ १३॥

**यथास्वे यथायथम्** ॥ 'यथास्वे' इति 'यथाऽसादृश्ये' इति वीप्सायामव्ययीभावः। स्वशब्द आत्मवचनः, आत्मीयवचनो वेति दर्शयति। **यो य आत्मेति**। ज्ञातिधनवचनस्य तु ग्रहणं न भवति; द्विर्वचनस्य तत्रासमर्थत्वात्॥ १४॥

### भावबोधिनी

अकृच्छ्र अर्थ द्योत्य रहने पर 'प्रिय' और 'सुख' इनका विकल्प से द्वित्व होता है। कृच्छ्र = दुःख, इसका अभाव = अकृच्छ्र है। उदा० प्रियप्रियेण ददाति। [ विना किसी दुःख के, आराम से ही दे देता है। ] सुखसुखेन ददाति। [ विना कष्ट के ही दे देता है। ] पक्ष में—प्रियेण ददाति। सुखेन ददाति। खेद का अनुभव किये विना ही दे देता है। यह अर्थ है।

अकृच्छ्र में—इसका क्या फल है ? प्रियः पुत्रः। सुखः रथः। [ यहाँ धर्म में नहीं अपि तु धर्मी प्राणी या द्रव्य अर्थ में 'प्रिय' 'सुख' प्रयुक्त हैं। अतः द्वित्व नहीं होता। ] ॥ १३॥

जो जो आत्मा है और जो जो आत्मीय है वह वह यथास्वम् है इस अर्थ में 'यथायथम्' ऐसा निपातित होता है। यथा शब्द का द्वित्व और नपुंसकलिङ्गता निपातित होती है। उदा० ज्ञाताः सर्वे पदार्थाः यथायथम्। यथास्वभाव यह अर्थ है अर्थात् सभी पदार्थों का स्वभाव जान लिया—सर्वेषां तु यथायथं ज्ञातम्। यथात्मीयम्—यह अर्थ हैं। [ स्वशब्द के दो अर्थ हैं—(१) आत्मा (२) आत्मीय। सर्वे पदार्थाः यथायथं ज्ञाताः—सभी पदार्थों का स्वभाव समझ लिया। यहाँ 'आत्मा' अर्थ में ही जब 'सर्वेषां पदार्थानां तु यथायथं ज्ञातम्' ऐसा प्रयोग है तब सभी पदार्थों की आत्मीयता = के अनुरूप ज्ञान कर लिया। प्रसङ्ग के अनुरूप अर्थ किया जाता है। ] ॥ १४॥

**३६३९. द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ॥१५॥ (२१५०)**

'द्वन्द्वम्' इति द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावः अत्वं चोत्तरपदस्य निपात्यते रहस्य, मर्यादा-वचन, व्युत्क्रमण, यज्ञपात्र-प्रयोग, अभिव्यक्ति—इत्येतेषु अर्थेषु। तत्र रहस्यं द्वन्द्वशब्दवाच्यम्, इतरे विषयभूताः। द्वन्द्वं मन्त्रयन्ते। मर्यादावचने—मर्यादा = स्थित्यनतिक्रमः। आचतुरं होमे पशवो द्वन्द्वं मिथुनायन्ते[1]। माता पुत्रेण मिथुनं गच्छति, पौत्रेण, तत्पुत्रेणापीति मर्यादार्थः। व्युत्क्रमणे—द्वन्द्वं व्युत्क्रान्ताः।

**न्यासः**

द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु॥ **पूर्वपदस्याम्भाव इत्यादि**। द्विर्वचने कृते द्वि + औ द्वि + औ इति स्थिते सुब्लुकि कृतेऽम्भावोऽत्वञ्चोभयमपीकारस्य क्रियते, यथाक्रमं समुदायात् सुः, 'अतोऽम्' इति कृतेऽमि पूर्वत्वञ्च, अन्यथा हि द्वन्द्वमिति रूपं न सिध्येत्। किं पुनरेतेषु रहस्यादिवाच्येषु द्वन्द्वमिति निपात्यते ? उत विषयभूतेष्वित्यत आह—**तत्रेत्यादि**। रहः = गुप्तिः, तत्र साधु रहस्यम्, 'तत्र साधुः' इति 'प्राग्घिताद् यत्'। अथ वा—रहसि भवमिति दिगादित्वाद् यत्। **मर्यादावचन इति**। मर्यादा = स्थित्यनतिक्रमः, तस्या वचनं मर्यादावचनम्। वचनग्रहणम्—शब्दोपात्तायां मर्यादायां यथा स्यात्, अर्थ-प्रकरणादिना गम्यमानायां मा भूत्। **आचतुरमिति**। 'आङ् मर्यादाभिविध्योः' इत्यव्ययीभावः, 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तष्टच्। उदाहरणे मर्यादार्थमभिव्यक्तीकर्तुमाह—**माता पुत्रेत्यादि**। माता हि

**पदमञ्जरी**

**द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु॥ पूर्वपदस्येति**। द्वि औ द्वि औ इति स्थिते कर्मधारयवद्भावात्सुब्लुकि कृते पूर्वपदावयवभूतस्येकारस्याम्भावः, उत्तरपदावयवस्य चात्वं निपात्यते, चकारान्नपुंसकत्वम्, क्वचिदेकवद्भावश्च निपात्यते, समासान्तोदात्तत्वं तु कर्मधारयवद्भावाद् भवति। **तत्र रहस्यं द्वन्द्वशब्दवाच्यमिति**। द्वाभ्यां निर्वृत्ते रहस्ये योगरूढिरेषेत्यर्थः। **द्वन्द्वं मन्त्रयन्त इति**। द्वौ द्वौ भूत्वा मन्त्रयन्त इत्यर्थः। एवं हि तद्रहस्यं भवति। **आचतुरमिति**। आङभिविधौ। चतुर्णां पूरणे चतुःशब्दो द्रष्टव्यः, आचतुर्थादित्यर्थः। **द्वन्द्वं मिथुनीयन्तीति**। मिथुनशब्देन मैथुनं तत्कर्म लक्ष्यते, तदिच्छतीति क्यच्, प्रायेण **मिथुनायन्त इति** क्यङन्तं पठ्यते, तत्रोपमानार्थो मृग्यः। **माता पुत्रेणेत्यादिना** मर्यादावचने व्यनक्ति। **तत्पुत्रेणापीति**। एतादेव पशूनामायुः। **द्वन्द्वं व्युत्क्रान्ता इति**। द्वौ पक्षौ भूत्वा पृथगवस्थिता

**भावबोधिनी**

द्वन्द्वम्—यहां 'द्वि' शब्द का द्वित्व, पूर्वपद [ के इकार ] का अम् आदेश और उत्तरपद [ के इकार ] का अकार आदेश निपातित होता है—(१) रहस्य, (२) मर्यादावचन, (३) व्युत्क्रमण, (४) यज्ञपात्र-प्रयोग और (५) अभिव्यक्ति—इन अर्थों में। इनमें रहस्य अर्थ तो द्वन्द्व का वाच्य है और दूसरे अर्थ विषयभूत होते हैं। क्रमशः उदा० (१) रहस्य—द्वन्द्वं मन्त्रयते। [ केवल दो लोग ही मिलकर गुप्त मन्त्रणा करता है। 'द्वि' शब्द का द्वित्व—द्वि-द्वि, पूर्वपद के इकार का अम् आदेश और उत्तरपद के इकार का अकार आदेश—द्वम् द्व, म् का अनुस्वार परसवर्ण। यहाँ नपुंसक-लिङ्ग और एकवद्भाव ये भी निपातित होते है—द्वन्द्वम्। ] (२) मर्यादा अर्थ कहने में, मर्यादा = स्थिति का अतिक्रमण न करना। आचतुरं हीमे पशवो द्वन्द्वं मिथुनायन्ते—माता पुत्रेण मिथुनं गच्छति, पौत्रेण मिथुनं गच्छति, तत्पुत्रेणापि मिथुनं गच्छति—इति मर्यादार्थः। ( ये पशु चार पीढ़ियों तक परस्पर मैथुन करते हैं, जैसे गाय या भैंस आदि माता अपने पुत्र के साथ, अपने पौत्र के साथ और अपने प्रपौत्र के साथ संयोग करती हैं, गर्भधारण करती है। इसके आगे नहीं। यही स्थिति का अनतिक्रमण = मर्यादा है। ] (३) व्युत्क्रमण ( = दो दो पक्ष बना लेना )—द्वन्द्वं व्युत्क्रान्ताः। [ दो दो पक्ष बनाकर अलग अलग होकर चले गये। व्युत्क्रमण = भेद, अलग अलग हो जाना। दो वर्गों के सम्बन्ध से अलग अलग स्थित हुए लोग 'द्वन्द्वं व्युत्क्रान्ताः' ऐसे कहे जाते हैं। ] (४) यज्ञीयपात्र के प्रयोग में—'द्वन्द्वं न्यञ्चि यज्ञपात्राणि प्रयुनक्ति धीरः। ( धैर्यवान् व्यक्ति उलटे हुए यज्ञपात्रों को दो दो [ मिलाकर वेदी में ] रखता है। ) (५) अभिव्यक्ति में—द्वन्द्वं नारदपर्वतौ। द्वन्द्वं सकर्षणवासुदेवौ। साहचर्य के द्वारा दोनों अर्थों की अभिव्यक्ति हो

१. पदमञ्जरीकारो 'मिथुनीयन्ती'ति पाठं समर्थयते।

व्युत्क्रमणम्=भेदः, पृथगवस्थानम्। द्विवर्गसम्बन्धेन पृथगवस्थिता द्वन्द्वं व्युत्क्रान्ता इत्युच्यन्ते। यज्ञपात्रप्रयोगे—द्वन्द्वं न्यञ्चि यज्ञपात्राणि प्रयुनक्ति धीरः। अभिव्यक्तौ—द्वन्द्वं नारदपर्वतौ। द्वन्द्वं संकर्षणवासुदेवौ। द्वावप्यभिव्यक्तौ साहचर्येणेत्यर्थः।

अन्यत्रापि द्वन्द्वमित्येतद् दृश्यते, तदर्थं योगविभागः कर्त्तव्यः। द्वन्द्वं युद्धं वर्त्तते। द्वन्द्वानि सहते धीरः। "चार्थे द्वन्द्व" (२।२।२९) इति॥

## ३६३०. पदस्य ॥ १६ ॥ (४०१)

'पदस्य' इत्ययमधिकारः प्रागपदान्ताधिकारात् (८।३।५५)। यदित ऊर्ध्वमनुक्रमिष्यामः पदस्येत्येवं तद्वेदितव्यम्। वक्ष्यति—"'संयोगान्तस्य लोपः' (८।२।२३) पचन्। यजन्। पदस्येति किम्? पचन्तौ। यजन्तौ।

न्यासः

मिथुनाय चतुरः सन्तानजान्[1] प्राप्नोति, न तु ततोऽधिकान् पुत्रपौत्रप्रपौत्रतत्पुत्रान्। **मर्यादार्थ इति।** मर्यादैवार्थो मयादार्थः। **प्रयुनक्तीति।** उपकल्पयतीत्यर्थः। **द्वन्द्वानीति।** शीतोष्णादीनि सुखदुःखहेतूनित्यर्थः। यदि योगविभागः क्रियते, रहस्यादि ग्रहणमनर्थकम्? नानर्थकम्; प्रपञ्चार्थत्वात्। द्वन्द्वमित्यस्य वा योगविभागस्यासर्वविषयज्ञापनार्थत्वात्॥ १५॥

**पदस्य॥ प्रागपदान्ताधिकारादिति।** अपदान्तस्य मूर्धन्यः' इत्यतः प्राक्। अनन्तरेषु योगेष्वामन्त्रितादेः सुबन्तस्य तिङन्तस्य च यत् कार्यं विधीयते तत्रान्तरेणापि पदाधिकारं पदस्यैव कार्यं लभ्यते, अतस्तानुल्लङ्घ्य यत्र पदाधिकारस्योपयोगस्तमेवोपन्यस्यति। **वक्ष्यति—'संयोगान्तस्य लोपः'** इति। 'षष्ठी

पदमञ्जरी

इत्यर्थः। स्वार्थे द्विर्वचनमेकवद्भावश्चेति। **द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति**=सादयति, न्यञ्चि=न्यग्भूतानि, अवाग्बिलानि। द्वन्द्वं स्फ्यश्च कपालानि चेति द्वे द्वे इत्यर्थः। अत्र वीप्सायां द्विर्वचनम्, अम्भावादि, एकवद्भावश्च। **द्वावभिव्यक्तौ साहचर्येणेत्यर्थं इति।** अत्र स्वार्थे द्विर्वचनमेकवद्भावादिकं सर्वं निपात्यते।

**द्वन्द्वं युद्धमिति।** अत्रापि वीप्सायां द्विर्वचनम्। **द्वन्द्वानि सहन्त इति।** शीतमुष्णं चेत्येकं द्वन्द्वम्, सुखदुःखे चापरम्, क्षुत्तृष्णे चापरम्। अत्रापि स्वार्थे द्विर्वचनमेकवद्भावादि, तत्रैकशेषवशाद्बहुत्वम्। **चार्थे द्वन्द्व इति।** द्वे चार्थनिर्दिष्टे पदे समस्ते द्वन्द्वः। अत्रापि स्वार्थे द्विर्वचनादि, पुंस्त्वं च॥ १५॥

**पदस्य॥ प्रागपदान्ताधिकारादिति।** 'अपदान्तस्य मूर्द्धन्यः' इत्यत्र तु प्रकरणे विरोध्युपादानान्नाधिक्रियते। **पचन्तौ, यजन्ताविति।** संयोगान्तस्येऽपि लोपो न भवति। एवं राजानावित्यत्र नलोपो न भवति, प्रशामावित्यादौ 'मो नो धातोः' इति नत्वं न भवति। अनन्तरेषु योगेष्वामन्त्रितादेः सुबन्तस्य तिङन्तस्य च

भावबोधिनी

हो जाती है अर्थात् नारद और पर्वत का साहचर्य प्रतीत हो जाता है। [ यहाँ पर स्वार्थ में ही द्वित्व और एकवद्भाव आदि पूर्वोक्त सभी कार्य निपातित होते हैं। ]

अन्य अर्थों में भी 'द्वन्द्वम्' इसका प्रयोग देखा जाता है, इसके लिये प्रस्तुत सूत्र का योगविभाग कर लेना चाहिए। उदा० द्वन्द्वं युद्धं प्रवर्तते। [ दो का आपस में युद्ध हो रहा है। ] द्वन्द्वानि सहते धीरः। [ धैर्यवान् पुरुष मानसिक कष्ट सह लेता है। ] "च के अर्थ में द्वन्द्व" समास होता है। [ द्वन्द्वः—इसमें स्वार्थ में द्वित्व आदि के साथ पुंस्त्व भी निपातित होता है। अतः लक्ष्य के अनुसार पुंस्त्व या नपुंसकत्व का निपातन करना चाहिए। ) ॥ १५ ॥

'पदस्य' ( पद का )—यह अधिकार 'अपदान्त' अर्थात् 'अपदान्तस्य मूर्धन्यः' ८।३।५४ से पहले तक चलता है। इसके आगे जिन्हें कहेंगे उन्हें 'वे पद के' होते हैं' ऐसा समझना चाहिए। जैसे कहेंगे—'संयोगान्त का लोप होता है। ( ८।२।२३ ) [ अर्थ होगा संयोगान्त पद का लोप होता है। इसलिये ] पचन्। यजन्। [ पच्+शतृ यज+शतृ

1. 'न' इसन्तानानिति पाठा०।

**वक्ष्यमाणवाक्यापेक्षया 'पदस्य' इत्यधिकृतस्य षष्ठ्यर्थव्यवस्था द्रष्टव्या—क्वचित् स्थानषष्ठी, क्वचिदवयवषष्ठी ॥**

**न्यासः**

स्थानेयोगा' इति नियमात् पदस्येत्येषा स्थानषष्ठी। स्थानषष्ठ्याञ्चास्याम् 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इत्यस्यायमर्थो जायते—उदात्तस्वरितयोर्यणः परो योऽनुदात्तस्तदन्तस्य पदस्य स्वरितो भवतीति। तथा चात्रैव स्यात्—कुमार्याविति, कुमार्य इत्यत्र न स्यात्। न ह्येतदुदात्तस्वरितयोर्यणः परो योऽनुदात्तस्तदन्तं पदम्, किं तर्हि? सकारान्तम्। 'एकादेश उदात्तेनोदात्तः' इत्यत्रापि स्थानषष्ठ्यामस्यामयमर्थो जायते—उदात्तानुदात्तयोर्य एकादेशस्तदन्तस्य पदस्योदात्तो भवति। तथा चात्रैव स्याद्—वृक्षाविति. वृक्षा इत्यत्र न स्यात्। न ह्यत्रोदात्तानुदात्तयोर्य एकादेशस्तदन्तं पदम्, किं तर्हि? सान्तमिति यश्चोदयेत्, तं प्रत्याह—**वक्ष्यमाणवाक्यापेक्षयेत्यादि**। हेतावियं तृतीया। वक्ष्यमाणानां वाक्यानां याऽपेक्षा तया हेतुभूतया पदस्याधिकृतस्य षष्ठ्यर्थव्यवस्था द्रष्टव्या। व्यवस्था = नियम इत्यर्थः। वक्ष्यमाणानि हि वाक्यानि कानिचित् 'संयोगान्तस्य लोपः' इत्येवमादीनि पदस्येति स्थानषष्ठीमपेक्षन्ते। कानिचिद् 'उदात्तस्वरितयोर्यणः' इत्येवमादीन्यवयवषष्ठीमिति। अत एव परापेक्षया षष्ठ्यर्थे नियमो भवति। अधिकारा हि परार्था भवन्ति। एवञ्चैषां परार्थता भवति यदि ते परापेक्षानुरोधेनार्थमात्मसात्कुर्वन्ति। **क्वचिदित्यादिना** तामेव षष्ठ्यर्थव्यवस्थां दर्शयति। किं पुनः कारणम् 'षष्ठी स्थानेयोगा' इत्येष नियमोऽत्र न प्रवर्त्तते? एवं मन्यते—सम्बन्ध्यन्तरा-

**पदमञ्जरी**

पदस्यैव कार्यविधानात्तेषामुल्लङ्घनम्। न च समर्थपरिभाषोपस्थानं तेषु प्रयोजनम्, अनन्तरेणाप्येतं वस्तुतः पदकार्यत्वादेव सिद्धेः। किञ्च—'समानवाक्ये निघातयुष्मदस्मदादेशाः' इति वक्ष्यते। कृत्वादीनि त्ववयवस्य भत्वेऽपि समुदायस्य पदत्वाश्रयेणेष्यन्त एव—वक्तरि, दोग्धरीति। तस्मान्न भसंज्ञकव्यावृत्तिरपि प्रयोजनम्।

'षष्ठी स्थानेयोगा' इति वचनात् 'पदस्य' इति स्थानषष्ठी, ततश्च 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इत्यस्यायमर्थो भवति—उदात्तस्वरितयोर्यो यण् ततः परो योऽनुदात्तस्तदन्तस्य पदस्य स्वरितत्वमलोऽन्त्यस्य भवतीति। ततश्चात्रैव स्यात्—कुमार्याविति; कुमार्य इत्यत्र न स्यात्, सकारो ह्यत्र पदस्यान्तः; हल्स्वरप्राप्तौ च व्यञ्जनमविद्यमानवद्भवति। एवम् 'एकादेश उदात्तेनोदात्तः' इत्यत्रापि अयमर्थो भवति—उदात्तानुदात्तयोर्य एकादेशस्तदन्तस्य पदस्यालोन्त्यस्यादेशो भवतीति। ततश्चेहैव स्यात्—वृक्षाविति; वृक्षानित्यत्र न स्यात्, नकारो ह्यत्र पदस्यान्त्यः?—**वक्ष्यमाणवाक्यापेक्षयेति**। अयमभिप्रायः—अधिकारोऽयं परार्थः, परिभाषापि परार्था, ततश्च 'गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्' इति न्यायेन नात्र स्थानेयोगपरिभाषोपतिष्ठते। यत्र त्वस्या अधिकारो वक्ष्यमाणेषु वाक्येषु तेष्वेवोपस्थानम्, तत्र विशेषविशेष्यभावे कामचाराद्यणेकादेशस्वरयोः 'पदस्य' इत्यनुवृत्तं कार्यिविशेषणार्थम्, न तु कार्यप्रतिपत्त्यर्थम्। तेन पदावयवयोरनुदात्तैकादेशयोः स्वरविधानादनन्त्ययोरपि भवति। संयोगान्तलोपादौ तु संयोगादिना पदस्य विशेषणात् स्थानषष्ठी, तस्माद्वक्ष्यमाणानि वाक्यान्यपेक्ष्य पर्यालोच्य पदस्येति षष्ठ्या अर्थो व्यवस्थाप्यः, न त्वेतत्सूत्रपर्यालोचनयेति। व्यवस्थामेव दर्शयति—**क्वचिदिति**। यद्येषा स्थानषष्ठ्येव स्यात् 'नलोपः प्रातिपदिकान्तस्य' इत्यत्रान्तग्रहणमनर्थकं

**भावबोधिनी**

=पचत्+सु, यजत्+सु में 'उगिदचाम्' से नुम् करने के बाद पदान्त संयोग के अन्त 'त्' का लोप होता है।] पद का—इसका प्रयोजन क्या है? पचन्तौ। यजन्तौ। [यहाँ औ मिलाकर पद बनता है। अतः पद के अन्त में संयोग न होने से लोप नहीं होता है। यदि 'पदस्य' न होता तो किसी भी संयोग के अन्त का लोप होने लग जाता।]

आगे कहे जाने वाले वाक्यों की अपेक्षा करके 'पदस्य' इस अधिकार वाले की षष्ठी के अर्थ की व्याख्या करनी चाहिए—कहीं स्थानषष्ठी है और कहीं अवयवषष्ठी। [इस कारण कहीं पद के स्थान पर कार्य किया जाता

**३६३१. पदात् ॥ १७ ॥ (४०२)**

पदादित्ययमधिकारः प्राक् 'कुत्सने च सुप्यगोत्रादौ' (८।१।६९) इत्येतस्माद्। यदित ऊर्ध्वमनुक्रमिष्यामः पदादित्येवं तद्वेदितव्यम्। वक्ष्यति—"'आमन्त्रितस्य' (८।१।१९)। आमन्त्रितस्य पदात्परस्यानुदात्तादेशो भवतीति। पचसि देवदत्त। पदादिति किम्? देवदत्त पचसि॥

**३६३२. अनुदात्तं सर्वमपादादौ ॥ १८ ॥ (४०३)**

'अनुदात्तम्' इति च, 'सर्वम्' इति च; 'अपादादौ' इति च—एतत्त्रयमधिकृतं वेदितव्यमापाद-

**न्यासः**

पेक्षया नियमोऽयम्। योगो हि सम्बन्धः, स चानेकसम्बन्ध्याधारः। न चेहाधिकारसूत्रे सम्बन्ध्यन्तरं विद्यते, अतो नास्त्येव तस्येहोपस्थानमिति॥ १६॥

**पदात् ॥ प्राक् कुत्सने च सुप्यगोत्रादावित्यादि।** कुत एतत्? अत्र केचिदाहुः—'सुपीति येयं सप्तमी तया पदादित्यस्याः पञ्चम्या निमित्तभावस्य बाधितत्वान्नोत्सहते प्रवर्त्तितुम्, अतो बाध्यते पञ्चम्या निमित्तभावः' इति, एतच्चायुक्तम्; न हि सप्तमीपञ्चम्योर्निमित्तत्वे सत्याश्रीयमाणे कश्चिद्विरोधः। तत्रैवमभिसम्बन्धः स्यात्—पदात् परं यत् तिङन्तं कुत्सनवाचिनि सुबन्ते परतस्तस्मिन्निहन्यत इति, ततश्चेहैव स्याद्—देवदत्तः पचति पूतीति, इह तु न स्यात्—पचति पूतीति। किञ्च 'चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः' इत्यत्रापि पदादित्यस्यानुवृत्तिर्न स्यात्। सप्तम्या 'पदात्' इत्यस्याः पञ्चम्या बाधितत्वात्, ततश्च निघातार्थमेव सूत्रं स्यात्। चनादिप्रयोगे सति विज्ञायेत—तस्मादिति। अतोऽधिकाराणां प्रवृत्तिनिवृत्ती भवत इति समाधेयम्। अथ वा—पदादित्येतत् प्रतिषेधेन सम्बद्धम्। अतः 'कुत्सने' इत्यत्र प्रतिषेधे निवृत्ते 'पदात्' इत्येतदपि निवर्त्तते॥ १७॥

**अनुदात्तं सर्वमपादादौ ॥ यत् ते नियतमित्यादि।** अत्र मृत्यो—इत्येतदामन्त्रितं पदं भवति रजसमित्येतस्मात् पदात् परम्। किन्तु मृत्यो अनवधृष्यमित्यस्य पादस्यादौ वर्त्तत इति न भवति निघातादेशः। अस्मिन्नसति 'आमन्त्रितस्य' च इत्यामन्त्रितस्य षाष्ठिकमेवाद्युदात्तत्वं भवति।

**पदमञ्जरी**

स्यात्। तद्धि पदान्तस्य यथा स्यात्, पदावयवस्य मा भूदित्येवमर्थम्। स्थानषष्ठ्यां तु 'अलोन्त्यस्य' इत्यस्य सिद्धत्वादन्तग्रहणमनर्थकं स्यात्। तस्मादन्तग्रहणात् क्वचिद्विशेषणषष्ठ्यपि विज्ञायते॥ १६॥

**पदात् ॥ प्राक् कुत्सने च सुप्यगोत्रादावित्येतस्मादिति।** यदि त्वत्र पदादित्येतदनुवर्तेत, यत्पचति पूतीत्यत्रैव तिङन्तस्य निघातः स्यात्, न तु पचति पूतीत्यत्र॥ १७॥

**अनुदात्तं सर्वमपादादौ ॥ यत्ते नियतमित्यादि।** अत्र मृत्यो इत्यस्य पदादौ निघाताभावः, यदङ्ग-दाशुषे त्वमित्येकः पादः, अग्ने इत्यपरः, अग्ने भद्रं करिष्यतीत्यादीनि चोदाहरणानि।

**भावबोधिनी**

है और कहीं पर पद के अवयव के स्थान पर कार्य किया जाता है। अर्थात् लक्ष्य ही अर्थ का निर्णायक मानना चाहिए] ॥ १६ ॥

'पदात् = पद से परे' यह अधिकार चलता है—'कुत्सने च सुप्यगोत्रादौ (८।१।६९) इस सूत्र के पहले तक। इसके आगे जिन्हें कहेंगे, जिनका विधान करेंगे वे 'पदात्' (पद से परे को होगें)। कहेंगे आमन्त्रितस्य (८।१।१९) पद से परे आमन्त्रित का अनुदात्त आदेश होता है। उदा० पचसि देवदत्त! (हे देवदत्त! पका रहे हो) पद से परे का—इसका क्या फल है? देवदत्त! पचसि। [यहाँ आमन्त्रित = सम्बोधनान्त पहले है, किसी से परे नहीं है अतः अनुदात्त न होकर आद्युदात्त ही रहता है। आमन्त्रित = सम्बोधन के प्रयोग में लोट् या लिङ् का प्रयोग अधिक उचित किन्तु लट् का ही प्रयोग किया गया है।] ॥ १७ ॥

'अनुदात्तम्' 'सर्वम्' तथा 'अपादादौ' (अपाद के आदि में सभी अनुदात्त होते हैं)—इन तीनों का अधिकार इस प्रथम पाद की समाप्ति तक समझना चाहिए। इसके आगे जो कहेंगे वह 'अपाद के आदि में सब अनुदात्त होवा

**परिसमाप्तेः ।** इत उत्तरं यद्वक्ष्यामः 'अनुदात्तं सर्वमपादादौ' इत्येवं तद्वेदितव्यम् । वक्ष्यति—"'आमन्त्रितस्य च' ( ८।१।१९ ) इति । पचसि देवदत्त । अपादादाविति किम् ? यत्ते नियतं रजसं मृत्यो अनवधृष्यम् ( अ० वे० ८।२।१० ) । 'बहुवचनस्य वस्नसौ' ( ८।१।२१ ) । ग्रामो वः स्वम् । जनपदो नः स्वम्" ।

अपादादाविति किम् ?

रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता ।
स एव नाथो भगवानस्माकं शत्रुमर्दनः ॥ ?

पादग्रहणेनात्र ऋक्पादः, श्लोकपादश्च गृह्यते ।

**न्यासः**

**रुद्रो विश्वेत्यादि ।** अत्र देवः—इत्यस्मात् पदात् परं युष्माकमित्येतत् पदं भवति, किन्तु युष्माकं कुलदेवतेत्यस्य पादस्यादौ वर्तत इति न भवति वसादेशः । अनन्तरेऽपि प्रत्युदाहरणेऽस्माकं शत्रुमर्दन इत्यस्य पादस्यादौ वर्ततेऽस्माकमित्येतत् पदम् । तेन भगवानित्यस्मात् पदात् परस्यापि तस्य नसादेशो न भवति ।

**पादग्रहणेनात्र ऋक्पादः श्लोकपादश्च गृह्यत इति ।** विशेषानुपादानात् ।

अथ सर्वग्रहणं किमर्थम्, यावता 'अनुदात्तं पदमेकवर्जम्' इति पदेषु स्वरित उदात्तो वैक एव भवति तस्य चानुदात्त आदिष्टे सर्वमेवानुदात्तं पदं जायते ? इत्याह—**सर्वग्रहणमित्यादि । अनूद्यमानमित्यादिना** सर्वग्रहणस्य प्रयोजनमाचष्टे । तद् द्विविधं पदम्—अनूद्यमानम्, विधीयमानञ्च । तत्र यत् सिद्धमेव कार्यान्तरार्थं संकीर्त्यते तदनूद्यमानम् पदम्, यत्त्वपूर्वमेव विधीयते तद्विधीयमानम्; तदुभयमप्यनुदात्तं यथा स्यादित्येवमर्थं सर्वग्रहणम् । तेन किं सिद्धं भवति ? इत्याह—**तेनेत्यादि ।** युष्मदस्मदादेशा हि विधीयमानत्वादसिद्धसत्ताकाः । सिद्धस्य हि वस्तुनो धर्मान्तरं शक्यते कर्त्तुम्, यथा—निष्पन्नरूपस्य वाससो रागः,

**पदमञ्जरी**

**रुद्रो विश्वेश्वर इत्यादि ।** अत्र युष्माकम्, अस्माकमित्यनयोरादेशाभावः ।

**ऋक्पादः श्लोकपादश्च गृह्यते इति ।** विशेषानुपादानात् । अथ सर्वग्रहणं किमर्थम्, यावता 'अनुदात्तं पदमेकवर्जम्' इति वचनादेकस्मिन्पदे एक एवोदात्तः स्वरितो वा सम्भवति । ये तु व्युदात्ताः—'उभे वनस्पत्यादिषु युगपत्' इति, न येषामत्र प्रकरणे क्वचिदनुदात्तत्वं विधीयते । यदा तु तेषामामन्त्रितत्वम्, तदा व्युदात्तत्वमेव । इदं तर्हि प्रयोजनम्—अनादेरप्युदात्तस्यानुदात्तत्वं यथा स्यात्, अन्यथा पदादित्यधिकाराद् 'आदेः परस्य' इत्यादेरेव स्यात्, ततश्च 'तिङ्ङतिङः' इति इहैव स्यात्—देवदत्तः पचतीति, अत्र हि शप्तिपावनुदात्तौ, धातोः स्वरः; इह तु न स्यात्—देवदत्तः करोतीति, विकरणस्वरेण मध्योदात्तमेतत् पदम् । सर्वग्रहणे तु सति पदस्य सर्वोऽवयवोऽनुदात्तो भवतीत्यर्थः सम्पद्यते, लुटि प्रतिषेधात्सिद्धम्, यदयं 'न लुट्' इति प्रतिषेधं शास्ति, तज्ज्ञापयति—'नात्रादेः परस्येत्येतव्द्याप्रियते' इति । न हि लुडन्तं किञ्चिदाद्यु-

**भावबोधिनी**

है ।' ऐसा समझना चाहिए । कहेंगे 'आमन्त्रित का' (८।१।१९) (पद परे से अपाद के आदि में विद्यमान आमन्त्रित के सभी अनुदात्त हो जाते हैं । ) उदा० पचसि देवदत्त । [ यहाँ देवदत्त के सभी अनुदात्त स्वर हो जाते हैं । ]

पाद के आदि में न हो—इसका क्या फल है ? "यत्ते नियतं रजसं मृत्यो अनवधृष्यम् । ( यहाँ 'मृत्यो' यह आमन्त्रित है किन्तु पाद के आदि में है । अतः सर्वानुदात्त न होकर केवल आद्युदात्त होता है । 'युष्मद् अस्मद् के बहुवचन के वस्, नस् ये आदेश हो जाते है और अनुदात्त होते हैं । ( ८।१।२१ ) ग्रामो वः स्वम् । जनपदा नः स्वम् । यहाँ वस् तथा नस् अनुदात्त हैं । )

पाद के आदि में न हो—इसका क्या फल है ? 'विश्वेश्वर रुद्र तुम्हारे कुल देवता है । वही शत्रुमर्दन हमारे भी नाथ=स्वामी हैं । ( यहाँ 'अस्माकम्' का 'नस्' आदेश नहीं होता है क्योंकि पाद के आदि में हैं । ]

पाद-ग्रहण से यहाँ ऋचा का पाद और सामान्य श्लोक का पाद—सभी लिये जाते हैं ।

**सर्वग्रहणं सर्वमनूद्यमानं विधीयमानं चानुदात्तं यथा स्यादिति। तेन युष्मदस्मदादेशानामपि वाक्यभेदेनानुदात्तत्वं विधीयते।**

**युष्मदस्मदादेशाश्च सर्वत्र सुबन्तस्य पदस्य यथा स्युः—यत्रापि स्वादिपदं पदसंज्ञं भवति। ग्रामो**

**न्यासः**

नानिष्पन्नस्य; तथा तस्यैवानुपजातावस्थस्य। तत्रासति सर्वग्रहणे यदेव सिद्धसत्ताकं पदमनूद्यमानमामन्त्रितादि, तस्यैवानुदात्तत्वं विधीयते, न तु युष्मदस्मदादेशानाम्। सर्वग्रहणे तु सति तेषामपि विधीयते। अथ क्रियमाणेऽपि सर्वग्रहणे कथं युस्मदस्मदादेशानामप्यनुदात्तत्वं शक्यं विधातुम्? न हि तेन तेषां विधानकाले यदसिद्धत्वं तदपनीतम्? इत्यत आह—**वाक्यभेदेनेत्यादि**। सर्वग्रहणसामर्थ्यादत्र वाक्यभेद उक्तो भवति, न ह्यन्यथा सर्वग्रहणस्यानुदात्तत्वं शक्यं विज्ञातुम्। तत्रैकेन वाक्येनादेशा विधीयन्ते द्वितीयेन च तेषामनुदात्तत्वम्। कथं तर्हि विधीयमानमित्युक्तम्, यावता विहितानामेव युस्मदस्मदादेशानां वाक्यान्तरेणानुदात्तत्वं विधीयते? यदिह प्रकरणे विधीयमानं तद्विहितं सदुत्तरकालमनुदात्तं यथा स्यात्—इत्ययं तत्राभिप्रायो वेदितव्यः। यद्यसिद्धस्य धर्मान्तरमशक्यं विधातुम्, तत्कथम् 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यत्र विधीयमानस्याट उदात्तत्वं विधीयते? तत्रापि वचनप्रामाण्याद् वाक्यभेदः कृतो भवेत्—तत्रैकेन वाक्येनाड् विधीयते, अपरेण तु विहितस्योदात्तत्वम्; इह त्वसति सर्वग्रहणे वाक्यभेदो न लभ्यत इत्यनुदात्तत्वमेव न स्यात्, अनुदात्तवचतस्यामन्त्रितादिषु चरितार्थत्वात्।

**युस्मदस्मदादेशाश्चेति**। चशब्दः प्रयोजनान्तरसमुच्चये। इदञ्चान्यत् सर्वग्रहणस्य प्रयोजनम्—

**पदमञ्जरी**

दात्तमस्ति। एवमपि ज्ञापकेनापवादे आदिविधावपनीते अलोऽन्त्यस्यैव स्याद्—उभौ कुरुत इत्यादौ? अत्र लसार्वधातुकस्य प्रत्ययस्वरेणान्तोदात्तत्वं विकरणस्य तु निघातः, न तु विकरणस्वरः सतिशिष्टोऽपि सार्वधातुकस्वरं बाधते, तासेः लसार्वधातुकानुदात्तत्वविधानेन ज्ञापनात्। एवं तर्हि लृटि प्रतिषेधात्सिद्धम्, यदयं 'गत्यर्थलोटा लृण्न चेत्' इति लृडन्तस्य प्रतिषेधं शास्ति, तज्ज्ञापयति—नात्र 'अलोऽन्त्यस्य' इत्येतव्द्याप्रियत इति, न हि लृडन्तं किञ्चिदन्तोदात्तमस्ति, अदुपदेशात्परं लसार्वधातुकं निहन्यते? नैतदस्ति; ज्ञापकमिडर्थमेतत् स्यात् भोक्ष्य इति। एतद्धयेकादेशस्वरेणान्तोदात्तम्।

एवं तर्ह्युक्तमेतत्—पदस्येति क्वचिद्विशेषणषष्ठ्यपि भवति न स्थानषष्ठ्येवेति, ततः किम्? अनुदात्तविधौ विशेषषष्ठ्याश्रयिष्यते, तत्सामानाधिकरण्यात्तिङिति षष्ठ्यर्थे प्रथमा, तिङन्तस्य पदस्यावयोऽजनुदात्तो भवतीत्यर्थः, तत्र स्थानषष्ठ्यभावाद् 'अलोऽन्त्यस्य' इति न प्रवर्त्तते, तस्मान्नार्थः सर्वग्रहणेन? इत्यत आह—**सर्वग्रहणमित्यादि**। असति सर्वग्रहणे यत्र विधेयान्तरं नास्त्यामन्त्रितस्येत्यादौ, तत्रैवानुदात्तत्वं विधीयेत। तत्र ह्येतद्विधानार्थमामन्त्रिताद्यनूद्यते, विधेयान्तरसद्भावे तु न तस्यानुदात्तत्वं विधीयेत; वाक्यभेदप्रसङ्गात्। तथा हि—सिद्धस्य वस्तुनो धर्मान्तरं शक्यते विधातुं नासिद्धस्य, न ह्यसति कुड्ये चित्रकर्म; ततश्च वांनावादय एकेन वाक्येन विधेयाः, अपरेण च तेषामनुदात्तत्वमिति वाक्यभेदः। विशिष्टविधानेऽप्यनेकार्थविधानाद्विधिगौरवलक्षणो वाक्यभेदः स्यादेव। सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते। सति तु सर्वग्रहणे तत्सामर्थ्याद्वाक्यभेदः सह्यते? इत्याह—**तेनेति**।

प्रयोजनान्तरमाह—**युष्मदस्मदादेशाश्च सर्वस्य सुबन्तस्य यथा स्युरिति**। अन्यथा केवलयोर्युष्मद-

**भावबोधिनी**

'सर्वम्' का ग्रहण सभी—उद्देश्य और विधीयमान अनुदात्त हो सकें—इसके लिये है। इसलिये युष्मद् तथा अस्मद् के होने वाले आदेशों का भी वाक्यभेद से अनुदात्तत्व किया जाता है। [ अतः 'युष्माकम्' और 'वस्' 'अस्माकम्' और 'नस्' दोनों का ही सर्वानुदात्तत्व फलित होता है। सर्वग्रहण से वाक्यभेद होने से ऐसा सम्भव होता है। ]

युष्मद् तथा अस्मद् के आदेश सम्पूर्ण सुबन्त पद के स्थान पर जिस प्रकार से हो सकें ( यह भी 'सर्वम्' ग्रहण का फल है )—जहाँ 'स्वादिष्वसर्वनामस्थाने' सूत्र से पद संज्ञा होती है वहाँ भी हो। उदा० ग्रामो वां दीयते।

वां दीयते । जनपदो नौ दीयते ॥

### ३६३३. आमन्त्रितस्य च ॥ १९ ॥ (३६५४)

**आमन्त्रितस्य पदस्य पदात्परस्यापादादौ वर्त्तमानस्य सर्वस्यानुदात्तो भवति । पचसि देवदत्त । आमन्त्रिताद्युदात्तत्वे प्राप्ते वचनम् ।**

**❀ समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः ❀ ( म० भा० ) । इह मा भवन्—अयं दण्डो**

**न्यासः**

युस्मदस्मदोर्वान्नावादय आदेशाः सर्वस्य सुबन्तस्य पदस्य यथा स्युरिति; अन्यथा ह्यसति सर्वग्रहणे 'युस्मदस्मदोः' इति षष्ठीनिर्द्देशाद् विभक्तिं विहाय तयोः केवलयोरेव स्युः । ननु च 'पदस्य' इति वर्तते, विभक्त्यन्तं हि पदम्, तत्रान्तरेणापि सर्वग्रहणं सर्वस्य सविभक्तिकस्यैव पदस्य भविष्यति ? इत्यत आह— **यत्रापीत्यादि** । स्वादौ पदं स्वादिपदम्, 'सप्तमी' इति योगाविभागात् समासः; तत् पुनर्यस्य 'स्वादिष्व-सर्वनामस्थाने' इति पदसंज्ञा विहिता । असति सर्वग्रहणे यत्र विभक्त्यन्तं पदं तत्रैव सविभक्तिकस्य पदस्य स्युः । यत्र विभक्तौ परतः पूर्वं पदं तत्र न स्युः, इष्यन्ते च तत्रापि सर्वस्य । तस्माद् यत्रापि स्वादिपदं चतुर्थीद्विवचनादौ तत्रापि सर्वस्य सुबन्तस्य तथा स्युः इत्येवमर्थं 'सर्वम्' इत्युच्यते । ननु चामन्त्रितस्य पदात् परस्यानुदात्तत्वं वक्ष्यति । तत्र नाप्राप्ते आमन्त्रिताद्युदात्तत्व इदमनुदात्तत्वमारभ्यत इति तस्यापवादः, ततश्च तेन तस्मिन् बाधिते प्रकृतिस्वरत्वमामन्त्रितस्यापद्येत; सर्वग्रहणात् तु सर्वस्वरप्राप्तिरामन्त्रितानुदात्त-त्वेन बाध्यते, तस्मात् सर्वस्वरप्राप्तिबाधनार्थमपि सर्वग्रहणं कस्मान्न भवति ? नार्हत्येवं भवितुम्; अनुदात्त-शब्दो ह्ययमामन्त्रितसमानाधिकरणः सर्वस्वरप्राप्तिं बाधिष्यते । नाह्याद्युदात्तत्वे प्रतिषिद्धे प्रकृतिस्वरे क्रियमाणेऽनुदात्तशब्देनामन्त्रितमुच्यते । तस्मात् पूर्वोक्तमेव सर्वग्रहणस्य प्रयोजनम् ॥ १८ ॥

**आमन्त्रितस्य च** ॥ आमन्त्रिताद्युदात्तत्वे प्राप्त इदमुच्यते । इह पदाधिकारमात्रं प्रकृत्य निघात-युष्मदादेशा विधीयमाना यत्रापि नेष्यन्ते, तत्रापि प्रसजन्ति । यत्रापि क्वचिदिष्यन्ते, तत्रापि क्वचिन्न प्राप्नु-वन्ति, अत एतद्दोषपरिजिहीर्षया—**समानवाक्य इत्यादि** । यस्मात् पदात् परस्यामन्त्रितादेर्निघातादि कार्यं विधीयते, तयोः समान एकस्मिन् वाक्य आधारभूते सति निघातादयो विधीयन्त इति वक्तव्यम् । किमर्थम् ?

**पदमञ्जरी**

स्मदोरेव स्युः, षष्ठ्येकवचने ङसोऽशि 'ङसिङसोश्च' इति पूर्वेकादेशे यद्यपि दोषाभावः; तथापि वचनान्तरे दोषप्रसङ्गः । सर्वग्रहणे तु सति युष्मदस्मद्भ्यां तदवयवकं पदं लक्ष्यत इति सर्वस्य पदस्य वांनावादयो भवन्तीति । ननु च पदस्येति वर्तते, विभक्त्यन्तं च पदम्, तत्रान्तरेणापि सर्वग्रहणं विभक्त्यन्तस्य भविष्यति ? इत्यत आह—**यत्रापीति** । भवेदेवं यत्र विभक्त्यन्तं पदम्, यत्र तु विभक्तौ पदं तत्र युष्मदस्मदोरेव प्रसङ्ग इत्यर्थः । **ग्रामो वां दीयत इति** । चतुर्थीद्विवचने, 'स्वादिषु' इति पूर्वं पदं भवति ॥ १८ ॥

**आमन्त्रितस्य च** ॥ **सर्वमनुदात्तं भवतीति** । आमन्त्रितसम्बन्धिनः सर्वेऽचोऽनुदात्ता भवन्तीत्यर्थः । एतच्चानुवृत्तस्य सर्वशब्दस्यान्वयमात्रं प्रदर्शितम्, न त्वत्रास्योपयोगः कश्चित् ।

**भावबोधिनी**

जनपदो नौ दीयते । [ यहाँ द्विवचन में भी जो आदेश हुऐ हैं वे भी सर्वानुदात्त होते हैं । अतः चाहे सुबन्त पद हो या स्वादि परे पूर्व पद हो, सभी के आदेश सर्वानुदात्त होते हैं । यही 'सर्वम्' के ग्रहण का फल है । ] ॥ १८ ॥

पद से परे तथा पाद के आदि में न विद्यमान आमन्त्रित के सभी अनुदात्त हो जाते हैं । उदा० पचसि देवदत्त ! पचसि यज्ञदत्त ! इनमें आमन्त्रित का आदि उदात्तत्व [ षाष्ठ 'आमन्त्रितस्य च' ६।१।१९२ ] प्राप्त रहते इस वचन से सर्वानुदात्तत्व किया जाता है ।

❀ समानवाक्य में निघात = सर्वानुदात्त और युष्मद् तथा अस्मद् के आदेश कहने चाहिए । ❀ जिससे

**हरानेन, ओदनं पच तव भविष्यति, ओदनं पच मम भविष्यति' ॥**

इह च **यथा स्यात्—इह देवदत्त माता ते कथयति। नद्यास्तिष्ठति कूले। शालीनां ते ओदनं दास्यामि इति।**

**न्यासः**

इत्याह—**इहेत्यादि। अयं दण्ड इति।** अत्रास्तीत्येतदपेक्ष्यते। अप्रयुज्यमानमपि गम्यत इति तथोक्तम्। 'यत्रान्यत् क्रियापदं नास्ति तत्रास्तिर्भवन्तीपरः प्रयुज्यत इत्यप्रयुज्यमानोऽपि गम्यते' इति तदेवमस्तीत्यनेन गम्यमानेन सहितमयं दण्ड इत्येकं वाक्यम्, हरानेनेत्यपरम्। तत्र यद्येकवाक्ये निघातादयो नोच्येरन्, ततो दण्डशब्दादतिङन्तात् परस्य हरेत्यस्य तिङन्तस्य निघातः प्रसज्येत। ननु पदविधिरयम्, स च सामर्थ्ये सति भवति, न चेह तदस्ति, अतोऽसामर्थ्यान्निघातो न भविष्यतीति चेदिहापि तर्हि न स्यात्—इह देवदत्त माता ते कथयति, नद्यास्तिष्ठति कूले, शालीनां त ओदनं दास्यामीति। न ह्यत्रेहेत्यनेन देवदत्तेत्यामन्त्रितस्यास्ति सामर्थ्यम्; अपि च विद्यत एवायं दण्डो हरानेनेत्यत्र सामर्थ्यम्, तथा ह्यनेनेति सर्वनाम्ना यत् करणेन प्रत्यवमृश्यते तद्धरेत्येतदपेक्षते। तच्च प्रत्यासत्तेर्दण्ड एवेत्यस्ति दण्डस्य हरेत्येतस्य च व्यपेक्षालक्षणं सामर्थ्यम्। **ओदनं पच तव भविष्यतीति।** ओदनं पचेत्येकं वाक्यम्, तव भविष्यतीत्यपरम्। **ओदनं पच तव भविष्यतीति।** अत्राप्योदनं पचेत्येकं वाक्यम्, मम भविष्यतीत्यपरम्। तत्र यद्येकवाक्ये युष्मदस्मदादेशा नोच्येरन्, ततः पचेत्येतस्मात् पदात् परयोर्युष्मदस्मदोस्तु 'तेमयावेकवचनस्य' इति तेमयावादेशौ स्याताम्, अस्ति ह्यत्रापि सामर्थ्यम्। तथा हि—युष्मच्छब्दवाच्योऽस्मच्छब्दवाच्यश्च योऽर्थस्तत्साधनेन पाकेन तत्स्वामिकौदनो भविष्यतीत्येवम्भूता पाकस्य युष्मदस्मदोश्च व्यपेक्षा विद्यते। अतः समानवाक्यग्रहणे तु सति न किञ्चिदनिष्टमापद्यते।

**इह चेत्यादि।** चशब्दः समुच्चये। इदञ्चापरमस्या इष्टेः प्रयोजनमिति दर्शयति। इह **देवदत्त माता**

**पदमञ्जरी**

**सामानवाक्य इत्यादि।** अर्थैकत्वादिकं लौकिकं वाक्यलक्षणम्, इह तु परिभाषिकं वाक्यम्। आख्यातं साव्ययकारकविशेषणं वाक्यमिति, आख्यातमित्येकत्वं विवक्षितम्, निमित्तनिमित्तिनोः समान एकस्मिन्वाक्य आधारभूते सति निघातादयो भवन्तीति वक्तव्यम्, किमर्थमित्याह—**इहेति।** 'भवतीह विष्णुमित्रः, देवदत्तागच्छ' इति वाक्यद्वयमेतत्; तिङन्तद्वययोगागात्। तत्र देवदत्तेत्यस्यामन्त्रितस्य निघातो न भवति। ननु च पदविधिरयम्, ततश्चासामर्थ्यादेवात्र न भविष्यति, अस्त्यत्र सामर्थ्यं विष्णुमित्रमन्विष्यान्यत्र गच्छन्तं देवदत्तं प्रतीदमुच्यते, ततश्च विष्णुमित्रस्येह भवनं देवदत्तागमनस्य निमित्तत्वेनोच्यत इत्यस्ति व्यपेक्षा। क्वचिदेतदुदाहरणं न पठ्यते। **अयं दण्ड इति।** अस्तीति गम्यमानत्वादेतावदेकं वाक्यम्। अत्राप्यनेनेति सर्वनाम्ना परामृष्टस्य दण्डस्य करणत्वादस्ति सामर्थ्यमिति तिङन्तस्य निघातप्रसङ्गः। **ओदनं पचेति।** त्वत्कर्तृकत्वेन त्वत्स्वामिको मत्स्वामिकश्चौदनो भविष्यतीत्येवं पाकस्य युष्मदस्मदर्थस्य च व्यपेक्षाऽस्तीत्यादेश-

**भावबोधिनी**

कि यहाँ न होने लगे—अयं दण्डो हरानेन, ओदनं पच तव भविष्यति, ओदनं पच मम भविष्यति। [ यहाँ 'अयं दण्डः अस्ति' ऐसा अध्याहृत क्रिया पदवाला वाक्य है। 'हर अनेन' अलग वाक्य है। अतः निघात नहीं होता है। अलग-२ स्वर होते हैं। 'ओदनं पच' यह अलग है और 'तव भविष्यति' दूसरा वाक्य है। अतः न तो 'ते' आदि आदेश होते हैं और न सर्वानुदात्तत्व। ]

और इनमें जिस प्रकार से हो सके—'इह देवदत्त! माता ते कथयति। नद्याः कूले तिष्ठति। शालीनां ते ओदनं दास्यामि'। [ इन तीनों वाक्यों में प्रथम में आमन्त्रित का निघात होता है, द्वितीया में अतिङन्त से परे तिङन्त का निघात होता है। तृतीय में पद 'शालीनाम्' से परे 'ते' आदेश और निघात होते हैं। यदि समान वाक्य न होता तो इनमें सामर्थ्य का उपपादन कठिन होता और निघात आदि करना कठिन हो जाता। यह लिख रहे है—]

---

१. 'भवतीह विष्णुमित्रो देवदत्तागच्छ' इति क्वचिदधिकं पदमञ्जरीसम्मतम्।

आमन्त्रितान्तं तिङन्तं युष्मदस्मदादेशाश्च यस्मात्पराणि न तेषां सामर्थ्यमिति तदाश्रया निघात-युष्मदस्मदादेशा न स्युः; 'समर्थः पदविधिः', ( २।१।१ ) इति वचनात् ॥

**न्यासः**

ते कथयतीति एकं वाक्यम्, नद्यास्तिष्ठति कूल इति द्वितीयम्। शालीनां त ओदनं दास्यामीति तृतीयम्। तत्र प्रथमे वाक्ये—इहेत्यस्मात् पदात् परस्य देवदत्तस्यामन्त्रितस्यानेन निघातो यथा स्याद्, द्वितीये—नद्या इत्यस्मात्परस्य तिष्ठतीत्यस्य 'तिङ्ङतिङः' इति स एव यथा स्यात्। तृतीयेऽपि—शालीनामित्यस्मात् परस्य युष्मच्छब्दस्य 'तेमयावेकवचनस्य' इति त इत्येवमादेशो यथा स्यादित्येवमर्थं समानवाक्ये निघातादयो वेदितव्याः। अस्मच्छब्दादेशोदाहरणमिह नोपन्यस्तम्; युष्मच्छब्दादेशोदाहरणेनैवावगम्यमानत्वात्। तत् पुनः शालीनामोदनं मे देहीत्येवञ्जातीयकं तत्र द्रष्टव्यम्। किं पुनः स्याद् यदि समानवाक्ये निघातयुष्मदस्मदादेशा नोच्येरन्? इत्यत आह—आमन्त्रितान्तमित्यादि। प्रथमे तावद् वाक्ये—इहेत्येतदधिकरणप्रधानम्, अधिकरणञ्चाधेयापेक्षम्, तच्चाधेयं माता, न तु देवदत्तः। इह ते स्थिता माता कथयतीत्यर्थः। तस्मादिहशब्देन नास्ति देवदत्तेत्यस्यामन्त्रितस्य सामर्थ्यम्। द्वितीये तु—नद्या इत्येतस्मात् परं तिष्ठतीत्येतत् तिङन्तम्। न च तस्या नद्या इत्यनेन सामर्थ्यम्; किं तर्हि? कूल इत्यस्य। तृतीयेऽपि—शालीनामित्यस्मात् पदाद् युष्मच्छब्दः परः, न तु शालीनामित्यनेन तस्य सामर्थ्यमस्ति, किं तर्हि? ओदनस्येति। ततः सामर्थ्याभावात् तदाश्रया निघातादयो न स्युः।

तदाश्रय इति। इहेत्येतत् पदम् 'नद्याः' इत्येतच्छालीनामित्येतच्चाश्रयो निमित्तं येषां ते तथोक्ताः। अथ वा—तत् सामर्थ्यमाश्रयो येषां ते तथोक्ताः। असत्यां ह्यस्यामिष्टौ पदादधिकारात् पदविधिर्निघातादि कार्यं भवति, स च सामर्थ्यनिबन्धनः। तच्च सामर्थ्यमिह नास्तीति कुतो निघातादेः प्रसङ्गः! तस्मादसामर्थ्येऽपि यथा स्यादित्येवमर्थं समानवाक्ये निघातादि कार्यं वक्तव्यम् ॥ १९ ॥

**पदमञ्जरी**

प्रसङ्गः, एवमतिप्रसङ्गपरिहारः प्रयोजनमित्युक्तम्। इदानीमव्याप्तिपरिहारोऽपि प्रयोजमित्याह—इह चेति।

किं पुनः कारणमेषूदाहरणेषूदाहरणेषु निघातादयो न स्युरित्यत आह—आमन्त्रितान्तमित्यादि। इह स्थिता मातेत्यन्वयः, न त्विह देवदत्तेति; नद्याः कूलमित्यन्वयः, न नद्यास्तिष्ठतीति, शालीनामोदनमित्यन्वयः, न शालीनां ते इति, ततश्चासामर्थ्यान्न स्युरित्यर्थः ॥ १९ ॥

**भावबोधिनी**

आमन्त्रितान्त, तिङन्त और युष्मद् अस्मद् के आदेश जिनसे परे हैं उनका सामर्थ्य नहीं है इसलिये उन्हें मानकर होने वाले निघात तथा युष्मद् अस्मद् के आदेश नहीं हो पाते क्योंकि 'समर्थः पदविधिः' ऐसा वचन है। [ सामर्थ्य में ही पदसम्बन्धी विधि होती है। उक्त वाक्यों में ऐसा नहीं है। किन्तु जब 'समान वाक्य में' ऐसा मानते हैं तो कोई समस्या नहीं है क्योंकि सामर्थ्य हो या न हो समान वाक्य हो तो उक्त कार्य सम्भव हैं। अतः समान = एक वाक्य होना आवश्यक है। ]

**विमर्श**—पदसम्बन्धी विधि में सामर्थ्य की अपेक्षा होती है—समर्थः पदविधिः ( २।१।१ ) सूत्र है। यदि यहाँ भी सामर्थ्य माना जायगा तो उपर्युक्त उदाहरणों में अनुपपत्ति होने लगेगी। इसलिये वार्त्तिककार ने लिखा कि 'निघात और युष्मद्–अस्मत् के आदेशों के विधान में समान = एक वाक्य होना आवश्यक है। वह सामर्थ्यवान् है या नहीं—इसका आवश्यकता नहीं है। अतः 'इह देवदत्त ! माता ते कथयति' में 'इह' पद से परे 'देवदत्त' आमन्त्रितान्त का सर्वानुदात्त हो जाता है। जब कि इस वाक्य से प्रतीयमान अर्थों में परस्पर सामर्थ्य नहीं है क्योंकि 'इह' का सम्बन्ध 'माता' के साथ है। दूसरे वाक्य में 'नद्याः कूले' का सम्बन्ध है न कि 'नद्याः तिष्ठति' का परन्तु समानवाक्य होने से 'तिङ्ङतिङः' से निघात होता है। तृतीय वाक्य—'शालीनां ते ओदनं दास्यामि' में 'ते' का 'शालीनां' से सामर्थ्य नहीं है। 'शालीनाम्' का 'ओदनम्' के साथ है। किन्तु वाक्य एक होने से 'ते' आदेश हो जाता

३६३४. युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांन्नावौ ॥ २० ॥ (४०४)

युष्मद्-अस्मद्—इत्येतयोः षष्ठीचतुर्थीद्वितीयास्थयोर्यथासंख्यं वाम्, नौ—इत्येतावादेशौ भवतस्तौ चानुदात्तौ। 'पदस्य पदादनुदात्तं सर्वमपादादौ' इति सर्वमिह सम्बध्यते। ग्रामो वां स्वम्। जनपदो नौ स्वम्। ग्रामो वां दीयते। जनपदो नौ दीयते। ग्रामो वां पश्यति। जनपदो नौ पश्यति।

एकवचनबहुवचनान्तयोरादेशान्तरविधानाद् द्विवचनान्तयोरेतावादेशौ विज्ञायेते।

षष्ठीचतुर्थीद्वितीयास्थयोरिति किम्? ग्रामे युवाभ्यां कृतम्।

स्थग्रहणं श्रूयमाणविभक्त्यर्थम्। इह मा भूत्—इति युष्मत्पुत्र इति॥

न्यासः

**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांन्नावौ॥ षष्ठीचतुर्थीद्वितीयास्थयोरिति।** षष्ठ्यादिषु यौ तिष्ठतस्तौ तथोक्तौ। 'सुपि स्थः' इति कः।

किं पुनः कारणं द्विवचनान्तयोरेवोदाहरणमुपन्यस्तम्? इत्याह—**एकवचनान्तबहुवचनान्तयोरित्यादि।**

अथ स्थग्रहणं किमर्थम्, न 'युस्मदस्मदोः षष्ठीचतुर्थीद्वितीयासु' इत्येवोच्येत्, षष्ठ्यादिषु विधीयमानेष्ववश्यं युष्मदस्मदोस्तात्स्थ्यं भविष्यति? इत्यत आह—**स्थग्रहणमित्यादि।** श्रूयमाणा विभक्तिरर्थः प्रयोजनं निमित्तं यस्य तत् तथोक्तं भवति—श्रूयमाणा षष्ठ्यादिका विभक्तिरादेशस्य निमित्तं कथं नाम लभ्येतेत्येवमर्थं स्थग्रहणम् इति? तेन विभक्तिर्यत्र न श्रूयते तत्र न भवतीति—अयं युष्मत्पुत्रोऽयमस्मत्पुत्र

पदमञ्जरी

**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांन्नावौ॥ द्विवचनान्तयोरेवेति।** तेन वचनान्तरेणोदाहृतमिति भावः।

स्थग्रहणमनर्थकम्, षष्ठ्यादिष्वादेशविधानादेव तात्स्थ्यसिद्धेः? इत्यत आह—**स्थग्रहणमिति।** श्रूयमाणविभक्तिकयोरेवादेशा यथा स्युः, लुप्तविभक्तिकयोर्मा भूवन्नित्यर्थः। श्रूयमाणायां हि विभक्तौ तत्स्थत्वं

भावबोधिनी

हैं। अतः एक वाक्य होना आवश्यक है। सुविधानुसार किसी पद का कहीं भी प्रयोग किया जाय, सम्भव होने पर निघात तथा—'ते, मे, वस्, नस्, वाम् 'नौ'—हो जाते हैं॥ १९॥

षष्ठी और चतुर्थी विभक्तियों में स्थित युष्मद् तथा अस्मद्—इनके स्थान में क्रमशः 'वाम्' तथा 'नौ' ये आदेश होते हैं और ये अनुदात्त होते हैं। पद से परे पद का अपादादि में सर्व अनुदात्त' होता है—इन सभी का यहाँ सम्बन्ध होता है। [ अतः ये आदेश करते समय उक्त बातों पर ध्यान रखना आवश्यक है। ] उदा० ग्रामो वां स्वम्। जनपदो नौ स्वम्। ग्रामो दीयते। जनपदो नौ दीयते। ग्रामो वां पश्यति। जनपदो नौ पश्यति। गाँव तुम दोनों की सम्पत्ति है। जनपद हम दोनों की सम्पत्ति है। गाँव तुम दोनों को दिया जाता है। जनपद हम दोनों को दिया जाता है। गाँव तुम दोनों को देखता है। जनपद हम दोनों को देखता है। यहाँ युष्मद् तथा अस्मद् के षष्ठी तथा चतुर्थी के द्विवचनान्त रूपों के स्थान पर क्रमशः—'वाम्' तथा 'नौ' ये आदेश होते हैं। ]

[ यद्यपि सूत्र में द्विवचनान्त के आदेश का उल्लेख नहीं है तथापि आगे के सूत्रों द्वारा ] एकवचनान्त तथा बहुवचनान्त के स्थान पर दूसरे आदेशों का विधान किया जाने वाला है अर्थात् एकवचन में क्रमशः—'ते, और 'मे' का विधान 'तेमयावेकवचनस्य' सूत्र से और 'वस्' तथा 'नस्' का विधान 'बहुवचनस्य वस्नसौ' सूत्र से किया गया है ] इस कारण ये दोनों आदेश केवल द्विवचनान्त ( षष्ठी तथा चतुर्थी ) के स्थान पर ही समझे जाते हैं।

१. न च संकुचितः पन्थाः येन वाली हतो गतः।
समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः॥ ( वा० रा० कि० ३० स० ८१ श्लो० )

**३६३५. बहुवचनस्य वस्नसौ ॥ २१ ॥ (४०५)**

बहुवचनान्तयोर्युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्यथासंख्यं वस्, नस्—इत्येतावादेशौ भवतः। ग्रामो वः स्वम्। जनपदो नः स्वम्। ग्रामो वो दीयते। जनपदो नो दीयते। ग्रामो वः पश्यति। जनपदो नः पश्यति॥

**३६३६. तेमयावेकवचनस्य ॥ २२ ॥ (४०६)**

युष्मदस्मदोरेकवचनान्तयोः षष्ठीचतुर्थीस्थयोर्यथासंख्यं ते, मे—इत्येतावादेशौ भवतः। ग्रामस्ते स्वम्। ग्रामो मे स्वम्। ग्रामस्ते दीयते। ग्रामो मे दीयते।

द्वितीयान्तस्यादेशान्तरविधानसामर्थ्यात्षष्ठीचतुर्थ्योरेवायं योगः॥

**न्यासः**

इति। असति तु स्थग्रहणे लुप्तायामपि विभक्तौ प्रत्ययलक्षणेन स्यातामेवादेशौ। अश्रूयमाणत्वं पुनरत्र विभक्तेः षष्ठीसमासे कृते 'सुपो धातुप्रातिपदिकयोः' इति लुप्तत्वात्। कथम्? पुनः स्थग्रहणे श्रूयमाणायामेव तस्यां तात्स्थ्यस्य सम्भवात्। अथ वा—तिष्ठतिरयमपरिहाणार्थे वर्त्तते, यथा—'समये तिष्ठ सुग्रीव" इति। समयं न परिजहिहीत्यर्थः। तेनैवं विज्ञायते—षष्ठीचतुर्थीद्वितीयामपरिजहतोर्युष्मदस्मदोरादेशाविति। एवं च विज्ञायमाने श्रूयमाणैव विभक्तिरादेशस्य निमित्तत्वेनोपात्ता भवतीति॥ २०॥

**बहुवचनस्य वस्नसौ॥ २१॥**

**तेमयावेकवचनस्य॥** किं पुनः कारणं षष्ठीचतुर्थ्यन्तयोरेवोदाहरणमुपन्यस्तम्, न द्वितीयान्तयोः? इत्याह—द्वितीयान्तस्येत्यादि॥ २२॥

**पदमञ्जरी**

भवति, न पुनर्लुप्तायाम्। प्रत्ययलक्षणेनापि कार्यं शास्त्रं वाऽतिदिश्यते, न तात्स्थ्यम्। यदि वा तिष्ठतिरयम-विहानात्वपि दृष्टः, यथा—समये तिष्ठ सुग्रीवेति, समयं मा विहासीरित्यर्थः। तेनायमर्थः—षष्ठीचतुर्थीद्वितीया अजहतोर्युष्मदस्मदोरादेशा भवन्तीति। **इति युष्मत्पुत्र इति।** इतिशब्दात्पदात्परयोः षष्ठ्यन्तयोर्युष्मदस्मदोः प्रत्ययलक्षणेन वान्नावौ न भवतः॥ २०।२१-२३॥

**भावबोधिनी**

षष्ठी तथा चतुर्थी के स्थान पर—इसका क्या फल है? ग्रामे युवाभ्यां कृतम्। [इस तृतीया द्विवचनान्त का आदेश नहीं होता है।]

स्थ—इसका ग्रहण श्रूयमाण विभक्ति में स्थित रूप के लिये है। जिससे यहाँ न हो सके—युष्मत्पुत्रः। [यहाँ 'युष्माकं पुत्रः' में समास के कारण विभक्ति का लोप हो गया है, श्रूयमाण विभक्ति नहीं है। अतः आदेश नहीं होता है। प्रत्ययलक्षण द्वारा शास्त्रीय कार्य का ही अतिदेश सम्भव होता है, तत्तद्विभक्तिस्थता नहीं सम्भव होती है। अतः आदेश नहीं होता है।]॥ २०॥

षष्ठी तथा चतुर्थी में स्थित बहुवचनान्त युष्मद् तथा अस्मद् के स्थान पर क्रमशः—'वस्' 'नस्' ये दो आदेश होते हैं। उदा० ग्रामो वः स्वम्। जनपदो नः स्वम्। ग्रामो वः दीयते। जनपदो नः दीयते। ग्रामो वः पश्यति। जनपदो नः पश्यति। [इनमें क्रमशः षष्ठी, चतुर्थी और द्वितीया के बहुवचनान्त युष्मद् का 'वस्' = वः' और अस्मद् का 'नस्' = नः' आदेश होता है। अतः 'तुम्हारा, हमारा, तुम्हारे लिए, हमारे लिये, तुम सभी को, हम सभी को'—ये अर्थ होते हैं।)॥ २१॥

षष्ठी और चतुर्थी में स्थित युष्मद् तथा अस्मद् के एकवचनान्त रूपों के स्थान पर क्रमशः 'ते' 'मे' ये आदेश होते हैं। उदा० ग्रामस्ते स्वम्। ग्रामः मे स्वम्। ग्रामः ते दीयते। जनपदः मे दीयते। [यहाँ तव, मम का ते, मे। तुभ्यम्, मह्यम् का ते, मे आदेश हैं।]

द्वितीयाविभक्त्यन्त का दूसरा आदेश किया गया है अतः षष्ठ्यन्त और चतुर्थ्यन्त के स्थान पर ही यह सूत्र लगता है। ते, मे—आदेश करता है।]॥ २२॥

३६३७. त्वामौ द्वितीयायाः ॥ २३ ॥ (४०७)

'एकवचनस्य' इति वर्तते। द्वितीयाया यदेकवचनं तदन्तयोर्युष्मदस्मदोर्यथासंख्यं त्वा, मा— इत्येतावादेशौ भवतः। ग्रामस्त्वा पश्यति। ग्रामो मा पश्यति॥

३६३८. न चवाहाहैवयुक्ते ॥ २४ ॥ (४०८)

च, वा, ह, अह, एव—एभिर्युक्ते युष्मदस्मदोर्वान्नावादयो न भवन्ति। पूर्वेण प्रकरणेन प्राप्ताः प्रतिषिध्यन्ते। ग्रामस्तव च स्वम्, ग्रामो मम च स्वम्, युवयोश्च स्वम्, आवयोश्च स्वम्; युष्माकं च स्वम्, अस्माकं च स्वम्। ग्रामस्तुभ्यं च दीयते, ग्रामो मह्यं च दीयते, युवाभ्यां च दीयते, आवाभ्यां च दीयते; युष्मभ्यं च दीयते, अस्मभ्यं च दीयते। ग्रामस्त्वां च पश्यति, ग्रामो मां च पश्यति; युवां च पश्यति, आवां च पश्यति; युष्मांश्च पश्यति, अस्मांश्च पश्यति।

वा—ग्रामस्तव वा स्वम्, ग्रामो मम वा स्वम्; युवयोर्वा स्वम्, आवयोर्वा स्वम्; युष्माकं वा स्वम्, अस्माकं वा स्वम्। ग्रामस्तुभ्यं वा दीयते, ग्रामो मह्यं वा दीयते; युवाभ्यां वा दीयते, आवाभ्यां वा दीयते;

न्यासः

**त्वामौ द्वितीयायाः** ॥ २३ ॥

**न चवाहाहैवयुक्ते ॥ एभिर्युक्त इति।** 'नपुंसके भावे क्तः' एभिर्योग इत्यर्थः। अथ वा—'तयोरेव कृत्यक्तखलर्थाः' इति कर्मणि क्तः। एभिर्युक्ते सम्बद्धे। कस्मिन्? युष्मच्छब्देऽस्मच्छब्दे च। यद्यपि तौ द्विवचनान्तौ प्रकृतौ, तथापीह प्रत्येकमभिसम्बन्धादेकवचनं कृतम्। **तव ममेति।** 'युष्मदस्मद्भ्यां ङसोऽश्', 'तवममौ ङसि'। **युवयोरावयोरिति।** 'युवावौ द्विवचने'। **युष्माकमस्माकमिति।** 'साम आकम्। **तुभ्यं मह्यमिति।** 'ङेप्रथमयोरम्' इत्यम्, 'तुभ्यमह्यौ ङयि। **युष्मभ्यमस्मभ्यमिति।** 'भ्यसोभ्यम्'। **त्वां मामिति।** 'त्वमावेकवचने' इति त्वमादेशौ, 'द्वितीयायाञ्च' इत्यात्वम्। **युष्मान्, अस्मानिति।** 'शसो न', पूर्ववदात्वम्।

पदमञ्जरी

**न चवाहाहैवयुक्ते ॥ चः** समुच्चये, **वा** विकल्पे, **ह अहेत्यद्भुते, ह** खेदे च, **एवो**ऽवधारणे। **एभिर्युक्त इति।** एभिर्योगे सतीत्यर्थः। यद्वा—एभिर्युक्ते युष्मदस्मदोरर्थे इत्यर्थः। युक्तग्रहणमनर्थकम्, तृतीयानिर्देशात

भावबोधिनी

'एकवचनान्त का' इसकी अनुवृत्ति होती है। द्वितीया का जो एकवचन तदन्त युष्मद् और अस्मद् के स्थान पर क्रमशः—'त्वा' और 'मा' आदेश होते हैं। उदा० ग्रामस्त्वा पश्यति। ग्रामः मा पश्यति। [ गाँव तुमको देखता है। गाँव मुझको देखता है। ] ॥ २३ ॥

च, वा, ह, अह, एव—इन शब्दों के योग में युष्मद् तथा अस्मद् के स्थान पर 'वाम् नौ' आदि आदेश नहीं होते हैं। पूर्व सूत्रों से प्राप्त सभी आदेशों का प्रतिषेध किया जाता है। उदा० [ पहले षष्ठी विभक्तिस्थ ] ग्रामः तव च स्वम्, ग्रामः मम च स्वम्। युवयोः च स्वम्, आवयोः च स्वम्। युष्माकं च स्वम्, अस्माकं च स्वम्। [ यहाँ क्रमशः ते, मे, वां, नौ, वस् नस् आदेश नहीं होते हैं क्योंकि च का योग है। ] चतुर्थीस्थ के उदा० ग्रामः तुभ्यं च दीयते, ग्रामः मह्यं च दीयते। युवाभ्यां च दीयते, आवाभ्यां च दीयते, युष्मभ्यं च दीयते, अस्मभ्यं च दीयते। [ यहाँ भी उक्त आदेश नहीं होते हैं। ] द्वितीयाविभक्तिस्थ के उदा० ग्रामः त्वां च पश्यति, ग्रामः मां च पश्यति। युवां च पश्यति, आवां च पश्यति। युष्मान् च पश्यति, अस्मान् च पश्यति। [ यहाँ त्वा, मा, वां, नौ, आदेश नहीं होते हैं। ]

वा के योग में उदा० [ षष्ठी के ] ग्रामः तव वा स्वम्, ग्रामः मम वा स्वम्। युवयोः वा स्वम् आवयोः वा स्वम्। युष्माकं वा स्वम्, अस्माकं वा स्वम्। [ यहाँ 'वा' के योग में उक्त सभी आदेश नहीं होते हैं। ] चतुर्थीस्थ

**युष्मभ्यं वा दीयते, अस्मभ्यं वा दीयते। ग्रामस्त्वां वा पश्यति, ग्रामो मां वा पश्यति; युवां वा पश्यति, आवां वा पश्यति; युष्मान् वा पश्यति, अस्मान्वा पश्यति।**

**ह—ग्रामस्तव ह स्वम्, ग्रामो मम ह स्वम्; युवयोर्ह स्वम्, अवयोर्ह स्वम्; युष्माकं ह स्वम्, अस्माकं ह स्वम्। ग्रामस्तुभ्यं ह दीयते, ग्रामो मह्यं ह दीयते; युवाभ्यां ह दीयते, आवाभ्यां ह दीयते; युष्मभ्यं ह दीयते, अस्मभ्यं ह दीयते। ग्रामस्त्वां ह पश्यति, ग्रामो मां ह पश्यति। युवां ह पश्यति, आवां ह ह पश्यति; युष्मान् ह पश्यति, अस्मान् ह पश्यति।**

**अह—ग्रामस्तवाह स्वम्, ग्रामो ममाह स्वम्; युवयोरह स्वम्, आवयोरह स्वम्; युष्माकमह स्वम्, अस्माकमह स्वम्, ग्रामस्तुभ्यमह दीयते, ग्रामो मह्यमह दीयते; युवाभ्यामह दीयते, आवाभ्यामह दीयते; युष्मभ्यमह दीयते, अस्मभ्यमह दीयते। ग्रामस्त्वामह पश्यति, ग्रामो मामह पश्यति, युवामह पश्यति, आवामह पश्यति, युष्मानह पश्यति, अस्मानह पश्यति।**

**एव—ग्रामस्तवैव स्वम्, ग्रामो ममैव स्वम्; युवयोरेव स्वम्, आवयोरेव स्वम्; युष्माकमेव स्वम्, अस्माकमेव स्वम्, ग्रामस्तुभ्यमेव दीयते, ग्रामो मह्यमेव दीयते; युवाभ्यामेव दीयते, आवाभ्यामेव दीयते; युष्मभ्यमेव दीयते, अस्मभ्यमेव दीयते। ग्रामस्त्वामेव पश्यति, ग्रामो मामेव पश्यति; युवामेव पश्यति, आवामेव पश्यति; युष्मानेव पश्यति, अस्मानेव पश्यति।**

**पदमञ्जरी**

एव सिद्धम्, यथा 'तुल्यार्थैरतुलोपमाभ्याम्' इत्यत्र? इत्यत आह—**युक्तग्रहणमिति**। यदा युष्मदस्मदर्थगतान्समुच्चयादींश्चादयो द्योतयन्ति, तदा तैस्तयोः साक्षाद्योगः; तत्रैवायं प्रतिषेधो यथा स्यात्, युक्तयुक्ते मा

**भावबोधिनी**

के उदा० ग्रामः तुभ्यं वा दीयते, ग्रामः मह्यं वा दीयते। युवाभ्यां वा दीयते, आवाभ्यां वा दीयते। युष्मभ्यं वा दीयते, अस्मभ्यं वा दीयते। [ यहाँ 'वा' का योग है आदेश नहीं होते हैं। ] द्वितीयास्थ के उदा०—ग्रामः त्वां पश्यति, ग्रामः मां पश्यति, युवां वा पश्यति, आवां वा पश्यति, युष्मान् वा पश्यति, अस्मान् वा पश्यति। [ यहाँ भी आदेश नहीं होते हैं। ]

'ह' के योग के उदा० [ षष्ठीस्थ के ]—ग्रामः तव ह स्वम्, ग्रामः मम ह स्वम्। युवयोः ह स्वम्, आवयोः ह स्वम्। युष्माकं ह स्वम्, अस्माकं ह स्वम्। [ 'ह' शब्द का प्रयोग खेद अर्थ में होता है। हाय गाँव तुम्हारा धन है आदि अर्थ होते हैं। ] चतुर्थीस्थ के उदा० ग्रामः तुभ्यं ह दीयते, ग्रामः मह्यं ह दीयते। ग्रामः युवाभ्यां ह दीयते, आवाभ्यां ह दीयते, युष्मभ्यं ह दीयते, अस्मभ्यं ह दीयते। [ यहाँ चतुर्थीस्थ के आदेश नहीं होते हैं। ] द्वितीयास्थ के उदा० ग्रामः त्वां ह पश्यति, ग्रामः मां ह पश्यति। ग्रामः युवां ह पश्यति, आवां ह पश्यति। युष्मान् ह पश्यति अस्मान् ह पश्यति। [ यहाँ भी आदेश नहीं होते हैं। ]

अह के योग के उदा० ग्रामः तव अह स्वम्, ग्रामः मम अह स्वम्। युवयोः अह स्वम्, आवयोः अह स्वम्। अस्माकम् अह स्वम्, युष्माकम् अह स्वम्। [ अह का प्रयोग अद्भुत = आश्चर्य अर्थ में होता है। षष्ठीस्थ के आदेश नहीं होते है। अब चतुर्थीस्थ के उदा० ग्रामः तुभ्यम् अह दीयते, ग्रामः मह्यम् अह दीयते। युवाभ्याम् अह दीयते, आवाभ्याम् अह दीयते। युष्मभ्यमह दीयते, अस्मभ्यम्, अह दीयते। [ आदेश नहीं होते हैं। ] द्वितीयास्थ के उदा० ग्रामः त्वाम् अह पश्यति, ग्रामः माम् अह पश्यति। ग्रामः युवाम् अह पश्यति, आवाम् अह पश्यति। युष्मान् अह पश्यति अस्मान् अह पश्यति। [ इनमें भी आदेश नहीं होते है। ]

एव—[ के योग में षष्ठीस्थ के ] उदा०—ग्रामः तव एव स्वम्, ग्रामः मम एव स्वम्। युवयोः एव स्वम्, आवयोः एव स्वम्। युष्माकम् एव स्वम्, अस्माकम् एव स्वम्। [ एव का प्रयोग निर्धारण अर्थ में होता है। यहाँ पूर्वोक्त आदेश नहीं होते हैं। चतुर्थीस्थ के उदा० ] ग्रामः तुभ्यम् एव दीयते, मह्यम् एव दीयते। युवाभ्याम् एव दीयते, आवाभ्याम् एव दीयते। युष्मभ्यम् एव दीयते अस्मभ्यम् एव दीयते। [ यहाँ उक्त आदेश नहीं होते है। [द्वितीयास्थ के उदा०—] ग्रामः त्वाम् एव पश्यति, आवाम् एव पश्यति। युष्मान् एव पश्यति, अस्मान् एव पश्यति।

युक्तग्रहणं साक्षाद्योगप्रतिपत्त्यर्थम्। युक्तयुक्ते प्रतिषेधो न भवति। ग्रामश्च ते स्वम्, नगरं च मे स्वम् ॥

**न्यासः**

**युक्तग्रहणं साक्षाद्योगप्रतिपत्त्यर्थमिति**। साक्षादव्यवधानेन चादिभिर्योगः। तस्य प्रतिपत्तिर्यथा स्यादित्येवमर्थं युक्तग्रहणम्। कथं पुनर्युक्तग्रहणे साक्षाद्योगप्रतिपत्तिर्भवति ? एवं मन्यते—अपरिसमाप्तत्वादस्य वाक्यस्य तृतीयानिर्देश एव युक्तग्रहणमध्याहरिष्यति, यथा—'तुल्यार्थैरतुलोपमाभ्याम्' इत्यत्र। तस्माद् युक्तग्रहणं न कर्त्तव्यमेव ? तत् क्रियते साक्षाद्योगप्रतिपत्तिर्यथा स्यादिति। अन्यस्त्वाह—पदविधिरयम्, पदविधिश्च समर्थानामेव भवति, तत्र पदविधित्वादेव योगे लब्धे यद् युक्तग्रहणं क्रियते, तत् साक्षाद्योगप्रतिपत्तिर्यथा स्यादिति ? एतच्चायुक्तम्; असामर्थ्येऽपि निघातादिकार्यं समानवाक्ये भवतीत्युक्तमेतत्। कदा पुनश्चादिभिः साक्षाद् युष्मदस्मदोर्योगः ? यदा तदर्थंगतान् समुच्चयादीनर्थांस्ते द्योतयन्ति। इहैते चादयः समुच्चयादिना द्योत्येनार्थेनार्थवन्तः, तत्र यदा युष्मदस्मदनुगतानेव समुच्चयादीन् धर्मान् द्योतयन्ति, तदा चादिभिः साक्षाद् युस्मदस्मदोर्योगः। यदा तु ग्रामादिसम्बन्ध्यन्तरगता, तदा युक्तयोगः, न तु साक्षाद् योगः। तत्र युक्तयोगे प्रतिषेधो न भवति—ग्रामश्च ते स्वं नगरञ्च मे स्वमिति। तत्र ग्रामशब्दो नगरशब्दश्च चशब्देन युक्तः; तदर्थगतस्य समुच्चयस्य तेन द्योतनाद्। युस्मदस्मच्छब्दौ तु ग्रामनगराभ्यां युक्तौ; तयोस्ताभ्यां स्वस्वामिकत्वसम्बन्धस्यार्थस्येह सम्भवात्। ननु च साक्षाद्योगप्रतिपत्त्यर्थं युक्तग्रहणम्—युक्तयुक्ते मा भूदित्येवमर्थं कथं क्रियते, न च चादियोगे प्रतिषेध उच्यमानो युक्तयुक्ते प्राप्नोति, न हि चश्चादिभिर्युक्तयुक्तेन योगः स चादियोगो भवति, तत् किं साक्षाद्योगप्रतिपत्त्यर्थेन युक्तग्रहणेन ? एवं तर्ह्येतदेव युक्तग्रहणं ज्ञापयति—इह प्रतिषेधकाण्डे युक्तयुक्तेऽपि प्रतिषेधो भवतीति। तेनोत्तरसूत्रे यद् वक्ष्यते—'पश्यार्थैर्युक्तयुक्तेऽपि प्रतिषेधः' इति, तदुपपन्नं भवति ॥ २४ ॥

**पदमञ्जरी**

भूदित्येवमर्थं युक्तग्रहणमित्यर्थः। एतदेव युक्तग्रहणं लिङ्गम्—अत्र प्रकरणे युक्तयुक्तस्यापि ग्रहणमिति, तेनोत्तरः प्रतिषेधो युक्तयुक्तेषु भवति ॥ २४ ॥

**भावबोधिनी**

[ उक्त आदेश नहीं होते हैं। ]

सूत्र में 'युक्ते' का ग्रहण साक्षात् योग का ज्ञान कराने के लिये है। युक्त के योग में प्रतिषेध नहीं होता है अर्थात् आदेशों का प्रतिषेध न होकर आदेश हो जाते हैं। जैसे—] ग्रामश्च ते स्वम्, नगरं च मे स्वम्। [ यहाँ 'च' का साक्षात् योग होने से षष्ठी एकवचनान्त 'तव' 'मम' का 'ते' 'मे' होता ही है, निषेध नहीं होता है। ]

**विमर्श**—सूत्र में 'युक्ते' का उल्लेख न होने पर भी सामर्थ्य से उसके अर्थ की प्रतीति हो सकती थी फिर भी 'युक्ते = योगे' का उल्लेख करने से यह ज्ञात होता है कि सूत्र में गृहीत 'च' आदि के अर्थों का यदि युष्मद् अस्मद् के अर्थों के साथ साक्षात् सम्बन्ध है तो ये आदेश नहीं होते हैं। किन्तु यदि परम्परा सम्बन्ध से योग है अर्थात् युष्मदादि के अर्थ का पहले ग्रामादि के साथ सम्बन्ध है बाद में चादि पदार्थ समुच्चय के साथ, वहाँ प्रतिषेध नहीं होता है। जैसा कि—'ग्रामश्च ते स्वम्, नगरं च मे स्वम्' में है। यहाँ 'च' शब्द से ग्राम और नगर का समुच्चय द्योतित होता है। 'ग्रामः तव च स्वम् मम च स्वम्' यहाँ युष्मद् तथा अस्मत् के अर्थों का समुच्चय द्योतित होता है, साक्षात् योग है, निषेध हो जाता है। यह योग सभी उदा० में देखना चाहिए। 'तुमे और मुझे' 'तेरे लिये और मेरे लिये' 'तेरा और मेरा' ऐसी प्रतीति होती है तब निषेध होता है। गाँव तेरा धन है और नगर मेरा धन है—ऐसी प्रतीति में निषेध न होकर आदेश हो जाते हैं।

काशिकाकार ने दो दो अलग-अलग वाक्य लिखकर निषेध दिखाया है, इनसे सन्देह हो जाता है। इसकी अपेक्षा—हरिः त्वां मां च रक्षतु, युवाम् आवां च, युष्मान् अस्मान् च—ऐसा एक वाक्य लिखते तो साक्षात् योग की शीघ्र प्रतीति हो जाती ॥ २४ ॥

## ३६३९. पश्यार्थैश्चानालोचने ॥ २५ ॥ (४०९)

**पश्यार्थाः = दर्शनार्थाः, दर्शनम् = ज्ञानम्, आलोचनम् = चक्षुर्विज्ञानम्। तैः पश्यार्थैरनालोचने वर्तमानैर्युक्ते युष्मदस्मदोर्वान्नावादयो न भवन्ति। ग्रामस्तव स्वं समीक्ष्यागतः, ग्रामो मम स्वं समीक्ष्यागतः, ग्रामस्तुभ्यं दीयमानं समीक्ष्यागतः, ग्रामो मह्यं दीयमानं समीक्ष्यागतः, ग्रामस्त्वां समीक्ष्यागतः, ग्रामो मां समीक्ष्यागतः।**

**अनालोचन इति किम्? ग्रामस्त्वा पश्यति, ग्रामो मा पश्यति।**

**❀ पश्यार्थैर्युक्तयुक्तेऽपि च प्रतिषेध इष्यते ❀। तथा चैवोदाहृतम्॥**

### न्यासः

**पश्यार्थैश्चानालोचने॥** पश्यार्थैरिति बहुव्रीहिः। तत्र 'पश्य' इति यदि 'पाघ्राध्माधेट्दृशः शः' इति कर्त्तरि शप्रत्ययान्तः स्यात् ततो द्रष्टृर्थैरित्यर्थः स्यात्। एवं च 'अनालोचने' इति प्रतिषेधो दुर्घटः स्यात्। तस्मादालोचनशब्दोऽयं भावसाधनः—आलोचितिरालोचनमिति। तत्र द्रष्ट्रर्थैर्युक्ते प्रतिषेध उच्यमानः कः प्रसङ्गो यदालोचनवृत्तिभिर्युक्ते स्यात्, नैव प्राप्नोति, स एषोऽनालोचन इति प्रतिषेधः कथमुपपद्यते? यदि यदि पश्यशब्दो भावसाधनो भवति, नान्यथा। तस्मादत एव निपातनात् 'कृत्यल्युटो बहुलम्' इति वा भावेऽत्र शप्रत्ययः, तत्र 'पाघ्रा' इत्यादिना पश्यादेशः, द्वयोरकारयोः पररूपत्वम्। पश्योऽर्थो येषां ते पश्यार्था **दर्शनार्था** इत्यर्थः। दर्शनशब्दोऽयं चक्षुष्पर्यायोऽस्ति, यथा—'अक्ष्णोऽदर्शनात्' इत्यत्र। अतश्चक्षुषोऽपि सम्प्रत्ययः कस्यचिन्मा भूदित्यत आह—**दर्शनं ज्ञानमिति।** तच्चोत्तरत्रालोचनं चक्षुर्ज्ञानमिति चक्षुर्ज्ञानस्य पृथगुपादानात् ततोऽन्यद् विज्ञायते। **ग्रामस्त्वां समीक्ष्यागत** इत्यादिकं साक्षाद्युक्त उदाहरणम्। **ग्रामस्तव स्वं समीक्ष्यागत** इत्यादिकं युक्तयुक्ते। **समीक्ष्यागत इति।** मनसा निरूप्यागत इत्यर्थः। **ग्रामस्त्वा पश्यतीति।** चक्षुर्ज्ञानेन त्वां पश्यतीत्यर्थः।

**तथा चैवोदाहृतमिति।** यादृशीयमिष्टिस्तदर्थरूपमेवोदाहृतमित्यर्थः॥ २५॥

### पदमञ्जरी

**पश्यार्थैश्चानालोचने॥** दर्शनम् = पश्यः। अस्मादेव निपातनाद् भावे शप्रत्ययः, पाघ्रादिसूत्रेण पश्यादेशः, पश्योऽर्थो तेषां ते पश्यार्थाः तदाह—**पश्यार्था = दर्शनार्था इति।** यदि तु 'पाघ्राध्माधेट्दृशः शः' इति कर्त्तरि शप्रत्ययः स्यात्, ततो द्रष्ट्रर्थैरित्यर्थः स्यात्, तथा चालोचनपर्युदासोऽनर्थकः स्यात्, न ह्यालोचनार्था द्रष्ट्रर्था भवन्ति। **दर्शनं ज्ञानमिति।** यद्यपि दृशिश्चक्षुर्विज्ञाने प्रसिद्धः, तथापि तस्य पर्युदासात् ज्ञानमात्रे दृशिरिह वर्तत इत्यर्थः। **ग्रामः** = जनसमुदायः। **समीक्ष्य** मनसा निरूप्येत्यर्थः॥ २५॥

### भावबोधिनी

पश्यार्थ = दर्शनार्थक, दर्शन = ज्ञान, आलोचन = नेत्रों से ज्ञान करना। उन पश्य अर्थ वालों = अनालोचन में वर्तमान शब्दों के योग में युष्मद् तथा अस्मद् के 'वाम्' 'नौ' आदि आदेश नहीं होते हैं। उदा० ग्रामः तव स्वं समीक्ष्य आगतः। [यहाँ देखना अर्थ नहीं है अपि तु समीक्षा करना। अतः अनालोचन में उक्त आदेशों का प्रतिषेध हो जाता है।] ग्रामः तुभ्यं दीयमानं समीक्ष्य आगतः, ग्रामः मह्यं दीयमानं समीक्ष्य आगतः। ग्रामः त्वां समीक्ष्य आगतः। ग्रामः मां समीक्ष्य आगतः। [इनमें आदेश नहीं होते हैं।]

अनालोचन = न देखना अर्थ में—इसका क्या फल है? ग्रामः त्वा पश्यति, ग्रामः मा पश्यति। [यहाँ देखना अर्थ है। निषेध नहीं होता है। आदेश होते हैं।]

पश्यार्थ से युक्त के योग में भी यह प्रतिषेध इष्ट हैं। जैसा कि ऊपर उदाहरण दिये गये हैं। [यहाँ साक्षात् योग के अभाव में भी प्रतिषेध दिखाया गया है।]॥ २५॥

## ३६४०. सपूर्वायाः प्रथमाया विभाषा ॥ २६ ॥ (४१०)

**विद्यमानपूर्वात् प्रथमान्तात् पदादुत्तरयोर्युष्मदस्मदोर्विभाषा वान्नावादयो न भवन्ति। ग्रामे कम्बलस्तव स्वम्, ग्रामे कम्बलो मे स्वम्, ग्रामे कम्बलो मम स्वम्। ग्रामे कम्बलस्ते दीयते, ग्रामे कम्बलस्तुभ्यं दीयते; ग्रामे कम्बलो मे दीयते, ग्रामे कम्बलो मह्यं दीयते। ग्रामे छात्रास्त्वा पश्यन्ति, ग्रामे छात्रास्त्वां पश्यन्ति; ग्रामे छात्रा मा पश्यन्ति, ग्रामे छात्रा मां पश्यन्ति।**

**सपूर्वाया इति किम्? कम्बलस्ते स्वम्, कम्बलो मे स्वम्। प्रथमाया इति किम्? कम्बलो ग्रामे मे स्वम्। कम्बलो ग्रामे मे स्वम्।**

**❀ युष्मदस्मदोर्विभाषा अनन्वादेश इति वक्तव्यम् ❀ (म० भा०)। इह मा भूत्—अथो ग्रामे कम्बलस्ते स्वम्, अथो ग्रामे कम्बलो मे स्वम्।**

### न्यासः

**सपूर्वायाः प्रथमाया विभाषा॥** सहशब्दोऽत्र विद्यमानवचनः, पूर्वशब्दो व्यवस्थावाची। सह विद्यमानं पूर्वं यस्याः सा सपूर्वा—षष्ठ्यर्थे बहुव्रीहिः, 'वोपसर्जनस्य' इति सहस्य सभावः। **प्रथमाया इति।** प्रत्ययग्रहणपरिभाषया तदन्तग्रहणं विज्ञायते। अत एवाह—**प्रथमान्तात् पदादिति। युष्मदस्मदोर्विभाषेत्यादि।** आदेशः = कथनम्, अन्वादेशः = अनुकथनम्। न अन्वादेशोऽनन्वादेशः तत्रानन्वादेश युष्मदस्मदोर्विभाषा भवतीति वक्तव्यम्।

किमर्थमित्याह—**इहेत्यादि।**

### पदमञ्जरी

**सपूर्वायाः प्रथमाया विभाषा॥ विद्यमानपूर्वादिति।** 'तेन सहेति तुल्ययोगे' इत्यत्र 'तुल्ययोगे' इत्युपाधेः प्रायिकत्वाद्विद्यमानवचनस्यापि सहशब्दस्य समासः, 'वोपसर्जनस्य' इति सभावः।

**युष्मदस्मदोर्विभाषाऽनन्वादेश इति।** येयं युष्मदस्मदोर्विभाषा साऽनन्वादेशे भवति, अन्वादेशे तु नित्यमादेशविधिरित्यर्थः।

### भावबोधिनी

जिसके पूर्व में (कोई पद) विद्यमान है ऐसे प्रथमान्त युष्मद् तथा अस्मद् पद के स्थान पर विकल्प से 'वाम्' 'नौ' ये आदेश नहीं होते हैं। उदा० ग्रामे कम्बलः ते स्वम्, ग्रामे कम्बलः तव स्वम्। [ यहाँ 'ते' और 'तव' दोनों रूप होते हैं। ] ग्रामे कम्बलः मे स्वम्, ग्रामे कम्बलः मम स्वम्। [ यहाँ 'मे' 'मम' दोनों होते हैं। षष्ठ्यर्थ के बाद अब चतुर्थी विभक्त्यन्त के उदा० ] ग्रामे कम्बलस्ते दीयते, ग्रामे कम्बलः तुभ्यं दीयते। [ यहाँ 'ते' 'तुभ्यम्' दोनों होते हैं। ] ग्रामे मे कम्बलः दीयते, ग्रामे मह्यं कम्बलः दीयते। [ यहाँ 'मे' 'मम' दोनों होते हैं। अब द्वितीयविभक्त्यन्त के उदा० ] ग्रामे छात्राः त्वा पश्यन्ति, ग्रामे छात्रास्त्वां पश्यन्ति। ग्रामे छात्राः मा पश्यन्ति, ग्रामे छात्रा मां पश्यन्ति। [ यहाँ 'त्वा, त्वाम्' और मा, माम्' दोनों होते हैं। ]

जिसके पूर्व में कोई है ऐसे प्रथमान्त से परे—कथन का क्या फल है? कम्बलः ते स्वम्, कम्बलः मे स्वम्। [ यहाँ प्रथमान्त 'कम्बलः' से पूर्व में कोई नहीं है अतः उससे परे के विकल्प से नहीं, नित्य हो सकते हैं। ]

प्रथमान्त से परवर्ती का—इसका क्या फल है? कम्बलो ग्रामे ते स्वम्। कम्बलो ग्रामे मे स्वम्। [ यहाँ सप्तम्यन्त से परे है। अतः विकल्प नहीं होता है। ]

❀ अन्वादेश से भिन्न में युष्मद् तथा अस्मद् के विकल्प से आदेश कहने चाहिए। ❀ यहाँ न हो सके—अथो ग्रामे कम्बलस्ते स्वम् अथो ग्रामे कम्बलः मे स्वम्।

**अपर आह—** ❀ **सर्व एव वान्नावादयोऽनन्वादेशे विभाषा वक्तव्याः** ❀ **( म० भा० ) । कम्बलस्ते स्वम्, कम्बलस्तव स्वम्; कम्बलो मे स्वम्, कम्बलो मम स्वम् । अनन्वादेश इति किम् ? अथो कम्बलस्ते स्वम्, अथो कम्बलो मे स्वम् ।**

**न तर्हीदानीमिदं वक्तव्यम्—'सपूर्वायाः प्रथमायाः विभाषा' इति ? वक्तव्यं च । किं प्रयोजनम् ? अन्वादेशार्थम्, अन्वादेशे हि विभाषा यथा स्यात् । अथो ग्रामे कम्बलस्ते स्वम्, अथा ग्रामे कम्बलस्तव स्वम्; अथो ग्रामे कम्बलो मे स्वम्, अथो ग्रामे कम्बलो मम स्वम् ॥**

**न्यासः**

**सर्व एवेत्यादि ।** ये सपूर्वात् प्रथमान्तात् पदात्परयोर्युष्मदस्मदोः प्राप्नुवन्त्यादेशाः, ये च ततोऽन्ये ते सर्व एवानन्वादेशे विभाषा वक्तव्याः ।

यद्येवम्, अनेन वचनेनैव सर्वत्र विकल्पस्य सिद्धत्वादपार्थकमिदं सूत्रमिति मन्यमान आह—**न तर्हीत्यादि । अन्वादेशार्थमिति ।** यद्येतन्नोच्येत, ततोऽनन्वादेश इत्यभिधानात् सपूर्वात् प्रथमान्तादन्वादेशे विकल्पो न स्यात् । तस्मात् सपूर्वात् प्रथमान्तादन्वादेशेऽपि विकल्पो यथा स्यादित्येवमर्थं क्रियमाणेऽप्युसंख्याने सूत्रमिदं कर्त्तव्यमेव । अस्मिंस्तु क्रियमाणे तदुपसंख्यानं न कर्त्तव्यम् । कथम् ? सिंहावलोकितन्यायेन हि विभाषाग्रहणं पूर्वत्राप्युपतिष्ठते । तत्र व्यवस्थितविभाषाग्रहणादनन्वादेशे सर्वत्र विकल्पो भविष्यति, अन्वादेशे तु नित्यं वान्नावादयः, सपूर्वायाः प्रथमाया अन्वादेशेऽपि विकल्प इति ॥ २६ ॥

**पदमञ्जरी**

**अपर आहेति ।** पूर्वस्यैव वाक्यस्य व्याख्यानान्तरम् । पूर्वं विभाषाऽनुवादेन 'विषयो नियम्यते' इत्युक्तम्, इदानीं तु 'विशिष्टे विषये विकल्प एव विधीयते' इत्युच्यते । न केवलं सूत्रोक्तविषये ये प्राप्तास्त एव विकल्प्यन्ते, अपि तु सर्वे = सर्वविषया इत्यर्थः ।

**न तर्हीति ।** वक्तव्येनैव सिद्धत्वादिति भावः । **अन्वादेशार्थमिति ।** ननु पूर्वम् 'अन्वादेशे सूत्रं न व्याप्रियते' इत्युक्तम्, इदानीं तु 'तत्रैव व्याप्रियते' इत्युच्यते, तत्कोऽत्र निर्णयः ? इत्याह—**तदेमिति**[1] । तदिति तत्रेत्यर्थे । वाक्योपन्यासे वा । पूर्वा व्याख्या परया व्याख्यया बाध्यत इत्यर्थः ॥ २६ ॥

**भावबोधिनी**

दूसरे आचार्य यह कहते हैं—'❀ अन्वादेश से भिन्न स्थल में ये सभी 'वाम्, नौ' आदि आदेश विकल्प से कहने चाहिए । ❀ उदा० कम्बलः ते स्वम्, कम्बलः तव स्वम् । कम्बलः मे स्वम्, कम्बलः मम स्वम् ।

अन्वादेश से भिन्न में—इसका क्या फल है ? अथो कम्बलः ते स्वम् ; अथो कम्बलः मे स्वम् । [ यहाँ नित्य आदेश होते हैं । ]

तो अब यह सूत्र नहीं कहा जाना चाहिए—'सपूर्वायाः प्रथमाया विभाषा ?' कहना ही चाहिए । क्या प्रयोजन है ? अन्वादेश के लिये । जिससे कि अन्वादेश में विकल्प हो सके । जैसे—अथो ग्रामे कम्बलः ते स्वम्, अथो ग्रामे कम्बलः तव स्वम् । अथो ग्रामे कम्बलः मे स्वम्, अथो ग्रामे कम्बलः मम स्वम् । [ एक बार जिसका उपादान हो चुका है उसीका दूसरी बार उल्लेख करना 'अन्वादेश कहा जाता है । जैसे 'अनेन व्याकरणम् अधीतम्, एनं छन्दः अध्यापय । ऐसे स्थल को अन्वादेश कहा जाता है । ] ॥ २६ ॥

---

१. 'तदयम्' इति मुद्रितकाशिकायां नोपलभ्यते, नापि न्यासे ।

**३६४१. तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ॥ २७ ॥ (३९३४)**

तिङन्तात्पदात्पराणि गोत्रादीनि कुत्सने आभीक्ष्ण्ये चार्थे वर्तमानानि अनुदात्तानि भवन्ति । पचति गोत्रम् । जल्पति गोत्रम् । आभीक्ष्ण्ये—पचतिपचति गोत्रम् । जल्पतिजल्पति गोत्रम् ।

ब्रुव—पचति ब्रुवम् । जल्पति ब्रुवम् । जल्पतिजल्पति ब्रुवम् । पचतिपचति ब्रुवम् ।

'ब्रुवः'—इति ब्रुवः कन्निपातनाद्, वच्यादेशाभावश्च ।

गोत्र । ब्रुव । प्रवचन । प्रसहन । प्रकथन । प्रत्ययन । प्रचक्षण । प्राय । विचक्षण । अवचक्षण । स्वाध्याय । भूयिष्ठ । ❋ वा नाम ❋ ( ग० सू० १७८ ) ।

नामेत्येतद्वा निहन्यते । पक्षे आद्युदात्तमेव भवति—पचति नाम, पठति नाम ।

**न्यासः**

**तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः** ॥ यथायथमुदात्तादिषु प्राप्तेष्विदमारभ्यते । **पचति गोत्रमिति** । यः स्वपुरुषकारेण जीविकां कल्पयितुमशक्तो गोत्रख्यापनेन तां कल्पयति स एवमुच्यते । **पचतीति** । व्यक्तीकरोतीत्यर्थः । 'पचि व्यक्तीकरणे' (धा० पा० १७४) । **पचतिपचति गोत्रमिति** । नित्यर्थे द्विर्वचनम् । यस्त्वाभीक्ष्ण्येन गोत्रं ख्यापयति स एवमुच्यते । **वच्यादेशाभावश्चेति** । 'ब्रुवो वचिः' इति वाच्यादेशः प्राप्नोति, तस्याभावो निपातनादेव । **विलक्षण इति** । अत्रापि 'चक्षिङः ख्याञ्' इति प्राप्तस्य ख्याञादेशस्याभावो निपातनादेव वेदितव्यः ।

**नामेत्येतद्वा निहन्यत इति** । विभाषाग्रहणस्यानुवृत्तेः । न च तदनुवृत्तावतिप्रसङ्गो भवति; व्यवस्थित विभाषाविज्ञानात् । **पक्षे आद्युदात्तमेव भवतीति** । 'नब्विषयस्यानिसन्तस्य' इति नामशब्दस्याद्युदात्तत्वात् । **कुत्सित गोत्रमिति** । 'गुङ् अव्यक्ते शब्दे' इत्यस्मादौणादिके ष्ट्रनि विहिते गोत्रमिति भवति । तस्मान्नित्स्वरेण गोत्रशब्दोऽत्राद्युदात्तः ।

**पदमञ्जरी**

**तिङो गोत्रादीनि कुत्सनाऽऽभीक्ष्ण्ययोः** ॥ **पचति गोत्रमिति** । पचिर्व्यक्तीभावे, यथा—लोकपक्तिरिति, भोजनाद्यर्थं गोत्रं ख्यापयतीत्यर्थः, एवं हि कुत्सा भवति । **पचतिपचति गोत्रमिति** । विवाहादिविषये पुनः पुनर्गोत्रं ख्यापयतीत्यर्थः । तत्र कुत्साया अभावादाभीक्ष्ण्यग्रहणम् । 'नित्यवीप्सयोः इति द्विर्वचनम् । ब्रुवशब्दः कुत्सितवचनः, अत एवास्याभीक्ष्ण्ये पृथगुदाहरणं न प्रदर्शितम् । पचति प्रवचनमित्यादावात्मप्रशंसया कुत्सा । प्रवचनम् = अध्यापनम् ।

'वा नाम' इति गणसूत्रं व्याचष्टे—**नामेत्येतदिति** । **पचति पापमिति** । पापमिति क्रियाविशेषणम् । **खनति गोत्रं समेत्य कूपमिति** । गोत्रं कुलं समुदितं भूत्वा कूपं खनतीत्यर्थः ।

**भावबोधिनी**

तिङन्त पद से परे कुत्सन और आभीक्ष्ण्य अर्थ में विद्यमान गोत्रादिगण में पठित शब्द अनुदात्त होते हैं । उदा० पचति गोत्रम् । जल्पति गोत्रम् । [ यहाँ कुत्सा अर्थ है । आभीक्ष्ण्य = पौनः पुन्य अर्थ में ] पचति-पचति गोत्रम् । जल्पति-जल्पति गोत्रम् । [ यहाँ 'नित्यवीप्सयोः' सूत्र से द्वित्व होता है । सभी तिङन्त से परे और कुत्सा या आभीक्ष्ण्य अर्थ में होने से अनुदात्त होते हैं । वंश या गोत्र की प्रशंसा करके जीविका-यापन करने वाले के लिये यह निन्दावाक्य है । ]

ब्रुव—पचति ब्रुवम् । जल्पति ब्रुवम् । पचति पचति ब्रुवम् । जल्पति जल्पति ब्रुवम् । [ ब्रुव शब्द भी निन्दा अर्थ में प्रयुक्त होता है । ]

'ब्रुवः' यहाँ 'ब्रू' से निपातन के बल से कन् प्रत्यय और [ "ब्रुवो वचिः" सूत्र से ब्रू के ] 'वच' आदेश का अभाव भी किया जाता है ।

गोत्रादि-गण पठित में शब्द—गोत्र । ब्रुव । प्रवचन । प्रहसन । प्रकथन । प्रत्ययन । प्रचक्षण । प्राय । विचक्षण । अवचक्षण । स्वाध्याय । भूयिष्ठ । ❋ नाम—यह विकल्प से ❋

**तिङ इति किम् ? कुत्सितं गोत्रम्। गोत्रादीनीति किम् ? पचति पापम्। कुत्सनाभीक्ष्ण्ययोरिति किम् ? खनति गोत्रं समेत्य कूपम्।**

**कुत्सनाभीक्ष्ण्यग्रहणं[1] च[1] पाठविशेषणं द्रष्टव्यम्। तेनान्यत्रापि गोत्रादिग्रहणेन कुत्सनाभीक्ष्ण्ययोरेव कार्यं भवति ( म० भा० ) ॥**

**न्यासः**

**पचति पापमिति।** पापशब्दः कुत्सने वर्तते, तिङन्ताच्च परो भवति, न तु गोत्रादिरिति न निहन्यते।

इह कुत्सनाभीक्ष्ण्यग्रहणे, एतदनुदात्तविशेषणं वा स्यात्—तिङः पराणि गोत्रादीन्यनुदात्तानि भवन्ति कुत्सनाभीक्ष्ण्ययोरिति उत, गोत्रादीनां पाठविशेषणं वा स्याद्—एतयोरर्थयोर्गोत्रादीनि भवन्ति, तानि च तिङः पराण्यनुदात्तानि भवन्तीति ? अनयोरर्थयोर्गोत्रादिव्यपदेशमासादयन्तीति योऽसौ तेषां प्रातिपदिकेषु विशिष्टानुपूर्वीकः पाठः, स एव तयोरर्थयोर्वर्तमानानां भवतीति यावत्। तत्र पूर्वस्मिन् पक्षे 'चनचिदिव-गोत्रादितद्धिताम्रेडितेष्वगतेः' इत्यत्र; 'कुत्सने च सुप्यगोत्रादौ' इत्यत्र च कुत्सनाभीक्ष्ण्ययोरपि वर्तमानानां कार्यं प्राप्नोति; विशेषानुपादानात्। इतरस्मिंस्तुपक्षे न भवत्येष दोषः। यानि हि न कुत्सनाभीक्ष्ण्ययोर्वर्तन्ते तेषां गोत्रादिव्यपदेश एव नास्ति; कुत्सनाभीक्ष्ण्यवृत्तीनामेव गणे पठितत्वात्। एतत् सर्वं चेतसि कृत्वाऽऽह—**कुत्सनाभीक्ष्ण्यग्रहणं चेत्यादि।** पठ्यत इति पाठः, सन्निवेशविशेषः। तद्विशेषणमेव तद् वेदितव्यम्। तेन किमिष्टं भवतीत्याह—**नेत्यादि।** कथं पुनरेकेन यत्नेन गोत्रादीनां पाठश्च शक्यो विशेषयितुमनुदात्तत्वञ्चैषां विधातुम् ? एवं मन्यते—योगविभागः कर्त्तव्यः, तिङः पराणि गोत्रादीन्यनुदात्तानि भवन्ति; ततः 'कुत्सना-भीक्ष्ण्ययोः', गोत्रादीनीत्येव। न चात्र द्वितीये योगे विधेयमन्यदस्तीति गोत्रादीन्येव कुत्सनाभीक्ष्ण्यग्रहणेन विशिष्यन्ते। अथ वा—उभयथा सूत्रमाचार्येण शिष्याः प्रतिपादिताः, उभयञ्चैतत् प्रमाणम्, अत उभयं ग्रहीष्यन्तीति। **वृत्तिग्रन्थस्तु** तिङन्तात् पदादुत्तराणि गोत्रादीनीत्यादिको वाक्यभेदेनैव नेयः—गोत्रादीनि कुत्सने चाभीक्ष्ण्ये च भवन्ति, तान्येव तिङन्तात् पदादुत्तराण्यनुदात्तानि भवन्तीति। ननु च गोत्रादयः शब्दा

**पदमञ्जरी**

किमिदं कुत्सनाऽऽभीक्ष्ण्यग्रहणं गोत्रादीनां पाठविशेषणम्—एतयोरर्थयोर्गोत्रादीनि भवन्ति, तानि च तिङः पराण्यनुदात्तानि भवन्तीति ? आहोस्विदनुदात्तविशेषणम्—तिङः पराणि गोत्रादीनि अनुदात्तानि भवन्त्येतयोरर्थयोरिति ? अस्मिन्विवादे निर्णयमाह—**कुत्सनाभीक्ष्ण्यग्रहणं चेति।** पठ्यत इति पाठः, सन्निवेश-विशेषः। तस्य विशेषणं वेदितव्यम्। अयं चार्थो योगविभागाल्लभ्यते, 'तिङो गोत्रादीनि' इत्येको योगोऽनुदात्त-विधानार्थः, 'कुत्सनाभीक्ष्ण्ययोः' इति द्वितीयो योगः, गोत्रादीनीत्येव, परिभाषेयम्। इह शास्त्रे गोत्रादीनि

**भावबोधिनी**

'नाम' यह शब्द विकल्प से सर्वानुदात्त होता है पक्ष में आद्युदात्त ही होता है—पचति नाम। पठति नाम।

तिङन्त से परे—इसका क्या फल है ? कुत्सितं गोत्रम्। [ यहाँ अनुदात्त नहीं होता है। ]

गोत्रादि—इसका क्या फल है ? पचति पापम्। [ पाप—गोत्रादि नहीं है। ]

कुत्सन तथा आभीक्ष्ण्य में—इसका क्या फल है ? खनति गोत्रं समेत्य कूपम्। [ गोत्र को साथ मिलाकर कुआँ खोदता है। यहाँ कुत्सा नहीं अपितु प्रशंसा अर्थ है। ]

कुत्सन और आभीक्ष्ण्य का ग्रहण पाठविशेषण समझना चाहिए। इस कारण अन्यत्र भी गोत्रादिग्रहण से कुत्सन और आभीक्ष्ण्य अर्थों में ही कार्य होता है। [ इसको पाठ का विशेषण मान लेने से गोत्रादि जहाँ भी हैं वहाँ कुत्सन या आभीक्ष्ण्य में कार्य करना चाहिए। इस सूत्र का योग-विभाग किया जाता है—(१) तिङो गोत्रादीनि। इससे अनुदात्त का विधान किया जाता है। (२) 'कुत्सनाभीक्ष्ण्ययोः' यहाँ भी प्रथम योग से 'गोत्रादि' की अनुवृत्ति

---

१–१. 'प्रदशन, प्रजनन, न्याय, प्रपञ्च, प्रचक्षण'—इत्येते पुस्तकान्तरेऽत्र गणेऽधिकाः। 'कुत्सनाभीक्ष्ण्ययोरिति'—इति मुद्रितः पाठः।

## ३६४२. तिङ्ङतिङः ॥ २८ ॥ (३९३५)

तिङन्तं पदमतिङन्तात् पदात्पदात् परमनुदात्तं भवति । देवदत्तः पचति । यज्ञदत्तः पचति ।
तिङिति किम् ? नीलमुत्पलम् । शुक्लं वस्त्रम् ।
अतिङ इति किम् ? भवति पचति ॥

**न्यासः**

गोत्रादावेवानर्थान्तरे वर्त्तन्ते, ते कथं कुत्सनाभीक्ष्ण्ययोर्वर्त्तेरन् ? तमेव स्वार्थं यदा तु कुत्सनाभीक्ष्ण्यविशिष्टमाचक्षते तदा तयोर्वर्तन्त इत्यदोषः ॥ २७ ॥

**तिङ्ङतिङः ॥ नीलमुत्पलमिति** । उत्पलमित्येतत् 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तं भवति । **भवति पचतीति** । पचतिक्रिया भवतीत्ययमस्यार्थः । पचतिशब्दे शप्तिपावनुदात्तौ, अकारो धातुस्वरेणोदात्तः, 'उदात्तादनुदात्तस्य स्वरितः' इति शबकारः स्वरितः । ननु च समासवाक्ये निघातादय उच्यन्ते, इदञ्च वाक्यमेव न भवति, तत् किमेतन्निवृत्त्यर्थेनातिङ्ग्रहणेन ? किं पुनः कारणमेतद् वाक्यं न भवति ? 'आख्यातं साव्ययकारकविशेषणं वाक्यम्'—इत्यत्र वाक्यलक्षण एकत्वस्य विवक्षितत्वात्, इह चाख्यातस्य द्वित्वात् ? नैष दोषः; अत्राप्याख्यातं यदकारकं तद्विवक्षितम् । तच्चास्मिन्नेकमेव भवतिशब्दः, पचतीत्येतत्तु कारकम् । तथा हि भाष्ये उक्तम्—'पचत्यादयः क्रियायाः कर्त्र्यो भवन्ति' इति । यदपीदमुक्तम्—'एकतिङ् पदसमूहो वाक्यम्' इति, अत्रापि प्रधानं यत् तिङ् तदधिकृत्यैकतिङित्युक्तम् । अत्र चैकमेव तिङन्तं प्रधानम् । यद्येतत्, किं तर्हि अत्र तिङन्तं तत् ? भवतीति । पचतीत्येतत् पुनः साधनत्वादप्रधानम् ॥ २८ ॥

**पदमञ्जरी**

कुत्सनाभीक्ष्ण्यविषयाण्येव ग्राह्याणीति, तेन किं सिद्धं भवति ? इत्यत आह—**तेनेति** । **अन्यत्रापीति** । 'चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः', 'कुत्सने च गोत्रादौ' इत्यत्र ॥ २७ ॥

**तिङ्ङतिङः ॥ भवति पचतीति** । पचतीत्येतद्भवति, पाकक्रिया भवतीत्यर्थः । तत्र साध्यसाधनभावेन द्वयोः क्रिययोरन्वयादस्ति सामर्थ्यम् । यथोक्तम्—'पच्यादिक्रिया भवतिक्रियायाः कर्त्र्यो भवन्तीति ।' तत्र पाकस्य स्वसाधनानि प्रति साध्यस्यापि भवनं प्रति सिद्धत्वम् । यथाह भर्तृहरिः—

'तत्र यं प्रति साध्यत्वमसिद्धा तं प्रति क्रिया ।
सिद्धा तु यस्मिन्साध्यत्वं न तमेव पुनः प्रति' ॥ (वा० प० ३।८।५०) इति ।

अस्त्येतत् ? किम् ! तर्हि अतिङ्ग्रहणमनर्थकम्; समानवाक्याधिकारात्, 'समानवाक्ये' इति वर्त्तते, न चैकस्मिन्वाक्ये तिङन्तद्वयमस्ति, तदुक्तं पुरस्तात् । सूत्रकारेण तु समानवाक्याधिकारो न कृत इत्यतिङ्ग्रहणमकारि ॥ २८ ॥

**भावबोधिनी**

करके इस व्याकरण शास्त्र में गोत्रादि को कुत्सन तथा आभीक्ष्ण्य विषय वाला ही समझना चाहिए । वहीं पद अनुदात्त होता है । ] ॥ २७ ॥

अतिङन्त पद से परे तिङन्त पद अनुदात्त होता है । उदा० देवदत्तः पचति । यज्ञदत्तः पचति । [ यहाँ सम्पूर्ण 'पचति' अनुदात्त हो जाता है । ]

तिङन्त अनुदात्त होता है—इसका क्या फल है ? नीलम् उत्पलम् । शुक्लं वस्त्रम् । [ यहाँ तिङन्त नहीं है अतः अनुदात्त नहीं होता है । ]

अतिङन्त से परे—इसका क्या फल है ? पचति भवति । [ यहाँ तिङन्त से तिङन्त ही परे है । अतः अनुदात्त नहीं होता है । ] ॥ २८ ॥

**३६४३. न लुट् ॥ २९ ॥ (३९३६)**

पूर्वेणातिप्रसक्ते प्रतिषेधः आरभ्यते । लुडन्तं तिङन्तं नानुदात्तं भवति । श्वः कर्ता । श्वः कर्तारौ । मासेन कर्तारः ।

तासेः परस्य लसार्वधातुकस्यानुदात्तत्वे सति सर्वतासिरेवोदात्तः । यत्र तु टिलोपः, तत्रोदात्तनिवृत्तिस्वरो भवति ॥

**३६४४. निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ॥ ३० ॥ (३९३७)**

'न' इति वर्तते । यत्, यदि, हन्त, कुवित्, नेत्, चेत्, चण्, कच्चित्, यत्र—इत्येतैर्निपातैर्युक्तं तिङन्तं नानुदात्तं भवति । यत्करोति, यत्पचति । यदि करोति, यदि पचति । हन्त करोति, हन्त पचति ।

**न्यासः**

**न लुट् ॥ श्वः कर्त्तेति ।** करोतेर्लुट्, 'लुटः प्रथमस्य डारौरसः' इत्येकवचनस्य डादेशः, डिति टिलोपः ।

**तासेः परस्येत्यादि ।** आगमः प्रत्ययस्वरेणाद्युदात्त । तस्य यत्र टिलोपो नास्ति—कर्त्तारौ कर्तार इत्यादौ, 'तस्यानुदात्तेन्ङित्' इत्यादिना लसार्वधातुकस्यानुदात्तत्वे कृते तासेरेवोदात्तत्वं भवति । यत्र तु टिलोपस्तत्र 'अनुदात्तस्य च यत्रोदात्तलोपः' इति लसार्वधातुकमेवोदात्तं भवति ॥ २९ ॥

**निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ॥** यद्यपि निपातैरित्येतदपेक्षमाणानां यदादीनां सामर्थ्यम्, तथापि गमकत्वाद् युक्तशब्देन समास एषां युक्त एव । अथ वा—अत्र न समासः, विभक्तिस्त्वव्ययत्वादेषां लुप्तेति न श्रूयते । युक्तग्रहणं त्विहापि साक्षाद् योगप्रतिपत्त्यर्थम्, तेन युक्तयुक्ते प्रतिषेधो न भवति । एतच्च प्रत्युदाहरणेऽपि स्पष्टीकरिष्यामः । अत्र यद्-यत्रयोर्ग्रहणमाभ्यां पूर्वस्यापि तद्युक्तस्य प्रतिषेधो यथा स्यादित्येवमर्थम् । यद्धि ततः परं तिङन्तं तस्य 'यद्वृत्तान्नित्यम्' इत्येवं सिद्धः प्रतिषेधः, पूर्वस्य तु तेन न सिध्यति । तदा हि यद्वृत्तादिभिः पञ्चमी 'तस्मादित्युत्तरस्य' इति परस्यैव निघातप्रतिषेधं प्रतिपादयति, नेतरस्य । **यत् करोतीति ।** करोतिशब्द उकारप्रत्ययस्योदात्तत्वान्मध्योदात्तः ।

**पदमञ्जरी**

**न लुट् ॥ श्वः कर्त्तेत्यादि ।** अथात्र निघाते प्रतिषिद्धे कः स्वरः श्रूयते इत्याह—**तासेः परस्येति** ॥ २९ ॥

**निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ॥**

यद्यदार्थे च हेतौ च विचारे यदिचेच्चणः । हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ॥ १ ॥
कच्चित्प्रश्ने नेन्निषेधे प्रशंसायां कुवित्स्मृतम् । यत्राधारे निपातत्वं यदादीनां विशेषणम् ॥ २ ॥
समासे गुणभूतानामपि गत्यन्तरं न हि । नैव वाऽयं समासः सुबव्ययत्वेन लुप्यते ॥ ३ ॥

**भावबोधिनी**

पूर्ववर्ती सूत्र द्वारा अतिप्रसक्ति में यह प्रतिषेध किया जा रहा है । लुडन्त तिङन्त अनुदात्त नहीं होता है । उदा० श्वः कर्ता । श्व कर्त्तारौ । मासेन कर्तारः । [ कृ + लुट् = कर्ता, कर्तारौ, कर्तारः हैं । यहाँ अतिङन्त से परे तिङन्त है । पूर्व सूत्र से अनुदात्तत्व प्रसक्त है । यह सूत्र प्रतिषेध कर देता है । ]

तास् से परे ल सार्वधातुक का अनुदात्तत्व होने पर सम्पूर्ण तास् का उदात्त ही होता है । किन्तु जहाँ टि = आस् का लोप हो जाता है । वहाँ उदात्तनिवृत्ति-स्वर होता है अर्थात् 'अनुदात्तस्य च यत्रोदात्तलोपः' सूत्र से ल सार्वधातुक ही उदात्त हो जाता है । [ फलतः तास् की टि लोप और लोप न होने पर तास् और उसके बाद के लकारस्थानीय प्रत्यय का उदात्त होता है । अतः एक ही लकार के भिन्न-भिन्न स्वर देखे जाते हैं ] ॥ २९ ॥

'न' इसकी अनुवृत्ति होती है । यत्, यदि, हन्त, कुवित्, नेत्, चेत्, चण, कच्चित्, यत्र—इन इतने निपातों से युक्त तिङन्त अनुदात्त नहीं होता है । क्रमशः उदा० यत् करोति । यत् पचति । यदि करोति, यदि पचति । हन्त करोति, हन्त पचति ।

कुवित्—कुवित्करोति, कुवित्पचति ।

नेत्—नेज्जिह्मायन्तो नरकं पताम ( ऋ० खि० ३।२२ ) ।

चेत्—स चेद् भुङ्क्ते । स चेदधीते ।

चण्—णिद्विशिष्टोऽयं चेदर्थे वर्तते । अयं च मरिष्यति । अयं चेन्मरिष्यतीत्यर्थः । समुच्चयादिषु तु यश्चशब्दस्तेन योगेन विधिरयं न भवति ।

**न्यासः**

**नेज्जिह्मायन्तो नरकं पतामेति** । पतेर्लट्, मस्, शप्, 'अतो दीर्घो यञि' इति दीर्घः । ङिद्वदुपदेशत्वाल्लसार्वधातुकत्वादनुदात्तत्वे कृते धातुस्वरेणाद्युदात्तमेतत् ।

**स चेद् भुङ्क्त इति** । 'भुजोऽनवने' इत्यात्मनेपदम्, रुधादित्वात् श्नम् । पूर्ववल्लसार्वधातुकानुदात्तत्वम्, 'श्नसोरल्लोपः', 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्युदात्तत्वे कृते भुङ्क्त इत्येतदन्तोदात्तम् । **स चेदधीत इति** । इङ् धातुस्वरेणोदात्तः । ङित इति लसार्वधातुकमेवानुदात्तम् । आदिशब्दापेक्षया निघाते प्राप्ते न प्रतिपदोक्तपरिभाषोपतिष्ठते, साहचर्यञ्च व्यवस्थाकारणं न भवतीति । तेन 'यावद्यथाभ्याम्' इति यथाशब्दसाहचर्याद् यावच्छब्दोऽपि नाव्ययमेव परिगृह्यते, किं तर्हि ? परिमाणशब्दोऽपि लाक्षणिकः । यावतोऽश्वान् प्रतिगृह्णीयादित्यत्रापि निघातप्रतिषेधो भवति । 'यत्तदेतेभ्यः परिमाणे वतुप्' इति वतुबन्तोऽत्र यावच्छब्दः ।

**पदमञ्जरी**

तत्र बह्वृचाः—'नेच्चेद्' इति निपातसमाहारमधीयते—नेदेवमायुनजन्नत्र देवाः । अन्यश्चेन्नाभिगच्छतीति चेदर्थे वर्तत इति । य एव समुच्चयादिषु दृष्टश्चशब्दः स एव चेदर्थे वर्तते, तदर्थवर्तिनस्तु चिह्नं णकारः । तथा च चादयोऽनुदात्ता इत्ययं चेदर्थोऽप्यनुदात्तः, इन्द्रश्च मृडयाति नः; नतः पश्चादघं नशत्, इन्द्रश्चेदस्मान्मृडयेत्, सुखयेदित्यर्थः । त्वं च सोम नो वशो जीवातुं न मरामहे—हे सोम त्वं चेदस्मान् जीवातुं जीवितुं वशः उश्याः कामयेथा इत्यर्थः ।

**समुच्चयादिषु यश्चशब्द इति** । एष्वर्थेषु न भवतीत्यर्थः । उदाहरणेषु करोतिशब्दो विकरणस्वरेण मध्योदात्तः । **भुङ्क्त इति** । उदात्तनिवृत्तिस्वरेणान्तोदात्तः । **अधीत इति** । 'अह्न्विङोः' इति लसार्वधातुकानुदात्तत्वप्रतिषेधादन्तोदात्तः । **इणः शतरि रूपमिति** । 'इणो यण्' इति यणादेशः । ननु प्रतिपदोक्तत्वाद्यद्यादिभिः साहचर्याच्च निपातस्यैव ग्रहणं भविष्यति ? एवं तर्ह्येतज्ज्ञापयति—अत्र प्रकरणे नेदमुभयं व्यवस्थापकमिति । तेन 'यावद्यथाभ्याम्' इत्यत्र 'यत्तदेतेतेभ्यः परिमाणे वतुप्' इति व्युत्पादितस्य लाक्षणिकस्यानिपातस्यापि यावच्छब्दस्य ग्रहणं भवति—तावदुषो राधो अस्मभ्यम्, रास्व यावत्स्तोतृभ्यो अरदो गृणाना इति; यावतोऽश्वान् प्रतिगृह्णीयादिति च ।

**भावबोधिनी**

कुवित्—कुवित् करोति, कुवित् पचति ।

नेत्—नेज्जिह्मायन्तो नरकं पताम ।

चेत्—स चेद् भुङ्क्ते । स चेदधीते ।

चण—णिद्विशिष्ट यह चेद् के अर्थ में होता है । अयं च मरिष्यति । अयं चेत् मरिष्यति यह अर्थ है । [ चण् का ण् इत्संज्ञक है । और चेत् के अर्थ में प्रयुक्त होता है । ] अतः समुच्चय आदि अर्थों में जिस च का प्रयोग होता है उसके योग में यह सूत्र लागू नहीं होता है । [ च और चण् दोनों का प्रयोगार्ह रूप से 'च' ही है । अन्तर है जब 'चेत्' के अर्थ में है तब चण् मानकार अनुदात्तत्व का निषेध किया जाता है । ]

कच्चित्—कच्चिद् भुङ्क्ते । कच्चिद् अधीते ।

यत्र—यत्र भुङ्क्ते । यत्र अधीते । [ सूत्र में उल्लिखित शब्दों के अर्थों का स्पष्टीकरण पदमञ्जरी में श्लोक में है । वहीं देखें । ]

कच्चित् कच्चिद् भुङ्क्ते । कच्चिदधीते । यत्र यत्र भुङ्क्ते । यत्राधीते ।

निपातैरिति किम् ? यत्कूजति शकटम् । गच्छत्कूजति शकटमित्यर्थः । इणः शतरि रूपमेतत् ।

युक्तमिति किम् ? यत्र क्व च ते मनो दक्षं दधस उत्तरम् ॥ ( ऋ० ६।१६।१७ )

**३६४५. नह प्रत्यारम्भे ॥ ३१ ॥ (३९३८)**

'नह' इत्येतेन युक्ते प्रत्यारम्भे तिङन्तं नानुदात्तं भवति । चोदितस्यावधीरणे उपालिप्सया प्रतिषेधयुक्तः प्रत्यारम्भः क्रियते नह भोक्ष्यसे । नहाध्येष्यसे ।

प्रत्यारम्भ इति किम् ? नह वै तस्मिंश्च लोके दक्षिणामिच्छन्ति ॥

**न्यासः**

**यत्र क्व च ते मनो दक्षं दधस उत्तरमिति ।** 'दध धारणे', लट्, थास्, 'थासः से' । अत्र यत्रेत्यनेनाधिकरणप्रधाने उत्तरमित्येतदाधेयं युक्तम्, तेन युक्तं तिङन्तम्; अतः साक्षाद् योगो नास्तीति प्रतिषेधो न भवति ॥ ३० ॥

**नह प्रत्यारम्भे ।** नहेत्ययं निपातसमुदायः प्रतिषेधे वर्त्तते । तेत्र युक्तं तिङन्तं प्रत्यारम्भविषये न निहन्यते । पुनरारम्भः = प्रत्यारम्भः । स च यत्र विषये क्रियते तद् दर्शयितुमाह—**चोदितस्येत्यादि ।** भुङ्क्ष्वाधीष्वेत्येवं चोदितं विहितं यत् कर्तव्यतयोपन्यस्तं भोजनादौ यदा तत् कर्तुं न प्रवर्तते नाद्रियते, अवधीर्यत इति यावत्; तदा तस्यावधीरणेऽवज्ञाने सति तमवधीरयितारमुपालब्धुं या इच्छा तयोपालिप्सयैतस्यैव भोजनादेरवधीरितस्य प्रतिषेधेन सम्बन्धः प्रत्यारम्भः । **प्रत्यारम्भः क्रियत इति ।** प्रतिषेधसम्बद्धस्य पुनरुपन्यासः क्रियत इत्यर्थः । **नह भोक्ष्यसे । नहाध्येष्यस इति ।** भुजेरिङश्च लृट्, थासः से' अदुपदेशत्वात् ङित्वाच्च तयोर्धात्वोः लसार्वधातुकमनुदात्तम् । स्यः प्रत्ययस्वरेणोदात्तः ।

**इच्छन्तीति ।** 'इषु इच्छायाम्', तुदादित्वाच्छः, 'इषुगमियमां छः ॥ ३१ ॥

**पदमञ्जरी**

**यत्र क्व चेति ।** अत्र यत्रेत्यस्य उत्तरमित्यनेन साक्षात्सम्बन्धः । **दधस इति ।** 'दध धारणे' अनुदात्तेत् । इह—

हन्ताऽहं पृथिवीमिमां निदधानीह चेह वा ।

हन्तो नु किमास से प्रथमं नो रथं कृधि ॥ इति छान्दसत्वान्निघातः ॥ ३० ॥

**नह प्रत्यारम्भे ॥** नहेति निपातसमाहारः प्रतिषेधे वर्त्तते । प्रत्यारम्भः = पुनरारम्भः । तस्य विषयमाह—**चोदितस्येति ।** भुङ्क्ष्व, अधीष्वेत्येवं चोदितस्य कर्तव्यतयोपन्यस्तस्य भोजनादेरवधीरणेऽवज्ञाते

**भावबोधिनी**

निपात-संज्ञकों के ही योग में—इसका क्या फल है ? यत् कूजति शकटम् । जाती हुई गाड़ी आवाज करती है । इण् का शतृ प्रत्ययान्त नपुंसकलिङ्ग का रूप 'यत्' है । [ निपात नहीं है । अतः निघात को निषेध न होकर निघात होता ही है । ]

युक्त—इसका क्या फल है ? यत्र क्व च ते मनो दक्षं दधस उत्तरम् । [ यहाँ तिङन्त के साथ यत् का योग नहीं है । अतः निषेध नहीं होता है । ] ॥ ३० ॥

'नह' इससे युक्त, प्रत्यारम्भ अर्थ में वर्तमान तिङन्त अनुदात्त नहीं होता है । किसी कार्य को करने के लिए आदिष्ट व्यक्ति का उपालम्भ देने की इच्छा से प्रतिषेध प्रत्यारम्भ किया जाता है । [ भाव यह है कि 'खाओ, पढ़ो—इत्यादि रूप में किसी से काम करने के लिये कहा गया, वह उसे अस्वीकार कर देता है तब अपनी आज्ञा का तिरस्कार देख कर क्रोध से या उपहास से पुनः जो वाक्य उस भोजनादि से सम्बद्ध कहा जाता है उसे प्रत्यारम्भ = पुनः आरम्भ कहा जाता है जैसे—नहीं खाओगे ? अर्थात् तुम्हें खाना ही होगा । ] 'नह भोक्ष्यसे' नह अध्येष्यसे ? [ नहीं खाओगे ? नहीं पढ़ोगे ? यहाँ अनुदात्त का प्रतिषेध हो जाता है । ]

प्रत्यारम्भ में—इसका क्या फल है ? नह वै तस्मिश्च लोके दक्षिणाम् इच्छन्ति । [ यहाँ सामान्य कथन है । निषेध नहीं होता है । ] ॥ ३१ ॥

**३६४६. सत्यं प्रश्ने ॥ ३२ ॥ (३९३९)**

'सत्यम्' इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति प्रश्ने। सत्यं भक्ष्यसे'। सत्यमध्येष्यसे'। प्रश्न इति किम्? सत्यं वक्ष्यामि नानृतम् ( अ० वे० ४।९।७ ) ॥

**३६४७. अङ्गाप्रातिलोम्ये ॥ ३३ ॥ (३९४०)**

'अङ्ग' इत्यनेन युक्तं तिङन्तमप्रातिलोम्ये गम्यमाने नानुदात्तं भवति। अङ्ग कुरु। अङ्ग पच। 'अङ्ग पठ।

अप्रातिलोम्य इति किम्? अङ्ग कूज वृषल३ इदानीं ज्ञास्यसि जाल्म। कूजनमनभिमतमसौ कुर्वन्प्रतिलोमो भवति ॥

**३६४८. हि च ॥ ३४ ॥ (३९४१)**

'हि' इत्यनेन युक्तं तिङन्तमप्रातिलोम्ये नानुदात्तं भवति। स हि कुरु। स हि पच। स हि पठ।

**न्यासः**

**सत्यं प्रश्ने ॥** सत्यशब्दोऽयमुदाहरणे प्रश्ने वर्त्तते। प्रत्युदाहरणे तु ऋतशब्दस्यार्थे ॥ ३२ ॥

**अङ्गाप्रतिलोम्ये ॥** प्रातिलोम्यम् = प्रातिकूल्यम्, अनभिमतकारित्वमित्यर्थः। ततोऽन्यदप्रातिलोम्यम् = अनुकूलत्वम्, अभिमतकारित्वमिति यावत्। तस्मिन् गम्यमानेऽयं प्रतिषेधः। **अङ्ग कुरु, अङ्ग पचेति।** अङ्गशब्दोऽयं निपात इहानुज्ञायां वर्त्तमानोऽप्रातिलोम्यं गमयति। करोतेर्लोटि सिप्, 'सेर्ह्यपिच्च', धातोर्गुणे कृते 'अत उत्सार्वधातुके' इत्युत्त्वम्, 'उतश्च प्रत्ययात्' इति हेर्लुक्। अत्रोकारः प्रत्ययस्वरेणोदात्तः। **पचेति।** 'अतो हेः' इति लुक् धातुस्वरेणाद्युदात्तमेतत्। प्रत्युदाहरणेऽङ्गशब्दोऽमर्षे वर्त्तते।

'आनुलोम्ये' इति वक्तव्येऽप्रातिलोम्य इति वचनं वैचित्र्यार्थम् ॥ ३३ ॥

**हि च ॥** चकारोऽप्रातिलोम्य इत्यस्यानुकर्षणार्थः। **स हि कुरु, स हि पचेति।** हि शब्दोऽत्रावधारणे,

**पदमञ्जरी**

सति तस्यावधीरयितुरुपालिप्सया = उपालब्धुमिच्छया तस्यैव भोजनादेः प्रतिषेधेन सम्बन्धः प्रत्यारम्भः, पुनरुपन्यासः क्रियते इति यावत् ॥ ३१–३२ ॥

**अङ्गाप्रातिलोम्ये ॥** प्रातिलोम्यम् = प्रतिकूलकारित्वम्, ततोऽन्यदभिमतकारित्वमप्रातिलोम्यम्। एवं चानुलोम्य इति वक्तव्यम्। अङ्गशब्द उदाहरणेऽनुज्ञायाम्। प्रत्युदाहरणे त्वमर्षे ॥ ३३ ॥

**भावबोधिनी**

'सत्यम्' इससे युक्त तिङन्त प्रश्न की प्रतीति में अनुदात्त नहीं होता है। उदा० सत्यं भोक्ष्यसे? सत्यम् अध्येष्यसे। [ सचमुच खाओगे? सचमुच पढ़ोगे? अनुदात्त का निषेध हो जाने से यथाप्राप्त स्वर होते हैं। ]

प्रश्न में इसका क्या फल है? सत्यं वक्ष्यामि न अनृतम्। [ सच बोलूँगा झूठ नहीं। यहाँ प्रश्न की प्रतीति नहीं है। अतः निषेध नहीं होता है। ] ॥ ३२ ॥

'अङ्ग' इससे युक्त तिङन्त अप्रातिलोम्य ( अनुकूलता ) की प्रतीति रहने पर अनुदात्त नहीं होता है। उदा० अङ्ग कुरु। अङ्ग पच अङ्ग पठ। [ करो। पकाओ। पढ़ो—ऐसा वास्तविक अर्थ है। अतः निषेध होकर उदात्तादि होते हैं। ]

अप्रातिलोम्य = अनुकूलता होने पर—इसका क्या फल है? अङ्ग कूज वृषल इदानीं ज्ञास्यसि जाल्म। कूजन अभिमत नहीं है उसे करता हुआ वह वृषल प्रतिलोम हो जाता है। अतः निषेध नहीं लगता है। [ 'अङ्ग' का प्रयोग सम्बोधन अर्थ में होता है। ] ॥ ३३ ॥

'हि' इससे युक्त तिङन्त अप्रातिलोम्य = अनुकूलता अर्थ में अनुदात्त नहीं होता है। उदा० स हि कुरु। स हि पच। स हि पठ। [ 'हि' का प्रयोग अवधारण अर्थ में है। त्वम् का अर्थ प्रतीयमान है। अतः 'वही तुम करो। वही तुम पकाओ, वही तुम पढ़ो। ]

---

१. अङ्ग पठ—इत्युदाहरणं न्यासादौ नैव पठ्यते।

'अप्रातिलोम्ये' इत्येव—स हि कूज वृषल इदानीं ज्ञास्यति जाल्म ।।

**३६४९. छन्दस्यनेकमपि साकाङ्क्षम् ।। ३५ ।। (३९४२)**

'हि च' इति वर्तते। छन्दसि विषये हि-युक्तं तिङन्तं साकाङ्क्षमनेकमपि नानुदात्तं भवति, एकमपि। कदाचिदेकम्, कदाचिदनेकमित्यर्थः। तत्रानेकं तावत्–अनृतं हि मत्तो वदति, पाप्मा एनं विपुनाति। तिङन्तद्वयमप्येतन्न निहन्यते।

एकं खल्वपि—अग्निर्हि अग्ने उदजयत्। तिङन्तद्वयमपि हिशब्दयुक्तमेतत्। तत्रैकमुदजयदित्यादि-रुदात्तम्, अपरमनुदात्तम्। अजाह्यग्नेरजनिष्ट गर्भात् सा वा अपश्यज्जनितारमग्ने (तै० ४।२।१०।४)। अजनिष्टेत्याद्युदात्तम्, अपश्यदित्यनुदात्तम् ।।

**न्यासः**

हेतौ वा वर्त्तते। प्रत्युदाहरणे त्वमर्षे ।। ३४ ।।

**छन्दस्यनेकमपि साकांक्षम्** ।। 'हि च' इत्येव। सहाकाङ्क्षया वर्तत इति साकांक्षम्। एतच्च तिङन्तस्यार्थद्वारकं विशेषणं वेदितव्यम्। **एकमपीति**। हीत्यनेन युक्तं तिङन्तं साकाङ्क्षं नानुदात्तं भवतीति प्रकृतेन सम्बन्धः। अत्र च योऽप्ययमेकस्यानुदात्तत्वप्रतिषेधः, सोऽपि यत्रानेकतिङन्तं हियुक्तं तत्रैव वेदितव्यः; अन्यथा यदि यत्रैकं हियुक्तं तत्रायमेकस्य हियुक्तस्य निघातप्रतिषेधोऽपिशब्दप्रापितः स्यात्, सूत्रमिदमनर्थकं स्यात्; समानेनैकस्यानेकस्य वा पूर्वेणैव सिद्धत्वात्। यथा यत्रानेकस्य हियुक्तस्य उपनिपातस्तत्रैवैकस्यानु-दात्तत्वप्रतिषेधः, तथा न भवति वैयर्थ्यप्रसङ्गः; पूर्वेण नित्ये प्राप्ते विकल्पार्थत्वात्। **कदाचिदित्यादिना**। तमेवानन्तरोक्तमर्थं विस्पष्टीकरोति। **अनृतं हि मत्तो वदति पाप्मा एनं विपुनातीति**। अत्र द्वयोरपि तिङन्तयो-र्हेतुहेतुमद्भावे साकांक्षता। पाप्मा = मद उच्यते। यस्मादनृतं मत्तो वदति तस्मात् पाप्मा एनं विपुनाति = शुद्धिमापादयति, मत्तस्यानृतमदोष इति कृत्वा। द्वे अपि चैते हिशब्देन युक्ते; तदर्थगतस्य हेतुहेतुमद्भावस्य तेन द्योतितत्वात्। तत्र वदतीत्येतत् पचतीत्येतेन तुल्यस्वरम्। पुनातीत्येतत्तु विकरणस्वरेण मध्योदात्तम्।

**अग्निर्हीत्यादि**। अत्रापि हेतुहेतुमद्भावात् साकांक्षता। यस्मादग्निरग्रे पूर्वमुदजयत् तस्मादग्निमिन्द्र अनु पश्चादुदजयत्। **उदजयदिति**। उत्पूर्वाज्जयतेर्लङि रूपम्। **एकमुदजयदित्याद्युदात्तमिति**। तद्धकस्याट उदात्तत्वात्। **अपरमनुदात्तमिति**। तत्र निघातप्रतिषेधस्याप्राप्तेः। **अजा ह्यग्नेरजनिष्टेत्यादि**। तत्रापि तत एव हेतोः साकांक्षत्वम्। तस्मादजा ह्यग्नेर्गर्भस्य जनितारमपश्यत् तस्मादग्नेर्गर्भमजनिष्ट जनितवती। 'जनिः प्रादुर्भावे', लुङ्, 'च्लेः सिच्,' इट्, षत्वम्, ष्टुत्वम्। अन्तर्भावितण्यर्थोऽत्र जनिर्वेदितव्यः, अन्यथा कर्मत्वं गर्भस्य

**पदमञ्जरी**

**हि च** ।। हिशब्दोऽवधारणे हेतौ वा, स च प्रत्युदाहरणे त्वमर्षे ।। ३४ ।।

**छन्दस्यनेकमपि साकाङ्क्षम्**। अत्र हेतुहेतुमद्भावस्य द्योतको हिरित्यनेकमपि तिङन्तं हियुक्तं भवति। तत्र पूर्वेण सर्वस्य निघातप्रतिषेधे प्राप्ते क्वचिदनेकस्य क्वचिदेकस्य यथा स्यादिति वचनम्। तदाह—**कदाचिदिति**। तत्र छन्दसि दृष्टानुविधानाद्यथाप्रयोगं व्यवस्था। **अनृतं हीति**। पाप्मा = मद उच्यते। यस्मा-दसौ मत्तोऽनृतं वदति तस्मादनृतवदनदोषेण युज्यत इत्यर्थः।

**भावबोधिनी**

अप्रातिलोम्य में—इसी में प्रतिषेध है। [ अतः यहाँ प्रतिषेध नहीं होता है ]—स हि कूज वृषल इदानीं ज्ञास्यसि जाल्म। [ यहाँ अमर्ष = सहन न करना अर्थ की प्रतीति है। अतः निषेध नहीं होता है। ] ।। ३४ ।।

'हि च' इनकी अनुवृत्ति होती है। वेदविषय में 'हि' से युक्त तिङन्त जो साकाङ्क्ष अनेक भी हैं, और एक भी है, अनुदात्त नहीं होता है। कभी एक और कभी अनेक—यह अर्थ है। पहले अनेक का उदा० अनृतं हि मत्तो वदति, पाप्मा एनं विपुनाति। यहा दोनों तिङन्तों का अनुदात्त नहीं होता है।

एक भी [ अनुदात्त नहीं होता है ]—'अग्निर्हि पूर्वम् उदजयत्, तमिन्द्रोऽनूदजयत्।' यहाँ दोनों तिङन्त शब्द 'हि' शब्द से युक्त है। इनमें एक 'उदजयत्' आद्युदात्त है, और दूसरा—अनुदात्त है। "अजा ह्यग्नेरजनिष्ट गर्भात् सा वा अपश्यज् जनितारमग्ने।" यहाँ 'अजनिष्ट' यह आद्युदात्त है और 'अपश्यत्' यह अनुदात्त है

## ३६५०. यावद्यथाभ्याम् ॥ ३६ ॥ (३९४३)

**'यावत्', 'यथा'**—इत्येताभ्यां युक्तं तिङन्तं नानुदात्तं भवति। यावद् भुङ्क्ते। यथा भुङ्क्ते। यावदधीते। यथाधीते। देवदत्तः पचति यावत्। देवदत्तः पचति यथा। परेणापि योगे भवति प्रतिषेधः॥

## ३६५१. पूजायां नानन्तरम् ॥ ३७ ॥ (३९४४)

**'यावत्', 'यथा'**—इत्येताभ्यां युक्तमनन्तरं तिङन्तं पूजायां विषये नानुदात्तं न भवति। किं तर्हि? अनुदात्तमेव। यावत्पचति शोभनम्। यथा पचति शोभनम्। यावत् करोति चारु। यथा करोति चारु।

पूजायामिति किम्? यावद् भुङ्क्ते। यथा भुङ्क्ते। अनन्तरमिति किम्? यावद्देवदत्तः पचति शोभनम्। यथा देवदत्तः करोति चारु। पूर्वेणात्र निघातः प्रतिषिध्यते॥

**न्यासः**

नोपपद्यते; अकर्मकत्वात्। **अपश्यदिति**। दृशेर्लङ्, पाघ्रादिसूत्रेण पश्यादेशः। **अजनिष्टेति**। आद्युदात्तम्। **अपश्यदित्यनुदात्तमिति**। पूर्ववत्॥ ३५॥

**यावद्यथाभ्याम्**॥ किमर्थं पुनरिदमुच्यते? न यद्वृत्तान्नित्यम्' इत्येव सिद्धमिति यश्चोदयेत्, तं प्रति—'देवदत्तः पचति यावद्', 'देवदत्तः पचति यथा'—इत्येतदुदाहरणद्वयमुपन्यस्तम्। एषोऽभिप्रायः—यद्वृत्तादिति पञ्चमीनिर्देशात् 'तस्मादित्युत्तरस्य' इति यत्रैव यावद्यथाभ्यां परं तिङन्तं तत्रैव प्रतिषेधः स्यात्। यत्र तु ताभ्यां पूर्वं तत्र न स्यात्। इह तु तृतीयानिर्देशात् तत्रापि भवतीति॥ ३६॥

**पूजायां नानन्तरम्**॥ **पूजायां विषय इति**। विषयग्रहणे पूजायामिति विषयसप्तमीति दर्शयति। **किं तर्ह्यनुदात्तमेवेति**। द्वौ प्रतिषेधौ प्रकृतमर्थं गमयत इति कृत्वा। **यावत् पचति शोभनमिति**। स्तुतिरत्र पूजा, सा च क्रियायाः साधनस्य वा॥ ३७॥

**पदमञ्जरी**

**उदजयदित्याद्युदात्तमिति**। अत्राजयदित्याद्युदात्तमित्यर्थः। **अजनिष्ट गर्भमिति**। अन्तर्भावितण्यर्थत्वाज्जनेरत्र सकर्मकत्वम्॥ ३५॥

**यावद्यथाभ्याम्**॥ यावत्साकल्ये, अध्यवसाये वा, यथा योग्यतादिषु। 'यावद्यथाभ्याम्' इति तृतीयेति दर्शयितुं परभूतयोरपि प्रयोग उदाहृतः। तेनैतदपि न चोदनीयम्—'यद्वृत्तान्नित्यम्' इत्येव यथाशब्दे यावच्छब्दे च वतुबन्ते सिद्धः प्रतिषेध इति॥ ३६॥

**पूजायां नानन्तरम्**॥ द्वौ प्रतिषेधौ प्रकृतमर्थं गमयत इत्याह—**किं तर्ह्यनुदात्तमिति**। **यावद्देवदत्त इति**। ननु चोत्तरत्र नियमो विज्ञास्यते—व्यवाये यदि भवति उपसर्गेणैवेति? एवं तर्ह्युत्तरत्रास्य प्रयोजनम्—उपसर्गव्यपेतस्य यावद्यथाशब्दयोश्च मध्ये शब्दान्तरं मा भूत्। अथ तु 'व्यवाये यदि भवति उपसर्गेणैव' इत्यस्मादेव नियमात्तत्राप्रसङ्गः? ततोऽनन्तरग्रहणं शक्यमकर्तुम्॥ ३७॥

**भावबोधिनी**

[ एक ही तिङन्त अनुदात्त होता है दूसरा आद्युदात्त ही रहता है। ]॥ ३५॥

'यावत्' और 'यथा' इनसे युक्त तिङन्त अनुदात्त नहीं होता है। उदा० यावद् भुङ्क्ते। यथा भुङ्क्ते। यावदधीते। यथाधीते। देवदत्तः पचति यावत्। देवदत्तः पचति यथा। यह बाद के भी योग में प्रतिषेध होता है॥३६॥

'यावत्' और 'यथा' इनसे युक्त अव्यवहित तिङन्त पूजाविषय में नानुदात्त नहीं होता है। तो क्या होता है? अनुदात्त ही होता है। [ दो नञ् लगाने से प्रकृत अर्थ दृढ़ हो जाने से अनुदात्त ही होना फलित है। ]

उदा० यावत् पचति शोभनम्। यथा पचति शोभनम्। यावत् करोति चारु। यथा करोति चारु। [ यहाँ प्रशंसा की प्रतीति है। अतः अनुदात्त होता है। ]

पूजा में—इसका क्या फल है? यावद् भुङ्क्ते। यथा भुङ्क्ते। [ यहाँ निन्दा अर्थ की प्रतीति है। अतः अनुदात्त नहीं होता है। ] अनन्तर = अव्यवहित—इसका क्या फल है? यावद् देवदत्तः पचति शोभनम्। यथा देवदत्तः करोति। [ बीच में 'देवदत्तः' का व्यवधान है। अतः प्रस्तुत सूत्र न लगकर ] पूर्वसूत्र से यहाँ निघात का प्रतिषेध हो जाता है ]॥ ३७॥

## ३६५२. उपसर्गव्यपेतं च ॥ ३८ ॥ (३९४५)

यावद्यथाभ्यां युक्तं उपसर्गव्यपेतं च पूजायां विषये नानुदात्तं न भवति, किं तर्हि ? अनुदात्तमेव भवति। पूर्वमनन्तरमित्युक्तम्, उपसर्गव्यवधानार्थोऽयमारम्भः। यावत् प्रपचति शोभनम्। यथा प्रपचति शोभनम्। यावत्प्रकरोति चारु। यथा प्रकरोति चारु।

अनन्तरमित्येव—यावद्देवदत्तः प्रपचति। यथा विष्णुमित्रः प्रकरोति चारु॥

## ३६५३. तुपश्यपश्यताहैः पूजायाम् ॥ ३९ ॥ (३९४६)

तु, पश्य, पश्यत, अह—इत्येतैर्युक्तं तिङन्तं नानुदात्तं भवति पूजायां विषये। तु—माणवकस्तु भुङ्क्ते शोभनम्। पश्य—पश्य माणवको भुङ्क्ते शोभनम्। पश्यत—पश्यत माणवको भुङ्क्ते शोभनम्। अह—अह माणवको भुङ्क्ते शोभनम्।

### न्यासः

उपसर्गव्यपेतञ्च। उपसर्गव्यपेतमिति उपसर्गव्यवहितम्। चकारेण पूजायामित्यनुकृष्यते, अनन्तरमिति चानुवर्त्तते। तत्रोपसर्गेण व्यवधानमाश्रीयत इति। सामर्थ्यात् अनन्तरग्रहणं शब्दान्तरव्यवधाननिरासार्थं विज्ञायते॥ ३८॥

तुपश्यपश्यताहैः पूजायाम्॥ ननु 'पूजायां नानन्तरम्' इति पूजाग्रहणमनुवर्तत एव, तत् किमर्थं पूजायामित्युच्यते ? इत्याह—पूजायामित्यनुवर्त्तत इत्यादि। स्यादेतत्—तदेव पूजाग्रहणमिहानुवर्तमानं निघातप्रतिषेधार्थं भविष्यतीति ? अत आह—तद्धीत्यादि। तद्धि पूर्वत्र पूजाग्रहणं निघातप्रतिषेधस्य प्रतिषेधेन सम्बद्धम्। तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। एवञ्च तेषां निघातप्रतिषेधः। लुडादीनां तेषां तु प्रभृतिभिर्योगे

### पदमञ्जरी

उपसर्गव्यपेतं च॥ व्यवायः = व्यवधानम्। अनन्तरमित्येवेति। तच्चानन्तर्यं सोपसर्गस्य, न तिङन्तमात्रस्य॥ ३८॥

तुपश्यपश्यताहैः पूजायाम्॥ तुप्रभृतीनि पूजाविषयाणि। माणवकस्तु भुङ्क्त इति। आश्चर्ये तुशब्द इति भोजनस्य पूजा गम्यते, एवमन्यत्रापि—पश्य मृगो धावतीति। तत्त्वकथनमेतत्।

ननु 'पूजायां नान्तरम्' इत्यतः पूजायामित्यनुवर्त्तत एव, तत्किं पूजायामित्यनेन ? तत्राह—पूजायामिति वर्तमान इति। तद्धीति। ततश्च तदनुवृत्ताविहापि 'न लुट्' इत्यादिके विषये प्रतिषेधस्य प्रतिषेधः

### भावबोधिनी

'यावत्' और 'यथा' से युक्त और उपसर्ग के व्यवधान से युक्त का पूजाविषय की प्रतीति में नानुदात्त नहीं होता है। तो क्या होता है ? अनुदात्त ही होता है। पूर्व सूत्र में 'अनन्तर' ( अव्यवहित )—ऐसा कहा गया है, यह सूत्र उपसर्ग के व्यवधान में भी अनुदात्त करने के लिये बनाया गया है। उदा० यावत् प्रपचति शोभनम्। यथा प्रपचति शोभनम्। यावत् प्रकरोति चारु। यथा प्रकरोति चारु। [ यहाँ यावत् और यथा के बाद तिङन्त के पूर्व मध्य में 'प्र' उपसर्ग का व्यवधान है तो भी प्रस्तुत सूत्र से अनुदात्त होता है। ]

[ अन्य के ] व्यवधान से रहित हो—इसका क्या फल है ? यावद् देवदत्तः प्रपचति। यथा विष्णुमित्रः प्रकरोति चारु। [ यहाँ उपसर्ग के अतिरिक्त देवदत्तः और 'विष्णुमित्रः' का भी व्यवधान है। अतः यह सूत्र नहीं लगता है। पूर्ववर्ती सूत्र 'यावद्यथाभ्याम्' से अनुदात्त का निषेध हो जाता है। ]॥ ३८॥

तु, पश्य, पश्यत, अह—इनसे युक्त तिङन्त पूजाविषय में अनुदात्त नहीं होता है। उदा० तु—माणवकः तु भुङ्क्ते शोभनम्। पश्य—पश्य माणवको भुङ्क्ते शोभनम्। पश्यत—पश्यत माणवको भुङ्क्ते शोभनम्। अह—अह माणवको भुङ्क्ते शोभनम्। [ तु, अह—ये प्रशंसा की प्रतीति कराते हैं। ]

पूजायामिति किम् ? पश्य मृगो धावति। 'पूजायाम्' इति वर्तमाने पुनः 'पूजायाम्' इत्युच्यते निघातप्रतिषेधार्थम्। तद्धि प्रतिषेधस्य प्रतिषेधेन सम्बद्धमिति ॥

**३६५४. अहो च ॥ ४० ॥ (३९४७)**

'अहो'—इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति पूजायां विषये। अहो देवदत्तः पचति शोभनम्। अहो विष्णुमित्रः करोति चारु।

पृथग्योगकरणमुत्तरार्थम् ॥

**३६५५. शेषे विभाषा ॥ ४१ ॥ (३९५२)**

'अहो' इत्यनेन युक्तं तिङन्तं शेषे विभाषा नानुदात्तं भवति। कश्च शेषः? यदन्यत्पूजायाः। कटमहो करिष्यसि। मम गेहमेष्यसि। असूयावचनमेतत्।

**न्यासः**

निघातप्रतिषेधस्य प्रतिषेधो विज्ञायेत। तस्मान्निघातस्य प्रतिषेधो यथा स्यादित्येवमर्थं पुनः पूजाग्रहणम्। अत्राहग्रहणं किमर्थम्, चनादिषु चेत्येव सिद्धम्? न सिध्यति; 'चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः' इत्यतो गतेरिति तत्रानुवृत्तेः। तथा च—देवदत्तः प्रपचत्यहेत्यत्र प्रतिषेधो न स्यात्। परभूतेषु वा स प्रतिषेध इति पूर्वंभूतेऽहशब्दे च न स्याद्—देवदत्तोऽह पचतीति ॥ ३९ ॥

**अहो च** ॥ चकारेण पूजायामित्यनुकृष्यते।

अथ योगविभागः किमर्थम्, पूर्वसूत्र एवाहोग्रहणं क्रियेत? इत्यत आह—**पृथगित्यादि**। पृथग्योगे 'शेषे विभाषा' इति अहेत्यनेनैव योगे यथा स्यात्, तुप्रभृतीनां मा भूदित्येवमर्थं पृथग्योगकरणम् ॥ ४० ॥

**शेषे विभाषा** ॥ **करिष्यसीत्यादि**। लुडन्तं स्यस्वरेण मध्योदात्तम्।

**पदमञ्जरी**

स्यात्, मा भूदेवम्; निघातस्यैव प्रतिषेधो यथा स्यादित्येवमर्थं पूजाग्रहणमित्यर्थः। किञ्च—अनन्तरमित्येवं तदभूत्, इह त्वविशेषेणेष्यते ॥ ३९ ॥

**अहो च** ॥ **पृथग्योगकरणमुत्तरार्थमिति**। उत्तरो योगोऽहोयोग एव यथा स्यात्, तुप्रभृतिभिर्योगे मा भूत् ॥ ४० ॥

**शेषे विभाषा** ॥ **असूयावचनमेतदिति**। अनाश्चर्यभूतमेव वस्त्वसूयन्नाश्चर्यवत्प्रतिपादयतीत्यर्थः।

**भावबोधिनी**

पूजा में—इसका क्या फल है? पश्य मृगो धावति। [देखो मृग दौड़ रहा है। यह साधारण वाक्य है।] 'पूजायाम्' इसकी अनुवृत्ति रहने पर भी पुनः 'पूजायाम्' यह निघात के प्रतिषेध के लिए कहा गया है। और यह प्रतिषेध के प्रतिषेध से सम्बद्ध होता है। [इस कारण पूजा अर्थ में निघात नहीं होता है। अन्य अर्थ में होता है।] ॥ ३९ ॥

'अहो' इससे युक्त तिङन्त पूजाविषय में अनुदात्त नहीं होता है। उदा० अहो देवदत्तः पचति शोभनम्। अहो विष्णुमित्रः करोति चारु। ['अहो' प्रशंसा की प्रतीति में है। अतः अनुदात्त का प्रतिषेध होता है।]

उत्तरवर्त्ती सूत्र में ['अहो' इतने की ही] अनुवृत्ति के लिये यह अलग सूत्र बनाया गया है ॥ ४० ॥

'अहो' इससे युक्त तिङन्त शेष (अर्थात् पूजा से भिन्न सभी) अर्थों में अनुदात्त नहीं होता है। और शेष क्या है? जो भी पूजा से भिन्न है। उदा० कटम् अहो करिष्यति। मम गेहम् एष्यसि। [ओह चटाई बनाओगे, फिर भी मेरे घर आओगे।] यह असूयाबोधक वाक्य है। [पूजा-भिन्न है। अतः अनुदात्त नहीं होता है।]

'पूजायाम्'—इत्यस्य चानुकृष्टत्वादनधिकारे सिद्धे शेषवचनं विस्पष्टार्थम् ॥

**३६५६. पुरा च परीप्सायाम् ॥ ४२ ॥ (३९४६)**

**'पुरा'—इत्यनेन युक्तं तिङन्तं परीप्सायामर्थे विभाषा नानुदात्तं भवति। परीप्सा=त्वरा। अधीष्व माणवक। पुरा विद्योतते विद्युत्। पुरा स्तनयति स्तनयित्नुः। पुराशब्दोऽत्र भविष्यदासत्तिं द्योतयति।**

**परीप्सायामिति किम्? नडेन स्म पुराधीयते। अत्र भूतकालविप्रकर्षं पुराशब्दो द्योतयति। ऊर्णया स्म पुराधीयते॥**

**न्यासः**

ननु च पूजाग्रहणं पूर्वसूत्रे चानुकृष्टम्। तत्र चानुकृष्टस्येहाननुवृत्तेरविशेषे भविष्यति, तत् किं शेषग्रहणेन? इत्यत आह—**पूजायामित्यस्येत्यादि** ॥ ४१ ॥

**पुरा च परीप्सायाम्** ॥ चकारो विभाषेत्यनुकर्षणार्थः। **परीप्सायामर्थे इति**। गम्यमान इति शेषः। **परीप्सा त्वरेति**। सम्भ्रमः=आशुप्रवृत्तिरित्यर्थः। **अधीष्व माणवकेत्यादि**। त्वरितमधीष्वेत्येषोऽर्थो गम्यते। तथा ह्यत्र पुरा विद्योतते विद्युत्, पुरा स्तनयति स्तनयित्नुरित्येतदुभयमप्यध्ययनविषययोस्त्वरायाः कारणत्वेनोपात्तम्। विद्युद्द्योतनादौ हि न पठितव्यं पर्वदिवसेष्विव। एतदुक्तं भवति—यस्मादचिरकालभावि विद्युद्द्योतनं स्तनयित्नुस्तननं वाध्ययनान्तरायोऽतोऽधीष्वेति। **पुरा विद्योतत इति**। 'यावत्पुरानिपातयोर्लट्', अनुदात्तेत्त्वादात्मनेपदम्। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे कृते धातुस्वरेणाद्युदात्तमेतत्। **पुरा स्तनयतीति**। **'स्तन गदी देवशब्दे'**। चुरादिणिच्। अदन्तत्वाद् वृद्ध्यभावः। एतदपि पूर्ववन्मध्योदात्तम्। **पुराशब्दोऽत्र भविष्यदासत्तिं द्योतयतीति**। भविष्यद्विद्युद्द्योतनादिरध्ययनान्तरायो यस्तस्य प्रत्यासत्तिं सामीप्यमचिरकालभावित्वं द्योतयति। तेन त्वरा गम्यत इत्यभिप्रायः ॥ ४२ ॥

**पदमञ्जरी**

शेषवचनं किम्, यावता योगविभागसामर्थ्यादेव पूर्वप्रकृतेषु किञ्चिन्नानुवर्त्तत इति ज्ञातम्, तत्र चानुकृष्टत्वात् 'पूजायाम्' इत्येतन्निवर्तिष्यते? अत आह—**पूजायामित्यस्येति** ॥ ४१ ॥

**पुरा च परीप्सायाम् ॥ पुराशब्दोऽत्र भविष्यदासत्तिं द्योतयतीति**। भविष्यतो विद्योतनादेरध्ययनान्तरायभूतस्याचिरकालभावित्वं द्योतयति, तेनात्र त्वरा गम्यते इति भावः। विद्योतनादावध्ययनं धर्मशास्त्रे प्रतिषिद्धम्, अतस्तदुपन्यासेन त्वरितमधीष्वेति गम्यते इत्यर्थः। उदाहरणे 'यावत्पुरानिपातयोः' इति भविष्यदर्थे लट्, प्रत्युदाहरणे 'लट् स्मे' इति। **अत्र भूतकालविप्रकर्षमिति**। भूतस्याध्ययनस्य चिरकालप्रवृत्तत्वं द्योतयति। तेन नात्र त्वरा गम्यत इति भावः ॥ ४२ ॥

**भावबोधिनी**

'पूजायाम्' इस अंश की इससे पूर्ववर्ती सूत्र में अनुवृत्ति करने से और यहाँ अनुवृत्ति न करने से ही [ पूजा से भिन्न में इस सूत्र की प्रवृत्ति हो जाती है इसलिए ] 'शेषे' इसका ग्रहण केवल स्पष्टता के लिए है। [ वास्तव में पूर्व में अनुवृत्ति करके और यहाँ न करके काम चलाया जा सकता है। विकल्प होने के कारण अनुदात्त वाला रूप भी होता है। यही सूत्र का फल है। ] ॥ ४१ ॥

'पुरा' इससे युक्त तिङन्त परीप्सा अर्थ में विकल्प से अनुदात्त नहीं होता है। परीप्सा = त्वरा = शीघ्रता। उदा० अधीष्व माणवक! पुरा विद्योतते विद्युत। पुरा स्तनयति स्तनयित्नुः। [ बच्चे पढ़ लो, अभी विजली चमकेगी है, अभी बादल गरजेगा। यहाँ जल्दबाजी की प्रतीति है क्योंकि बिजली चमकने और बादल गरजने पर अध्ययन-अध्यापन का निषेध है। 'अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः। अमरकोश १।३।६ ] पुरा शब्द होनेवाली आसत्ति = सामीप्य को द्योतित करता है अर्थात् चमकना और गरजना शीघ्र ही होने वाले हैं। ]

परीप्सा = त्वरा में—इसका क्या फल है? नडेन स्म पुरा अधीयते। [ नड द्वारा पहले पढ़ा जाता था ]। यहाँ भूतकाल की दूरी को पुरा शब्द प्रकट करता है। ] ऊर्णया स्म पुरा अधीयते। [ ऊन द्वारा पहले पढ़ा जाता था। नड गोत्रवाचक है। उस गोत्र का कोई व्यक्ति बहुत पहले पढ़ता था। 'ऊर्णा' किसी का नाम या ऊन है। ] ॥ ४२ ॥

## ३६५७. नन्वित्यनुज्ञैषणायाम् ॥ ४३ ॥ (३९५०)

'ननु' इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति अनुज्ञैषणायां विषये। अनुज्ञाया एषणा = प्रार्थना, अनुज्ञैषणा। अनुज्ञाप्रार्थनेत्यर्थः। ननु क॒रो॒मि॒ भोः। [ ननु गच्छामि भोः। ] अनुजानीष्व माम्, करणं प्रतीत्यर्थः।

अनुज्ञैषणायामिति किम्? अकार्षीः कटं देवदत्त? ननु क॒रो॒मि॒ भोः। पृष्टप्रतिवचनमेतत्, नानुज्ञैषणा॥

## ३६५८. किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ॥ ४४ ॥ (३९५१)

'किम्'—इत्येतत्क्रियाप्रश्ने यदा वर्तते तदानेन युक्तं तिङन्तमनुपसर्गमप्रतिषिद्धं नानुदात्तं भवति। किं देवदत्तः पचति, आहोस्विद् भुङ्क्ते। किं देवदत्तः शे॒ते, आहोस्विद॒धी॒ते।

### न्यासः

नन्वित्यनुज्ञैषणायाम्। अनुज्ञाया एषणा = प्रार्थनेति। किञ्चित् कर्तुं स्वयमेवोद्यतस्यैवं क्रियतामित्यनुज्ञानमनुज्ञा। प्रार्थनायां मूलोदाहरणयोः 'वर्तमाने लट्' इति लट्। प्रत्युदाहरणे तु भूते 'ननौ पृष्टप्रतिवचने' इत्यनेन। इतिकरण एकनिपातोऽयमिति प्रदर्शनार्थः। नन्वनुज्ञैषणायामिति ह्युच्यमाने सन्देहः स्यात्—किमयमेकनिपातः? उत निपातद्वयमिति? यथा—'नन्वोर्विभाषा' इत्यत्र; इतिकरणेन त्ववच्छिद्यमानमेकमेवेदं शब्दरूपमिति गम्यते॥ ४३॥

किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम्॥ अप्रतिषिद्धमिति। प्रतिषेधः प्रतिषिद्धम्। भावे निष्ठा। नास्य प्रतिषिद्धमस्तीत्यप्रतिषिद्धम्। अथ वा—कर्मणि निष्ठा, निषिद्धं प्रतिषिद्धमप्रतिषिद्धम्। अर्थद्वारकञ्चैतत् तिङो विशेषणम्।

### पदमञ्जरी

नन्वित्यनुज्ञैषणायाम्॥ किंचित्कर्तुं स्वयमेवोद्युक्तस्यैवं क्रियतामित्येवं रूपोऽभ्युपगमः = अनुज्ञा। सूत्रार्थमुदाहरणेन दर्शयति—करणं प्रतीति। उपलक्षणमेतत्, करणगमने प्रतीत्यर्थः उदाहरणे 'वर्त्तमाने लट्'। प्रत्युदाहरणे तु भूते 'ननौ पृष्टप्रतिवचने' इत्यनेन।

'अङ्गाप्रतिलोम्ये' इत्यादिवत् सिद्धे इतिकरण एकनिपातोऽयमिति दर्शनार्थः; अन्यथा द्वयोरपि निपातयोर्ग्रहणं सम्भाव्यते॥ ४३॥

किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम्॥ अप्रतिषिद्धमिति। अप्रतिषिद्धार्थमित्यर्थः।

### भावबोधिनी

'ननु' इससे युक्त तिङन्त अनुज्ञैषणाविषय में अनुदात्त नहीं होता है। अनुज्ञा की एषणा = प्रार्थना अनुज्ञैषणा है। अनुज्ञा की प्रार्थना—यह अर्थ है। उदा० ननु करोमि भोः। ननु गच्छामि भोः। [ मैं करूँ? मैं जाऊँ? इस प्रकार से करने या जाने की अनुमति की प्रार्थना प्रतीत होती है— ] मुझे आज्ञा दीजिये—करने के लिए, जाने के लिए—यह अर्थ है। [ इनमें तिङन्त अनुदात्त नहीं होता है। ]

अनुज्ञा = अनुमति देने की प्रार्थना में—इसका क्या फल है? अकार्षीः कटं देवदत्त!। ननु करोमि भोः। [ अरे देवदत्त! चटाई बना ली? हाँ श्रीमन् बना रहा हूँ। ] यह पूछे गये प्रश्न का उत्तर है, अनुज्ञा की प्रार्थना नहीं है। [ अतः अनुदात्त होता है। ] ॥ ४३॥

'किम्' यह जब क्रिया-विषयक प्रश्न अर्थ में है तब इससे युक्त तिङन्त जो उपसर्गरहित है, अप्रतिषेधार्थक है, उसका अनुदात्त नहीं होता है। उदा० किं देवदत्तः पचति आहोस्विद् भुङ्क्ते। किं देवदत्तः शेते आहोस्विद् अधीते। [ यहाँ पढ़ना या खाना तथा सोना या पढ़ना—इन क्रियाओं के विषय में प्रश्न है। अनुदात्त का प्रतिषेध हो जाता है। ]

**अत्र केचिदाहुः—पूर्वं किंयुक्तमिति तन्न निहन्यते। उत्तरं तु न किंयुक्तमिति तन्निहन्यत एवेति।**

**अपरे त्वाहुः—यद्यप्येकस्याख्यातस्य समीपे किंशब्दः श्रूयते, तथापि सर्वस्य संशयविषयस्य तेन योग इति, उभयत्र प्रतिषेधेन भवितव्यमिति।**

**क्रियाग्रहणं किम्? साधनप्रश्ने मा भूत्—किं देवदत्त ओदनं पचति आहोस्विच्छाकमिति। प्रश्न इति किम्? किमधीते देवदत्तः। क्षेपे किंशब्दोऽयम्, न प्रश्ने। अनुपसर्गमिति किम्? किं देवदत्तः प्रपचति, आहोस्वित्प्रकरोति। अप्रतिषिद्धमिति किम्? किं देवदत्तो न पठति, आहोस्विन्न करोति॥**

**न्यासः**

**पूर्वं किंयुक्तमिति।** तत्समीपे किमः श्रूयमाणत्वादित्यभिप्रायः। **उत्तरं तु न किंयुक्तमिति।** तस्यासमीपे श्रूयमाणत्वादिति भावः।

**अपरे त्वाहुरित्यादि।** न हि समीपे श्रूयमाणत्वं किंशब्दस्य शब्दान्तरेण सम्बन्धे हेतुः, अपि तु संशयविषयत्वम्। यथा चात्र पूर्वस्याख्यातस्य, तथा तत्परस्यापीत्यस्ति तस्य योगः किंशब्देनेत्युभयत्र प्रतिषेधः॥ ४४॥

**पदमञ्जरी**

**पूर्वं किंयुक्तमिति।** तत्समीपे किमः श्रूयमाणत्वात्। **उत्तरं तु न किंयुक्तमिति।** विपर्ययात्।

**अपरे इत्यादि।** न समीपे श्रूयमाणत्वं किंशब्देन सम्बन्धे हेतुः, किन्तु संशयविषयत्वम्। तच्च द्वितीयस्याप्यस्ति, अतस्तस्यापि तेन योग इत्युभयत्र प्रतिषेध इत्यर्थः। ये त्वाहुः—पूर्वं किंयुक्तमिति, ते मन्यन्ते—अस्तु द्वयोः संशयविषयत्वम्, किंशब्देन तु समीपे श्रुतक्रियाविषय एव प्रश्नो द्योत्यते, क्रियान्तरविषयस्तु प्रश्न आहोस्विदित्यनेन, क्रियाप्रश्न इति चोच्यते, तस्मात्तस्यैव निघातप्रतिषेध इति॥ ४४॥

**भावबोधिनी**

यहाँ कुछ आचार्य ऐसा कहते हैं—पहले वाला जो किम् से युक्त है उसका अनुदात्त नहीं होता है किन्तु बाद वाला तिङन्त तो 'किम्' से युक्त नहीं है अतः उसका तो निघात होता ही है। [ इस मत में पहला उदात्त और दूसरा अनुदात्त रहता है। ]

दूसरे आचार्य तो यह कहते हैं—यद्यपि एक आख्यात ( तिङन्त ) के समीप में 'किम्' शब्द सुनाई देता है तथापि संशय के विषय सभी का इसके साथ योग होता है, इस कारण दोनों तिङन्तों के अनुदात्तत्व का प्रतिषेध होना चाहिये।

**विमर्श**—उपर्युक्त आचार्यों के मतभेद की चर्चा प्रस्तुत सूत्र पर महाभाष्य में नहीं है। क्योंकि इस पर भाष्य लिखा नहीं गया है। अतः काशिकाकार ने प्रचलित मतभेदों को उपस्थापित कर के जिज्ञासुओं की शंका का समाधान करने का स्तुत्य प्रयास किया है।

( अनु० ) क्रिया—इसका ग्रहण किस लिये है? साधन=कारक से सम्बद्ध प्रश्न होने पर [ निषेध ] न हो सके—किं देवदत्तः ओदनं पचति अहोस्वित् शाकम्। [ देवदत्त क्या चावल पका रहा है या साग? इसमें कर्मविषयक प्रश्न है। ] प्रश्न में—इसका क्या फल है? किमधीते देवदत्तः। यहाँ 'किम्' शब्द क्षेप अर्थ में है, प्रश्न में नहीं। [ अतः अनुदात्तनिषेध नहीं होता है। ]

अनुपसर्गक—इसका क्या फल है? किं देवदत्तः प्रपचति आहोस्वित् प्रकरोति? [ यहाँ 'प्र' उपसर्ग से युक्त है। अतः प्रतिषेध नहीं होता है। ]

अप्रतिषेधार्थक—इसका क्या फल है? किं देवदत्तः न पठति, आहोस्वित् न करोति। [ क्या देवदत्त न तो पढ़ता है और न कोई काम करता है। यहाँ प्रतिषेध अर्थ की प्रतीति है। निषेध न होकर निघात होता है। ]॥४४॥

**३६५९. लोपे विभाषा ॥ ४५ ॥ (३९५२)**

**किमो लोपे क्रियाप्रश्ने तिङन्तमनुपसर्गमप्रतिषिद्धं विभाषा नानुदात्तं भवति।**

**क्व चास्य लोपः ? यत्र गम्यते चार्थः, न च प्रयुज्यते किंशब्दः। देवदत्तः पचति आहोस्वित्पठति ? विनैव किमा प्रश्नोऽवगम्यते।**

**प्राप्तविभाषेयं किमर्थेन योगात्। पूर्ववत् प्रत्युदाहरणानि ॥**

**३६६०. एहिमन्ये प्रहासे लृट् ॥ ४६ ॥ (३९५३)**

**'एहिमन्ये'—इत्यनेन युक्तं लृडन्तं नानुदात्तं भवति प्रहासे। प्रकृष्टो हासः प्रहासः = क्रीडा।**

**न्यासः**

**लोपे विभाषा ॥** किंशब्दस्य प्रकृतत्वात् तस्यैव लोपो विज्ञायते, इत्याह—**किमो लोप इति।** किंशब्दस्य शास्त्रे न क्वचिल्लोपो विहितः, इत्यतः पृच्छति—**क्व चास्य लोप इति।** अदर्शनमात्रस्य 'लोपः' इति संज्ञा कृता, न तु शास्त्रकृतस्यैवादर्शनस्येत्यभिप्रायेणाह—**यत्रेत्यादि। गम्यते चार्थ इति।** कुतश्चिदर्थ-प्रकरणादेः। **न च प्रयुज्यत इति।** गम्यमानार्थत्वात्। **देवदत्तः पचत्याहोस्वित् पठतीति।** अत्रायमाहोस्विच्छब्दः पक्षान्तरे वर्तते। पक्षान्तरोपन्यसनं किमर्थम् ? प्रश्नं न व्यभिचरतीति। अत्राप्रयुज्यमानस्यापि तस्यार्थो गम्यते। पठतिशब्दोऽयं पक्षे पचतिशब्देन तुल्यस्वरः ॥ ४५ ॥

**एहिमन्ये प्रहासे लृट् ॥ एहिमन्य इत्यनेनेति।** समुदायस्यैकत्वात् तदपेक्षयैकवचनम्, अन्यथा हि द्वे एते आख्याते इति द्वित्वाद् द्विवचनं स्यात्। **प्रहास इति प्रकृष्टो** हासः; परिहास इत्यर्थः। **एहि मन्य ओदनं**

**पदमञ्जरी**

**लोपे विभाषा ॥** प्रकृतत्वात्किम एव लोपो विज्ञायत इत्याह—**किमो लोप इति।**

**क्व चास्येति।** शास्त्रे क्वचिदपि किमो लोपस्याविहितत्वात् प्रश्नः। न शास्त्रीयस्यैवादर्शनस्य लोपसंज्ञा, किं तर्हि ? अदर्शनमात्रस्येत्युत्तरम्। **यत्रेति। न च प्रयुज्यत इति। अर्थप्रकरणादिना** गम्यमान-त्वात्। उदाहरणे आहोस्विच्छब्दः पक्षान्तरप्रश्ने, स च नान्तरेण पूर्वप्रश्नमित्यर्थात् पूर्वत्र किमर्थो गम्यते, तदाह—**विनैव किमेति।**

**प्राप्तविभाषेयमिति।** कथं पुनः प्राप्तिः, यावता किंशब्देन योगेन पूर्वो योगः ? तत्राह—**किमर्थेनेति। पूर्ववत्प्रत्युदाहरणानीति।** तान्येव किंशब्दरहितानीत्यर्थः ॥ ४५ ॥

**एहिमन्ये प्रहासे लृट् ॥ एहिमन्य इत्यनेनेति।** समुदायाभिप्रायमेकवचनम्, अन्यथा आख्याते द्वे आङ् चापर इति बहुवचनप्रसङ्गः। उदाहरणे 'प्रहासे च मन्योपपदे' इत्यादिना पुरुषव्यत्ययः।

**भावबोधिनी**

'किम्' का लोप रहने पर क्रियाविषयक प्रश्न में उपसर्गरहित, अप्रतिषेधार्थक तिङन्त विकल्प से अनुदात्त नहीं होता है।

तो कहाँ किम् का लोप है ? जहाँ इसका अर्थ प्रतीत होता है और इस 'किम्' का प्रयोग नहीं होता है। उदा॰ देवदत्तः पचति अहोस्वित् पठति। (देवदत्त पकाता है या पढ़ता है ?) यहाँ बिना किम् शब्द के ही इसका अर्थ प्रतीत हो जाता है। [ अतः लोप मानकर विकल्प से अनुदात्त नहीं होता है। ]

यह प्राप्तविभाषा है क्योंकि किम् शब्द के अर्थ के साथ योग होने से। [ यहाँ भी पूर्व सूत्र से प्राप्ति है। ] पूर्वसूत्र के समान ही उदाहरण हैं। [ केवल किम् का प्रयोग नहीं किया जाता है। ] ॥ ४५ ॥

'एहि–मन्ये' इनसे युक्त लृडन्त प्रहासविषय में अनुदात्त नहीं होता है। प्रकृष्ट हास—प्रहास = क्रीडा (हँसी मजाक)। उदा॰ एहि मन्ये ओदनं भोक्ष्यसे युक्तः स अतिथिभिः। (आओ सोचते होगे कि भात खाऊँगा, नहीं खा पाओगे क्योंकि उसे तो अतिथि लोग खा गये।) एहि मन्ये रथेन यास्यसि, न हि यास्यसि, यातः तेन ते

**एहि मन्ये ओदनं भोक्ष्यसे, न हि भोक्ष्यसे, भुक्तः सोऽतिथिभिः। एहि मन्ये रथेन यास्यसि, न हि यास्यसि, यातस्तेन पिता।**

प्रहास इति किम् ? एहि मन्यसे ओदनं भोक्ष्ये इति। सुष्ठु मन्यसे। साधु मन्यसे।

'गत्यर्थलोटा लृट्' ( ८।१।५१ ) इत्येव सिद्धे सत्यारम्भो नियमार्थः—एहिमन्येयुक्ते प्रहास एव यथा स्यात्, अन्यथा मा भूदिति—एहि मन्यसे ओदनं भोक्ष्य इति।

**न्यासः**

**भोक्ष्यस** इति। 'प्रहासे च मन्योपपदे' इति पुरुषव्यत्ययः। भुजेरस्मद्युपपदे मध्यमः, मन्यतेर्युष्मद्युपपदे उत्तमः। एवम् **'एहि मन्ये रथेन यास्यसी'**त्यत्रापि पुरुषव्यत्ययो वेदितव्यः। द्वे अपि चैते लृडन्ते स्यप्रत्ययस्वरेण मध्योदात्ते।

**प्रहास इति किम् ? एहि मन्यस ओदनं भोक्ष्य इति।** अत्र 'मन्यतेर्युष्मद्युपपदे' इत्यादिना मध्यमः। भुजेस्तु 'अस्मद्युत्तमः' इत्युत्तमः। **सुष्ठु मन्यसे, साधु मन्यस इति।** अनेन यथाभूतं दर्शयन् प्रहासाभावं दर्शयति।

ननु च 'गत्यर्थलोटा लृट्' इत्यादिनैव सिद्धम्, तत् किमर्थोऽयमारम्भः ? इत्यत आह—**गत्यर्थलोटेत्यादि। एहिमन्येयुक्ते** इत्यादिना नियमार्थतामस्य व्यक्तीकरोति। कथं पुनरेहिमन्य इत्यनेन योगेन नियमः क्रियमाणः 'एहि मन्यसे ओदनं मोक्ष्ये' इत्यत्र निवृत्तिं करोति, न ह्यत्र एहीत्यनेन लृडन्तं युक्तम्, किं तर्हि ?

**पदमञ्जरी**

**सुष्ठु च मन्यसे इति।** भूतमर्थं दर्शयन् प्रहासाभावमाह, अत एव पुरुषव्यत्ययोऽपि न कृतः।

**गत्यर्थलोटा लृडित्येव सिद्ध इति।** आङ्पूर्वादिणो लोट्, सिपो हिः। **अन्यत्र मा भूदिति।** क्वान्यत्र मा भूत् ? **वृत्तिकारेण** यत्प्रत्युदाहृतम्—एहि मन्यस इत्यादि तत्र।

**भावबोधिनी**

पिता।' ( आओ सोचते होगे रथ से जाऊँगा, नहीं जाओगे, उससे तो तुम्हारे पिता चले गये। 'मन्ये' यह उत्तम पुरुष का रूप पुरुषव्यत्यय से है अतः इसका अर्थ 'मन्यसे' का ही समझना चाहिए क्योंकि "प्रहासे मन्योपपदे" ( १।४।१०५ ) सूत्र से मध्यम के विषय में उत्तम पुरुष होता है। यहाँ लृडन्त का अनुदात्त नहीं होता है। ]

प्रहास में—इसका क्या फल है ? एहि मन्यसे ओदनं भोक्ष्ये इति। सुष्ठु मन्यसे। साधु मन्यसे ( आओ सोचते होंगे भात खाऊँगा। ठीक सोचते हो। यह सत्य कथन है, हँसी-मजाक नहीं है। अतः प्रस्तुत सूत्र नहीं लगता है। अनुदात्त का निषेध नहीं होता है। ]

'गत्यर्थलोटा लृट्' इसी सूत्र से ( निषेध ) सिद्ध रहते ही यह सूत्र बनाना नियम के लिये है—'एहि मन्ये' इससे युक्त ( लृडन्त ) केवल प्रहास में ही जिस प्रकार हो सके, यहाँ न हो—'एहि मन्यसे ओदनं भोक्ष्ये' [ यह वास्तविक कथन है। यहाँ अनुदात्त का निषेध न होकर अनुदात्त हो सके—इसके लिये सूत्र की उपयोगिता है। ]

'एहि मन्ये' यह उत्तम पुरुष का उपादान तन्त्र = अनुशिष्ट नहीं है। प्रहास के विषय में ही मन्य धातु से उत्तम पुरुष का विधान किया गया है इससे भिन्न में मध्यम पुरुष ही होता है। वहाँ पर इस नियम से व्यावृत्ति की जाती है—'एहि मन्यसे ओदनं भोक्ष्ये।'

**विमर्श**—प्रहास स्थल में पुरुष का व्यत्यय 'प्रहासे च मन्योपपदे' ( १।४।१०५ ) सूत्र से किया गया है। अतः मध्यम पुरुष के प्रसङ्ग में उत्तम पुरुष होने से 'मन्ये' प्रयुक्त होता है। सूत्र में 'एहि मन्ये' यह दोनों के समुदाय को मानकर एकवचन है। अन्यथा द्विवचनान्त प्रयोग करना पड़ता।

'एहिमन्ये' इत्युत्तमोपादानमतन्त्रम् । प्रहास एव हि मन्यतेरुत्तमो विहितः, ततोऽन्यत्र मध्यम एव भवति । तत्रानेन नियमेन निवृत्तिः क्रियते—एहि मन्यसे ओदनं भोक्ष्य इति ॥

**३६४७. जात्वपूर्वम् ॥ ४७ ॥ (३९५४)**

'जातु' इत्येतदविद्यमानपूर्वं तेन युक्तं तिङन्तं नानुदात्तं भवति । जातु भोक्ष्यसे । जातु करिष्यामि । अपूर्वमिति किम् ? कटं जातु करिष्यति ॥

**न्यासः**

एहि मन्यस इत्यनेन ? इत्यत आह—**एहि मन्य इत्युत्तमोपादानमतन्त्रमिति** । अतन्त्रत्वं तु तस्योपलक्षणार्थत्वात् । ननु च 'मन्यतेरुत्तमः' इति वचनाद् युष्मद्युपपदे मन्यतेरुत्तमेनैव भवितव्यम्, एवञ्च 'एहि मन्यस ओदनं भोक्ष्ये' इत्येष प्रयोगो नोपपद्यत एव, तत् कथमिह नियमेन निवृत्तिः क्रियते ? इत्याह—**प्रहास एव हि मन्यतेरुत्तम इति** । गतार्थम् ॥ ४६ ॥

**जात्वपूर्वम् ॥ अपूर्वमिति** अविद्यमानं पूर्वं यस्मात् तदपूर्वम् । अत्र च द्वयं सम्भाव्यते—तिङन्तस्य चेदं विशेषणं स्यात्, जातुशब्दस्य वेति । तत्र यदि तिङन्तस्य स्याद्, 'आहो उताहो चानन्तरम्' इत्यत्रानन्तरग्रहणं न कुर्यात् । अस्यैव ह्यपूर्वग्रहणस्य तत्रानुवृत्तेस्तिङन्तस्यानन्तर्यं लभ्यते; तस्माज्जातुशब्दस्येदं विशेषणम्, इत्यालोच्याह—**जात्वित्येत्यादि** ॥ ४७ ॥

**पदमञ्जरी**

कथं पुनरेहिमन्ये इत्यनेन योगनियमः क्रियमाण एहि मन्यस इत्यनेन योगनिवृत्तिं करोति ? इत्याह—**उत्तमोपादानमतन्त्रमिति** । अतन्त्रत्वे कारणमाह—**प्रहास एव हीति** । तन्त्रत्वे निमयस्य व्यावर्त्यं न सम्भवेदित्यर्थः । **भाष्ये** तु प्रत्युदाहरणेऽप्युत्तम एव प्रयुक्तः, तत्रायमर्थः—एहि रथेन त्वं यास्यसीत्येवमहं मन्य इति ॥ ४६ ॥

**जात्वपूर्वम् । जात्वित्येतदपूर्वमिति** । अथ तिङन्तविशेषणमपूर्वत्वं कस्मान्न भवति, युक्तं चैतत्, विशेषणेन सम्बन्धुं योग्ये सति निमित्तिनि निमित्तस्याप्रधानस्य न हि युक्तं विशेषणम् ? उच्यते; यदयम् 'आहो उताहो चानन्तरम्' इत्यत्रानन्तरग्रहणं करोति, ततो ज्ञायते—निमित्तस्येदं विशेषणमिति; अन्यथा तत्रापि 'अपूर्वम्' इत्यनुवृत्तेरेव केवलतिङन्तस्यानन्तर्यं लभ्यत इति किं तेन ? ननु च शेषप्रक्लृप्त्यर्थं तत्स्यात्—'शेषे विभाषा', कश्च शेषः ? सान्तरः शेष इति ? अन्तरेणाप्यनन्तरग्रहणं प्रक्लृप्तः शेषः । कथम् ? अपूर्वमिति प्रकृतम्, सपूर्वः शेष इति ॥ ४७ ॥

**भावबोधिनी**

प्रस्तुत सूत्र के प्रत्युदाहरणों में भाष्य और काशिका में भेद प्राप्त होता है—भाष्य में "नियमार्थोऽयमारम्भः—एहि मन्ये प्रहासे एव यथा स्यात् । क्व मा भूत् ? एहि मन्ये रथेन यास्यसि इति ।" यहाँ का आशय प्रदीपकार ने लिखा है—एहि त्वं रथेन यास्यसि इत्येवम् अहं मन्ये इत्यर्थः ।

काशिकाकार उत्तमपुरुष की अनिवार्यता नहीं मानते हैं । अतः प्रहास से भिन्न में उत्तमपुरुष न होने पर भी नियमार्थ इस सूत्र से निवृत्ति होती ही है—'एहि मन्यसे ओदनं भोक्ष्ये ।' नियम के कारण प्रस्तुत वाक्य में निघात का अभाव अर्थात् उदात्तत्व होता है ॥ ४६ ॥

जिसके पूर्व में कोई विद्यमान नहीं है ऐसे 'जातु' इससे युक्त तिङन्त का अनुदात्त नहीं होता है । उदा० जातु भोक्ष्यसे । जातु करिष्यामि । [ जातु का प्रयोग 'यदि' अर्थ में होता है । अनुदात्त का निषेध हो जाता है । ]

पूर्व में कोई विद्यमान न हो—इसका क्या फल है ? कटं जातु करिष्यति । [ यहाँ 'कटम्' पूर्व में है । अतः प्रस्तुत सूत्र नहीं लगता है । अनुदात्त होता है । ] ॥ ४७ ॥

## ३६६२. किंवृत्तं च चिदुत्तरम् ॥ ४८ ॥ (३९५५)

किमो वृत्तं किंवृत्तम्। किंवृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात्, डतरडतमौ च प्रत्ययौ। तत्किंवृत्तं चिदुत्तरमविद्यमानपूर्वं यत्तेन युक्तं नानुदात्तं भवति। कश्चिद् भुङ्क्ते। कश्चिद्भोजयति। कश्चिदधीते केनचित्करोति। कस्मैचिद्ददाति। कतरश्चित्करोति। कतमश्चिद् भुङ्क्ते।

चिदुत्तरमिति किम् ? को भुङ्क्ते। अपूर्वमित्येव—देवदत्तः किञ्चित्पठति ॥

## ३६६३. आहोउताहो चानन्तरम् ॥ ४९ ॥ (३९५६)

निघातप्रतिषेधोऽनुवर्तते। 'अपूर्वम्' इति च। आहो, उताहो—इत्येताभ्यामपूर्वाभ्यां युक्तमनन्तरं

### न्यासः

**किंवृत्तञ्च चिदुत्तरम्** ॥ **चिदुत्तरमिति**। चिदित्येतदुत्तरं यस्मात् तत् तथोक्तम्। पूर्वोक्तया नीत्ये-तदपि किंवृत्तस्यैव विशेषणम्। **किंवृत्तग्रहणेन तद्विभक्त्यन्तमित्यादि**। 'किंवृत्ते लिप्सायाम्' इत्यत्रैतदुक्तार्थम्। **भोजयतीति**। पूर्ववन्मध्योदात्तमेवैतत्। **कस्मैचिद् ददातीति**। 'अभ्यस्तानामादिः' इत्याद्युदात्तमेतत्। **कतर इति**। 'कियत्तदो निर्धारणे' इति डतरच्। **कतम इति**। 'वा बहूनां जातिपरिप्रश्ने' इति डतमच् ॥ ४८ ॥

**आहो उताहो चानन्तरम्** ॥ अविद्यमानमनन्तरं व्यवधानं यस्य तदनन्तरम्। अव्यवहितमित्यर्थः।

### पदमञ्जरी

**किंवृत्तं च चिदुत्तरम्** ॥ वृत्तमित्यधिकरणे क्तः, किमो वृत्तं किंवृत्तमिति, 'अधिकरणवाचिनश्च' इति कर्त्तरि षष्ठी, 'अधिकरणवाचिना च' इति समासप्रतिषेधे प्राप्तेऽस्मादेव निपातनात्समासः। यदि यत्र किंशब्दो वर्तते तत्सर्वं गृह्येत—किमीयः, कैमायनिः, किंतरामित्यादेर्ग्रहणप्रसङ्ग इति मत्वा परिसङ्ख्ष्टे—**किंवृत्तग्रहणेनेति**। चिदुत्तरमित्येतत्किंवृत्तस्य विशेषणम्, न तिङन्तस्य; पूर्वोक्तात् सामान्यापेक्षया ज्ञापकात् ॥४८॥

**आहो उताहो चानन्तरम्**। **अपूर्वमित्येवेति**। अत एवोताहोग्रहणम्, उतशब्दपूर्वत्वादाहोशब्दस्य ॥४९॥

### भावबोधिनी

किम् का वृत्त = आधार—किंवृत्त है। किंवृत्त के ग्रहण से उस विभक्त्यन्त को समझना चाहिए और डतर-डतम प्रत्यय लेने चाहिए जिससे चित् उत्तर में है, जिसके पूर्व कोई नहीं है ऐसा जो किंवृत्त शब्द उससे युक्त कश्चिद् भुङ्क्ते तिङन्त का अनुदात्त नहीं होता है। उदा० कश्चिद् भोजयति। कश्चिद् अधीते। केनचित् करोति। कस्मैचित् ददाति। कतरश्चित् करोति। कतमश्चित् भुङ्क्ते। [ इनमें अनुदात्त का निषेध होता है। और यथाप्राप्त स्वर होते हैं। ]

चिद् उत्तर है जिससे—इसका क्या फल है ? को भुङ्क्ते। [ यहाँ निषेध नहीं होता है। ] अपूर्व ( जिससे पूर्व कोई नहीं है )—इसका क्या फल है ? देवदत्तः किञ्चित् पठति। [ यहाँ पूर्व में देवदत्त है। अतः यह निषेध नहीं लगता है। अनुदात्त होता है। ]

**विमर्श**—'वृत्त' शब्द में अधिकरण अर्थ में 'क्त' प्रत्यय है। किम् का वृत्त = रूप, यहाँ सामर्थ्य से विभक्त्यन्त रूप लेना चाहिए और डतर-प्रत्ययान्त, डतम-प्रत्ययान्त ही लेने चाहिए क्योंकि 'चित्' इन्हीं से होता है। अतः कश्चिद् आदि विभक्त्यन्त चिदुत्तर किंवृत्त हैं उनसे युक्त तिङन्त का अनुदात्त नहीं होता है। इस कारण यथाप्राप्त मध्योदात्त आद्युदात्त आदि स्वर होते है ॥ ४८ ॥

अनुदात्त-प्रतिषेध की अनुवृत्ति होती है और अपूर्व ( जिसके पूर्व में कोई नहीं है। ) इसकी भी। 'आहो' तथा 'उताहो' जिनके पूर्व में कोई नहीं है उनसे युक्त अव्यवहित तिङन्त अनुदात्त नहीं होता है। उदा० आहो भुङ्क्ते। उताहो भुङ्क्ते। आहो पठति। उताहो पठति। [ यहाँ प्राप्त निघात का निषेध हो जाता है। ]

तिङन्तं नानुदात्तं भवति । आहो भुङ्क्ते । उताहो भुङ्क्ते । आहो पठति । उताहो पठति[1] ।

अनन्तरमिति किम् ? 'शेषे विभाषा' ( ८।१।५० ) वक्ष्यति ।
'अपूर्वम्' इत्येव—देवदत्त आहो भुङ्क्ते । देवदत्त उताहो भुङ्क्ते ॥

**३६६४. शेषे विभाषा ॥ ५० ॥ (३६५७)**

'आहो', 'उताहो'—इत्येताभ्यां युक्तं तिङन्तं नानुदात्तं शेषे विभाषा भवति । कश्च शेषः ? यदन्यदनन्तरात् । आहो देवदत्तः पचति, पचति । उताहो देवदत्तः पचति, पचति । आहो देवदत्तः पठति, पठति, उताहो देवदत्तः पठति, पठति ॥

**न्यासः**

तिङन्तविशेषणमेतत् । आनन्तर्यञ्चाहो, उताहो—इत्येतयोः श्रुतत्वात् तदपेक्षयैव वेदितव्यम् । अत्रापि चकारोऽपूर्वमित्यस्यानुकर्षणार्थः ॥ ४९ ॥

**शेषे विभाषा** ॥ शेषः सन्निहितापेक्षः । शेषत्रयञ्च पूर्वसूत्रे सन्निहितं निघातकारणम्—आहो-उताहोशब्दौ, अनन्तरमित्येतत्, अपूर्वमित्येतच्च । तत्र न ज्ञायते—किं कारणभावापेक्षः शेष इति । किमाहो-उताहोशब्दापेक्षः ? उतानन्तरभावापेक्षः ? आहोस्विदपूर्वभावापेक्षः ?—इत्यतः पृच्छति—**कश्च शेष इति** । इह निघातमिच्छता तत्कारणमवश्यमेवापेक्षणीयम् । **आहो उताहो इति** । अपूर्वमित्येतदपि द्विश्चकारेणानुकृष्टत्वात् । तस्य हि द्वयोर्योगयोश्चकारोऽनुकर्षणार्थं एव कृतः । कथं नामात्रापि तदपेक्षा स्यादिति ! अन्यथा हि समनन्तरातीत एव सूत्रे तदनुकर्षणार्थश्चकारः क्रियेत । किंवृत्तादिसूत्रे हि स्वरितत्वादेव तदनुवर्त्तते इति । तस्मात् । पारिशेष्यादनन्तरभावापेक्षः शेषो विज्ञायते ? इत्यत आह—**तदन्यदनन्तरादिति** ॥ ५० ॥

**पदमञ्जरी**

**शेषे विभाषा ॥ कश्च शेष इति ।** बहूनां प्रकृतत्वात्प्रश्नः । **यदन्यदनन्तरादिति ।** प्रतिषेधस्य निमित्तभूतमाहो-उताहोग्रहणं तावदवश्यमनुवर्त्यम्, उताहोग्रहणाच्चापूर्वमित्यप्यनुवर्त्तते; तत्र पारिशेष्याद-नन्तरापेक्ष एव शेष इति भावः ॥ ५० ॥

**भावबोधिनी**

अनन्तर = अव्यवहित—यह किस लिये है ? शेष में विकल्प ( ८।१।५० ) कहा जायगा ।

'अपूर्व' ( जिसके पूर्व में कोई नहीं है )—ऐसा ही लिया जाता है । देवदत्त आहो भुङ्क्ते । देवदत्त उताहो भुङ्क्ते । [ यहाँ पूर्व में 'देवदत्तः' है । अतः प्रतिषेध नहीं लगता है । ] ॥ ४९ ॥

'आहो' तथा 'उताहो' इनसे युक्त तिङन्त शेष में अनुदात्त विकल्प से नहीं होता है । तो शेष क्या है ? जो अव्यवहित पूर्व से भिन्न है वह शेष है । उदा० आहो देवदत्तः पचति पचति । उताहो देवदत्तः पचति, पचति । आहो देवदत्तः पठति पठति, उताहो पठति, पठति । [ यहाँ बीच में व्यवधान होने से पूर्व सूत्र की प्राप्ति नहीं है । अतः विकल्प से प्रतिषेध होने से दोनों प्रकार के रूप होते है—(क) निघात वाला और (२) यथाप्राप्त स्वरों वाला । ]

**विमर्श**—प्रकाशित अधिकांश संस्करणों में स्वरांकन नहीं है और एक ही रूप दिया गया है । वास्तव में दोनों रूप दिये जाने आवश्यक हैं जिससे विकल्प वाले रूप के भी स्वरों का ज्ञान हो सके । पहले अनुदात्त के निषेध वाला रूप है और बाद में अनुदात्त ( निघात वाला ) । विकल्प स्थलों में सर्वत्र दो-दो रूप आवश्यक है । एक सदृश होने के कारण अन्य संस्करणों में एक रूप नहीं छापा गया है । किन्तु यह प्रमाद है ॥ ५० ॥

---

१. 'आहो अधीते' इत्यधिकमेकस्मिन्पुस्तके ।

## ३६६५. गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत् ॥ ५१ ॥ (३९५८)

गमिना समानार्था गत्यर्थाः, गत्यर्थानां लोट् गत्यर्थलोट्, तेन। गत्यर्थलोटा युक्तं लृडन्तं तिङन्तं नानुदात्तं भवति, न चेत्कारकं सर्वमन्यद्भवति। यत्रैव कारके कर्तरि कर्मणि वा लोट्, तत्रैव यदि लृडपि भवतीत्यर्थः। कर्तृकर्मणी एवात्र तिङन्तवाच्ये कारकग्रहणेन गृह्येते, न करणादि कारकान्तरम्। आगच्छ देवदत्त ग्रामं द्रक्ष्यस्येनम्। आगच्छ देवदत्त ग्राममोदनं भोक्ष्यसे। उह्यन्तां देवदत्तेन शालयः, तेनैव भोक्ष्यन्ते। उह्यन्तां देवदत्तेन शालयः, यज्ञदत्तेन भोक्ष्यन्ते।

**न्यासः**

गत्यर्थलोटा लृण्न चेत् कारकं सर्वान्यत् ॥ गमिना समानार्था गत्यर्था इति। अर्थप्रदर्शनमेवैतत्। एवं तु विग्रहः कर्त्तव्यः—गतिरर्थो येषामिति। गत्यर्थलोटा युक्तमिति। योगः पुनर्निमित्तनिमितिरूपः। तयोर्निमित्तमिति भावः। न चेत् कारकमित्यादेरर्थं विस्पष्टीकर्त्तुमाह—यत्रैवेत्यादि। अनेन लोडन्तवाच्यं लृडन्तवाच्यार्थं यत् कारकं तस्यैवानन्यत्वमाश्रितम्, न शब्दान्तरवाच्यस्येति दर्शयति, एतच्च प्रत्यासत्तेर्लभ्यते। तिङन्तस्य हि तदेव प्रत्यासन्नं कारकं यत् तेनैवाभिधीयते, न शब्दान्तरेण; तेन शब्दान्तरवाच्ये भिद्यमानेऽपि भवत्येव निघातप्रतिषेधः। आगच्छ देवदत्त ग्रामं द्रक्ष्यस्येनमिति। आगच्छेति गत्यर्थलोट्, द्रक्ष्यसीति लृडन्तम्; तयोश्चैकमेवात्र कारकं देवदत्तः कर्ता। द्रक्ष्यसीति 'सृजिदृशोर्झल्यमकिति' इत्यमागमः, व्रश्चादिसूत्रेण षत्वम्, 'षढोः कः सि' इति कत्वम्। स्यप्रत्ययस्वरेण मध्योदात्तमेतत्। एवमुत्तरत्रापि यत्र निघातप्रतिषेधस्तत्र लृडन्तस्य मध्योदात्तता वेदितव्या। आगच्छ देवदत्त ग्राममोदनं भोक्ष्यस इति। अत्रापि तदेवाभिन्नमुभयलकारवाच्यं कर्तृकारकम्। कर्म तु यद्यपि भिद्यते, तथापि तच्छब्दान्तरवाच्यमिति सत्यपि तद्भेदे भवत्येव निघातप्रतिषेधः। उह्यन्तां देवदत्तेन शालयो यज्ञदत्तेन भोक्ष्यन्त इति।

**पदमञ्जरी**

गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत् ॥ गमिना समानार्था गत्यर्था इति। अर्थप्रदर्शनमेतत्, गतिरर्थो येषामिति तु विग्रहः, गत्यर्थलोटा युक्तमिति योगः, पुनरर्थद्वारको निमित्तनिमित्तिभावः, लोडन्तवाच्यं हि निमित्तं लृडन्तवाच्यस्य। न चेत्कारकं सर्वमन्यद्भवतीति। सर्वं चेत्कारकमन्यत्, यदा निघातप्रतिषेधो न भवतीति भावः। अत्र—

लोडन्ते च लृडन्ते च यावत्किञ्चन कारकम्।
गृह्येत यदि तत्सर्वं वाच्यावाच्यविवेकतः॥

तदेहापि तर्हि प्राप्नोति—

'वह ब्राह्मण शालींस्त्वं पितैतांस्तव भोक्ष्यते'। इति ?

यत्र हि सर्वं भिद्यते, तत्रैव न भवितव्यम्, यथा वृत्तावुक्तयस्तयोः प्रत्युदाहरणयोः।

'न चात्र भिद्यते सर्वमभेदाच्छालिकर्मणः।'

**भावबोधिनी**

गम के समान अर्थ वाली = गत्यर्थक हैं, गत्यर्थकों का लोट् = गत्यर्थलोट्, उसके साथ। गत्यर्थक लोट् से युक्त लृडन्त तिङन्त अनुदात्त नहीं होता है यदि उसके सभी कारक अन्य-अन्य नहीं हैं अर्थात् एक ही कारक है। जिस कर्ता या कर्म ( अर्थ ) कारक में लोट् किया गया है उसी ( कर्ता या कर्म ) में यदि लृट् भी होता है तो यह सूत्र लगता है। यहाँ पर कारक से केवल कर्ता और कर्म अर्थ वाले कारक लिये जाते हैं, करण आदि दूसरे कारक नहीं लिये जाते हैं। उदा० —आगच्छ देवदत्त ! ग्रामं द्रक्ष्यसि एनम्। आगच्छ देवदत्त ग्रामम् ओदनं भोक्ष्यसे। [ यहाँ आगमन क्रिया तथा दर्शन क्रिया का इसी प्रकार आगमन क्रिया और भोजनक्रिया का कर्ता देवदत्त ही है। लोडन्त और लृडन्त का कर्ता कारक अर्थ है। [ उह्यन्तां देवदत्तेन शालयः, तेनैव भोक्ष्यन्ते। उह्यन्तां देवदत्तेन शालयः, यज्ञदत्तेन भोक्ष्यन्ते। [ देवदत्त द्वारा चावल = खाल आदि ढोये जायँ और उसी के द्वारा खाये जायँ। देवदत्त द्वारा शाली = लाई आदि ढोये जायँ और यज्ञदत्त द्वारा खाये जायँ। यहाँ ढोना क्रिया और भक्षण क्रिया जो कि लोडन्त, तथा लृडन्त से प्रतीत हो रही हैं, दोनों के कर्म के रूप में शालि एक ही है। अतः अनुदात्त का निषेध हो जाता है। ]

**गत्यर्थग्रहणं किम् ? पच देवदत्त ओदनं भोक्ष्यस एनम्। लोटेति किम्? आगच्छेर्देवदत्त ग्रामं द्रक्ष्यस्येनम्। लृडिति किम्? आगच्छ देवदत्त ग्रामं पश्यस्येनम्। न चेत्कारकं सर्वान्यदिति किम्? आगच्छ देवदत्त ग्रामं पिता ते ओदनं भोक्ष्यते। उह्यन्तां देवदत्तेन शालयः सक्तवस्तेन पास्यन्ते।**

### न्यासः

अथात्र शालय इत्युभयलकारवाच्याभिन्नं कर्म कारकम्, कर्ता तु यद्यपि भिद्यते, तथापि स शब्दान्तरवाच्य इति तद्भेदेऽपि निघातप्रतिषेधो भवत्येव। **उह्यन्तामिति।** वहेः कर्मणि लोट्, आत्मनेपदम्, झस्यान्तादेशः, 'सार्वधातुके यक्', वच्यादिसूत्रेण सम्प्रसारणम्, टेरेत्वम्, 'आमेतः' इत्याम्भावः। कथं पुनरिहाभिन्नं कारकम्, यावता शक्तिः कारकम्, सा च प्रतिक्रियं भिद्यत एव। शक्तिशक्तिमतोर्भेदस्याविवक्षितत्वादेकं कारकं भविष्यतीत्यदोषः।

**आगच्छेर्देवदत्त ग्रामं द्रक्ष्यस्येनमिति।** अत्र गत्यर्थलिङा लृडन्तं युक्तम्, न गत्यर्थलोटा। **आगच्छ देवदत्त ग्रामं पश्यस्येनमिति।** अत्र गत्यर्थलोटा लडन्तं युक्तम्, न तु लृडन्तम्। **आगच्छ देवदत्त ग्रामं पिता ते ओदनं भोक्ष्यत इति।** अत्र लोडन्तस्य देवदत्तः कर्ता, लृडन्तस्य तु पितेति भिद्यते कारकम्। **उह्यन्तां देवदत्तेनेत्यादि।** अत्र लोडन्तस्य शालयः कर्म वाच्यम्, लृडन्तस्य तु सक्तव इति भिद्यते कारकम्।

**आगच्छ देवदत्त ग्रामं त्वं चाहं चेत्यादि।** यथा पूर्वोपन्यस्तेषु मूलोदाहरणेषु यल्लोडन्तस्य कर्त्रादि कारकं वाच्यं तन्मात्रमेव लृडन्तस्यापि, इह तु न तथा। तत्रापि लोडन्तस्य देवदत्तो युष्मदर्थ एव कर्ता वाच्यः, लृडन्तस्य तु स चास्मदर्थश्च; तत्रासति सर्वग्रहण इह निघातप्रतिषेधो न स्यात्। अत इहापि यथा स्यादित्येवमर्थं सर्वग्रहणे निघातप्रतिषेधः कथमेवात्र भवति, यावता भिद्यते लोडन्तवाच्यात् कारकाल्लृडन्तवाच्यो

### पदमञ्जरी

अथायमर्थः स्यात्—सर्वस्मिन्कारकेऽनन्यस्मिन्निघातप्रतिषेधः, न तु क्वचिदपि भिन्न इति तदेहापि न स्यात्—आगच्छ देवदत्त ग्राममोदनं भोक्ष्यस इति, भिद्यते ह्यत्र कर्म, तस्माद्व्याख्येयमेतत्? तत्राह—**यत्रैवेति।** एवकारेण वाच्यव्यतिरिक्तस्य निरासः, न तु सर्वस्यानन्यत्वं विवक्षितम्, तत्स्पष्टीकृतम्। **कर्तृकर्मणी एवेति।** एतच्च प्रत्यासत्तेर्लभ्यते, प्रत्यासन्नं हि तत्तस्य, यत्तेनैवाभिधीयते। उदाहरणेषु प्रथमतृतीययोः सर्वमनन्यत्। **द्रक्ष्यसीत्यस्य** तु निघातप्रसङ्गश्चिन्त्यः; नानावाक्यत्वात्, द्वितीयचतुर्थयोर्वाच्यमात्रं वहेर्गुणभूतगमनाभिप्रायं गत्यर्थत्वम्, प्रापणार्थस्त्वयम्। तथा च—

'नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च'।

इति भेदेन गणनं कृतम्। ननु च शक्तिः कारकम्, सा च प्रतिक्रियं भिद्यते, तत्कथमिहाभिन्नं कारकम्? शक्तिशक्तिमतोर्भेदस्याविवक्षितत्वाददोषः।

**आगच्छेरिति।** लिङयं न लोट्। **पश्यतीति।** लडयं न लृट्, प्रत्युदाहरणयोः सर्वमन्यत्। कारकशब्देनापि सूत्रे कारकव्यक्तिरेवाश्रीयते, तेन कर्तृकर्मत्वाभेदेऽपि व्यक्तिभेदात् कारकभेदः—**त्वं चाहं च द्रक्ष्याव**

### भावबोधिनी

गत्यर्थकों का ग्रहण किसलिये है ? पच देवदत्त ओदनं भोक्ष्यसे एनम्। [ यहाँ गत्यर्थक नहीं है। ] लोडन्त के सहित—इसका क्या फल है ? आगच्छेः देवदत्त ग्रामं द्रक्ष्यसि एनम्। [ यहाँ विधि लिङ् है। ] लृडन्त—इसका क्या फल है ? आगच्छ देवदत्त ग्रामं पश्यसि एनम्। [ लृडन्त नहीं लडन्त है। ] यदि सभी कारक अलग-अलग न हों, एक ही हों—इसका क्या फल है ? आगच्छ देवदत्त ग्रामं पिता ते ओदनं भोक्ष्यते। [ यहाँ लोडन्त का कर्ता उसका पिता है। ] उह्यन्तां देवदत्तेन शालयः सक्तवः तेन पास्यन्ते। [ देवदत्त द्वारा शाली = लाई ढोई जायें और उसके द्वारा सत्तू पिये जाँय। यहाँ एक में शाली कर्म है दूसरे में सक्तु कर्म है। अतः सूत्र नहीं लगता है। ]

**सर्वग्रहणं किम्? आगच्छ देवदत्त ग्रामं त्वं चाहं च द्रक्ष्याव एनम्—इत्यत्रापि निघातप्रतिषेधो यथा स्यात्। लृडन्तवाच्ये हि सर्वस्मिन् कारकेऽन्यस्मिन् भवितव्यम्। इह तु यल्लोडन्तस्य कारकं तच्चान्यच्च लृडन्तेनोच्यते इति ॥**

## ३६६६. लोट् च ॥ ५२ ॥ (३९५९)

**लोडन्तं तिङन्तं गत्यर्थलोटा युक्तं नानुदात्तं भवति, न चेत्कारकं सर्वान्यद्भवति। लोडन्तयोरेकं कारकं यदि भवतीत्यर्थः। आगच्छ देवदत्त ग्रामं पश्य। आव्रज विष्णुमित्र ग्रामं शाधि। आगम्यतां देवदत्तेन, ग्रामो दृश्यतां यज्ञदत्तेन।**

**'गत्यर्थानाम्' इत्येव—पच देवदत्त ओदनं भुङ्क्ष्वेनम्।**

**'लोटा' इत्येव—आगच्छेर्देवदत्त ग्रामं पश्यैनम्। 'न चेत्कारकं सर्वान्यत्' इत्येव—आगच्छ देवदत्त ग्रामं पश्यत्वेनं यज्ञदत्तः।**

**न्यासः**

योऽर्थः कारकं कर्ता? इत्यत आह—**लृडन्तवाच्ये हीत्यादि**। सर्वग्रहणे सति लोडन्तवाच्यं यत् कारकं तस्माल्लृडन्तस्य तस्य यदि सर्वमन्यद् भवति, तथाप्येवं न निघातप्रतिषेधेन भवितव्यम्, अन्यथा तु सति भवत्येव। यदि हि यत्रापि लोडन्तस्य किञ्चित् तदेव कारकं वाच्यम्, लृडन्तस्य किञ्चत्; ततोऽन्यत्रापि निघातप्रतिषेधो न स्यात्, सर्वग्रहणमनर्थकं स्यात्। तस्मात् सर्वग्रहणाद् भवत्येवात्र निघातप्रतिषेधः। तत्रैवं स्यात्—अस्मिन्नप्युदाहरणे लृडन्तस्य वाच्यं यत् कारकमन्यदेव तल्लोडन्तवाच्याद्। अतः सत्यपि सर्वग्रहणे न भवितव्यं निघातप्रतिषेधेन? इत्यत आह—**इह त्वित्यादि**। गतार्थम् ॥ ५१ ॥

**लोट् च ॥** चकारः पूर्वापेक्षया समुच्चयार्थः। **पश्येति**। अन्तोदात्तम्—'एकादेश उदात्तेनोदात्तः' इति 'अतो गुणे' इति गुणग्रहणे पररूपस्यैवोदात्तत्वात्। **शाधीति**। 'शासु अनुशिष्टौ', 'सेर्ह्यपिच्च' इति सिपो हिरादेशः, अदादित्वाच्छपो लुक्, 'शा हौ' इति धातोः शादेशः, **'हुझल्भ्यो हेर्धिः'** इति हेर्धिभावः। प्रत्ययस्वरेणान्तोदात्तमेतत्। एवं दृश्यतामित्येतदपि; विकरणस्वरात् सार्वधातुकस्वरो बलीयान्' इति वचनात्।

**पदमञ्जरी**

**इति**। अक्रियमाणे सर्वग्रहणे यत्र वाच्यं न भिद्यते तत्रैव भवितव्यम्, इह च भिद्यते वाच्यम्—एकत्रैकम्, अपरत्र द्वयमिति निघातप्रतिषेधो न स्यात्। क्रियमाणे तु सर्वग्रहणे यथा सिध्यति, तथा दर्शयति—**लृडन्तवाच्ये हीति** ॥ ५१ ॥

**लोट् च ॥ शाधीति**। शासेर्लोट्, सिप्, सिपो हिः, 'शा हौ' इति शादेशः, तस्यासिद्धत्वात् झल्लक्षणं धित्वम्। **प्रशाधीति** प्रायेण पाठः, स न युक्तः; सोपसर्गत्वेनोत्तरसूत्रविषयत्वात्।

**भावबोधिनी**

सर्व—के ग्रहण का क्या फल है? आगच्छ देवदत्त ग्रामं त्वं च अहं च द्रक्ष्याव एनम्। यहाँ भी निघात का प्रतिषेध जिस प्रकार से हो सके। क्योंकि लृडन्त के वाच्य सभी कारक में दूसरे अर्थ में होना चाहिए। यहाँ तो लोडन्त का वाच्य जो कारक है वह और दूसरा भी लृडन्त से कहा जा रहा है। [ अतः सभी एक है, भिन्न नहीं है। सूत्र प्रवृत्त होगा। ] ॥ ५१ ॥

लोडन्त तिङन्त जो गत्यर्थक लोट् से युक्त है अनुदात्त नहीं होता है यदि वह सभी कारक भिन्न-भिन्न न हों तो। यदि लोडन्तों के एक ही कारक हों तो—यह अर्थ है। उदा० आगच्छ देवदत्त ग्रामं पश्य। आव्रज विष्णुमित्र ग्रामं शाधि। [ यहाँ दोनों लोडन्त क्रियाओं का एक देवदत्त ही कर्ता कारक है। आना और शासन करना का कर्ता विष्णुमित्र एक ही है। ] आगम्यतां देवदत्तेन, ग्रामः दृश्यतां यज्ञदत्तेन। [ देवदत्त द्वारा गाँव आया जाय और यज्ञदत्त द्वारा गाँव देखा जाय। यहाँ आना तथा देखना दोनों लोडन्त क्रियाओं का एक ग्राम ही कर्म है। अतः निषेध होता है।]

सर्वग्रहणानुवृत्तेस्त्विह भवत्येव—आगच्छ देवदत्त ग्रामं त्वं चाहं च पश्याव। पृथग्योगकरण-मुत्तरार्थम् ॥

## ३६६७. विभाषितं सोपसर्गमनुत्तमम् ॥ ५३ ॥ (३९६०)

सर्वं पूर्वमनुवर्तते। प्राप्तविभाषेयम्। लोडन्तं सोपसर्गमुत्तमवर्जितं गत्यर्थलोटा युक्तं तिङन्तं विभाषितं नानुदात्तं भवति, न चेत्कारकं सर्वान्यद्भवति। आगच्छ देवदत्त ग्रामं प्रविश। आगच्छ देवदत्त ग्रामं प्रशाधि।

सोपसर्गमिति किम्? आगच्छ देवदत्त ग्रामं पश्य। अनुत्तममिति किम्? आगच्छानि देवदत्त ग्रामं प्रविशानि ॥

### न्यासः

अथ पृथग्योगकरणं किमर्थम्, न पूर्वसूत्र एव लोड्ग्रहणमपि क्रियेत? इत्यत आह—**पृथगित्यादि**। उत्तरत्र लोट एव कार्यं यथा स्यात्, लृटो मा भूदित्येवमर्थं पृथग्योगकरणम् ॥ ५२ ॥

**विभाषितं सोपसर्गमनुत्तमम्** ॥ पूर्वेण नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं वचनम्। विभाषितशब्दश्चायं विभाषाशब्देन समानार्थः। 'नपुंसके भावे क्तः'।

**प्रवेशानीति**। मिपः 'मेर्निः', 'आडुत्तमस्य पिच्च' इत्याट् ॥ ५३ ॥

### पदमञ्जरी

**पृथग्योगकरणमुत्तरार्थमिति**। उत्तरो विकल्पो लोट एव यथा स्यात्, लृटो मा भूदिति ॥५२॥५३॥

### भावबोधिनी

'गत्यर्थकों का' यह है अतः—पच देवदत्त ओदनं भुङ्क्ष्व एनम्। [ यहाँ गत्यर्थक नहीं है। अनुदात्त नहीं होता है। ]

'लोडन्त के साथ' इतना ही है अतः—आगच्छेः देवदत्त ग्रामं पश्य एनम्। [ यहाँ विधिलिङ् है लोट् नहीं है। ]

'यदि सभी अन्य अन्य कारक न हों—एक ही हों—इतना ही है अतः—आगच्छ देवदत्त ग्रामं पश्यतु एनं यज्ञदत्तः' [ यहाँ नहीं होता है क्योंकि अलग-अलग दो कर्ता हैं। ]

'सर्व' ग्रहण की अनुवृत्ति से तो यहाँ होता ही है—आगच्छ देवदत्त ग्रामं त्वं चाहं च पश्याव।' [ एक कर्ता का दोनों ही क्रियाओं से सम्बन्ध है। ]

आगे के सूत्र में अनुवृत्ति के लिये यह सूत्र अलग बनाया गया है ॥ ५२ ॥

पूर्व के सभी की अनुवृत्ति होती है। यह प्राप्त-विभाषा है। लोडन्त उपसर्गयुक्त, उत्तमपुरुष-रहित, गत्यर्थकलोडन्त से युक्त तिङन्त का विकल्प से अनुदात्त नहीं होता है यदि सभी कारक भिन्न-भिन्न न हों अर्थात् एक ही कारक हों तो। उदा० आगच्छ देवदत्त ग्रामं प्रविश। आगच्छ देवदत्त ग्रामं प्रशाधि। [ यहाँ आना और प्रवेश करना तथा आना और शासन करना—दोनों ही क्रियाओं का करना—दोनों ही क्रियाओं का एक ही कर्ता देवदत्त है। अतः प्राप्त अनुदात्त का निषेध हो जाता है। ]

उपसर्ग से युक्त—इसका क्या फल है? आगच्छ देवदत्त ग्रामं पश्य। [ यहाँ कोई उपसर्ग नहीं है। ] उत्तम को छोड़कर—इसका क्या फल है? आगच्छानि देवदत्त ग्रामं प्रविशानि। [ देवदत्त! मैं आऊँ गाँव में प्रवेश करूँ। यहाँ उत्तम पुरुष होने से निषेध नहीं होता है ] ॥ ५३ ॥

**३६६८. हन्त च ॥ ५४ ॥ (३९६१)**

पूर्वं सर्वमनुवर्तते गत्यर्थलोटं वर्जयित्वा। 'हन्त'—इत्यनेन युक्तं लोडन्तं सोपसर्गमुत्तमवर्जितं विभाषितं नानुदात्तं भवति। हन्त प्रविश प्रविश। हन्त प्रशाधि प्रशाधि।

सोपसर्गमित्येव—हन्त कुरु। 'निपातैर्यद्यदिहन्त' (८।१।३०) इति नित्यमत्र निघातप्रतिषेधो भवति।

अनुत्तममित्येव—हन्त प्रभुञ्जावहै। हन्त प्रभुञ्जामहै॥

**३६६९. आम एकान्तरमामन्त्रितमनन्तिके ॥ ५५ ॥ (३९६२)**

आम उत्तरमेकपदान्तरमामन्त्रितान्तमनन्तिके नानुदात्तं भवति। आम् पचसि देवदत्त३। आम् भो देवदत्त३।

**न्यासः**

**हन्त च ॥** चकारः 'विभाषितं सोपसर्गमनुत्तमम्' इत्यस्यानुकर्षणार्थः। **कुर्विति।** करोतेर्गुणे कृते 'अत उत् सार्वधातुके' इत्युत्वम्, 'उतश्च प्रत्ययात्' इत्यादिना हेर्लुक्। प्रत्ययस्वरेणान्तोदात्तमेतत्।

**हन्त प्रभुञ्जावहै इति।** भुजेर्लोट्, वहिः, 'टेरेत्वम्' 'आडुत्तमस्य पिच्च', श्नम्। तत्रापि 'निपातैर्यद्यदि' इत्यादिना निघातप्रतिषेधः। अदुपदेशाल्लसार्वधातुकस्यानुदात्ते कृते विकरणस्वरेण मध्योदात्तमेतत्॥ ५४॥

**आम् एकान्तरमामन्त्रितमनन्तिके ॥ एकान्तरमिति।** अन्तरयतीत्यन्तरम्। व्यवधायकमित्यर्थः। एकं पदमन्तरं यस्य तत् तथोक्तम्। एकेन निपातेन व्यवहितमित्यर्थः।

**आम् पचसि देवदत्त इति।** निघाते प्रतिषिद्धे 'आमन्त्रितस्य' इति षाष्ठिकमामन्त्रिताद्युदात्तत्वं भवति। 'दूराद्धूते' इति प्लुतः। **आम् भो देवदत्त इति।** 'भवद्भगवदघवतामोच्चावस्य' इति भवच्छब्दावयवस्यावशब्दस्यौत्वम्, दकारस्य रुत्वम्, तस्य 'भोभगोअघोअपूर्वस्य' इत्यादिना यकारः, तस्य 'हलि सर्वेषाम्' इति लोपः।

**पदमञ्जरी**

**हन्त च ॥ हन्त प्रभुञ्जावहै इति।** भुजेर्लोट्, 'भुजोऽनवने' इत्यात्मनेपदम्, वहिः, टेरेत्वम्, 'आडुत्तमस्य पिच्च', 'एत ऐ', अनुदात्तेत्वाल्लसार्वधातुकमनुदात्तत्वम्, विकरणस्वरः॥ ५४॥

**आम एकान्तरमामन्त्रितमनन्तिके ॥** अन्तरयतीत्यन्तरम् = व्यवधायकम्। एकमन्तरं यस्य तदेकान्तरम्, उदाहरणे निघाते प्रतिषिद्धे षाष्ठिकमाद्युदात्तत्वम्, 'दूराद्धूते च' इति प्लुतः, भवच्छब्दस्य 'विभाषा भवद्भगवदघवताम्' इति रुत्वम्, अवशब्दस्य च ओकारः, 'भोभगो' इत्यादिना यत्वम्, तस्य 'हलि सर्वेषाम्' इति लोपः।

**भावबोधिनी**

गत्यर्थलोट् को छोड़कर पूर्व के सभी की अनुवृत्ति होती है। 'हन्त' इससे युक्त लोडन्त सोपसर्ग उत्तमरहित तिङन्त विकल्प से अनुदात्त नहीं होता है। उदा० हन्त प्रविश, प्रविश। हन्त प्रशाधि, प्रशाधि। [ यहाँ विकल्प से निषेध होने के कारण एक अनुदात्त और दूसरा यथाप्राप्त स्वरों का रूप होता है। ]

यह भी उपसर्ग-सहित का ही होता है—हन्त कुरु। [ उपसर्ग नहीं है अतः नहीं होता है। ] "निपातैर्यद्यदि हन्त' (८।१।३०) सूत्र से यहाँ पर नित्य ही निघात का प्रतिषेध होता है।

उत्तमवर्जित ही—हन्त प्रभुञ्जावहै। हन्त प्रभुञ्जामहै। [ यहाँ उत्तमपुरुष ही है। अतः सूत्र की प्रवृत्ति न होकर अनुदात्त होता है। ]॥ ५४॥

'आम्' से उत्तरवर्त्ती, एक पद के व्यवधान वाले आमन्त्रितान्त का अनन्तिक ( न दूर न समीप अर्थ ) में अनुदात्त नहीं होता है। उदा० आम् पचसि देवदत्त३। आम् भो देवदत्त३। [ यहाँ उदा० में सामान्य नियम से अनुदात्त प्राप्त है प्रस्तुत सूत्र से निषेध होता है। फलतः 'आमन्त्रितस्य च' (६।१।१९२) इस षष्ठ अध्याय वाले

**'भोः' इत्यामन्त्रितान्तमपि 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' ( ८।१।७३ ) इति नाविद्यमानवद्भवति ।**

**आम इति किम् ? शाकं पचसि दे॒व॒द॒त्त३ । एकान्तरमिति किम् ? आम् प्रपचसि दे॒व॒द॒त्त३ । आमन्त्रितमिति किम् ? आम् पचति दे॒व॒द॒त्तः । अनन्तिक इति किम् ? आम् दे॒व॒द॒त्तः ।**

**✻ आम एकान्तरमामन्त्रितं यत्तस्य एकश्रुतेरनुदात्तस्य च प्रतिषेध इष्यते ✻ । ( म० भा० ) तदुभयमनेन क्रियत इति केचिदाहुः । प्लुतोदात्तः पुनरसिद्धत्वान्न प्रतिषिध्यते ।**

**न्यासः**

ननु चात्र भोःशब्दस्य 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यविद्यमानत्वादेकान्तरता नोपपद्यते ? इत्यत आह—**भो इत्यामन्त्रितान्तमपीत्यादि** । 'भोः' इति सामान्यवचनम् । अत्र 'भोः' इति यद्यप्यामन्त्रितम्, तथापि नाविद्यमानवत्; 'नामन्त्रिते' इत्यादिनाऽविद्यमानवद्भावस्य प्रतिषेधात् ।

**तदुभयमप्यनेन क्रियत इति** । कथं पुनरुभयमप्यनेन कर्तुं शक्यम्, यावतानुदात्ताधिकारादनुदात्तस्यैवानेन युज्यते प्रतिषेधः ? न शक्यते कर्तुमप्रकृताया असंशब्दिताया एकश्रुतेः ? नैष दोषः; 'अनन्तिके' इति नञत्र विरोधे वर्तते, अधर्मानृतादिवत्[1] । अन्तिकविरुद्धमनन्तिकम् । दूरमित्यर्थः । दूरात् सम्बुद्धौ चैकश्रुतिरुच्यते; 'एकश्रुति दूरात् सम्बुद्धौ' इति वचनात् । एवं हि प्रपचति देवदत्तेत्येवमादिष्वामन्त्रितनिघातं कृतार्थं बाधित्वा यत्राम एकान्तरमामन्त्रितमनन्तिकम्, तत्रैकश्रुतिरेव भवति, यदिदं नारभ्येत । अतो नाप्राप्तायामेकश्रुतौ इदमारभ्यत इति तां तावद् बाधते, ततस्तस्याश्च बाधितायां बाधकाभावात् प्राप्नुवत् तं निघातमपि

**पदमञ्जरी**

ननु च 'आमन्त्रितं पूर्वमविद्यमानवत्' इति भोःशब्दस्याविद्यमानत्वादेकान्तरता नोपपद्यते ? अत आह—**भो इत्येतदिति** ।

**तदुभयमप्यनेन क्रियत इति** । कथं पुनरप्रकृताया असंशब्दितायाश्चैकश्रुतेः प्रतिषेधः शक्यो विज्ञातुम् ? उच्यते; नञत्र विपक्षवचनः, अधर्मानृतादिवत्, अन्तिकविरुद्धमनन्तिकम्, दूरमित्यर्थः, तत्र चैकश्रुतिरुच्यते, ततश्च पचसि देवदत्तेत्यादावन्तिके सावकाशमामन्त्रितनिघातं बाधित्वा एकश्रुतिः प्राप्नोति, सा तावत्प्रतिषिद्धयते, ततोऽपवादे प्रतिषिद्ध उत्सर्गभूतो निघातः प्राप्नोति, सोऽपि प्रतिषिध्यते, एकश्रुतिमात्रप्रतिषेधे हि तत्रैवायं ब्रूयात्—नाम एकान्तरमिति । एवं हि 'आमन्त्रितमनन्तिके' इति च न वक्तव्य भवति,

**भावबोधिनी**

सूत्र से आमन्त्रित का आद्युदात्त होता है और 'दूराद्धूते च' ( ८।२।८४ ) से प्लुत होता है । भो का मूल भवद् शब्द है । 'भवद्भगवदघवतामोच्चावस्य' इस सूत्र से द् का रु भोरु + देवदत्त । 'भोभगो अघो अपूर्वस्य योऽशि' सूत्र से रु का य् तथा 'हलि सर्वेषाम्' से य् का लोप हो जाता है । ]

[ यद्यपि 'आमन्त्रितं पूर्वमविद्यमानवत्' सूत्र से 'भोः' शब्द का अविद्यमानवद्भाव प्राप्त है अतः एक का अन्तर = व्यवधान नहीं मिलना चाहिए तथापि ] 'भोः' इस आमन्त्रितान्त का भी अविद्यमानवद्भाव 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' ( ८।१।७३ ) सूत्र के कारण नहीं होता है । [ अतः एक का अन्तर = व्यवधान रहता ही है । ]

'आम्' से परवर्ती का—इसका क्या फल है ? शाकं पचसि देवदत्त ३ । [ यहाँ अनुदात्त का निषेध न होकर अनुदात्त ही होता है । ] एक का व्यवधान—इसका क्या फल है ? आम् प्रपचसि देवदत्त ३ । [ यहाँ प्र तथा पचसि इन दो का व्यवधान होने से निषेध नहीं होता है, अनुदात्त ही होता है । ] आमन्त्रितान्त—इसका क्या फल है ? आम् पचति देवदत्तः । [ यहाँ सामान्य कर्ता अर्थ में प्रथमा है । ] अनन्तिक ( = न दूर न पास )—इसका क्या फल है ? आम् देवदत्त । [ यहाँ एकदम पास में होने से निषेध नहीं होता है । ]

---

१. 'अमृतामित्रादिवत्' इति पाठा० ।

**अपरेषां दर्शनम्—'अनन्तिक इत्यनेन यन्न दूरं न सन्निकृष्टं तत् परिगृह्यते। तेनास्मिन्नेकश्रुतेः प्राप्तिरेव नास्ति। प्लुतोदात्तोऽपि नोदाहर्तव्यः' इति।**

**न्यासः**

बाधत एव। कुतः? निघातप्रतिषेधाधिकारे वचनात्। एकश्रुतिप्रतिषेधे हि विधित्सिते सत्येकश्रुतिप्रकरण एव प्रतिषेधं कुर्यात्, नाम एकान्तरमिति; तत्राप्ययमर्थः—'आमन्त्रितमनन्तिके' इति वक्तव्यं न भवति। तस्मान्निघातप्रतिषेधाधिकारे वचनान्निघातमपि बाधत इति युक्तम्—तदुभयमनेन क्रियत इति। नैष दोषो यदि तर्ह्यप्रकरणापन्नाशब्दिताप्येकश्रुतिरनेन प्रतिषिध्यते। 'दूराद्धूते च' इति यः प्लुतोदात्तः प्राप्नोति; सोऽपि प्रतिषिध्यते? इत्यत आह—**प्लुतोदात्तः पुनरित्यादि**। तस्मिन् कर्त्तव्येऽसिद्धत्वात् प्लुतोदात्तो नास्त्येव, स कथं प्रतिषिध्येत। असिद्धत्वं तु पूर्वत्रासिद्धमिति वचनात्।

**अपरेषामित्यादि**। तेषां मतेन सादृश्येऽत्र नञ् वर्तते, न विरोधे। युक्तश्चैतत्; अन्यथा हि 'दूरे' इत्येवं ब्रूयात्। तस्माद् यदिह न दूरं सन्निकृष्टम्, तदिहान्तिकग्रहणेन गृह्यते। तदेव ह्यन्तिकसदृशम्। तेन दूरे विधीयमानाया एकश्रुतेरिह प्राप्तिरेव नास्ति। ततो नास्ति तस्या अपि प्रतिषेधः क्रियतेऽपितु निघातस्यैवेत्यभिप्रायः। यद्येवम्, यथैकश्रुतेः प्राप्तिर्नास्ति तथा प्लुतस्यापि, तत् कथं स इहोदाह्रियते? इत्याह—**प्लुतोदात्तोऽपीत्यादि**॥ ५५॥

**पदमञ्जरी**

सोऽयमेवं सिद्धे यन्निघातप्रकरणे इदं ब्रवीति तेन विजानीमः—निघातोऽपि प्रतिषिध्यत इति। केवलस्य निघातस्यैकश्रुत्या बाधितस्य प्रतिषेधोऽनर्थक इति सामर्थ्यादुभयोः प्रतिषेधः।

ननु चैकश्रुतिरपि देवदत्ता३ आगच्छेत्यादौ सावकाशा कथमां भो देवदत्त इत्यादौ निघातस्य बाधिका, प्रत्युत परत्वादेकश्रुतेर्निघात एव बाधक इति तस्यैवात्र प्रसङ्ग इति प्रतिषेधोऽपि तस्यैव न्याय्यः, तस्य च प्रतिषेधे एकश्रुतिः स्यादेव? अत्राहुः—पदद्वयमात्रनिबन्धनत्वादन्तरङ्गो निघातः पूर्वं प्रवर्त्तते, ततो दूरात्सम्बोधनमधिकं निमित्तमपेक्षमाणैकश्रुतिरिति सैवानन्तरं प्राप्नोति, तां तावद्बाधते पूर्वोक्तेन न्यायेन निघातमपीति सुष्ठूक्तम्—तदुभयमनेन क्रियत इति।

यथैव तर्हि एकश्रुतिर्बाध्यते, तथैव प्लुतोदात्तोऽपि बाध्येत? अत आह—**प्लुतोदात्तः पुनरिति**। **अपरेषामिति**। ते मन्यन्ते—सादृश्येऽत्र नञ्, न विपक्षे; अन्यथा दूर इत्येव ब्रूयादिति प्राप्तिरेव नास्ति, अदूरत्वात्। कथं तर्हि प्लुत उदाह्रियते? अत आह—**प्लुतोऽपीति**॥ ५५॥

**भावबोधिनी**

आम् से एक के व्यवधान वाला आमन्त्रितान्त जो है उसकी एकश्रुति तथा अनुदात्त का प्रतिषेध इष्ट है। ये दोनों कार्य इसी सूत्र से किये जाते हैं—ऐसा कुछ लोग कहते हैं। [ किन्तु 'दूराद्धूते च' (८।२।८४) से होने वाले ] प्लुत उदात्त का प्रतिषेध नहीं करता है क्योंकि [ त्रिपादीस्थ होने के कारण ] असिद्ध हो जाता है। [ अतः प्लुत उदात्त रहता ही है। ]

दूसरे आचार्यों का यह मत है—'अनन्तिके' इसके द्वारा 'जो न दूर है और न समीप है उसका ग्रहण किया जाता है।' इस कारण यहाँ पर एकश्रुति की प्राप्ति ही नहीं है। [ इसी प्रकार प्लुत की प्राप्ति नहीं है। अतः ] प्लुत उदात्त को भी उदाहरण के रूप में नहीं दिखाना चाहिए।

**विमर्श**—यहाँ सूत्रस्थ 'अनन्तिके' पद में—'न अन्तिके' इसमें कुछ विद्वान् विरोध अर्थ में नञ् मानते हैं—उनके अनुसार अन्तिक = समीप के विरोधी = दूर अर्थ में अनुदात्त नहीं होता है। इसके साथ 'एकश्रुति दूरात् सम्बुद्धौ' इस सूत्र से एकश्रुति जो प्राप्त होती है उसका भी निषेध यही सूत्र करता है।

दूसरे विद्वान् नञ् का अर्थ तद्भिन्न तत्सदृश मानते हैं। इनके अनुसार तो एकश्रुति की प्राप्ति ही नहीं है क्योंकि यह सन्निकृष्ट अर्थ में प्रवृत्त होता है और एकश्रुति दूर अर्थ में। यही पक्ष उचित प्रतीत होता है॥ ५५॥

**३६७०. यद्धितुपरं छन्दसि ॥ ५६ ॥ ( ३९६३ )**

'आमन्त्रितम्'—इत्येतदस्वरितत्वान्नानुवर्तते। 'तिङ्' इति वर्तत एव। यत्परं हिपरं तुपरं च तिङन्तं छन्दसि नानुदात्तं भवति।

यत्परं तावत्—गवां गोत्रमुदसृजो यदङ्गिरः'[1] ( ऋ० २.२३.१८ )। हिपरम्—इन्द्रवो वामुशन्ति हि ( तै० सं० १.४.४.१ )। तुपरम्—आख्यास्यामि तु ते।

'निपातैर्यद्यदिहन्त' ( ८.१.३० ) इति 'हि च' ( ८.१.३४ ) इति, 'तुपश्यपश्यताहै' ( ८.१.३९ )

**न्यासः**

**यद्धितुपरं छन्दसि॥** यद्धितवः परे यस्मात् तत् तथोक्तम्। **उदसृजोऽयमिति।** अत्र हि तिङन्तमट्स्वरेणाद्युदात्तम्। 'सृज विसर्गे', लङ्, सिप्, तुदादित्वाच्छः, 'हशि च' इत्युत्वम्, 'आद् गुणः'। **उशन्ति हीति।** 'वश कान्तौ', झेरन्तादेशः, पूर्ववच्छपो लुक्, ग्रहिज्येत्यादिसूत्रेण सम्प्रसारणम्। प्रत्ययस्वरेण मध्योदात्तमेतत्।

**आख्यास्यामि त्विति।** 'ख्या प्रकथने', चक्षिङादेशो वा, लट्। स्यप्रत्ययस्वरेण मध्योदात्तमेतत्।

**निपातैर्यद्यदिहन्तेत्यादिना** नियमस्य कारणं दर्शयति। **वचनमित्यादिनाप्यस्य** वचनस्य नियमार्थत्वम्। **एभिरेवेत्यादिनापि** नियमस्य स्वरूपम् **नान्यैरिति।** अनेनापि नियमस्य व्यवच्छेद्यम्। **इहेत्यादिनापि** व्यवच्छेद्यस्य विषयम्। **स्वो रोहावेहीति।** 'रुह बीजजन्मनि प्रादुर्भावे' लोट्, वस्, शप्, 'आडुत्तमस्य पिच्च', 'स उत्तमस्य' इति सकारलोपः। रोहावेत्येतस्मिन् परभूते स्वरित्यस्य 'रो रि' इति रेफस्य लोपो न भवति;

**पदमञ्जरी**

**यद्धितुपरं छन्दसि॥ जाये स्वो रोहावेहीति।** रुहेर्लोट्, वस्, शप्, 'आडुत्तमस्य पिच्च', 'लोटो लङ्वत्' इति लङ्वद्भावात् 'नित्यं ङितः' इति सलोपः, आङ्पूर्वादिणो लोट्, सिपो हिः, एहीत्यनेन परभूतेन युक्तस्य रोहावेत्यस्य 'लोट् च' इति प्राप्तो निघातप्रतिषेधो नियमेन निवर्त्यते, तेन स्वशब्दाश्रयो निघातो भवति। ननु 'परमपि छन्दसि' इति वचनात् स्वःशब्दस्य पूर्वाङ्गवद्भावाज्जायेस्वरित्यामन्त्रितम्, ततश्च 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यविद्यमानत्वान्निघातो न प्राप्नोति, प्रतिषिध्यतेऽत्राङ्गवद्भावः—अव्ययानां प्रतिषेध इति? नैवम्; अत्राङ्गवद्भावः प्राप्नोति, उक्तं हि तत्र—'षष्ठ्यामन्त्रितकारकवचनम्' 'तन्निमित्तग्रहणं च' इति। न हि स्वःशब्दः षष्ठ्यन्त आमन्त्रितकारकं तन्निमित्तं वा स्वरे वाङ्गवद्भावो नाविद्यमानवत्त्वम्। स्वःशब्दस्य 'रो रि' इति लोपो न भवति, उत्वं च भवति; छान्दसत्वात्। अथेदानीं रोहावेत्यनेन युक्तस्य एहीत्यस्य 'लोट् च' इति निघातप्रतिषेधः कस्मान्न भवति, न रुहिर्गत्यर्थः, 'गत्यर्थाकर्मक' इत्यत्र पृथग्ग्रहणात्?

**भावबोधिनी**

स्वरित न होने के कारण 'आमन्त्रितम्' इसकी अनुवृत्ति नहीं होती है। 'तिङ्' = तिङन्त की तो अनुवृत्ति होती ही है। यत्परक, हिपरक और तुपरक तिङन्त का वेद में अनुदात्त नहीं होता है।

यत्परक का उदा० गवां गोत्रमुदसृजो यदङ्गिरः। [ यहाँ उत् पूर्वक सृज् धातु लङ् मध्यमपुरुष एकवचन का रूप है—'उदसृजः' इसके बाद 'यद् अङ्गिरः' है। अतः यत्परक होने से अनुदात्त नहीं होता है। ] हिपरक का उदा० 'इन्दवो वामुशन्ति हि।' [ यहाँ 'वश कान्तौ = इच्छायाम्' धातु का रूप है। हिपरक होने से अनुदात्त नहीं होता है। ] तुपरक का उदा० आख्यास्यामि तु ते। [ यहाँ 'ख्या प्रकथने' का रूप है। तुपरक है। अनुदात्त नहीं होता है। ]

[ उपर्युक्त उदाहरणों में क्रमशः ] "निपातैर्यद्यदिहन्त' ( ८.१.३० ) 'हि च' ( ८.१.३४ ) और 'तुपश्यपश्यताहैः' ( ८.१.३९ ) सूत्रों से निघात का प्रतिषेध सिद्ध रहते यह वचन ( सूत्र ) नियम के लिए [ बनाया

---

१. 'अयमङ्गिरः' इत्यपपाठः।

इति च निघातप्रतिषेधे सिद्धे वचनमिदं नियमार्थम्—एभिरेव परैर्योगे प्रतिषेधो भवति, नान्यैरिति । इह न भवति—'जाये स्वो रोहावेहि । एहीत्यनेन गत्यर्थलोटा युक्तस्य 'रोहाव' इत्येतस्य लोडन्तस्य निघातो भवत्येव ॥

**३६७१. चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ॥ ५७ ॥ ( ३९६४ )**

चन, चिद्, इव, गोत्रादि, तद्धित, आम्रेडित—इत्येतेषु परतः अगतेरुत्तरं तिङन्तं नानुदात्तं भवति । चन—देवदत्तः पचति चन । चित्—देवदत्तः पचति चित् । इव—देवदत्तः पचतीव । गोत्रादि—देवदत्तः पचति गोत्रम् । देवदत्तः पचति ब्रुवम् । देवदत्तः पचति प्रवचनम् । इहापि गोत्रादयः कुत्सनाभीक्ष्ण्ययोरेव गृह्यन्ते । तद्धित—देवदत्तः पचतिकल्पम् । देवदत्तः पचतिरूपम् । अनुदात्तस्तद्धित इहोदाहरणम्, अन्यत्र तद्धितस्वरेण तिङ्स्वरो बाध्यते—पचतिदेश्यः । आम्रेडित—देवदत्तः पचति पचति ।

**न्यासः**

छान्दसत्वात् । तस्मिन्नसति पूर्ववदुत्वम् । 'आद् गुणः' इति हि गुणे, लोण्मध्यमपुरुषैकवचने रूपम् । क्वचित्—जाये स्वो रोहावेहीत्येहीत्यनेन गत्यर्थलोटा युक्तस्येति पाठः, तत्राङ्पूर्वस्येणः प्रयोगो वेदितव्यः ।

अथ परग्रहणं किमर्थम्, न 'यद्धितुष्वेव' इत्युच्येत ? नैवं शक्यम्; सप्तमीनिर्देशे हि निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादनन्तरेष्वेवावयवादिषु भवतीति नियमो विज्ञायते । ततोऽनन्तरेष्वेव पदादिषु भविष्यति, न व्यवहितेष्विति । तथा चान्ययोगनिवृत्तेर्नियमेनाकृतत्वात् स्वो रोहावेहीत्यत्र स्यादेव प्रतिषेधः ॥ ५६ ॥

**चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ॥** **इहापि गोत्रादयः कुत्सनाभीक्ष्ण्ययोरेव गृह्यन्त इति ।** न केवलम् 'तिङो गोत्रादीनि' इत्यादौ सूत्र इत्यपिशब्दार्थः । यथा चात्रापि कुत्सनाभीक्ष्ण्योरेव गोत्रादीनि गृह्यन्ते, तथा तत्रैवोपपादितम् । **पचतिकल्पमेति ।** 'ईषदसमाप्तौ कल्पम्' । तत्र हि 'तिङश्च' इत्यनुवर्तते, अनुदात्तस्तद्धित इहोदाहरणमिति कस्मान्न भवति ?—इति प्रश्नावसरे आह—**अन्यत्र तद्धितस्वरेण तिङ्स्वरो बाध्यत इति ।** तद्धितस्योदात्तत्वे सति 'अनुदात्तं पदमेकवर्जम्' इति चानुदात्तत्वापत्तिः । एवञ्चान्यत्र निघातः सिद्ध एवेति । अनुदात्त एव तद्धित इहोदाहरणम् ।

**पदमञ्जरी**

यदि न गत्यर्थः, आरोहन्ति हस्तिनं मनुष्याः आरोहयति हस्ती मनुष्यान्, 'गतिबुद्धिप्रत्यवसानार्थ' इति कर्मसंज्ञा न प्राप्नोति । तस्मादुपरिगमनरूपव्यापारो रुहेरर्थः । 'गत्यर्थाकर्मक' इत्यत्र च रुहिग्रहणं प्रपञ्चार्थम् । एहीत्यस्य तु निघातप्रतिषेधो न भवति; 'विभाषितं सोपसर्गमनुत्तमम्' इति वचनात् ॥ ५६ ॥

**चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ॥** **इहापीति**[२] । न केवलं तिङो गोत्रादीनीत्यत्रैवेत्यपि-

**भावबोधिनी**

गया है ]—'परवर्ती केवल इन्हीं के योग में प्रतिषेध होता है अन्यों के योग में नहीं । इस कारण यहाँ प्रतिषेध नहीं होता है—'जाये स्वो रोहावेहि ।' यहाँ गत्यर्थक लोडन्त 'एहि' इससे युक्त 'रोहाव' इस लोडन्त का निघात होता ही है । [ यदि नियमार्थ यह सूत्र न होता तो 'हि' मात्र के योग में निघातप्रतिषेध होने से यहाँ भी हो जाता, जब कि यहाँ निघात होना ही इष्ट है । ] ॥ ५६ ॥

चन, चिद्, इव, गोत्रादि तद्धित और आम्रेडित—इनके परे रहते अगतिसंज्ञक ( गति से भिन्न ) से उत्तरवर्ती तिङन्त का अनुदात्त नहीं होता है । उदा० चन—देवदत्तः पचति चन । चित्—देवदत्तः पचति चित् । इव—देवदत्तः पचति इव । गोत्रादि—देवदत्तः पचति गोत्रम् । देवदत्तः पचति ब्रुवम् । देवदत्तः पचति प्रवचनम् । यहाँ भी गोत्रादि कुत्सन और आभीक्ष्ण्य अर्थ में ही लिये जाते हैं । तद्धित—देवदत्तः पचतिकल्पम् । देवदत्तः पचतिरूपम् । इनमें अनुदात्त तद्धित प्रत्यय उदाहरण हैं अन्यत्र तद्धित स्वर द्वारा तिङ् स्वर का बाध कर लिया जाता है—पचतिदेश्यः । [ भाव यह है कि रूपप्, कल्पप् आदि तद्धित प्रत्यय पित् होने से अनुदात्त हैं, इन्हीं का ग्रहण है । इन्हीं के परे रहते अनुदात्त का प्रतिषेध होता है । इससे भिन्न स्थलों पर तो तद्धित स्वर ही बलवान् होता हुआ तिङ् स्वर का बाध कर लेता है । अतः तद्धित के उदात्त हो जाने पर 'अनुदात्तं पदमेकवर्जम्' इस सूत्र से शेषनिघात

१. मुद्रितकाशिकायां तु जायेस्वारोहावेहीति पाठः । तत्र 'रो रि' इति रेफलोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घः ।　　२. 'अत्रागतिग्रहणे' इति मूलपाठः ।

अगतेरिति किम्? देवदत्तः प्रपचति चन ।

अत्रागतिग्रहणे, 'सगतिरपि तिङ्' इत्यत्र च उपसर्गग्रहणं द्रष्टव्यम् । इह मा भूत्—शुक्लीकरोति चन । यत्काष्ठं शुक्लीकरोति । यत्काष्ठं कृष्णीकरोति' ॥

**३६७२. चादिषु च ॥ ५८ ॥ ( ३९९५ )**

चादिषु च परतः तिङन्तमगतेः परं नानुदात्तं भवति । चादयः 'नचवाहाहैवयुक्ते' (८।१।२४)

**न्यासः**

**अत्रेत्यादि** । कथं पुनरुपसर्गग्रहणं शक्यं द्रष्टुम्? उत्तरसूत्रे 'चादिषु च' इति चशब्देनास्य सूत्रस्य द्वितीयो व्यापार उच्यते, स आनन्तर्याद् गतेरित्यस्य विशेषणार्थो भविष्यति—चादिषु च यो गतिरिति । चादिष्विति सामीप्यलक्षणमधिकरणम् । कश्चादिषु गतिः? चादिसमीपे य उदितः । तेनायं प्रादीनामेवोपसर्गसंज्ञानां प्रतिषेधो विज्ञायते । एवं तावदस्मिन् सूत्रे गतिग्रहणेनोपसर्गस्य ग्रहणं विज्ञायते । **सगतिरपि तिङिति** । अत्रापि 'चादिलोपे विभाषा' इति सूत्रात् मण्डूकप्लुतिन्यायेन विभाषेत्यनुवर्त्तते, सा च व्यवस्थितविभाषा । तेनोपसर्गसंज्ञेन गतिना यो गतिः सः । तस्यैवादित्वे भवितव्यमित्युपसर्गस्यैव गतेर्ग्रहणं विज्ञायते । अथ वा—द्वयोरप्येतयोर्योगयोः 'विभाषितं सोपसर्गमनुत्तमम्' इत्यत उपसर्गग्रहणं मण्डूकप्लुतिन्यायेनानुवर्त्तते । तेन च गतिर्विशेष्यते—उपसर्गसंज्ञो यो गतिरिति । तेनोपसर्गसंज्ञस्यैव गतेर्ग्रहणं विज्ञायते । यदि तर्ह्युपसर्गग्रहणमनुवर्तते, गतिग्रहणमनर्थकं स्यात्; उपसर्गग्रहणानुवृत्त्यैव सिद्धत्वात्? नानर्थकम्; विस्पष्टार्थत्वात् । 'उपसर्गाच्छन्दसि धात्वर्थे' इत्यत्र ह्युपसर्गग्रहणं प्राद्युपलक्षणार्थम् । तत्रासति गतिग्रहणे, इहाप्युपसर्गग्रहणं प्राद्युपलक्षणार्थमिति कस्यचित् सन्देहः स्यात् । प्राद्युपलक्षणे च सति को दोषः? अनुपसर्गाणामपि प्रादीनां ग्रहणं विज्ञायेत । ततः शुक्लीकरोतीत्यत्र निघातप्रतिषेधो भवत्येव । 'अभूततद्भावे' इत्यादिनेह च्विः, तस्य 'ऊर्यादिच्विडाचश्च' गतिसंज्ञा, 'अस्य च्वौ' इतीत्वम् । **यत् काष्ठं शुक्लीकरोतीति** । अत्र सगतिरपि तिङिति निघातो न वर्तते । तेन 'निपातैर्यद्यदि' इत्यादिना निघातप्रतिषेध एव भवति ॥ ५७ ॥

**चादिषु च** ॥ द्विविधाश्चादयः—गणपरिपठिताश्च, यानङ्गीकृत्यैतदुक्तम्—'चादयोऽसत्त्वे' इति; सूत्रपठिताश्च—'नचवाहाहैवयुक्ते' इति; तत्र प्रत्यासत्तेर्य इह प्रकरणे पठितास्तेषामेव ग्रहणं युक्तम्? इति

**पदमञ्जरी**

शब्दार्थः । तत्र हेतुस्तत्रैव प्रतिपादितः । **शुक्लीकरोति चनेति** । अगतेरिति प्रतिषेधाभावादत्र निघातप्रतिषेधो भवत्येव । **यत्काष्ठमिति** । शुक्लीशब्दस्य निघातो न भवति ॥ ५७ ॥

**चादिषु च ॥ त इह गृह्यन्त इति** । प्रत्यासत्तेः । 'चादयोऽसत्वे' इत्यत्र येषां ग्रहणं ते विप्रकृष्टाः ।

**भावबोधिनी**

होना सिद्ध ही है । अतः जो तद्धित अनुदात्त हैं वे ही उदाहरण बनते हैं । ] आम्रेडित—देवदत्तः पचति पचति ।

गतिसंज्ञक से भिन्न से परे—इसका क्या फल है? देवदत्तः प्रपचति चन । [ यहाँ 'प्र' से परे तिङन्त का अनुदात्तनिषेध न होकर अनुदात्त ही होता है । ]

इस सूत्र में 'अगति' के ग्रहण में और 'सगतिरपि तिङ्' इसमें उपसर्गग्रहण समझना चाहिए अर्थात् उपसर्गसंज्ञक होता हुआ जो गतिसंज्ञक है उसी से परे का निषेध होता है । जिससे यहां निषेध न होने लगे—शुक्लीकरोति चन । यत्काष्ठं शुक्लीकरोति । यत्काष्ठं कृष्णीकरोति । [ इन उदाहरणों में गति होने पर भी उपसर्गसंज्ञक नहीं है अतः 'अगति' यह प्रतिषेध नहीं लगेगा । फलतः 'निपातैर्यद्यदिहन्त' सूत्र से निघात-प्रतिषेध ही होता है । यदि गतिसंज्ञक मान लिया जाता तो उक्त लक्ष्यों में भी गति-भिन्न नहीं है अनुदात्त होने लग जाता है 'शुक्ली' इसका । ] ॥ ५७ ॥

च आदि के परे रहते भी गतिसंज्ञक से भिन्न पद से परवर्त्ती तिङन्त का अनुदात्त नहीं होता है । 'च आदि शब्द 'न चवाहाहैवयुक्ते' (८।१।२४) इसमें जिनका निर्देश है, उन्हीं का यहाँ ग्रहण होता है । [ न कि 'चादयोऽसत्त्वे' इस सूत्र में पठित च आदि का । ] उदा० च शब्द—देवदत्तः पचति च खादति च । वा—देवदत्तः

इत्यत्र ये निर्दिष्टाः, त इह परिगृह्यन्ते । चशब्दे तावत्—देवदत्तः पचति च खादति च । वा—देवदत्तः पचति वा खादति वा । ह—देवदत्तः पचति ह खादति ह । अह—देवदत्तः पचत्यह खादत्यह । एव—देवदत्तः पचत्येव खादत्येव ।

'अगतेः' इत्येव—देवदत्तः प्रपचति च प्रखादति च । प्रथमस्यात्र तिङन्तस्य 'चवायोगे प्रथमे' (७।१।५९)ति निघातः प्रतिषिद्ध्यते एव । परं तु निहन्यते ।

**३६७३. चवायोगे प्रथमा ॥ ५९ ॥ ( ३९६६ )**

**'अगतेः' इति पूर्वसूत्रे चानुकृष्टमित्यत्र नानुवर्तते । च, वा—इत्येताभ्यां योगे प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति । गर्दभांश्च कालयति, वीणां च वादयति । गर्दभान्वा कालयति, वीणां वा वादयति ।**

**योगग्रहणं पूर्वाभ्यामपि योगे निघातप्रतिषेधो यथा स्यादिति ।**

**न्यासः**

मत्वाऽऽह—**चादयो नचवाहाहैवेत्यादि** । खादतिशब्दः पचतिशब्देन तुल्यस्वरः । **प्रथमस्यात्र तिङन्तस्येत्यादिना** द्वितीयमिह गतेरित्यस्य प्रत्युदाहरणमिति दर्शयति । चशब्दो गतेरित्यस्यानुकर्षणार्थः । अन्यच्चास्य प्रयोजनमुक्तमेव ॥ ५८ ॥

**चवायोगे प्रथमा ॥ प्रथमातिङ्विभक्तिरिति ।** एतेन प्रथमेति स्त्रीलिङ्गनिर्देशो विभक्त्यपेक्षः सूत्रे कृत इति दर्शयति । प्रथमात्वं तस्य पुनः प्रथममुच्चारणाद् वेदितव्यम् । **गर्दभांश्च कालयतीति** । 'कल विल क्षेपे' । चुरादिणिच् । चित्स्वरेण लकारेऽकार उदात्त इति मध्योदात्तमेतत् । द्वितीयं तु निहन्यत एव ।

**पदमञ्जरी**

'समुच्चयो विकल्पश्चानेकस्य धर्मः' इत्युत्तरसूत्रे वक्ष्यति, अतः **खादति चेत्यस्योपन्यासः** । न त्वस्य निघातप्रसङ्गः; नानावाक्यत्वात् । खादति हेत्यादेस्तु प्रक्रमाभेदायोपन्यासः ।

**परंतु निहन्यत एवेति** । प्रशब्दात्समानवाक्यगतात् पदात्परत्वात् ॥ ५८ ॥

**चवायोगे प्रथमा ॥ अगतेरिति । पूर्वसूत्र इत्यादि ।** अत एव पूर्वसूत्रे प्रत्युदाहरणावसर उक्तम्—प्रथमस्यात्र तिङन्तस्य चवायोगे प्रथमेति निघातः प्रतिषिध्यत एवेति । प्रथमेति स्त्रीलिङ्गस्य **निर्वाहमाह—प्रथमा तिङ्विभक्तिरिति ।**

**भावबोधिनी**

पचति वा खादति वा । ह—देवदत्तः पचति ह खादति ह । अह देवदत्तः पचति अह, खादति अह । एव—देवदत्तः पचति एव खादति एव । [ इनमें प्राप्त तिङन्त के अनुदात्तत्व का प्रतिषेध हो जाता है । ]

गति संज्ञक से भिन्न से परे का—इसका क्या फल है ? देवदत्तः प्रपचति च प्रखादति च । [ यहाँ 'प्र' इस गतिसंज्ञक से परे है । अतः तिङन्त के निघात का प्रतिषेध न होकर निघात ही होता है । ] यहाँ प्रथम तिङन्त का 'च वा योगे प्रथमा' ( ८।१।५९ ) इससे निघात का प्रतिषेध होता है । परन्तु जो बाद वाला तिङन्त है उसका निघात होता ही है, [ प्रतिषेध नहीं होता है क्योंकि वह गतिसंज्ञक से भिन्न से परे न होकर गतिसंज्ञक से ही परे है । ] ॥ ५८ ॥

'अगतेः' ( गतिसंज्ञक से भिन्न से परे ) यह जो पूर्ववर्ती सूत्र में अनुवृत्त होता है, इस सूत्र में अनुवृत्त नहीं होता है । 'च' और 'वा'—इनके योग में प्रथम ( पहली ) तिङ् विभक्ति ( अर्थात् तिङन्त पद ) अनुदात्त नहीं होता है । [ अतः इसका लक्ष्य वहीं है जहाँ दो तिङन्त हैं । उनमें पहले का अनुदात्त प्रतिषिद्ध होता है किन्तु दूसरे का तो 'तिङ्ङतिङः' से अनुदात्त होता ही है । ] उदा० गर्दभान् च कालयति, वीणां च वादयति । गर्दभान् वा कालयति, वीणां वा वादयति । [ इनमें प्रथम तिङन्त के अनुदात्तत्व का प्रतिषेध होता है किन्तु द्वितीय का तो अनुदात्तत्व होता ही है । ]

'योगे' इसका ग्रहण इसलिए है कि पूर्ववर्ती भी इन 'च' तथा 'वा' के योग में प्रतिषेध हो सके । [ यदि 'योगे' न रहता तो सप्तमी निर्देश में परवर्ती रहने पर ही प्रतिषेध हो पाता है । ]

प्रथमाग्रहणम्—द्वितीयादेस्तिङन्तस्य मा भूदिति ।

चवायोगो हि द्विसमुच्चये विकल्पे च सति भवति, स चानेकस्य धर्म इति ॥

**३६७४. हेति क्षियायाम् ॥ ६० ॥ ( ३९६७ )**

'ह' इत्यनेन युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति क्षियायां गम्यमानायाम् । क्षिया = धर्मव्यतिक्रमः आचारभेदः । स्वयं ह रथेन याति३ उपाध्यायं पदातिं गमयति । स्वयं हौदनं भुङ्क्ते३ उपाध्यायं सक्तून्पाययति । प्रथमस्य तिङन्तस्यात्र निघातः प्रतिषिध्यते । 'क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्' ( ८।२।१०४ ) इति च प्लुतो भवति ॥

**न्यासः**

अथ योगग्रहणं किमर्थम्, न च वयोरित्येव सप्तम्या निर्देशः क्रियेत, यथा 'चादिषु च' ? इत्यत आह—**योगग्रहणमित्यादि** । यथा 'चादिषु च' इति सप्तम्या निर्देशे सति परैरेव चादिभिर्योगे प्रतिषेधो भवति, न पूर्वैः; तथेहापि पराभ्यामेव चवाभ्यां योगे स्यात्, न पूर्वाभ्याम् । ताभ्यामपि योगे यथा स्यादित्येवमर्थं योगग्रहणम् । यदि तु चवाभ्यामिति तृतीयया निर्देशः क्रियते, विनापि योगग्रहणेन पूर्वाभ्यामपि योगे स्यादेव प्रतिषेधः ? सन्देहपरिहारार्थं तु तथा न कृतम्, चवाभ्यामित्युच्यमाने सन्देहः स्यात्—किमयं तृतीयया निर्देशः ? उत पञ्चम्येति ? । पञ्चम्या निर्देशे को दोषः स्यात् ? परभूताभ्यां योगे न स्यात् ।

कथं पुनर्द्वितीयादितिङन्तस्य चवाभ्यां योगः, यत्तन्निवृत्त्यर्थं प्रथमाग्रहणं क्रियेत ? इत्यत आह—**चवायोगो हीत्यादि** । इह च योगः समुच्चये सति भवति, वायोगस्तु विकल्पे । स च समुच्चयो विकल्पश्चानेकस्य धर्मः, द्वित्वादिवत् । अतो यत्र तौ समुच्चयविकल्पौ, तत्रावश्यमनेकस्य द्वितीयादेशः सन्निधानेन भवितव्यम् । तस्मात् तन्निवृत्त्यर्थं प्रथमाग्रहणम् ॥ ५९ ॥

**हेति क्षियायाम् ॥ आचारभेद इति** । शिष्टाचारव्यतिक्रम इत्यर्थः । **यातीति** । धातुस्वरेणाद्युदात्तः । इतिकरणेन हशब्दमात्रस्य निघातकारणत्वमाख्यायते । असति हि तस्मिन् क्षिया हशब्दस्योपाधिर्विज्ञायेत, तिङन्तस्य वा । तथा च यदा हशब्दस्तिङन्तं वा क्षियायां न प्रयुज्यते, तदा निघातप्रतिषेधो न स्यात् । इतिकरणे तु सति स्वरूपमात्रप्रधानो हशब्दो निघातस्य कारणं भवतीति असत्यामपि हशब्दस्य तिङन्तस्य वा क्षियायां वृत्तौ निघातप्रतिषेधः सिद्धो भवति ॥ ६० ॥

**पदमञ्जरी**

प्रथमाग्रहणव्यावर्त्यस्य द्वितीयादेः सम्भवमाह—**चवायोगो हीति** ॥ ५९ ॥

**हेति क्षियायाम्** । आचारभेदः = आचारोल्लङ्घनम् । उदाहरणे—उपाध्याये पदातौ गच्छति शिष्यस्य रथेन गमनं प्रतिषिद्धम्—इत्याचारभेदः ॥ ६० ॥

**भावबोधिनी**

प्रथमा का ग्रहण—द्वितीय आदि तिङन्त का प्रतिषेध न होने लग जाय—इसलिये है ।

'च' तथा 'वा' का योग दो के समुच्चय में अथवा विकल्प में होता है और यह ( समुच्चय और विकल्प) अनेक में रहने वाला धर्म है । [ उसमें केवल प्रथम तिङन्त के निषेधार्थ ही यह सूत्र है । द्वितीय आदि में यथाप्राप्त निघात होने में बाधा नहीं है । ] ॥ ५९ ॥

क्षिया गम्यमान रहने पर 'ह' इससे युक्त प्रथम तिङ् विभक्ति ( तिङन्त पद ) अनुदात्त नहीं होती है । क्षिया = धर्म का व्यतिक्रम, आचार का भेद ( शिष्टाचार का उल्लङ्घन ) । उदा० स्वयं ह रथेन याति ३ उपाध्यायं पदातिं गमयति । [ स्वयं तो रथ से चलता है और उपाध्याय जी को पैदल चलाता है । ] स्वयं ह ओदनं भुङ्क्ते, उपाध्यायं सक्तून् पाययति । [ स्वयं तो भात ( चावल ) खाता है और उपाध्याय को सत्तू पिलवाता है । ] इनमें प्रथम तिङन्त के निघात का प्रतिषेध होता है । किन्तु द्वितीय का निघात होता ही है । ] तथा 'क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्' ( ८।२।१०४ ) सूत्र से प्लुत होता है । [ उक्त उदाहरणों में शिष्टाचार का उल्लङ्घन होता है । अतः क्षिया गम्यमान मानकर प्रथम तिङन्त के निघात का प्रतिषेध तथा प्लुत किया जाता है । ] ॥ ६० ॥

**३६७५. अहेति विनियोगे च ॥ ६१ ॥ ( ३९६८ )**

'अह' इत्यनेन युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति विनियोगे गम्यमाने। चशब्दात् क्षियायां च। नानाप्रयोजनो नियोगः = विनियोगः। त्वमह ग्रामं गच्छ। त्वमहारण्यं गच्छ। क्षियायाम्—स्वयमह रथेन याति३ उपाध्यायं पदातिं गमयति। स्वयमहौदनं भुङ्क्ते३ उपाध्यायं सक्तून्पाययति। पूर्ववन्निघातप्रतिषेधः, प्लुतश्च ॥

**३६७६. चाहलोप एवेत्यवधारणम् ॥ ६२ ॥ ( ३९६९ )**

चलोपे अहलोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति। एवेत्येतच्चेदवधारणार्थं प्रयुज्यते, क्व चास्य लोपः? यत्रार्थो गम्यते, न च प्रयुज्यते, तत्र लोपः। तत्र चशब्दः समुच्चयार्थः, अहशब्दः केवलार्थ इति—समानकर्तृके चलोपः, नानाकर्तृके अहलोपः।

**न्यासः**

**अहेति विनियोगे च ॥** चकारेण क्षियायामित्येतदनुकृष्यते। **नानाप्रयोजन इति।** अनेकप्रयोजन इत्यर्थः। **नियोग इति।** प्रेषणम्, व्यापारणमित्यर्थः। इतिकरणस्य पूर्ववदेव प्रयोजनम् ॥ ६१ ॥

**चाहलोप एवेत्यवधारणम् ॥ क्व चास्य लोप इति।** 'लोपे विभाषा' इत्यत्र योऽभिप्रायः प्रष्टुरुक्तः स इहापि वेदितव्यः। **यत्रार्थो गम्यत इत्यादि।** अत्रापि यस्तत्राभिप्राय इतरस्याभिहितः स एव द्रष्टव्यः। कः पुनरर्थस्तयोः प्रयुक्तयोरपि गम्यते? इत्याह—**तत्रेत्यादि।** क्व पुनर्विषये चलोपः? क्व वाहलोपः? इत्याह—**समानकर्तृक इत्यादि।** यस्मिन् व्यापारविशेषे समान एकः कर्ता स समानकर्तृकः। **समानकर्तृके चलोपः, नानाकर्तृकेऽहलोप इति।** नाना कर्ता यस्मिन् स नानाकर्तृकः।

**पदमञ्जरी**

**अहेति विनियोगे च ॥ नानाप्रयोजन इति।** अनेकप्रयोजनो नियोगः=प्रेषणम्। **प्लुतश्चेति।** स पुनः क्षियायां क्षियाहेतुकः, विनियोगे प्रैषहेतुकः ॥ ६१ ॥

**चाहलोप एवेत्यवधारणम् ॥** उदाहरणे चलोपं दर्शयति—**ग्रामं चेति।** एवमहलोपेऽपि द्रष्टव्यम्। तत्र प्रथमे ग्रामकर्मकस्यारण्यकर्मकस्य च देवदत्त एव कर्तेति समानकर्तृकत्वम्, द्वितीये तु विपर्ययान्नाना-

**भावबोधिनी**

विनियोग गम्यमान रहने पर 'अह' इससे युक्त प्रथम तिङ् विभक्ति ( तिङन्त पद ) अनुदात्त नहीं होती है। 'च' शब्द के कारण क्षिया के भी गम्यमान रहने पर अनुदात्त नहीं होता है। अनेक प्रयोजनों वाली आज्ञा=विनियोग है। उदा० त्वम् अह ग्रामं गच्छ। त्वम् अह अरण्यं गच्छ [ यहाँ प्रथम तिङन्त का अनुदात्त नहीं होता है। ] क्षिया का उदा० स्वयम् अह रथेन याति ३ उपाध्यायं पदातिं गमयति। स्वयम् अह ओदनं भुङ्क्ते ३ उपाध्यायं सक्तून् पाययति। यहाँ पूर्व के समान [ प्रथम तिङन्त के ] निघात का प्रतिषेध होता है और प्लुत होता है ॥ ६१ ॥

चलोप तथा अहलोप रहने पर प्रथम तिङ् विभक्ति ( तिङन्त ) पद अनुदात्त नहीं होता है यदि 'एव' अवधारण अर्थ में प्रयुक्त हो तो। तो कहाँ इसका लोप होता है? जहाँ अर्थ तो प्रतीत होता है किन्तु 'एव' का प्रयोग नहीं किया जाता है, वहाँ लोप माना जाता है। इनमें 'च' शब्द समुच्चय अर्थ वाला है और 'अह' शब्द 'केवल' अर्थ वाला है, समान कर्ता वाले प्रयोग में च लोप तथा अनेक कर्ता वाले प्रयोग में 'अह' का लोप [ समझना चाहिए। ]

चलोप का उदा० देवदत्त एव ग्रामं गच्छतु, स देवदत्त एव अरण्यं गच्छतु। ( देवदत्त ही गाँव जाये, वही देवदत्त अरण्य में भी जाय। ) गाँव तथा अरण्य में जाये—यह अर्थ है। अहलोप का उदा० देवदत्त एव ग्रामं गच्छतु, यज्ञदत्त एव अरण्यं गच्छतु। ( देवदत्त ही गाँव जावे, यज्ञदत्त ही अरण्य जाये। ) केवल गाँव तथा केवल अरण्य—यह अर्थ है। [ प्रथम वाक्य में ग्रामकर्मक तथा अरण्यकर्मक दोनों गमन क्रियाओं का एक ही देवदत्त कर्त्ता है। और समुच्चय अर्थ गम्यमान होने से चलोप है। देवदत्त ही गाँव जाये और यज्ञदत्त अरण्य जाये—यहाँ दो

चलोपे—देवदत्त एव ग्रामं गच्छंतु, स देवदत्त एवारण्यं गच्छतु । ग्रामं चारण्यं च गच्छत्वित्यर्थः । अहलोपे—देवदत्त एव ग्रामं गच्छंतु यज्ञदत्त एवारण्यं गच्छतु । ग्रामं केवलमरण्यं केवलमित्यर्थः ।

अवधारणमिति किम् ? देवदत्तः क्वेव भोक्ष्यते । अनवक्लृप्तावयमेवशब्दः । न क्वचिद्भोक्ष्यत इत्यर्थः । 'एवे चानियोगे' ( का० वा० ) इति पररूपम् ॥

**३६७७. चादिलोपे विभाषा ॥ ६३ ॥ ( ३९७० )**

चादयः 'नचवाहाहैवयुक्ते' ( ८।१।२४ ) इति सूत्रनिर्दिष्टा गृह्यन्ते, तेषां लोपे प्रथमा तिङ्विभक्ति-र्नानुदात्ता भवति विभाषा । चलोपे—शुक्ला व्रीहयो भवन्तिं, भवन्ति । श्वेता गा आज्याय दुहन्तिं दुहन्ति । भवन्तीतेत्यद्विकल्पेन न निहन्यते । वालोपे—व्रीहिभिर्यजे॑त, यजेत । यवैर्यजेत । यजे॑त ।

एवं शेषेष्वपि यथादर्शनमुदाहार्यम् ॥

**न्यासः**

देवदत्त एव ग्रामं इच्छतु । स देवदत्त एवारण्यं गच्छत्विति । अत्र ग्रामकर्मकमरण्यकर्मकञ्च गमनं यत् तस्य देवदत्त एव कर्तेति तत् समानकर्तृकम् चार्थं च दर्शयितुमाह—ग्रामं चेत्यादि । अत्र हि देवदत्त एवारण्यं गच्छतु देवदत्त एव ग्रामं गच्छत्विति देवदत्तस्यैव नियोज्यस्य गन्तुर्ग्राम एव गन्तव्यतयोप-दिश्यते, यज्ञदत्तस्य त्वरण्यमेव केवलम् । तेनासत्यप्यहशब्दस्य प्रयोगे तदर्थो गम्यते—ग्रामं केवलं देवदत्तो गच्छतु, अरण्यं केवलं यज्ञदत्तो गच्छत्विति ।

अनवक्लृप्ताविति । असम्भावनायामित्यर्थः । यो हि देवदत्तस्य भोजनं न क्वचित् सम्भावयति स एव प्रयुङ्क्ते—देवदत्त क्वेव भोक्ष्यस इति । पररूपत्वम् ॥ ६२ ॥

चादिलोपे विभाषा ॥ सूत्रनिर्दिष्टा गृह्यन्त इति । पूर्वतः प्रत्यासत्तेः । अत्र चवालोपे चवायोगे प्रथमेति प्राप्ते विभाषा, परिशेषाणामप्राप्ते । भवन्तीति । पक्षे प्रत्ययस्वरेण मध्योदात्ताः । यजेतेति । अत्र पक्षेऽदुपदेशाल्लसार्वधातुकस्यानुदात्तत्वे कृते धातोरुदात्तत्वम् ॥ ६३ ॥

**पदमञ्जरी**

कर्तृकता द्रष्टव्या । अनवक्लृप्तिः = असम्भवनम् । यो हि देवदत्तस्य भोजनं क्वचिदपि न सम्भावयति, स एवं प्रयुङ्क्ते—क्वेव भोक्ष्यस इति । 'एवे चानियोगे' इति पररूपत्वम् । क्वचित्तु वृत्तावेवैतत् पठ्यते ॥ ६२ ॥

चादिलोपे विभाषा ॥ पूर्वो योग एवशब्दप्रयोगे नित्यार्थः ॥ ६३ ॥

**भावबोधिनी**

गमन क्रियाओं के दो कर्ता ( देवदत्त-यज्ञदत्त ) हैं । अवधारण अर्थ गम्यमान है क्योंकि 'अह' का प्रयोग नहीं है । अतः प्रथम तिङन्त के निघात का प्रतिषेध होता है । ]

अवधारण अर्थ में—इसका क्या फल है ? देवदत्तः क्वेव भोक्ष्यते । ( देवदत्त कहाँ खायेगा ? ) यहाँ अनवक्लृप्ति = असम्भावना में 'एव' शब्द का प्रयोग है । 'कहीं न कहीं खायेगा'—यह अर्थ है । 'एवे चानियोगे' इस वार्तिक से पररूप ( क्व + एव = क्वेव में ) होता है ॥ ६२ ॥

च आदि शब्द 'न चवाहाहैव युक्ते' इस सूत्र में निर्दिष्टों का ग्रहण होता है । इनका लोप = अप्रयोग रहने पर प्रथम तिङ् विभक्ति विकल्प से अनुदात्त नहीं होती है । च लोप में उदा० शुक्ला व्रीहयो भवति । श्वेता गाः आज्याय दुहन्ति । [ यहाँ दो वाक्य हैं किन्तु समुच्चयार्थक च का प्रयोग नहीं किया गया है । ] 'भवन्ति' इसका विकल्प से अनुदात्त नहीं होता है । वालोप में उदा० व्रीहिभिर्यजेत । यवैर्यजेत । [ यहाँ प्रथम 'यजेत' का विकल्प से निघात नहीं होता है । ]

इसी प्रकार शेषों ( अह ह एव ) में भी उपर्युक्त प्रकार से उदाहरण देने चाहिए ॥ ६३ ॥

**३६७८. वैवावेति च च्छन्दसि ॥ ६४ ॥ ( ३६७१ )**

'वै', 'वाव'—इत्येताभ्यां युक्ता प्रथमा तिङ्विभक्तिर्विभाषा नानुदात्ता भवति छन्दसि विषये। अहर्वै देवानामासीत्। रात्रिरसुराणामासीत् ( तै० सं० १।५।९।२ ) बृहस्पतिर्वै देवानां पुरोहित आसीत्। शण्डामर्कावसुराणाम् ( तै० सं० ६।४।१०।१ )। वाव—अयं वाव हस्त आसीत्। नेतर आसीत्।

**३६७९. एकान्याभ्यां समर्थाभ्याम् ॥ ६५ ॥ ( ३६७२ )**

'एक', 'अन्य'—इत्येताभ्यां समर्थाभ्यां युक्ता प्रथमा तिङ्विभक्तिर्विभाषा नानुदात्ता भवति छन्दसि विषये। प्रजामेका जिन्वति। ऊर्जमेका रक्षति। ( अ० वे० ८।९।१३ ) जिन्वतीत्येतत्पक्षे न निहन्यते। तयोरन्यः पिप्पलं स्वाद्वत्ति। अनश्नन्नन्यो अभिचाकशीति ( ऋ० १।१६४।२० )। अत्तीत्येतत्पक्षे न निहन्यते।

**न्यासः**

**वैवावेति च च्छन्दसि ॥ आसीदिति।** 'अस भुवि', लङ्, अदादित्वाच्छपो लुक्, 'अस्तिसिचोऽपृक्ते' इति आट्, स चोदात्त इत्याद्युदात्तमेतत्। इतिकरणस्य पूर्वोक्तमेव प्रयोजनम्। चकारोऽनुक्तसमुच्चयार्थः। या द्विः पचत्विह तस्याः संवत्सरस्य सस्यं पच्यते द्विरित्यनेन युक्ता प्रथमा तिङ्विभक्तिः पचत्विति वा न निहन्यते ॥ ६४ ॥

**एकान्याभ्यां समर्थाभ्याम् ॥ समर्थाभ्यामिति।** नायमस्यार्थः—तिङन्तेन संगताभ्यामिति; अन्यथा ह्यस्योपदानमनर्थकमेव स्यात्, 'चवायोगे प्रथमा' इत्यतो योगग्रहणानुवृत्तेरेवास्यार्थस्य लब्धत्वात्। तस्मात् समानार्थाभ्यामित्यस्यायमर्थः। सा च समानार्थता तिङन्तापेक्षया भवतीति परम्परापेक्षया वेदितव्या। **एका जिन्वतीति।** जयतेर्लट्, 'व्यत्ययो बहुलम्' इति श्नुः, 'बहुलं छन्दसि' इति झेरदादेशः, 'हुश्नुवोः सार्वधातुके' इति यणादेशः। अनिघातपक्षे सार्वधातुकस्वरेण मध्योदात्तमेतत्। सतिशिष्टादपि हि विकरणस्वरात् सार्वधातुकस्वरो बलीयानिष्यते। **अत्तीति।** अदेः 'खरि च' इति चर्त्वम्। अनिघातपक्षे धातुस्वरेणाद्युदात्तमेतत्। **चाकशीतीति।** 'काशृ दीप्तौ'। अस्य यङ्लुगन्तस्य रूपमेतत्।

**पदमञ्जरी**

**वैवावेति च छन्दसि ॥** वै स्फुटार्थे, क्षमायां च। **वाव** प्रसिद्धौ, स्फुटार्थे च ॥ ६४ ॥

**एकान्याभ्यां समर्थाभ्याम् ॥** समौ तुल्यावर्थौ ययोस्तौ समर्थौ, शकन्ध्वादिषु दर्शनात्पररूपत्वम्। निपातनाद्वाऽन्तलोपः। परस्परं समानार्थता न; तिङन्तेन असम्भवात्। तिङन्तेन सङ्गताभ्यामित्ययं त्वर्थो न भवति, 'चवायोगे प्रथमा' इत्यतो योगग्रहणानुवृत्तेरेवास्यार्थस्य सिद्धत्वात्। **जिन्वतीति ॥** जिविः प्रीणनार्थः, इदित्वान्नुम्, लट्तिप्शपः। **चाकशीतीति।** काशिना समानार्थः कशिः प्रकृत्यन्तरमस्तीत्युक्तम्, तस्यैतद्यङ्लुकि रूपम्।

**भावबोधिनी**

'वै' तथा 'वाव' इनसे युक्त प्रथम तिङ् विभक्ति ( तिङन्त पद ) वेदविषय में विकल्प से अनुदात्त नहीं होती है। उदा० अहर्वै देवानामासीत्। रात्रिरसुराणामासीत्। बृहस्पतिर्वै देवानां पुरोहित आसीत्। शण्डामर्कावसुराणाम्। [ यहाँ 'वै' से युक्त प्रथम तिङन्त विकल्प से अनुदात्त नहीं होता है। ] वाव का उदा० अयं वाव हस्त आसीत्। नेतर आसीत्। [ यहाँ प्रथम का विकल्प से निघात नहीं होता है। ] ॥ ६४ ॥

'एक' और 'अन्य'—इन समर्थ = समानार्थकों से युक्त प्रथम तिङ्विभक्ति ( तिङन्त पद ) वेदविषय में विकल्प से अनुदात्त नहीं होती है। उदा० प्रजामेका जिन्वति। ऊर्जमेका रक्षति। यहाँ 'जिवन्ति' इसका पक्ष में अनुदात्त नहीं होता है। अन्य का उदा० "तयोरन्यः पिप्पलं स्वादु अत्ति। अनश्नन्नन्यो अभिचाकशीति।" यहाँ 'अत्ति' यह पक्ष में अनुदात्त नहीं होता है।

समर्थाभ्यामिति किम् ? एको देवानुपातिष्ठत् । एक इति संख्यापदमेतद् अन्यार्थे न वर्त्तते । एकशब्दस्य व्यवस्थार्थं च समर्थग्रहणम्; व्यभिचारित्वात्तस्य ॥

**३६८०. यद्वृत्तान्नित्यम् ॥ ६६ ॥ ( ३९७३ )**

'प्रथमा', 'छन्दसि' इति निवृत्तम् । निघातप्रतिषेध इत्येव । यदो वृत्तं यद्वृत्तम्, यत्र पदे यच्छब्दो वर्तते तत्सर्वं यद्वृत्तम् । इह वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात् । डतरडतमौ च प्रत्ययौ इत्येतन्नाश्रीयते ।

**न्यासः**

**उपातिष्ठदिति ।** तिष्ठतेर्लङ्, पाघ्रादिसूत्रेण तिष्ठादेशः । **एक इति संख्यापदमेतदिति ।** अनेन प्रत्युदाहरण एकशब्दस्यान्यशब्देनासमानार्थतां दर्शयति । किं पुनः कारणमन्यशब्देनासमानार्थेन योगेन प्रत्युदाहरणं न दर्शितम् ? इत्याह—**एकशब्दस्य व्यवस्थार्थं चेत्यादि ।** चशब्दोऽवधारणार्थः । अनेकार्थसम्भवेऽर्थान्तराद् व्यवच्छिन्नस्यैकत्रैवार्थे व्यवस्थानं व्यवस्था । एकशब्दस्य व्यवस्थार्थमेव समर्थग्रहणम्, नान्यशब्दस्य व्यवस्थार्थम् । न हि तस्यानेकार्थः सम्भवति । तस्मादेकशब्दस्य व्यवस्थार्थं समर्थग्रहणं कृतम् । तेनैवैकशब्देनासमर्थेन योगे युक्तं प्रत्युदाहरणमुपदर्शयितुम्, नान्यशब्देनेत्यभिप्रायः । कस्मात् पुनरेकशब्दव्यवस्थार्थमेव समर्थग्रहणं कृतम् ? इत्याह—**व्यभिचारित्वात् तस्येति ।** एकशब्दो हि यत्रार्थेऽन्यत्रादौ दृष्टस्तं व्यभिचरति । तथा हि—स क्वचिदन्यशब्दस्यार्थे दृश्यते, क्वचित् प्राथम्ये, क्वचित् संख्यायाम्, तस्मादसौ व्यभिचारी । अनवस्थित इत्यर्थः । तद्व्यवस्थार्थं समर्थग्रहणं युक्तम्, नान्यशब्दव्यवस्थार्थम्; तस्याव्यभिचारित्वात् । न ह्यन्यशब्दो यत्रार्थे दृष्टस्ततोऽन्यत्र वर्तते । ननु च व्यवस्थाया एतत् फलम्—अन्यशब्दसमानार्थस्यैकशब्दस्य ग्रहणं यथा स्यादिति, एतच्चान्तरेणापि व्यवस्थाकारणं समर्थग्रहणमन्यशब्दसाहचर्यादेव लभ्यते, तदनर्थकं समर्थग्रहणम् ? नैतदस्ति; 'निपातैर्यद्यदि' इत्यादौ सूत्रे निपातग्रहणेन ज्ञापितम्—साहचर्यमिह प्रकरणे व्यवस्थाकारणं न भवतीति ॥ ६५ ॥

**यद्वृत्तान्नित्यम् ॥ प्रथमा छन्दसीति च निवृत्तमिति ।** तयोर्विभाषाग्रहणेन सम्बद्धत्वात् । तस्य चेह नित्यग्रहणेन निर्वर्तितत्वात् । अतस्तन्निवृत्तौ तत्सम्बद्धयोरपि निवृत्तिर्भवति । वृत्तशब्दोऽयमिहाधिकरणसाधनम्—वर्तते तस्मिन्निति वृत्तम्; वृतेरकर्मकत्वात् 'क्तोऽधिकरणे च' इत्यादिनाधिकरणे क्तः ।

**पदमञ्जरी**

**एकशब्दस्य व्यवस्थार्थे चेति ।** अतस्तस्यैव प्रत्युदाहरणं दर्शितम्, नान्यशब्दस्येति भावः । **व्यभिचारित्वात्तस्येति ।** एकशब्दो ह्यन्यार्थं व्यभिचरतीति । नानार्थो ह्ययमिति हि 'एको गोत्रे' इत्यत्र दर्शितम् । तत्रासति समर्थग्रहणेऽन्यशब्देन भिन्नार्थस्यापि ग्रहणप्रसङ्गः । न च साहचर्यमत्र प्रकरणे व्यवस्थापकमिति 'निपातैर्यद्यदिहन्त' इत्यत्रावोचाम ॥ ६५ ॥

**यद्वृत्तान्नित्यम् ॥** 'किंवृत्तं च चिदुत्तरम्' इत्यत्र किंवृत्तशब्दस्य दर्शिता व्युत्पत्तिरिहानुगन्तव्या । **एतन्नाश्रीयत इति ।** तदाश्रयणे हि यद्र्यङ्, यदीयम्, यादायनिरित्यादिभ्यः परस्य न स्यात् । **जुहुम इति ।**

**भावबोधिनी**

समर्थ = समान अर्थ वाले—इसका क्या फल है ? एको देवानुपतिष्ठत् । यहाँ 'एक' यह संख्यावाची पद 'अन्य' के अर्थ में विद्यमान नहीं है । एक शब्द की व्यवस्था के लिये 'समर्थ' का ग्रहण है क्योंकि इसका व्यभिचार होता है । [ एक शब्द का प्रयोग अनेक अर्थों में होता है । अतः इसी के लिये समर्थ = समानार्थक' विशेषण की अपेक्षा है 'अन्य' शब्द का अर्थ तो निश्चित है । ] ॥ ६५ ॥

'प्रथमा' और 'छन्दसि' इनकी निवृत्ति हो जाती है । 'निघात-प्रतिषेध' इसी की अनुवृत्ति होती है । यत् का अधिकरण = यद्वृत्त है, जिस पद में 'यत्' शब्द हैं वह सब 'यद्वृत्त' है । यहाँ 'वृत्त' शब्द से उस ( अधिकरण ) विभक्त्यन्त का ग्रहण समझना चाहिए । डतर और डतम प्रत्यय हैं इनको यह सूत्र आश्रित नहीं करता है । [ भाव यह है कि डतर, डतम ये प्रत्यय भी विभक्ति संज्ञा वाले हैं । किन्तु इनका यहाँ ग्रहण नहीं होता है ।

तस्माद्यद्वृत्तादुत्तरं तिङन्तं नानुदात्तं भवति नित्यम्। यो भुङ्क्ते। यं भोजयति। येन भुङ्क्ते। यस्मै ददाति। यत्कामास्ते जुहुमः (१०।१२१।१०) यद्रिचङ्‌ वायुर्वाति (तै० सं० ५।५।१।१)। यद्वायुः पवते।

पञ्चमीनिर्देशेऽप्यत्र व्यवहिते कार्यमिष्यते।

❀ यथाकाम्ये' वेति वक्तव्यम् ❀ (म० भा०) यत्र क्वचन यजन्ते'॥

## ३६८१. पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः[2] ॥ ६७ ॥ (३६७४)

पूजनेभ्यः काष्ठादिभ्य उत्तरपदं पूजितमनुदात्तं भवति। काष्ठ—काष्ठाध्यायकः[2]। काष्ठाभिरूपकः।

**न्यासः**

तत्पुनरधिकरणं पदाधिकारात् पदमेव विज्ञायते, इत्याह—**यत्र पदे यच्छब्दो वर्तत इत्यादि**। यदि यद्वृत्तमित्यधिकरणे क्तः, तर्हि 'अधिकरणवाचिना च' इति प्रतिषेधात् षष्ठीसमासो न प्रवर्तते? अत एव निपातनात् समास इत्यदोषः। **एतन्नाश्रीयत इति**। यद्येतदाश्रीयेत, यत्कामास्ते जुहुम इत्यादौ न स्यादिति भावः। कथं पुनरत्र परिभाषा शक्या नाश्रयितुम्? वक्तव्यमेवैतद्—इह परिभाषा न भवतीति। **ददाति, जुहुम इति**। 'अभ्यस्तानामादिः' इत्युभयमप्येतदाद्युदात्तम्। **यत्कामा इति**। यस्मिन् काम एषामिति बहुव्रीहिः। **यद्रचङिति पदम्**। यदञ्चतीति 'ऋत्विक्' इत्यादिना क्विन्, 'अनिदिताम्' इत्यनुनासिकलोपः, हल्ङ्यादिलोपः, 'उगिदचाम्' इति नुम्, 'संयोगान्तलोपः', 'विष्वग्देवयोः' इत्यद्र्यादेशः, 'क्विन्प्रत्ययस्य कुः'। **वातीति**। 'वा गतिगन्धनयोः', अदादित्वाच्छपो लुक्। धातुस्वरेणाद्युदात्तमेतत्। **पवत इति**। पूङ् पवने। एतदपि पूर्ववदाद्युदात्तम्। अत्र ङित्त्वाल्लसार्वधातुकस्यानुदात्तत्वे कृते धातुस्वर एव भवति।

ननु च यद्वृदिति पञ्चमीनिर्देशोऽयम्, यत्कामास्ते जुहुमः—इत्यादिषु चोदाहरणेषु त इत्यादिना पदेन व्यवधानम्, अतो निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादिह निघातप्रतिषेधेन भवितव्यम्? इत्याह—**पञ्चमीनिर्देशेऽप्यत्र व्यवहितेऽपि कार्यमिष्यत इति**। एतच्चोत्तरसूत्रे ज्ञापयिष्यते॥ ६६॥

**पूजानात् पूजितमनुदात्तं काष्ठादिभ्यः॥ पूजनादिति**। सुपां सुपो भवन्तीति बहुवचनस्य स्थान एकवचनम्, अत एवाह—**पूजनवचनेभ्य इति**। **उत्तरपदमिति**। सुबन्तं वेदितव्यम्। ननु तिङिति वर्तते?

**पदमञ्जरी**

प्रत्ययस्वरेणान्तोदात्तमेतत्, 'अभ्यस्तानामादिः' 'भीह्रीभृहुमद' इति चोभयत्रापि अचीति वर्त्तते। **यद्रचङिति**। यदञ्चति, क्विन्, 'विष्वग्देवयोश्च' इति टेरद्र्यादेशः।

कथं पुनः पञ्चमीनिर्देशे सति यत्कामास्ते, यद्र्यङ् वायुरित्यादौ व्यवधाने भवति? अत आह—**पञ्चमीनिर्देशेऽप्यत्रेति**। एतच्चोत्तरसूत्रे ज्ञापयिष्यते। **यथाकाम्ये वेति**। यथाकाम्यम् = यथेच्छप्रवृत्तिः, देशकालानपेक्षा, तत्र गम्यमाने वा निघातप्रतिषेधः, यत्र क्वचन यजते॥ ६६॥

**पूजानात् पूजितमनुदात्तं काष्ठादिभ्यः॥** 'काष्ठादिभ्यः' इति वार्तिके दृष्टं सूत्रावयवत्वेन पठित-

**भावबोधिनी**

अतः 'कतरः पचति' आदि में इसकी प्रवृत्ति नहीं होती है।] इस कारण यद्वृत्त से उत्तरवर्ती तिङन्त नित्य अनुदात्त नहीं होता है। उदा० यो भुङ्क्ते। यो भोजयति। यं भोजयति। येन भुङ्क्ते। यस्मै ददाति। यत्कामास्ते जुहुमः। यद्‌चङ् वायुर्वाति। यद्वायुः पवते। [इन सभी में विभक्त्यन्त 'यद्' से परे तिङन्त का अनुदात्त प्राप्त होता है। इसका निषेध हो जाता है।

पञ्चम्यन्त का निर्देश (यद्वृत्तात्) होने पर भी यहां व्यवहित में यह कार्य इष्ट है।

❀ यथाकाम्य = मनचाही प्रवृत्ति की प्रतीति में विकल्प से निषेध करना चाहिए। ❀ यत्र क्वचन यजन्ते। [निषेध और निघात दोनों होते है।]॥ ६६॥

**विमर्श**—पाणिनि का सूत्र केवल 'पूजनात् पूजितमनुदात्तम्' इतना है। 'काष्ठादिभ्यः' इतना अंश वार्तिक का जोड़कर सूत्र में पढ़ा जाता है। देखें—महाभाष्य, पदमञ्जरी और तत्त्वबोधिनी।

पूजनवाचक काष्ठा आदि शब्दों से उत्तरवर्ती पूजितवाचक पद अनुदात्त होता है। उदा० काष्ठा – काष्ठा-

१–१. एकस्मिन्पुस्तके नास्ति। २. 'काष्ठादिभ्यः' इत्ययमंशो वार्तिकस्य सूत्रे संयोजितः।

दारुण—दारुणाध्यापकः। दारुणाभिरूपकः। असमातापुत्र—अमातापुत्राध्यापकः। अयुत—अयुताभिरूपकः। अयुताध्यापकः। अद्भुत—अद्भुताध्यापकः। अनुक्त—अनुक्ताध्यापकः। भृश—भृशाध्यापकः। घोर—घोराध्यापकः। परम—परमाध्यापकः। सु—स्वध्यापकः। अति—अत्यध्यापकः[1]।

❀ मलोपश्च ❀। इति वार्त्तिककारमतम्। मयूरव्यंसकादित्वात् समासः, समासे चैतदनुदात्तत्वम्।

**न्यासः**

सत्यमेतत्; उत्तरत्र तिङिति वचनादिह सुबन्तस्य ग्रहणं विज्ञायते। अपि च वक्ष्यत्येतद्—इहैव समासे चैतदनुदात्तत्वमिति। समासश्च काष्ठादीनां सुबन्तेनैव सम्भवति, न तिङन्तेनेति युक्तमिह सुबन्तस्यैव पदस्य ग्रहणम्। सर्व एते काष्ठादयोऽद्भुतपर्यायाः पूजनवचना भवन्ति। अद्भुतं योऽधीते स काष्ठाध्यायक इत्युच्यते[2]। एवं दारुणादिषु वेदितव्यम्।

इह सर्व एवैते काष्ठादयः क्रियाविशेषणभूताः समस्यन्ते, न च क्रियाविशेषणानां समासः क्वचिद्विहितः, तत् कथमत्र समासः? इत्याह—मयूरव्यंसकादित्वात् समास इति। समासे चैतदित्यादि। चकारोऽवधारणार्थः। समास एवेत्यर्थः। कथं पुनः समास एवैतल्लभ्यते? 'चादिलोपे विभाषा' इत्यतो मण्डूकप्लुतिन्यायेन विभाषाग्रहणानुवृत्तेः। सा व्यवस्थितविभाषेति विज्ञानाच्च।

यद्येवम्, कथं वार्त्तिककारेणोक्तम्—मलोपश्चेति, काष्ठादिषु हि येऽकारान्तास्तेषां विभक्तेरम्भावे कृते मकारः सम्भवति, समासे चैतदनुदात्तत्वेन भवितव्यम्, तत्र विभक्तेरभावान् मकारो न सम्भवतीति मलोपवचनमयुक्तं स्यात्? इत्यत आह—मलोपश्चेत्यनेनापीत्यादि। एवमस्माभिरनुदात्तत्वस्य विषय आख्यातः। मलोपश्चेत्यनेनापि स एवाख्यायते; यस्मात् समासे मलोपो न भवति, विभक्तेर्लुप्तत्वात्। असमासे विभक्तेरम्भावे कृते मकारस्य श्रवणमेव भवति, न तु लोपः।

**पदमञ्जरी**

त्वात्तदनुरोधेन पूजनादित्येकवचनं बहुवचनस्थान इति व्याचष्टे—पूजनेभ्यः काष्ठादिभ्य इति। उत्तरपदमिति। उत्तरसूत्रे तिङ्ग्रहणादस्य च सूत्रस्य समासविषयत्वात्सुबन्तमिति द्रष्टव्यम्। काष्ठादयश्चैतेऽद्भुतपर्यायाः पूजनवचना भवन्ति, तत्र येषां वृत्तिविषय एवाद्भुतपर्यायत्वममातापुत्रादीनां तेऽवश्यपदेन विग्रहः। काष्ठाध्यापक इति क्रियाविशेषणम्। काष्ठशब्दो द्वितीयान्तः समस्यते। कृद्योगलक्षणा तु षष्ठी क्रियाविशेषणेषु न भवति, धात्वर्थं प्रति यत्कर्म तत्रैव षष्ठी; कर्तृपदेन साहचर्यात्। यो हि धात्वर्थं प्रति कर्त्ता तत्र षष्ठी, तत्साहचर्यात् कर्मापि तादृशमेव गृह्यते। विशेषणं तु धात्वर्थेन समानाधिकरणत्वान्न तं प्रति कर्म। सर्वथा क्रियाविशेषणान्न षष्ठी भवति, अत एव मलोप इति वक्ष्यते। षष्ठ्यां सत्यां मकाराभावादनुपपन्नमेतत्स्यात्। कथं पुनः कर्तृप्रधाने कृदन्ते गुणभूतायाः क्रियाया विशेषणेन सम्बन्धः, साधनसम्बन्धवदुपपद्यते; तद्यथा—ग्रामं गत इत्यादौ गुणभूताया अपि क्रियायाः साधनेन योगः, तथा विशेषणेनापि नानुपपन्नः। काष्ठाभिरूपक इति। आभिरूप्यं काष्ठेन विशेष्यत इति नपुंसकप्रथमान्तस्य समासः। एवं सर्वत्र प्रवृत्तिनिमित्तमात्रेण काष्ठादीनामन्वयाद् द्रव्यवाचिभिः सामानाधिकरण्याभावात् मयूरव्यंसकादित्वमाश्रितम्।

**भावबोधिनी**

ध्यायकः (काष्ठाध्यापकः) [जो अद्भुत रूप से अध्ययन करता है उसे काष्ठाध्यायक कहते हैं। इसी प्रकार जो अद्भुत रूप से पढ़ाता है वह 'काष्ठाध्यापक' कहा जाता है।] काष्ठाभिरूपकः (अद्भुतरूप से सुन्दर) दारुण—दारुणाध्यापकः। दारुणाभिरूपकः। अमातापुत्र—अमातापुत्राध्यापकः। अयुत—अयुताध्यापकः। अयुताभिरूपकः। अद्भुत—अद्भुताध्यापकः। अनुक्त—अनुक्ताध्यापकः। भृश—भृशाध्यापकः। घोर—घोराध्यापकः। परम—परमाध्यापकः। सु—स्वध्यापकः। अति—अत्यध्यापकः। [इन सभी में दारुण आदि से परे पूजितवाचक 'अध्यापक' आदि का अनुदात्त होता है।]

---

१. मुद्रितकाशिकायां तु काष्ठाध्यापक इति पाठो लभ्यते। तत्राद्भुतं योऽध्यापयतीत्येवं विग्रहः।

२. इह—'अनुज्ञाताध्यापकः, कल्याण—कल्याणाध्यापकः, वेश—वेशाध्यापकः' इत्यधिकं पुस्तकान्तरे।

समासान्तोदात्तत्वापवाद इष्यते। दारुणमध्यायक इत्येवमादिषु न भवति। 'मलोपश्च' इत्यनेनाप्ययमेव विषय आख्यायते। यत्र विभक्तेरभावान्मकारो न श्रूयते तत्रानुदात्तत्वमिति।

असमासे हि मलोपो नैवेष्यते। दारुणमधीते दारुणमध्यायक इति।

पूजनादित्येव पूजितपरिग्रहे सिद्धे पूजितग्रहणमनन्तरपूजितप्रतिपत्त्यर्थम्। एतदेव ज्ञापकम्—इह प्रकरणे पञ्चमीनिर्देशेऽपि नानान्तर्यमाश्रीयते इति। तथा च 'यद्वृत्तान्नित्यम्' (८।१।६६) इत्यत्रोदाहृतम्।

**न्यासः**

अथासमासे मलोपार्थमित्येतदुक्तमित्येव कस्मान्न विज्ञायते? इत्याह—**अथासमासे हीत्यादि**।

अथ पूजितग्रहणं किमर्थम्, यावता पूजनशब्दोऽयं पूजितापेक्षत्वात् सम्बन्धिशब्दः, तेन सम्बन्धिशब्दत्वात्पूजितमर्थादुपस्थापयति, तन्त्रान्तरेणापि पूजितग्रहणं पूजितस्यैव परिग्रहो भविष्यति? इत्यत आह—**पूजनादेवेत्यादि**। पूजनग्रहणादेव पूजितग्रहणे लब्धे पूजितग्रहणं यत् क्रियते तस्यैतत् प्रयोजनम्—विशिष्टस्याव्यवहितस्य प्रत्यासन्नस्य ग्रहणं यथा स्यादित्येवमर्थम्। तेनोत्तरसूत्रे यत् काष्ठं देवदत्तः पचतीत्यत्र व्यवहितस्य न भविष्यति। ननु पञ्चमीनिर्देशादेव व्यवहितस्य न भविष्यति? इत्यत आह—**एतदेवेत्यादि**। यादृशमिदं ज्ञापकं तदनुरूपम् 'यद्वृत्तान्नित्यम्' इत्यत्र यत्कामास्ते जुहुमः, यद्र्यङ् वायुर्वातीत्येवमाद्युदाहृतमित्यर्थः। एतेन ज्ञापनस्य प्रयोजनं दर्शितम्।

**पदमञ्जरी**

**समासे चेत्यादि**। चकारोऽवधारणे, यदि समासे एवैतदिष्यते, कथं वार्त्तिककारेणोक्तम्—पूजितस्यानुदात्तत्वे काष्ठादिग्रहणं मलोपश्चेति; न हि समासे तेषामन्त्यो मकारः सम्भवति, विभक्तेर्लुप्तत्वात्? इत्यत आह—**मलोपश्चेत्यनेनापीति**। कथं पुनरयं विषयोऽनेनाख्यायते? अत आह—**यत्रेति**। समासे हि विभक्तेरभावान्मकारो न श्रूयते अयमेव लोप इति। किं पुनः कारणमेवं काशकुशावलम्बनेन वार्त्तिकं व्याख्यायते? अत आह—**असमासे हीति**। अन्ये त्वाहुः—यदि समास एवैतदभिमतमभवितव्यत् 'समासे' इत्येवावक्ष्यत्; मलोपवचनात्तु वाक्यविषयमेवैतत्। दारुणमध्यापक इत्यादिकं तु रूपं यदीष्यते विकल्पेन मलोपो वक्तव्य इति।

**पूजनादित्येव पूजितपरिग्रहे सिद्ध इति**। पूजनस्य पूजितापेक्षत्वादिति भावः। **अनन्तरपूजितप्रतिपत्त्यर्थमिति**। 'पूजनात्पूजितम्' इति सूत्रे सामान्यगतमानन्तर्यं विशेषाणां विज्ञायत इति भावः। कथं पुनः पञ्चमीनिर्देशे व्यवहितस्य प्रसङ्गः? इत्याह—**एतदेवेति**। ज्ञापनस्य प्रयोजनमाह—**तथा चेति**।

**भावबोधिनी**

[ 'दारुणम्' आदि क्रियाविशेषण हैं। वैयधिकरण्य के कारण समास, विभक्तिलोप नहीं होगा इनमें द्वितीया एकवचन में 'मकार' का श्रवण होने लगेगा। अतः वार्तिककार कहते है— ] * और मलोप भी होता है। * यह वार्तिककार का मत है। 'मयूरव्यंसकादयश्च" ( २।१।७२ ) सूत्र से इनमें समास होता है। और समास में यह अनुदात्तत्व होता है। [ जब समास नहीं होता है—दारुणम् अध्यापकः आदि में मकार भी रहता है। और ण्वुल् मानकर होनेवाला लित् स्वर आद्युदात्तत्व रहता है— ]

समासान्त उदात्तत्व का अपवाद इष्ट है। 'दारुणम् अध्यापकः' आदि में नहीं होता है। 'मलोपश्च' इस वार्तिक से भी यही विषय कहा जा रहा है। जहाँ विभक्ति के अभाव से मकार नहीं सुनाई देता है वहाँ अनुदात्तत्व होता है।

असमास में मलोप इष्ट नहीं है—दारुणम् अधीते = दारुणम् अध्यायकः यही रहता है।

'पूजनात् = पूजनवाचक से परे'—इसी से पूजित का ग्रहण सिद्ध हो जाने पर जो दुबारा 'पूजित' का ग्रहण है वह अनन्तर = अव्यवहित पूजित का ज्ञान कराने के लिए है। यही निर्देश ज्ञापक है—"इस प्रकरण में पञ्चम्यन्त के निर्देश में भी अनान्तर्य = अव्यवहितत्व का आश्रयण नहीं लिया जाता है।' और इसी प्रकार से 'यद्वृत्तान्नित्यम्' इस सूत्र में उदाहरण भी दिया गया है।

'अनुदात्तम्' इति वर्तमाने पुनरनुदात्तग्रहणं प्रतिषेधनिवृत्त्यर्थम् ॥

**३६८२. सगतिरपि तिङ् ॥ ६८ ॥ (३९७५)**

सगतिरगतिरपि पूजनेभ्यः काष्ठादिभ्य परं पूजितं तिङन्तमनुदात्तं भवति। यत्काष्ठं पचति। यत्काष्ठं प्रपचति। यद्दारुणं पचति। यद्दारुणं प्रपचति।

'तिङ्ङतिङः' (८।१।२८) इति निघातस्य 'निपातैर्यद्यदिहन्त' (८।१।३०) इति प्रतिषेधे प्राप्ते पुनर्विधानम्। सगतिग्रहणाच्च गतिरपि निहन्यते।

गतिग्रहणेन चात्रोपसर्गग्रहणमिष्यते। इह न भवति—यत्काष्ठं शुक्लीकरोति। यत्काष्ठं कृष्णीकरोति ॥

### न्यासः

अथानुदात्तग्रहणं किमर्थम्, यावता 'अनुदात्तं सर्वमपादादौ' इत्यतोऽनुदात्तग्रहणमनुवर्तेत ? इत्याह— **अनुदात्त इति वर्तमान इत्यादि**। तद्ध्यनुदात्तग्रहणम् 'न लुट्' इति प्रतिषेधेन सम्बद्धम्, अतस्तदनुवृत्तौ सोऽप्यनुवर्तेत। तथा च सति यस्यामन्त्रितादेः पूजितस्य निघातप्राप्तिरस्ति तस्यायं काष्ठादिभ्यः परस्य निघातप्रतिषेधो विज्ञायेत। तस्मात् प्रतिषेधनिवृत्त्यर्थमन्यदिहानुदात्तग्रहणं क्रियते ॥ ६७ ॥

**सगतिरपि तिङ् ॥ सगतिग्रहणाच्च गतिरपि निहन्यत इति**। तुल्ययोगेऽत्र सहशब्दः। तत्रोभयोरपि विधीयमानेन कार्येण सम्बन्धो भवति। तथा हि सपुत्रो भोज्यतामित्युक्ते द्वयोरपि पितापुत्रयोर्भोजनेन सम्बन्धो भवति। तस्मादिहाप्यगतेस्तिङन्तस्य च निघाते च सम्बन्धो विज्ञायते। **गतिग्रहणेन चात्रोपसर्गग्रहणमिष्यत इति**। यथा चैतल्लभ्यते तथा पूर्वमेवाख्यातम्। तिङ्ग्रहणं पूर्वो निघातः सुबन्तविषयो यथा विज्ञायेतेत्येवमर्थम् ॥ ६८ ॥

### पदमञ्जरी

**अनुदात्त इति वर्तमान इत्यादि**। प्रकृतं ह्यनुदात्तग्रहणम्, 'न लुट्' इत्यादिना प्रतिषेधेन सम्बद्धम्, अतस्तदनुवृत्तौ प्रतिषेधोऽप्यनुवर्तेत। तत्र यद्यप्यस्य योगस्य समासविषयत्वात्तादृशो विषयो न सम्भवति, यत्रामन्त्रितादौ निघातः प्रतिषिध्येत; तथापि 'कुत्सने च सुपि' इत्यादौ उत्तरत्र प्रतिषेध एव स्यात्। तस्मात्तन्निवृत्त्यर्थं पुनरनुदात्तग्रहणम् ॥ ६७ ॥

**सगतिरपि तिङ् ॥ यत्काष्ठं पचतीति**। येऽपि 'मलोपश्च' इत्यनेन वाक्येन मलोपमाहुः, तेऽपि तिङन्ते परतो नैव लोपमिच्छन्ति। **सगतिग्रहणादगतिरपि निहन्यत इति**। कथम्? तुल्ययोगेऽत्र सहशब्दः, यत्र तुल्ययोगे सहशब्दस्तत्र द्वयोरपि कार्ययोगो भवति, तद्यथा—सपुत्रो भोज्यतामित्युक्ते पुत्रोऽपि भोज्यते। अपिग्रहणं यत्र गतिर्न प्रयुज्यते तत्र केवलस्यापि तिङन्तस्य यथा स्यात्, गतिप्रयोगे तु द्वयोः सहैव भवति, तिङ्ग्रहणात्पूर्वो योगः सुबन्तविषय एव विज्ञायते ॥ ६८ ॥

### भावबोधिनी

'अनुदात्तम्' इसकी अनुवृत्ति रहते पुनः यहाँ अनुदात्त का ग्रहण प्रतिषेध की निवृत्ति के लिए है। [ अर्थात् अनुदात्त का विधान करने के लिए है, [ क्योंकि अनुवृत्त होने वाला 'अनुदात्त' तो 'न' = निषेध के साथ सम्बद्ध होने से 'अनुदात्तं न' यही कहेगा। ] ॥ ६७ ॥

पूजनवाचक काष्ठ आदि से परे पूजितवाची तिङन्त गतिसंज्ञक से विशिष्ट तथा रहित दोनों अनुदात्त होते हैं। उदा० यत्काष्ठं पचति। यत्काष्ठं प्रपचति। [ यहाँ पचति तथा प्रपचति दोनों अनुदात्त होते हैं। ] यद् दारुणं पचति। यद् दारुणं प्रपचति। [ काष्ठ, दारुण आदि शब्द अतिशयप्रकर्ष के वाचक हैं। अतः पूजन अर्थ प्रतीत होता है। ]

'तिङ्ङतिङः' ( ८।१।२८ ) इस सूत्र से प्राप्त निघात का प्रतिषेध "निपातैर्यद्यदिहन्त०" ( ८।१।३० ) सूत्र से प्राप्त रहते प्रस्तुत सूत्र से पुनः विधान किया गया है। और 'सगति' ( गतिसंज्ञक-सहित ) के ग्रहण से गतिसंज्ञक का भी निघात हो जाता है अर्थात् गति और तिङन्त दोनों का सर्वानुदात्त होता है।

गति के ग्रहण से यहाँ उपसर्ग का ग्रहण इष्ट है अर्थात् गति होते हुए उपसर्ग भी होना चाहिये। अतः यहाँ अनुदात्त नहीं होता है—यत्काष्ठं शुक्लीकरोति। यत्काष्ठं कृष्णीकरोति। [ यहाँ गतिसंज्ञा तो होती है किन्तु उपसर्ग न होने से प्रस्तुत सूत्र नहीं लगता है। ] ॥ ६८ ॥

## ३६८३. कुत्सने च सुप्यगोत्रादौ ॥ ६९ ॥ ( ३९७६)

'पदात्' इति निवृत्तम्। 'सगतिरपि तिङ्' इति वर्तते। कुत्सने च सुबन्ते गोत्रादिवर्जिते परतः सगतिरपि तिङ् अगतिरप्यनुदात्तो भवति। पचति पूति, प्रपचति पूति। पचति मिथ्या, प्रपचति मिथ्या।

कुत्सने इति किम्? पचति शोभनम्। सुपीति किम्? पचति क्लिश्नाति। अगोत्रादाविति किम्? पचति गोत्रम्। पचति ब्रुवम्। पचति प्रवचनम्।

❀ क्रियाकुत्सन इति वक्तव्यम् ❀ ( म० भा० )। कर्तुः कुत्सने मा भूत्—पचति पूतिर्देवदत्तः। प्रपचति पूतिः।

### न्यासः

**कुत्सने च सुप्यगोत्रादौ ॥ पचति पूतीति।** पूतिशब्दस्य क्रियाविशेषणत्वात् 'स्वमोर्नपुंसकात्' इति विभक्तेर्लुक्। **पचति, क्लिश्नातीति।** 'क्लिशू विबाधने', क्र्यादित्वात् श्ना। अत्र क्लिश्नातीत्येतत् कुत्सनं भवति, यो यस्य बाधनं करोति तेन स कुत्स्यते। सम्बन्धोऽप्यनयोस्तिङन्तयोरस्त्येव। यस्मात् पचति तस्मात् क्लिश्नातीति। सुबन्तं तु क्लिश्नातीत्येतन्न भवति, अस्य न भवति निघातः।

**क्रियाकुत्सन इत्यादि।** तिङन्ते द्वयमस्ति—साधनम्, क्रिया च। तत्र क्रियायाः कुत्सनेऽनुदात्तत्वं भवतीत्येतदर्थमिदं व्याख्येयम्, कर्तुं कुत्सने मा भूदित्येवमर्थञ्च। तत्रेदं व्याख्यानम्—'चादिलोपे विभाषा' इत्यतो विभाषाग्रहणमनुवर्तते। व्यवस्थितविभाषा च सा, तेन क्रियाकुत्सन एव भविष्यति, न कर्तुः कुत्सन इति। ननु च क्रियाप्रख्यानमाख्यातम्, साधनं तु तत्राप्रधानम्, तस्य क्रियाङ्गत्वात्, अत्र प्राधान्यादेव पूतीत्येवमादिना विशेषणेन क्रियाया एव सम्बन्धो भविष्यति, न गुणभूतस्य कर्तुः, तत् किमुच्यते क्रियाकुत्सनमिति? एवं मन्यते—यथैव कृदन्तेषु दारुणाध्यायकादिषु क्रियायाः प्रधानभूताया अपि विशेषणेन सम्बन्धो भवति, तथाख्यातेष्वप्यप्राधान्येऽपि साधनस्य विशेषणेन सम्बन्धेन भवितव्यमिति।

### पदमञ्जरी

**कुत्सने च सुप्यगोत्रादौ ॥ पचति क्लिश्नातीति।** कथमत्र समानवाक्यत्वं सामर्थ्यं चेति चिन्त्यम्।

**कर्तुः कुत्सने मा भूत्, पचति पूतीति।** कर्तृत्वमत्र कुत्स्यते—अस्येदमयुक्तमिति। क्रिया तु शोभनैव, तत्र कर्तृत्वस्य विशेषणं पूतित्वं न कर्त्रा समानाधिकरणमिति दारुणमभिरूपकमित्यादिवन्नपुंसकत्वम्। एवं द्विबह्वोरप्येकवचनमेव भवति—पचतः पूति, पचन्ति पूतीति। प्रायेण पूतिरिति पुंल्लिङ्गं पठ्यते। ननु क्रियाप्रधानेऽस्मिन्नाख्याते साधनं कथं विशेषणेन सम्बन्धप्रधानं पठ्यते? उच्यते;

एकार्थीभावमापन्नं　वृत्तौ　यदुपसर्जनम्।
विशेषणेन　सम्बन्धस्तस्य　नैवोपपद्यते ॥

न हि भवति—ऋद्धस्य राजपुरुष इति। यस्य तु नैकार्थीभावस्तदप्रधानमपि विशेषणेन संयुज्यते, यथा—ऋद्धस्य राज्ञः पुरुष इति। एवं साधनं क्रियां प्रति गुणभूतमप्येकार्थीभावाद्विशेषणेन युज्यते, तथा

### भावबोधिनी

'पदात्' ( पद से परे )—इसकी निवृत्ति है। 'सगतिरपि तिङ्' ( गतिसंज्ञक सहित भी तिङ् ) इसकी अनुवृत्ति होती है। गोत्रादि गण में पठित शब्दों को छोड़कर कुत्सन अर्थ में सुबन्त शब्द परे रहते गतिसंज्ञक से युक्त भी तिङ् तथा अगतिक भी तिङ् अनुदात्त होता है। उदा० पचति पूति। प्रपचति पूति। पचति मिथ्या, प्रपचति मिथ्या। [ यहाँ कुत्सनवाची परे है अतः पूर्ववर्ती तिङन्त और गतियुक्त तिङन्त दोनों अनुदात्त हो जाते हैं। ]

* कुत्सन = निन्दा अर्थ में—इसका क्या फल है? पचति शोभनम्। [ शोभन कुत्सनवाची नहीं अपि तु प्रशंसावाची है। अतः अनुदात्त नहीं होता है। ] सुबन्त परे रहते—इसका क्या फल है? पचति क्लिश्नाति। ( यहाँ क्लिश्नाति यह तिङन्त परे है, सुबन्त नहीं। अतः अनुदात्त नहीं होता है। ] गोत्रादि शब्दों को छोड़ कर—इसका

❀ पूतिश्च चानुबन्धो भवतीति वक्तव्यम् ❀ ( म० भा० )। तेनायं चकारानुबन्धकत्वादन्तोदात्तो भवति।

❀ विभाषितं चापि बह्वर्थमनुदात्तं भवतीति वक्तव्यम् ❀ ( म० भा० )। पचन्ति पूतिः पचन्ति पूतिः। प्रपचन्ति पूतिः प्रपचन्ति पूतिः।

### न्यासः

**पूतिश्चानुबन्ध इत्यादि।** पूतिशब्दश्चकारानुबन्धो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन पूतिश्चानुबन्धो भविष्यतीति। ननु च पूतिशब्दस्य प्रातिपदिकत्वादप्रतिषिद्धमेवादन्तोदात्तत्वम्, कस्मात् स चानुबन्धः क्रियते ? न चायं क्तिन्नन्तः, पूतिरयमिति पुंसा सामानाधिकरण्यात्। एवं तर्ह्यनेन चकारानुबन्धकरणेनैवैतद् दर्शयति—यत्र सगतेस्तिङोऽनुदात्तत्वं तत्र पूतेरन्तोदात्तत्वम्, अन्यत्रायमाद्युदात्त एव; तेन क्रियाकुत्सनेऽन्तोदात्तः कर्त्तव्यः, कुत्सन आद्युदात्त इति। **तेनायमित्यादिना** चानुबन्धकत्वस्य फलं दर्शयति।

**विभाषितमित्यादि।** बह्वर्थं यत् तिङन्तं तद् विभाषानुदात्तं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं त्विहापि विभाषाग्रहणानुवृत्तेः। तेन व्यवस्थितविभाषात्वं चाश्रित्य कर्तव्यम्।

### पदमञ्जरी

साधनप्रधानेषु कृदन्तेषु क्रिया गुणभूताऽपि विशेषणेन युज्यते—दारुणमध्यायक इति। यथैव तर्हि साधनस्य विशेषणेन योगः, एवं क्रियान्तरेणापि प्राप्नोति—पचति पठति, पचति दृश्यति, पाचकः पठति, पाचकः पश्यतीतिवत् ? किं कुर्मः, न तावदेवं दृश्यते ! तदेतदेवं प्रतिपत्तव्यम्—

भार्या स्त्र्यन्तरसम्बन्धं पत्युर्न सहते यथा।
स्नानादिकं तु संस्कारं स्वार्थमेवानुमन्यते॥

तथा क्रियापि—

विशेषणेन सम्बन्धं कर्त्तुः स्वस्यानुमन्यते।
स्वानुरक्तं तु कर्त्तारं न क्रियान्तरगामिनम्॥ इति।

**पूतिश्चेति।** तिबन्तः पूतिशब्दः आद्युदात्तः। **वसेस्तिबिति।** तिब् बाहुलकात्पूञोऽपि भवति, बाहुलकादेव गुणाभावः। तस्य निघातनिमित्तस्यान्तोदात्तत्वं यथा स्यादिति चित्त्वमुपसङ्ख्यायते। **विभाषितमिति।** बह्वर्थं तिङन्तं विभाषा निहन्यते, यदा निहन्यते तदा पूतिरन्तोदात्तः।

### भावबोधिनी

क्या फल है ? पचति गोत्रम्। पचति ब्रुवम्। पचति प्रवचनम्। [ यहाँ गोत्रादिगण पठित शब्द ही परे हैं। अतः अनुदात्त नहीं होता है। ]

❀ क्रिया की निन्दा में—ऐसा कहना चाहिये। ❀ जिससे कर्ता की कुत्सा में अनुदात्त न होने लगे—पचति पूतिः देवदत्तः, प्रपचति पूतिः देवदत्तः। [ यहाँ क्रिया की नहीं अपि तु देवदत्त कर्ता की कुत्सा प्रतीत होती है। ]

❀ और 'पूति' शब्द चकार अनुबन्ध वाला होता है—ऐसा कहना चाहिये। ❀ [ चकार अनुबन्ध की इत्संज्ञा लोप होने से यह चित् हो जाता है अतः 'चितः' सूत्र से अन्तोदात्त होता है। यही लिख रहे है— ] इस कारण यह ( पूति शब्द ) चकारानुबन्ध वाला होने से अन्तोदात्त होता है।

❀ बहुत अर्थ वाला अर्थात् बहुवचन वाला पूति शब्द विकल्प से अनुदात्त होता है—ऐसा कहना चाहिये। ❀ उदा० पचन्ति पचन्ति पूति। प्रपचन्ति प्रपचन्ति पूति। [ जब तिङन्त का निघात होता है तब 'पूति' शब्द अन्तोदात्त रहता है। ]

"सुपि कुत्सने क्रियाया मलोप इष्टोऽतिङीति चोक्तार्थम् ।
पूतिश्च चानुबन्धो विभाषितं चापि बह्वर्थम् ॥" [ म० भा० ]

**३६८४. गतिर्गतौ ॥ ७० ॥ (३९७७)**

**गतिर्गतौ परतोऽनुदात्तो भवति । अभ्युद्धरति । समुदानयति । अभिसम्पर्याहरति ।**

**न्यासः**

**सुपि कुत्सन इत्यादि ।** अयमुक्तार्थसंग्रहश्लोकः । तत्राद्येन पादेन यदुक्तं क्रियाकुत्सन इति वक्तव्यमिति तस्य संग्रहः । **मलोप इत्यादि ।** नास्मिन् तिङ् विद्यत इत्यतिङिति । स पुनः प्रस्तावात् काष्ठादीनां समासो विज्ञायते । तत्रातिङि काष्ठादिसमासे मलोप इष्टः । एतच्च मलोपश्चेत्यनेनायमेव विषय आख्यायत इत्यादिना तूक्तार्थम्, तदनेन समासे चैतदनुदात्तत्वमित्यादिना यदुक्तं तत् सर्वं ग्रहीतुम् । अथवा—मलोप इत्यनेन मलोपश्चेत्येतद्वचनमुपलक्षयति । अस्य चोक्तार्थमित्यनेन सम्बन्धः । तदेतदुक्तं भवति—मलोपश्चेति यत् कार्यं वचनं तत् मलोपश्चेत्यनेनापीत्यादिना पूर्वमेवोक्तप्रयोजनमिति । **अतिङीति ।** अनुदात्तमित्येतद् वक्तव्यमिति वृत्तभङ्गभयान्नोक्तम् । अनुक्तमपि तस्य श्लोकस्य पूर्वोक्तार्थसंग्रहार्थत्वात् काष्ठादीनाञ्च पूर्वमनुदात्तस्य चोक्तत्वाद् गम्यत एव । अतिङीति चानेन बहुव्रीहिणा समासः । तेनैतदुक्तं भवति—काष्ठादीनां समासेऽनुदात्तत्वं भवतीति । शेषं सुगमम् ॥ ६९ ॥

**गतेर्गतौ ॥ अभ्युद्धरतीति ।** अभिशब्दस्य प्रातिपदिकस्वरेणान्तोदात्तत्वे प्राप्त उच्छब्दे गतौ परतो अनुदात्तत्वं भवति । **समुदानयतीति ।** 'अत्रापि निपाता आद्युदात्ताः', 'उपसर्गाश्चाभिवर्जम्' इति सम आद्युदात्तत्वे प्राप्तेऽनुदात्तत्वं भवति, कथं पुनरत्राह—समश्च गतिसंज्ञेति, यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञे भवत इत्युक्तम्, नचोच्छब्दस्य क्रियावाचित्वम् ? नैष दोषः; क्रियाविशेषवाचिनो हि प्रादयः । क्रियाविशेषश्च क्रियैव ।

**पदमञ्जरी**

**क्रियाकुत्सने** इत्यादि यदुक्तम्, तत्र प्रमाणत्वेन भाष्यपठितामार्यां पठति—**सुपि कुत्सन इति । मलोप इष्टोऽतिङि सोक्तार्थमिति ।** भाष्ये तावदयमर्थः—मलोपश्चेति वार्तिककारेणोक्ते मलोपस्तिङि नेष्टः—दारुणं पचतीति । इत्येवं मलोपश्चेति वाक्यमुक्तार्थमाचार्यैरिति । **वृत्तौ** तु श्लोकान्तर्गतत्वादयं पादः पठितो न त्वत्रास्योपयोगः कश्चित्; 'समासे चैतदनुदात्तत्वमिष्यते' इत्युक्तत्वात् ॥ ६९ ॥

**गतिर्गतौ ॥ अभ्युद्धरतीति ।** सर्वोपसर्गसाधारणी हरणक्रिया प्रतीयते, तामुद्विशिनष्टि उद्धरतीति । उदैवोर्ध्वता विशिष्टाऽवगम्यत तामभिर्विशिनष्टि अभ्युद्धरतीति । तत्र—

अन्योऽन्यापेक्षया नास्ति गतित्वं यद्यपि द्वयोः ।
क्रियां प्रति गतित्वात्तु निहतोऽभिर्गतिर्गतौ ॥

**समुदानयतीति ।** अत्र समुदोर्द्वयोरपि निघातः । **अभिसम्पर्याहरतीति ।** अत्र त्रयाणाम् ।

**भावबोधिनी**

[ सम्पूर्ण सूत्र का आशय प्रकट करने के लिये महाभाष्य का श्लोक यहाँ उद्धृत किया गया है— ]

क्रिया की कुत्सा में सुबन्त परे रहते [ तिङन्त सगति भी अनुदात्त होता है ], अतिङन्त परे रहते ही मलोप ( द्वितीया एकवचन अम् के म् का लोप ) इष्ट है—यह उक्तार्थ = आचार्य-परम्परा से कहे गये आशय वाला है । और 'पूति' शब्द विकल्प से चकारानुबन्ध वाला होता है, तथा बहुत अर्थ वाला अर्थात् बहुवचन तिङन्त विकल्प से उदात्त होता है ॥ ६९ ॥

गतिसंज्ञक परे रहते पूर्ववर्ती गतिसंज्ञक अनुदात्त होता है । उदा० अभ्युद्धरति । समुदानयति । अभिसम्पर्याहरति । [ अभि + उद् + हरति । सम् + उद् + आ + नयति । अभि + सम् + परि + आ + हरति—इनमें 'उपसर्गाश्चाभिवर्जम्' सूत्र से 'अभि' उपसर्ग का आद्युदात्त निषिद्ध हो जाने के कारण 'फिषोऽन्त उदात्तः' इस फिट्

गतिरिति किम् ? देवदत्तः प्रपचति । गताविति किम् ? आ मन्द्रैरिन्द्र हरिभिर्याहि मयूर-रोमभिः ( ऋ० ३।४५।१ ) । याहीत्येतत्प्रति क्रियायोगादाङित्येष गतिः । तस्य गतावित्येतस्मिन्नसति गतिरित्यनाश्रितपरनिमित्तकमनुदात्तत्वं स्यात् ॥

न्यासः

कारकाणां प्रवृत्तिविशेषः क्रियेत्युक्तम् । उपसर्गेऽपि कारकप्रवृत्तिविशिष्यत एव । न ह्युद्ध[1]रतीति हरत्यर्थ एव केवलं कर्तृव्यापारं व्यवच्छिनत्ति । किं तर्हि ? उपसर्गार्थोऽपि । अथ वा हरणादर्थान्तरमेवोद्धरणम्, तस्याभिर्विशेषण-मिति नानुपपन्ना गतिसंज्ञा ।

देवदत्तः प्रपचतीति । देवैर्दासीष्टेति 'क्तिच्क्तौ च संज्ञायाम्' इति क्तः, 'दो दद् घोः' इति ददादेशः । 'तृतीया कर्मणि' एत्याद्युदात्तत्वे प्राप्ते 'कारकाद्दत्तश्रुतयोरेवाशिषि' इति देवशब्दोऽन्तोदात्तः । आ मन्द्रैरित्यादि । अत्र सर्वमस्ति, न तु मन्द्रा गतिरिति । तस्मिन् परत आङोऽनुदात्तत्वं न भवति । असति चानुदात्तत्वे 'निपाता आद्युदात्ताः, उपसर्गाश्चाभिवर्जम्' इत्याद्युदात्तत्वमेव भवति ।

कथं पुनराङो गतिसंज्ञा, क्रियायोगे हि सति विहिता सा, न चात्रास्ति क्रियायोगः, मन्द्रशब्दस्या-क्रियावाचित्वात् ? इत्यत आह—याहीत्येतत् प्रति क्रियायोगादाङित्येष गतिरिति । सत्यपि व्यवधाने 'व्यवहि-ताश्चे'ति गतिसंज्ञाविधानादिति भावः । स्यादेतत्—यद्यपि याहीत्येतत् प्रत्याङो गतित्वम्, तथापि मन्द्रशब्दं प्रति नास्त्येव तस्य गतिसंज्ञा, तेन यद्यपि गतावित्येतन्नोच्येत, तथापि नैवेहानुदात्तत्वं प्राप्नोति ? इत्यत आह—

पदमञ्जरी

गताविति किमिति । क्रियां प्रति गतिर्भवति, क्रिया च धातुवाच्या । धातुश्च द्विविधः—सगतिः, अगतिश्च । प्रत्यया अपि धातोर्द्वये भवन्ति—कृतः, तिङश्च । तत्र कृदन्ते सगतावगतौ च कृत्स्वरथाथादिस्वरेषु कृतेषु शेषनिघातेन गतिर्निहन्यत एव । तिङन्तेऽपि केवले उदात्तवति तावदुत्तरसूत्रेण भवत्येव निघातः, अनु-दात्ते तु नियमाश्रयणान्न भविष्यतीति, तिङन्ते यदि भवति उदात्तवत्येव भवति, ततश्च सगतिरेव तिङ्वशिष्यते इति प्रश्नः । आ मन्द्रैरिति । ननु च क्रियायोगे गतिर्भवति, न चात्राङः क्रियायोगोऽस्ति, मन्द्रशब्दस्याक्रिया-वाचित्वात् ? अत आह—याहीत्येतत्प्रतीति । 'ते प्राग्धातोः' इति प्रयोगनियमः, न संज्ञानियमः, ततश्च व्यवहितप्रयोगेऽपि गतित्वमस्त्येवेति भावः । ननु यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति, ततश्च याहीत्येतत्प्रति गतित्वेन मन्द्रं प्रत्यगतित्वादप्रसङ्गः, इहापि तर्हि न प्राप्नोति-अभ्युद्धरतीति, उदं प्रत्यगतित्वात् ? मा भूदुदं प्रति गतिः, समुदायं तु प्रति गतिर्भवति, उदा विशिष्टा हि क्रिया अभिना विशेष्यते । आमन्द्रैरित्यत्रापि मन्द्रादिकरणकमिन्द्रकर्तृकं यानमाङा विशेष्यत इति समुदायं क्रियाविशेषवाचिनं प्रत्याङो गतित्वान्निघातः प्राप्नोति ? न प्राप्नोति; पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन, आयाने हि मन्द्रादेः साधनत्वं मन्द्रैर्हरिभि-रायाहीति, न तु याने; ततश्च न समुदायं प्रत्याङो गतित्वमिति नास्त्येवात्र प्रसङ्गः । तत्राह—तस्येति । न हि परनिमित्तानुपादाने 'यत्क्रियायुक्ताः प्रादयस्तं प्रति' इति गम्यते, ततश्च वस्तुतो गतित्वाश्रयो निघातः स्यादिति मन्यते ।

भावबोधिनी

सूत्र से अन्तोदात्त प्राप्त था किन्तु दूसरा गति 'उद्' परे होने के कारण प्रस्तुत सूत्र से 'अभि' अनुदात्त होता है । इसी प्रकार अन्यों में भी पूर्ववर्त्ती गति = उपसर्ग का आद्युदात्त प्राप्त होता है किन्तु प्रस्तुत सूत्र से अन्तोदात्त हो जाता है । अनेक गतिसंज्ञकों में अन्तिम को छोड़कर शेष सभी का निघात हो जाता है । ]

गतिसंज्ञक अनुदात्त होता है—इसका क्या फल है ? देवदत्तः प्रपचति । [ देवदत्त गतिसंज्ञक नहीं है । निघात नहीं होता है 'कारकाद्दत्तश्रुतयोरेवाशिषि' इस सूत्र से अन्तोदात्त होता है । ] गतिसंज्ञक परे रहते—इसका क्या फल है ? "आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।" [ यहाँ 'मन्द्र' शब्द गतिसंज्ञक परे नहीं है । अतः 'आङ्' का अनुदात्त न होकर उदात्त ही रहता है । ] यहाँ (व्यवहित भी) 'याहि' इस क्रियापद के साथ योग होने से 'आङ्'

१. 'उद्धरति' इति प्रकाशितः पाठोऽसङ्गतः ।

## ३६८५. तिङि चोदात्तवति ॥ ७१ ॥ (३९७८)

'गतिः' इति वर्त्तते। तिङन्ते उदात्तवति[1] परतो गतिरनुदात्तो भवति। यत्प्रपचति। यत्प्रकरोति।

"तिङ्ग्रहणमुदात्तवतः परिमाणार्थम्" (म० भा०); अन्यथा हि यं प्रति गतिः, तत्रानुदात्तो भवतीति धातावेवोदात्तवति स्यात्; प्रत्यये न स्यात्—यत्प्रकरोतीति। 'यत्क्रियायुक्ताः प्रादयस्तेषां तं प्रति गत्युपसर्गसंज्ञे भवतः' (जै० प०) इति तिङन्ते धातुमेव प्रति गतिसंज्ञा।

**न्यासः**

**तस्येत्यादि**। अत्रास्यानुदात्तत्वं स्यादेवेति। अस्य **अनाश्रितपरनिमित्तक**मित्यनेन हेतुरुक्तः। तस्यानाश्रितपरनिमित्तकत्वस्यापि गतावित्यस्मिन्नसतीत्यनेन गतिग्रहणस्याभावो हेतुरभिहितः। यदि गतावित्येतन्नोच्येत, ततोऽनाश्रितपरनिमित्तमेवानुदात्तत्वमुक्तं स्यात्। न ह्यसति सप्तमीनिर्दिष्टे गतिग्रहणे परनिमित्तताश्रीयते। ततश्च गतिरित्येतावत्युच्यमाने यद्यपि मन्द्रशब्दो गतिर्न भवति, तथापि तस्याङाश्रितपरनिमित्तमनुदात्तत्वमिह स्यादेव। गतावित्यस्मिंस्तु सति न भवत्येष दोषः; गतेः परनिमित्तस्याश्रयणात्, तस्य चेहाभावात् ॥ ७० ॥

**तिङि चोदात्तवति ॥ यत्प्रपचति यत् प्रकरोतीति ॥** 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधे कृते उभयमप्येतत् तिङन्तमुदात्तवद् भवति—एकं धातुस्वरेण, अपरं प्रत्ययस्वरेण।

इहेदं तिङ्ग्रहणमेवमर्थं क्रियते—तिङ्युदात्तवति यथा स्यात्, आमन्द्रैरिन्द्र हरिभिर्याहीत्यत्र मन्द्रशब्दे मा भूदित्येवमर्थम्; एतच्चाप्रयोजनम्, यदि स तत्र स्यात् पूर्वसूत्रे गतावित्येतदपार्थकं स्यात्। अस्य हि तत्र मन्द्रशब्दे परतो मा भूदित्येतदेव प्रयोजनं व्यवस्थितम्। न चान्यत् तिङ्ग्रहणस्येह व्यवच्छेद्यमस्ति। तस्माद् व्यवच्छेद्याभावान्न कर्त्तव्यमेव तिङ्ग्रहणम्?—इत्येतच्चोद्यमपाकर्तुमाह—**तिङ्ग्रहणमित्यादि**। परिमाणम्=

**पदमञ्जरी**

यदि पुनः 'पदस्य' इत्यधिकारात्समर्थपरिभाषोपस्थानाद्येन गतेः सामर्थ्यं तं प्रति गतेरिति विज्ञायेत, तदा शक्यं गतावित्यवक्तुम्, यदाह—'गतेरनुदात्तत्वे गतिग्रहणानर्थक्यम्, तिङ्यवधारणाच्छन्दोऽर्थमिति चेन्नागतित्वात्' इति ॥ ७० ॥

**तिङिचोदात्तवति** ॥ उदाहरणे 'निपातैर्यद्यदि' इति निघातप्रतिषेधात्तिङन्तमुदात्तवत्। तिङ्ग्रहणं किमर्थम्? तिङन्ते यथा स्यात्, मन्द्रशब्दे मा भूत्—आ मन्द्रैरिन्द्र हरिभिर्याहि। मन्द्रशब्दो रक्प्रत्ययान्तोऽन्तोदात्तः।

ननु च 'यत्क्रियायुक्ताः' इति वचनादगतिशब्दः पित्रादिशब्दवत् सम्बन्धिशब्दत्वात् स्वसम्बन्धिनमाक्षिपतीति क्रियावाचिन्येवोदात्तवति भविष्यति, कृदन्ते चातिप्रसङ्गाभावः पूर्वसूत्रे एवोक्तः, तस्मान्नार्थस्तिङ्ग्रहणेन? इत्याशङ्क्याह—**तिङ्ग्रहणमिति**। परिमाणम्=इयत्ता। परिमाणार्थत्वमेव स्पष्टयति—**अन्यथा हीति**। अक्रियमाणे तिङ्ग्रहणे धातुरेव क्रियावाचित्वाद् गतिसंज्ञानिमित्तमिति तत्रैवोदात्तवति

**भावबोधिनी**

यह गतिसंज्ञक होता है। इस आङ् का, [ सूत्र में ] 'गतौ' यह न रहने पर 'गति' इसको परवर्ती निमित्त की अपेक्षा न होने के कारण, अनुदात्तत्व होने लगता। [ किन्तु जब 'गति। गतौ' यह सप्तम्यन्त निर्देश मानकर परवर्ती का भी ग्रहण है तब उपर्युक्त उदाहरण में 'मन्द्रैः' गति न होने से 'आङ्' का अनुदात्तत्व नहीं होता है। ] ॥ ७० ॥

'गति।' इसकी अनुवृत्ति होती है। उदात्त वाले तिङन्त पद के परे रहते भी गतिसंज्ञक अनुदात्त होता है। उदा० यत् प्रपचति। यत् प्रकरोति। [ इनमें 'निपातैर्यद्यदिहन्त' इस सूत्र से अथवा 'यद्वृत्तान्नित्यम्' सूत्र से अनुदात्त का प्रतिषेध होने से उदात्तवान् तिङन्त परे है, गतिसंज्ञक 'प्र' का निघात हो जाता है। फलस्वरूप 'उपसर्गाश्चाभिवर्जम्' सूत्र से 'प्र' का उदात्तत्व नहीं होता है। ]

तिङ् का ग्रहण उदात्तवाले के परिमाणार्थ है अर्थात् उदात्तवाले तिङन्त का ही ग्रहण कराने के लिये है। अन्यथा जिसके प्रति गतिसंज्ञक होता उसी में अनुदात्त होता इसलिये उदात्तवान् धातु परे रहते ही हो पाता, प्रत्यय परे नहीं होता—यत्प्रकरोति। [ यहाँ प्रत्ययान्त धातु का अनुदात्त नहीं हो पाता ] क्योंकि 'जिस क्रियावाचक से

---

१. 'अनुदात्तवति' इति प्रकाशितः पाठोऽशुद्धः।

**आमन्ते तर्हि न प्राप्नोति—प्रपचतितमाम्, प्रपचतितरामिति ? अत्र केचिदामन्तेन गतेः समासं कुर्वन्ति; तेषामव्ययपूर्वपदप्रकृतिस्वरत्वे सत्यक्रियमाणेऽपि तिङ्ग्रहणे परमनुदात्तवद्भवतीति गतिनिघातो नैव सिद्ध्यति।**

**न्यासः**

परिच्छेदः। तदुदात्तवतो यथा स्यादित्येवमर्थं तिङ्ग्रहणम्। किं पुनः स्याद्, यदि परिमाणार्थं तिङ्ग्रहणं न क्रियेत ? इत्यत आह—**अन्यथा हीत्यादि।** यदि हि तिङीति नोच्येत तदोदात्तवतीत्येतावत्युच्यमाने यद्युदात्तवतीति सामान्येनोच्येत, तथापि प्रत्यासत्तेर्यं प्रति गतिस्तस्यैव निघातो विज्ञायेत। ततश्च धातावेवोदात्तवति स्याद्—यत् प्रपचतीत्यादौ, प्रत्यये तु—यत् प्रकरोतीत्यत्र न स्यात्। विकरणो ह्यत्रोदात्तवान्, न धातुः। ननु चोदात्तोऽत्र प्रत्ययः, नोदात्तवान्, न हि प्रत्ययादन्यः स उदात्तोऽस्ति येन प्रत्यय उदात्तवान् स्यात् ? नैतत् सारम्; यथा यत्राद्युदात्तत्वमस्य व्यपदेशिवद्भावेन भवति तथोदात्तत्वमपि स्यादेव। स्यादेतत्—प्रत्ययमपि प्रति प्रादेर्गतिसंज्ञा, ततो नायं दोषः ? इत्यत आह—**यत्क्रियायुक्ता इत्यादि।** इतिकरणो हेतौ। यस्मात् यत्क्रियायुक्ताः प्रादयस्तं प्रति तेषां गत्युपसर्गसंज्ञा, तस्माद् धातुमेव प्रति गतिसंज्ञा, न प्रत्ययम्। यदि हि प्रत्ययोऽपि धातुवत् क्रियावचनः स्यात्, तमपि प्रति प्रादयो गतिसंज्ञां प्रपद्येरन्। न चासौ क्रियावचनः, तस्मान्न प्रत्ययं प्रति प्रादीनां गतिसंज्ञा।

**आमन्ते तर्हीत्यादि।** प्रपचतितरामिति 'तिङश्च' इति तरप्, तदन्तात् 'किमेत्तिङ्' इत्यादिनामि कृते सत्यामन्तमेतद् भवति, न तिङन्तम्। ततो यदि 'तिङि च' इति तिङ्ग्रहणं न क्रियेत, तस्मिन्नामन्ते परतो गतिनिघातो न प्राप्नोति। **अत्रेत्यादि** उत्तरम्। अत्र केचित् 'कुगतिप्रादयः' इत्यामन्तेन गतेः समासं कुर्वन्ति, केचिन्न कुर्वन्त्येवेति। तत्र त्रयः पक्षाः। तत्र य आमन्तेन समासं कुर्वन्ति, तेषाम् 'तत्पुरुषे तुल्यार्थतृतीया'

**पदमञ्जरी**

निघातः स्यात्, न तु प्रत्यये। तिङ्ग्रहणात्तु प्रकृतिभागं प्रति गतेः प्रत्ययोदात्तत्वेनाप्युदात्तवति तिङन्तमात्रे भवति। **धातुमेव प्रति गतिसंज्ञेति।** यस्य क्रिया यत्क्रियेति षष्ठीसमासः, अन्वयव्यतिरेकाभ्यां यस्य वाच्या क्रिया तं प्रतीत्यर्थः। धातोरेव चासौ वाच्येति तमेव प्रति गतित्वम्।

**आमन्ते तर्हि न प्राप्नोतीति।** नमु चाक्रियमाणेऽपि तिङ्ग्रहणे नैवामन्ते प्राप्नोति, यदा हि तिङन्तेऽपि प्रत्ययोदात्तत्वेनोदात्तवति न स्यादिति स्थितम्, तदा का वार्ता आमन्ते ! तत्किमुच्यते—आमन्ते तर्हीति ? एवं तर्ह्ययमत्रार्थः—यदि तिङ्ग्रहणाद्यत्नात्प्रकरोतीत्यादौ भवति, तर्हि तस्यामन्तेऽभावान्न प्राप्नोति; तस्माद्या क्रिया यत्क्रिया—इति कर्मधारय आश्रयणीयः। एवं हि क्रियालक्षणमर्थं प्रति गतित्वम्, तत्रार्थे कार्यस्यासम्भवात्तद्वाचिनि कार्यं विज्ञायमानं क्रियाप्रधाने सर्वत्र सिध्यतीति। अनन्तरोक्तं चोद्यं पक्षविशेषे व्यवस्थापयितुमाह—**अत्र केचिदिति।** अत्र पक्षे गतिकारकोपपदानामित्यस्यायमर्थः—गत्यादीनामविशेषेण समासो भवति, कृद्भिस्तु प्राक् सुबुत्पत्तेरिति। **अव्ययपूर्वपदप्रकृतिस्वरत्वे इति।** 'गतिकारकोपपदात्' इत्यत्र

**भावबोधिनी**

युक्त प्र आदि होते हैं उसी के प्रति गति और उपसर्ग संज्ञा वाले होते हैं' इसके अनुसार तिङन्त में धातु के प्रति ही गति संज्ञा होती है। [ इससे स्पष्ट है कि प्रत्यय तो धातु के समान क्रियावाचक नहीं होता है। अतः उसके प्रति उपसर्ग और गति भी नहीं होते हैं। तिङ् का ग्रहण होने से तदन्तविधि में तिङन्त को मानकर उसको उदात्त वाला देखकर पूर्ववर्ती गति का अनुदात्तत्व हो जाता है। ]

तब तो आम्प्रत्ययान्त परे रहते नहीं प्राप्त होता है—प्रपचतितराम्, प्रपचतितमाम्। [ क्योंकि तरप् तमप् के बाद आम् प्रत्यय होने पर यह तिङन्त न रहकर आमन्त हो जाता है ? ] यहाँ कुछ आचार्य आमन्त के साथ गतिसंज्ञक का समास करते हैं, उनके मत में अव्यय पूर्वपद का प्रकृतिस्वर हो जाने पर [ शेष का 'अनुदात्तं पदमेकवर्जम्' सूत्र से शेषनिघात के कारण ] तिङ् का ग्रहण न होने पर भी परवर्ती अनुदात्त ही होता है इसलिये गति संज्ञक का निघात नहीं सिद्ध होता है। [ इसका भाव यह है कि इस प्रकार तो तिङ् का ग्रहण न होने पर भी परवर्ती आमन्त उदात्त नहीं होता है इसलिये गति का निघात भी नहीं होता है। ]

**अथ तरबन्तस्य गतिसमासः? एवमपि सतिशिष्टत्वादाम एव स्वरे सति गतेः 'अनुदात्तं पदमेकवर्जम्' ( ६।१।१५८ ) इत्येवानुदात्तत्वं सिद्धम्।**

**येषाम् '"गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' ( पु० प० ) इत्यनेन वचनेन कृदन्तेनैव प्राक्सुबुत्पत्तेः समासो भवति, नान्येन" इति दर्शनम्, तेषामेवंविधे विषये समासेन नैव भवितव्यमिति। पृथक् स्वरप्रवृत्तौ सत्यामनेन निघातेन प्रयोजनमस्ति, तदर्थं यत्नः कर्तव्यः।**

**न्यासः**

इत्यादिना पूर्वपदस्याव्ययस्य प्रकृतिस्वरे सति शेषस्य 'अनुदात्तं पदमेकवर्जम्' इत्यनुदात्तत्वेन भवितव्यम्। अतोऽक्रियमाणेऽपि तिङ्ग्रहणे परमामन्त्रमुदात्तं न भवतीति गतिनिघातो नैव सिध्यति। ततो नायं दोषस्तिङ्ग्रहणे सत्येव, किं तर्हि? असत्यपि। तेन तिङ्ग्रहणे क्रियमाण एव चोदयितुं युक्तमित्यभिप्रायः।

**अथेत्यादि।** अथ तरबन्तेन गतिसमासः क्रियेत? एवमप्ययुक्तमेव चोद्यम्। तथा हि—'तरबन्तस्य गतिसमासः' इत्यस्मिन् पक्षे प्राग् गतिसमासे कृते पूर्वपदस्य च प्रकृतिस्वरत्वे पश्चादामा भवितव्यम्, तथा च सतिशिष्टत्वादाम एवोदात्तत्वे सति गतेः 'अनुदात्तं पदमेकवर्जम्' इत्यनेनैवानुदात्तत्वं सिद्धम्, अतो नार्थं एतत्-सूत्रविहितेन गतिनिघातेनेति। वाभावे वाह चोदकः—**येषां स्वित्यादि।** 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इत्यत्र दर्शनद्वयम्—'गत्यादयोऽविशेषेण समस्यन्ते कृद्भिः सह प्राक् सुबुत्पत्तेः' इत्येकं दर्शनम्; 'गत्यादयः कृद्भिरेव समस्यन्ते नान्यप्रत्ययान्तैः, तैश्च प्राक् सुबुत्पत्तेः' इति द्वितीयम्। तत्र येषां पूर्वं दर्शनं तान्प्रत्यामन्ते नहि न प्राप्नोतीति सत्यमयुक्तमेतच्चोद्यम्। येषां तु द्वितीयं दर्शनं तान् प्रत्युक्तमेव। तथाहि—तेषामेवंविधविषये प्रपचतितरामित्येवं प्रकारे यत्र कृत्प्रयोगो नास्ति तत्र समासेन नैव भवितव्यम्। अथ पृथक् स्वरः प्राप्नोति—प्रशब्दस्य 'उपसर्गाश्चाभिवर्जम्' इत्याद्युदात्तत्वं प्राप्नोति, पचतितरामित्यत्रापि प्रत्ययस्वरेणाम उदात्तत्वम्? तत्र पृथक्स्वरप्राप्तो सत्यामनेन निघातेन प्रयोजनम्। एष च गतिनिघातस्तिङ्ग्रहणे क्रियमाणे सत्यामन्तेन प्राप्नोतीति भावः। इतर आह—**तदर्थं यत्नः कर्तव्य इति।** स पुनरत्र व्याख्यानविशेषः। इह चकारः क्रियते, स चानुक्तसमुच्चयार्थः, तेनामन्तेऽपि निघातो भविष्यतीति।

**पदमञ्जरी**

प्रपचतिदेश्याद्यर्थं कृद्ग्रहणं स्थितम्, न प्रत्याख्यातमिति पूर्वपदप्रकृतिस्वरस्यैवात्र प्रसङ्ग इति मन्यते। **अक्रियमाणेऽपि तिङ्ग्रहण इति।** यथा वा क्रियमाणे तिङ्ग्रहणे उदात्तवत्त्वे सति निघातः सिध्यति, तथाऽनन्तरमेवोक्तम्।

**अथ तरबन्तस्येति।** यथायं पक्षः सम्भवति, यश्चात्र पक्षे दोषः—तत्सर्वम् 'गतिकारकोपपदात्कृत्' इत्यत्रैवोक्तम्।

**भावबोधिनी**

यदि तरप् प्रत्ययान्त के साथ गतिसंज्ञक का समास किया जाय? ऐसा होने पर भी सतिशिष्ट अर्थात् बाद में किया जाने वाला स्वर होने से 'आम् का ही स्वर हो जाने पर "अनुदात्तं पदमेकवर्जम्" इसी से अनुदात्तत्व सिद्ध हो जाता है। [ फलतः इस सूत्र से निघात करने का कोई प्रयोजन नहीं है। ]

जिनकी—'गति, कारक और उपपदों का कृदन्त शब्दों के साथ समास सुप् प्रत्ययों की उत्पत्ति के पहले ही हो जाता है'—इस वचन द्वारा सुप् की उत्पत्ति के पहले केवल कृदन्त के साथ ही समास होता है, अन्य के साथ नहीं होता है यह दर्शन = मत है, उनके मत में तो ऐसे विषयों में समास ही नहीं होना चाहिए। अलग-अलग स्वर की प्रवृत्ति होने पर इस [ सूत्र ] से निघात करना प्रयोजन है, उसके लिये यत्न करना चाहिए।

**विमर्श—** यहाँ यत्न यही है कि विशेष व्याख्यान द्वारा आमन्त में भी निघात किया जायगा। अथवा पदमञ्जरीकार के अनुसार 'यत्क्रियायुक्ताः' यहाँ कर्मधारय समास मानकर—'या चासौ किया = यत्क्रिया' ऐसा करके उपसर्गत्व और गतिसंज्ञा कर लेनी चाहिये। अथवा सूत्र मे तिङ् का ग्रहण ही नहीं करना चाहिये जिससे इतना ही सूत्रार्थ होगा—उदात्तवान् परे रहते गति का अनुदात्तत्व होता है। यह स्थिति आमन्त में भी मिल जाती है कोई दोष नहीं रहता है।

उदात्तवतीति किम् ? प्रपचति । प्रकरोति ॥

**३६८६. आमन्त्रितं पूर्वमविद्यमानवत् ॥ ७२ ॥ (४१२)**

**आमन्त्रितं पूर्वमविद्यमानवद्भवति, तस्मिन् सति यत्कार्यं तन्न भवति, असति यत्तद्भवति ।**

**कानि पुनरविद्यमानवत्त्वे प्रयोजनानि ? आमन्त्रित-तिङ्निघात-युष्मदस्मदादेशाभावाः । देवदत्त, यज्ञदत्तेत्यत्रामन्त्रितस्य पदात्परस्ये(८।१।१९)ति निघातो न भवति । षाष्ठिकामन्त्रिताद्युदात्तत्वं ( ६।१।१९८ ) भवति; देवदत्त पचसीत्यत्र 'तिङ्ङतिङः' ( ८।१।२८ ) इति निघातो न भवति; देवदत्त तव ग्रामः स्वम्,**

**न्यासः**

**प्रपचति, प्रकरोतीति ।** 'तिङ्ङतिङः' इति निघातादुभयमप्येतदुदात्तवन्न भवति ॥ ७१ ॥

**आमन्त्रितं पूर्वमविद्यमानवत् । तस्मिन् सतीत्यादिना**ऽविद्यमानवद् भवतीत्यस्यार्थमाचष्टे । **अविद्यमानवदिति ।** वतिना निर्देशोऽयम्, अविद्यमानेन तुल्यं वर्त्तत इत्यविद्यमानवत् । वतिश्च सादृश्ये भवति, एवञ्च तस्याविद्यमानेन सादृश्यं भवति यदि सत्यपि तस्मिंस्तन्निबन्धनं कार्यं न भवति । असति च तस्मिन् यत् कार्यं तदसत्तानिबन्धं तत् सत्यपि तस्मिन् भवति । **आमन्त्रितनिघातेनेत्यादिना** तस्मिन् सति यत् कार्यं प्राप्नोति तदभावमविद्यमानवद्भावस्य प्रयोजनं दर्शयति । **देवदत्त यज्ञदत्तेति ।** अत्र पूर्वस्याविद्यमानत्वादसति निघाते यज्ञदत्तशब्दस्य षाष्ठिकमेवामन्त्रिताद्युदात्तत्वं भवति । **देवदत्त पचसीति ।** अत्रापि तिङन्तस्यासति निघाते धातुस्वरेणाद्युदात्तत्वं भवति । **देवदत्त तव ग्रामः स्वम्, देवदत्त मम ग्रामः स्वमिति ।** 'तवममौ ङसि' इति तव-

**पदमञ्जरी**

**येषां स्वित्यादि ।** कुगत्यादीनां कृदन्तेनैव, तत्रापि प्राक् सुबुत्पत्तेरित्यर्थः । **तदर्थं यत्नः कर्त्तव्य इति ।** तत्रायं यत्नः—तिङ्ग्रहणं न करिष्यते; या क्रिया, यत्क्रियेति वाऽऽश्रतिष्यत इति ॥ ७१ ॥

**आमन्त्रितं पूर्वमविद्यमानवत् ॥** किमिदमविद्यमानवत् ? इत्याह— **तस्मिन्सतीत्यादि ।** तत्र तस्मिन्सति यत्कार्यं तन्न भवतीत्यत्रोदाहरणमाह— **आमन्त्रिततिङ्निघातेति ।** असति च यत्कार्यं तद्भवतीत्यत्रोदाहरणमाह— **पूजायामित्यादि । आमन्त्रिताद्युदात्तत्वे कर्त्तव्ये इति ।** असति पूर्वग्रहणे 'आमन्त्रितमविद्यमानवत्' इत्युच्यमाने स्वस्याद्युदात्तत्वेऽपि षाष्ठिके कर्तव्येऽविद्यमानवत् स्यात्, क्व इदानीं तस्यावकाशः ? यत्राविद्यमानवद्भावः प्रतिषिध्यते, विकल्प्यते वा; तथा 'अपादादा' वित्यधिकारात्पादादिरप्यवकाशः— 'उषो नो अघषु हवा व्युच्छनन्', नसभावो ह्यत्राविद्यमानवद्भावाभावादेव भवति; 'इन्द्र त्वा वृषभं वयम्', त्वादेशो भवति । एवं तु 'इन्द्र पिब तुल्यं सुतो मदाय, इन्द्र पिब वृषभूतस्य वृष्णः, अग्ने याहि शस्त्रिभिः, वायो याहि शिवादिव'—इत्यादौ तिङ्निघातः प्राप्नोति ? कर्त्तव्योऽत्र यत्नः, उक्तं हि पुरस्तात्—'आपादपरिसमाप्तेरपादादावित्यधिकारः' इति ।

**भावबोधिनी**

( अनु० ) उदात्तवाला परे हो—इसका क्या फल है ? प्रपचति । प्रकरोति । [ इनमें अतिङन्त से परे तिङन्त का निघात होता है—'तिङ्ङतिङः' इस सामान्य सूत्र से । अतः उदात्तवान् परे नहीं है । गति अनुदात्त नहीं होता है । सामान्य नियम 'उपसर्गाश्चाभिवर्जम्'' वचन से उदात्त हो जाता है ] ॥ ७१ ॥

[ किसी पदविशेष से ] पूर्ववर्ती आमन्त्रित अविद्यमानवत् हो जाता है, उस आमन्त्रित के रहने पर जो कार्य होता है वह नहीं होता है । और उस आमन्त्रित के न रहने पर जो कार्य होता है वह [ रहने पर भी अविद्यमान वत् मानकर ] हो जाता है ।

अविद्यमानवत् हो जाने में कौन-कौन से प्रयोजन हैं ? (१) आमन्त्रित का और (२) तिङ् का निघात, (३) युष्मद् एवम् अस्मद् के आदेशों का अभाव अर्थात् ये कार्य नहीं हो पाते हैं । क्रमशः उदा० (१) देवदत्त, यज्ञदत्त, यहाँ पद से परवर्ती आमन्त्रित ( यज्ञदत्त ) का निघात ''आमन्त्रितस्य च'' [ ८।१।१९ इस अष्टम अध्यायस्थ सूत्र से ] नहीं होता है, अपि तु षष्ठ अध्याय वाले 'आमन्त्रितस्य च' (६।१।१९८) सूत्र द्वारा आमन्त्रित ( यज्ञदत्त )

देवदत्त मम ग्रामः स्वम्—इत्येवमादिषु युष्मदस्मदादेशा न भवन्ति। पूजायामनन्तरप्रतिषेधः प्रयोजनम्—यावद्देवदत्त पचसीत्यत्रापि 'पूजायां नानन्तरम्' (८।१।३७) इत्येव प्रतिषेधो भवति। 'जात्वपूर्वम्' (८।१।४७) इत्येतद्—देवदत्त जातु पचसीत्यत्रापि भवति। 'आहो उताहो चानन्तरम्' (८।१।४९) इति—आहो देवदत्त पचसि उताहो देवदत्त पचसीत्यत्रापि भवति। 'आम एकान्तरमामन्त्रितमनन्तिके' (८।१।५५) इति—आम् भोः पचसि देवदत्त इत्यत्रापि भवति।

आमन्त्रितमिति किम्? देवदत्तः पचति। पूर्वमिति किम्? देवदत्त इत्येतस्यामन्त्रिताद्युदात्तत्वे

**न्यास**

ममादेशौ सास्त्रिकौ। **इत्येवमादिष्विति।** आदिशब्देन देवदत्त तुभ्यं दीयते—इत्येवमादीनां ग्रहणम्। **युष्मदस्मदादेशा न भवन्तीति।** 'तेमयावेकवचनस्य' इत्येवमादयः। **पूजायामनन्तरप्रतिषेधः प्रयोजनमित्यादिना** तस्मिन्नामन्त्रितेऽसति यत् कार्यं प्राप्नोति तस्य सत्यपि तस्मिन् भावेऽविद्यमानवद्भावस्य प्रयोजनं दर्शयति। **यावद् देवदत्त पचसीत्यत्रापीत्यादि।** यत्राप्यामन्त्रितं व्यवधायकमित्येषोऽपिशब्दस्यार्थो वेदितव्यः।

**देवदत्तः पचतीति।** अत्राविद्यमानत्वाभावात् तिङ्निघातो भवत्येव। **पूर्वमिति।** किं देवदत्त इति पूर्वं परमपि खलु भवति? न चेह परमस्तीति नास्ति देवदत्तेत्यस्य पूर्वत्वम्। तेनामन्त्रिताद्युदात्तत्वे कर्तव्ये नाविद्यमानवद् भवति। **देवदत्त पचतीति।** अत्र पचसीत्येतदपेक्षया देवदत्तशब्दस्य पूर्वत्वमस्तीत्यविद्यमानवद्भावेन तस्य भवितव्यम्, ततश्चामन्त्रिताद्युदात्तत्वं तस्य न स्यात्। इमं मे गङ्गे यमुने—इत्यत्र च गङ्गेशब्दस्य यमुनेशब्दापेक्षमेव पूर्वत्वमिति तमेव प्रति तस्याविद्यमानवद्भावः; न मेशब्दं प्रति; ततश्च तस्य मेशब्दस्य यमुनेशब्देनानन्तर्यमपनयन् स निघातनिमित्तभावं प्रतिबध्नीयादिति यमुनेशब्दस्य निघातो न

**पदमञ्जरी**

यदि 'आमन्त्रितं पूर्वमविद्यमानवत्' देवदत्त पचसीत्येतदपेक्षया देवदत्तशब्दस्य पूर्वत्वमस्तीत्यविद्यमानवत्त्वे सति आमन्त्रिताद्युदात्तत्वं न स्यादित्यत आह—पूर्वत्वं चेति। पूर्वशब्दस्य सम्बन्धिशब्दत्वाद्यं प्रति पूर्वत्वं तत्कार्यं प्रत्येवाविद्यमानवत्त्वम्, न स्वकार्यं प्रति; तेन नायं दोष इत्यर्थः। कार्यशब्देनैतद्दर्शयति—अविद्यमानवत् कार्यमत्रातिदिश्यते। तत्र पूर्वशब्दस्य सम्बन्धिशब्दत्वेन परस्य कार्ये कर्त्तव्य इत्येतावदाश्रीयते, न तु परं प्रत्यविद्यमानवत्; पूर्वं तु प्रति विद्यमानवदित्यर्थं इति स्यात्। इमं मे गङ्गे यमुने सरस्वतीत्यत्र गङ्गेशब्दस्य यमुनेशब्दं प्रत्येवाविद्यमानवत्त्वं न मेशब्दं प्रतीति व्यवधानाद् यमुनेशब्दस्य निघातं प्रति मेशब्दो निमित्तं न स्यात्। यथोपदर्शिते त्वर्थे, परस्य कार्ये कर्त्तव्ये इत्येतावत्तत्कार्यं स्वनिमित्तमन्यनिमित्तं वेति विशेषाभावाद् मेशब्दापेक्षेऽपि निघाते गङ्गेशब्दस्याविद्यमानवत्त्वं सिध्यति। तदेतत् स्वनिमित्तेऽन्यनिमित्ते चेत्यत्र सूचितम्।

**भावबोधिनी**

का आद्युदात्त होता है। (२) देवदत्त पचसि—यहाँ पर (अविद्यमानवद्भाव होने से) अतिङन्त से परे न मिलने के कारण] "तिङ्ङतिङः" (८।१।२८) इस सूत्र से तिङन्त का निघात नहीं प्राप्त होता है। (३) देवदत्त तव ग्रामः स्वम्, देवदत्त मम ग्रामः स्वम्—आदि वाक्यों में युष्मद् तथा अस्मद् के स्थान पर ['तेमयावेकवचनस्य' ८।१।२२ आदि सूत्रों से 'ते' 'मे' वां नौ वस् नस् आदि] आदेश नहीं होते हैं। (४) पूजा अर्थ में अनन्तर (अव्यवहित) के निघात का प्रतिषेध प्रयोजन है—'यावद् देवदत्त पचसि' यहाँ भी "पूजायां नानन्तरम्" (८।१।३७) से ही प्रतिषेध होता है। [क्योंकि देवदत्त इस आमन्त्रित के अविद्यमानवद् हो जाने से अव्यवहित तिङन्त मिल जाता है। अनुदात्त नहीं होता है, अपि तु निघात ही होता है।] (५) जात्वपूर्वम्' (८।१।४८) इसी से 'देवदत्त जातु पचसि' यहाँ भी तिङन्त का अनुदात्त नहीं होगा। [क्योंकि पूर्ववर्ती पद 'देवदत्त' का अविद्यमानवद्भाव हो जाने से पद से परे नहीं रहता है।] (६) "आहो उताहो चानन्तरम्" (८।१।४९) यह सूत्र 'आहो देवदत्त पचसि, उताहो देवदत्त पचसि—इनमें भी अनुदात्त का प्रतिषेध करता है। [क्योंकि आमन्त्रित देवदत्त का अविद्यमानवद्भाव हो जाने से 'आहो' से अव्यवहित तिङन्त मिल जाता है।] (७) "आम एकान्तरमामन्त्रितमनन्तिके' (८।१।५५) यह

कर्तव्ये नाविद्यमानवद्भवति। पूर्वत्वं च परापेक्षं भवतीति परस्यैव कार्ये स्वनिमित्ते, अन्यनिमित्ते वा तदविद्यमानवद्भवति, न तु स्वकार्ये। देवदत्त पचसीत्यत्रापि ह्यामन्त्रिताद्युदात्तत्वं भवत्येव।

इह—इमं मे गङ्गे यमुने (ऋ० १०।७५।५) इति गङ्गेशब्दः पूर्वमामन्त्रितम्, ततः परस्य

**न्यासः**

स्यादित्येच्चोद्यद्वयमाशङ्क्याह—**पूर्वत्वं चेत्यादि**। चकारोऽवधारणे, भिन्नक्रमश्च। परापेक्षमेवेत्येवं द्रष्टव्यम्। इतिकरणो हेतौ। येषां यद्भावो यदपेक्षवद् भवति तेषां तद्भावेनानूद्यमानानां विधीयमानो धर्मस्तद्विषय एव प्रतीयते। तद्यथा—पुत्रः कार्येष्ववहित इति पुत्रस्य पुत्रभावः पुत्रापेक्ष इति तस्य पुत्रभावेनानूद्यमानस्य विधीयमानं कार्येष्ववहितत्वं यदपेक्षं पुत्रत्वं तत्कार्येष्ववगम्यते, नान्यकार्येषु। पूर्वत्वं चेदं परापेक्षमेव। तस्मात् तदनूद्यामन्त्रितस्याविद्यमानवद्भावो यदपेक्षं तत्पूर्वत्वं तस्यैव परस्य कार्ये कर्त्तव्ये भवति, नान्यस्य। किंविशिष्टे कार्ये? स्वनिमित्ते, अन्यनिमित्ते वा। स्वं निमित्तं यस्य तत् स्वनिमित्तम्, आमन्त्रितमित्यर्थः। तस्मादन्यच्छब्दान्तरं निमित्तं यस्य तदन्यनिमित्तम्। एत एवं परस्यैव कार्ये कार्त्तव्ये तदामन्त्रितमविद्यमानवद् भवति, न तु स्वकार्ये कर्त्तव्ये, तेन देवदत्त पचसीत्यत्रामन्त्रिताद्युदात्तत्वं न परस्य कार्यम्; किं तर्हि? आमन्त्रितस्यैव। यतः परस्य कार्यमनुदात्तत्वम्, तस्मिंस्त्वविद्यमानवद् भवत्येव।

एवं प्रथमचोद्यं निराकृत्य द्वितीयं निराकर्तुमाह—**इमं मे गङ्गे यमुने इत्यादि**। अत्रापि पूर्वत्वं च परापेक्षं भवतीत्येष एव हेतुः। गङ्गेशब्दः पूर्वमामन्त्रितान्तः स्वयमविद्यमानवत्त्वान्निमित्तं न भवतीति सम्बन्धनीयम्। क्व विषये निमित्तं न भवति? परस्यैव यमुनेशब्दस्यानुदात्तत्वे कर्त्तव्ये। मेशब्दस्य च निमित्तभावं न प्रतिबध्नातीति गङ्गेशब्दः पूर्वमामन्त्रितो यमुनेशब्दस्यानुदात्तत्वे कर्तव्ये विद्यमानवत्त्वादिति

**पदमञ्जरी**

तदेवमुक्तं दर्शयति—**इहेत्यादि**। गङ्गेशब्दोऽविद्यमानवत्त्वात्स्वयं निमित्तं न भवतीत्येतावत्, न तु मेशब्दस्य निमित्तभावं प्रतिबध्नातीत्यर्थः। परं प्रत्यविद्यमानवद्भवतीत्याश्रीयमाणे हि तथा स्यात्।

ननु वत्करणमन्तरेणापि 'ग्रोतो णित्' इत्यादावतिदेशो दृश्यते, तत्किमत्र वत्करणेन? नन्वसति वत्करणे 'पूर्वमामन्त्रितमविद्यमानम्' इत्युच्यमाने पूर्वस्यामन्त्रितस्य निवृत्तिः स्यात्? नैष दोषः; अर्थप्रत्यायनाय शब्दप्रयोगादनिवृत्तेऽर्थे शब्दनिवृत्त्यभावात्। अथापि परप्रयोगो भवतु, पूर्वप्रयोगो मा भूदित्यर्थः कल्पेत? तथापि राजदन्तादिषु परमामन्त्रितं वेति वक्तव्यं स्यात्। परमेवामन्त्रितं भवति, न पूर्वमित्यर्थः। तदेवमन्तरेणापि वतिमतिदेशः सिद्धः? इदं तर्हि प्रयोजनम्—स्वाश्रयमपि यथा स्यात्—आं भो देवदत्त 'आम एकान्तरमामन्त्रितमनन्तिके' इत्येकान्तरता यथा स्यात्। एकवचनान्तं ह्युत्तरसूत्रस्य विषयः, बहुवचनान्ते तु

**भावबोधिनी**

सूत्र 'आम् भोः पचसि देवदत्त' यहाँ भी प्रवृत्त होता है। [ क्योंकि 'भोः' इस आमन्त्रित का अविद्यमानवद्भाव हो जाने के कारण 'आम् से परे एक पद के ही व्यवधान के बाद आमन्त्रित 'देवदत्त' है। अतः अनुदात्त नहीं होता है। ]

आमन्त्रित—इसका क्या फल है? देवदत्तः पचति। [ यहाँ देवदत्त आमन्त्रित = सम्बोधनान्त नहीं है। अविद्यमानवद्भाव नहीं होता है। "तिङ्ङतिङः" से निघात होता है। ] पूर्ववर्ती आमन्त्रित—इसका क्या फल है? 'देवदत्त' इस अकेले आमन्त्रित का अनुदात्तत्व करने के प्रसङ्ग में अविद्यमानवद्भाव नहीं होता है। क्योंकि पूर्वत्व तो पर की अपेक्षा होता है इसलिये परवर्ती का ही स्वनिमित्तक या अन्यनिमित्तक कार्य करना हो तो वह पूर्ववर्ती अविद्यमानवद् होता है, न कि अपने ही कार्य के करने में अविद्यमानवत् होता है। 'देवदत्त पचसि' यहाँ भी आमन्त्रित का आद्युदात्त होता ही है। [ अविद्यमानवद् नहीं होता है। ]

"इमं मे गङ्गे यमुने सरस्वति' इस मन्त्रवाक्य में 'गङ्गे' शब्द पूर्ववर्ती आमन्त्रित है, उससे परवर्ती 'यमुने' शब्द का अनुदात्तत्व ( 'आमन्त्रितस्य च' इससे ) करने में स्वयम् अविद्यमानवत् हो जाने के कारण निमित्त

यमुनेशब्दस्यानुदात्तत्वे कर्तव्ये स्वयमविद्यमानवत्त्वान्निमित्तं न भवति। मेशब्दस्य निमित्तभावं न प्रतिबध्नाति॥

**३६८७. नामन्त्रिते समानाधिकरणे सामान्यवचनम्॥ ७३॥ (४१३)**

**अविद्यमानवत्त्वस्य प्रतिषेधः। आमन्त्रितान्ते समानाधिकरणे परतः पूर्वमामन्त्रितान्तं सामान्यवचनं नाविद्यमानवद्भवति, किं तर्हि? विद्यमानवदेव। अग्ने गृहपते। माणवक जटिलकाध्यापक। पूर्वस्य विद्यमानवत्त्वात्परमनुदात्तमेव भवति।**

**न्यासः**

सर्वमपेक्षते। इह पूर्वशब्दस्य सम्बन्धिशब्दत्वात् परस्य कार्ये कर्तव्ये पूर्वस्यामन्त्रितस्याविद्यमानवद्भावो विधीयते। इमं मे गङ्गे यमुने इत्यत्र च यद्यपि गङ्गेशब्दादन्यच्छब्दान्तरं म इत्येतद् यमुनेशब्दस्यानुदात्तस्य निमित्तम्, तथापि तदनुदात्तत्वं परस्यैवामन्त्रितस्य कार्यमिति तस्मिन्नपि कर्तव्ये गङ्गेशब्दोऽविद्यमानवद् भवति। अत एव प्रागुक्तम्—अन्यनिमित्ते वैतेनाविद्यमानत्वान्मेशब्दस्य निघातं प्रति यो निमित्तभावः तं न प्रतिबध्नाति। वत्करणं किमर्थम्? स्वाश्रयमपि यथा स्यात्—आम भो देवदत्त३। 'आम एकान्तरमामन्त्रतमनन्तिके' इत्येकान्तरतानिबन्धनो निघातप्रतिषेधः सिद्धो भवति। बहुवचनान्तञ्चैतद् विज्ञेयम्; एकवचनान्ते हि 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' इति प्रतिषेधान्नैवाविद्यमानवत्त्वमस्ति। बहुवचनान्ते तु 'विभाषितं विशेषवचने बहुवचनम्' इति पक्षे विद्यते।

ननु च परार्थे प्रयुज्यमानाः शब्दा अतिदेशं गमयन्ति, यथा—गोर्वाहीक इति, तत्र विद्यमानस्याविद्यमानमिति वचनादतिदेशो गम्यते। अतिदेशधर्मश्च स्वाश्रया निवृत्तिरिति नार्थो वतिना? सत्यमेतत्; एवं तु मन्यते—वतिमन्तरेण प्रयोगव्यवस्थार्थमिदं स्यात्, कुतश्चिदामन्त्रितं पूर्वं न भवतीति। तथा चामन्त्रितस्यामन्त्रितेन पूर्वेणैकान्तरता न स्यादिति॥ ७२॥

**नामन्त्रिते समानाधिकरणे सामान्यवचनम्॥ समानाधिकरणमिति।** समानाभिधेयमित्यर्थः। **अग्ने गृहपत इति।** अग्निशब्दोऽत्राग्निमात्राभिधायित्वात् सामान्यवचनोऽपि गृहपतिशब्देन विशेषाभिधायिना व्यवच्छिद्यमानस्तद्वाच्ये गार्हपत्याख्येऽग्निविशेषे एवावतिष्ठत इति गृहपतिशब्दस्तेन समानाधिकरणः। एवं **माणवक जटिलकाध्यापक** इत्यत्रापि समानाधिकरणता विज्ञेया। अत्र जटिलकशब्दस्यापेक्षाभेदात् सामान्ये विशेषत्वं न, किं तर्हि? माणवकापेक्षया विशेषत्वम्, अध्यापकापेक्षया सामान्यभावः। अत्र जटिलके

**पदमञ्जरी**

विभाषितं विशेषवचने बहुवचनम्' इति पक्षे निघातप्रसङ्गः। यद्यप्यातिदेशिककार्यविरुद्धं स्वाश्रयमतिदेशेऽसत्यपि वत्करणे भवति, इह तु वत्करणाद्यत्नाद्विरुद्धमपि क्वचित्प्राप्यते। अविद्यमानवत्त्वविरोधिनी ह्येकान्तरता। व्याख्यानाच्चातिप्रसङ्गो नोद्भावनीयः॥ ७२॥

**नामन्त्रिते समानाधिकरणे सामान्यवचनम्॥** द्वौ नञौ प्रकृतमर्थं सूचयत इत्याह—**किं तर्हि विद्यमानवदेवेति। माणवक जटिलकाध्यापकेति।** अत्र जटिलशब्दो माणवकशब्दापेक्षया विशेषवचनः,

**भावबोधिनी**

नहीं बनता है। परन्तु 'मे' शब्द को निमित्तता को नहीं रोकता है। [अतः 'मे' इस पद को मान कर पद से परे आमन्त्रित मिल जाने के कारण 'यमुने' आदि का अनुदात्तत्व होने में बाधा नहीं है।]॥ ७२॥

अविद्यमानवद्भाव का प्रतिषेध है। समानाधिकरण (=समान अर्थवाला) आमन्त्रितान्त परे रहते पूर्ववर्ती सामान्यार्थवाची आमन्त्रितान्त अविद्यमानवत् नहीं होता है। तो क्या होता है? विद्यमान के समान ही होता है। उदा० अग्ने गृहपते। माणवक जटिलकाध्यापक। [इनमें 'अग्ने' और 'माणवक' समानाधिकरण तथा आमन्त्रितान्त हैं। और सामान्य अर्थ कहने वाले भी हैं।] अतः पूर्ववर्ती का विद्यमानवद्भाव होने से परवर्ती आमन्त्रितान्त का अनुदात्तत्व ही ('आमन्त्रितस्य च' ८।१।१९ सूत्र से) होता है।

आमन्त्रित इति किम् ? देवदत्त पचसि । समानाधिकरण इति किम् ? देवदत्त पण्डित यज्ञदत्त । अत्र यज्ञदत्तविशेषणं पण्डितशब्दः; न पूर्वेण समानाधिकरणः । सामान्यवचनमिति किम् ? पर्यायेषु मा भूत्—'अघ्न्ये देवि सरस्वति ईडे काव्ये विहव्ये' । एते पर्यायाः । एवं ह्युक्तम्—'एतानि ह्यघ्न्ये नामानीति' ( बा० सं० ८।४३ ) ॥

**३६८८. विभाषितं विशेषवचने बहुवचनम्**[1] ॥ ७४ ॥ (३७५५)

पूर्वेणाविद्यमानवत्त्वे प्रतिषिद्धे विकल्प उच्यते । विशेषवचने समानाधिकरणे आमन्त्रितान्ते

**न्यासः**

समानाधिकरणे परतो माणवकस्याविद्यमानवत्त्वं न भवति, अध्यापके तु जटिलकशब्दस्य । **पूर्वस्येत्यादिना** प्रतिषेधस्य फलं दर्शयति ।

**देवदत्त पचसीति** । तत्र देवदत्तस्य योऽभिधेयोऽर्थस्तत्रैव कर्तरि लकारो विहित इति भवति पचसीत्येतद्देवदत्तशब्देन समानाधिकरणम् । आमन्त्रितं तु न भवति—देवदत्त यज्ञदत्तेति । देवदत्तशब्दोऽत्र न संज्ञाशब्दो गृह्यते, किं तर्हि ? क्रियानिमित्तकः; अन्यथा संज्ञाशब्दस्यैकवस्तुनिष्ठत्वात् सामान्यवचनः, स न स्यात् । **एते पर्याया इति** । एतेन सामान्यवचनत्वाभावं दर्शयति । विशेषापेक्षं सामान्यम् । न चात्र कस्यचिद् विशेषो वाच्यो यदपेक्षया सामान्यं स्यात्; सर्वेषामत्यन्ताभिन्नार्थत्वात्, अन्यथा पर्याया एव न स्युः । कथं पुनर्ज्ञायन्ते पर्याया एते ? इत्याह—**एवं ह्युक्तमित्यादि** ॥ ७३ ॥

**विभाषितं विशेषवचने बहुवचनम्** ॥ पूर्वेण नित्यं विद्यमानवत्त्वे प्राप्ते विकल्पार्थमिदं वचनम् । **देवाः शरण्या इति** । यदाऽविद्यमानवत्त्वं तदा शरण्या इत्यस्यामन्त्रिताद्युदात्तत्वं भवति, अन्यथा निघातः । एवं **ब्राह्मणा वैयाकरणा** इत्यत्रापि वैयाकरणशब्दस्याद्युदात्तत्वम्, पाक्षिकनिघातश्च वेदितव्यः ।

अथ विशेषवचनं किमर्थम्, यावता 'सामान्यवचनम्' इत्यनुवर्त्तते, सामान्यञ्च विशेषापेक्षम्, तत्रान्तरेणापि विशेषवचनं, विशेषवचनं विज्ञास्यते ? इत्यत आह—**सामान्यवचनाधिकारादेवेत्यादि** । य एवं न शक्नोति

**पदमञ्जरी**

अध्यापकशब्दापेक्षया तु सामान्यवचन इति द्वयोरप्यविद्यमानवत्त्वं न भवति । **पूर्वस्येत्यादिना** प्रतिषेधस्य फलं दर्शयति । **देवदत्तयज्ञदत्तेति** । 'सामान्यवचनं विशेषवचनापेक्षम्' इति वक्ष्यत्युत्तरसूत्रे, ततश्च यथा यज्ञदत्तशब्दः समानाधिकरणो न भवति, एवं पूर्वामन्त्रितार्थगतविशेषाकारवचनोऽपि न भवतीति देवदत्तशब्दोऽपि सामान्यवचनो न भवति, तस्माद् द्व्यङ्गविकलत्वाचिचन्त्यमेतत् । **एवं ह्युक्तमिति** । **तैत्तिरीयके ब्राह्मणे** सहस्रतमीं प्रकृत्य इडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुते—एतानि ते अघ्निये नामानीति । वृत्तौ त्वन्यथा पाठः **शाखान्तरे** द्रष्टव्यः ॥ ७३ ॥

**विभाषितं विशेषवचने** ॥ **बहुवचनमिति** वार्त्तिके[1] दर्शनात् प्रक्षिप्तम् । शरणत्वेन प्राप्तिः शरणम्,

**भावबोधिनी**

आमन्त्रित परे रहते—इसका क्या फल है ? देवदत्त पचसि । [ 'पचसि' आमन्त्रित नहीं है । ] समानाधिकरण—इसका क्या फल है ? देवदत्त पण्डित यज्ञदत्त । यहाँ यज्ञदत्त का विशेषण पण्डित शब्द है, यह पूर्ववर्ती पद ( देवदत्त ) का समानाधिकरण नहीं है । [ अतः निषेध न होकर अविद्यमानवद्भाव ही होता है । ] सामान्यवाची—इसका क्या फल है ? पर्यायवाचकों में न होने लगे—'अघ्न्ये देवि सरस्वति ईडे काव्ये विहव्ये ।' ये सभी पर्यायवाची हैं । क्योंकि ऐसा कहा गया है—'हे अघ्नि ! इतने तुम्हारे नाम हैं ।' इससे स्पष्ट है कि ये एक ही देवी के नाम हैं । इनमें भी निषेध नहीं होता है । ] ॥ ७३ ॥

पूर्ववर्ती सूत्र द्वारा अविद्यमानवद्भाव का प्रतिषेध होने पर यह विकल्प कहा जा रहा है । विशेष अर्थवाचक समानाधिकरण ( समानार्थक ) आमन्त्रितान्त परे रहते पूर्ववर्ती बहुवचनान्त आमन्त्रितान्त विकल्प से अविद्यमानवद् होता है । उदा० देवाः शरण्याः । ब्राह्मणाः वैयाकरणाः । [ यहाँ देव और ब्राह्मण शब्द सामान्यवाची

---

१-१. 'बहुवचनम्' इत्यंशो वार्त्तिके दृश्यते तेन सूत्रेऽस्य प्रक्षेपो बोध्यः ।

परतः पदमामन्त्रितं बहुवचनान्तं विभाषितमविद्यमानवद्भवति । देवाः शरण्याः देवाः शरण्याः । ब्राह्मणा वैयाकरणाः, ब्राह्मणा वैयाकरणाः ।

सामान्यवचनाधिकारादेव विशेषवचन इति सिद्धे विशेषवचनग्रहणं विस्पष्टार्थम् ।

बहुवचनमिति किम् ? माणवक जटिलक । नित्यमेतद्वि[1]द्यमानवदेव ॥

॥ इति श्रीवामनाचार्यविरचितायां काशिकावृत्तौ अष्टमस्याध्यायस्य प्रथमः पादः ॥

---

**न्यासः**

मन्दधीः प्रतिपत्तुम्, तं प्रति विस्पष्टार्थं विशेषवचनग्रहणं क्रियते । यदि तर्हि सामान्यस्य विशेषापेक्षत्वात् सामान्यनचनग्रहणात् विशेषवचने कार्यं विज्ञायते, तत्र पूर्वसूत्रेऽपि तत्रैव कार्यं विज्ञायते, तथा च देवदत्त यज्ञदत्तेति प्रत्युदाहरणं द्व्यङ्गविकलं स्यात्; तथा हि यथा यज्ञदत्तशब्दो न समानाधिकरणो भवति, तथा विशेषवचनोऽपि । अथासौ विशेषवचनः ? एव सति यथाग्ने गृहपत इत्यत्राग्निशब्दः सामान्यवचनोऽपि गृहपतिशब्देन विशेषाभिधायिना व्यवच्छिद्यमानस्तदग्निविशेषणं भवति गृहपतिशब्दस्तेन समानाधिकरणः, एवं देवदत्तशब्दो विशेषाभिधायिना यज्ञदत्तशब्देन व्यवच्छिद्यमानस्तद्वाच्य एव विशेषेऽवतिष्ठत इति यज्ञदत्त-शब्दस्तेन सामानाधिकरण इति चिन्त्यमेतत् ॥ ७४ ॥

इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायाम्
अष्टमस्याध्यायस्य प्रथमः पादः ॥

---

**पदमञ्जरी**

तत्र साधवः शरण्याः । शरणशब्दो हि शरण्येऽपि दृश्यते—शरणं भवन्तमतिकारुणिकमिति । शर्मण्या इति पाठे शर्मणि साधवः शर्मण्याः ।

सामान्यवचनाधिकारादेवेति । सामान्यस्य विशेषापेक्षत्वाद्यं प्रति सामान्यमित्येतद्भवति, तस्मिन् विशेषवचन एव भविष्यति ॥ ७४ ॥

॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यामष्टमस्याध्यायस्य प्रथमः पादः ॥

**भावबोधिनी**

हैं । शरण्य और वैयाकरण विशेषवाची हैं । इन विशेषवाचकों के परे रहते पूर्ववर्ती विकल्प से अविद्यमानवत् होता है । जब विद्यमान होंगे तो अष्टम अध्याय के 'आमन्त्रितस्य च' ( ८।१।१९८ ) से पद से परे का निघात होता है । जब अविद्यमानवत् होंगे तो षष्ठ अध्याय में 'आमन्त्रितस्य च' ( ६।१।१९२ ) से आद्युदात्त होता है । ]

सामान्यवचन—इसके अधिकार ( उल्लेख ) से ही विशेषवचन इस अर्थ के सिद्ध हो जाने पर 'विशेष-वचने' यह उल्लेख विशेष स्पष्टता के लिए है । [ और कोई विशेष प्रयोजन नहीं है । ]

बहुवचन—यह किसलिए है ? माणवक जटिलक । [ यहाँ बहुवचन नहीं एकवचन ही है । अतः ] यह नित्य अविद्यमानवत् ही होता है । [ अतः केवल षाष्ठ आद्युदात्त ही होता है । आष्टमिक निघात नहीं होता है । ]

॥ इस प्रकार श्री वामनाचार्य-विरचित काशिकावृत्ति में अष्टम अध्याय का प्रथम पाद सम्पूर्ण हुआ ॥

---

॥ इस प्रकार जयशङ्करलाल त्रिपाठि-द्वारा विरचित 'भावबोधिनी' हिन्दी-व्याख्या में
काशिकावृत्ति के अष्टम अध्याय का प्रथम पाद सम्पूर्ण हुआ ॥

"कृपया विश्वनाथस्य वाग्देव्याश्च प्रसादतः ।
अष्टमे प्रथमं पादं व्याचष्ट 'जयशङ्करः' ॥

---

१. नित्यमेतदविद्यमानवदेव—इति पाठान्तरम् ।

## अथ अष्टमाध्याये द्वितीयः पादः

### ३६८९. पूर्वत्रासिद्धम् ॥ १ ॥ (१२)

**'पूर्वत्रासिद्धम्' इत्यधिकारोऽयमा अध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामः 'पूर्वत्रासिद्धम्' इत्येवं तद्वेदितव्यम्। तत्र येयं सपादसप्ताध्याय्यनुक्रान्ता एतस्यामयं पादोनोऽध्यायोऽसिद्धो भवति।**

**न्यासः**

**पूर्वत्रासिद्धम्** ॥ एष योगः परिभाषा वा स्यात्, अधिकारो वेति पक्षद्वयं सम्भाव्यते। तत्र यद्ययं परिभाषा स्यात् सर्वस्यामष्टाध्यायाम्पूर्वस्मिन्नुत्तरमसिद्धं स्यात्, ततश्च 'अतो भिस ऐस्' इत्यत्र त्यदाद्यत्वस्यासिद्धत्वात् तैः यैः—इत्यत्रैस्भावो न स्यादितीमं परिभाषापक्षे दोषं दृष्ट्वा स्वरितत्वेनाधिकारत्वमस्येति निश्चित्याह—**पूर्वत्रासिद्धमित्यधिकारोऽयमिति। अध्यायपरिसमाप्तेरिति।** अवधिप्रदर्शनार्थमेतत्। **तत्रेति** वाक्योपन्यासे। **सपादेति।** सह पादेनानन्तरं प्रक्रान्तेन वर्त्तत इति सपादा। **सप्ताध्यायीति।** सप्तानामध्यानां समाहारः, 'द्विगोः' इति ङीप्। क्वचित् सपादसप्ताध्यायीति पाठः, तत्र सपादा चासौ सप्ताध्यायी चेति विशेषणसमासः, पुंवद्भावः। **अयमिति। वक्ष्यमाणः। पादोनोऽध्याय इति।** अनन्तरोक्तेन पादेनोनोऽपरिपूर्णः पादोनोऽध्यायः। **असिद्धो भवतीत्यादि।** पादोनाध्यायग्रहणेनोत्तरोत्तरयोगग्रहणेन च शास्त्रासिद्धत्वमिहाश्रीयत इति दर्शयति। कार्यासिद्धत्वाश्रयणे हि यथा देवदत्तस्य हन्तरि हते न पुनर्देवदत्तस्य प्रादुर्भावो भवति, तथा कार्यस्यासिद्धत्वे प्रतिपादिते न पुनः प्रकृतेः [1]प्रत्यापत्तिर्भवति। ततश्चामुष्य, अमुष्मै—इत्यत्र सत्यप्युकारस्यासिद्धत्वेऽकारान्तमङ्गं न भवतीति तन्निबन्धनः स्मैभावो न स्यात्। शास्त्रासिद्धत्वे तु स्मैभावशास्त्रमेव प्रवर्त्तते, न[2] त्वशास्त्रमसिद्धत्वमिति न भवत्येष दोषप्रसङ्गः। अपि च शास्त्रस्य मुख्यत्वं पूर्वत्वं कार्यस्यौपचारिकत्वम्।

**पदमञ्जरी**

**पूर्वत्रासिद्धम् ॥ पूर्वत्रासिद्धमित्ययमधिकार इति।** यदि तु स्वतन्त्रो विधिः स्यात्, ततो वक्ष्यमाणस्य त्रिपादीलक्षणसमुदायस्य पूर्वत्र सपादसप्ताध्यायीलक्षणे समुदायेऽसिद्धत्वमुक्तं स्यात्, न तु त्रिपाद्यां पूर्वत्र परस्यासिद्धत्वमापादितं स्यात्; ततश्च गुडलिण्मान् गोधुङ्मानित्यादौ ढत्वघत्वादेरसिद्धत्वाभावात् 'झयः' इति मतुपो वत्वप्रसङ्गः। तस्मान्न विधिः। अथ परिभाषा स्यात्, सर्वत्रैवाष्टाध्याय्यां पूर्वं प्रति परस्यासिद्धत्वात् तेन 'तैः, तस्य'—इत्यादाविनादिषु कर्त्तव्येषु त्यदाद्यत्वस्यासिद्धत्वादकारान्तनिमित्ता इनादयो न स्युः। तस्माद्—अधिकारः। एवं सति यदनेन सम्पादितं भवति तद्दर्शयति—**तत्रेति।** तत्राधिकारे सतीत्यर्थः। अधिकारे हि त्रिपादीगतानामप्यविशेषेण सपादसप्ताध्यायीगतान्प्रत्यसिद्धत्वं त्रिपाद्यां च पूर्वत्र

**भावबोधिनी**

**विश्वेशं शारदां नत्वा गुरुपितृपदानि च।**
**द्वितीयमष्टमे पादं व्याचष्टे 'जयशङ्करः' ॥**

अब अष्टम अध्याय में द्वितीय पाद प्रारम्भ होता है—

'पूर्वत्र असिद्धम्' यह अधिकार (इस अष्टम) अध्याय की परिसमाप्ति तक चलता है। इस सूत्र के आगे जिन्हें कहेंगे उनमें 'पूर्वत्र असिद्ध' (अपने से पूर्ववर्ती के प्रति असिद्ध होता है)—इस प्रकार से उसे समझना चाहिए। यह जो सपादसप्ताध्यायी कही जा चुकी है उसके विषय में, उसके प्रति पौन अध्याय (अर्थात् अष्टमाध्याय के २, ३, ४ पाद) असिद्ध होता है। इसके आगे उत्तर उत्तर = बाद बाद वाला सूत्र, पूर्वत्र-पूर्वत्र = अपने से पूर्व-पूर्व सूत्र

---

१. 'प्रादुर्भावो' इति पाठा०। २. अत्रत्यः पाठो भ्रष्टः प्रतीयते।

**इत उत्तरं चोत्तर उत्तरो योगः पूर्वत्र पूर्वत्रासिद्धो भवति = असिद्धवद्भवति**[1]**। सिद्धकार्यं न करोतीत्यर्थः।**

न्यासः

यस्य कार्यस्य शास्त्रं पूर्वं तदप्युपचारेण पूर्वमित्युच्यते, न स्वत एव तस्य पूर्वत्वम्; सन्निवेशविशेषाभावात्। कार्यं हि लक्ष्यगतम्,[2] तत्र यथा लक्ष्यस्य सन्निवेशो नास्ति तथा तद्गतस्यापि कार्यस्य। न च मुख्ये पूर्वत्वे सति गौणत्वस्य परिग्रहणं युक्तम्। तस्माच्छास्त्रं पूर्वग्रहणेन गृह्यते। तस्य च पूर्वत्वं परशास्त्रमेवापेक्ष्य भवति। अतो यदपेक्षं तस्य पूर्वत्वं ततः परस्य शास्त्रस्यैवासिद्धत्वमनेन कर्तुं युक्तम्। शास्त्रस्यासिद्धौ च कृतायामर्थतः कार्यासिद्धत्वं कृतमेव भवति; तस्य तन्निबन्धनत्वात्। सिद्धशब्दो निष्पन्नवचनः। सिद्धं निष्पन्नमित्यर्थः। न सिद्धमसिद्धम्, अनिष्पन्नमित्युच्यते। परञ्च शास्त्रं यच्च निष्पन्नं तन्न शक्यं वचनशतेनाप्यनिष्पन्नसत्तायामापादयितुम्। अन्यथा न कश्चिद् दुःखविवशां दशामनुभवेत्; असिद्धवचनेनैव न दुःखस्यानिष्पन्नतापादानात्। तस्माद् यथा ब्रह्मदत्तोऽब्रह्मदत्तोऽयमित्युक्तेऽतिदेशोऽयं गम्यते, तथेहाप्यसिद्धत्वमित्युक्ते-

पदमञ्जरी

परस्यासिद्धत्वं सिद्ध्यति। विधौ तु नैतावत्सम्पादयितुं शक्यम्; त्रिपाद्यां पूर्वत्र परस्यासिद्धत्वानापादनात्। परिभाषायां च नैतावति पर्यवस्यति; सर्वत्रैव प्रसङ्गात्। तस्मादधिकारत्वादेतावत्सम्पद्यते। एतावदेव च सम्पद्यत इत्यर्थः। न चैवमत्र भ्रमितव्यम्—येयं सम्पादसप्ताध्यायो अनुक्रान्तेत्यनेन विधिरूपेण प्रवृत्तिर्दर्शिता, इत उत्तरमित्यादिना त्वधिकाररूपेण, ततश्च शेष इतिवल्लक्षणं चाधिकारश्चेति? निष्प्रयोजनत्वाद, अधिकारोऽयमित्युक्तत्वाच्च। किं हि नामाधिकार एवास्मिन्न सिध्यति, यदर्थो विधिराश्रीयेत! सप्तानामध्यायानां समाहारः सप्ताध्यायी, सपादा चासौ सप्ताध्यायो चेति कर्मधारयः, सपादेति टाबन्तपाठे त्वसमासः। **उत्तरउत्तरो योग इति पाठः;** वीप्सायां द्विर्वचने सुब्लुकोऽसम्भवात्। अत्राध्यायग्रहणेन योगग्रहणेन च शास्त्रासिद्धत्वमाश्रीयत इति दर्शयति। एतच्च पूर्वत्रेति वचनाल्लभ्यते। शास्त्रस्य हि मुख्यं पूर्वत्वम्; सन्निवेशविशेषयोगित्वात्। कार्यस्य तु शास्त्रद्वारकमौपचारिकम्, न हि मुख्ये सम्भवति गौणस्य ग्रहणं युक्तम्। कथं पुनरुच्चरितं शास्त्रमसिद्धमित्युच्यते, न हि वचनशतेनापि सिद्धमपि असिद्धं भवति? अत आह—

भावबोधिनी

के प्रति असिद्ध होता है = असिद्ध के समान हो जाता है। सिद्ध = विद्यमान का कार्य नहीं करता है—यह अर्थ है। [ भाव यह है कि सभी सूत्र ज्यों के त्यों ही रहते हैं। किन्तु इस सूत्र के आगे जो-जो सूत्र हैं वे सभी अपने से पूर्ववर्ती के लिये नहीं के समान हो जाते हैं। अतः पूर्ववर्ती का किया हुआ कार्य परवर्ती सूत्र नहीं देख पाता है। ]

**विमर्श**—पूर्ववर्त्ती की दृष्टि में १. परवर्त्ती शास्त्र असिद्ध होता है अथवा २. उस शास्त्र द्वारा किया गया कार्य असिद्ध होता है। इन्हें शास्त्रासिद्धत्व और कार्यासिद्धत्व कहा जाता है ये दो पक्ष हैं। कार्यासिद्धत्व पक्ष उचित नहीं है क्योंकि जैसे किसी के द्वारा देवदत्त मारा गया है, कोई व्यक्ति देवदत्त के हन्ता को पुनः मार भी दे तो देवदत्त को जीवन नहीं मिलता है, उसी प्रकार यदि कोई कार्य किया जा चुका है तो उसे असिद्ध मान लेने से वह कार्य समाप्त नहीं हो जाता है, रहता ही है। अतः शास्त्र को ही असिद्ध मानना उचित है। फलतः पूर्व के सवा सात अध्यायों की दृष्टि में आठवें के तीन पाद के शास्त्र=सूत्र हैं ही नहीं। अतः उनके द्वारा किया गया कार्य भी नहीं दिखाई देता है। इसका लाभ यहहोता है कि यदि त्रिपादी के सूत्र द्वारा कोई कार्य कर देने के बाद सपाद सप्ताध्यायी के सूत्र का लक्ष्य सम्भव होता है तो भी उसकी प्रवृत्ति नहीं होती है क्योंकि वह त्रिपादीस्थ सूत्र और उसका किया गया कार्य असिद्ध हो जाता है, वास्तव में हो जाने पर भी न हुए के समान समझा जाता है।

यहाँ एक बात यह भी ध्यान रखनी चाहिए कि 'पूर्वत्रासिद्धम्' यह अधिकार सूत्र है, आगे के सभी सूत्रों में भी हर पूर्ववर्ती सूत्र की दृष्टि में परवर्त्ती सूत्र असिद्ध मान लिया जाता है। फलतः परवर्ती सूत्र द्वारा कोई कार्य हो जाने पर भी पूर्ववर्ती के लिये न किये हुए जैसा रहता है। अतः पूर्ववर्ती की प्रवृत्ति नहीं होती है। यह बात यद्यपि

१. 'असिद्धवद्भवति' इति क्वचिन्नास्ति। २. 'भिन्नलक्षणागतम्'—इति पाठा०।

**तदेतदसिद्धत्ववचनमादेशलक्षणप्रतिषेधार्थम्, उत्सर्गलक्षणभावार्थं च। अस्मा उद्धर, द्वा अत्र, द्वा आनय, असा आदित्यः—इत्यत्र य्वलोपस्यासिद्धत्वाद् 'आद्गुणः' (६।१।८७) इति, 'अकः सवर्णे दीर्घः'**

**न्यासः**

ऽतिदेशोऽयं गम्यत इत्याह—**असिद्धवद्भवतीति**। एतदेव स्पष्टीकर्तुमाह—**सिद्धकार्यमित्यादि**। एवं हि तदसिद्धवद् भवति यदि सिद्धस्य यत् कार्यं तन्न करोति।

**तदेतदित्यादि**। तदिति हेतौ यस्मादनन्तरोक्तोऽसिद्धशब्दस्यार्थ, तस्मादेतदसिद्धवचनमादेशलक्षण-प्रतिषेधार्थम्। आदेशो लक्षणं=निमित्तं यस्य तदादेशलक्षणम्, तस्य प्रतिषेधः। सोऽर्थः=प्रयोजनं यस्य तत्त-थोक्तम्। **उत्सर्गलक्षणभावार्थं चेति**। उत्सृज्यते निवर्त्यत इत्युत्सर्गः = स्थानिलक्षणम्, उत्सर्गो लक्षणं = निमित्तं यस्य तदुत्सर्गलक्षणं कार्यम्, तस्य भावः = उपजननमुत्सर्गलक्षणभावः, सोऽर्थः = प्रयोजनं यस्य तत् तथोक्तम्। **अस्मा उद्धरेत्यादि**। अस्मै इतीदंशब्दाच्चतुर्थी, उद्धरेत्यस्मिन् परत अयादेशः, 'लोपः शाकल्यस्य' इति यकारलोपः। तत्र कृते 'आद गुणः' प्राप्नोति; यकारलोपस्यासिद्धत्वान्न भवति। **द्वा आनयेत्यादि**। अत्र अत्रानयशब्दयोः परतोऽसावित्यस्यादित्यशब्दे च परत आवादेशः, 'लोपः शाकल्यस्य' इति वकारलोपः। तत्र कृतेऽकः सवर्णे दीर्घत्वं प्राप्नोति; वकारलोपस्यासिद्धत्वान्न भवति। **य्वलोपस्यासिद्धत्वादिति**। तादर्थ्याद् य्वलोपशास्त्रं य्वलोपशब्देनोक्तम्। अथ वा—य्वलोपशास्त्रस्यासिद्धत्वाद् य्वलोपस्यासिद्धत्वमित्युच्यते। एषूदाहरणेष्वादेशलक्षणप्रतिषेधोऽसिद्धत्ववचनस्य प्रयोजनम्। इदानीं येषूदाहरणेषूत्सर्गलक्षणभावः प्रयोजनम्,

**पदमञ्जरी**

**सिद्धकार्यं न करोतीत्यर्थ इति**। वचनादतिदेश आश्रीयत इत्यर्थः। शास्त्रस्यासिद्धत्वमाश्रीयते, न कार्यस्येति दर्शितम्।

तत्र प्रयोजनमाह—**तदेतदिति**। यदिदं शास्त्रविषयमसिद्धवचनं तदेतदित्यर्थः। आदेशो लक्षणं = निमित्तं यस्य कार्यस्य तस्य प्रतिषेधार्थमुत्सृज्यते = आदेशेन निवर्तत इति उत्सर्गः = स्थानी, स लक्षणं=निमित्तं यस्य तस्य भावः प्रवृत्तिर्यथा स्यादित्येवमर्थं चासिद्धवचनम्। कार्यासिद्धत्वे तूत्सर्गलक्षणस्य भावो न सिध्यति। तत्रादेशलक्षणप्रतिषेधस्योदाहरणमाह—**अस्मा उद्धरेत्यादि**। आवायोः कृतयोः 'लोपः शाकल्यस्य' इति लोपः। **य्वलोपस्यासिद्धत्वादिति**। शास्त्रद्वारकं य्वलोपस्यासिद्धत्वम्। यदा हि पूर्वशास्त्रसन्निधौ परशास्त्रमसिद्धम्,

**भावबोधिनी**

काशिका में स्पष्ट नहीं कही गई है तथापि ऐसा ही समझना शास्त्रसम्मत है। फलतः अष्टाध्यायी के सभी सूत्र पहले सपादसप्ताध्यायी और त्रिपादी इन दो भागों में बांटकर सपाद-सप्ताध्यायी की दृष्टि में त्रिपादी को असिद्ध मानना चाहिए। साथ ही त्रिपादी के सूत्रों में भी परस्पर पूर्वपूर्व की दृष्टि में पर-पर असिद्ध मानना चाहिए।

प्रक्रिया की दृष्टि से इस असिद्धत्व का बहुत उपयोग है। आगे लक्ष्यों में देखें।

(अनु०) अतः यह असिद्धत्व वचन ( सूत्र ) [ दो कार्यों के लिये है ]—(१) आदेश-लक्षण प्रतिषेध के लिये और (२) उत्सर्गलक्षणभाव के लिये। [ आदेश है लक्षण = निमित्त जिस कार्य का उस कार्य के प्रतिषेध = रोकने के लिये यह सूत्र है। उत्सर्ग = उत्सृष्ट होता है = निवृत्त होता है, हटा दिया जाता है आदेश के द्वारा जो वह = उत्सर्ग अर्थात् स्थानी है, वह उत्सर्ग = स्थानी है लक्षण = निमित्त जिस कार्य का उसका भाव = प्रवृत्ति होना, इसके लिये यह सूत्र है। फलतः आदेश मानकर होने वाला कार्य नहीं होता है, स्थानी मानकर होने वाला कार्य हो जाता है। ] उदा० अस्मा उद्धर, द्वा अत्र, द्वा आनय, असा आदित्यः [ इनमें क्रमशः अस्मै उद्धर, द्वौ अत्र, द्वौ आनय, असौ आदित्यः—इस अवस्था में 'एचोऽयवायावः' ( ६।१।७५ ) सूत्र से ऐ का आय्, औ का आव् आदेश करने के बाद 'लोपः शाकल्यस्य' ८।३।१९ सूत्र से य् व् का लोप होता है। यह ] व् य् लोप असिद्ध हो जाता है, ( वास्तव में हो जाने पर भी न हुये जैसा मान लिया जाता है ) इस कारण प्रथम उदा० में 'आद्गुणः ( ६।१।८४ ) से गुण और

(६।१।१०१) इति च न भवति। अमुष्मै, अमुष्मात्, अमुष्मिन्—इति उत्वस्यासिद्धत्वात् स्मायादयो भवन्ति।

शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तथा।
मतोर्वत्वे झलां जश्त्वे गुडलिण्मान्निदर्शनम्॥

शुष्किकेति—अत्र 'शुषः कः' (८।२।५१) इत्यस्यासिद्धत्वाद् 'उदीचामातः स्थाने यकपूर्वायाः' (७।३।४६) इत्येतन्न भवति।

शुष्कजङ्घेति—'न कोपधायाः' (६।३।३७) इति पुंवद्भावप्रतिषेधो न भवति।

**न्यासः**

तानि दर्शयितुमाह—**अमुष्मै इत्यादि**। अदसश्चतुर्थीपञ्चमीसप्तम्येकवचनानि। त्यदाद्यत्वम्। अत्रासत्यप्यसिद्धत्वे परत्वाद् 'अदसोऽसेर्दादु दो म' इत्युत्वम्, ततश्चाकारान्तस्याभावात् तन्निबन्धनाः 'सर्वनाम्नः स्मै', 'ङसिङ्योः स्मात्स्मिनौ' इति स्मायादयो न स्युः। असिद्धत्वे सति शास्त्रस्य ते भवन्ति। **उत्वस्यासिद्धत्वादिति**। अत्रापि तादर्थ्यादुत्वशब्देनोत्वशास्त्रमुक्तम्।

**शुष्किकेत्यादिश्लोकः। अत्र निदर्शनमित्येतत्** शुष्किकेत्यादिभिः प्रत्येकमभिसम्बध्यते। **झलां जश्त्व इति**। अत्राप्यसिद्ध इति वृत्तभङ्गभयान्नोक्तम्। अनुक्तमपि प्रकरणेन ज्ञायते।

**शुष्किकेति**। 'शुष शोषणे' इत्येतस्मात् क्तप्रत्ययः, 'शुषः कः' इति कादेशः, टाप्, अज्ञातार्थे 'प्रागिवात् कः', 'केऽणः' इति ह्रस्वत्वम्, ततष्टाप्, 'प्रत्ययस्थात् कात्' इत्यादिना नित्यमित्त्वं भवति, न तु 'उदीचाम्' इत्यादिना पाक्षिकम्; 'शुषः कः' इत्यस्यासिद्धत्वात्।

**पदमञ्जरी**

तदा तत्प्रतिपादितं कार्यं सुतरामसिद्धं भवति। उत्सर्गलक्षणभावस्योदाहरणमाह—**अमुष्मै इति**। अत्रासत्यसिद्धत्वे परत्वाद 'अदसोऽसेर्दादु दो मः' इत्युत्वे सत्यत इति स्मायादयो न स्युः। असिद्धत्वे तु पूर्वं स्मादयः, पश्चादुत्वमिति सिद्धमिष्टम्। **उत्वस्येति**। उत्वशास्त्रस्येत्यर्थः।

**शुष्किकेत्यादिश्लोकः। अत्र निदर्शनमिति** प्रत्येकमभिसम्बध्यते। निदर्शनमुदाहरणदिगित्यर्थः। मतोर्वत्वे कर्त्तव्ये 'झलां जशोऽन्ते' इति जश्त्वेऽसिद्धे सति गुडलिण्मानिति दर्शनम्।

**भावबोधिनी**

शेष तीन में 'अकः सवर्णे दीर्घः' ( ६।१।१०१ ) सूत्र से सवर्णदीर्घ नहीं होता है। 'अमुष्मै' 'अमुष्मात्' 'अमुष्मिन्'—आदि में [ अदसोऽसेर्दादु दो मः' ८।२।२० सूत्र से किया गया द् का म, और अ का ] उत्व असिद्ध हो जाने के कारण [ "सर्वनाम्नः स्मै' ( ७।१।१४ ) ङसिङ्योः स्मात्स्मिनौ ( ७।१।१५ ) सूत्रों से ] स्मै स्मिन् स्मात् ये हो जाते हैं। [ मत्व-उत्व-विधायक सूत्र त्रिपादी का है स्मै आदि के विधायक सपादसप्ताध्यायी के हैं। इनकी दृष्टि में उ नहीं मिलता है, अकारान्त ही रहता है। अतः आदेश हो जाते हैं। पहले के उदाहरणों में आदेश को मान कर होने वाले कार्यों को रोका गया। दूसरे उदाहरणों में स्थानी को मान कर होने वाले कार्य किये गये हैं। ]

'शुष्किका, शुष्कजङ्घा, क्षामिमान् तथा औजिढत् ये उदा० हैं और मत् के म् का वत्व तथा झल् का जश्त्व करने के लिए 'गुडलिण्मान्' यह निदर्शन = उदाहरण समझना चाहिये। [ यह श्लोक प्रस्तुत सूत्र के महाभाष्य में नहीं हैं किन्तु उदाहरण हैं। किसी आचार्य ने श्लोक में संग्रह कर दिया। 'निदर्शनम्' का सभी से सम्बन्ध है।]

(१) शुष्किका—यहाँ [ शुष् + क्त में त का क आदेश ] 'शुषः कः' ( ८।२।५१ ) इस शास्त्र के असिद्ध हो जाने से 'उदीचामातः स्थाने यकपूर्वायाः' ( ७।३।४६ ) यह प्रवृत्त नहीं होता है। [ फलतः 'प्रत्ययस्थात् कात्-पूर्वस्यापि इदाप्यसुपः' ( ७।३।४४ ) से नित्य ही अ का इत्व होता है। यदि 'शुषः कः' असिद्ध नहीं होता तो वैकल्पिक इत्व होने लगता। ]

(२) शुष्कजङ्घा—यहाँ [ शुष्के जङ्घे यस्याः सा—इस अर्थ में बहुव्रीहि करने पर ] 'न कोपधायाः (६।३।३५) सूत्र से पुंवद्भाव का प्रतिषेध नहीं होता है। [ कारण यह है 'शुषः कः' इसके असिद्ध हो जाने से क् उपधा में

क्षामिमानिति—क्षामस्यापत्यं क्षामिः, क्षामो वा अस्यास्तीति क्षामिः, क्षामी वा यस्यास्तीति क्षामिमान् । 'क्षायो मः' (८।२।५३) इत्यस्यासिद्धत्वात् 'मादुपधायाश्च' (८।२।९) इति वत्वं न भवति ।

औजढदिति—वहेर्निष्ठायामूढस्तमाख्यदिति णिच्, तदन्ताल्लुङ्; 'चङि' (६।१।११) इति द्विर्वचने कर्त्तव्ये ढत्वधत्वष्टुत्वढलोपानामसिद्धत्वाण्णौ च यष्टिलोपः, तस्य स्थानिवद्भावाद् हु त इत्येतद् द्विरुच्यते । 'अनग्लोपे' (७।४।९३) इति प्रतिषेधात्सन्वदित्वं नास्ति, तेन औजढदिति भवति । औजिढत् इत्येतत्तु क्तिन्नन्तस्य ऊढिशब्दस्य भवति ।

**न्यासः**

**शुष्कजङ्घेति** । शुष्के जङ्घे अस्या इति बहुव्रीहिः, 'न कोपधायाः' इति पुंवद्भावनिषेधो न भवति । 'शुषः कः' इत्यस्यासिद्धत्वादिति प्रकृतेन सम्बन्धनीयम् । ननु च सत्यप्यसिद्धत्वे नैवात्र पुंवद्भावप्रतिषेधो न प्राप्नोति, कोपधप्रतिषेधे तद्धितवुग्रहणं कर्त्तव्यमिति वचनात् ? न; वाक्यकारमतमेतत्, सूत्रकारमतेन तु श्लोकवार्त्तिककारेण च न चात्रैतत् प्रयोजनमुपन्यस्तम् । एतयोर्हि सामान्येन कोपधप्रतिषेधोऽभिमतः ।

**क्षामिमानिति** । 'क्षै जै षै क्षये', 'आदेच उपदेशेऽशिति' इत्यात्वम्, 'क्षायो मः'—इति निष्ठातकारस्य मकारः—क्षाम इति स्थिते 'अत इञ्' इतीञं कृत्वा 'अत इनिठनौ' इतीनिप्रत्ययं वा कृत्वा मतुप् कर्तव्यः ।

**वहेरित्यादि** । 'वह प्रापणे' इत्येतस्मान्निष्ठा, सम्प्रसारणम् 'हो ढः' इति ढत्वम्, 'झषस्तथोर्धोऽधः' इति धत्वम्, 'ष्टुना ष्टुः' इति ष्टुत्वम्, 'ढो ढे लोपः' इति ढलोपः, 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घः,

**पदमञ्जरी**

**न कोपधाया इति पुंवद्भावप्रतिषेधो न भवतीति** । कोपधप्रतिषेधे तद्धितवुग्रहणमित्येतदनाश्रित्येदं प्रयोजनमुक्तम् । **क्षामिमानिति** । 'क्षायो मः' इति निष्ठातकारस्य मत्वम्, ततः 'अत इञ्' इति इञन्ताद् 'अत इनिठनौ' इतीन्, तदन्ताद्वा मतुप् ।

**वहेरित्यादि** । 'वह प्रापणे', निष्ठा, सम्प्रसारणम्, 'हो ढः', 'झषस्तथोर्धोऽधः', ष्टुत्वम्, 'ढो ढे लोपः', 'ढ्रलोपे पूर्वस्य दीर्घोऽणः', ऊढ इति स्थिते णिचि टिलोपः, लुङ् च्लेश्चङ् । हु त इत्येतद् द्विरुच्यते इति ।

**भावबोधिनी**

नहीं मिल पाता है । वास्तव में 'तद्धितवुग्रहणं कर्त्तव्यम्' इस वार्तिककार के अनुसार यह फल नहीं है क्योंकि यहाँ कृत् का 'क' है । परन्तु सूत्रकार ने सामान्यरूप से कोपध का प्रतिषेध माना है । उसी से यह फल दिखाया गया है । ]

(३) क्षामिमान्—[ 'क्षै क्षये' धातु से निष्ठा क्त प्रत्यय, ऐ का आत्व क्षा+त में 'क्षायो मः' ८।२।५२ से त का म होकर क्षामः बनता है । ] क्षामस्य अपत्यम् क्षामिः [ यहाँ 'अत इञ्' से इञ्, आदिवृद्धि होती है । ] अथवा—क्षामः अस्ति अस्य सः [ इस अर्थ में 'अत इनिठनौ' सूत्र से इन् होने पर—क्षामी बनता है । ] पुनः क्षामिः, क्षामी वा अस्य अस्ति इस अर्थ में [ मतुप् करने पर ]—क्षामिमान् होता है । 'क्षायो मः' ( ८।२।५२ ) इसके असिद्ध हो जाने से 'मादुपधायाश्च' ( ८।२।५९ ) इस परवर्त्ती से म् का व् नहीं होता है । [ यह त्रिपादीस्थ सूत्रों में भी पूर्व पूर्व की दृष्टि में पर-पर सूत्र के असिद्धत्व का उदा० है । ]

(४) औजढत्—'वह्' धातु से निष्ठा क्त प्रत्यय में 'ऊढः' [ बनता है—वह् + क्त = त, व् का सम्प्रसारण, अ का पररूप, 'हो ढः' से ह् का ढ् 'झषस्तथोर्धोऽध.' से 'त' का ध्, उढ् ध, ष्टुत्व उढ्ढ, 'ढो ढे लोपः' सूत्र से पूर्व 'ढ्' का लोप 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' में दीर्घ—ऊढः । ] तम् आख्यत—इस अर्थ में [ 'तत्करोति तदाचष्टे' वार्तिक से णिच्, धसंज्ञा, टिलोप—ऊढि+लुङ् = तिप्, च्लि का चङ्, 'चङि' ( ६।१।११ ) सूत्र से द्वित्व करने की स्थिति में ढत्व, धत्व, ष्टुत्व और ढलोप इन सभी के असिद्ध हो जाने से और णि = इ परे जो ठि = अलोप है उसका स्थानिवद्भाव हो जाने से—'ह् त' इसी का द्वित्व कहा जाता है । [ आट् ऊ ह् त ह् त + इ +चङ् + ति । 'हलादि शेष आ ऊ ह ह् त् इ अ ति में प्रथम अभ्यास हकार का 'कुहोश्चुः' से झकार और 'अभ्यासे चर्च' से जश्त्व से जकार आ ऊ ज ह् त् इ अ त, पुनः ढत्व धत्व ष्टुत्व ढलोप, णिलोप वृद्धि आदि होने पर औ ज ढ+अ त । ]

गुडलिण्मानिति—गुडलिहोऽस्य सन्ति इति मतुप्, तत्र ढत्वजश्त्वयोरसिद्धत्वाद् 'झयः' (८।२।१०) इति वत्वं न भवति।

येऽत्र षष्ठीनिर्देशाः, पञ्चमीनिर्देशाश्च; तेषाम् 'षष्ठीस्थानेयोगा' (१।१।४९), 'तस्मिन्निति निर्दिष्टे

**न्यासः**

ऊढ इति स्थिते तमाचष्ट इति णिच्, 'णाविष्ठवत् कार्यं प्रातिपदिकस्य' इतीष्ठवद्भावाट्टिलोपः, तदन्ताल्लुङ्, 'णिश्रि' इत्यादिना चङ्। अत्र ढत्वष्टुत्वादीनामसिद्धत्वाद् योऽसौ णौ टिलोपस्तस्य णौ कृतं स्थानिवद् भवतीति स्थानिवद्भावात् 'चङि' इति 'अजादेर्द्वितीयस्य' इति हत इत्येतस्य द्विर्वचनम्' 'कुहोश्चुः' इति चुत्वम्—महाप्राणस्य हकारस्य स्थाने महाप्राण एव झकारः, अभ्यासे चर्च' इति झकारस्य स्थाने जकारः, 'आडजादीनाम्' इत्याट्, 'आटश्च' इति वृद्धिः। अथ 'सन्वल्लघुनि चङ्परे' इति सन्वद्भावः कस्मान्न भवति ? इत्याह—अनग्लोप इत्यादि। यदि तर्ह्यनग्लोप इति प्रतिषेधात् सन्वद्भावो न भवति, तदौजिढदिति न सिध्यति ? इत्याह—औजिढदित्यादि।

गुडलिण्मानिति। गुडं लेढीति क्विप्, तदन्तान्मतुप्, पूर्ववड् ढत्वम्, 'झलां जशोऽन्ते' इति जश्त्वम्—ढकारस्य डकारः। मतोर्वत्वे कर्त्तव्ये ढत्वजश्त्वयोरसिद्धत्वात् 'झयः' इति वत्वं न भवति। कारिकायां झलां जश्त्वग्रहणमुपलक्षणार्थं निदर्शनमिति। अनेनैतत् दर्शयति—निदर्शनमेतच्छुष्किकादीनाम्, न तु परिगणनमिति।

यदि हि सपादायां सप्ताध्याय्यां कर्त्तव्यायां पादोनोऽध्यायोऽसिद्ध इत्युच्यते, तदा य इह षष्ठीनिर्देश-सप्तमीनिर्देश-पञ्चमीनिर्देशाः क्रियन्ते तेऽप्यसिद्धाः स्युः, ततश्च 'संयोगान्तस्य लोपः' इत्यत्र षष्ठी-

**पदमञ्जरी**

'अजादेर्द्वितीयस्य' इति वचनात्, ततः, 'हलादिः शेषः', 'कुहोश्चुः' इति चुत्वम्—हकारस्य झकारः, तस्य 'अभ्यासे चर्च' इति जश्त्वं जकारः। अथात्र 'सन्वल्लघुनि' इतीत्वं कस्मान्न भवति ? तत्राह—अनग्लोप इति वचनादिति। कथं पुनरौजिढदिति भवति ? इत्यत आह—औजिढदित्येतत्त्विति। पूर्वत्रासिद्धीयमद्विर्वचने' इत्येतत्त्विह न प्रवर्त्तते; अनित्यत्वात्। अनित्यत्वं च 'उभौ साभ्यासस्य' इति वचनाद्विज्ञायते, अन्यथा 'अनितेः' इति णत्वे कृते तस्य सिद्धत्वात् सह णकारेण द्विर्वचने सति सिद्धं स्यात्—प्राणिणिषतीति।

गुडलिण्मानिति। गुडं लेढीति क्विप्, तदन्तान्मतुप्, ढत्वजश्त्वयोः कृतयोः 'यरोऽनुनासिकत्वे तद्धिते भाषायां नित्यवचनम्' इति णकारः।

षष्ठीनिर्देशा इति। 'संयोगान्तस्य लोपः' इत्यादयः, पञ्चमीनिर्देशाः 'ह्रस्वादङ्गात्' इत्यादयः,

**भावबोधिनी**

यहाँ अग् लोप = टिलोप होने के कारण 'सन्वल्लघुनि चङ्परेऽनग्लोपे' सूत्र से सन्वद्भाव और इत्व नहीं होता है—औ ज ढ + ति, इ का लोप—औ ज ढ त् बनता है। जो 'औजिढत्' यह रूप है वह तो क्तिन् प्रत्ययान्त 'ऊढि' शब्द का [ ऊढिम् आख्यत—इस अर्थ में ] होता है। [ इसमें इकार सुनाई देता है किन्तु वह सन्वद्भाव से नहीं है अपि तु पहले से ही है। ]

(५) गुडलिण्मान्—[ गुडं लेढि—इति गुडलिट्, ते ] गुडलिहः सन्ति अस्य सः—इस अर्थ में मतुप् प्रत्यय होता है उसमें [ "हो ढः" ८।२।३१ से किया गया ह् का ] ढत्व और [ "झलां जशोऽन्ते" ८।२।३९ से ढ् का ड् किया गया ] जश्त्व ड् असिद्ध हो जाता है। इस कारण 'झयः' ( ८।२।१० ) सूत्र से म् का व् नहीं होता है। [ अर्थात् 'झयन्त से उत्तरवर्ती मतुप् के म् का व् होता है' इत्यर्थक 'झयः' ८।२।१० पूर्ववर्ती है और ढत्व, जश्त्व के विधायक सूत्र ८।२।३१, ८।२।३९ परवर्ती हैं। ये असिद्ध हो जाते हैं झयन्त नहीं मिलता है, म् का व् नहीं होता है। ]

[ एक जिज्ञासा होती है कि यदि सपादसप्ताध्यायीस्थ सूत्र की कर्तव्यता में त्रिपादीस्थ असिद्ध हो जाते हैं तो इन सूत्रों में जो षष्ठीनिर्देश, सप्तमीनिर्देश, पञ्चमीनिर्देश किये गये हैं वे भी असिद्ध हो जाने चाहिये। फलस्वरूप

**पूर्वस्य' (१।१।६६) 'तस्मादित्युत्तरस्य' (१।१।६७) इति च कर्तव्ये नासिद्धत्वं भवति; 'कार्यकालं हि संज्ञापरिभाषम्' इति पूर्वत्वमासां परिभाषाणां नास्तीति। 'विप्रतिषेधे परम्' इत्येषा तु परिभाषा येन पूर्वेण लक्षणेन**

**न्यासः**

निर्देशस्यासिद्धत्वात् 'षष्ठी स्थानेयोगा' इत्येषा नोपतिष्ठेत। एवञ्च सामीप्ययोगाप्येषा षष्ठी स्यात्, ततः संयोगान्तसमीपो यस्तस्यापि लोप आपद्येत; 'झलो झलि' इत्यत्रापि सप्तमीनिर्देशस्यासिद्धत्वात् 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इत्येषा परिभाषा नोपतिष्ठेत, तथा च पूर्वस्यैवानन्तरे भवितव्यमिति नियमस्याभावात् सामान्येन पूर्वस्य परस्य वानन्तरे व्यवहिते झलि लोपः; 'ह्रस्वादङ्गात्' इत्यादावपि पञ्चमीनिर्देशस्यासिद्धत्वात् 'तस्मादित्युत्तरस्य' इत्यस्योपस्थानं न स्यात्, ततश्चानियमात् पूर्वस्य परस्य वानन्तरस्य व्यवहितस्य च लोपः प्रसज्येतेत्यत आह—**येऽत्र षष्ठीनिर्देशा इत्यादि**। किं पुनः कारणमसिद्धत्वं न भवति? इत्याह—**कार्यकालं हीत्यादि**। यदि हि 'यथोद्देशं संज्ञापरिभाषम्' स्याद्, एवमासां परिभाषाणां पूर्वत्वे सति षष्ठीनिर्देशादीनामसिद्धत्वं न स्यात्, न तु यथोद्देशं संज्ञापरिभाषम्, किं तर्हि? 'कार्यकालं संज्ञापरिभाषम्', कार्यकालाः कार्यप्रयुक्ता हि संज्ञा परिभाषाश्च। तस्माद् यत्र कार्यं तत्रैव ताः प्रयुज्यन्ते, तेन ता उपदेश एव। अतो निर्देशैरभिन्नदेशत्वात् परिभाषाणामत्र पूर्वत्वं नास्ति, ततः कुतस्तासु कर्तव्यासु तेषामसिद्धत्वप्रसङ्गः! यदि कार्यकालं संज्ञापरिभाषम्, 'विप्रतिषेधे परं कार्यम्' इत्येषात्रोपतिष्ठेत? तत्र को दोषः? 'स्फुर स्फुल सञ्चलने' 'गुरी उद्यमने'—आभ्याम् 'ऋहलोर्ण्यत्' इति ण्यति कृते विस्फोर्यम्, अवगोर्यमिति न सिध्येत्। अस्य हि परिभाषाया उपस्थाने, गुणं परत्वाद् बाधित्वा 'हलि च' इति दीर्घत्वं प्राप्नोतीत्यत

**पदमञ्जरी**

सप्तमीनिर्देशाः 'झलो झलि' इत्यादयस्तेषाम्। **असिद्धत्वं न भवतीति**। यदि स्यात् 'संयोगान्तस्य लोपः' इत्यत्र 'षष्ठी स्थाने योगा' इत्येतस्याभावात्तच्छेषस्य 'अलोऽन्त्यस्य' इत्यस्याप्रवृत्तेः सर्वस्य पदस्य लोपप्रसङ्गः; 'ह्रस्वादङ्गात्' इत्यत्राप्यनियमेन दिक्शब्दाध्याहारात्पूर्वस्य परस्य च लोपप्रसङ्गः; 'झलो झलि' इत्यत्राप्यौपश्लेषिकेऽधिकरणे सप्तमी विज्ञायेतेति पूर्वपरयोरविशेषेण प्रसङ्गः, सत्सप्तमीविज्ञाने तु व्यवहितस्यापि प्रसङ्गः। कथं पुनः पूर्वासु परिभाषासु कर्तव्यासु तेषामसिद्धत्वं न भवति? अत आह—**कार्यकालं हीति**। **संज्ञापरिभाषमिति** समाहारद्वन्द्वः। अयमभिप्रायः—

**भावबोधिनी**

'संयोगान्तस्य लोपः' (८।२।२३) इसमें षष्ठीनिर्देश असिद्ध हो जाने से 'षष्ठी स्थानेयोगा' (१।१।४९) यह परिभाषा नहीं उपस्थित होनी चाहिये। जिससे सामीप्य अर्थ भी सम्भव हो जाने पर संयोगान्त के समीप जो है उसका भी लोप होने लगेगा। इसी प्रकार सप्तमी-निर्देश और पञ्चमी-निर्देश में भी अनुपपत्तियाँ सम्भव हैं? इन सभी का समाधान किया जा रहा है—]

यहाँ (त्रिपादी में) जो षष्ठी-निर्देश, सप्तमी-निर्देश और पञ्चमी-निर्देश हैं वे (क्रमशः) "षष्ठी स्थाने योगा" (१।१।४९) 'तस्मिन्निति निर्दिष्टे पूर्वस्य' (१।१।६६) और 'तस्मादित्युत्तरस्य' (१।१।६७) इन शास्त्रों की कर्त्तव्यता में असिद्ध नहीं होते हैं। [ सिद्ध ही रहते हैं जिससे परिभाषा सूत्र प्रवृत्त होने में कोई बाधा नहीं है। ] कारण यह है कि 'संज्ञा और परिभाषा शास्त्र कार्य के अनुसार देश वाले समझने चाहिए' (अर्थात् कार्यविधायक सूत्र का देश ही उसमें अपेक्षित संज्ञा और परिभाषा का भी होता है। इस कारण ये परिभाषा सूत्र भी त्रिपादीस्थ विधिसूत्रों में उन्हीं के स्थान वाले हो जाते हैं। पूर्वत्व-परत्व नहीं रहता है। असिद्धत्व का प्रश्न ही नहीं उठता है। ] 'विप्रतिषेध में परवर्त्ती की प्रवृत्ति होती हैं' (१।४।२) (समान बल वाले दो शास्त्रों की एक ही लक्ष्य में प्रवृत्ति सम्भव होने पर विरोध को विप्रतिषेध कहा जाता है। इसमें परवर्ती शास्त्र बलवत्तर माना जाता है।) यह परिभाषा जिस पूर्ववर्ती शास्त्र के साथ स्पर्धा करती है, उसे अभिभूत करना चाहती है, परवर्ती सूत्र उस पूर्ववर्ती के प्रति असिद्ध हो जाता है अतः यह प्रवृत्त नहीं होती है। [ क्योंकि अब तुल्यबल नहीं रहता है। ] और इस

**सह स्पर्द्धने, परं लक्षणं तत्प्रति तस्यासिद्धत्वान्न प्रवर्तते । तथा च विस्फोर्यम्, अवगोर्यमिति गुणः परेण 'हलि च' (८।२।७७) इति दीर्घत्वेन न बाध्यते । अपवादस्य तु परस्यापि उत्सर्गे कर्तव्ये वचनप्रामाण्यादसिद्धत्वं न भवति । तेन दोग्धा, दोग्धुमित्यत्र घत्वस्यासिद्धत्वाद् 'हो ढः' (८।२।३१) इति न भवति ॥**

**न्यासः**

आह—**विप्रतिषेधे परमित्येषा त्वित्यादि ।** 'विप्रतिषेधे परम्' इत्येषा परिभाषात्र न प्रवर्त्तत इति प्रकृतेन सम्बन्धः। कस्मान्न प्रवर्त्तते ? इत्याह—**येनेत्यादि ।** द्वयोर्हि तुल्यबलयोर्विप्रतिषेधो भवति । इह तु **येन पूर्वेण लक्षणेन** 'पुगन्तस्य' इत्यादिना सह **परं लक्षणं स्पर्द्धते** तदप्यभिभवितुमिच्छति । परं लक्षणम् 'हलि च' इत्यादिकम्, तत् पूर्वं प्रति तस्यासिद्धत्वम् । अतोऽतुल्यबलत्वाद्विप्रतिषेधो नास्तीति 'विप्रतिषेधे परम्' इत्येषा परिभाषा न प्रवर्तते । **तथा चेत्यादि ।** एवमस्याः परिभाषाया अप्रवृत्तौ सत्यामित्यर्थः। यदि तर्हि पूर्वस्मिन् कार्ये कर्त्तव्ये परमसिद्धं भवति, एवं सत्युत्सर्गे कर्त्तव्ये परस्यापवादस्यासिद्धत्वं स्यात् । ततश्च दोग्धा, दोग्धुमित्यत्र 'दादेर्धातोर्घः' इति घस्यासिद्धत्वाड् ढत्वं स्यात् ? इत्यत आह—**अपवादस्य त्वित्यादि ।** यद्यप्यपवादविषयस्यापि परस्योत्सर्गे कर्तव्येऽसिद्धत्वं स्यात्, निर्विषयत्वाच्चापवादवचनस्य वैयर्थ्यं स्यात् । अतोऽपवादस्य परस्यापि वचनप्रामाण्यादसिद्धत्वं न भवति । ननु च वचनप्रामाण्यात् पर्यायेण तयोर्भावः स्यात्, तत्कुतो वैयर्थ्यप्रसङ्गः? नैतदस्ति; यद्यपवादस्य पर्यायता स्याद्, 'वा द्रुहमुह' इति विकल्पेन घत्वविधानमनर्थकं स्यात् ॥ १ ॥

**पदमञ्जरी**

संज्ञाः परार्था अत्यन्तं परिभाषाश्च तद्विधाः ।
न स्वातन्त्र्येण तास्तस्मात् कार्यावगतिहेतवः ॥
अनेकस्य प्रधानस्य शेषभूता भवन्त्विति ।
एताः केवलमाचार्यः पृथग्देशा उपादिशत् ॥
विधिवाक्यैस्तु संहृत्य यत्र तत्र स्थितैरपि ।
बोधयन्त्यः स्वकार्याणि नैकपूर्वाः परा इमाः ॥ इति ।

यदि कार्यकालं संज्ञापरिभाषम्, **'विप्रतिषेधे परम्'** इत्येषापि परिभाषात्रोपतिष्ठेत, ततश्च विस्फोर्यम्, अवगोर्यमित्यत्र गुणं बाधित्वा परत्वात् 'हलि च' इति दीर्घत्वं स्यात् ? इत्यत आह—**विप्रतिषेधे परमित्येषा त्विति ।** एषा तु न प्रवर्त्तत इति सम्बन्धः। मध्ये हेतुर्येनेति । विप्रतिषेधो हि तस्य निमित्तम् । कश्च विप्रतिषेधः ? द्वयोस्तुल्यबलयोरेकस्मिन्विषये त्वं चाहं चेति प्रवृत्तिप्रसङ्गः । न चायमत्र सम्भवति, तस्मान्निमित्ताभावान्न प्रवर्त्तत इत्यर्थः। यद्येवम्, अपवादोऽपि परः पूर्वमुत्सर्गं न बाधेत ? अत आह—**अपवादस्येति ।** यद्यपवादस्यासिद्धत्वादुत्सर्ग एव स्यात्, अपवादविधानं व्यर्थं स्यात् ॥ १ ॥

**भावबोधिनी**

प्रकार—'विस्फोर्यम्' 'अवगोर्यम्' [ विस्फुर् + ण्यत्, अवगुर् + ण्यत् ] में [ पुगन्तलघूपधस्य च' ७।३।८६ से किया जाने वाला ] गुण 'हलि च' ( ८।२।७७ ) इस दीर्घ विधायक द्वारा बाधित नहीं होता है । [ भाव यह है कि दोनों सूत्रों की प्रवृत्ति सम्भव होने से विप्रतिषेध मान कर परवर्ती दीर्घ होना चाहिये । परन्तु गुणविधायक की दृष्टि में दीर्घविधायक असिद्ध हो जाता है । अतः गुण ही होता है । किन्तु अपवाद शास्त्र यदि परवर्ती भी है तो भी पूर्ववर्ती उत्सर्ग की कर्त्तव्यता में वचनविधान-सामर्थ्य से असिद्ध नहीं होता है [ क्योंकि असिद्ध मान लेने पर अपवाद का बनाना ही व्यर्थ होने लगेगा । इस कारण परवर्त्ती भी अपवाद उत्सर्ग की दृष्टि में असिद्ध नहीं होता है । ] इस कारण—'दोग्धा, दोग्धुम्' आदि लक्ष्यों में घत्व के असिद्ध हो जाने से 'होढः' यह नहीं लगता है । [ भाव यह है कि दुह् + तृ, दुह् + तुम् आदि में "दादेर्धातोर्घः" ८।२।३२ से किया जाने वाला ह् का घ 'होढः' ( ८।२।३१ ) से परवर्तीहोने के कारण असिद्ध होना चाहिये । किन्तु यदि ढत्व ही होगा तो घत्वविधान व्यर्थ होने लगेगा । अतः वैयर्थ्य के कारण, परवर्ती होने पर भी असिद्ध नहीं अपितु सिद्ध ही माना जाता है । अतः केवल 'घत्व' ही होता है । ] ॥ १ ॥

## ३६६०. नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ॥ २ ॥ (३५३)

**नलोपः पूर्वत्रासिद्धो भवति सुब्विधौ, स्वरविधौ, संज्ञाविधौ, तुग्विधौ च कृति। विधिशब्दोऽयं प्रत्येकमभिसम्बध्यमानः स्वरसंज्ञातुकां विधेयत्वात्तैः कर्मषष्ठोयुक्तैर्भावसाधनोऽभिसम्बध्यते। सुपा तु सम्बन्धसामान्यवचनषष्ठ्यन्तेन कर्मसाधनः। तेन सुपः स्थाने यो विधिः, सुपि च परभूते, सर्वोऽसौ सुब्विधिरिति सर्वत्रासिद्धत्वं भवति।**

**न्यासः**

**नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ॥** कृतीत्येदनन्तरोक्तेन तुग्ग्रहणेनैव सम्बध्यते, न तु सर्वैः सुबादिभिः; अन्यथा यथा विधिशब्दस्य प्रत्येकं विधिसम्बन्धो दर्शितः; तथास्यापि सम्बन्धं दर्शयेत्। इहायं विधिशब्दः सुबादिभिः सम्बध्यमानो भावसाधनो वा सम्बध्येत ? कर्मसाधनो वा ? तत्राद्ये पक्ष आश्रीयमाणे—राजभिः, तक्षभिरित्यत्रैस्भावे कर्त्तव्ये नलोपस्यासिद्धत्वं न प्राप्नोति, भावसाधने हि यत्रासतो विधानं तत्रासिद्धत्वेन भवितव्यम्, न तु सतः। न चात्रासतः सुपो विधानम्; किं तर्हि ? सत एव; यतस्तस्य स्थान ऐस्भावस्य राजभ्याम्, राजभ्य इत्यत्रापि 'सुपि च' इति दीर्घत्वे 'बहुवचने झल्येत्' इत्येत्वे च कर्तव्ये नैवासिद्धत्वं प्राप्नोति; यस्मादिह सुपि परतो दीर्घत्वस्यैत्वस्य च विधानम्, न त्वसतः सुपः। इतरस्मिंस्तु पक्षे स्वरसंज्ञातुकामसतामेव विधानेन लोपस्यासिद्धत्वमिष्यते, एतच्च न सिध्यति; कर्मसाधने हि विधिशब्दे तैः सम्बध्यमाने सतामेव तेषामन्यस्मिन् कार्ये विधीयमाने सत्यसिद्धत्वेन भवितव्यम्, न तु तेषामसतां विधानेन शक्यते वक्तुम्—सुपा कर्मसाधनः सम्बध्यते, स्वरादिभिश्च भावसाधन इति। एको ह्ययं विधिशब्दः सूत्रोपात्तः; स च भावसाधनो वा स्यात्, कर्मसाधनो वेति; न तूभयसाधनः, न ह्येकस्योभयसाधनत्वमुपपद्यत इति ?—एतच्चोद्यमपाकर्तुमाह—**विधिशब्दोऽयमित्यादि**। यद्येष विधिशब्दः सुप्स्वरादिभि समुदायेन सम्बध्यते, तदा

**पदमञ्जरी**

**नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ॥** अत्र सूत्रे, उत्तरसूत्रे च कार्योपादानात् कार्ये कार्यस्यासिद्धत्वमुच्यते। 'कृति' इत्येतत्तु सम्भवव्यभिचाराभ्यां तुग्विधिनैव सम्बध्यते। विधिशब्दो भावसाधनः, कर्मसाधनश्च; तत्र भावसाधनानां त्रयाणां कर्मसाधनस्य चैकस्यैकशेषः; भिन्नार्थानामपि सरूपाणामेकशेषवचनात्। विधिश्च विधिश्च विधिश्च विधयः, ततो बहुवचनान्तेन विधिशब्देन सुबादीनां द्वन्द्वस्य षष्ठीसमासः। सर्वत्र च शेषलक्षणा षष्ठी। तत्र सुब्विधौ शेष एव शेषः, इतरेषु तु कर्म शेषत्वेन विवक्षितम्। तदिदमुक्तम्—**विधिशब्दोऽयमित्यादि। सम्बन्धसामान्यषष्ठ्यन्तेनेति।** सम्बन्धसामान्यमुच्यते षष्ठ्या, तदन्तेनेत्यर्थः। सामान्यशब्देन स्थानेयोगव्यवच्छेदः। कथं पुनः 'षष्ठी स्थानेयोगा' इति परिभाषायां सत्यां सामान्यवचनता लभ्यते ? उच्यते; नात्र सुपः स्थाने किञ्चिद्विधीयते, किं तर्हि ? अनुवादोऽयम्—सुपो यो विधिस्तत्रेति।

**भावबोधिनी**

सुप्विधि, स्वरविधि, संज्ञाविधि और कृत् प्रत्यय में तुक्विधि में पूर्ववर्ती के प्रति नलोप असिद्ध होता है। यह 'विधि' शब्द [ सूत्रघटक चारों के साथ ] सम्बद्ध होता हुआ, स्वर, संज्ञा और तुक् के विधेय होने के कारण कर्मषष्ठ्यन्तों ( स्वर, संज्ञा, तुक् ) से युक्त उनके साथ भावसाधन होता हुआ सम्बद्ध होता है। परन्तु सम्बन्धसामान्यवाचक षष्ठ्यन्त सुप् के साथ तो कर्मसाधन वाला अभिसम्बद्ध होता है। इसलिए सुप् के स्थान पर जो विधि है और सुप् परे रहते जो विधि है, वह सभी सुप्विधि है, इसलिए सभी में असिद्धत्व होता है।

**विमर्श**—विधि शब्द भावसाधन भी है और कर्मसाधन भी अर्थात् लक्ष्यानुरोध से दोनों अर्थ किये जाते हैं। सुप् के साथ कर्मसाधन विधिशब्द का सम्बन्ध होता है शेष तीन स्वर, संज्ञा और तुक् के साथ भावसाधन विधि का सम्बन्ध होता है। अतः स्वरादि तीन के न रहने पर उनकी सत्ता का विधान = विधि करने पर नलोप असिद्ध होता है। यहाँ 'स्वरसंज्ञातुकाम् विधिः' यह विग्रह में भाव अर्थ उक्त होने से कर्म के अनुक्त होने से 'कर्तृकर्मणोः कृति' सूत्र से षष्ठी होती है। अतः स्वरकर्मक विधि आदि भावार्थ होता है। 'सुपः विधिः' यहाँ सम्बन्ध

सुब्विधौ तावत्—राजभिः, तक्षभिरित्यत्र नलोपस्यासिद्धत्वाद् 'अतो भिस ऐस्' ( ७।१।९ ) इति न भवति। राजभ्याम्, तक्षभ्याम्, राजसु, तक्षस्विति—'सुपि च' ( ७।३।१०२ ) इति, बहुवचने झल्येत्' ( ७।३।१०३ ) इति दीर्घत्वम्, एत्वं च न भवति।

**न्यास**

स्यादयं दोषः। न च समुदायेन सम्बध्यते, किं तर्हि ? सुबादिभिः प्रत्येकम्। प्रत्येकञ्चास्मिन् सम्बध्यमाने यावद्भिः सहायं सम्बध्यते तावन्त्येव स्वरादिविधौ नलोपोऽसिद्धो भवतीत्येवमादीनि वाक्यानि भवन्ति। नलोपः सुप्स्वरसंज्ञातुग्विधिष्वेतद्ग्रहणकवाक्यं तेषामेव निबन्धनम्। तेषु च भिन्नेषु वाक्येषु विधिशब्दोऽपि भिन्न एव। तत्र कश्चिद् भावसाधनः, कश्चित् कर्मसाधनः। तत्र स्वरसंज्ञातुकामसतामेव विधाने कर्तव्ये नलोपस्यासिद्धत्वमुच्यते, तेन च ते विधीयमानत्वात् कर्मभावमापद्यन्ते। ततो भावसाधनेन विधिशब्देन कर्मणोऽनभिहितत्वादेषु 'कर्तृकर्मणोः कृति' इति षष्ठ्या भवितव्यम्। तेन तैः कर्मषष्ठीयुक्तैर्भावसाधनोऽभिसम्बध्यते, सुपा च सम्बन्धसामान्यवचनषष्ठ्यन्तेन।

**कर्मसाधन इति।** सुपो विधीयमानेन कार्येण सम्बन्धमात्रम्। सम्बन्धसामान्ये षष्ठी तु यत्र 'शेषे' इति षष्ठी विधीयते तत्र वेदितव्यम्। सम्बन्धसामान्यस्य वचनीति षष्ठीसमासः, सा चासौ षष्ठी चेति विशेषणसमासः, सम्बन्धसामान्यवचनषष्ठी अन्ते यस्य सुपः स तथोक्तः। कर्मषष्ठीयुक्तेन सुपा कर्मसाधनस्य विधिशब्दस्य सम्बन्धो नोपपद्यते; कर्मषष्ठ्यनुपपत्तेः। यदि हि सुप् कर्म स्यात् तत्र कर्मणि षष्ठी स्यात्, न चासौ सुप् कर्म; सुपो विधीयमानत्वात्। तत् तु तत्सम्बन्धिकार्यम्। विधीयमानत्वात् कर्म तद्विधिशब्दे-

**पदमञ्जरी**

अनुवादे च परिभाषा न प्रवर्त्तते; 'उदीचामातः स्थाने' इति स्थानेग्रहणाल्लिङ्गात्। **सम्बन्धसामान्यवचनषष्ठ्यन्तेनेति** यदुक्तम्, तत्र प्रयोजनमाह—**सुपां स्थान इत्यादि। सर्वोऽसौ सुब्विधिरिति।** सर्वस्य सुप्सम्बन्धित्वात्सुबर्थमेव चेदं विधिग्रहणं कृतम्। स्वरादिषु तु नार्थः; तेन यथा 'न मु ने' इत्यत्र नाभावे कर्त्तव्ये इत्यर्थो भवति, तथा स्वरादिषु कर्त्तव्येष्वित्यर्थो भविष्यति। द्वन्द्वात्परस्य तु प्रत्येकं सम्बन्धो दुर्निवार इति भावसाधनत्वमङ्गीकृतम्। 'सुब्विधिस्वरसंज्ञातुक्षु' इत्युच्यमाने तु न किञ्चिद्यत्नसाध्यम्।

**राजवतीति।** मतुबन्ताद् 'उगितश्च' इति ङीप्, राजशब्दः कनिन्प्रत्ययान्तत्वादाद्युदात्तः। **पञ्चार्ममिति।** 'दिक्संख्ये संज्ञायाम्' इति समासः, तत्र नलोपे कृते पूर्वपदमवर्णान्तं जातमिति स्वरः प्राप्तोऽसिद्धत्वान्न भवति, समासोदात्तत्वमेव भवति।

**भावबोधिनी**

सामान्य में षष्ठी है। और 'विधीयते असौ इति विधिः' यह कर्मसाधन है। यहाँ कर्म के उक्त होने से सम्बन्ध सामान्य में षष्ठी करके समास किया जाता है। इसलिये सुप् के स्थान पर जो विधि होती है और सुप् परे रहते जो विधि होती है सभी 'सुब्विधिः' हैं। अतः षष्ठ्यन्त और सप्तम्यन्त दोनों के साथ 'विधि' का समास होता है। सुप् के स्थान पर या सुप् परे जो भी होता है वह सुबाश्रय विधि मानी जाती है : यह सब आगे उदाहरणों मेंस्पष्ट होता है।

( अनु० ) सुप्विधि में ( नलोप असिद्ध होता है—इसके ) उदा० 'राजभिः, तक्षभिः' इनमें [ 'नलोपः प्रातिपदिकान्तस्य' ८।२।७ से किये गये ] नलोप के असिद्ध हो जाने के कारण [ अदन्त न रहकर नकारान्त हो जाने के कारण ] "अतो भिस ऐस्" ( ७।१।९ ) [ इस सूत्र से भिस् का ऐस् आदेश ] नहीं होता है। राजभ्याम्, तक्षभ्याम्, राजसु, तक्षसु—इनमें [ नलोप के असिद्ध हो जाने से अदन्त अङ्ग न रह जाने के कारण ] "सुपि च" ( ७।३।१०२ ) सूत्र से ( प्रथम दोनों में ) दीर्घ और "बहुवचने झल्येत्" ( ७।३।१०३ ) सूत्र से ( बाद वाले दोनों में ) एत्व नहीं होता। [ राजन् तथा तक्षन् के बाद भिस् भ्याम्, सुप् परे 'स्वादिष्वसर्वनामस्थाने' से पदसंज्ञा करके 'नलोपः प्रातिपदिकान्तस्य' ( ८।२।७ ) से नलोप होता है। यह त्रिपादीस्थ है। ऐस्, दीर्घ तथा एत्वविधायक सूत्र सपादसप्ताध्यायीस्थ हैं। किया गया भी नलोप असिद्ध हो जाता है। अतः अकारान्त न मिलकर नकारान्त मिलने से

स्वरविधौ—राजवतीत्यत्र नलोपस्यासिद्धत्वात् 'अन्तोऽवत्याः' ( ६।१।२२० ) इति न भवति। पञ्चार्मम्, दशार्ममिति—अत्र नलोपस्यासिद्धत्वाद् 'अर्मे चावर्णं द्वयच्त्र्यच्' ( ६।२।९० ) इति पूर्वपदस्याद्युदात्तत्वं न भवति। पञ्चदण्डी[1]—इत्यत्र नलोपस्यासिद्धत्वात् 'इगन्ते द्विगौ' ( ६।२।२९ ) इति पूर्वपदप्रकृतिस्वरो न भवति।

संज्ञाविधौ—पञ्च ब्राह्मण्यः, दश ब्राह्मण्य इति नलोपस्यासिद्धत्वाद् 'ष्णान्ता षट्' ( १।१।२४ )

**न्यासः**

नोक्तम्। अतस्तत्रापि तावत् कर्मषष्ठी न सम्भवति, किं पुनरकर्मणि सुप्? **तेनेत्यादि**। यस्मात् सम्बन्धमात्राभिधायिनी या षष्ठी तदन्तेन सुपा कर्मसाधनो विधिशब्दः सम्बध्यते, तेन हेतुना सुपः स्थाने यो त्रिधिर्मिस ऐस्भावः, सुपि परतो यो विधिर्दीर्घत्वादिर्यस्य सुब् निमित्तं सर्वोऽसौ सुप्सम्बन्धी भवतीति सर्वत्राप्यसिद्धत्वं भवति। ननु च 'षष्ठी स्थानेयोगा' इति वचनात् सम्बन्धविशेषे षष्ठ्या भवितव्यम्, न तु सम्बन्धसामान्ये। ततश्च सुप एव स्थाने यत् कार्यं तत्रैवासिद्धत्वं स्यात्, नान्यत्र? नैतदस्ति; यत्र ह्यादेशो विधीयते—'अस्तेर्भूः' इत्येवमादौ, तत्रास्याः परिभाषाया व्यापारः, न तु यत्र लक्षणान्तरेण विहितं कार्यं कार्यान्तरार्थमुपादीयते तत्रापि; अन्यथा 'उदीचामातः स्थाने यकपूर्वायाः' इत्यत्र स्थानग्रहणमनर्थकं स्यात्। अनयैव परिभाषयाऽतः स्थाने योऽकारस्तस्य ग्रहणं भवति। ननु चेह सुपामादेशो न विधीयते, किं तर्हि? लक्षणान्तरविहितस्यापि सिद्धत्वम्। तस्मान्नात्र स्थानयोगपरिभाषाया व्यापारः।

**राजवतीत्यादि**। राजशब्दान्मतुप्, 'उगितश्च' इति ङीपि कृते 'अन्तोऽवत्याः' इत्यन्तोदात्तत्वं प्राप्नोति। नलोपस्यासिद्धत्वान्नायमवतीशब्द इति न भवति। तस्मिन्नसति 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति राजन्शब्दस्य कनिन्प्रत्ययान्तस्य नित्स्वरेणाद्युदात्तत्वाद् राजवतीशब्द आद्युदात्त एव भवति। **पञ्चार्मम्, दशार्ममिति**। 'दिक्संख्ये संज्ञायाम्' इति समासः। अत्र नलोपे कृतेऽवर्णान्तं पूर्वपदं जातमिति 'अर्मे चावर्णम्' इत्यादिना सूत्रेण तस्याद्युदात्तत्वं प्राप्नोति, असिद्धत्वान्न भवति, समासान्तोदात्तत्वमेव

**पदमञ्जरी**

**पञ्चदण्डीति**। समाहारद्विगुः। **नलोपस्यासिद्धत्वात् ष्णान्ता षडिति षट्संज्ञा भवतीति**। एतच्च यत्तत्रोक्तम्—'अन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थम्' इति, तदनाश्रित्योक्तं द्रष्टव्यम्। **न षट्स्वस्रादिभ्य इति टापः प्रतिषेधो भवतीति**। अत्र हि नान्तत्वात् पूर्वं ङीप् प्राप्नोति, निषिध्यते; ततो जश्शसोर्लुकि नलोपे चकारान्तत्वादाप्प्राप्तः, सोऽपि निषिध्यते; 'स्त्रियां यदुक्तं तन्न भवति' इति सामान्येन निषेधविधानात्। **तदेतत्प्रयोजनं कथं भवतीति**। पाक्षिकत्वं प्रयोजनस्य दर्शयितुं प्रश्नः। केषाञ्चिद्दर्शनम्—अनारभ्य कार्यविशेषमादौ तावत्संज्ञा क्रियते, ततो यस्यां दशायां यत्कार्यं प्राप्तं तत्क्रियते लोकवत्, तद्यथा—लोके दशम्यामुत्थितायां पुत्रस्य नाम दधातीति सकृत्कृतया संज्ञया सर्वाणि कार्याणि क्रियन्ते, न तु प्रतिकार्यं नाम कुर्वन्ति,

**भावबोधिनी**

अदन्ताश्रित कोई सूत्र नहीं लगता है। पहले वाले उदाहरणों में सुप् = भिस् के स्थान पर 'ऐस्' विधि होनी थी। बाद वाले उदाहरणों में सुप् = भ्याम्, सुप् परे पूर्व अंग की विधि होनी थी। सभी में नलोप असिद्ध हो जाता है।]

स्वर-विधि में [ नलोप असिद्ध होने का ) उदा० राजवती। [ राजन् + मतुप् = वत् + ङीप् = ई, नलोप करने पर ] नलोप के असिद्ध हो जाने से 'अन्तोऽवत्याः' (६।१।२२०) सूत्र से ( अन्त उदात्त ) नहीं होता है। [ अपि तु कनिन् प्रत्ययान्त राजन् शब्द 'ञ्नित्यादिर्नित्यम्' सूत्र से आद्युदात्त ही रहता है। ] पञ्चार्मम्, दशार्मम् [इनमें 'दिक्संख्ये संज्ञायाम्' सूत्र से समास के बाद नलोप होता है।] नलोप के असिद्ध हो जाने के कारण 'अर्मे चावर्णं द्व्यच् त्र्यच्' (६।२।९०) इस सूत्र से पूर्व पद का आद्युदात्त नहीं होता है। [ नलोप होने पर पूर्वपद अवर्णान्त होने पर ही आद्युदात्तत्व प्राप्त है। किन्तु नलोप असिद्ध हो जाने पर अवर्णान्त पूर्वपद नहीं मिल पाने से यह सूत्र न लगकर सामान्य सूत्र से 'समास का अन्त उदात्त होता है। ] पञ्चदण्डी—( समाहार द्विगु—पञ्चानां दण्डिनां समाहारः—

१. मुद्रितकाशिकायां पञ्चबीजीत्युदाहरणम्।

**इति षट्संज्ञा भवति, ततश्च 'न षट्स्वस्रादिभ्यः' ( ४।१।१० ) इति टापः प्रतिषेधो भवति। तदेतत्प्रयोजनं कथं भवति? यदि 'प्रतिकार्यं संज्ञाप्रवृत्तिः' इत्येतद्दर्शनम्। या हि जश्शसोर्लुगर्था षट्संज्ञा प्रवृत्ता, तया स्त्रीप्रत्ययप्रतिषेधो न क्रियत इति सा पुनः प्रवर्तयितव्येति।**

**न्यासः**

भवति। **पञ्चदण्डीति**। पञ्चानां दण्डिनां समाहार इति 'तद्धितार्थ' इत्यादिना समासः, समाहारे द्विगुः, 'स नपुंसकम्' इति नपुंसकत्वम्। नलोपे कृत इगन्तता जातेति 'इगन्तकालकपालभगालशरावेषु द्विगौ' इति पूर्वपदस्य प्रकृतिस्वरः प्राप्नोति, नलोपस्यासिद्धत्वान्न भवति, समासान्तोदात्तत्वमेव भवति।

**तदेतदित्यादि**। इह केषाञ्चिदेकयैव संज्ञयाऽनेकसंज्ञाकार्यं क्रियते—'यावन्ति संज्ञाकार्याणि तत्रैकैव संज्ञा प्रवर्त्तते' इति दर्शनम्। अन्येषां तु 'यया संज्ञयैककार्यं क्रियते तयैवान्यत्, अतो यावन्ति संज्ञाकार्याणि तावत्य एव संज्ञाः प्रवर्त्तन्ते' इति दर्शनम्। तत्र पूर्वस्मिन्दर्शने नेदं प्रयोजनम्; ययैव हि प्राक् प्रवृत्तया संज्ञया 'षड्भ्यो लुक्' इति जश्शसोर्लुक्कार्यं कृतं तयैव हि टाप्प्रतिषेधो भविष्यति। तस्मादितरस्मिन् दर्शने तत् प्रयोजनं भवति। अत्रापि कथमेतत् प्रयोजनम् भवति? इत्याह—**या हीत्यादि**। हिशब्दो यस्मादर्थे। इतिकरणस्तस्मादर्थे यस्माज् जश्शसोर्लुगर्था या षटसंज्ञा प्रवृत्ता तया स्त्रीप्रत्ययप्रतिषेधो न भवति, तस्मात् पुनः सा प्रवर्तयितव्या। यस्मात् सा प्रवर्तयितव्या तस्मादेतत् प्रयोजनमित्यर्थः।

**पदमञ्जरी**

तद्वदिति। अयं च 'यथोद्देशं संज्ञापरिभाषम्' इति पक्षः। कार्यकालपक्षे तु तेनतेन विधिवाक्येनेकवाक्यतापन्नेन संज्ञासूत्रेण संज्ञा प्रणीयत इति प्रतिकार्यं संज्ञाप्रवृत्तिः। तत्राद्ये दर्शने जश्शसोर्लुगर्था या संज्ञा तयैव टाप्प्रतिषेधस्यापि सिद्धत्वान्नेदं प्रयोजनम्, द्वितीये तु पक्षे भवति प्रयोजनमित्याह—**यदि प्रतिकार्यमिति**। कथं तदा प्रयोजनम्? इत्याह—**या हीति**। **जश्शसोर्लुगर्थेति**। उपलक्षणमेतत्, ङीप्प्रतिषेधार्थेत्यपि द्रष्टव्यम्। **स्त्रीप्रत्ययस्येति**। टाप इत्यर्थः। अथ प्रथमे पक्षे न कर्त्तव्यं संज्ञाग्रहणम्, इह हि—दण्डिगुप्तौ, गुप्तदण्डिनाविति नलोपे कृते दण्डिशब्दस्य घिसंज्ञा प्राप्नोति, ततश्च तस्यैव पूर्वनिपातः स्यात्; नलोपस्यासिद्धत्वाद्धि संज्ञाया अभावादनियमः पूर्वनिपातस्त भवति।

**भावबोधिनी**

में समास, नपुंसक लिङ्ग एकवचन में नलोप होता है—पञ्चदण्डि।] इसमें 'इगन्तकालकपालभगाल शरावेषु द्विगौ' ( ६।२।२९ ) सूत्र से [ इगन्त मानकर पूर्वपद का प्रकृतिस्वर प्राप्त होता है किन्तु नलोप असिद्ध हो जाने से पूर्वपद का प्रकृतिस्वर नहीं होता है। [ अपि तु समास का अन्तोदात्त ही होता है। ]

संज्ञाविधि में [ न लोप असिद्ध होने के ] उदा० पञ्च ब्राह्मण्यः, दश ब्राह्मण्यः—इनमें नलोप के असिद्ध हो जाने से [ नकारान्त ही रह जाने से पञ्च और दश की ] "ष्णान्ता षट्' ( १।१।२४ ) सूत्र से षट् संज्ञा होती है और इसी से 'न षट्स्वस्रादिभ्यः' (४।१।१०) सूत्र से टाप् का प्रतिषेध हो जाता है। [ यहाँ पहले नकारान्त मानकर ङीप् प्राप्त होता है। नलोप कर देने पर अकारान्त मानकर टाप् प्राप्त होता है। तब 'स्त्रीलिङ्ग में जो भी प्राप्त है वह नहीं होता है।' इस सामान्य नियम से टाप् का भी प्रतिषेध हो जाता है। ] इस कारण यह कैसे प्रयोजन होता है? 'यदि प्रत्येक कार्य में संज्ञा की प्रवृत्ति होती है' ऐसा सिद्धान्त माना जाय। जस् तथा शस् के लुक् के लिये जो षट् संज्ञा प्रवृत्त होती है उस षट्संज्ञा द्वारा स्त्रीप्रत्यय ( टाप् का ) प्रतिषेध नहीं किया जा सकता, अतः [ लुक् कराकर वह षट् संज्ञा क्षीणशक्तिक हो जाती है इसलिये स्त्रीप्रत्यय रोकना सम्भव न होने से ] पुनः षट्संज्ञा करनी चाहिए। [ उसके लिये नान्तत्व आवश्यक है यह नलोप असिद्ध होने पर ही संभव होता है। तभी दुबारा षट्संज्ञा करके टाप् का निषेध हो सकने से यह प्रयोजन माना जाता है। इस प्रकार मतभेद से ही यह प्रयोजन है। ]

तुक्-आगम विधि में [ नलोप के असिद्धत्व का ] उदा०—वृत्रहभ्याम्, वृत्रहभिः' इनमें नलोप के असिद्ध हो जाने से [ अकारान्त न रहकर नकारान्त हो जाने से ] 'ह्रस्वस्य पिति कृति तुक्' ( ६।१।७१ ) इस सूत्र से तुक् नहीं होता है। [ वृत्रं हतवान्—इस अर्थ में 'ब्रह्मभ्रूणवृत्रेषु क्विप्' ( ३।२।८७ ) सूत्र से क्विप् प्रत्यय, सर्वापहारी लोप,

तुग्विधौ—वृत्रहभ्याम्, वृत्रहभिरिति नलोपस्यासिद्धत्वाद् 'ह्रस्वस्य पिति कृति तुक्' ( ६।१।७१ ) इति तुग्न भवति। अत्र केचित्—'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' ( व्या० प० १२ ) इति तुकं प्रति नलोपस्यानिमित्तत्वाद् बहिरङ्गलक्षणेन वाऽसिद्धत्वात्तुग्विधिग्रहणमनर्थकमिति प्रतिपन्नाः तु तत् क्रियते परिभाषाद्वयस्यानित्यत्वं ज्ञापयितुम्।

**न्यासः**

**वृत्रहभ्याम्, वृत्रहभिरिति।** वृत्रं हतवानिति 'ब्रह्मभ्रूणवृत्रेषु क्विप्', तदन्ताद् भ्याम्भिसौ, तत्र नलोपे कृते 'ह्रस्वस्य पिति कृति तुक्' स्यात्, असिद्धत्वान्न भवति। **अत्र केचिदित्यादि।** सन्निपातः= आनन्तर्यम्, तल्लक्षणं निमित्तं यस्य स तथोक्तः। सुपः सन्निपातेन नलोपः। स यदि तुकं प्रवर्त्तयेत् तत् सन्निपातं विहन्यात्। अनिमित्तञ्च, सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति' तस्माद् नलोपस्तुकं न प्रवर्त्तयतीति तुग्ग्रहणमनर्थकम्। ननु च तुकः पूर्वान्तत्वात् तुक् प्रातिपदिकग्रहणेनैव गृह्यते, तत् कुतस्तस्य सन्निपातस्य विघातः, न हि स्वावयवेनैव स्वस्य व्यवधानमुपपद्यते? नैतदस्ति; ह्रस्वो ह्यागमी तुकः, न तदन्तः समुदायः, तत् कुतस्तस्य प्रातिपदिकग्रहणेन ग्रहणम्! बहिरङ्गलक्षणेन वासिद्धत्वात् तुकं प्रति नलोपस्य, तुग्विधिग्रहणमनर्थकम्। पदस्य बाह्यविभक्तिप्रत्ययमाश्रित्य नलोपो विधीयत इति तस्य बहिरङ्गत्वम्, अन्तर्वर्तिनं पदमाश्रित्य वर्णस्य तुग् विधीयत इति तस्यान्तरङ्गत्वमिति—'असिद्धं बहिरङ्गमन्तरङ्गे' इति। यद्येवम्, युक्तमेवेति प्रतिपन्नाः, तत् किमर्थम् तुग्ग्रहणं क्रियते? इत्यत आह—**तत् क्रियत इत्यादि।** अनित्यत्वज्ञापने तु सन्निपातलक्षणपरिभाषायाः प्रयोजनम्—वृक्षाय इत्यत्र 'सुपि च' इति दीर्घत्वसिद्धिः। अकारान्ततासन्निपाते हि ङेर्यो विधीयत इति; तन्निमित्तत्वादिति दीर्घत्व-

**पदमञ्जरी**

**अत्र केचिदित्यादि।** सुपः सन्निपातेन नलोपः, स यदि तुकं प्रवर्त्तयेत् तत्सन्निपातं विहन्यात्। कथं पुनः सन्निपातस्य विघातः, यावता पूर्वान्तस्तुक् स तुग्ग्रहणेन गृह्यते? सत्यम्; ह्रस्वमात्रभक्तस्तुगित्याश्रित्येदमुक्तम्। **बहिरङ्गलक्षणत्वेन वेति।** बहिर्भूतविभक्त्यपेक्षो नलोपोऽन्तर्भूतविवबपेक्षे तुक्यसिद्धो भवतीत्यर्थः। **परिभाषाद्वयाप्यस्यनित्यत्वं ज्ञापयितुमिति।** तत्र सन्निपातपरिभाषाया अनित्यत्वाद् वृक्षायेत्यादौ 'सुपि च' इति दीर्घत्वं भवति। बहिरङ्गपरिभाषायास्त्वनित्यत्वाद् एषा, द्वे इत्यत्र विभक्त्याश्रयं त्यदाद्यत्वं बहिरङ्गमपि प्रातिपदिकाश्रये टापि न सिद्धं भवति।

**भावबोधिनी**

उपपद समास आदि करने पर वृत्रहन् + भ्याम् में नलोप के बाद ह्रस्वान्त मानकर तुक् प्राप्त होता है किन्तु नलोप असिद्ध हो जाने पर नकारान्त होने से तुक् नहीं होता है। ]

यहाँ कुछ आचार्य ऐसा कहते हैं—'सन्निपात = दो का अव्यवहित संयोग मानकर होने वाली विधि उस सन्निपात के विनाश का कारण नहीं बन सकती' इस परिभाषा के द्वारा तुक् के प्रति नलोप निमित्त नहीं बन सकता अथवा बहिरङ्ग निमित्त वाला होने से नलोप असिद्ध हो जाता है इसलिये 'तुग्विधि' का ग्रहण अनर्थक है। फिर भी जो ग्रहण किया गया वह दोनों परिभाषाओं की अनित्यता को ज्ञापित करने के लिये है।

**विमर्श**—जिसको आधार बनाकर कोई कार्य किया जाता है तो उसमें यह ध्यान रखना आवश्यक है कि उस निमित्त = आधार का विनाश न होने लग जाय—'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य'। वृत्रहन् + भ्याम् में नलोप हो जाने पर अदन्त मानकर 'ह्रस्वस्य पिति कृति तुक्' सूत्र से तुक् प्राप्त है। किन्तु न् का लोप भ्याम् आदि सुप् तथा प्रकृति के सन्निपात से होता है। यदि मध्य में तुक् आगम किया जायगा तो दोनों का सन्निपात = अव्यवहितसंयोग नष्ट होने लगेगा। अतः नलोप तुक् आगम का निमित्त नहीं हो सकता। इस प्रसिद्ध परिभाषा से ही तुक्वारण सम्भव है। नलोप असिद्ध मानने की आवश्यकता नहीं है। दूसरी परिभाषा है 'असिद्धं बहिरङ्गमन्तरङ्गे' अन्तरङ्ग कार्य की कर्त्तव्यता में बहिरङ्ग कार्य असिद्ध हो जाता है। प्रस्तुत स्थल वृत्रहन् + भ्याम् में बहिर्भूत सुप्

कृतीति किम् ? वृत्रहच्छत्त्रम्, वृत्रहच्छाया—'छे च' ( ६।१।७३ ) इति तुग्भवति। अत्र 'सिद्धे सत्यारम्भो नियमार्थः' ( कात० प० ६२ )—एतेष्वेव नलोपोऽसिद्धो भवति, नान्यत्र। तेन राजीयति, राजायते, राजाश्वः—इति ईत्वम्, दीर्घत्वम्, एकादेशश्च सिद्धो भवति ॥

**३६६१. न मु ने ॥ ३ ॥ (४३९)**

**मुभावो नाभावे कर्तव्ये नासिद्धो भवति। किं तर्हि ? सिद्ध एव। अमुना। मुभावस्यासिद्धत्वात्**

**न्यासः**

निमित्तभावोपगमनद्वारेण तद्विघातं न कुर्यात्। अनित्यत्वात् तु करोति। अन्यच्चात्र प्रयोजनमुत्तरत्रैव वक्ष्यते। बहिरङ्गलक्षणपरिभाषया सुप्यनित्यत्वस्य ज्ञापने—एषा, द्वे इत्यत्र टाप्सिद्धिः। अत्र हि त्यदाद्यत्वस्य विभक्त्याश्रयत्वाद् बहिरङ्गत्वम्, प्रातिपदिकाश्रयत्वाट्टाबन्तरङ्गः। तत्र टापि कर्त्तव्ये त्यदाद्यत्वस्यासिद्धत्वं स्यात्, ततष्टाप् न सिध्येत्। अनित्यत्वात् तु सिध्यति। प्रतिदीव्नेत्यत्र 'हलि च' इति दीर्घत्वसिद्धिः प्रयोजनम्। असति तस्यानित्यत्वे 'हलि च' इति दीर्घत्वे कर्तव्ये बहिरङ्गस्याल्लोपस्यासिद्धत्वाद् हलि परतो वकारान्तो धातुर्न भवतीति दीर्घत्वं न स्यात्। अनित्यत्वात् तु सिद्ध्यति।

**राजीयतीति**। 'सुप आत्मनः क्यच्' इति क्यच्, 'क्यचि च' इतीत्वम्। **राजायत इति**। 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्, 'अकृत्सार्वधातुकयोः' इति दीर्घः। **राजाश्च इति**। 'अकः सवर्णे दीर्घः' ॥ २ ॥

**न मु ने** ॥ 'मु' इत्यविभक्तिकोऽयं निर्देशः। **अमुनेति**। अदसस्त्यदाद्यत्वम्, 'अदसोऽसेर्दादुः दो मः'

**पदमञ्जरी**

**वृत्रहच्छत्रमिति**। नात्र सन्निपातलक्षणो नलोपः, नापि नलोपस्य बहिरङ्गत्वम्; तुकोऽपि छकारापेक्षत्वात्। **राजीयतीति**। 'क्यचि च' इतीत्वम्। **राजायत इति**। 'अकृत्सार्वधातुकयोः' इति दीर्घः। **राजाश्व इति**। 'अकः सवर्णे दीर्घः' ॥ २ ॥

**न मु ने** ॥ 'मु' इत्यविभक्तिको निर्देशः। **घिलक्षणो नाभावो न स्यादिति**। यद्येतन्नारभ्येतेति

**भावबोधिनी**

विभक्ति की अपेक्षा करके पदान्त न का लोप होता और अन्तर्भूत क्विप् को मानकर 'ह्रस्वस्य पिति कृति तुक्' सूत्र से तुक् करना है। इसकी कर्तव्यता में नलोप असिद्ध हो जाता है। तब तुक् की प्राप्ति नहीं रह पाती है। अतः सूत्र द्वारा तुग्विधि में नलोप असिद्ध मानने की आवश्यकता नहीं है।

उपर्युक्त परिभाषाओं से कार्यनिर्वाह संभव रहने पर भी जो 'तुग्विधि में नलोप' असिद्ध माना गया उसका फल है उपर्युक्त दोनों परिभाषाओं को अनित्य ज्ञापित करना। इसीलिये 'रामाय' 'वृक्षाय' आदि में अदन्त मानकर ङे का य करने पर भी ''सुपि च'' सूत्र से दीर्घ होता है।

( अनु० ) कृत् प्रत्यय परे तुग्विधि में नलोप असिद्ध होता है—इसका क्या फल है ? 'वृत्रहच्छत्रम्, वृत्रहच्छाया'—इनमें ''छे च'' सूत्र द्वारा तुक् होता है अर्थात् नलोप असिद्ध न होकर सिद्ध ही रहता है। [ क्योंकि कृत् प्रत्यय परे तुक् नहीं अपि तु छ परे तुक् करना है। ]

[ उपर्युक्त सभी कार्य ''पूर्वत्रासिद्धम्'' इसी सूत्र से सिद्ध हो सकते हैं तब इस पृथक् सूत्र की क्या आवश्यकता ? ] यहाँ सिद्ध रहने पर भी आरम्भ किया गया यह नियम करने के लिये है—इन ( सुप्-स्वर-संज्ञा-तुग्विधियों ) में ही नलोप असिद्ध होता है अन्य में असिद्ध न होकर सिद्ध ही रहता है। इस कारण—राजीयति, राजायते, राजाश्वः—इनमें क्रमशः [ ''क्यचि च'' सूत्र से अ का ] ईत्व, [ ''अकृत्सार्वधातुकयोः' सूत्र से अ का ] दीर्घ और [ ''अकः सवर्णे दीर्घः' सूत्र से दोनों अकारों का ] सवर्णदीर्घ रूप एकादेश सिद्ध होता है। [ यदि यह नियमार्थ नहीं होता तो उपर्युक्त लक्ष्यों में भी नलोप असिद्ध हो जाने पर ईत्व आदि नहीं हो पाते। ] ॥ २ ॥

ना-भाव ( आदेश ) करने के प्रसङ्ग में मु-भाव ( आदेश ) असिद्ध नहीं होता है। तो क्या ? सिद्ध ही रहता है। उदा० अमुना। [ अदस्+टा, 'त्यदादीनामः' सूत्र से टि का अत्व, पररूप होने पर ''अदसोऽसेर्दादु दो

**घिलक्षणो नाभावो न स्यात्। कृते तु नाभावे मुभावस्यासिद्धत्वात् 'सुपि च' (७।३।१०२) इति दीर्घत्वं यत्प्राप्नोति, तत् 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' ( व्या० प १२ ) इति न भवति।**

**अथ वा—योगद्वयमिदमुभयार्थं तन्त्रेणोच्चारितम्।**

**अथ वा—ने परतो यत्प्राप्नोति तस्मिन्कर्तव्ये मुभावो नासिद्ध इत्येष एवात्र सूत्रार्थः। ने तु**

**न्यासः**

इत्युत्वमत्वे' 'अच्च घेः' इत्यतः 'घेः' इत्यनुवर्तमाने 'आङो नास्त्रियाम्' इति नाभावः। यदि मुभावो नाभावे कर्तव्ये नासिद्धो भवति—इत्येष सूत्रार्थः स्यात्, एवं सति नाभावे कृते यत् कार्यं प्राप्नोति तत्र तस्यासिद्धत्वं न स्यात्, ततश्चामुनेत्यत्राकारान्तस्याङ्गस्य 'सुपि च' इति विधीयमानं दीर्घत्वं प्रसज्येत ? इत्यत आह—**कृते तु नाभाव इत्यादि।** ह्रस्वसन्निपातेन हि नाभावो ह्रस्वस्य विघातं प्रति निमित्तं न भवतीति सत्यप्यसिद्धत्वे न भवति दीर्घत्वप्रसङ्गः।

**अथ वेत्यादि।** यथैकेन हि क इतो धावतीति पृष्टोऽपरेणापि किंवर्णो धावतीति प्रश्ने कश्चिन्निपुणमतिस्तन्त्रेण वाक्यद्वयमुत्तरयति—श्वेतो धावतीति, तथेहापि योगद्वयमेतत् तन्त्रेणोच्चरितम्। तत्र द्वितीयस्य योगस्य ने परतो यत् प्राप्नोति तस्मिन् कर्तव्ये मुभावो नासिद्ध इत्येष सूत्रार्थः। तेन दीर्घत्वं न भविष्यति।

एकस्मिन्नेव दीर्घत्वप्राप्तिमपाकर्तुमाह—**अथ वेत्यादि।** ननु चास्मिन् सूत्रार्थे ने कर्तव्ये मुभावस्य यत् सिद्धत्वं तत् सूत्रेण न संगृहीतं स्यात्, ततश्च नाभाव एव तावन्न प्राप्नोति, कुतः पुनस्तस्मिन् परतो

**पदमञ्जरी**

शेषः। अनेन सूत्रारम्भस्य प्रयोजनमुक्तम्। **कृते तु नाभावे इत्यादि।** यद्यत्र दीर्घत्वं स्यात् भाव्यमानोऽप्युकारः सवर्णान् गृह्णातीति, यथा—अमूभ्यामित्यादौ दीर्घस्य स्थानिनो दीर्घोकारो भवति, तथात्राप्याकारस्य दीर्घोकारः स्यात्, ततश्च ह्रस्वसन्निपातकृतो नाभावस्तं विहन्यादिति भावः। अत्र चोदयन्ति—मुभावस्य सिद्धत्वात्किल दीर्घप्रसङ्गश्चोद्यते, तत् किं मुभावमपश्यद् दीर्घशास्त्रं घिलक्षणं नाभावमपि न पश्यति, वृक्षादिशब्दस्थानीयं ह्येतद्दीर्घशास्त्रं प्रति, ततश्च यञादेरभावात्कथमत्र दीर्घप्रसङ्ग इति ? अत्राहुः—प्रयोगे तावन्नाभावः श्रूयते, शास्त्रमपि तस्य सिद्धकाण्डे पठितम्, केवलं तन्निदानभूतं मुभावमेव दीर्घशास्त्रं न पश्यति, तन्मा द्राक्षीत्, नाभावं तावत्पश्यति, ततश्च दीर्घत्वं प्रवर्त्तयेदिति।

**अथ वेति।** यथा कश्चित्कुशलमतिः किञ्जातीयो धावति, किंवर्णो धावति—इत्येकेनानेकेन वा पृष्टस्तन्त्रेण प्रतिवक्ति—श्वेतो धावतीति; तथात्रापि योगद्वयमेतत्; तत्रैकं ने कर्त्तव्ये मुत्वस्यासिद्धत्वं निषेधति,

**भावबोधिनी**

मः" ( ८।२।८० ) सूत्र से अ का उ और द् का म् अमु + टा। 'आङो नाऽस्त्रियाम्' सूत्र से 'टा' का 'ना' आदेश होने पर 'अमुना' रूप बनता है। यहाँ [ त्रिपादीस्थ सूत्र से विहित ] मुत्व के असिद्ध हो जाने से घिसंज्ञा मानकर होने वाला 'ना' आदेश नहीं हो पाता। किन्तु 'ना' आदेश कर देने के बाद 'मुत्व' के असिद्ध हो जाने से 'सुपि च' (७।३।१०२) इस सूत्र से जो दीर्घ आदेश प्राप्त होता है वह तो 'सन्निपात को मानकर की गयी विधि उस सन्निपात (= परस्पर अव्यवहित संयोग) के विनाश की निमित्त नहीं बनती है' इस परिभाषा के कारण नहीं होता है। [ भाव यह है कि जैसे 'ना' आदेश की कर्तव्यता में मुत्व असिद्ध नहीं होता है उसी प्रकार मुत्व करने के बाद भी 'ना' सिद्ध रहना चाहिए। परन्तु सिद्ध रहने पर यञादि सुप् परे मानकर 'सुपि च' सूत्र से दीर्घ होकर 'अमूना' ऐसा अनिष्ट रूप भी होने लगेगा ? इसका समाधान यह है कि ह्रस्व उ का सन्निपात मानकर 'टा' का 'ना' किया गया है वह दीर्घ करने में निमित्त नहीं माना जा सकता। अतः दीर्घ नहीं होता है।]

अथवा तन्त्र से दो सूत्रों को दोनों कार्यों के लिए उच्चारित करना चाहिए। [ इन दो सूत्रों में पहले का अर्थ होगा—'ना' आदेश की कर्तव्यता में मुत्व असिद्ध नहीं होता है। दूसरे सूत्र का अर्थ होगा—ना के परे रहते जो प्राप्त है उसकी कर्तव्यता में मुत्व असिद्ध नहीं होता है, जैसा है वैसा ही रहता है। इसलिये दीर्घ नहीं होता है। ]

**कर्तव्ये मुभावस्य यत्सिद्धत्वं तदर्थतः संगृहीतम्। तेनात्र मुभावस्य सिद्धत्वान्नाभावश्च भवति, दीर्घत्वं च न भवति।**

**❀ एकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्यः ❀ (म० भा०)। किं प्रयोजनम्? ❀ अयायावेकादेशशतृस्वरैकाननुदात्तसर्वानुदात्तार्थम् ❀ (म० भा०)। वृक्ष इदम्, प्लक्ष इदम्। अत्र प्रातिपदिकान्तसप्तम्येकवचनयोरुदात्तानुदात्तयोरेकादेशः, स 'एकादेश उदात्तेनोदात्तः' (८।२।५) इत्युदात्तः, तस्य सिद्धत्वं वक्तव्यम्। आन्तर्यतः अयादेश उदात्तो यथा स्यात्।**

**न्यासः**

यत् प्राप्नोति तस्मिन् कर्तव्ये मुभावस्यासिद्धत्वम्? इत्याह—**ने तु कर्तव्य इत्यादि**। यथा पुत्रा मे बहुक्षीरघृतमोदनं सुवर्णपात्र्यां भुञ्जीरन्निति वरं प्रार्थयमानया वृद्धकुमार्या अर्थतः पतिः पुत्रा गावो धनं संगृहीतम्, एवमिहापि ने परतो यत् कार्यं प्राप्नोति तस्मिन् कर्तव्ये मुभावस्य सिद्धत्वं ब्रुवता ने कर्तव्ये मुभावस्यासिद्धत्वं नाश्रितम्। **तेनेत्यादि**[1]। यस्मादेष एव वाक्यार्थः—ने कर्तव्ये मुभावस्य यत् सिद्धत्वं तदर्थतो गृहीतम्, तेन हेतुना नाभावश्च भवति, दीर्घत्वञ्च न भवतीति।

**एकादेश इति। प्रातिपदिकान्तसप्तम्येकवचनयोरुदात्तानुदात्तयोरिति**। वृक्षशब्दः प्रातिपदिकस्वरेणान्तोदात्त इति तस्यान्तो योऽकारः स उदात्तः। सप्तम्येकवचनम्, 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तम्, तयोः 'आद् गुणः' इत्येकादेश आन्तरतम्यात् स्वरिते प्राप्ते 'एकादेश उदात्तेनोदात्तः' क्रियते, तस्य सिद्धत्वं वक्तव्यम्। किमर्थम्? आन्तर्यतोऽयादेश उदात्तो यथा स्यात्। असिद्धत्वे हि सति तस्य स एकादेशः स्वरित एवायादेशे कर्तव्ये स्यादिति तस्य स्थानेऽयादेश आन्तर्यतः स्वरित एव प्रसज्येत। अन्तरङ्गत्वं पुनरेकादेशस्यान्तराश्रितत्वात्। आद् गुणो ह्यत्रान्तरङ्गः; एकपदाश्रितत्वात्। अयादेशस्तु बहिरङ्गः; तद्विपर्ययात्।

**पदमञ्जरी**

अपरं ने परतो यत्प्राप्तं तत्र। तदिदमुक्तम्—**उभयार्थमिति। तन्त्रणेति**। साधारणं भवेत्तन्त्रम्, यथा—तुल्यकक्षयोर्भुञ्जानयोः प्रदीपः, इह तु साधारणप्रयत्नस्तन्त्रम्।

इदानीमेकस्मिन्नेव योगे यथोभयं साध्यते, तथा दर्शयति—**अथ वेति। अर्थात्संगृहीतमिति**। वृद्धकुमारीवाक्यवत्, तद्यथा—वृद्धकुमारीन्द्रेणोक्ता वरं वृणीष्वेति सा वरमवृणोत्—पुत्रा मे बहुक्षीरघृतमन्नं कांस्यपात्र्यां भुञ्जीरन्निति, पतिरेव तावदस्या न भवति कुतः पुत्राः, कुतो गावः कुतो धान्यम्! अनेनैव खल्वेकवाक्येन पतिः पुत्राः गावो धान्यमिति सर्वं वृतं भवति; तद्वदत्रापि ने परतो यत्कार्यं तत्र कर्तव्ये मुभावस्यासिद्धत्वस्य प्रतिषेधं ब्रुवता नाभावेऽपि कर्तव्येऽर्थान्मुत्वस्यासिद्धत्वं प्रतिषिद्धं भवति।

**एकादेशस्वरोऽन्तरङ्ग इति**। एकादेशस्वरे चत्वारि दर्शनानि—उदात्तानुदात्तयोरेकादेश आन्तर्यतः स्वरितोऽभिनिर्वृत्तस्य स्थाने 'एकादेश उदात्तेनोदात्तः' इत्यनेनोदात्तगुणादेशः क्रियत इत्येकं दर्शनम्।

**भावबोधिनी**

अथवा—'ना परे रहते जो प्राप्त होता है उसकी कर्तव्यता में मुत्व असिद्ध नहीं होता है—यही सूत्र का अर्थ है। किन्तु 'ना' की कर्तव्यता में मुत्व का जो सिद्ध होना है वह तो अर्थतः संगृहीत होता है। [भाव यह है कि प्रथम अर्थ शब्दतः प्रतीत होता है। दूसरा अर्थ अर्थात् निकलता है। अतः तन्त्र से उच्चारण अनावश्यक है। एक अर्थ शब्दतः और दूसरा अर्थतः होने से सब निर्वाह सम्भव है।] इस कारण मुत्व के सिद्ध रहने के कारण 'ना' आदेश होता है और दीर्घ नहीं होता है। [क्योंकि दीर्घ करने पर मुत्व नष्ट होकर मूत्व प्रसक्त होने लगता है।]

❀ एक आदेश का स्वर अन्तरङ्ग सिद्ध ही कहना चाहिये। ❀ इसका क्या प्रयोजन है? अय्, आय्, आव्, एकादेश स्वर, शतृ स्वर, एकाननुदात्त और सर्वानुदात्त की सिद्धि प्रयोजन है।

---

१. 'मुभावस्य सिद्धत्वमुक्तम्' इति, 'मुभावस्य सिद्धत्वमेव' इति च पाठौ।

**आय्—कुमार्या इदम्।** कथमिदमुदाहरणम्? यदि 'उदात्तयणो हल्पूर्वात्' इत्युदात्तत्वे कृते विभक्तेः 'आटश्च' (६।१।९०) एकादेशः, तदा भवतीदमुदाहरणम्। अथ तु कृते तत्रैकादेशे 'उदात्तयणो हल्पूर्वात्' (६।१।१७४) इति स्वरः? तदा नैतदस्य प्रयोजनं भवति।

**आव्—वृक्षाविदम्, प्लक्षाविदम्।**

**न्यासः**

**कुमार्या इदमिति।** कुमारशब्दो वृक्षशब्दवदन्तोदात्तः। तस्माद् 'वयसि प्रथमे' इति ङीप्; 'यस्येति च' इत्यकारलोपः, 'अनुदात्तस्य च यत्रोदात्तलोपः' इतीकारस्योदात्तत्वम्, चतुर्थ्येकवचनम्; कुमारी+ए इति स्थिते 'आण् नद्याः' इत्याट्, यणादेशः, 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम्। तच्च 'आदेः परस्य' इति विभक्तिभक्तस्याट एव भवति, 'आटश्च' इति वृद्धिरेकादेशः। स च पूर्ववत् स्वरिते प्राप्ते 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः क्रियते। तस्य सिद्धत्वं वक्तव्यम्—कुमार्या इदमित्यत्रायादेश उदात्ते यथा स्यात्, अन्यथा हि पूर्ववत् स्यात्। **यदीत्यादि।** यदि पूर्वमुदात्तत्वं क्रियते, पश्चादेकादेशः, यथादर्शितमनन्तरायां रूपसिद्धावेवायादेशे कर्तव्ये सिद्धो भवतीति युज्यत इदमुदाहरणम्। **अथ त्वित्यादि।** कुमारी+ए इति स्थित आट्, यणादेशः। **तत्रैकादेशे 'उदात्तयणो हल्पूर्वात्' इति विभक्तिस्वर इति।** यदि कृत एकादेशे विभक्तिस्वरः क्रियते तदा नैतदस्योपसंख्यानस्य प्रयोजनम्। अस्यां हि रूपसिद्धावेकादेशस्य यदुदात्तत्वं तस्यायादेशे कर्तव्ये सिद्धत्वादनेन प्रकारेणोपसंख्यानस्येदं प्रयोजनं न भवतीत्याचष्टे। युक्तञ्चैतत्। तथा हि—अन्तरङ्गत्वादेकादेशेनैव तावद् भवितव्यम्, पश्चाद्विभक्तिस्वरेण। वर्णं ह्याश्रित्यैकादेशो भवतीति तस्यान्तरङ्गत्वम्। उदात्तत्वं विभक्तेराश्रितत्वात् पदस्य भवतीति तस्य बहिरङ्गत्वम्।

**पदमञ्जरी**

तथैवाभिनिर्वृत्त एकादेशस्वरे स्वरितगुणमात्रस्योदात्तमात्रं विधीयत इति द्वितीयं दर्शनम्। तृतीयं तु दर्शनम् 'एकादेश उदात्तेनोदात्तः' इति परिभाषा एकादेशविधिषूपतिष्ठते; तत्रायमर्थो भवति—आद्गुणो भवति, उदात्तानुदात्तयोस्त्वाद्गुण उदात्त इति; एवं सत्येकादेशो विधीयमान एवोदात्तो भवति। चतुर्थदर्शनमुदात्तानुदात्तयारेकादेशः स्वरितगुणः प्राप्त उदात्तो भवतीति। तत्र येननाप्राप्तिन्यायेन स्वरितत्वापवाद उदात्तविधिः सम्पद्यते, तत्र परिभाषापक्षे सिद्धमुदात्तत्वमयादिषु। इतरेषु तु पक्षेषु असिद्धत्वे प्राप्ते सिद्धत्वमुच्यते, आन्तर्यतोऽयादेश उदात्तो यथा स्यादिति, अन्यथा स्वरितः स्यात्।

**कुमार्या इदमिति।** कुमारशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, तस्माद् 'वयसि प्रथमे' इति ङीप्, 'यस्येति च' इति लोपः, 'अनुदात्तस्य च यत्रोदात्तलोपः' इति ङीप उदात्तत्वं चतुर्थ्येकवचनम्, कुमारी+ए इति स्थिते 'आण्नद्याः' इत्याट, यणादेशः, 'उदात्तयणो हल्पूर्वात्' इत्याट उदात्तत्वम्, 'आटश्च' इति वृद्धिरेकादेशः, स आन्तर्यतः स्वरितः प्रसक्तः 'एकादेश उदात्तेनोदात्तः' इत्यनेनोदात्तः क्रियते, तत्सिद्धत्वं

**भावबोधिनी**

क्रमशः उदा० वृक्ष इदम्, प्लक्ष इदम्। यहाँ प्रातिपदिकान्त और सप्तमी एकवचन ( वृक्ष + ङि = इ ) इन उदात्त + अनुदात्त के स्थान पर गुण एकादेश होता है। ( अर्थात् वृक्ष का अ उदात्त है और सुप् होने से ङि = इ अनुदात्त है। इन दोनों के स्थान पर गुण रूप एक आदेश ) "एकादेश उदात्तेनोदात्तः" ( ८।२।५ ) से उदात्त किया जाता है, इसे सिद्ध ही कहना चाहिये जिससे कि आन्तर्य से 'ए' का अय् आदेश उदात्त हो सके। [ यदि यह एकादेश असिद्ध होगा तो उदात्त + अनुदात्त का स्वरित ही होगा। इसके स्थान पर जो अय् आदेश होगा वह भी स्वरित ही होने लगेगा। ]

आय्—कुमार्यै इदम् = कुमार्या इदम् में यह कैसे उदाहरण होता है? यदि 'उदात्तयणो हल्पूर्वात्' ( ६।१।१४७ ) इस सूत्र से [ कुमारी + ए 'आण्नद्याः' से आट्, कुमारी + आ + ए, ई का यण् करने पर विभक्ति का ] उदात्तत्व करने पर विभक्ति (ए) तथा आट् का एकादेश ( वृद्धि ) होता है, तब यह उदाहरण बनता है।

**एकादेशस्वरः—गाङ्गेऽनूप इति गाङ्गेशब्दे एकारः 'एकादेश उदात्तेनोदात्तः ( ८।२।५) इत्युदात्तः, तस्य सिद्धत्वाद् यः पुनः 'एङः पदान्तादति' ( ६।१।१०९ ) इति एकादेशः स 'एकादेश उदात्तेनोदात्तः' ( ७।२।५ ) इति, अतः 'स्वरितो वाऽनुदात्ते पदादौ' ( ८।२।६ ) इत्येतद्भवति ।**

**न्यासः**

**वृक्षाविदमिति ।** वृक्ष इदमित्येतदनुसारेणानुगन्तव्यम्, एकादेशः, पुनरत्र 'वृद्धिरेचि' इति वृद्धिः । 'प्रथमयोः पूर्वसवर्णदीर्घः' इत्येतत्तु न प्रवर्तते; 'नादिचि' इति दीर्घप्रतिषेधात् ।

**गाङ्गेऽनूप इति ।** गङ्गायां जात इत्यणि कृते प्रत्ययस्वरेणान्तोदात्तो गाङ्गशब्दः । अनुगता आपोऽस्मिन्निति बहुव्रीहिः, 'ऊदनोर्देशे' इत्यूत्वम्, 'ऋक्पूरब्धूःपथामानक्षे' इत्यकारप्रत्यये कृतेऽनूपशब्दोऽपि प्रत्ययस्वरेणान्तोदात्तः, शेषमस्यानुदात्तम् । **तस्य सिद्धत्वादिति ।** योऽसावेकारो गाङ्गशब्दे सप्तम्येकवचने परतः 'आद् गुणः' इत्यनेनाभिनिर्वृत्तः, तस्य सिद्धत्वाद् यः पुनः 'एङः पदान्तादति' इत्येकादेशोऽनूपशब्दाकारेण सह सः 'एकादेश उदात्तेनोदात्तः' इति भवति । अतो हेतोः 'स्वरितो वानुदात्ते पदादौ' इति पक्षे स्वरितो भवति । यदि पुनरसिद्धत्वं स्यात् तदासावेकार उदात्तानुदात्तस्थानित्वादान्तर्यतः स्वरितः स्यात् । यः पुनः 'एङःपदान्तादति' इत्येकादेशः, स उदात्तेनानुदात्तस्य न भवतीति 'स्वरितो वानुदात्ते पदादौ' इति पक्षे स्वरितो न स्यात्, अपि तु स्वरितानुदात्तयोः स्थाने भवन्नान्तरतम्यान्नियमेन स्वरितः स्यात्

**पदमञ्जरी**

वक्तव्यम्—अयादेश उदात्तो यथा स्यात् । **यदीत्यादि ।** पूर्वमुदात्तत्वं क्रियते पश्चादेकादेशः । यथानन्तरं दर्शितं तदा भवतीदं प्रयोजनमित्यर्थः । **अथ त्वित्यादि ।** कुमार्या ए इति स्थिते 'आटश्च' इति वृद्धिश्च प्राप्नोति, 'उदात्तयणो हल्पूर्वात्' इति आटः स्वरश्च, द्वावप्यनित्यौ; स्वरः शब्दान्तरप्राप्तेरनित्यः, स हि प्रागाकारस्य प्राप्नोति कृतायां वृद्धावेकारस्य, वृद्धिरपि प्रागनुदात्तयोः परत्वात्स्वरे, आटस्तु स्वरे कृते उदात्तानुदात्तयोःस्वरभिन्नस्य प्राप्नुवन्विधिरनित्यो भवति, उभयोरनित्ययोः परत्वात्स्वरे प्राप्ते वर्णाश्रयत्वेनान्तरङ्गत्वाद्वृद्धिः, स्वरस्तु विभक्तेरुच्यमानः पदाश्रयो बहिरङ्गः ।

**गाङ्गेऽनूप इति ।** गङ्गाया इदमित्यण्, प्रत्ययस्वरेणान्तोदात्तः, ततो ङिः, सुप्त्वादनुदात्तः, तयोरेकादेश उदात्तः । आपोऽनुगतमनूपमिति प्रादिसमासः, अव्ययपूर्वपदप्रकृतिस्वरे प्राप्ते 'अनोरप्रधानकनीयसी' इत्युत्तरपदान्तोदात्तत्वं शेषनिघातः । **तस्य सिद्धत्वादित्यादि ।** एकादेशस्वरस्य सिद्धत्वे 'एङः पदान्तादति' इत्ययमेकादेश उदात्तेन सह भवति । ततश्च 'स्वरितो वानुदात्ते पदादौ' इति पक्षे स्वरितः पक्षे उदात्तो भवति । यदि त्वसिद्धत्वं स्यात्, तदासावेकार उदात्तानुदात्तस्थानिकत्वादान्तर्यतः स्वरितः स्यात् । तथा च सति तस्य 'एङः पदान्तादति' इत्ययमेकादेश उदात्तेन न भवति, किं तर्हि ? 'स्वरितेन' इति पक्षे स्वरितो न स्यात् । अपि तु स्वरितानुदात्तयोः स्थाने भवन्नान्तर्यतो नित्यमेव स्वरितः स्यात् । **स उदात्तेनेत्यत्र** इति पाठः, स एकादेश उदात्तेन सहेत्यतो हेतोरित्यर्थः ।

**भावबोधिनी**

[ चूंकि यह एकादेश स्वरित प्रयुक्त होता है, इसका 'एकादेश उदात्तेनोदात्तः' सूत्र से उदात्त किया जाता है । इस उदात्त को सिद्ध करना चाहिये । ] यदि इसमें एकादेश कर लेने पर 'उदात्तयणो हल्पूर्वात्' सूत्र से विभक्ति का उदात्त स्वर किया जाता है तब यह इसका प्रयोजन नहीं बनता है । [ क्योंकि पहले उदात्त हो जाने पर विभक्ति का उदात्तत्व सिद्ध है । उसका आय् आदेश भी उदात्त ही रहता है । ]

आव्—वृक्षाविदम्, प्लक्षाविदम् । [ वृक्ष + औ में उदात्त + अनुदात्त का वृद्धिरूप एकादेश उदात्त होता है । उसका आव् आदेश भी उदात्त होता है । ]

एकादेश का स्वर—'गाङ्गेऽनूपः' यहाँ 'गाङ्गे' शब्द में एकार जो किया गया है वह 'एकादेश उदात्तेनोदात्तः' इससे उदात्त होता है इसके सिद्ध रहने से पुनः जो 'एङः पदान्तादति" सूत्र से पूर्वरूप रूपी एकादेश होता है वह 'एकादेश उदात्तेनोदात्तः' इस सूत्र से उदात्त होता है इस कारण 'स्वरितो वाऽनुदात्ते पदादौ' इस सूत्र से

**शतृस्वरः**—तुदती। नुदती। 'अदुपदेशात्' (६।१।१८६) इति लसार्वधातुकानुदात्तत्वे कृते एकादेशः, तदुदात्तस्य सिद्धत्वात् 'शतुरनुमो नद्यजादी' (६।१।१७३) 'अन्तोदात्तात्' इत्येष स्वरो भवति। 'अनुमः' (६।१।१७३) इति प्रतिषेधो ज्ञापकः—एकादेशस्वरः शतृस्वरे सिद्ध इति। न हि सनुम्कं शत्रन्तं किञ्चिदेकादेशस्वरमन्तरेणान्तोदात्तमस्ति।

**न्यासः**

**शतृस्वर इति।** शत्राश्रयः स्वर इति शाकपार्थिवादित्वादुत्तरपदलोपी समासः। **तुदती, नुदतीति।** तुदिनुदिभ्यां लट्, तुदादित्वाच्छः, स च प्रत्ययस्वरेणान्तोदात्तः, लसार्वधातुकस्यानुदात्ते कृते 'अतो गुणे' पररूपत्वमेकादेशः। स च 'एकादेश उदात्तेनोदात्तः'; तदुदात्तस्य सिद्धत्वात्। 'अन्तोदात्तादुत्तरपदात्' इत्यन्तोदात्तादित्यनुवर्त्तमाने 'शतुरनुमो नद्यजादी' इति शत्रन्तादन्तोदात्तादीकारस्योदात्तत्वं भवति। असिद्धत्वे त्वेकादेशेऽस्योदात्तत्वं न स्यात्; अन्तोदात्तादित्यधिकारात्। **अनुम इत्यादिना** ज्ञापकमाश्रित्यैतत्प्रयोजनमपाकरोति। कथं पुनरेतज्ज्ञापकम् ? इत्याह—**नहीत्यादि।** हिशब्दो हेतौ। अनुम इति प्रतिषेधस्यैतत् प्रयोजनम्—तुदन्ती, नुदन्तीत्यत्र 'आच्छीनद्योर्नुम्' इति नुमि कृते सनुम उदात्तत्वं मा भूदिति। यदि च शतृस्वरे, एकादेशस्वरोऽसिद्धः स्यात्, प्रतिषेधस्य वैयर्थ्यं स्यात्; यस्मादेकादेशस्वरमन्तरेण नास्ति शतुरन्तोदात्तत्वम्। अतः प्रतिषेधादवसीयते—सिद्ध एकादेशस्वरः। न हि एकादेशस्वरमन्तरेण शत्रन्तं सनुम्कं किञ्चिदन्तोदात्तमस्ति[1]। तस्मादनुम इति प्रतिषेधवचनं ज्ञापकमेव।

**पदमञ्जरी**

**शतृस्वर इति।** तुदिवदिनदिभ्यो लट्, तस्य शत्राश्रयो नद्यजाद्योः स्वरः शतृस्वरः, 'शतुरनुमो नद्यजादी' इत्यत्र 'अन्तोदात्तादुत्तरपदात्' इत्यन्तोदात्तादुत्तरपदादित्यनुवर्तते। **तुदती, नुदतीति।** तुदिनुदिभ्यां लट, शत्रादेशः, 'तुदादिभ्यः शः' प्रत्ययस्वरेणोदात्तः। **अनुम इति प्रतिषेधो ज्ञापक इति।** तेन नैतदर्थं सिद्धत्वं वक्तव्यमिति भावः। कथमेतत् ज्ञापकम् ? इत्याह—**नदीति।** अनुम इति प्रतिषेधस्यैतत्प्रयोजनम्—नुदन्तीत्यत्र 'आच्छीनद्योर्नुम्' इति यदा नुम् भवति, तदा मा भूदिति। असिद्धे चैकादेशस्वरेऽन्तोदात्तत्वाभावादेव शतृ न भविष्यति, किमनुम् इति प्रतिषेधेन! प्रतिषेधात्तु सिद्धत्वमनुमीयते। ननु यत्र लसार्वधातुकानुदात्तत्वस्य निमित्तं नास्ति, तदर्थः प्रतिषेधः स्यात्; यान्ती, वान्तीत्यत्र हि धातुप्रत्यययोरुदात्तयोरान्तर्यत एकादेश उदात्तः, स च शतृस्वरे सिद्धः ? अत्रापि प्रत्ययस्वरे सति तदनन्तरमेव धातोः शेषनिघातो भवति, ततश्चात्रापि नान्तरेणैकादेशस्वरमन्तोदात्तत्वं भवति।

**भावबोधिनी**

पाक्षिक स्वरित होता है। [ यदि यह पूर्वरूप रूपी एकादेश असिद्ध हो जाता तो स्वरित तथा अनुदात्त के स्थान पर होने से आन्तरतम्य से स्वरित ही होता। ]

शतृस्वर—नुदती। तुदती। [ तुद् + श = अ + शतृ = अत् + ङीप् = ई। यहाँ लट् का शतृ = अत् प्रत्यय स्वर से उदात्त है, श = का अ उदात्त है किन्तु 'तास्यनुदात्तेन्ङिददुपदेशात्' लसार्वधातुकम् (६।१।१८६) सूत्र से लकार = शतृ अनुदात्त होता है, दोनों उदात्त + अनुदात्त का पररूप एकादेश उदात्त होता है। यही लिख रहे हैं—] 'अदुपदेशात्' सूत्र से लसार्वधातुक का अनुदात्तत्व करने पर एकादेश होता है; इस उदात्त के सिद्ध रहने के कारण "शतुरनुमो नद्यजादी" 'अन्तोदात्तात्' यह स्वर सिद्ध होता है। अर्थात् शत्रन्त अन्तोदात्त से परे ईकार का उदात्तत्व होता है। [ यदि पररूप एकादेश असिद्ध हो जाता तो अन्त उदात्त से परे ङीप् नहीं मिलता, इसका उदात्त नहीं हो पाता। ] "अनुमः' यह प्रतिषेध ज्ञापक है—शतृस्वर में एकादेश स्वर सिद्ध रहता है। क्योंकि नुम्

---

१. "अतोऽत्र मा भूदित्येवमर्थादनुम इति प्रतिषेधः स्यात् ? नैतदस्ति; अत्रापि हि परत्वाद् 'अनुदात्तं पदमेकवर्जम्' इति। धातोस्तूदात्ते कृत उदात्तानुदात्तयोरेवैकादेशः। स च 'एकादेश उदात्तेनोदात्तः' इत्यनेनैवोदात्तो भवति"—इति क्वचिदधिकः पाठः।

एकाननुदात्त—तुदन्ति । लिखन्ति । एकादेशस्वरस्य सिद्धत्वाद्, तेन 'अनुदात्तं पदमेकवर्जम्' (६।१।१५८) इति वर्ज्यमानता भवति ।

सर्वानुदात्तः—ब्राह्मणास्तुदन्ति, ब्राह्मणा लिखन्ति । एकादेशस्वरस्य सिद्धत्वाद् कृते तस्मिन् 'तिङ्ङतिङः' (८।१।२७) इति निघातो भवति । 'अन्तरङ्गे' इति वचनाद्बहिरङ्गस्यासिद्धत्वमेव—पचतीति, प्रपचतीति ।

**न्यासः**

**तुदन्ति, लिखन्तीति ।** अत्रापि पूर्ववल्लसार्वधातुकानुदात्तत्वे कृत उदात्तत्वे कृत उदात्तानुदात्तयोरेकादेश उदात्तः । **तेनेति ।** एकादेशस्वरेण सिद्धेन । **वर्ज्यमानतेति ।** 'अनुदात्तं पदमेकवर्जम्' इत्येषोऽर्थोऽनेन लक्ष्यते । एकं वर्जयित्वा शेषस्यानुदात्तत्वं भवतीत्यर्थः । यदि पुनरसिद्धत्वं स्याद् 'अनुदात्तं पदमेकवर्जम्' इत्यस्मिन् कर्तव्ये सत्येकादेशस्वरस्यासिद्धत्वादसत्यां च वर्ज्यमानतायां द्वयोरुदात्तयोः श्रवणं प्रसज्येत ।

ननु चासिद्धवचनमुत्सर्गलक्षणभावार्थमित्युक्तम्; अस्य च स्थानी स्वरितः; तथा हि 'अतो गुणे' पररूपत्व इत्यनेनैवान्तर्यतो यो विहितः स्वरितस्तस्य स्थाने 'एकादेश उदात्तेनोदात्तः' इत्यनेनोदात्त आदेशो विधीयते, तत्र यद्युदात्तस्यादेशस्यासिद्धत्वात् तन्निमित्ता वर्ज्यमानता न भवति मा भूत्; यस्त्वस्य स्वरितस्य स्थानी तन्निमित्ता भविष्यति, तत् कथमेतत् प्रयोजनमुपपद्यते ? यथोपपद्यते तथाख्यायते—'एकादेश उदात्तेनोदात्तः' इत्यत्र चत्वारि दर्शनानि—'आद् गुणः' इत्येवमादिभिरुदात्तानुदात्तयोरेकादेश आन्तरतम्यात् स्वरितगुणयोर्निवृत्तिः, तस्य 'एकादेश उदात्तेनोदात्तः' इत्यनेन स्वरितस्य स्थान उदात्तगुण आदेशो विधीयत

**पदमञ्जरी**

**एकानुदात्तत्वमिति ।** एकं वर्जयित्वा परिशिष्टस्य यदनुदात्तत्वं तदेकानुदात्तत्वम् । **भाष्ये त्वेकाननुदात्तमिति** पाठः, तत्रापि 'अनुदात्तं पदमेकवर्जम्' इत्ययमेव स्वरो विवक्षितः, तत्र हि 'एकमेवानुदात्तमन्यत्सर्वमुदात्तम्' इत्युच्यते । तथा च तत्रोक्तम्—'सिद्धं त्वेकाननुदात्तत्वात्' इति । **तुदन्तीति ।** शविकरण उदात्तः, लसार्वधातुकमनुदात्तम्, तयोरेकादेशः । **अनेनेति ।** एकादेशस्वरेण सिद्धेन । **वर्ज्यमानतेति ।** 'अनुदात्तं पदमेकवर्जम्' इत्यस्यार्थो लक्ष्यते । यदि त्वसिद्धत्वं स्यात्, ततोऽसत्यां वर्ज्यमानतायां द्वयोरुदात्तयोः श्रवणं स्यात् । ननु चोदात्तस्यासिद्धत्वेऽपि योऽसावुदात्तानुदात्तयोरेकादेश आन्तर्यतः स्वरितोऽभिनिर्वृत्तस्तदाश्रया वर्ज्यमानता भविष्यति ? सत्यम्; सिद्ध्यति यदा स्वरितस्योदात्तो भवतीति पक्षः, यदा तु स्वरितापवाद उदात्तो विधीयते तदा तस्यासिद्धत्वात् स्थानिनश्च स्वरान्तराभावात्केन वर्ज्यमानता स्यात् ! तस्मात्सिद्धत्वमुच्यते । न च कार्यकालपक्षाश्रयणेन परिभाषान्तरमवद्वर्ज्यमानपरिभाषाया अपि त्रिपाद्यां प्रवृत्तिः शक्याभ्युपगन्तुम्; अतिप्रसङ्गात् । 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य', 'उदात्तादनुदात्तस्य स्वरितः' इत्यत्रापि शेषनिघातप्रसङ्गात् । यथा तु यान्तीत्यत्र प्रागेवैकादेशाच्छेषनिघातो भवति, तथात्रापीत्यप्रयोजनमित्याहुः ।

**भावबोधिनी**

युक्त शतृ-प्रत्ययान्त कोई भी एकादेश स्वर के बिना अन्तोदात्त नहीं [ मिलता ] है । [ इस ज्ञापन से यही सिद्ध होता है कि यह प्रयोजन नहीं मानना चाहिए । क्योंकि ज्ञापन से ही यह कार्य सम्भव हो जाने पर सूत्र द्वारा करना उचित नहीं है । ]

एकाननुदात्त ( = एक को छोड़कर शेष सभी का अनुदात्तत्व )—तुदन्ति । लिखन्ति । [ तुद् + श=अ + झि = अन्ति । इसमें श प्रत्यय स्वर से अन्तोदात्त है उससे परे लकार = अन्ति का 'तास्यनुदात्तेन्ङिददुपदेशात्' सूत्र से अनुदात्त होता है । इन दोनों का पूर्वरूप एक आदेश उदात्त होता है—'एकादेश उदात्तेनोदात्तः' सूत्र से । ] इस एकादेश स्वर ( उदात्त ) के सिद्ध ही रहने के कारण 'अनुदात्तं पदमेकवर्जम्' इस सूत्र से एक की वर्ज्यमानता सिद्ध होती है अर्थात् एक को उदात्त छोड़कर शेष सभी का अनुदात्त है । [ काशिका में 'एकाननुदात्त स्वर' पाठ है

❀ संयोगान्तस्य लोपो रोरुत्वे सिद्धो वक्तव्यः ❀।

किं प्रयोजनम्? "हरिवो मे_दिनं त्वा।" । हरिव इति मतुबन्तमेतत्; तत्र 'छन्दसोरः' (८।२।१५) इति वत्वे, संयोगान्तस्य लोपे च कृते 'मतुवसो रु सम्बुद्धौ छन्दसि' (८।३।१) इति रुत्वम्, तस्य संयोगान्तस्य लोपस्यासिद्धत्वाद् 'हशि च' (६।१।११४) इत्युत्वं न प्राप्नोति।

**न्यास**

इत्येकं दर्शनम्। स्वरितगुणस्यैवाभिनिर्वृत्तस्य गुणान्तरापत्तिद्वारेण शब्दान्तरं प्रतिपद्यत इति द्वितीयम्। परिभाषेयमनुदात्तानुदात्तयोरेकादेश उदात्त इति तृतीयम्। अस्मिन् दर्शने परिभाषयाः पराङ्गभूतत्वादेकादेश-शास्त्रैः सहास्यैकवाक्यता भवति, तत्रायमर्थः सम्पद्यते—आद् गुणो भवति, उदात्तानुदात्तयोस्तु 'आद्गुणः' भवतीति। चतुर्थं तु दर्शनम्—उदात्तानुदात्तयोर्य एकादेशः स उदात्तो भवति, न स्वरितगुणयुक्त इति। स्वरितस्यापवादभूतस्तूदात्तत्वमारभ्यते। येन नाप्राप्तिन्यायेनेदं दर्शनमाश्रित्येदं प्रयोजनमुपन्यस्तम्। उपपद्यते च तदेतस्मिन् दर्शने। अत्र हि नाम विधानसमकालमेवोदात्तत्वं विधीयते, न तु स्वरितगुणविहितस्य पुनरुदात्तत्वगुण आदेश इति न सम्भवति स्वरितेन स्थानिना वर्ज्यमानता; एकादेशस्वरस्य सिद्धत्वात्।

**कृते तस्मिन् तिङ्ङतिङ इति निघात इति**। असति तु तस्य सिद्धत्वे पश्चादेकादेशस्वरः स्यात्, ततश्च मध्योदात्तता प्रसज्येत। **पचतीति**। अत्र तिशब्दे य इकारः स सतिशिष्टत्वादनुदात्तः, इतिशब्दः 'निपाता आद्युदात्ताः' इत्याद्युदात्तः; तयोरकः सवर्णदीर्घत्वमेकादेशो द्विपदाश्रयत्वाद् बहिरङ्गः, तस्य बहिरङ्गत्वात् तदाश्रयोऽपि स्वरो बहिरङ्गः, तत इकारस्यासिद्धत्वमेव भवति। ततश्च तेन 'अनुदात्तं पदमेकवर्जम्' इतिवर्ज्यमानता न भवति। **प्रपचतीति**। अत्रापि बहिरङ्गत्वेनासिद्धत्वात् 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वं न भवतीति 'तिङ्ङतिङः' इति निपात एवात्र भवति।

**पदमञ्जरी**

**ब्राह्मणास्तुदन्तीति**। अत्रापि स्वरितत्वापवाद उदात्तत्वमिति दर्शने सिद्धत्वमुच्यते, अन्यथोदात्तस्यानुदात्तत्वाभावादुदात्तः प्रयोगे श्रूयेत। **बहिरङ्गस्यासिद्धत्वमेव भवतीति**। 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यनेन। **पचतीति**। इतिशब्दो निपातत्वादाद्युदात्तः। अत्र बाह्यपदापेक्षत्वादादेकादेशस्य बहिरङ्गत्वात्तत्स्वरोऽपि बहिरङ्गः, तस्यासिद्धत्वात्तेन वर्ज्यमानता न भवति। **प्रपचतीति**। अत्रापि 'तिङि चोदात्तवति' इति गतिनिघातो न भवति। उभयत्रापि पूर्वं प्रत्यन्तवद्भावात्प्रसङ्गः।

**हरिव इति**। यदा 'छन्दसीवनिपौ' इति वनिप्प्रत्ययः क्रियते 'वन उपसंख्यानम्' इति, तस्य च रुत्वम्, तदा नार्थः सिद्धवचनेन।

**भावबोधिनी**

पाठ है और भाष्य में 'एकानुदात्त' पाठ है। किन्तु कैयट-प्रदीप तथा पदमञ्जरी के अनुसार भाष्य में भी 'एकाननुदात्तं पदमेकवर्जम्' यही लक्षित होता है।]

सर्वानुदात्त—ब्राह्मणास्तुदन्ति, ब्राह्मणा लिखन्ति। [ब्राह्मण + जस् में उदात्त और अनुदात्त का एकादेश पूर्वसवर्ण दीर्घ भी उदात्त होता है।] एकादेश स्वर के सिद्ध रहने के कारण इस स्वर के कर देने पर 'तिङ्ङतिङः' इस सूत्र से [अतिङन्त से परे तिङन्त का] निघात होता है। [यदि एकादेश सिद्ध नहीं माना जायगा तो बाद में एकादेश का स्वर होगा जिससे मध्य में उदात्तता होने लगेगी। जब कि पूरा तिङन्त अनुदात्त रहना ही इष्ट है।]

'अन्तरङ्ग कार्य की कर्तव्यता में बहिरङ्ग असिद्ध होता है—' इस वचन के द्वारा बहिरङ्ग असिद्ध ही होता है—पचतीति, प्रपचतीति। [पचति + इति, प्रपचति + इति यहाँ 'ति' प्रत्यय का इ स्वर सति शिष्ट स्वर होने से अनुदात्त रहता है और 'इति' 'निपाता आद्युदात्ताः' से आद्युदात्त है। इन दोनों का सवर्ण दीर्घ एकादेश बहिरङ्ग है क्योंकि दो पदों को मान कर होता है। अतः इसे मानकर जो स्वर होता है वह भी बहिरङ्ग होने से असिद्ध ही होगा। इसलिए यह वर्ज्यमान नहीं हो सकता। प्रपचति + इति = प्रपचतीति में भी बहिरङ्ग होने

❀ सिज्लोप एकादेशे सिद्धो वक्तव्यः ❀ (म० भा०) अलावीत् । अपावीत् । 'इट ईटि' इति सिज्लोपस्य सवर्णदीर्घत्वं भवति ।

❀ निष्ठादेशः षत्वस्वरप्रत्ययविधीड्विधिषु सिद्धो वक्तव्यः ❀ ( म० भा० ) वृक्णः, वृक्णवान् ।

**न्यासः**

हरिवो मेदिनमिति । हरिशब्दान्मतुप्, सुः, नुम्, हल्ङ्यादिलोपः, संयोगान्तलोपश्च, तस्मिन् कृते रुत्वम्, 'हशि च' इत्यस्योत्वम्, 'आद् गुणः' । संयोगान्तलोपस्यासिद्धत्वात् हशि चेत्युत्वं न प्राप्नोतीति । संयोगान्तलोपस्यासिद्धत्वे सति तकारेण हशो मकारस्य व्यवधानात्, तकारस्याहृस्त्वात् ।

अलावीदिति । लुङ्, च्लेः सिच्, इट्, 'अस्तिसिचोऽपृक्ते' इतीट, सिज्वृद्धिः, 'इट ईटि' इति सिचो लोपेऽकः सवर्णदीर्घत्वम् ।

वृक्णः, वृक्णवानीति । 'ओव्रश्चू छेदने', निष्ठा, ग्रहिज्येतिसूत्रेण सम्प्रसारणम्, 'चोः कुः' इति

**पदमञ्जरी**

अलावीदिति । लुङ्, च्लेः सिच्, इट्, अस्तिसिचोऽपृक्ते' इतीट्, सिचि वृद्धिः, ननु च 'इट ईटि' इत्यत्र इट इति षष्ठी विज्ञास्यते, न पञ्चमी, सस्येत्यनुवर्तते, तत्रेडादेः सस्य लोपो विधीयमान इटो भविष्यतीति सिद्धमलावीदिति ? सत्यं रूपं सिद्धम्; स्वरे तु दोषः स्यात्—यदि लोपेनेकारो निवर्त्येत, अनुदात्तस्य ईटः श्रवणं प्रसज्येत्, उदात्तनिवृत्तिस्वरे लोपस्यासिद्धत्वाद् । यदा तु सकारमात्रस्य लोपे सवर्णदीर्घत्वं तदा सिचश्चित्करणादिडुदात्त इत्येकादेशस्वरो भवति ।

वृक्ण इति । 'ओदितश्च' इति निष्ठानत्वम् । षत्वस्वरप्रत्ययेड्विधिष्वित्यस्य व्यावर्त्यं दर्शयति—कुत्वं तु प्रतीति । क्षीबशब्द एवोदाह्रियत इति । कथं पुनरेकमेव त्रिषु विधिषूदाहरणम् ? इत्यत आह—तत्र हीति । तत्र क्वचित्पक्षे किञ्चित् प्रयोजनं प्रत्युदाहरणमित्याह—यदेति । संज्ञायामिति वचनम्, तत्र

**भावबोधिनी**

से असिद्ध हो जाने के कारण 'तिङ् चोदात्तवति' इस सूत्र से गतिसंज्ञक 'प्र' का अनुदात्तत्व नहीं होता है, 'तिङ्ङतिङः' से अनुदात्त ही होता है । ]

❀ 'रु का उत्व करने की स्थिति में संयोगान्तलोप सिद्ध ही कहना चाहिये । ❀

इसका क्या प्रयोजन है ? 'हरिवो मेदिनं त्वा ।' 'हरिवः' यह मतुप् प्रत्ययान्त है, ( हरयः सन्ति अस्य—इस अर्थ में हरि + मत् ) 'छन्दसीरः' सूत्र से म का वत्व, [ सु, नुम्—हरिवन्त् + सु, सुलोप, संयोगान्त त् का लोप करने के बाद ] 'मतुवसो रु सम्बुद्धौ छन्दसि' सूत्र से रुत्व [ 'हशि च' सूत्र से रु का उत्व, गुण करने पर 'हरिवो मेदिनं त्वा' बनता है । यहाँ ] उस संयोगान्त तलोप के असिद्ध हो जाने से [ बीच में हश् से भिन्न वर्ण आ जाने से ] "हशि च" सूत्र से उत्व नहीं प्राप्त होता है । [ जब संयोगान्त लोप की सिद्धि ही मानते हैं । तब उत्व में बाधा नहीं है । ]

❀ एकादेश करने में सिच्लोप सिद्ध ही कहना चाहिये । ❀ उदा० अलावीत् । अपावीत् । [ लू, पू—से लुङ् = तिप्, च्लि = सिच्, इट्, ति के इ का लोप अलू + इसत्, ईट् 'अलू इ स् ई त् ] "इट इटि" ( ८।२।२८ ) सूत्र से विहित सिच् लोप के सिद्ध ही रहने से [ "अकःसवर्णे दीर्घ" ६।१।१०१ ] से सवर्ण दीर्घ एकादेश होता है । [ यह वचन न मानने पर सिच्लोप त्रिपादीस्थ होने से सपादसप्ताध्यायीस्थ सवर्णदीर्घत्व की दृष्टि में असिद्ध हो जाता और रूप नहीं बन पाता । ]

❀ षत्व, स्वर और प्रत्यय की विधि में तथा इट् की विधि में निष्ठा प्रत्यय का आदेश सिद्ध ही कहना चाहिये । ❀ उदा० वृक्णः, वृक्णवान् । [ 'ओ व्रश्चू छेदने' ऊलोप, क्त, क्तवतु प्रत्यय, 'ग्रहिज्यावयिव्यधि०' सूत्र से र का सम्प्रसारण अ का पूर्वरूप, वृश्च् + त, 'चो कुः' सूत्र से च् का कुत्व, 'स्कोः संयोगाद्योरन्ते च' सूत्र से श् = स् का लोप, 'ओदितश्च' सूत्र से 'त' का 'न' आदेश, 'अट्कुप्वाङ्नुम्व्यवायेऽपि' सूत्र से न का ण—वृक्णः । क्तवतु में—वृक्णवान् इनमें ] निष्ठा आदेश 'न' के सिद्ध रहने के कारण [ झल् परे न मिल सकने के कारण 'वृश्चभ्रस्ज'

निष्ठादेशस्य सिद्धत्वात् झलीति षत्वं न भवति । कुत्वं तु प्रत्ययसिद्ध एवेति तद्भवति । स्वरप्रत्ययविधीड्विधिषु क्षीबशब्द उदाह्रियते । तत्र च निपातनमनेकधा समाश्रीयते—यदा क्षीबेर्निष्ठायामिटि कृते इत्-शब्दलोपो निपात्यते, तदा क्षीब इति संज्ञायामित्-शब्दलोपस्यासिद्धत्वात् 'निष्ठा च द्व्यजनात्' ( ६।१।२०५ ) इत्येष स्वरो न प्राप्नोति; क्षीबे तरति क्षीबिक इति द्व्यज्लक्षणष्ठन्न प्राप्नोति; यदा तु तकारलोपो निपात्यते, तदा तस्यासिद्धत्वादिडागमः प्राप्नोति ।

❀ प्लुतविकारस्तुग्विधौ छे सिद्धो वक्तव्यः ❀ (म० भा०) । अग्ना३ इच्छत्रम् । पटा३उच्छत्त्रम् ।

**न्यासः**

कुत्वम्, 'ओदितश्च' इति नत्वम्, 'अट्कुप्वाङ्' इति णत्वम् । षत्वे चासति 'स्कोः संयोगाद्योः' सलोपः । **कुत्वं प्रत्ययसिद्ध एवेति** । षत्वस्वरप्रत्ययविधीड्विधिग्रहणस्य व्यावर्त्यं दर्शयति—**स्वरप्रत्ययविधीड्विधिषु क्षीबशब्द उदाह्रियत इति** । कथं पुनस्त्रिषु विधिषु क्षीबशब्द एक एवोदाहरणमुपपद्यते ? इत्याह—**तत्रेत्यादि** । 'अनुपसर्गात् फुल्लक्षीब' इत्यत्र 'क्षीवृ मदे' इत्यस्माद् क्तप्रत्यये परभूते क्षीबशब्दो निपातितः । तत्र चानेकप्रकारं निपातनमाश्रितम् । तत्र क्वचिन्निपातने प्रत्ययविधौ स्वरविधौ च क्षीबशब्द उदाह्रियते, क्वचिदिड्विधौ । कथम् ? इत्याह—**यदेत्यादि** । संज्ञायामित्यादिग्रहणम्; 'संज्ञायामुपमानम्' इत्यतः संज्ञाग्रहणानुवृत्तेः । **एष स्वर इति** । आद्युदात्तः । तत्र हि 'कर्षात्वतो घञोऽन्त उदात्तः' इत्यतः उदात्तग्रहणमनुवर्त्तते, 'ञ्नित्यादिर्नित्यम्' इत्यत आदिग्रहणञ्च प्राप्नोति; इच्छब्दलोपस्यासिद्धत्वे सति क्षीबशब्दस्याद्व्यच्कत्वात् । न हीच्छब्दलोपस्यासिद्धत्वे सति क्षीबशब्दस्याद्व्यच्को भवति, किं तर्हि ? त्र्यच्कः । **क्षीबिक इति** । 'नौद्व्यचष्ठन्' । इडागमः प्राप्नोति । तकारलोपस्यासिद्धत्वे सति; आर्धधातुकस्य वलादित्वात् ।

**अग्ना इच्छत्रमिति, पटा उच्छत्रमिति** । अग्निपटुशब्दयोः सम्बुद्धौ ह्रस्वस्य गुणे कृते 'एङ्ह्रस्वात् सम्बुद्धेः' इति सम्बुद्धिलोपे 'एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' इत्येकारौकारयोः पूर्वस्यार्धस्याकारादेशः, स च पुनरुत्तरस्य च यथाक्रममिकारोकारौ । **नित्यस्तुग्न प्राप्नोतीति** । नित्यश्चेष्यते; 'पदान्ताद्वा'

**पदमञ्जरी**

संज्ञायामुपमानम्' इत्यतः 'संज्ञायाम्' इत्यनुवृत्तेः । **एष स्वर इति** । आद्युदात्तत्वम् । **क्षीबिक इति** । 'नौद्व्यचः ष्ठन्' ।

प्लुतसहितो विकारः **प्लुतविकारः । अग्ना३इ, पटा३उ इति** । अग्निपटुशब्दयोः सम्बुद्धिगुणे कृते 'एचोऽप्रगृह्यस्य' इत्यादिना पूर्वस्यार्धस्याकारः प्लुतः, उत्तरस्य त्विदुतौ । **नित्यस्तुग्न प्राप्नोतीति** ।

**भावबोधिनी**

( ८।२।३६ ) से अन्त का ष् नहीं होता है । ] अन्यथ क् का ष् न होने के कारण 'स्क' रहने से 'स्कोः संयोगाद्योः' सूत्र से सलोप होता है । ] किन्तु कुत्व करने के प्रति तो निष्ठा आदेश ( नत्व ) असिद्ध ही होता है । [अन्यथा झल् परे न मिलने से च् का क् नहीं हो पाता । वार्तिक में जिसका उल्लेख है उनसे भिन्न में निष्ठादेश असिद्ध होता ही है ।]

स्वर, प्रत्यय और इट् इन तीनों विधियों का एक उदाहरण 'क्षीब' शब्द दिया जाता है । और इसमें अनेक प्रकार का निपातन माना जाता है—(१) जब क्षीब् धातु से निष्ठा 'क्त' प्रत्यय परे इट् आगम करने पर ( क्षीब् इ त में ) इ और त् शब्दों का लोप निपातित किया जाता है तब 'क्षीब' यह संज्ञा में इत् ( इ + त् ) शब्दों के लोप के असिद्ध हो जाने के कारण 'निष्ठा च द्व्यजनात्' ( ६।१।२०५ ) इस सूत्र से स्वर ( आद्युदात्त ) नहीं प्राप्त होता है । [ क्योंकि इ–त् शब्दों का लोप असिद्ध हो जाने पर यह शब्द 'क्षीब् इत' ऐसा अनेकाच् हो जाता है, दो अचों वाला नहीं रह पाता है । इसीप्रकार ] 'क्षीबे तरति—इस अर्थ में द्व्यच् मानकर ('नौद्व्यचष्ठन्' सूत्र से होने वाला) ठन् प्रत्यय नहीं प्राप्त होता है । और जब केवल तकार लोप निपातित होता है तब इस तलोप के असिद्ध हो जाने से [ वलादि मानकर होने वाला ] इट् का आगम प्राप्त होता है । [ अतः इ–त अथवा त् का लोप माना जाय, दोष सम्भावित ही है । अतः 'लोप' सिद्ध कहना आवश्यक है । ]

प्लुतविकारस्यासिद्धत्वात् 'छे च' ( ६।१।७३ ) इति ह्रस्वलक्षणो नित्यस्तुग् न प्राप्नोति ।

**॥ श्चुत्वं धुटि सिद्धं वक्तव्यम् ॥ ( म० भा० ) । 'श्च्युतिर् क्षरणे' ( धा० पा० ४१ )—इत्ययं धातुः सकारादिः पठ्यते, तस्य श्चुत्वस्यासिद्धत्वाद् अट्श्च्योतति, रट्श्च्योतति इति 'ङः सि धुट्' (८।३।२९) इति प्राप्नोति । अटतीत्यड्, रटतीति रड्—क्विबन्तोऽयम् । किमर्थं पुनरयं सकारादिः पठ्यते ? इह**

**न्यासः**

इत्यनेन विकल्पेन प्राप्नोति, स चानिष्टः । तस्माद् तुग्विधौ प्लुतविकारः सिद्धो वक्तव्यः । **छ इति किम् ?** अन्यत्र तुग्विधौ प्लुतविकारस्यासिद्धत्वमेव यथा स्यात्—खलं पुनाति ब्राह्मणकुलमिति क्विप्, 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वम्, खलपु इति स्थिते आमन्त्रितैकवचनम्, 'स्वमोर्नपुंसकात्' इति तस्य लुक्, 'ह्रस्वस्य गुणः' पूर्ववत् प्लुतविकारः । अस्यासिद्धत्वात्खलपु इत्यत्र 'ह्रस्वस्य पिति कृति तुक्' इति तुग्न भवति ।

**श्चुत्वं धुटीत्यादि । अट्श्च्योतति, रट्श्च्योततीति ।** 'अट रट गतौ' इत्याभ्यां क्विप्, सुः; हल्ङ्यादिलोपः, 'झलां जशोऽन्ते' इति टकारस्य डकारः । तस्मिन् श्च्योततिशब्दे परतः श्चुत्वस्यासिद्धत्वाद् धुड् न प्राप्नोति । तस्मात् श्चुत्वं धुट्त्वे कर्त्तव्ये सिद्धं वक्तव्यम् । **किमर्थं पुनरयमित्यादि ।** न तस्य सकारस्य क्वचित् श्रवणमस्तीत्यभिप्रायः । **मधुश्च्युदिति ।** 'तत्करोति तदाचष्टे' इति मधुश्च्युतमाचष्ट इति णिचि कृते 'णाविष्ठवत् प्रातिदिकस्य' इति णिलोपः, मधुश्च्यति स्थिते ण्यन्तात् पुनरपि क्विप्, 'णेरनिटि' इति णिलोपः । श्चुत्वस्यासिद्धत्वात् 'स्कोः संयोगाद्योः' इति सकारस्य संयोगाद्यस्य लोपः, ततः 'संयोगान्तस्य लोपः' इति यलोपः, ततः 'चोः कुः' इति कुत्वम्—मधुगित्येतदिष्टरूपं भवति । तदर्थं सकारादिः पठ्यतेऽयमित्यभिप्रायः । स्यादेतत् । शकारादावप्येतस्मिन्नेतद्रूपं भवत्येव ? इत्यत आह—**शकारादौ पुनरेतस्मिन्नित्यादि ।** पूर्वं तावद् यकारस्य 'संयोगान्तस्य लोपः' इति लोपः, लुप्ते यकारे चकारः संयोगान्तो जात इति तस्यापि लोपः, ततः शकारस्य व्रश्चादिसूत्रेण षत्वे सति झलां जशोऽन्ते' इति षकारस्य डकारे मधुडित्यपि नित्यं स्यात् ।

**पदमञ्जरी**

'पदान्ताद्वा' इति दीर्घलक्षणो विकल्पः स्यात् । **छ इति किम् ? अन्यत्र प्लुतविकारस्यासिद्धत्वमेव यथा स्यात्—खलपु ब्राह्मणकुलम्, तत्र सम्बुद्धाविह किञ्चित्त्रपो इति न्यायेन गुणे खलपा + उ इति स्थिते 'ह्रस्वस्य पिति कृति' इति तुग् न भवति । द्विविधं चात्रासिद्धत्वम्—बहिरङ्गलक्षणम्, पूर्वत्रासिद्धमिति च ।**

**किमर्थं पुनरिति ।** सकारस्य क्वचिदपि श्रवणाभावात्प्रश्नः ।

**भावबोधिनी**

**॥ छ परे रहते तुक् विधि में प्लुत सहित विकार सिद्ध कहना चाहिए । ॥ उदा० अग्ना३ च्छत्रम् । पटा३ उच्छत्रम् ।** [ पटो छत्रम् । अग्ने छत्रम् में 'एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' (          ) इससे 'ए' तथा 'औ' के पूर्व अर्ध भाग का अकार आदेश होता है और उत्तर अर्ध भाग का 'इ' 'उ' हो जाता है । और 'अ' प्लुत भी होता है—अग्ना३ इ + छत्रम्, पटा३ उ + छत्रम् । इनमें ह्रस्व से 'छ' परे ह्रस्व को तुक् आगम 'छे च' ( ६।१।७३ ) से होता है । ] प्लुत सहित होने वाले विकार के असिद्ध हो जाने से "छे च" सूत्र से ह्रस्व मान कर होने वाला नित्य तुक आगम नहीं प्राप्त होता है । [ इस तुक् आगम को करने के लिए इस प्लुत सहित विकार को सिद्ध ही कहना चाहिये । ]

**॥ धुट् परे रहते श्चुत्व को सिद्ध ही कहना चाहिये । ॥** 'श्च्युतिर्' क्षरण अर्थ में है'—यह धातु [ मूल रूप में ] सकारादि ( स्च्युचिर्—ऐसी ) पढ़ी गई है । [ बाद में चवर्ग योग में 'श्' = श्च्युतिर् हुई है । ] इस श्चुत्व के असिद्ध होने से—अट्श्च्योतति रट्श्च्योतति—इनमें [ सकारादि परे मानकर ] 'ङः सि धुट्' ( ८।३।२९ ) से धुट् आगम प्राप्त होता है । अटति—इति अट् । रटति—इति रट्—ये [ कर्ता अर्थ में ] क्विप् प्रत्ययान्त है । [ चर्त्वा भाव में अड्, रड् मान कर धुट् का अतिप्रसङ्ग होता है । ]

मधु श्च्योततीति मधुश्च्युत् — क्विबन्तः, मधुश्च्युतमाचष्टे इति णिच् — मधुश्च्ययति, मधुश्च्ययतेः पुनः क्विपि कृते संयोगादित्वात् सलोपः, संयोगान्तत्वाद् यलोपः, चकारस्य कुत्वम् — मधुगिति सिद्धम्। शकारादौ पुनरेतस्मिन् संयोगान्तलोपेन यकारचकारयोर्लुप्तयोः शकारस्य षत्वे सति मधुड्ति स्यात्।

❀ अभ्यासजश्त्वचर्त्वे एत्वतुकोः सिद्धे वक्तव्ये ❀ ( म० भा० )। बभणतुः। बभणुः। अभ्यासजश्त्वस्यासिद्धत्वाद् 'अनादेशादेः' ( ६।४।१२० ) इत्येत्वं प्राप्नोति। छिदेः — विचिच्छित्सति, उच्छेः — उचिच्छिषतीति अभ्यासादेशस्यासिद्धत्वात् 'छे च' ( ६।१।७३ ) इति तुग्न प्राप्नोति।

**न्यासः**

**बभणतुः बभणुरिति।** 'अण रण भण' इत्यस्माल्लिट्, तस्य तावद् द्विर्वचने 'अभ्यासे चर्च' इति जश्त्वम् बकारः, तस्यासिद्धत्वादनादेशादिरेवायमिति 'अत एकहल्मध्ये' इत्येत्वं प्राप्नोतीति। **विचिच्छित्सतीति।** छिदेः सन्, द्विर्वचनं छिदित्यस्य, 'अभ्यासे चर्च' इति चर्त्वं चकारः, तस्य सिद्धत्वादभ्यासे परे चिशब्दस्य 'छे च' इति तुग्न भवति। **उचिच्छिषतीति।** 'उछी विवासे', सन्, 'अजादेर्द्वितीयस्य' इत्युच्छेरन्तरङ्गत्वात् तुकि कृते त्छिस्शब्दो द्विरुच्यते, तत्र 'खर्पूर्वाः खयः' इति छकारः शिष्यते, पूर्ववच्चर्त्वम्, तस्य सिद्धत्वादुकारस्य तुग्न भवति।

**पदमञ्जरी**

**उचिच्छितीति।** 'उछी विवासे', तुक्, सन्, इट्, 'अजादेर्द्वितीयस्य' इति छिस्शब्दस्य द्विर्वचनम्, 'शपूर्वाः खयः' इति खयः शेषः, छस्य 'अभ्यासे चर्च' इति चकारः।

**भावबोधिनी**

प्रश्न है कि यह 'श्च्युतिर्' धातु सकारादि ( स्च्युतिर् ऐसी ) क्यों पढ़ी जाती है ? इसमें मधु श्च्योतति— इस अर्थ में—मधुश्च्युत्—यह क्विप् प्रत्ययान्त रूप है 'मधुश्च्युतम्' आचष्टे—इस अर्थ में [ 'तत्करोति तदाचष्टे' वचन से [ णिच् प्रत्यय ( तथा लट् तिप् आदि करने पर )—मधुश्च्ययति। अब इस 'मधुच्य्' से पुनः कर्ता अर्थ में क्विप् प्रत्यय कर देने के बाद संयोगादि होने से स् (श्) का लोप—मधुच्य। संयोगान्त य् का लोप, चकार का कुत्व—मधुक् ऐसा रूप सिद्ध होता है। परन्तु शकारादि मानने पर तो ( मधुश्च्य् में ) संयोगान्त लोप करके य और च् का लोप होने पर शकार का ] व्रश्चादि सूत्र से ] षत्व और जश्त्व करने पर—मधुड्—ऐसा रूप होने लगेगा। [ जब कि इष्ट रूप 'मधुक्' ही है। इसकी सिद्धि के लिए 'श्च्युतिर्' का मूल रूप में 'स्च्युतिर्' मानना आवश्यक है। ]

❀ एत्व और तुक् की कर्तव्यता में अभ्यास का जश्त्व और चर्त्व सिद्ध ही कहना चाहिए। ❀ उदा० बभणतुः। बभणुः। [ भण् + लिट् = तस् = अतुस्, द्वित्व, अभ्यास जश्त्व आदि होता है। ] अभ्यास के जश्त्व के असिद्ध हो जाने से 'अत एकहल्मध्येऽनादेशादेर्लिटि' (६।४।१२०) सूत्र से एत्व [ तथा अभ्यास का लोप ] प्राप्त होता है। [ क्योंकि जब जश्त्व असिद्ध हो जाता है तब अनादेश धातु के अ का एत्व होना चाहिये। अतः सिद्धत्व मानना आवश्यक है। ] 'छिद्' धातु से विचिच्छित्सति, 'उच्छ'–धातु से—'उचिच्छिषति' इनमें अभ्यास के आदेश (चर्त्व) के असिद्ध हो जाने से 'छे च' सूत्र से तुक् प्राप्त नहीं होता है। ] [ 'छिद्' धातु से सन्, इट् करने पर—छिद् स, द्वित्व, हलादि शेष छि छिद् स, अभ्यास चर्च' से अभ्यास का चर्त्व चि छिद् स। यह सिद्ध मानकर छ परे चि को तुक् आगम नहीं होता है। यदि चर्त्व असिद्ध हो जाता तो 'छ' अभ्यास में मिलता। 'नि' उपसर्ग के साथ वि + चि छिद् स में तुक् प्रसक्त होता क्योंकि छ का च जो किया गया है वह असिद्ध होकर 'छ' ही दिखाई देता। अतः चुत्व सिद्ध मानना आवश्यक है। इसी प्रकार 'उछी विवासे' तुक्, सन् इट् उच्छ् इस्। 'अजादेर्द्वितीयस्य' सूत्र से 'च्छिस्' का द्वित्व करने के बाद 'शर्पूर्वाःखयः' ( ७।४।६१ ) सूत्र पर पठित 'शर्पूर्वाःखयः' इस वार्तिक से खय् छ ही शेष त् का लोप हो जाता—उछि च्छिस। इस अभ्यास के 'छ' का चर्त्व से 'च' होता है और यह सिद्ध ही रहता है। अतः 'उ' को 'छ' परे मानकर तुक् आगम नहीं होता है—उचिच्छिषति रूप बनता है। यदि चर्त्व असिद्ध होता तो 'उ' को तुक् आगम प्राप्त होने लगता। काशिकाकार ने दो उदाहरण देकर कुछ अस्पष्टता उत्पन्न कर दी है। भाष्य में 'उचिच्छिषति' यही एक उदा० दिया गया है। जो असिद्ध में तुक् प्रसक्ति का है। ]

❀ द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम् ❀ ( म० भा० )। सय्ँय्यन्ता, सव्ँव्वत्सरः, यल्ँल्लोककम्, तल्ँलोकमिति परसवर्णस्यासिद्धत्वाद् 'यरः' ( ८।४।४७ ) इति द्विर्वचनं न स्यात्।

❀ पदाधिकारश्चेल्लत्वघत्वढत्वनत्वरुत्वषत्वणत्वानुनासिकछत्वानि सिद्धानि वक्तव्यानि (म०भा०) ❀। लत्वम्—गलो गलः। गरो गरः। घत्वम्—द्रोग्धा, द्रोग्धा। ढत्वम्—द्रोढा, द्रोढा। नत्वम्—नुन्नः, नुन्नः। रुत्वम्—अभिनोऽभिनः। अभिनदभितत्। षत्वम्—मातुष्ष्वसा, मातुष्ष्वसा; मातुःस्वसा, मातुःस्वसा। पितुष्ष्वसा, पितुष्ष्वसा,। पितुःस्वसा, पितुःस्वसा। णत्वम्—माषवापाणि, माषवापाणि। माषवापानि,

**न्यासः**

**सय्ँय्यन्ता सव्ँव्वत्सर इत्यादि।** समित्येतस्य यन्तेत्येतस्मिन् परतः, वत्सरशब्दे च परतः, यल्लोकं तल्लोकमित्यत्रापि यत्तदोर्द्वितीयैकवचनान्तयोर्लोकशब्दे परतो मोऽनुस्वारे, तस्य 'अनुस्वारस्य ययि परसवर्णः' इति परसवर्णे आन्तर्यतः सानुनासिके ययि कृते तस्यासिद्धत्वाद् 'यरोऽनुनासिकेऽनुनासिको वा' इति वर्तमाने 'अनचि च' इति यरो द्विर्वचनं न प्राप्नोतीति। ततश्च पक्षे त्रयाणां यकारादीनां द्वित्वं न स्यात्।

**पदाधिकारश्चेदित्यादि।** यदि लत्वादिषु 'पदस्य' इति नानुवर्तते, तदा पदस्य द्विर्वचनमपदस्य द्विर्वचनेन तुल्यत्वाद् द्विर्वचनस्य बहिरङ्गत्वम्, लत्वादीनाञ्चान्तरङ्गत्वम्। 'असिद्धं बहिरङ्गमन्तरङ्गे' इति लत्वादिषु कर्तव्येषु द्विर्वचनेनेति सिद्धत्वात् 'पूर्वत्रासिद्धम्' इत्येतन्न प्रवर्त्तते, ततश्च लत्वादिभिरेव तावद् भवितव्यम्, तेषु सत्सु पश्चाद् द्विर्वचनेनेति सिध्यत्येवेष्टम्। पदाधिकारे सति लत्वादीनामपि बहिरङ्गत्वादसत्या बहिरङ्गपरिभाषया तेषु सत्सु द्विर्वचनं सिद्धम्। लत्वादयस्त्वस्मिन् कर्तव्येऽसिद्धाः; पूर्वत्रासिद्धत्वात्; ततश्च पूर्वं द्विर्वचने कृते पश्चाल्लत्वादिषु विधीयमानेषु परतश्चानिष्टमपि प्रसज्येत्। तस्माद् यदि पदाधिकारः, ततो लत्वादीनि सिद्धानि वक्तव्यानि। **गलो गल इति।** 'गॄ निगरणे'। **नुन्न इति।** 'नुदविद' इत्यादिना नकारः, पक्षे तकारश्च। **अभिनोऽभिन इति।** भिदेर्लङ्, सिप्, श्नम्, हल्ङ्यादिलोपः, सिपि धातो रुर्वा', 'दश्च' इति वा रुत्वम् पूर्ववदेव 'अतो रोरप्लुतादप्लुते' इत्युत्वम्, 'आद् गुणः'। **मातुष्ष्वसा, पितुष्ष्वसेति।** 'मातुःपितुर्भ्यामन्यतरस्याम्' इति पक्षे षत्वम्। **माषवापाणीति।** 'वा भावकरणयोः' इत्यनुवर्तमाने 'प्राति-

**पदमञ्जरी**

**संय्यन्तेत्यादौ** 'मोऽनुस्वारः', 'अनुस्वारस्य ययि परसवर्णः'।

**पदाधिकारश्चेदिति।** यदि लत्वादिविधिषु पदस्येत्यपेक्ष्यते, तदा लत्वादीनां द्विर्वचनस्य च समकक्षत्वम्, अनपेक्षायां तु बहिरङ्गं द्विर्वचनमन्तरङ्गेषु लत्वादिष्वसिद्धमिति 'पूर्वत्रासिद्धम्' इत्येतन्न प्रवर्त्तते इति लत्वादिषु कृतेषु द्विर्वचनमिति सिद्धमिष्टम्। **गलोगल इति।** 'अचि विभाषा' इति लत्वम्। **द्रोग्धेति।** 'वा

**भावबोधिनी**

❀ द्वित्व करने के विषय में परसवर्णत्व सिद्ध कहना चाहिए। ❀ उदा० सय्ँय्यन्ता, सव्ँव्वत्सरः, यल्ँल्लोकम् तल्ँलोकम्—इनमें परसवर्ण के असिद्ध हो जाने से [ "अनचि च" सूत्र से ] यर् का द्वित्व नहीं हो सकेगा। [ अच् से परे यर् का द्वित्व अनच परे होता है। इस सूत्रार्थ के अनुसार—सय्ँयन्ता आदि में य् आदि यरों का द्वित्व होता है। यदि परसवर्ण हुये य् आदि असिद्ध आ जायेंगे तो किसका द्वित्व होगा। इसके फलस्वरूप तीन यकार आदि वाले रूप नहीं हो सकेंगे। ]

❀ यदि 'पद' इसका अधिकार है तो लत्व, घत्व, ढत्व, नत्व, रुत्व, षत्व, णत्व, अनुनासिकत्व और छत्व को सिद्ध कहना चाहिये। ❀ उदा० गलो गलः। [ गॄ+अच् गुण रपर, 'अचि विभाषा' से लत्व होता है। द्वित्व में भी यह सिद्ध ही रहता है। वैकल्पिक लत्व होने से पक्ष में— ] गरो गरः [ यह भी होता है। घत्व—द्रोग्धा द्रोग्धा। [ द्रुह + तृच्, 'वाद्रुह मुह०' सूत्र से विकल्प से 'ह' का घ द्रुघ् + तृ, घत्व, जश्त्व, गुण आदि कर दोग्धृ + सु अनङादि करने पर द्रोग्धा। द्वित्व में घत्व सिद्ध रहता है। ] ढत्व के उदा० द्रोढा द्रोढा। [ द्रुह + तृच् में जब घत्व नहीं होता है तब 'होढः' सूत्र से ढत्व, धत्व, ष्टुत्व, ढलोप आदि कार्य होने के बाद पद बनाकर द्वित्व किया जाता है। ] नत्व का उदा० नुन्नः, नुन्नः। [ नुद + क्त में 'नुदविद०' आदि सूत्र से निष्ठा त का नत्व होता है।

**माषवापानि । अनुनासिक—वाङ्नयनम्, वाङ्नयनम् । वाग्नयनम्, वाग्नयनम् । छत्वम्—वाक्छयनम्, वाक्छयनम् । वाक्शयनम्, वाक्शयनम् । लत्वादीनां विकल्पितानामसिद्धत्वात् कृते द्विर्वचने सत्युपरिष्टा-**

**न्यासः**

पदिकान्तनुम्विभक्तिषु' इति पक्षे णत्वम् । **वाङ्नयनमिति ।** 'यरोऽनुनासिकेऽनुनासिको वा' इति पक्षेऽनुनासिकः । **वाक्छयनमिति ।** 'झयो होऽन्यतरस्याम्' इति वर्तमाने 'शश्छोटि' इति वा छत्वम् । **लत्वादीनामित्यादि ।** एतेनासिद्धत्वे सति लत्वादीनां यो दोषस्तं दर्शयति । लत्वादीनामसिद्धत्वात् पूर्वं द्विर्वचने कृते सत्युत्तरत्र काले विकल्पविधित्वादयमर्थः प्रवर्तमानो यथा पूर्वत्र वर्तते, तथा नियोगतः परत्रापि न प्रवर्तेत इत्यनियोगो लभ्यते; नियमकारणाभावात् । ततश्चानिष्टो विकल्पः स्यात्—पूर्वपरयोरेकत्र प्रवृत्तेः, अपरत्राप्यप्रवृत्तेः । नेष्टोऽनिष्टो विकल्पः । तथा सति गरो गलः, गलो गर इत्येवमाद्यनिष्टमापद्यते । तत्र 'न' इत्येतावददिष्टविषये सूत्रं कर्तव्यम् । किमर्थम् ? अनिष्टविषये पूर्वत्रासिद्धत्वस्य प्रतिषेधार्थम् । यत्र पूर्वत्रा-

**पदमञ्जरी**

द्रुह' इति वा घत्वम्, तदभावे 'हो ढः' । **नुन्न इति ।** 'नुदविद' इति वा निष्ठानत्वम् । **अभिन इति ।** भिदेर्लङ्, सिपि श्नमि हल्ङ्यादिलोपः, 'सिपि धातो रुर्वा', 'दश्च' इति वा रुत्वम्, अडागमः । **मातुःष्वसेति ।** 'मातुःपितुर्भ्यामनन्तरस्याम्' इति वा षत्वम् । **माषवापाणीति ।** 'प्रातिपदिकान्त' इति वा णत्वम् । **वाङ्नयनमिति ।** 'यरोऽनुनासिकेऽनुनासिको वा' इति वा गकारस्य ङकारः । **वाक्शयनमिति ।** 'शश्छोऽटि' इति वा छत्वम् । लत्वादीनामित्यादिनाऽसिद्धत्वे लत्वादीनां दोषस्तं दर्शयति—[1]**अनिष्टोऽपि विकल्पः स्यादिति ।** पूर्वोत्तरयोः

**भावबोधिनी**

द्वित्व में भी सिद्ध रहता है । वैकल्पिक होने से पक्ष में 'त' भी रहता है—नुत्तः । ] रुत्व का उदा० अभिनोऽभिनः । [ भिद् + लङ् = सिप्, अट, श्नम्, सि लोप, अ भि न द्+स् 'सिपि धातोः रुर्वा' 'दश्च: सूत्र से द् का रु—अभिनरु, 'अतो रोरप्लुतादप्लुते सूत्र से रु का उ, आद्गुणः से गुण; अभिनो+अभिन। पूर्वरूप—अभिनोऽभिनः । रु विकल्प से होता है अतः पक्ष में—] अभिनद् अभिनत् । [ चर्त्व से द् का त् ] षत्व का उदा० मातुष्ष्वसा मातुष्ष्वसा । [ 'मातुपितुर्भ्यामन्यतरस्याम्' सूत्र से विकल्प से षत्व होता है । पक्ष में विसर्ग भी होता है उसका भी द्वित्व वाला रूप होता है—] मातुःस्वसा, मातुःस्वसा । ] णत्व का उदा० माषवापाणि माषवापाणि । [ यहाँ 'प्रातिपदिकान्तनुम्विभक्तिषु' इस वचन से विकल्प से णत्व होता है । अतः दो रूप णत्व वाले और दो रूप नत्व वाले होते हैं—] माषवापानि माषवापानि । अनुनासिकत्व का उदा० वाङ्नयनम् वाङ्नयनम् । [ द्वन्द्व के बाद एकवद्भाव होने पर वाक्+नयनम् में 'यरोअनुनासिकेऽनुनासिको वा' सूत्र से विकल्प से क् का परसवर्ण 'ङ' होता है । अतः दो रूप परसवर्ण वाले और दो रूप परसवर्णाभाव वाले— ] वाग्नयनम् वाग्नयनम् । छत्व के उदा० वाक्छयनम्, वाक्छयनम् । [ वाच् + शयनम्, कुत्व के बाद 'शश्छोऽटि' सूत्र से विकल्प से श् का छत्व होता है । पक्ष में शवाला रूप भी होता है— ] वाक्शयनम्, वाक्शयनम् । [ इनमें सिद्धत्व मानने का प्रयोजन क्या है ? ] लत्व आदि आदेश विकल्प से होते हैं इनके असिद्ध होने से द्वित्व कर लेने पर उसके बाद [ लत्वादि का ] विकल्प करने पर—गरो गलः, गलो गरः—इस प्रकार के रूप का भी द्वित्व होने लग जाता है । [ इसको रोकने के लिए प्रस्तुत वार्तिक से केवल आदेशवाले का या विकल्पवाले का ही द्वित्व हो । दोनों का एक रूप न हो । ] यह सभी कुछ पूर्वोक्त विषय 'न मु ने' इसके योग विभाग से सिद्ध किया जाता है । [ प्रथम योग ] 'न' यही है जो अनिष्ट विषय में 'पूर्वत्रासिद्धम्' इसका प्रतिषेध करने के लिए है । अर्थात् जो रूप इष्ट नहीं है वहाँ 'पूर्वत्रासिद्धम्' यह असिद्धत्व नहीं होता है । इसके बाद दूसरा प्रोग— ] 'मु ने' यह होगा, इसमें 'न' इसकी अनुवृत्ति होती है । [ अतः इसका अर्थ होता है—मुभाव को कर्तव्यता में 'ना' भाव असिद्ध नहीं होता है । ]

**विमर्श**—महाभाष्य में प्रस्तुत सभी वार्तिक 'स्वरितो वानुदात्ते पदादौ' ( ८।२।६ ) सूत्र पर है किन्तु काशिकाकार ने पहले ही उद्धृत कर दिये हैं । कुछ वार्तिक छोड़ भी दिये हैं ।

---

१. पाठोऽयं मुद्रितकाशिकायां नास्ति ।

द्विकल्पे सति गरोगलः, गलोगरः—इत्येवं रूपमपि द्विरुक्तं स्यात्। तदेतत्सर्वम् 'न मु ने' इति योगविभागेन साध्यते। 'न' इत्येतावदनिष्टे विषये पूर्वत्रासिद्धस्य प्रतिषेधार्थम्। ततः 'मु ने' इति, 'न' इत्येतदनुवर्तते॥

## ३६६२. उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ॥ ४ ॥ (३६५७)

उदात्तयणः स्वरितयणश्च परस्यानुदात्तस्य स्वरित आदेशो भवति। उदात्तयणः—कु_मार्यौ॑, कु_मार्यः॑। उदात्तनिवृत्तिस्वरेणायमीकार उदात्तः, तस्य स्थाने यणादेशः स उदात्तयण्, तस्मात् परस्यानु-

**न्यासः**

सिद्धत्वस्यानिष्टविषयः। ततः 'मु ने' इत्येतद्ध्यत्र वचनेऽनुवर्तते। यद्येवम्, किमर्थमिदम्, पूर्वसूत्रेणैव सिद्धः प्रतिषेधः? सर्वत्र तत् सूत्रं नास्तीति ज्ञापनार्थम्। तेन यत्रासिद्धत्वमिष्यते तत्रैवासौ प्रवर्तते। तदन्यत्र विपर्ययस्तु न भवति; योगविभागादस्मिन् सूत्रे॥ ३॥

**उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य॥ उदात्तयणः, स्वरितयणश्चेति।** उदात्तस्थाने यो यण् स उदात्तयण्, स्वरितस्थाने यो यण् स स्वरितयणित्यर्थः। **कुमार्यौ, कुमार्यः इति।** अत्र 'अनुदात्तौ सुप्पितौ' इत्यौजसावनुदात्तौ, तयोरुदात्तयणो; परयोः स्वरितो भवति। **उदात्तनिवृत्तिस्वरेणेति।** उदात्तलोपनिमित्त-

**पदमञ्जरी**

पदयोरेकत्र प्रवृत्तिः, अपरत्राप्रवृत्तिरित्येषोऽनिष्टो विकल्पः। **एतत्सर्वमित्यादि।** योगविभागार्थमेव च प्रतिषेधाश्रयणम्, अन्यथा लाघवार्थममुनेति निपातनमाश्रयणीयं स्यात्, ततः 'मु ने' इति द्वितीयो योगः। किमर्थमिदम्? पूर्वयोगस्यासर्वविषयत्वख्यापनार्थम्, तेनातिप्रसङ्गो नोद्भावनीयः॥ ३॥

**उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य॥** 'उदात्तस्वरितयोः' इत्यनुवादेऽपि स्थानषष्ठ्येषा; व्याख्यानात्। तेन उदात्तस्वरितयोः समीपवर्त्ती यो यण् ततः परस्यानुदात्तस्य स्वरितत्वं न भवति। **सकृल्ल्व्याशा, खलप्व्याशा इति। ततः परस्य सप्तम्येकवचनस्य स्वरितत्वमिति। केन?** इत्यत आह—**उदात्तयण्**

**भावबोधिनी**

वार्तिक के कार्य 'न मु ने' इस सूत्र को (१) 'न' और (२) 'मु ने' इन दो सूत्रों में विभक्ति करके दिये जा सकते हैं। पहला सामान्य सूत्र होगा जो अनिष्ट लक्ष्य में 'पूर्वत्रासिद्धम्' की प्रवृत्ति रोक देगा। दूसरे में भी 'न' की अनुवृत्ति करके प्रचलित अर्थ किया जाता है—नाभाव की कर्तव्यता में मुभाव असिद्ध नहीं होना है। इससे 'अमुना' आदि भी बन जाते हैं। वार्तिक अनावश्यक है॥ ३॥

उदात्त के स्थान पर यण् तथा स्वरित के स्थान पर यण्—इनसे परे अनुदात्त के स्थान पर स्वरित आदेश हो जाता है। उदा० कुमार्यौ, कुमार्यः। उदात्तनिवृत्ति स्वर से यह ईकार उदात्त है। [ यहाँ पूर्ववर्ती उदात्त अ का लोप ईकार परे होता है यह ई अनुदात्त है। इसको मानकर उदात्त का लोप होने से 'अनुदात्तस्य च यत्रोदात्तलोपः' ( ६।१।१६१ ) सूत्र से अनुदात्त ई का उदात्त होता है। कुमारी + औ, कुमारी + जस् = अस् में ] इस उदात्त ई के स्थान पर यण् आदेश होता है, यह उदात्त यण् होता है, इससे परे अनुदात्त (औ, अस्) का स्वरित आदेश होता है। [ फलतः कुमार्यौ, कुमार्यः का औ, अ स्वरित हो जाते है। ] स्वरित के स्थान पर यण से परे का उदा० सकृल्ल्व्याशा। खलप्व्याशा। [ सकृत् लुनाति, खलं पुनाति—इन अर्थों 'लू' तथा 'पू' धातुयें 'धातोः' सूत्र से अन्तोदात्त है, इनमें क्विप् प्रत्यय, उपपद समास, 'गतिकारकोपपदात् कृत्' ( ६।२।१३९ ) इससे उत्तर पद का प्रकृतिभाव करने से ये कृत्स्वर से अन्तोदात्त है। इसी को लिखा है—] सकृल्लू, खलपू—ये कृत् स्वर से अन्तोदात्त हैं। [सकृल्लू + ङि = इ, खलपू + ङि = इ में ] इन उदात्त ऊकारों का 'ओः सुपि' ( ६।४।८३ ) सूत्र से यण् आदेश होता है' यह यह उदात्त के स्थान पर यण् है, इससे परवर्ती सप्तमी एकवचन ( इ ) का स्वरित होता है [ पुनः सकृल्ल्वि + आशा तथा खलप्वि + आशा में ] इस स्वरित इ का यण् आदेश स्वरित का यण् है, इस स्वरित स्थानीय यण् से परवर्त्ती आशा शब्द के अनुदात्त आ का स्वरित हो जाता है। [ आशा शब्द 'आशायाः अदिगाख्या चेत्'

दात्तस्य स्वरित आदेशो भवति। स्वरितयणः—सक्रूल्व्याशा। खलप्व्याशा। सकुल्लू, खलपू—इति कृत्स्वरेणान्तोदात्तौ, तयोः 'ओः सुपि' ( ८।३।१६ ) इति यणादेशः स उदात्तयण्, ततः परस्य सप्तम्येकवचनस्य स्वरितत्वम्, तस्य यणादेशः स्वरितयण्, तस्मात्स्वरितयणः परस्य आशा-शब्दाकारस्यानुदात्तस्य स्वरितो भवति।

ननु च सप्तम्येकवचनस्य यदुदात्तयण इति स्वरितत्वम्, तदसिद्धं यणादेशे, तत्कथमयं स्वरितयण् भवति ? आश्रयात् सिद्धत्वं भविष्यति।

**न्यासः**

स्वरः पूर्वमुदात्तस्य लोपो यस्मात्। स पुनरुदात्तनिवृत्तिस्वरः 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यत्र यो विहितः वेदितव्यः। **कृत्स्वरेणान्तोदात्ताविति। ल्व्येति, प्व्येति**—लूपूभ्यां धातुस्वरेणान्तोदात्ताभ्यां क्विप्, 'उपपदमतिङ्' इति समासः। 'गतिकारकोपपदात् कृत्' इति कृदन्तस्योत्तरपदस्य प्रकृतिभावविधानादेतौ कृत्स्वरेणान्तोदात्तौ भवतः। **उदात्तयणादेशश्चेति**। इहानेन सूत्रेणानुदात्तस्योदात्तयणः परस्य स्वरितो विधीयते, स्वरितयणश्च परस्य सप्तम्येकवचनस्य पूर्वेण प्रकारेण स्वरितो विधीयत इति दर्शयति। **तस्य यो यणिति**। तस्येत्यनेन सप्तम्येकवचनस्य परामर्शः। **आशाशब्दाकारस्यानुदात्तस्येति**। 'आशाया अदिगाख्या चेत्' इत्याशाशब्द आद्युदात्तः, तेन 'अनुदात्तं पदमेकवर्जम्' इत्याकारस्यानुदात्तत्वम्।

**ननु चेत्यादि**। सप्तम्येकवचनस्य 'उदात्तयणः' इत्येवमनेन सूत्रेण यत् स्वरितत्वं विहितं तत् षाष्ठिकयणादेशे कर्तव्येऽसिद्धम्, ततश्च नैवायं स्वरितस्य स्थाने यणादेश इति सकुल्ल्व्याशेत्यत्र खलप्व्याशेत्यत्र स्वरितो विधीयते तस्याश्रयात् सिद्धत्वमनिष्टम्; यस्मादुदात्तात् परो यः स्वरितयण् तत्परस्यानुदात्तस्य स्वरितत्वम्, ततः स्थानित्वाद् यण् परस्याशाशब्दाकारस्य स्वरितत्वस्य **तैत्तिरीयके शाखान्तरे पठ्यते**। तदनु-

**पदमञ्जरी**

**इत्यनेनेति**। योऽयमस्मिन्सूत्रे पूर्वो भागः, तेनेत्यर्थः। 'उदात्तयणो हल्पूर्वात्' इत्युदात्तत्वं तु न भवति, 'नोङ्धात्वोः' इतिप्रतिषेधात्, आशाशब्दः 'आशाया आदिगाख्या चेत्' इति अन्तोदात्तत्वादनुदात्तादिः। **तत्कथमयं स्वरितयण् भवतीति**। न कथञ्चित्, न ह्ययं स्वरितमपनीयं तत्स्थाने भवति। न हि पूर्वं शास्त्रं स्थानिबुध्या आदेशे प्रवर्तते, किं तर्हि ? स्थानिन्येव। यथोक्तम्—'ढ त इत्येतद् द्विरुच्यते' इति, न पुनस्तद्बुध्या ढशब्दो द्विरुच्यत इति। **आश्रयादिति**। आहायम्—स्वरितयण इति, न चास्ति सिद्धः स्वरितः, तत्राश्रयात् सिद्धत्वं भविष्यति।

**भावबोधिनी**

वचन से अन्तोदात्त है। फलतः अनुदात्तं पदमेकवर्जम्' से शेषनिघात के कारण आदि का आ अनुदात्त है इसका स्वरित होता है।

**विमर्श**—प्रस्तुत सूत्र में 'तयोः 'रोः सुपि' ( ८।३।१६ ) इति यणादेशः''''आदि पाठ सभी प्रकाशित संस्करणों में है। यहाँ तक कि आर्येन्द्र शर्मा तथा जिज्ञासु जी के संस्करणों में भी। किन्तु यह भ्रामक है। यहाँ पर 'ओः सुपि' ( ६।४।८३ ) यही पाठ होना चाहिये क्योंकि यही सूत्र यणादेश करता है। 'रोः सुपि' ( ८।३।१६) तो रु के रेफ का विसर्ग करता है।

(अनु०) प्रश्न—उक्त उदाहरणों में सप्तमी एकवचन ( इ ) का 'उदात्त का यण्' इससे परे अनुदात्त का स्वरित होता है' से जो स्वरित होता है वह [ 'ओः सुपि' (६।४।८३) इस षष्ठ अध्यायस्थ = सपादसप्ताध्यायीस्थ की दृष्टि में ] असिद्ध होना चाहिये अर्थात् यण् दिखाई नहीं देना चाहिये तब यह स्वरित के स्थान पर यण् कैसे होगा ? उत्तर है—आश्रय से सिद्ध होना माना जायगा। [ चूंकि स्वरित का यण् होता है, यह कहीं भी सिद्ध नहीं मिलेगा, विधान व्यर्थ होने लगेगा, अतः यह माना जायगा कि असिद्धत्व नहीं होता है। अब स्वरित का यण असम्भव है। ]

**यद्येवम्**, 'उदात्तादनुदात्तस्य स्वरितः' ( ८।४।६६ ) इति एतस्याप्याश्रयात्सिद्धत्वं प्राप्नोति, ततश्च दध्याशेत्यत्रापि स्वरितः स्यात् ? तस्मादयमेव यण्स्वरो यणादेशे सिद्धो वक्तव्यः।

**केचित्तु** ब्रुवते—उदात्तात्स्वरितयणोऽपि परस्यानुदात्तस्य स्वरितत्वं दृश्यते। तथा च तैत्तिरीयके शाखान्तरे पठ्यते—'यास्ते॒ विश्वा॑ः स॒मिधः॒ सन्त्य॑ग्ने॒' ( तै० ३।५।५।२ ) इति। 'अग्ने' इत्ययमकारः स्वरितः पठ्यते। तथा ब्राह्मणेऽपि—'दध्याशयतो'(तै० ब्रा० १।७।६।५)त्याकारः स्वरितः पठ्यते' इति।

**न्यासः**

स्वरितत्वं न भवतीत्यभिप्रायः। **आश्रयादित्यादि**। आहायम्—स्वरितयण इति, न क्वचित् सिद्धः स्वरितः। तत्राश्रयात् सिद्धत्वं भविष्यति, यथा 'अतो रोरप्लुतादप्लुते' इत्यत्र रुत्वस्य।

**यद्येवमित्यादि**। एतेनाश्रयात् सिद्धत्वे समाश्रीयमाणेऽतिप्रसङ्गमुद्भावयति। **दध्याशेति**। दधिशब्दः 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः, शेषस्यानुदात्तत्वम्, 'उदात्तानुदात्तस्य स्वरितः' इति धकारात् परस्येकारस्य स्वरितत्वम्। तस्याश्रयात् सिद्धत्वे तत्स्थानिकाद् यण उत्तरस्याशाशब्दाकारस्य स्वरितत्वं स्यात्। **तस्मादित्यादि**। यत एवमाश्रयात् सिद्धत्व आश्रीयमाणेऽयमतिप्रसङ्गो भवति; तस्मादयमेव यण्स्वरो योऽनेन सूत्रेण विधीयते, तस्य यणादेशे कर्तव्ये सिद्धत्वं वक्तव्यम्। वक्तव्यमित्यस्य व्याख्यानमर्थः। तत् तु पूर्ववदेव योगविभागमाश्रित्य कर्तव्यम्।

**केचित्त्वित्यादि**। यद्येवमित्यादिना योऽतिप्रसङ्गदोष उद्भावितः, तं केषाञ्चिन्मतेन परिहरति। अनिष्टेऽपि विषये प्रवृत्तिः = अतिप्रसङ्गः। न च 'उदात्तादनुदात्तस्य स्वरितः' इत्यनेनोदात्तात् परो यः

**पदमञ्जरी**

एवमुच्यमानेऽतिप्रसङ्गमुद्भावयति— **यद्येवमिति**। **दध्याशेति**। दधिशब्दः 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः, शेषनिघातः, 'उदात्तादनुदात्तस्य स्वरितः' इति तस्य स्वरितत्वम, तस्याश्रयात्सिद्धत्वे सति तत्स्थानिकादपि यणः परस्यानुदात्तस्य स्वरितत्वप्रसङ्गः इत्यर्थः। **तस्मादित्यादि**। यत एवमाश्रयात्सिद्धत्वे दोषः, तस्मादयमेव यण्स्वरो यथा सिद्धो भवति तथा वक्तव्यम्। तत्कथम् ? योगविभागः करिष्यते—'उदात्तयणः', उदात्तयणः परस्यानुदात्तस्य स्वरितो भवति; ततः 'स्वरितयणः', स्वरितयणश्च परस्यानुदात्तस्य स्वरितो भवति, उदात्तयण इत्येव। तेन उदात्तयण इत्येवं योऽभिनिर्वृत्तः स्वरितः, तद्यणः परस्यानुदात्तस्य स्वरितत्वं भवतीत्यर्थः। तेनास्यैव स्वरितस्याश्रयात्सिद्धत्वं भविष्यति।

**यद्येवमित्यादिना** योऽतिप्रसङ्गः उद्भावितः, तं केषाञ्चिन्मतेन परिहरति—**केचित्त्विति**। **उदात्तात्स्वरितयणो पीति**। उदात्तात्परो यः स्वरितः 'उदात्तादनुदात्तस्य' इति विहितः तस्य यो यण् तस्मादपि परस्येत्यर्थः। **तैत्तिरीयक इति**। तित्तिरिणा प्रोक्तमधीयते तैत्तिरीयाः, तेषामाम्नायस्तैत्तिरीयकम्, चरण-

**भावबोधिनी**

यदि ऐसा माना जायगा तब तो 'उदात्त से परे अनुदात्त का स्वरित होता है' ( ८।४।६६ ) इसका भी आश्रयत्व से सिद्धत्व प्राप्त होगा, इस कारण 'दध्याशा' ( दधि+आशा )—यहाँ भी स्वरित होने लगेगा ? अतः यही यण् का स्वर यणादेश करने में सिद्ध होता है—ऐसा कहना चाहिये।

**विमर्श**—भाव यह है कि दधि + आशा में दधि शब्द आद्युदात्त होने से शेषनिघात के कारण अन्तोदात्त होता है। इसके बाद 'उदात्तादनुदात्तस्य स्वरितः' से अनुदात्त का स्वरित होता है। यदि यह स्वरित भी सिद्ध रहेगा तो इसके स्थान पर यण् करने से 'आशा' का भी स्वरित होने लगेगा। अतः यह कहना आवश्यक है कि यण् स्वर जो भी सूत्र से किया जाता है उसी का यणादेश करने में सिद्धत्व मानना चाहिये, अन्य का नहीं। अतः 'दध्याशा' का स्वरित यणादेश करने में सिद्ध न होकर असिद्ध ही होता है।

(अनु०)—कुछ लोग तो ऐसा कहते हैं—उदात्त से परवर्ती [ अनुदात्त के स्थान पर होने वाले ] स्वरित के यण् से भी परवर्ती अनुदात्त का स्वरित होना देखा जाता है। जैसा कि तैत्तिरीय की किसी शाखा में देखा जाता है—

**यथा तु वार्त्तिकं भाष्यं च, तथा उदात्तात्स्वरितयणः परस्यानुदात्तस्यानेन स्वरितत्वं न भवतीति**

**न्यासः**

दात्तत्वं पुनरग्निशब्दस्याकारस्य; तस्य प्रातिपदिकस्वरेणान्तोदात्तत्वात्। **तथा ब्राह्मणेऽपि**। तदेकदेशविशेषो ब्राह्मणशब्देनेह विवक्षितः। **दध्याशयतीति**। अश्नोतेर्णिजन्तस्य धातुस्वरेण चित्स्वरेण वान्तोदात्तादाकारोऽनुदात्तः। तस्य स्वरितयणः परस्य ब्राह्मणे स्वरितत्वं पठ्यते।

**यथा त्वित्यादि**। एतेन तमेवातिप्रसङ्गं समर्थयते। **वार्त्तिककारेणोक्तम्**—'आश्रयात् सिद्धमिति चेदुदात्तात् स्वरिते दोषः' इति। अस्यायमर्थः—यद्याश्रयात् स्वरितस्य सिद्धत्वमुदात्तात् परो यः स्वरितस्तस्य यो यण् ततः परस्यानुदात्तस्य स्वरितत्वमिष्टं स्यात्, तत्र दोषः। तेनानेन सूत्रेण स्वरितत्वं न भवतीति स्थितम्। अनेन हि वार्त्तिकेन—उदात्तात् परो यः स्वरितयण् तस्मात्परस्यानुदात्तस्य स्वरितो भवतीत्येषोऽर्थो न प्रतीयते। तस्मादेतच्च न। यथा **भाष्यं** तथोदात्तस्यानेन स्वरितयणः परस्यानुदात्तस्य स्वरितो न भवतीति सिद्धं भवतीति। **तथेत्यादिनानन्तरमेवार्थं द्रढयति**। **भाष्ये** हि 'स्वरितग्रहणं न करिष्यते' इत्यादिना ग्रन्थेन स्वरितग्रहणासिद्धत्वे सूत्रे प्रत्याख्यायते। एवञ्च तत्प्रत्याख्यानमुपपद्यते, यद्युदात्तात् स्वरितयणः परस्यानुदात्तस्य स्वरितत्वं नेष्यते; अन्यथा तन्निमित्तस्य स्वरितस्येष्टौ सत्यां प्रत्याख्यानमुपपन्नमेव न स्यात्। किं पुनर्भाष्ये

**पदमञ्जरी**

लक्षणो वुञ्। **शाखान्तर इति**। **वृत्तिकार**देशे या शाखा तदपेक्षं शाखान्तरत्वम्। एकशतं ह्यध्वर्युशाखाः, विशेषवचनो वान्तरशब्दः। **यास्ते विश्वा इति**। 'यद्वृत्तान्नित्यम्' इति सन्तीत्यस्य निघातप्रतिषेधः, अग्ने-शब्दस्यामन्त्रितनिघातः। **ब्राह्मण इति**। तत्रैव **तैत्तिरीयके** दधिशब्दः उक्तस्वरः, आशयतीत्यस्य तिङ्-निघातः। ननु चोभयत्राप्यत्र यणादेशे कृते 'उदात्तादनुदात्तस्य स्वरितः' इत्येव स्वरितः, तथा च यत्र स प्रतिषिध्यते 'नोदात्तस्वरितोदयम्' इति, तत्र स्वरितो न दृश्यते च—स्वस्मभ्यमाभर प्रत्यग्निरुषसामग्रमख्यादिति, अयं तु स्वरित उदात्तस्वरितपरस्यापि भवति—दह्याशसो रक्षसः पाह्यस्मानिति। तथा च भाष्येऽप्युदात्तपर एवानुदात्तेति प्रसङ्ग उद्भावितः—दध्याशेति। तस्मात् पूर्वोक्तस्यातिप्रसङ्गः नायं व्यभिचार इति चिन्त्यमेतत्।

निराकरिष्यमाणवत्वाद्वास्य नात्र सुष्ठु निर्बन्धनीयं दर्शयति—**यथा त्विति**। अत्र वार्त्तिकम्—'यण्स्वरो यणादेशे सिद्धो वक्तव्यः', 'स्वरितयणः स्वरितार्थः आश्रयात्सिद्धत्वमिति चेदुदात्तात् स्वरिते दोषः' इति। यदि च 'उदात्तादनुदात्तस्य स्वरितः' इति यः स्वरितः तस्य यो यण् ततः परस्यानुदात्तस्य स्वरितत्वमिस्टं स्याद्, दोषत्वेन वचनणनुपपन्नं स्यात्। **भाष्ये तु** यथायमर्थः स्थितः, तथा दर्शयति—**तथा चेति**। अत्र भाष्यम्—"अथ वा स्वरितग्रहणं न करिष्यते; यदि न क्रियते, केनेदानीं स्वरितयणः परस्यानुदात्तस्य स्वरितत्वं भवति? उदात्तयण इत्येव, स्वरितयणा व्यवहितत्वान्न प्राप्नोति, 'स्वरविधौ व्यञ्जनमविद्य-

**भावबोधिनी**

'यास्ते विश्वाः समिधः सन्त्यग्ने (तै० ३।५।५।३)। इसमें 'अग्ने' यह अकार स्वरित पढ़ा जाता है। इसी प्रकार तैत्तिरीय ब्राह्मण में भी—'दध्याशयति' (तै० ब्रा० १।७।६।५) यह आकार स्वरित पढ़ा जाता है। [ इसका तात्पर्य यह है कि सभी स्वरित सिद्ध रहते हैं। ]

परन्तु जैसा वार्त्तिक और भाष्य [ में देखा जाता है ] उससे—उदात्त से [ परे अनुदात्त के स्थान पर विहित ] स्वरित के स्थान पर यण् से परवर्त्ती अनुदात्त का इस प्रस्तुत सूत्र से स्वरितत्व विधान नहीं किया जाता है—यही स्थित (सिद्धान्त) है। जैसा कि भाष्य में है—'इस स्वरितयण् का प्रत्याख्यान किया जाता है क्योंकि 'सकुल्ल्व्याशा' इत्यादि में उदात्त के स्थान पर यण्—इसी से स्वरित होना सिद्ध है। और स्वरित के यण् का व्यवधान वास्तव में अव्यवधान ही है क्योंकि "स्वरविधान के करने में व्यञ्जन अविद्यमानवद् माना जाता है" ऐसी (परिभाषा) है।

स्थितम्। तथा च भाष्ये स्वरितयण्ग्रहणमिदं प्रत्याख्यायते। 'सकृल्ल्व्याशे'त्येवमादावुदात्तयण इत्येव स्वरितस्य सिद्धत्वात्। स्वरितयण्व्यवधानमव्यवधानमेव, 'स्वरविधौ व्यञ्जनमविद्यमानवत्' ( व्या० प० ३७ ) इति।

तत्तु क्रियते—पूर्वस्मादपि विधौ स्थानिवद्भावाद् व्यवधानमस्ति, स्वरदीर्घयलोपेषु च लोपाजादेशस्य स्थानिवद्भावः प्रतिषिध्यते इति।

उदात्तस्वरितयोरिति किम्? बैदी आशा बैद्याशा। शाङ्र्गरव्याशा। अनुदात्तयणादेशोऽयम्। अनुदात्तस्येति किम्? कुमार्यत्र। कि शो र्योत्र। अत्रेत्ययमाद्युदात्तो लित्स्वरेण॥

**न्यासः**

स्वरितयणो ग्रहणं प्रत्याख्यायते, यावता तस्मिन् प्रत्याख्याते सकृल्ल्व्याशेत्येवमादावनुदात्तस्य स्वरितो न सिध्यति? इत्यत आह—**सकृल्ल्व्याशेत्येवमादावित्यादि।** उदात्तयण पुनरत्रोकारवकारेको यकारः। ननु च योऽसौ सप्तम्येकवचनस्य स्थाने जायते तेन व्यवधानान्न सिध्यति? इत्यत आह—**स्वरितयणित्यादि।** अत्रैव कारणमाह—**स्वरविधावित्यादि।** इतिकरणो हेतौ।

यदि स्वरितग्रहणमन्तरेणापि सिध्यति, कस्मात् सूत्रे तद्ग्रहणं क्रियते? इत्यत आह—**तत्तु क्रियत इत्यादि।** 'अचः परस्मिन् पूर्वविधौ' इत्यस्य हि—पूर्वस्माद् विधौ कर्तव्येऽजादेशः स्थानिवद् भवतीत्येषोऽर्थोऽभिमतः। उदात्तयणः परस्यानुदात्तस्य स्वरितविधौ कर्तव्ये सप्तम्येकवचनस्थाने यो यणादेशस्तस्य स्थानिवद्भावादिकारेण व्यवधानमस्ति; व्यञ्जनस्य स्वरविधावविद्यमानवद्भावात्। तेन व्यवधाने सति सकृल्ल्व्याशेत्यत्र 'उदात्तयणः' इत्येव न सिध्यतीति स्वरितग्रहणं क्रियते। ननु च 'न पदान्तद्विर्वचन' इत्यादिना स्वरविधौ प्रतिसिध्यते स्थानिवद्भावः, तत् कुतो व्यवधानम्? इत्यत आह—**स्वरदीर्घलोपे ष्वित्यादि।** अचो हि लोपादेशो न स्थानिवद् भवतीति वक्तव्यमिति, न चात्राचो लोपादेशः, किं तर्हि? यणादेशः। तस्मान्नास्ति स्थानिवद्भावप्रतिषेधः।

**बैद्याशेति।** बिदस्यापत्यमिति 'अनृष्यानन्तर्ये' इत्यादिना बिदादित्वादञ्, तदन्तात् 'शाङ्र्गरवाद्यञो ङीन्' इति ङीन्। अत्र नित्वादाद्युदात्तत्वे कृते शेषस्यानुदात्तमिति बैद्याशाशब्देऽत्रानुदात्तस्थाने यण्,

**पदमञ्जरी**

मानवत्' इति नास्ति व्यवधानम्" इति। यदि चोदात्तात् स्वरितयणः परस्यानुदात्तस्य स्वरितत्वमिष्टं स्यात् प्रत्याख्यानं न युज्येत। यदि प्रत्याख्यानम्, किमर्थं तर्हि स्वरितयण्ग्रहणं क्रियते? इत्याह—**तत्क्रियत इति। स्थानिवद्भावाद्व्यवधानमस्तीति।** यण्स्थानिकेनेकारेण। व्यञ्जनस्य ह्यविद्यमानद्भावः, नाचः। ननु च

**भावबोधिनी**

[ यदि आवश्यक नहीं है तो पाणिनि ने क्यों किया? ] यह स्वरितयण् का ग्रहण जो किया जाता है वह पूर्ववर्ती से भी [ परवर्ती की ] विधि में स्थानिवद्भाव के कारण व्यवधान हो जाता है। [ भाव यह है कि जिस इक् का यण् करके व्यञ्जन बना कर अविद्यमानवत् माना जाता है, उस यण का स्थानिवद्भाव करके स्वर मान लेने पर उसका व्यवधान ही मानना होगा, [ न पदान्तद्विर्वचन' सूत्र से स्थानिवद्भाव का प्रतिषेध भी नहीं किया जा सकता क्योंकि ] स्वर, दीर्घ और यलोप की विधियों में लोपरूप अजादेश ( अच् के स्थान पर आदेश ) के ही स्थानिवद्भाव का प्रतिषेध होता है। [ यण् तो अच्लोप रूप आदेश नहीं है। अतः स्थानिवद्भाव होने में बाधा नहीं है। अतः पाणिनि द्वारा 'स्वरित यण्' का ग्रहण उचित है। ]

उदात्त और स्वरित के स्थान पर यण्—इसका क्या फल है? बैदी + आशा = बैद्याशा। शाङ्र्गरव्याशा [ शाङ्र्गरवी + आशा ] [ बैदी और शाङ्र्गरवी ये दोनों अञ् प्रत्ययान्त है तथा स्त्रीलिङ्ग में ङीन् = ई नित् प्रत्यय करने से 'ञ्नित्यादिर्नित्यम्' से आद्युदात्त, शेषनिघात से अन्त अनुदात्त है। उसका यण् होने से प्रस्तुत सू नहीं लगता है ] यह अनुदात्त का यण् आदेश है।

**३६९३. एकादेश उदात्तेनोदात्तः ॥ ५ ॥ (३६५८)**

उदात्तेन सहानुदात्तस्य य एकादेशः स उदात्तो भवति । 'अनुदात्तस्य' इति वर्तते । अ॒ग्नी । वा॒यू । वृ॒क्षैः । प्ल॒क्षैः ।

उदात्तेनेति किम् ? पच॑न्ति । यज॑न्ति । लसार्वधातुकानुदात्तत्वे कृते द्वयोरनुदात्तयोरयमेकादेशः; पररूपे कर्तव्ये स्वरितस्यासिद्धत्वात् ॥

**३६९४. स्वरितो वाऽनुदात्ते पदादौ ॥ ६ ॥**

अनुदात्ते पदादौ उदात्तेन सह य एकादेशः स स्वरितो वा भवत्युदात्तो वा । सु+उत्थितः=सू॑त्थितः

**न्यासः**

नोदात्तस्य, नापि स्वरितस्य । अत्रेति । अयमाद्युदात्तो लित्स्वरेणेति; 'सप्तम्यास्त्रल्' इति त्रल्प्रत्ययान्तत्वात् । 'हलि लोपः' इतीद्रूपस्य लोपः ॥ ४ ॥

**एकादेश उदात्तेनोदात्तः ॥ अनुदात्तस्येति ।** उदात्तेन सहानुदात्तस्य यस्मिन्नेकादेशः स उदात्तः स्यात्, न तु स्वरितः । स्वरिते प्राप्त इदमारभ्यते । उदाहरणेष्वग्निप्रभृतयः प्रातिपदिकस्वरेणान्तोदात्ताः । विभक्तिस्तु 'अनुदात्तौ सुप्पितौ' इत्यनुदात्ता । **अग्नी, वायू इति ।** 'प्रथमयोः पूर्वसवर्णः' इति दीर्घः । **वृक्षौ, प्लक्षाविति ।** 'वृद्धिरेचि' इति वृद्धिः ।

**पचन्ति, यजन्तीति ।** 'अतो गुणे' पररूपत्वम् । **द्वयोरनुदात्तयोरमेकादेश इति ।** ननु च 'उदात्तादनुदात्तस्य स्वरितः' इति शबकारस्य स्वरितत्वे कृते स्वरितानुदात्तयोरयमेकादेशः, तत् कथं द्वयोरनुदात्तयोरिति ? एवमाह—**पररूपे कर्त्तव्ये स्वरितस्यासिद्धत्वात्** ॥ ५ ॥

**स्वरितो वानुदात्ते पदादौ ॥ सूत्थित इति ।** 'कुगतिप्रादयः' इति समासः । **अत्र सुशब्दः कर्मप्रवच-**

**पदमञ्जरी**

'**न पदान्तद्विर्वचन**' इति स्वरविधौ प्रतिषिद्धः स्थानिवद्भावः ? तत्राह—**स्वरदीर्घेति । बैदाशेति ।** बिदस्यापत्यं स्त्री 'अनृष्यानन्तर्ये विदादिभ्योऽञ्', शार्ङ्गरवाद्यञो ङीन्', नित्स्वरेणाद्युदात्तो बैदीशब्दः ॥ ४ ॥

**एकादेश उदात्तेनोदात्तः ॥** 'अनुदात्तस्य' इति वर्त्तते । अग्न्यादिशब्दाः प्रातिपदिकस्वरेणान्तोदात्ताः, विभक्तिरनुदात्ता ।

**पचन्तीति ।** अत्र शबकारस्य यत्स्वरितत्वम् 'उदात्तादनुदात्तस्य स्वरितः' इति, तस्यासिद्धत्वाद् द्वयोरनुदात्तयोरेकादेशः ॥ ५ ॥

**स्वरितो वानुदात्ते पदादौ ॥ प्रादित्वात्समासे सतीति ।** 'प्रादिप्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधः'

**भावबोधिनी**

अनुदात्त का स्वरित होता है—इसका क्या फल है ? कुमार्यत्र, किशोर्यत्र । 'अत्र' यह शब्द लित् स्वर से आद्युदात्त है । [ त्रल् प्रत्यय होता है । अतः इस 'अ' का स्वरित नहीं होता है । ] ॥ ४ ॥

उदात्त के साथ अनुदात्त का जो एक आदेश होता है वह उदात्त होता है । इसमें अनुदात्त का' इसकी अनुवृत्ति होती है । उदा० अग्नी । बायू । वृक्षैः । प्लक्षैः । [ अग्नि + औ, वायु + औ, प्रातिपदिक अन्तोदात्त है और विभक्ति अनुदात्त है । दोनों के स्थान पर 'प्रथमयोः पूर्वसवर्ण' सूत्र से पूर्वसवर्णदीर्घ' रूप एक आदेश होने पर 'ई' 'ऊ' उदात्त होता है । वृक्ष + ऐस्, प्लक्ष + ऐस् में भी उदात्त के स्थान पर 'वृद्धि' रूप एकादेश उदात्त होता है । ]

उदात्त के साथ—इसका क्या फल है ? पचन्ति । यजन्ति । [ पच् + अ + अन्ति, यज् + अ + अन्ति ] पररूप की कर्तव्यता में [ शप् के अकार के ] स्वरितत्व के असिद्ध होने के कारण ल सार्वधातुक का अनुदात्तत्व कर देने पर [ अ + अन्ति ] दोनों अनुदात्तों का यह एक आदेश होता है । [ अतःपहले शप् के स्वरित अ के साथ और असिद्धत्व होने पर अनुदात्त के साथ अनुदात्त का एकादेश है । अतः उदात्त नहीं होता है । ] ॥ ५ ॥

पदादि अनुदात्त के परे रहते उदात्त के साथ जो एकादेश होता है वह विकल्प से स्वरित होता है अथवा

सू॑स्थितः। वि + ईक्षते = वीक्षते वी॑क्षते। वसुकः + असि = वसुकोऽसि वसुको॑ऽसि।

सूत्थित इति—सुशब्दः 'सुः पूजायाम्' (१।४।९४) इति कर्मप्रवचनीयः, तस्य प्रादित्वात्समासे सति अव्ययपूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तः; शेषमनुदात्तमिति चानुदात्ते पदादावेकादेशो भवति।

वीक्षते, वसुकोऽसीति—अत्रापि 'तिङ्ङतिङः' (८।१।२७) इति निघाते कृतेऽनुदात्ते पदादावेकादेशः।

स्वरितग्रहणं विस्पष्टार्थम्। उदात्ते हि विकल्पिते तस्मिन्नसत्यान्तर्यत एव स्वरितो भविष्यतीति।

**न्यासः**

**नीय इति**। अनेन सुशब्दस्य गतित्वमपनयति। गतित्वे हि सति 'गतिर्गतौ' इति निघातः स्यात्, ततश्चोदात्तेनानुदात्तस्यायमेकादेशो न स्यात्। **प्रादि समास इत्यादि**। सुशब्द आद्युदात्तः। तत्र हि प्रादिसमासे कृते 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदप्रकृतिस्वरत्वादाद्युदात्तत्वं भवति। अतस्तेन प्रकृतिस्वरत्वेन हेतुनायमादेशः; यतोऽकः सवर्णदीर्घत्वमनुदात्ते पदादौ भवति। सुशब्दस्य ह्याद्युदात्तस्य प्रकृति स्वरत्वे सति शेषस्यानुदात्तभावोपपत्तेः। 'ननु प्रादिसमासे (प्रसङ्गे) कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः' इत्युक्तम्, तत् कथमिह प्रादिसमासः? नैष दोषः; तस्य प्रतिषेधस्यानित्यत्वात्। अनित्यत्वं तु सुशब्दस्य सुषामादिषु प्रयोगाद् विज्ञेयम्। तस्य हि तत्र 'उपसर्गात् सुनोति' इत्यादिनैव सिद्धेऽनुपसर्गार्थः पाठः। अनुपसर्गत्वं च सोः 'सुः पूजायाम्' इति कर्मप्रवचनीयत्वात्। अथ वा—स्वतिभ्यामन्ये ये प्रादयस्तत्रायं प्रतिषेधः। तथा हि तत्र 'स्वती पूजायाम्' इति पूजायां स्वतिशब्दयोः प्रादिसमास उक्तः, पूजायाञ्च तयोः कर्मप्रवचनीयत्वं विवक्षितम्।

**वीक्षते इति**। विशब्दो निपातस्वरेणाद्युदात्तः। अत्रापि 'तिङ्ङतिङः' इति निघाते कृत एकादेश इत्यनुदात्ते पदादौ भवतीति सम्बन्धनीयम्। **वसुकोऽसीति**। वसुशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, ततः सुप्रत्ययान्तत्वात् कस्य ह्यसिशब्दे परतः 'अतो रोरप्लुतादप्लुते' इत्युत्वम्, तस्य स्थानिवद्भावेन सुप्त्वादनुदात्तत्वम्; पूर्वेण सह 'आद् गुणः', स च पूर्वसूत्रेणान्तोदात्तः। असीति—'तासस्त्योर्लोपः' इति सकारलोपे कृते लटि सिपि रूपम्। अत्र 'तिङ्ङतिङः' इति निघातेनाकारोऽनुदात्तः, तस्याकारेण सह 'एङः पदान्तादति' इति परपूर्वत्वम्। **स्वरितग्रहणमित्यादि**। कथं पुनरसति स्वरितग्रहणे स्वरित आदेशो भवति, पुनः स्वरित-

**पदमञ्जरी**

इत्यस्य तु तत्रैव 'स्वती पूजायाम्' इति प्रतिषेधः कृतः। गतिसमासस्त्वनाश्रितः; 'गतिर्गतौ' इति निघातप्रसङ्गात्। वसुकशब्दः पूर्ववदन्तोदात्तः।

**स्वरितग्रहणं विस्पष्टार्थमिति**। कथम्? इत्याह—**उदात्ते हीति। आन्तर्यत एव स्वरितो भविष्यतीति**। यद्येवम्, तस्य सिद्धत्वाच्छेषनिघातः स्यात्—गाङ्गेऽनूप इति? एकादेशस्य परं प्रत्यादिवद्भावादनूपशब्दोऽनुदात्तः प्राप्नोति, स्वरितग्रहणे तु सति अस्यासिद्धत्वाद्यथोक्तदोषाभावः। अथ क्रियमाणेऽपि स्वरितग्रहणे यः सिद्धः स्वरितः तेन वर्ज्यमानता कस्मान्न भवति—कन्यानूप इति? कन्याशब्दः 'कन्या-

**भावबोधिनी**

उदात्त होता है। उदा० सु + उत्थितः = सू॑त्थितः, सूत्थितः। वि + ईक्षते = वी॑क्षते, वीक्षते। वसुकः + असि = वसुको॑ऽस्ति, वसुकोऽस्ति।

सूत्थितः—इसमें 'सु' शब्द 'सुःपूजायाम्' सूत्र से कर्मप्रवचनीय है, इस [ कुगतिप्रादयः' सूत्र से ] प्रादि होनेसे समास करने पर 'अव्ययपूर्वपद के प्रकृतिस्वर से अर्थात् 'तत्पुरुषे तुल्यार्थ' (६।२।२) सूत्र से पूर्वपद अव्यय का प्रकृतिस्वर होने पर आद्युदात्त होता है, फलतः शेषनिघात से शेष का अनुदात्त होता है, इसलिये अनुदात्त पदादि परे एकादेश होता है। [ इसका स्वरित होता है। पक्ष में पूर्वसूत्र से उदात्त भी होता है। अधिकांश संस्करणों में एक ही रूप दिया गया है वह भ्रामक है क्योंकि एक स्वरित वाला और दूसरा उदात्त वाला होने से दो दो रूप ही लिखने चाहिये। ]

अनुदात्त इति किम् ? देवदत्तोऽत्र । पदादाविति किम् ? वृक्षौ । वृक्षाः ॥

**३६९५. नलोपः प्रातिपदिकान्तस्य ॥ ७ ॥ (३५३)**

**'पदस्य'** इति वर्तते । प्रातिपदिकस्य पदस्य योऽन्त्यो नकारस्तस्य लोपो भवति । राजा । राजभ्याम् । राजभिः । राजता । राजतरः । राजतमः ।

प्रातिपदिकग्रहणं किम् ? अहन्नहिम् । अन्तग्रहणं किम् ? राजानौ, राजनः । प्रातिपदिकग्रहणमसमस्तमेव 'सुपां सुलुक्' ( ७।१।३८ ) इति षष्ठ्या लुका निर्दिष्टम् ।

**न्यासः**

ग्रहणं विस्पष्टार्थम्, न पुनः पक्षे स्वरितविधानार्थम् ? इत्यत आह—उदात्ते हीत्यादि । उदात्ते हि विकल्पिते यस्मिन् पक्षे स न भवति तस्मिन्नुदात्तानुदात्तयोरन्तरतमो यस्तेनैव भवितव्यम्, स च स्वरित एव । अतोऽन्तरेणापि स्वरितग्रहणं स्वरित एव भविष्यति ॥ ६ ॥

**नलोपः प्रातिपदिकान्तस्य ॥ प्रातिपदिकस्येति, पदस्येति**—समानाधिकरणे षष्ठ्यौ ।

**अहन्नहिमिति** । हन्तेर्लङ्, तिप्, हल्ङ्यादिलोपः, अदादित्वाच्छपो लुक् । 'अधातुः' इति प्रतिषेधादिह प्रादिपदिकत्वं नास्ति । **राजा, राजानौ, राजन इति** । असर्वनामस्थाने पदसंज्ञाप्रतिषेधादिह प्रातिपदिकस्यावयवोऽन्तो नकारो भवति । **प्रातिपदिकान्तस्येति** । षष्ठीतत्पुरुषेऽत्रोत्तरपदप्रधानत्वादस्यैव पदस्य

**पदमञ्जरी**

राजन्यमनुष्याणामन्तः' इत्यन्तस्वरितः, ततः स्वरितानुदात्तयोरेकादेश आन्तर्यतः स्वरितः, तस्य सिद्धत्वात्तेन वर्ज्यमानता प्राप्नोति ? ततश्चात्र यः परिहारः, य एव गाङ्गेऽनूप इत्यत्र भविष्यति । कः पुनरसौ ? पदद्वयाश्रयत्वेन एकादेशस्य बहिरङ्गत्वात्स्वरोऽपि तदीयो बहिरङ्गः, शेषनिघातस्तु एकपदाश्रयत्वात् स्वरोऽपि तदीयोऽन्तरङ्गः; ततः किम् ? 'असिद्धं बहिरङ्गमन्तरङ्गे' ॥ ६ ॥

**नलोपः प्रातिपदिकान्तस्य ॥**

विशेष्यमन्तस्येत्यस्य नेत्येतयदविभक्तिकम् ।
तथैव प्रातिपदिकेत्येतत् पदविशेषणम् ॥

**प्रातिपदिकस्य, पदस्य**—इति समानाधिकरणे षष्ठ्यौ । **अहन्निति** । हन्तेर्लङ्तिपो हल्ङ्यादिलोपः ।

**भावबोधिनी**

वीक्षते और वसुकोऽसि—इनमें [ वि इससे परे तिङन्त का और वसुकः से परे 'असि' तिङन्त का ] 'तिङ्ङतिङः' सूत्र से निघात होने से अनुदात्त पदादि परे रहते एकादेश होता है । [ यह स्वरित और पक्ष में उदात्त होता है । ]

[ सूत्र में ] स्वरित का ग्रहण केवल स्पष्टता के लिये है । क्योंकि उदात्त का विकल्प होने पर आन्तर्य के कारण ही स्वरित होगा । [ अतः सिद्ध का उल्लेख केवल स्पष्टतार्थ है । ]

अनुदात्त परे—इसका क्या फल है ? देवदत्तोऽत्र । [ 'अत्र' शब्द लित् स्वर से अनुदात्त है । अतः स्वरित नहीं होता है केवल उदात्त ही होता है । ] पदादि में—इसका क्या फल है ? वृक्षौः । वृक्षाः । [ वृक्ष + औ, वृक्ष + अस् में अनुदात्त परे किन्तुपद के आदि में नहीं अपि तु पद के मध्य में हैं । ] ॥ ६ ॥

'पद का' इसकी अनुवृत्ति होती है । प्रातिपदिक पद का जो अन्त्य नकार उसका लोप होता है । उदा० राजा । राजभ्याम् । राजभिः राजता । राजवरः । राजतमः । [ इनमें प्रथम में 'सुप्तिङन्तम्' सूत्र से और शेष में 'स्वादिष्वसर्वनामस्थाने' सूत्र से पद संज्ञा होती है । तब अन्त्य न् का लोप होता है । ]

प्रातिपदिक—इसका क्या फल है ? अहन् अहिम् । [ अहन् = हतवान् यह लङ्लकार प्रथमपुरुष एकवचन का धातुरूप है । न् लोप नहीं होता है । ]

**॥ अह्नो नलोपप्रतिषेधो वक्तव्यः ॥ ( म० भा० ) । अहः । अहोभ्याम् । अहोभिः ।**

**'रोऽसुपि' ( ८।२।६९ ), 'अहन्' ( ८।२।६८ )—इति रेफरुत्वयोरसिद्धत्वाद् नलोपः प्राप्नोति,**

**न्यासः**

तद्विशेषणं युक्तम्, न तु गुणभूतस्य । प्रातिपदिकेनान्तशब्देन चात्र नकारो विशेषितः, स च नकारः प्रातिपदिकस्यान्तर्भूतः । **पदस्येति** । अनिष्टयोरपि व्यधिकरणयोः पदप्रातिपदिकान्तयोर्विशेषणविशेष्यभावेन भवितव्यम्—प्रातिपदिकान्तस्येति, पदस्येति । पदस्य योऽवयवः सोऽपि प्रातिपदिकस्येत्यर्थः । एवञ्च सति क्रियमाणेऽप्यन्तग्रहणे राजानौ, राजान इत्यत्र प्राप्नोत्येव नलोपः, भवति ह्यत्रापि पदावयवः प्रातिपदिकस्यान्तो नकारः ?—इत्येतच्चोद्यमपाकर्तुमाह—**प्रातिपदिकग्रहणसमस्तमेवेति** । ततश्च तस्य 'पदस्य' इत्येतत् सामानाधिकरणविशेषणं युक्तमेवेत्यभिप्रायः । यदि तर्ह्यसमस्तमेव प्रातिपदिकग्रहणं षष्ठ्याश्रयणं प्राप्नोतीत्यभिप्रायः ? इत्यत आह—**सुपा सुलुगिति** । अनेन यत् षष्ठ्या लुक् तेन लुका निर्दिष्टं प्रातिपदिकग्रहणम्, अतो न भवति षष्ठ्याः प्रसङ्गः ।

**अहरिति** । 'स्वमोर्नपुंसकात्' इति सोर्लुक्, 'रोऽसुपि' इति नकारस्य रेफः । प्रत्ययलक्षणेनाह्नः सुप्परता नास्ति; 'लुमता लुप्ते प्रत्ययलक्षणं नास्ति' इति वचनात् । **अहोभ्याम्, अहोभिरिति** । 'अहन्' इति रुत्वम्, 'हशि च' इत्युत्वम्, 'आद् गुणः' । ननु च प्राप्तिपूर्वकः प्रतिषेधो भवति, इह च रेफरुत्वयोः कृतयोर्नलोपस्य प्राप्तिरेव नास्ति, नकाराभावात्, तत् किं प्रतिषेधेन ? इत्यत आह—**अहन् रोऽसुपीति** आदिश्येते । तद्रेफो रुत्वञ्च द्वयमप्येतदनवकाशम्, अतो लोपो न भवति; अन्यथा हि तयोर्विधानमनर्थकं स्यादित्यत आह—**सावकाशमित्यादि** । सम्बुद्धौ हि लोपो न; 'न ङिसम्बुद्ध्योः' इति प्रतिषेधात् । अतस्तत्रोभयमप्येतत् सावकाशम् । **हे दीर्घाहो निदाघेति** । दीर्घाण्यहानि यस्मिन्निदाघ इति बहुव्रीहिः, तत्सम्बुद्धिः, हल्ङ्यादिलोपः । सत्यपि लोपे प्रत्ययलक्षणेन सुप्परतास्तीति 'रोऽसुपि' इत्येतन्न प्रवर्त्तते, 'अहन्' इति रुत्वमेव भवति ।

**पदमञ्जरी**

**अन्तग्रहणं किमिति** । 'नलोपः प्रातिपदिकस्य' इत्येवास्तु, 'पदस्य' इति वर्तते, तत्र नकारेण पदे विशेष्यमाणे तदन्तविधिना नकारान्तस्य पदस्य लोपो विधीयमानः 'अलोऽन्त्यस्य' इत्यन्त्यस्यैव भविष्यतीति प्रश्नः । **राजानाविति** । असत्यन्तग्रहणे प्रातिपदिकस्य पदस्य योऽवयवो नकारः, तस्य यत्र तत्र स्थितस्य लोपो भवतीत्यर्थः स्यात्, ततश्चेहापि स्यादिति भावः । एवं च नराभ्यामित्यादावपि प्रसङ्गो दर्शयितव्यः । ननु च क्रियमाणमप्यन्तग्रहणं प्रातिपदिकग्रहणेन समस्तम्, ततश्च प्रातिपदिकान्तस्य पदावयवस्य नकारस्येत्येषोऽर्थो भवति, न पुनः पदान्तस्येति; ततश्चाहन्, नराभ्यामित्यादौ मा भूत्; राजानावित्यादौ तु स्यादेव ? अत आह—**प्रातिपदिकग्रहणमिति** ।

**अहरिति** । 'स्वमोर्नपुंसकात्' इति स्वमोर्लुक्, 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधात्सुप्परत्वाभावात् 'रोऽसुपि' इति रुत्वम् । **अहोभ्यामिति** । 'अहन्' इति रुत्वम् ।

**भावबोधिनी**

अन्त ग्रहण—क्यों है ? राजानौ, राजानः [ यहाँ भी न लोप होने लगता । जब प्रातिपदिक पद के अन्त्य न का लोप माना गया तब मध्यवर्ती का लोप नहीं होता है । ] सूत्र में—'प्रातिपदिक' असमास वाला है क्योंकि 'सुपां 'सुलुक्' सूत्र से षष्ठी का लुक् से निर्देश है । अतः 'प्रातिपदिकस्य पदस्य अन्तस्य नलोपः' ऐसा अन्वय बनाकर अर्थ करने पर अव्याप्ति और अतिव्याप्ति का कारण करना चाहिये । ]

॥ अहन् के नलोप का प्रतिषेध कहना चाहिये । ॥ उदा० अहः । अहोभ्याम् । अहोभिः । इनमें 'रोऽसुपि' 'अहन्' सूत्रों से न् का र्, रु और विसर्ग होता है । यदि लोप किया जाता तो उक्त रूप नहीं बन सकते थे । ]

इन उदा० में 'रोऽसुपि' ( ८।२।६९ ) और 'अहन्' ( ८।२।६८ ) से किये गये रेफ और रुत्व के असिद्ध हो

सावकाशं तदुभयं सम्बुद्धौ—हेऽहः, हे दीर्घाहो निदाघेति ? तत्र समाधिमाहुः—अहन्निति रुविधौ यदुपादीयते प्रथमैकवचनान्तमकृतलोपं तदावर्त्यते, तत्रैकयाऽऽवृत्त्या तदेव रूपं नलोपाभावार्थमन्वाख्यायते, द्वितीययापि तस्य रुर्विधीयते ॥

### ३६९६. न ङिसम्बुद्ध्योः ॥ ८ ॥ (३५२)

ङौ परतः सम्बुद्धौ च नकारलोपो न भवति। आर्द्रे चर्मन् (तै० ७।५।९३)। लोहिते चर्मन्

**न्यासः**

अहन्निति। प्रथमैकवचनान्तमित्यादि। तत्र 'अहन्' इति रुत्वविधौ यदुपादीयते तदावर्त्तते—इत्येतावति वक्तव्ये 'अहन्' इत्येतेन सूत्रेण केवलं रुत्वमादेशो न विधीयते, अपि त्वावृत्तिन्यायादहन्नित्येतच्छब्दरूपमन्वाख्यायते—इत्यत्रोपपत्तिप्रदर्शनार्थम्, 'प्रथमैकवचनान्तमकृतनलोपम्' इत्युक्तम्। यदि ह्यादेशमात्रमहन्नित्यनेन विधीयते, तदादेशसम्बन्धे षष्ठ्या भवितव्यमिति षष्ठ्युपादीयेत, न प्रथमा। प्रथमया ह्युपादीयमानं कृतनकारलोपमुपादीयेत, नकारलोपलक्षणस्य भावात्; न चैवं कृतम्, तस्मात् प्रथमान्तस्याकृतनकारलोपस्योपादानादवसीयते—अहन्निति रूपस्यान्वाख्यानं क्रियत इति। अन्वाख्यायते = साधुत्वेन प्रतिपाद्यत इत्यर्थः। किमर्थम्? नलोपाभावार्थम्। 'नलोपः प्रातिपदिकान्तस्य' इत्यनेन लोपा मा भूदित्येवमर्थम् ॥ ७ ॥

न ङिसम्बुद्ध्योः ॥ चर्मन्निति। 'सुपां सुलुक्' इति ङेर्लुक्, ननु च सुराजन्निति प्रातिपदिकसंज्ञा

**पदमञ्जरी**

ननु चात्र रत्वरुत्वयोः कृतयोर्नकाराभावादेव नलोपो न भविष्यत्यत आह—रुत्वरेफयोरसिद्धत्वादिति। नन्वनवकाशत्वाद्रत्वरुत्वे एव भविष्यतः, उक्तं ह्यपवादस्य परस्यापि वचनप्रामाण्यादसिद्धत्वं न भवतीति ? अत आह—सावकाशं वै तदुभयमिति। सम्बुद्धौ हि 'न ङिसंबुद्ध्योः' इति नलोपः प्रतिषिद्ध्यते। हे अहरिति। 'वा नपुंसकानाम्' इति पक्षे नलोपप्रतिषेधः, अत्र रत्वं सावकाशम्। हे दीर्घाहो निदाघेति। पुंल्लिङ्गेऽन्यपदार्थे बहुव्रीहिः, सम्बुद्धिर्हल्ङ्यादिलोपः। निदाघशब्दस्य परस्य प्रयोगो विशेषणार्थः, 'हशि च' इत्युत्वम्। अथ अहः, अहोभ्यामित्यादौ नलोपेकृतेऽप्येकदेशविकृतस्यानन्यत्वात्स एवाहः शब्द इत्यवशिष्टस्य योऽन्त्याकारः सोऽवकाश इति कस्मान्नोक्तम्? एवं मन्यते—अहन्निति नकारापरित्यागेन निर्देशान्नकारान्तस्यैव स्थानित्वम्, अन्यथा ह्रस्वेत्येव ब्रूयादिति। अहन्निति प्रथमैकवचनान्तमिति। आदेशमात्रे विधित्सिते अह्न इति नकारान्तस्यैव षष्ठ्या निर्देशं कुर्यात्; प्रथमान्तस्य निर्देशे प्रयोजनम्—एतस्य रूपस्यान्वाख्यानमेवेति भावः ॥ ७ ॥

न ङिसम्बुद्ध्योः ॥ आर्द्रे चर्मन्निति। 'सुपां सुलुक्' इत्यादिना ङेर्लुक्।

**भावबोधिनी**

जाने से न लोप प्राप्त होता है क्योंकि ये दोनों सूत्र—हेऽहः, हे दीर्घाहो निदाघा' इनमें चरितार्थ हो चुके हैं ? अब अब उत्तर दे रहे हैं—रुत्व के विधान में 'अहन्' ऐसा जो सूत्र लिखा गया है—प्रथमा एकवचनान्त नलोप न किया गया। उस 'अहन्' की एक आवृत्ति द्वारा वहीं 'अहन्' ऐसा रूप नलोप के अभाव का अन्वाख्यान करने के लिये है। द्वितीय आवृत्ति द्वारा उसका रु विधान किया जाता है।

विमर्श—'अहन्' यह सूत्र न का रुत्व करता है। यदि केवल स्थानी और आदेश ही करना होता तो षष्ठी निर्देश करके 'अह्नः' या 'अहः' ऐसा किया जाता किन्तु ऐसा न करके जो प्रथमान्त रूप लिखा गया उसका फल है—प्रथमा एकवचनान्त बिना नलोप वाला ही रहता है। सूत्र की आवृत्ति करते हैं। दूसरी आवृत्ति के सूत्र का अर्थ होगा—अहन् के न् का रु होता है। इससे यही निष्कर्ष निकलता है कि वार्तिक की आवश्यकता नहीं है ॥ ७ ॥

ङि और सम्बुद्धि [ सम्बोधन एकवचन ] परे रहते नकार का लोप नहीं होता है। उदा० आर्द्रे चर्मन्। लोहिते चर्मन्। इन वैदिक उदा० में 'सुपां सुलुक्' सूत्र से ङि का लुक् होता है। प्रत्ययलक्षण से परे मान कर न् का

( का० २४१२ ) । 'सुपां सुलुक्' (७।१।३९) इति ङेर्लुक् । सम्बुद्धौ—हे राजन् । हे तक्षन् ।

**एतस्मादेव नलोपप्रतिषेधवचनाद् 'अप्रत्ययः' (१।२।४५) इति प्रत्ययलक्षणेन प्रातिपदिकसंज्ञा न प्रतिषिध्यते—इति ज्ञाप्यते; भसंज्ञा च न भवतीति । तथा च—राज्ञः पुरुषो राजपुरुष इत्यत्र नलोपश्च भवति, अल्लोपश्च न भवति ।**

**न्यासः**

हि विद्यते, प्रत्ययलक्षणेन 'अप्रत्ययः' इति न प्रतिषेधात् । **आर्द्रे चर्मन्निति ।** अत्र तु न केवलं प्रातिपदिकसंज्ञा पूर्वोक्तादेव हेतोर्नास्ति; प्रत्ययलक्षणेन प्रवृत्तया भसंज्ञया बाधितत्वात् । अतो नलोपप्राप्तिर्नास्त्येवेत्यर्थः ।

कथं प्रतिषेधः ? इत्यत आह—**एतस्मादेवेत्यादिना । भसंज्ञा च न भवतीति ।** अत्राप्येतस्मादेव प्रतिषेधवचनात् प्रत्ययलक्षणेन च ज्ञाप्यत इति सम्बध्यते । **तथा चेत्यादिना ।** ज्ञापनप्रयोजनं दर्शयति । तदेवमेतस्मात् प्रतिषेधादर्थद्वयं ज्ञाप्यते । एवञ्च कृत्वा—राजपुरुष इत्यत्र प्रातिपदिकसंज्ञायां सत्यां नलोपश्च भवति । भसंज्ञायामसत्याम् 'अल्लोपोऽनः' इत्यल्लोपश्च न भवति । न भसंज्ञाभावश्चेत्यस्येह 'यथोद्देशं संज्ञापरिभाषायाम्' इत्यस्मिन्दर्शने प्रयोजनं वेदितव्यम् । 'कार्यकालं हि संज्ञापरिभाषम्' इत्यस्मिन्दर्शने भसंज्ञायामङ्गकार्यं भवतीति 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधादेव भसंज्ञाया न भवतीति नार्थस्तत्र भसंज्ञाया अभावज्ञापनेन ।

**पदमञ्जरी**

ननु च ङिसम्बुद्ध्योर्द्वयोरपि लुप्तयोः पूर्वस्य प्रातिपदिकसंज्ञा नास्ति, प्रत्ययलक्षणेनाप्रत्यय इति निषेधात्; ङौ तु पदसंज्ञापि नास्ति, प्रत्ययलक्षणेनैव प्रवृत्तया भसंज्ञया बाधितत्वात्; तत्कुतोऽत्र नलोपप्रसङ्गः ? अत आह—**एतस्मादेवेति ।** ननु च हे सुराजन्नित्याद्यर्थमेतत्स्याद्, अत्र हि 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकसंज्ञा, न च तस्या अपि 'अप्रत्ययः' इति निषेधः, सूत्रान्तर्गतत्वात् ? एवं तर्ह्यत्रापि 'अप्रत्ययः' इत्यनुवर्त्तते, अन्यथा सुराजेत्यादौ विध्यर्थत्वसम्भवात् समासग्रहणं नियमार्थं न स्यात् । तस्मादुपपन्नमेवास्य ज्ञापकत्वम् । एतच्च प्रतिकार्यं संज्ञाप्रवृत्तिरिति पक्षाश्रयेणोच्यते, तत्र हि विभक्त्यर्थमुत्पन्नया प्रातिपदिक-संज्ञया नलोपो न प्राप्नोति । **भसंज्ञा च न भवतीति ।** अत्रापि 'एतस्मादेव प्रतिषेधवचनात्प्रत्ययलक्षणेन ज्ञाप्यते'—इति च सम्बध्यते । ज्ञापनस्य प्रयोजनमाह—**तथा चेति । नलोपश्च भवतीति ।** प्रातिपदिकत्वात् । **अल्लोपश्च न भवतीति ।** भसंज्ञाया अभावात् । अपर आह—"नायमर्थो ज्ञापकसाध्यः भसंज्ञा न भवतीति । कथम् ? 'यचि' इत्युच्यते, न चात्र यजादिं पश्यामः; प्रत्ययलक्षणेन ? 'न लुमताङ्गस्य' इति प्रतिषेधः, तत्र हि लुमता लुप्ते प्रत्यये यदङ्गं तस्य यत्कार्यमाङ्गमनाङ्गं वा तत्सर्वं प्रतिषिध्यते" इति ।

**भावबोधिनी**

लोप नहीं होता है । ] सम्बुद्धि परे का उदा० हे राजन् ! हे तक्षन् [ यहाँ सुलोप के बाद नलोप प्राप्त है । इस सूत्र से निषेध होता है । ]

[ इन उदा० में ङि तथा सम्बुद्धि दोनों का लोप हो जाने पर पूर्व की प्रातिपदिक संज्ञा नहीं होगी क्योंकि प्रत्ययलक्षण से प्राप्त होने वाली भ संज्ञा द्वारा उसका बाध हो जाता है । तब लोप की प्राप्ति ही नहीं है, निषेध करना व्यर्थ है ? इस शंका का समाधान है— ] इसी नलोप के प्रतिषेध के कारण ही 'अप्रत्ययः' यह प्रत्ययलक्षण से प्रातिपदिक संज्ञा का प्रतिषेध नहीं होता है अर्थात् प्रत्ययलक्षण से प्रत्ययान्त मान कर 'अप्रत्ययः' इस पर्युदास की प्रवृत्ति नहीं होती है—यह ज्ञापित होता है और [ प्रत्ययलक्षण से ] भ संज्ञा नहीं होती है । इसी कारण 'राज्ञः पुरुषः' 'राजपुरुषः' इसमें नलोप होता है और अ लोप नहीं होता है । [ भाव यह है प्रत्ययलक्षण से प्रातिपदिक संज्ञा तो होती है जिससे राजन् को प्रातिपदिक मान कर उसके अन्त्य न् का लोप होता है । किन्तु प्रत्ययलक्षण से भ संज्ञा नहीं होती है जिसके कारण 'अल्लोपोऽनः' सूत्र से राजन् के अ का लोप नहीं होता है । ]

❀ ङावुत्तरपदे प्रतिषेधस्य प्रतिषेधो वक्तव्यः ❀ ( म० भा० ) चर्मणि तिला अस्य चर्मतिलः। हे राजन् वृन्दारक—इत्यत्र समुदायार्थसम्बोधनम्, न पूर्वपदार्थसम्बोधनं प्रतीयत इति सम्बुद्ध्यन्तं पूर्वपदं नैव समस्यते।

**न्यासः**

ङावुत्तरपद इत्यादिनायं ङौ परतो नलोपप्रतिषेधस्य प्रतिषेध उक्तः। तस्योत्तरपदे परतो यो ङिस्तत्र प्रतिषेधो वक्तव्यः। वक्तव्य इति व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—'स्वरितो वानुदात्ते पदादौ' इत्यतः 'वा' इत्यनुवर्तते, सा च व्यवस्थितविभाषा, तेन ङावुत्तरपदे न भविष्यतीति। चर्मणि तिला अस्य चर्मतिल इति। वैयधिकरण्येऽपि गमकत्वात् समासः। ननु चात्यल्पमिदमुच्यते—ङावुत्तरपदे प्रतिषेधो वक्तव्य एव; अन्यथा हि हे राजन् वृन्दारकेति विगृह्य 'वृन्दारकनागकुञ्जरैः' इति समासे कृते हे राजन् वृन्दारकेत्यत्र नलोपो न स्यात्—हे राजन् वृन्दारकेत्यत आह—हे राजवृन्दारकेत्यत्र त्विवत्यादि। समानार्थेन वाक्येन समासेन भवितव्यम्, एवं हि सामर्थ्यं भवति, नान्यथा। तथा चोक्तम्—ग्रहणवाक्यार्थाभिधाने यः शक्तः स समर्थो वेदितव्य इति। यश्चेहार्थो हे राजन् वृन्दारकेति वाक्येन गम्यते, स न ज्ञायते—हे राजवृन्दारकेति समासेन। वाक्येन ह्येकार्थीभावाभावात् सम्बोधनं गम्यते, समासे तु विपर्ययात् समुदायार्थः सम्बोधनम्। तस्माद्राजा चासौ वृन्दारकश्चेत्येव विगृह्य समासः कर्तव्यः, ततः सम्बुद्धिः, एवञ्च सम्बुद्ध्यन्तं पूर्वपदम्। हे राजन् वृन्दारकेत्यत्र समासो भविष्यत्येव; ततश्चोत्तरपदे परतः सम्बुद्धेरभावान्नलोपप्रतिषेधस्य प्राप्तिरेव नास्तीति नार्थस्तत्प्रतिषेधेन।

**पदमञ्जरी**

चर्मतिल इति। वैयाधिकरण्येऽपि गमकत्वाद्बहुव्रीहिः। ननु चात्यल्पमिदमुच्यते, ङाविति सम्बुद्धावप्युत्तरपदे प्रतिषेधो वक्तव्यः; अन्यथा हे राजन् वृन्दारकेति विगृह्य 'वृन्दारकनागकुञ्जरैः पूज्यमानम्' इति सम्बुद्ध्यन्तयोः समासे सति लोपो न स्यात्। तथा च वार्तिकम्—ङिसम्बुद्ध्योरनुत्तरपद इति। अत आह—हे राजवृन्दारकेत्यत्र त्विति। तत्र न पूर्वपदार्थसम्बोधनमिति। न हि पृथगवयवार्थयोरभिमुखीकरणे परस्परमेकार्थीभावः सम्भवति। किञ्च 'सम्बुद्धौ' इत्युच्यते, न चात्र सम्बुद्धिं पश्यामः। प्रत्ययलक्षणेन ? 'न लुमताङ्गस्य' इति प्रतिषेधः। वचनं तु हे राजन्नित्यादौ यत्र लोपशब्देन सम्बुद्धिर्लुप्यते तत्र चरितार्थम्। ङौ तु नायं परिहारः सम्भवति; सर्वत्र लुमता लुप्तत्वात्।

**भावबोधिनी**

* ङि परे उत्तर पद परे रहने पर प्रतिषेध का प्रतिषेध कहना चाहिये। * उदा० चर्मणि तिला अस्य स चर्मतिलः। [ यहाँ समास करने के बाद प्रत्ययलक्षण से ङि परे मानकर नलोप का प्रतिषेध प्राप्त होता है, उसका भी प्रतिषेध अर्थात् न लोप हो जाता है। ] हे राजन् वृन्दारक !—यहाँ समुदाय का अर्थ सम्बोधन है, पूर्वपदार्थ सम्बोधन नहीं प्रतीत होता है, इस कारण सम्बुध्यन्त पूर्वपद का समास नहीं होता है।

विमर्श—प्रस्तुत सूत्र पर दो विभक्तियों का उल्लेख करके उदाहरण दिये गये हैं। प्रथम विभक्ति ङि = सप्तमी एकवचन के विषय में एक प्रतिषेध वार्तिक है—'उत्तरपद परे रहते ङि में न लोप के प्रतिषेध का प्रतिषेध प्रतिषेध होता है अर्थात् न लोप होता है—चर्मणि तिला अस्य स चर्मतिलः—इसमें समास और विभक्तिलोप के बाद न् लोप भी होता है। किन्तु हे राजन् वृन्दारक—इस वाक्य में समुदाय = वाक्य का अर्थ सम्बोधन है किसी एक पद का नहीं। अतः अकेला 'राजन्' पूर्वपद सम्बुद्धयन्त नहीं होता है, नलोप नहीं होता है। भाष्यकार 'सम्बुद्धि' ग्रहण की आवश्यकता नहीं मानते हैं क्योंकि वाक्य और समास दोनों में अलग-अलग अर्थ प्रतीत होता है—वाक्य से अवयवों का सम्बोधन और समास से समुदाय का सम्बोधन।

❀ वा नपुंसकानामिति वक्तव्यम् ❀ ( म० भा० ) । हे चर्मन्, हे चर्म ॥

**३६९७. मादुपधायाश्च मतोर्वोऽयवादिभ्यः ॥ ९ ॥ (१८९७)**

**मतोरिह कार्यित्वेनोपादानात् सामर्थ्यलब्धं प्रातिपदिकं तत् 'मात्' इति मकारावर्णाभ्यां विशिष्यते । मकारावर्णविशिष्टया चोपधया—इत्ययमर्थो भवति । मकारान्ताद् मकारोपधादवर्णान्तादवर्णोपधाच्चोत्तरस्य मतोः 'व' इत्ययमादेशो भवति, यवादिभ्यस्तु परतो न भवति । मकारान्तात्—किंवान् । शंवान् । मकारोपधात्—शमीवान् । दाडिमीवान् । अवर्णान्तात्—वृक्षवान् । प्लक्षवान् । खट्वावान् । मालावान् । अवर्णोपधात्—पयस्वान् । यशस्वान् । भास्वान् ।**

**न्यासः**

**वा नपुंसकानामित्यादि ।** नपुंसकलिङ्गानां वा नलोपप्रतिषेधो भवतीत्येदर्थरूपं व्याख्येयमिति । अत्र व्याख्यानं तु—इहापि वाग्रहणानुवृत्ति व्यवस्थितविभाषात्वं चाश्रित्य कर्त्तव्यम् ॥ ८ ॥

**मादुपधायाश्च मतोर्वोऽयवादिभ्यः ॥** मकारान्तान् मकारोपधादवर्णान्तादवर्णोपधाच्चोत्तरस्य मतुपो मकारस्य 'व' इत्ययमादेशो भवतीत्ययमर्थोऽभिमतः । स एव यथा सम्पद्यते, तथा दर्शयितुमाह—**मतोरिहेत्यादि ।** अत्र मतुप् कार्यित्वेनोपात्तः । स च नास्त्यन्तरेण प्रातिपदिकत्वम्; तद्विधौ प्रातिपदिकाधिकारात् । तस्मान् मतुपः पूर्वं सामर्थ्यलभ्यं प्रातिपदिकम्, तन्मकारावर्णाभ्यां मादिति विशिष्यते—मकारोऽन्तो यस्य, अवर्णोऽन्तो यस्येति । मकारावर्णविशिष्टा या चोपधेति सामर्थ्यम् । कथम् ? पूर्वं प्रातिपदिकान्तं विशिष्यत इति सम्बन्धनीयम् । मकारेण विशेषणेन, अवर्णेन विशेषणेन च विशिष्टा योपधा सा च विशिष्यते—मकार उपधा यस्य, अवर्ण उपधा यस्येति । मकारावर्णविशिष्टस्येति मतुपो विशेषणे 'उपधायाश्च' इत्यत्र मा भूदिति ? अस्यापेक्षितत्वाल्लभ्यत इत्ययमर्थो भवतीति । इतिकरणो हेतौ । यस्मात् सामर्थ्यप्राप्तं प्रातिपदिकमेव विशिष्यते, तस्मादयं वक्ष्यमाणोऽर्थः सूत्रस्यापि भविष्यतीति । **किंवानिति ।** किमस्यास्तीति मतुप्, 'उगिदचाम्' इत्यादिना नुम्, हल्ङ्यादिसंयोगान्तलोपौ, 'अत्वसन्तस्य चाधातोः' इति दीर्घः ।

**पदमञ्जरी**

**वा नपुंसकानामिति ।** अप्राप्तिविभाषेयम्; सम्बुद्धेर्लमता लुप्तत्वात् ॥ ८ ॥

**मादुपधायाश्च मतोर्वोऽयवादिभ्यः ॥** अत्र चकाराद्वाक्यभेदः, मश्च अश्चेति समाहारद्वन्द्वः । तस्मान्मात्परस्य मतोर्वो भवति । 'उपधायाश्च', मादित्येव, उपधायाश्च मात्परस्य मतोर्वो भवति, पूर्वेणानन्तर्ये विहितं व्यवधानेऽपि तथा स्यादित्ययमारम्भः । एवं व्याख्यातव्ये **मतोरिह कार्यित्वेनेत्यादि** यदुक्तम्, तत्राभिप्रायो मृग्यः । कश्चिदाह—'मकारान्तान्मकारोपधादवर्णान्तादवर्णोपधाच्चेति वैयाकरणगोष्ठीषु पठ्यते, तस्येदमुपपादनम्' इति; तत्रापि मकारोपधादकारोपधादिति बहुव्रीह्यर्थस्य नोपपादनं दृश्यते । **व इत्ययमादेशो भवतीति ।** अत्रेति शब्दः पठितव्यः, तदयमर्थो भवतीत्युपक्रमात्, यवादिविप्रतिषेधे प्रकारे आदिशब्दः । **पयस्वानिति ।** 'तसौ मत्वर्थे' इति भत्वाद्रुत्वाभावः ।

**भावबोधिनी**

❀ नपुंसकों के नकार का लोप विकल्प से होता है—ऐसा कहना चाहिये । ❀ उदा० हे चर्मन्, हे चर्म । [ दोनों प्रकार का रूप सम्बोधन एकवचन में होता है ] ॥ ८ ॥

इस सूत्र में मतुप् का कार्यी ( स्थानी ) के रूप में उपादान होने से सामर्थ्यवश प्राप्त जो प्रातिपदिक वह 'मात्' इससे मकार और अवर्ण द्वारा विशेषित किया जाता है । और मकार तथा अवर्ण से विशिष्ट उपधा से ( प्रातिपदिक विशेषित होता है )—यह अर्थ है । (१) मकारान्त से, (२) मकारोपध से, (३) अवर्णान्त से और (४) अवर्णोपध प्रातिपदिक से उत्तरवर्ती मतुप् [ के मकार ] का 'व' यह आदेश होता है किन्तु यवादिगण में पठित शब्दों से परवर्ती का नहीं होता है । क्रमशः उदा० (१) मकारान्त प्रातिपदिक से परे मतुप् का—किंवान् । शंवान् । [ किम् अस्ति अस्य । शम् अस्ति अस्य—इनमें मतुप् करने पर प्रस्तुत सूत्र से म् का व् होने पर किंवत्, शंवत् पुनः

मादुपधायाश्चेति किम् ? अग्निमान् । वायुमान् । अयवादिभ्य इति किम् ? यवमान् । दल्मिमान् । ऊर्मिमान् ।

यव, दल्मि, ऊर्मि, भूमि, कृमि, क्रुञ्च, वशा, द्राक्षा[1]—एतेषाम् 'मादुपधायाश्च' (८।२।९) इति प्राप्नोति । ध्रजि, ध्वजि, सञ्जि[2]—इत्येतेषाम् 'छन्दसीरः' (८।२।१५) इति । हरित्, ककुत्, गरुत्—इत्येतेषाम् 'झयः' (८।२।१०) इति । इक्षु, मधु, द्रुम, मण्ड, धूम—इत्येतेषाम् 'संज्ञायाम्' (८।२।११) इति । आकृतिगणश्च यवादिः ।

अकृतवत्वो मतुब् यवादिषु द्रष्टव्यः । यस्य सति निमित्ते मतुपो वत्वं न दृश्यते स यवादिषु द्रष्टव्यः[3] ।

इह नृमत इदं नार्मतमिति बहिरङ्गलक्षणत्वादवर्णोपधस्य मतुपो वत्वं न भवति ॥

**न्यासः**

नार्मतमिति । नरोऽस्य सन्तीति नृमान्, नृमत इदमिति 'तस्येदम्' इत्यण्, तत्र वृद्धौ कृतायां नार्मतमित्यत्रावर्णोपधमतुप् प्रातिपदिकं जातमिति वत्वं प्राप्नोति, तत् कस्मान्न भवति ? इत्याह—इहेत्यादि । नार्मतमित्यत्र ह्यवर्णोपधमतुप्त्वं वृद्धेरेव, सा च बाह्यतद्धितनिमित्ता । अतोऽवर्णोपधत्वस्य बहिरङ्गत्वम्, वत्वं तु प्रवृत्तिनिमित्तमिति तस्यान्तरङ्गत्वम्, असिद्धं च बहिरङ्गमन्तरङ्गे इति, तेन नार्मतमित्यत्र वत्वं न भवति ॥ ९ ॥

**पदमञ्जरी**

इह नरोऽस्यास्तीति नृमान्, तस्येदं नार्मतमिति वृद्धौ कृतायामवर्णोपधादिति वत्वं प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः ? इत्यत आह—इहेति । बहिर्भूततद्धितापेक्षत्वाद्बहिरङ्गा वृद्धिरन्तर्भूतमतुबपेक्षे वत्वे असिद्धा भवतीत्यर्थः ॥ ९ ॥

**भावबोधिनी**

सु, नुम् आदि होते हैं । ] (२) मकारोपध प्रातिपदिक से परे के उदा० शमीवान्, दाडिमीवान् । [शमी अस्ति अस्य अस्मिन् वा, दाडिमो अस्ति अस्य अस्मिन् वा—इसमें मतुप्, म का व् आदेश । ] (३) अवर्णान्त प्रातिपदिक से परे का उदा० वृक्षवान् । प्लक्षवान् । खट्वावान् । मालावान् । [ यहाँ भी वृक्षः अस्ति अस्य अस्मिन् वा—अर्थ में मतुप् होता है । पूर्ववत् म् का व् ] (४) अवर्णोपध से प्रातिपदिक से परे का उदा० पयस्वान् । यशस्वान् । भास्वान् । [ पयः अस्ति अस्य—अर्थ में मतुप् है । पयस्, यशस् भास्—सभी में उपधा में अवर्ण है । अतः म जा व होता है । ]

पूर्वोक्त मकारान्त, मकारोपध, अकारान्त अकारोपध प्रातिपदिक से परवर्ती का—इसका क्या फल है ? अग्निमान् । वायुमान् । [ यहाँ उक्त चारों में कोई नहीं है । अतः म् का व् नहीं होता है । ] यवादिगण के शब्दों को छोड़कर—इसका क्या फल है ? यवमान् । दाल्मिमान् । उर्मिमान् । [ यहाँ अवर्णान्त तथा मकारोपध होने से वत्व प्राप्त है किन्तु ये शब्द यवादिगण में पठित हैं अतः वत्व नहीं होता है । ]

यव, दल्मि, ऊर्मि, भूमि, कृमि क्रुञ्च, वशा, द्राक्षा—इतने शब्दों में 'मतुपधायाश्च' इस प्रस्तुत सूत्र से वत्व प्राप्त होता है । ध्रजि, ध्वजि, सज्जि इनमें 'छन्दसीरः' (८।२।१५) से वत्व प्राप्त होता है । हरित्, ककुत्, गरुत्—इनमें 'झयः' (८।२।१०) से वत्व प्राप्त है । इक्षु, मधु, द्रुम, मण्ड, धूम—इनमें 'संज्ञायाम्' (८।२।११) से वत्व प्राप्त है । [सभी शब्द यवादिगण में हैं । अतः इनको छोड़ कर ही वत्व आदेश होता है] और यह यवादिगण आकृतिगण है । [ अतः अन्य भी शब्द जिनमें वत्व नहीं होता है उनको यवादिगणीय मान लेना चाहिये । ]

---

१. 'वृक्षा, वेशा' —इत्यधिकं पुस्तकान्तरे ।

२. 'वजि, व्रजि, शञ्जि, सिञ्जि'—इत्यधिकमेकस्मिन्पुस्तके ।

३–३. पाठोऽयं नास्त्येकस्मिन्पुस्तके ।

**३६९८. झयः ॥ १० ॥ (१८९८)**

**झयन्तादुत्तरस्य मतोः 'व' इत्ययमादेशो भवति । अग्निचित्वान् ग्रामः । उदश्वित्वान्घोषः । विद्युत्वान्बलाहकः । इन्द्रो मरुत्वान् । (आ० श्रौ० ८।१६।१) दृषद्वान् देशः ॥**

**३६९९. संज्ञायाम् ॥ ११ ॥ (१८९९)**

**संज्ञायां विषये मतोः 'व' इत्ययमादेशो भवति । अहीवती । कपीवती । ऋषीवती । मुनीवती ॥**

**न्यासः**

**झयः ॥ अग्निचित्वानिति ।** 'तसौ मत्वर्थे' इति भसंज्ञा । तेन पदसंज्ञानिबन्धनम् 'झलां जशोऽन्ते' इति जश्त्वं न भवति ॥ १० ॥

**संज्ञायाम् ॥ अहीवतीति ।** 'नद्यां मतुप्' इति चातुरर्थिको मतुप्, 'शरादीनाञ्च' इति दीर्घः ॥ ११ ॥

**पदमञ्जरी**

**झयः ॥ अग्निचित्वानिति ।** पूर्ववद्भत्वाज्जश्त्वाभावः ॥ १० ॥

**संज्ञायाम् ॥** अहीवतीत्यादौ चातुरर्थिको नद्यां मतुप् ॥ ११ ॥

**भावबोधिनी**

जिनमें वत्व नहीं किया गया है उनका यवादिगण में समझना चाहिये । निमित्त होने पर भी जिसका वत्व नहीं किया गया है उसे यवादिगण के शब्दों में देखना चाहिए ।

'नृमतः इदम्' = नार्मतम् यहाँ बहिरङ्गलक्षण होने से अवर्णोपध के मतुप् का वत्व नहीं होता है । [ नृ + मत् + अण्—इसमें बहिर्भूत तद्धित प्रत्यय की अपेक्षा करके वृद्धि की जाती है । यह अन्तर्भूत मतुप् को मान कर किये गये वत्व में असिद्ध हो जाती है । फलतः नृमत् यही दिखाई देता है, अवर्णोपध नहीं रहता है, अतः वत्व नहीं होता है । ] ॥ ९ ]

झयन्त ( झय् प्रत्याहार का वर्ण है अन्त में जिसके उस ) से उत्तरवर्ती मतुप् का 'व्' यह आदेश होता है [ यह मतुप् के आदि अक्षर म् का ही व् होता है । ] उदा० अग्निचित्वान् ग्रामः [ अग्निचितः सन्ति अस्मिन् ग्रामे सः—इस अर्थ में 'अग्निचित्' से मतुप् = मत् प्रत्यय होता है—अग्निचित् + मत्, म् का व् आदेश । 'तसौ मत्वर्थे' ( १।४।१९ ) सूत्र से भसंज्ञा होने के कारण पदसंज्ञा का बाध होने से जश्त्व नहीं होता है । अतः झयन्त = तकारान्त से परे म् का व् होता है—अग्निचित्वद् + सु, नुमादिकार्य होने पर रूप बनता है । ] उदश्वित्वान् । [ उदश्वित् अस्ति अस्य—इस अर्थ में मतुप् होता है । आधा दही आधा पानी मिला कर जो मट्ठा बनता है उसे 'उदश्वित्' कहते हैं । वह है जहाँ ऐसी अहीरों की बस्ती—उदश्वित्वान् घोषः । विद्युत्वान् बलाहकः [ विद्युत् अस्ति अस्मिन् स—इस अर्थ में मतुप् होता है । बिजलीवाला बादल । ] इन्द्रो मरुत्वान् । [ मरुतः सन्ति अस्य—इस अर्थ में मतुप् होता है । ] दृषद्वान् देशः । [ दृषदः सन्ति अस्मिन् सः—इस अर्थ में मतुप् होता है । पहाड़ों वाला देश = स्थान । यह दकारान्त है अतः भसंज्ञा नहीं होती है । ] ॥ १० ॥

संज्ञाविषय में मतुप् का वकार आदेश होता है । उदा० अहीवती । कपीवती । ऋषीवती । मुनीवती । [ अहि, कपि, ऋषि, मुनि—जिस नदी के समीप में हों—आदि अर्थ में चातुरर्थिक मतुप् प्रत्यय 'नद्यां मतुप्' ( ४।२।८४ ) सूत्र से होता है और 'शरादीनाञ्च' ( ६।३।११८ ) से दीर्घ होता है । प्रस्तुत सूत्र से मतुप् का वकार होता है । स्त्रीलिङ्ग होने से 'उगितश्च' ( ४।१।६ ) सूत्र से ङीप् होता है (१) तदस्मिन्नस्तीति देशे तन्नाम्नि ( ४।२।६७ ) । (२) 'तेन निर्वृत्तम्' ( ४।२।६८ ) । (३) तस्य निवासः ( ४।२।६९ ) । (४) अदूरभवश्च (४।२।७०) —इन चार सूत्रों से बताये गये अर्थों में जो प्रत्यय होते हैं उन्हें चातुरर्थिक कहते हैं । ऊपर के उदाहरण प्राचीन काल की किन्हीं नदियों के नाम हैं । ] ॥ ११ ॥

३७००. आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ॥ १२ ॥ (१९००)

आसन्दीवद्, अष्ठीवत्, चक्रीवत्, कक्षीवद्, रुमण्वत्, चर्मण्वती–इत्येतानि संज्ञायां निपात्यन्ते। वत्वं पूर्वेणैव सिद्धम्, आदेशार्थानि निपातनानि।

आसन्दीवदिति—आसनशब्दस्यासन्दीभावो निपात्यते। आसन्दीवान् ग्रामः। आसन्दीवदहिस्थलम्। आसनवानित्येवान्यत्र।

अपरे त्वाहुः—आसन्दीशब्दोऽपि प्रकृत्यन्तरमेवास्ति। तथा चोक्तम्—औदुम्बरी राजासन्दी भवतीति, तस्य 'संज्ञायाम्' (८।२।११) इति वत्वेन सिद्धम्, आसन्दीवदित्येतत्प्रपञ्चार्थमिह पठ्यते।

अष्ठीवदिति—अस्थ्नोऽष्ठीभावः। अष्ठीवानिति शरीरैकदेशसंज्ञा। अस्थिमानित्येवान्यत्र।

न्यासः

आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ॥ अथाष्ठीवदिति किमर्थं निपात्यते, यावतोर्वष्ठीवमित्यस्मादेव निपातनात् ( ५.४.७७ ) एतत् सिद्धम् ? एवं मन्यते—द्वन्द्व एवैतन्निपातनमिति तत्रैव स्यात्, इह तु निपातनं क्रियमाणं सर्वविषयं भविष्यतीति। कथं पुनर्ज्ञायते—आसन्दीशब्दः प्रकृत्यन्तरं विद्यते ? तथा चोक्तमित्यादि। यदि तर्हि तत्रैव संज्ञायामिति वत्वे च सिद्धमासन्दीवदिति, तत् किमर्थमिह पठ्येत ? इत्याह–आसन्दीवदित्यादि। तत् प्रपञ्चार्थमिति।

यदि तर्हि चक्रीवदिति संज्ञायामेतन्निपातनम्, कथं चक्रीवन्ती सदोहविर्धानानि भवन्तीति, न ह्ययं संज्ञा ? इत्यत आह—चक्रीवन्तीत्यादि। छन्दसि ह्ययं प्रयोगः, तत्र 'व्यत्ययो बहुलम्' इति वर्णव्यत्ययेनाकारस्येकारे कृते 'छन्दसीरः' इति मतोर्वत्वे चक्रीवन्तीत्येतत् सिध्यति। तस्माच्छान्दसत्वादेवमेतत् साधुत्वेनानुगन्तव्यम्।

पदमञ्जरी

आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ॥ आसन्दीवदहिस्थलमिति। देशविशेषः यत्रेदमुच्यते—

आसन्दीवति धान्यादं रुक्मिणं हरितस्रजम्।
अश्वं बबन्ध सारङ्गं देवेभ्यो जनमेजयः ॥ इति।

तथा चोक्तमिति। प्रयोगशास्त्रेषु। राजासन्दी = सोमराजस्यासनम्। यदि तस्यैव संज्ञायामिति वत्वेन सिद्धम्, आसन्दीवदित्येतत्किमर्थं तर्हि निपातनम् ? इत्यत आह—प्रपञ्चार्थं त्विह पठ्यत इति। अत्रेति शब्दः पठितव्यः, अपरे त्वाहुरित्युपक्रमात्। शरीरैकदेशस्येति। स पुनर्जान्वोः सन्धिः। चक्रीवन्ति सदो

भावबोधिनी

(१) आसन्दीवत्, (२) अष्ठीवत्, (३) चक्रीवत्, (४) कक्षीवत्, (५) रुमण्वत्, (६) चर्मण्वती—ये छ शब्द संज्ञा विषय में निपातित होते हैं। मतुप् का वकार होना तो पूर्ववर्ती सूत्र से ही सिद्ध है अन्य आदेशों के विधान के लिये ये निपातन हैं।

आसन्दीवत्—आसनम् अस्ति अस्य—अर्थ में [ मतुप् करने पर ] 'आसन' शब्द का आसन्दी भाव निपातित होता है। [ आसन्दी + मत्, म् का व्, सु, नुमादि करने पर— ] आसन्दीवान् ग्रामः। आसन्दीवत् अहिस्थलम् [ आसन्दीवत् यह किसी स्थान विशेष की संज्ञा है। म् का व् होता है। ] अन्य अर्थ में तो —'आसनवान्' यही होता है। [ सामान्यमत्वर्थ में आसन्दी आदेश नहीं होता है। 'मादुपधायाश्च' ( ८।२।९ ) सूत्र से मतुप् का व् होता है। ]

दूसरे विद्वान तो यह कहते हैं—'आसन्दी' शब्द भी अलग स्वतन्त्र प्रकृति है। जैसा कि कहा गया है—'औदुम्बरी (१) राजासन्दी भवति।' [ सोमयाग में सोमराजा का आसन उदुम्बर = गूलर से बना हुआ होता है। ] इसका तो 'संज्ञायाम्' ( ८।२।११ ) सूत्र से ही वत्व सिद्ध है, इस सूत्र में 'आसन्दीवत्' यह प्रपञ्चार्थ पढ़ा गया है।

चक्रीवदिति—चक्रशब्दस्य चक्रीभावो निपात्यते। चक्रीवान् राजा। चक्रवानित्येवान्यत्र। "चक्रीवन्ति सदोहविर्धानानि भवन्ति"—(कात्या० श्रौ० सू० २४।३।२६) इत्येतत्तु छान्दसत्वाद् अनुगन्तव्यम्।

कक्षीवदिति—कक्ष्यायाः सम्प्रसारणं निपात्यते। कक्षीवान्नाम ऋषिः। कक्ष्यावानित्येवान्यत्र।

रुमण्वदिति—लवणशब्दस्य रुमण्भावो निपात्यते। लवणवानित्येवान्यत्र।

अपरे त्वाहुः—रुमन्निति प्रकृत्यन्तरमस्ति, तस्यैतन्निपातनं नलोपाभावार्थम्, णत्वार्थं च। मतोर्वा नुडर्थमिति।

**न्यासः**

**कक्षीवानिति।** 'हलः' इति दीर्घः। **नलोपाभावार्थमिति।** 'नलोपः प्रातिपदिकान्तस्य' इति नकारलोपः प्राप्नोति, स मा भूदित्येवमर्थम्। **णत्वार्थं चेति।** 'पदान्तस्य' इति णत्वप्रतिषेधः प्राप्नोति अतो णत्वार्थञ्च निपातनम्। **मतोर्वा नुडर्थमितीति।** वाशब्दो विकल्पार्थः। अथ वा—नैव मकारलोपाभावार्थं निपातनम्, नापि णत्वार्थम्, किं तर्हि? मतोर्नुडर्थम्। नुटि कृते नलोपे सत्यपि सिध्यत्येवेष्टम्, णत्वप्रतिषेधस्य प्राप्तिर्नास्त्येव; अपदान्तत्वात्। 'अट्कुप्वाङ्' इति णत्वं भवति॥ १२॥

**पदमञ्जरी**

**हविर्धानानीति।** सारस्वते सत्रे जङ्गमानि सदोहविर्धानानि, न त्वेकत्रावस्थितानि, तानि तत्र तत्र कर्षणाय चक्रयुक्तानि भवन्ति। **कक्षीवानिति।** 'हलः' इति दीर्घत्वम्। **रुमन्निति प्रकृत्यन्तरमस्तीति।** 'रुमा च लवणाकरः'[1]। **णत्वार्थं चेति।** 'पदान्तस्य' इति प्रतिषेधप्रसङ्गात्। **मतोर्वा नुडर्थमिति।** अत्र पक्षे पूर्वस्य-नकारस्य लोपः, णत्वमपि 'रषाभ्याम्' इत्येव सिद्धम्॥ १२॥

**भावबोधिनी**

(२) अष्ठीवत्—अस्थि का 'अष्ठी' आदेश होता है। अस्थि अस्ति अस्य—इस अर्थ में मतुप् प्रत्यय, 'अष्ठी' आदेश, म का व होता है।] अष्ठीवान्—यह शरीर के एक भाग ववयव का नाम ( संज्ञा ) है। [ "···जानूरुपर्वाऽष्ठीवदश्रियाम्' आदेश ( २।६।७२ ) के अनुसार—घुटना टेहुन को अष्ठीवत् कहते हैं। ] इससे भिन्न अर्थ में 'अस्थिमान्' ( हड्डी वाला ) यही रूप होता है।

(३) चक्रीवत्—चक्र शब्द का 'चक्री' आदेश निपातित होता है। चक्रीवान् राजा। [ चक्रमस्ति अस्य—इस अर्थ में मतुप्, चक्री आदेश, म् का व् ] अन्य अर्थ में 'चक्रवान्' यही होता है। 'चक्रीवन्ति सदोहविर्धानानि भवन्ति' ( का० श्रौ० सू० ) यह तो छान्दस प्रयोग होने से समझ लेना चाहिए अर्थात् 'चक्री' आदेश और वत्व समझ लेना चाहिये।

(४) कक्षीवत्—कक्ष्या का सम्प्रसारण निपातित होता है। उदा० कक्षीवान् नाम ऋषिः। [ कक्ष्या अस्ति अस्य—अर्थ में मतुप्, य् का सम्प्रसारण, इ 'हलः' सूत्र से दीर्घ' आ का पूर्वरूप—कक्षी+मत्, म का व ] अन्य अर्थ में—कक्ष्यावान् ( कमर में बाँधी जाने वाली रस्सी वाला ) यही होता है।

(५) रुमण्वत्—लवण शब्द का रुमण् आदेश निपातित होता है। [ लवणम् अस्ति अस्य अर्थ में मतुप्, लवण का रुमण् निपातन होता है, म का 'व' होता है। ] अर्थ में 'लवणवान्' यही बनता है। [ नमक वाला समुद्र आदि सामान्य अर्थ है। ]

दूसरे आचार्य तो यह कहते हैं—रुमन् यह दूसरी ही प्रकृति ( शब्द ) है, इसका यह निपातन न लोप के अभाव से लिए और णत्व करने के लिए किया गया है। अथवा मतुप् को नुट् का आगम करने के लिये है। [ रुमन् + मत्, नलोप न होकर णत्व होता है। 'झयः' से वत्व होता है। अथवा रुमन् + मतु, नुट् आगम, पूर्व न् का लोप, 'रषाभ्यां णो नः' सूत्र से नुट् के न् का णत्व। ]

---

१. संवदनीयम्—'रुमा लवणखानिः स्यात्'—अभिधानचिन्ता० ९४१ श्लो०।

चर्मण्वतीति—चर्मणो नलोपाभावः, णत्वं च निपात्यते। मतोर्वा नुडर्थम्। चर्मण्वती नाम नदी। चर्मवतीत्येवान्यत्र ॥

**३७०१. उदन्वानुदधौ च ॥ १३ ॥ (१९०१)**

'उदन्वान्' इत्युदकशब्दस्य मतावुदन्भावो निपात्यते उदधावर्थे संज्ञायां च विषये। उदन्वान्नाम ऋषिः, यस्योदन्वतः पुत्रः। उदधौ—उदन्वान्। यस्मिन्नुदकं धीयते स एवमुच्यते।

उदधाविति किम्? उदकवान् घट इत्यत्र तु दधात्यर्थो न विवक्ष्यते, किं तर्हि? उदकसत्तासम्बन्धसामान्यम् ॥

**न्यासः**

**उदन्वानुदधौ च ॥ उदधावर्थ इति।** यस्मिन्नुदकं धीयते तस्मिन्नर्थ इत्यर्थः। तथा ह्युदके कर्मण्युपपदे 'कर्मण्यधिकरणे च' इति किप्रत्यये कृते 'पेषंवासवाहनधिषु च' इत्युदकस्योदभावे कृत उदधिशब्दो व्युत्पद्यते। चकारेण 'संज्ञायाम्' इत्यनुकृष्यत् इति दर्शयति। **संज्ञायां चेत्यादि। उदधावर्थ इत्यादि।** उदधिग्रहणञ्च संज्ञार्थम्। **उदन्वानिति।** उदकं धेयमस्मिन्नस्तीत्यर्थविवक्षायां मतुप्। **स एवमुच्यत इति।** न तु गङ्गादिः[1]।

यदि यस्मिन्नुदकं स एवमुच्यते—उदकवान् घट इत्यभिधानं प्राप्नोति, घटेऽप्युदकं धीयत इत्यत आह—**उदकवान् घट इत्यादि।** इह विवक्षा शब्दव्युत्पत्तेः[2] प्रधानं कारणम्, न वस्तुतः सत्ता। स च येन दधात्यर्थेनोदधिरित्युच्यते, सोऽस्मिन् प्रयोगे घटे न विवक्षितः, किं तर्हि? उदकसत्तायाः सम्बन्धमात्रम्। उदकमस्मिन्नस्तीत्येतावन्मात्रं विवक्षितम्। अतो दधात्यर्थस्याविवक्षितत्वाद् घटस्योदधित्वं विद्यमानमप्यसङ्कल्प्यमेवेति नायं निपातनस्य विषयः। तेन घट उदकवानित्युच्यते। यदा तु दधात्यर्थो विवक्ष्यते तदोदत्वानित्येवं वक्तव्यम् ॥ १३ ॥

**पदमञ्जरी**

**उदन्वानुदधौ च ॥ उदन्वान्नाम ऋषिरिति।** यस्य च कामवर्षी पर्जन्यः—यस्मिन्नुदकं धीयत इति, स पुनस्तटाकादिः। 'कर्मण्यधिकरणे च' इति किप्रत्ययः, 'पेषंवासवाहनधिषु च इति उदकस्योद्भावः।

**उदकसत्तासम्बन्धसामान्यमिति।** तच्च देवदत्तादिष्वपि सम्भवति। असंज्ञार्थं वोदधिग्रहणम् ॥१३॥

**भावबोधिनी**

(६) चर्मण्वती—चर्मन् के नलोप का अभाव, और णत्व निपातित होता है। अथवा मतुप् को नुट् आगम करने के लिए है। उदा० चर्मण्वती नाम नदी। [ चर्माणि सन्ति अस्याः अस्यां वा—इस अर्थ में मतुप्, नलोप का अभाव और णत्व के बाद 'उगितश्च' सूत्र से ङीप् होता है। [ अन्य अर्थ में—'चर्मवती' ( चमड़े वाली ) यही होता है ॥ १२ ॥

'उदन्वान्' यहाँ उदक शब्द का मतुप् परे रहते 'उदन्वान्' यह आदेश उदधि = समुद्र अर्थ में और संज्ञा विषय में निपातित होता है। उदा० उदन्वान् नाम् ऋषिः। [ उदक + मत्, उदन् आदेश होता है। ] उदन्वान् वह ऋषि था जिसका पुत्र 'औदन्वान्' था। उदधि अर्थ में—उदन्वान् सागर। जिसमें उदक रखा जाता है वही इस प्रकार के कहा जाता है।

उदधि अर्थ में—इसका क्या फल है? 'उदकवान् घटः' यहाँ दधाति = धारण करना, रखना अर्थ में विवक्षित नहीं है, तो क्या अर्थ विवक्षित है? उदक की सत्ता का सम्बन्ध सामान्य ही विवक्षित है ॥ १३ ॥

---

१. 'न तु तडागादिः' इति पाठा०। २. 'शब्दप्रवृत्तौ' इति पाठा०।

**३७०२. राजन्वान्सौराज्ये ॥ १४ ॥ (१९०२)**

'राजन्वान्' इति निपात्यते सौराज्ये गम्यमाने। शोभनो राजा यस्मिन्निति स राजन्वान् देशः। राजवन्ती पृथ्वी। राजवानित्येवान्यत्र॥

**३७०३. छन्दसीरः ॥ १५ ॥ (३६००)**

छन्दसि विषये इवर्णान्ताद्रेफान्ताच्चोत्तरस्य मतोर्वत्वं भवति। (काठ० ११।१) इवर्णान्तात्तावत्— "त्रिवती याज्यानुवाक्या भवति"। "हरिवो मे॒दिनं त्वा।" (तै० सं० ४।७।१४।४) "अधिपतिवती जुहोति।" चरुरग्निवानिव।" आरेवानेतु मा विशत्। 'रयेर्मतौ', (का० वा०) इति सम्प्रसारणम्। "स॒रस्वतीवान् भारतीवान्" (मै० ३।११।६) दधीवांश्चरुः।

**न्यासः**

**राजन्वाने सौराज्ये ॥ राजन्वानिति निपात्यत इति।** किमत्र निपात्यते? नलोपाभावः, नुड् वा। **सौराज्यमिति।** शोभनो राजा यस्मिन् देशे स सुराजा, तद्भावः सौराज्यम्, ब्राह्मणादित्वात् ष्यञ्, 'नस्तद्धिते' इति नलोपः। तत् पुनः सौराज्यं यत्र शोभनेन राज्ञा देशस्य सम्बन्धः। 'समासकृत्तद्धितेषु सम्बन्धाभिधानम्' इति वचनाद् राजन्वानित्यस्य शब्दस्य देश एव वाच्यः न सौराज्यम्। स तु देशः शब्दात् प्रतीयमानः; सौराज्येनाविनाभावित्वात्। तच्च गमयतीत्याह—**गम्यमान इति। राजन्वानिति।** पुंल्लिङ्गम्। तस्यातन्त्रतां दर्शयितुम्—**राजन्वती पृथिवी**त्यस्योदाहरणस्योपन्यासः॥ १४॥

**छन्दसीरः ॥ हरिवो मेदिनमिति।** 'न मु ने' इत्यत्रैतद् व्युत्पादितम्। **अरेवानेतु मा विशदिति।** रयिशब्दस्य 'रयेर्मतौ बहुलम्' इति सम्प्रसारणम्, परपूर्वत्वम्, 'आद्गुणः'। अथेह कस्मान्न भवति— सर्पिषमत्वं द्यावापृथिवीमन्तम्? इत्याह—द्यौश्च पृथिवी चेति द्वन्द्वे कृते 'दिवसश्च पृथिव्याम्' इति दिवो द्यावादेशः।

**पदमञ्जरी**

**राजन्वान् सौराज्ये ॥** शोभनो राजा तस्य भावः, सौराज्यम्, ब्राह्मणादित्वात्ष्यञ्, टिलोपः। तत्पुनः शोभनेन राज्ञा देशस्य सम्बन्धः। समासकृतद्धितेषु सम्बन्धाभिधानम्; भावप्रत्ययेनेति वचनात्। एतच्च राजन्वानित्यस्य प्रवृत्तिनिमित्तम्, देश एव त्वभिधेयः, यदाह—**सौराज्ये गम्यमान इति। राजन्वा-**

**भावबोधिनी**

सौराज्य = सुन्दर राजा वाला होना अर्थ प्रतीत होने पर 'राजन्वान्' यह निपातित होता है। शोभन राजा है जिस देश में वह--राजन्वान् है। राजन्वती पृथ्वी। [ राजन् + मत् में नलोप का अभाव निपातित होता है, वत्व तो अवर्णान्त मान का हो जाता है। शोभनो राजा तस्य भावः--इस अर्थ में ष्यञ् करके टिलोप, आदिवृद्धि ये--सौराज्यम् बनता है। ऐसा पदमञ्जरीकार मानते हैं। किन्तु न्यासकार ने शोभनो राजा यस्मिन् देशे स सुराजा, तस्य भावः--इस अर्थ में ष्यञ् करके 'सौराज्य' बनाया है। 'सौराज्यम्' यह नपुंसकत्व और एकवचन विवक्षित नहीं है। इसीलिये 'राजन्वती पृथिवी' यह उदा० दिया गया है। कालिदास ने भी ऐसा प्रयोग किया है—"राजन्वतीमाहुरनेन भूमिम्।" (रघु० ६।२२) अन्य अर्थ में 'राजवान्' (राजा अस्ति अस्य) यह रूप होता है॥ १४॥

वेद विषय में इवर्णान्त और रेफान्त से उत्तरवर्ती मतुप् का वत्व होता है। पहले इवर्णान्त के उदा० त्रिवती याज्यानुवाक्या भवति। हरिवो मेदिनं त्वा। [ त्रिवती—त्रि + मतुप्। हरयः सन्ति अस्य—इस अर्थ में हरि + मत् + सु, नुम्, सुलोप संयोगान्ततलोप, प्रस्तुत सूत्र से म का व—हरिवन्। 'मतुवसो: रुश्छन्दसि' (८।३।१) सूत्र से न् का रु—हरि वरु + मेदिनम् में रु का उत्व और गुण करने पर—'हरिवो मेदिनं त्वा' बनता है।] अधिपतिवती। चरुरग्निवान् इव। [ दोनों में म का व हुआ है।] आरेवानेतु मा विशत्। [ यहाँ रेवान् शब्द में रयि +

'छन्दसि सर्वे विधयो विकल्प्यन्ते' ( पु० प० ३९ ) इतीह न भवति—सप्तर्षिमन्तम्, ऋषिमान्, ऋतीमान्, सूर्यं ते द्यावापृथिवीमन्तमिति ।

रेफान्तात्—गीर्वान् । धूर्वान् । आशीर्वान् ॥

**३७०४. अनो नुट् ॥ १६ ॥ (३६०१)**

'छन्दसि' इति वर्तते । अनन्तादुत्तरस्य मतोर्नुडागमो भवति छन्दसि विषये । "अक्षण्वन्तः कर्णवन्तः सखायः । ( ऋ० १०।७१।७ ) "अस्थन्वन्तं यदनस्था बिभर्त्ति ।" ( ऋ० १।१६४।४ ) अक्षण्वता लाङ्गलेन ।

**न्यास**

गीर्वान्, धूर्वान्, आशीर्वानिति ? 'गॄ शब्दे', 'धुर्वी हिंसार्थः', 'आङ्शासु इच्छायाम्' एषां सम्पदादित्वात् क्विप् । गृणातेः 'ऋत इद्धातोः' इतीत्वम्, धुर्वेः 'राल्लोपः' इति वकारलोपः, 'शास इदङ्हलोः' 'इत्यत्र शास इत्वे' 'आशासः क्वावुपसंख्यानम्' इत्याङ्पूर्वस्य शास इत्वम्, मतुपि कृते 'ससजुषो रुः' इति रुत्वम् ॥ १५ ॥

अनो नुट् ॥ अक्षण्वन्त इति । 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः', 'छन्दस्यपि दृश्यते' इत्यनङ्, नुट्, अनङो नकारस्य लोपः, नुटो णत्वम् । अस्थन्वन्तमिति । अस्थिशब्दस्य णत्ववर्जं पूर्ववदनङादि कर्त्तव्यम् । शीर्षण्वतीति । 'शीर्षंश्छन्दसि' इति निपातितम् । ननु च नुटोऽनन्तरत्वात् तस्यैव वत्वेन भवितुं युक्तम्, न

**पदमञ्जरी**

निति । प्रशंसायां मतुप्, नलोपाभावो निपात्यते । सूत्रे पुंलिङ्गस्याविवक्षितत्वं दर्शयति—राजन्वती पृथिवीति ॥ १४ ॥ १५ ॥

अनो नुट् ॥ अक्षण्वन्त इति । अक्षिशब्दस्य मतुपि 'छन्दस्यपि दृश्यते' इति अनङादेशः, नुटोऽसिद्धत्वात् पूर्वं नलोपे भूतपूर्वगतया नुट्, तस्य णत्वम् । शीर्षण्वतीति । 'शीर्षं छन्दसि' शिरसः शीर्षन्नादेशः । प्रकृत्यन्तरं वा शिरस्शब्देन समानार्थः । शीर्षन्निति छन्दसि निपात्यते । नुडयं परादिः क्रियते, तस्य मतुब्ग्रहणेन ग्रहणात् 'मदुपधायाः' इति वत्वं प्राप्नोति । मकारस्य तु न प्राप्नोति; नुटा व्यवधानात् । यदि पुनरयं नुक् पूर्वान्तः क्रियेत ? नैवं शक्यम्; अक्षण्वता, शीर्षण्वता—णत्वं न स्यात् । इह च सुपस्थिन्तरः—उत्तरसूत्रेण नुकि कृते पदान्तत्वात् 'नश्छव्यप्रशान्' इति रुत्वं प्राप्नोति, तस्मात्परादिरेव कर्त्तव्यः, तत्र चोक्तो

**भावबोधिनी**

मत् यहाँ ] 'रयेर्मतौ बहुलम्' इस वार्तिक से य् का सम्प्रसारण, इ का पूर्वरूप र इ + मत् + सु, नुम्, म् मा व्, 'आद्गुणः' से गुण—रेवन्त + सु सुलोप, दीर्घादि करने पर—रेवान् रूप बनता है । ] सरस्वतीवान् । भारतीवान् । दधीवाश्चरुः । [ सभी में इवर्ण से परे मत् का वत्व होता है । ]

* वेद में सभी विधियाँ विकल्प से प्रवृत्त होती हैं इस कारण इनमें वत्व नहीं भी होता है—सप्तर्षिमन्तम्, ऋषिमान्, ऋतीमान्, सूर्यं ते द्यावापृथिवीमन्तम् ।"

रेफान्त से परे मतुप् के वत्व के उदा० गीर्वान् । धूर्वान् । आशीर्वान् । [ गिरः सन्ति अस्य । धूः अस्ति अस्य आशीः अस्ति अस्य अर्थों में मतुप् गिर + मत्, धुर् + मत्, आशिर् + मत्, सु, नुम्, 'र्वोरुपधाया दीर्घ इकः' ( ८।२।७६ ) सूत्र से उपधा का दीर्घ, म का वत्—गीर्मन्त् + सु, सुलोप, संयोगान्त लोप होने पर उदा० बनते हैं । ॥ १५ ॥

'वेदविषय में' इसकी अनुवृत्ति होती है । अनन्त से उत्तरवर्ती मतुप् को नुट् का आगम वेदविषय में होता है । उदा० अक्षण्वन्तः कर्णवन्तः सखायः । अस्थन्वन्तं यदनस्था बिभर्ति । अक्षणवन्ता लाङ्गलेन । [ अक्षि अस्ति अस्य—इस अर्थ में अक्षिमतुप् 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' 'छन्दस्यपि दृश्यते' ( ७।१।७६ ) सूत्र से अनङ्—अक्षन् + मत्, नुट् = न् आगम, नुट् को असिद्ध मान कर अनङ् के न का लोप, नुट् के न् का णत्व, तृतीया एकवचन का

शीर्षण्वती ( अ० वे० १०।१।२ )। मूर्धन्वती ( तै० २।६।२।२ )। नुटोऽसिद्धत्वात्तस्य च वत्वं न भवति, ततः परस्य च भवति ॥

**३७०५. नाद् घस्य ॥ १७ ॥ (३६०२)**

**नकारान्तादुत्तरस्य घसंज्ञकस्य नुडागमो भवति छन्दसि विषये । सुपथिन्तरः । दस्युहन्तमः ।**

**❀ भूरिदाम्नस्तुड् वक्तव्यः ❀ ( म० भा० )। भूरिदावत्तरः ❀ ( ऋ० ८।५।३९ )।**

**न्यासः**

तु तद्व्यवहितस्य मकारस्य, तत् कथमिह नुटो वत्वं न भवति, ततस्तु परस्य च भवति ? इत्याह—नुटोऽसिद्धत्वादित्यादि । अथायं नुट् परत्वादपवाद एव कस्मान्न भवति ? भिन्नजातीयत्वात् । समानजातीयकार्यापन्नो हि विशेषः सामान्यस्य बाधको भवति, इह कार्यभेदोऽस्ति; वत्वस्यादेशत्वान्नुटस्त्वागमत्वादिति नास्ति बाध्यबाधकभावः, नुटः परादिकरणं णत्वं यथा स्यादित्येवमर्थम्; अन्यथा हि 'पदान्तस्य' इति प्रतिषेधः स्यात् ॥ १६ ॥

नाद् घस्य ॥ सुपथिन्तर इति । शोभनः पन्था इति प्रादिसमासः—सुपन्थाः, सुशब्दात् 'न पूजनात्' इति प्रतिषेधाद् 'ऋक्पूरब्धूः' इत्यादिना समासान्तो न भवति, तरप् । दस्युहन्तमः । दस्युं हतवानिति क्विप्, तदन्तात् तमप् ।

**पदमञ्जरी**

दोषः। अत आह—नुटोऽसिद्धत्वादिति । नन्वेवमप्यवग्रहे दोषः प्राप्नोति—अक्षण्वन्त इति अक्षण्वन्ते इति णान्तमवगृह्णाति, तत्र प्राप्नोति ? न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यम् ॥ १६ ॥

नाद् घस्य ॥ भूरिदावत्तर इति ॥ 'आतो मनिन्' इत्यादिना वनिप् ।

**भावबोधिनी**

रूप है । इसी प्रकार 'अस्थि + मत्' में भी नुट्, नलोप, अस्थन् मत् + अम्, 'मादुपधायाश्च' सूत्र से म् का व् अस्थन्वत् + अम्, उगित् मान कर नुमादि करने पर—अस्थन्वन्तम्' रूप बनता है । ] शीर्षण्वती । मूर्धन्वती । [ शिरः अस्ति अस्याः—इस अर्थ में मतुप्, 'शीर्षंश्छन्दसि' सूत्र से शीर्षन् आदेश निपातन—शीर्षन् + मत्, 'मादुपधायाश्च' से म का व ।

प्रश्न यह है कि उक्त उदा० में प्रकृति रूप शब्द के अव्यवहित उत्तर मतुप् को नुट् आगम होता है और टित् होने से मतुप का अवयव होता है । अतः 'न्' का ही व होना चाहिए, म का नहीं ? इसी का उत्तर है— ] नुट् के असिद्ध हो जाने के कारण इसका वत्व नहीं हो पाता है और इसके बाद वाले मतुप् का ही होता है । [ भाव यह है कि वत्वविधायक 'मादुपधायाश्च' पूर्ववर्ती है और नुट्विधायक परवर्ती अतः यह असिद्ध हो जाता है, फलतः म् का ही व होता है । ] ॥ १६ ॥

नकार से उत्तरवर्ती घसंज्ञक को नुट् का आगम वेदविषय में होता है । उदा० सुपथिन्तरः । दस्युहन्तमः । [ सुपथिन् तथा दस्युहन् शब्दों से तरप् तथा तमप् ये घसंज्ञक प्रत्यय होते हैं । इसलिये नुट् होता है और पूर्ववर्ती न् का लोप होता है । ]

* भूरिदावन् शब्द से परे घसंज्ञक को नुट् का आगम कहना चाहिये । * उदा० भूरिदावत्तरः । [ भूरि ददाति—इस अर्थ में 'आतो मनिन् क्वनिप्वनिपः' सूत्र से वनिप् = वन् प्रत्यय उपपद समास—भूरिदावन्, तरप् करने पर तुट् आगम, न् लोप होता है । ]

* रथिन् का ईद् * रथिन् का इकारान्त आदेश घ परे होता है । उदा० रथीतरः । [ रथः अस्ति अस्य—इस अर्थ मत्वर्थ में इन् प्रत्यय—रथिन् + तरप्, न् लोप, ईकारान्त आदेश—रथीतरः । ] अथवा रथ शब्द से ही

ईद्रथिनः ( म० भा० )। रथिन ईकारान्तादेशो घ परतः। रथीतरः ( ऋ० १।८४।५ )। रथशब्दादेव वा मत्वर्थीयोऽयमीकारः 'छन्दसीवनिपौ' इति ॥

**३७०६. कृपो रो लः ॥ १८ ॥ (२३५०)**

कृपेर्धातो रेफस्य लकारादेशो भवति। 'रः' इति श्रुतिसामान्यमुपादीयते। तेन यः केवलो रेफो यश्च ऋकारः, तयोर्द्वयोरपि ग्रहणम्। 'लः' इत्यपि सामान्यमेव; ततोऽयं केवलस्य रेफस्य स्थाने लकारादेशो विधीयते।

**न्यासः**

**भूरिदावत्तर इति**। भूरि ददातीति 'आतो मनिन्' इत्यादिना वनिप्, तदन्तादुत्तरपदस्य तुट्।

**रथीतर इति**। रथिन्नित्येतस्मात् मत्वर्थीयेनिप्रत्ययान्तात् तरप्, नकारस्य लोपः, ईकारः। अथ वा—नकारस्यैवेकारः, सवर्णदीर्घत्वम् ॥ १७ ॥

**कृपो रो लः** ॥ इह र इति वर्ण उपादीयते, ल इत्यस्यादेशस्तादृश एव; ततश्च केवलो यो रेफवर्णो नावयवभूतस्यैव तथाभूत एव लकारादेशः स्यात्, ऋकारस्य तु लकारो न स्यात्, तयोः स्थान्यादेशभावेन सूत्रेऽनुपादानात्। ततश्च क्लृप्तः, क्लृप्तवानित्यादि न सिध्येदिति। यश्चोदयेत्, तं प्रत्याह—**र इति सामान्यमुपादीयत इति**। वर्णत्वावर्णत्वकृतं भेदमुत्सृज्य यत् सामान्यं वर्णात्मिकायामवर्णात्मिकायां च रेफव्यक्तौ वर्त्तते यतस्तयोर्वर्णत्वादिभेदभिन्नयोर्द्वयोरपि र इत्यभिधानप्रत्ययावभिन्नौ भवतस्तदुपादीयते, न तु वर्णात्मकः—एवं विशेषः। **तेनेति**। सामान्योपादानेन द्वयोरपि ग्रहणं भवतीति। तस्य सामान्यस्य द्वयोरपि भावात् **ल इत्यपि सामान्यमेवेति**। उपादीयत इत्यपेक्षते। अत्रापि तेन यश्च केवलो लकारो यश्च लृकारस्थः,

**पदमञ्जरी**

**रथीतर इति**। रथशब्दान्मत्वर्थीय इनिः, तदन्तात्तरप्, नकारलोपे कृते दकारस्य ईकारः। यदि तु नकारलोपापवादो नकारस्य स्थाने विधीयेत, तदा तस्यासिद्धत्वादेकादेशो न स्यात् ॥ १७ ॥

**कृपो रो लः**। कृपो धातोरिति पाठः। भाष्ये—'कृपो रो लः' इति पठितत्वात्। 'नुड्विधिलादेशविनामेष्वृकारे प्रतिविधातव्यम्' इत्युक्तम्; तत्रावसरे प्राप्ते लादेशे प्रतिविधत्ते—**इति सामान्यमिति**। वर्णत्वावर्णत्वकृतभेदतिरस्कारेण वर्णात्मिकायामवर्णात्मिकायां च रेफव्यक्तौ यत्सामान्यं वर्त्तते यतो द्वयोरपि तयो र इत्यभिन्नाभिधानप्रत्ययौ भवतः, तदुपादीयते; न तु वर्णात्मिकैव रेफव्यक्तिरित्यर्थः। ततः किम्? इत्यत आह—**तेनेति**। **इत्यपि सामान्यं चेति**। उपादीयत इत्यपेक्षते। अत्रापि तेन यश्च केवलो लकारः, यश्च लृकारस्थः, तयोर्द्वयोरपि ग्रहणमिति पठितव्यम्, पूर्वानुसारेण तु गम्यमानत्वान्न पठितम्। यदि द्वयोरपि ग्रहणम्, ततोऽपि किम्? इत्याह—**ततोऽयमिति**। **केवलस्य** = शुद्धस्य। **लकार आदेश इति**। अत्रापि केवल

**भावबोधिनी**

'छन्दसीवनिपौ' ( ) सूत्र से यह मत्वर्थक ईकार होता है। [ अतः आदेश अनावश्यक है। नकार का ही ई आदेश करने पर इसके असिद्ध हो जाने से सवर्णदीर्घ नहीं हो सकता—ऐसा पदमञ्जरीकार का कथन है। इसलिये "अथवा—नकारस्यैवेकारः सवर्णदीर्घत्वम्" यह न्यासकार का कथन तर्कसंगत नहीं लगता है ] ॥ १७ ॥

'कृप' √ धातु के रेफ का लकार आदेश होता है। 'र' यह श्रुतिसामान्य उपात्त है अर्थात् 'र' ही हो ऐसा आवश्यक नहीं है, इसकी ध्वनि होनी चाहिये। इस कारण जो केवल रेफ है वह और जो ऋकार ( में रेफ ध्वनि है वह )—इन दोनों का ही ग्रहण है, अर्थात् अकेले र् का ल होता है, ऋ के घटक र् का भी ल् होता है। इसी प्रकार 'ल' यह भी सामान्य रूप से ही लिया जाता है, इस कारण यह केवल रेफ के स्थान पर लकार आदेश होता है। [ वह केवल लकार भी होता है और क्लृप् का घटक भी होता है। ]

ऋकारस्याप्येकदेशविकारद्वारेण ऌकारः। एवं च 'लुटि च क्लृपः' (१।३।९३) इत्येवमादयो निर्देशा उपपद्यन्ते। कल्प्ता, कल्प्तारौ, कल्प्तारः। क्लृप्तः। क्लृप्तवान्।

कृपा इत्येतत् 'कृपेः सम्प्रसारणं च' (ग० सू० ३६) इति भिदादिषु पाठाद्भवति, तस्य हि कृतसम्प्रसारणस्य लाक्षणिकत्वात् इह कृप इति ग्रहणं नास्ति।

**न्यासः**

तयोर्द्वयोरपि ग्रहणमित्येतद्वाच्यम्? पूर्वानुसारेण गम्यमानार्थत्वान्नोक्तम्। **ततोऽयमित्यादि**। यत एवं द्वयोरपि रेफयोर्लकारयोश्च ग्रहणम्, तस्मात् केवलस्य रेफस्य केवलो लकार आदेशो विधीयते। आन्तरतम्यादृकारस्यापि ऌकारः। ननु च सत्यपि द्वयोरपि ग्रहणे ऋकारस्य स्थान ऋकारो विधीयत इत्येतन्न लभ्येत; न हि ऋकारस्थो रेफ ऋकारो भवति, किं तर्हि? तदवयवः; तत्र द्वयोरपि ग्रहणे सति ऋकारस्थस्यापि रेफस्य ऌकारस्थो लकारस्तत्सदृश एवान्तरतम्याद् भवतीत्येषोऽर्थो लभ्यते, न तु ऋकारस्यापि स्थाने ऌकारो भवतीत्येषोऽर्थोऽपि? इत्येतस्य चोद्यस्य निराकरणार्थम् **एकदेशविकारद्वारेणे**त्युक्तम्। एकदेश ऋकारस्यावयवो रेफस्तस्य विकार ऌकारावयवो लकारः। अथ वा—एकदेश ऌकारस्यावयवो लकारः, स एव विकारः। ऋकारस्य रेफस्यैकदेशविकारः। द्वारम्=मुखम्, उपाय इति यावत्। तेन ऋकारस्य स्थान ऌकारादेशो विधीयते। यदि ऋकारऌकारस्थयोः रेफलकारयोर्ऋकारऌकाराभ्यां पृथग्भावः सम्भवेत्, तदा ऋकारस्यैकदेशस्य रेफस्य ऌकारस्यैकदेशो लकारः शक्यो विधातुम्, न तु तयोस्ततः पृथग्भावः सम्भवति। तस्मान्नान्तरीयकत्वादेकदेशविकारद्वारेण समस्तस्यैव ऋकारस्य समस्त एव ऌकारादेशो विधीयते। अस्यैवार्थस्य द्रढीकरणायाह—**एवं चेत्यादि**। यत एवमेकादेशविकारद्वारेण ऋकारस्य स्थाने ऌकारो विधीयते एवञ्च 'लुटि च क्लृपः' इत्येवमादयो निर्देशा उपपद्यन्ते, नान्यथा। आदिशब्देन 'ऋदुपधाच्चाक्लृपि चृतेः' इत्येव-

**पदमञ्जरी**

इति द्रष्टव्यम्। **ऋकारस्यापि ऌकार इति**। आनन्तरतम्यात्। ननु सत्यपि द्वयोरपि ग्रहणे ऋकारस्थस्य रेफस्य ऌकारस्थो लकार आदेशो भवतु, कथं तु कृत्स्नस्य कृत्स्नो वर्ण आदेशो लभ्यते? इत्याशङ्क्योक्तम्—**एकदेशद्वारेणेति**। एकदेशविकारस्थो रेफः, तस्य विकार एकदेशविकारः। यद्वा—अत्र एकदेश ऌकारस्थो लकारः, स एव विकार एकदेशविकारः, तद्द्वारेण। तत एतदुक्तं भवति—अज्भक्तिसम्पुटितयो रेफलकारयोर्निष्कृष्य कर्तुमशक्यत्वात्समुदायस्य समुदाय आदेश इति। यदि निष्कर्षोऽशक्यक्रियः, मा भूत्तयोरुपादानम्, न पुनरेतावता सूत्रेऽनुपात्तयोः समुदाययोः स्थान्यादेशभावो विद्यते? इत्यत आह—**तथा चेति**। **एवमादय इति**। आदिशब्देन 'तासि च क्लृपः', 'ऋदुपधाच्चाक्लृपि चृतेः' 'अनवक्लृप्त्यमर्षयोः' इत्यादेर्ग्रहणम्। **कल्प्तेति**। ऊदित्त्वात्पक्षे इडभावः। अत्र लत्वस्यासिद्धत्वात् पूर्वं परस्मैपदे 'तासि च क्लृपः' इतीडभावः, अन्यत्र तु गुणे कृते रेफस्य लकारः **चिक्लृप्सतीति**। 'हलन्ताच्च' इति सनः कित्वम्।

**भावबोधिनी**

ऋकार का भी एकादेश के विकार के माध्यम से ऌकार होता है अर्थात् ऋकार का एकदेश = भाग जो रेफ है उसका भी विकार = ऌ होता है अथवा एकदेश = ऌकार का अवयव जो लकार वही विकार है उसके माध्यम से ऌकार होता है।] इसी कारण 'लुटि च क्लृपः' आदि [आदेशभूत] निर्देश उपपन्न होते हैं। उदा० कल्प्ता, कल्प्तारौ, कल्प्तारः। [कृप् + तास् + ति = डा अथवा तृच् प्रत्यय में, गुण, रपर करने पर करप्ता में लकार आदेश होता है।] क्लृप्तः। क्लृप्तवान्। [कृप् + क्त, क्तवतु परे गुणनिषेध होने से ऋकार के रेफ का ल् होकर क्लृप्तः, क्लृप्तवान् होता है।]

[यदि कृप् का सदैव लत्व ही होता है तो फिर 'कृपा' कैसे बनता है?] 'कृपा' यह शब्द तो 'कृप् का सम्प्रसारण भी होता है' ऐसा भिदादिगण में पाठ होने से [अङ् प्रत्यय और सम्प्रसारण के बाद टाप् करने पर]।

१. 'तथा'—इति मुद्रितः पाठः।

कृपणकृपीटकर्पूरादयोऽपि क्रपेरेव द्रष्टव्याः। 'उणादयो बहुलम्' (३।३।१) इति वा क्रपेरेव लत्वाभावः।

❀ बालमूललघ्वसुरालमङ्गुलीनां वा रो लमापद्यत इति वक्तव्यम् ❀ (म० भा०)। बालः, बारः। मूलम्, मूरम्। लघु, रघु। असुरः, असुलः। अलम्, अरम्। अङ्गुलिः, अङ्गुरिः।

**न्यासः**

मादीनां ग्रहणम्। तदेवं चोद्यं परिहरता यदुक्तम् 'नुड्विधिलादेशविनामेष्वृकारः प्रतिविधातव्यः' इति, तत्रावसरे प्राप्ते लादेशे प्रतिविहितम्। कल्मा कल्मारौ, कल्मार इति। तृच्, अथ वा—लुट्। चिक्लृप्सतीति। सन्, 'हलन्ताच्च' इति किस्वाद् गुणाभावः। क्लृप्तः, क्लृप्तवानिति। क्तक्तवतू।

कृपेति। एतत् कथं सिध्यति? यावतात्रापि लत्वेन भवितव्यम्? इत्यत आह—कृपेत्येतदित्यादि। एतेन 'क्रप कृपायां गतौ' इत्यस्मात् 'षिद्भिदादिभ्योऽङ्' इत्यङि तत्सन्नियोगेन च सम्प्रसारणे कृते कृपेत्येद् भवतीति दर्शयन् कृपेत्यस्य रूपस्य लाक्षणिकत्वं दर्शयति। यद्येवम्, ततः किमित्यत्र लत्वं न भवति? इत्याह—तस्य हीत्यादि। यतस्तस्य कृतसम्प्रसारणस्य क्रपेः कृपेत्येतद् रूपं भवति तस्माल्लाक्षणिकत्वम्। अतो लक्षणप्रतिपदोक्तपरिभाषयैव न गृह्यते इति न भवति लप्रसङ्गः।

कृपण-कृपीट-कर्पूरादिषु ह्यौपदेशिकमेव कृपेत्येतद्रूपम्, न लाक्षणिकम्। तथा हि 'रञ्जेः क्युन्' इति यः क्युन् विहितः, तस्मिन् बहुलवचनात् कृपेरेव विहिते कृपण इति भवति; 'कृतृकृतिभ्यः कीटन्' इति कृपेरेव कीटनि विहिते कृपीट इति भवति; 'खर्जिपिञ्जादिभ्य ऊरोलचौ' इत्यूरप्रत्यये कृते कर्पूर इति भवतीत्याह—कृपणकृपीटेत्यादि। एवं मन्यते—बहुलवचनात् क्रपेरेव क्युन् भवति, तत्र चास्य सम्प्रसारणं कृतम्, 'कृतृकृपिभ्य कीटन्' इत्यत्रापि कृपिग्रहणमपनीय क्लृपिग्रहणं करिष्यते, सम्प्रसारणं तु बहुलवचनादेव भविष्यति;

**पदमञ्जरी**

क्रपेरिति। 'क्रप कृपायाम्'। भवतु सम्प्रसारणे कृते रूपम्, तथापि रूपसामान्याद् ग्रहणप्रसङ्गः? अत आह—तस्य हीति। क्रपेरेव द्रष्टव्या इति। 'रञ्जेःक्युन्', बहुलवचनात्क्रपेरपि भवति। 'कृकृपिभ्यां कीटन्' इत्यत्रापि क्रपिरेव पठितव्यः। 'खर्जिपिञ्जादिभ्य ऊरोचलौ' क्रपेरपि भवतु सर्वत्र बहुलवचनात् सम्प्रसारणम्।

कर्पूरादय इति। आदिशब्देन कृपाणस्य ग्रहणम्। 'युधिबुधिदृशेः किच्च' इति बाहुलकात् क्रपेरपि आनच्। यद्यवश्यं बाहुलकमाश्रयणीयम्, क्रपेरपि न दोषः? इत्याह—उणादय इति।

बालेति। 'बल वल्ल संवरणे', बल्यत इति बालः। मूलमिति। 'मूल प्रतिष्ठायाम्' इत्यस्मादिगुपधलक्षणः कः। 'लङ्घिवंह्योर्नलोपश्च' इति कुप्रत्ययान्तो लघुशब्दः। अलमित्यव्ययम्। 'अङ्गेः कुलिः' अङ्गुलिः। 'अमेर्गुरी रश्च लो वा' इति नाश्रितम्।

**भावबोधिनी**

होता है। और किए गये सम्प्रसारण वाले इस 'कृप्' के लाक्षणिक = लक्षण = सूत्र द्वारा निष्पन्न हो जाने के कारण इस सूत्र में इस 'कृप्' का ग्रहण नहीं होता है। [ अतः लत्व का विषय नहीं होने से 'कृपा' बन जाता है। ]

कृपण, कृपीट, कर्पूर आदि शब्द भी क्रप् के ही देखे जाने चाहिये। अथवा 'उणादयो बहुलम्' इस सूत्र से 'क्रप्' के ही लत्व का अभाव कर लेना चाहिये।

* बाल, मूल, लघु, असुर, अलम् तथा अङ्गुलि—इनका र विकल्प से लत्व को प्राप्त करता है, ऐसा कहना चाहिए। * उदा० बालः, बारः। मूलम्, मूरम्। लघु, रघु। असुरः असुलः। अलम्, अरम्। अङ्गुलिः अङ्गुरिः। [ अतः रेफ और लकार दोनों के रूप इनमें शुद्ध हैं। ]

❀ कपिलकादीनां संज्ञाछन्दसोर्वा रो लमापद्यत इति वक्तव्यम् ❀ ( म० भा० )। कपिरकः, कपिलकः। तिल्पिलीकम्, तिर्पिरीकम्। लोमानि, रोमाणि। पांशुरम्, पांशुलम्। कर्म, कल्म। शुक्रः, शुक्लः। रलयोरेकत्वस्मरणमिति केचित्। किमिदमेकत्वस्मरणमिति ? समानविषयत्वमेव तयोः स्मर्यत इत्यर्थः ॥

**३७०७. उपसर्गस्यायतौ ॥ १९ ॥ (२३२६)**

अयतौ परत उपसर्गस्य यो रेफस्तस्य लकार आदेशो भवति। प्लायते। पलायते। अत्र योऽय-

**न्यासः**

'खर्जिपिञ्जादिभ्य ऊरोलचौ' इत्यत्रापि आदिग्रहणेन कृपिरेव ग्रहीष्यते, सम्प्रसारणं च पूर्ववदेव भविष्यतीति। यद्यपि कृपणकृपाणेत्येवमादीनि रूपाणि स्युः, तदास्य दोष इति दर्शयितुमाह—उणादयो बहुलमिति वेत्यादि।

अत्यन्तभिन्नरूपयोरभिन्नस्वभावत्वमसम्भावयन् पृच्छति—किमिदमित्यादि। समानविषयत्वमिति। अभिन्नविषयत्वमेकशब्देनात्र विवक्षितम्, न त्वभिन्नस्वभावत्वमिति दर्शयति। किमर्थं पुनः कृपिमुद्दिश्य लादेशो विधीयते, न कृपिरेवोद्दिश्येत ? गुणस्थाने लत्वमात्रं कर्तव्यम्, तच्चावश्यकर्तव्यमुपल्कारीयतीत्येवमर्थम्। तथा च—'ऋदुपधाच्चाक्लृपि चृतेः' इत्यत्र क्लृपिप्रतिषेधो न कर्तव्यो जायते। तेनैवं शक्यम्—इह ह्यचीक्लृपदिति ऋकारऌकारयोः सवर्णसंज्ञाविधानादृकारस्य विधीयमानमुरत्वं ऌकारस्यापि स्यात्। तथा च—ऌकारस्यापि ऋवर्णः प्रसज्यते, ऋकारान्तं तूपदिश्य लत्वे विधीयमाने तस्यापि ऌकारस्य लत्वं सिद्धं भवति ॥ १८ ॥

उपसर्गस्यायतौ ॥ इह द्वौ पक्षौ सम्भवतः—अयतिग्रहणं रेफविशेषणमित्येकः पक्षः, उपसर्गस्य विशेषणमिति द्वितीयः। तत्राद्ये पक्षेऽयतौ परत इत्येवमादिको वृत्तिग्रन्थ एवं नेयः—अयतौ परतो यो रेफ

**पदमञ्जरी**

कपिलकादिषु वा रस्य लः। रोमाणीति। रौतेर्मनिन्, 'रोमन् नामन् सीमन् स्तोमन् होमन् सोमन् लोमन् व्योमन् विधर्मन् पाप्मन् धामन्' इत्यत्र लोमन् सामन्' इति निपातनं नाश्रितम्। पांसुरमिति। पांसुरस्मिन्नस्तीति 'नगपांसुपाण्डुभ्यश्च' इति रः। 'कृञो मनिन्' कर्म। शुक्रः, शुक्ल इति। 'ऋजाग्र' इति निपातनं नाश्रितम्। अथ 'क्लृपू सामर्थ्ये' इत्येव कस्मान्न पठितम्, एवं हि लत्वं न विधेयं भवति ? नैतदस्ति; अचीक्लृपदिति हि न सिध्येत्। 'ऋकारऌकारयोः सवर्णविधिः' इति ऌकारस्य 'उरत्' इति अकारे कृते अचीकृपदिति स्यात्, लत्वविधौ तस्यासिद्धत्वात्पूर्वमृकारः ततो लत्वमिति सिद्धमिष्टम्। तथा चलीक्लृप्यते इति रीको पि लत्वसिद्धिर्भवति ॥ १८ ॥

उपसर्गस्यायतौ ॥ अयतौ पर इति। अत्र द्वौ पक्षौ—अयतिग्रहणं रेफविशेषणम्—अयतिपरस्य रेफस्य, स चेदुपसर्गस्येति; उपसर्गविशेषणं वा - अयतिपरस्योपसर्गस्य यो रेफ इति। तत्राद्ये पक्षे एवमन्वयः—

**भावबोधिनी**

* कपिलक आदि शब्दों का 'र' संज्ञा और छन्दस् = वेद में विकल्प से ल रूप प्राप्त करता है, ऐसा कहना चाहिये। * उदा० कपिरकः, कपिलकः। तिल्पिलीकम्, तिर्पिरीकम्। रोमाणि, लोमानि। पांशुरम्, पांशुलम्। कर्म, कल्म। शुक्रः, शुक्लः।

र और ल के एकत्व का स्मरण होता है—ऐसा कुछ लोग कहते हैं। यह एकत्व का स्मरण क्या है ? उन दोनों की समानविषयता का ही स्मरण किया जाता है, अर्थात् दोनों को एक मान लेने के कारण किसी भी एक का प्रयोग किया जा सकता है ॥ १८ ॥

'अय' परे रहते पूर्ववर्ती उपसर्ग का जो रेफ है उसका लकार आदेश होता है। उदा० प्लायते। पलायते। [ प्र + आयते, परा + आयते, दीर्घ के बाद रेफ का लत्व होता है। ] यहाँ जो सवर्णदीर्घरूप एक आदेश होता है

मेकादेश:, तस्य स्थानिवद्भावादयतेः, उपसर्गस्य च विभागे सति यद्ययतिग्रहणं रेफस्य विशेषणम्, तदा 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' ( व्या० प० ४६ ) इति एकेन वर्णेन व्यवधानेऽपि सति लत्वं भवति। तथा च पल्ययते इत्यत्रापि भवति।

उपसर्गविशेषणे त्वयतिग्रहणे सिद्धमेवैतत्सर्वं प्रतेरपि तु व्यवहितेऽपि प्राप्नोति। तत्र केषाञ्चि-द्दर्शनं भवितव्यमेव प्लत्ययत इति।

**न्यासः**

उपसर्गस्थस्तस्य लकारादेशो भवतीति। द्वितीये त्वेवं नेयः। अयतौ परतो य उपसर्गस्तस्योपसर्गस्य यो रेफस्तस्य लकारादेशो भवतीति। **प्लायते, पलायत इति।** 'अय णय' इत्यस्मादनुदात्तेत्वादात्मनेपदम्। कथमत्राद्ये पक्षे लत्वम् भवति, यावता तस्मिन् कर्तव्ये 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावेन भवि-तव्यम्, ततश्च प्रकृत्युपसर्गयोर्विभागे सत्यवर्णेन व्यवधानाद्रेफस्यायतिपरता न सम्भवति ? इत्याह—**अत्र योऽयमित्यादि। विभागे** विश्लेष इत्यर्थः। एकग्रहणं प्रत्यय इत्यत्र सङ्घाते व्यवधाने लत्वं न भवतीति प्रदर्शनार्थम्। येन हि व्यवधानमेव नाव्यवधानं तेन व्यवधाने वचनप्रामाण्याल्लत्वेन भवितव्यम्। केन व्यवधान-मेवम् ? एकेन वर्णेन। सङ्घातेन पुनर्व्यवधानमस्ति नास्ति चेति, तेन व्यवधाने न भवति। **तथा चेत्यादि।** एवमाद्ये पक्ष एकेन वर्णेन व्यवधाने लत्वं भवति वचनप्रामाण्यादित्यस्मिन्नर्थे व्यवस्थिते सति **पल्ययत** इत्यत्रापि लत्वं प्रवर्तते; अत्राप्येकेन वर्णेन व्यवधानात्। न केवलं पल्ययते इत्यत्र प्रवर्तते यत्र स्थानिवद्भावद्वारेणा-शास्त्रीयं व्यवधानम्; यत्रापि तु श्रूयमाणेनैव वर्णेन लौकिकं व्यवधानम्, तत्रापि प्रवर्तते इत्येषोऽपिशब्दस्यार्थः।

**पदमञ्जरी**

अयतौ परतो यो रेफ उपसर्गसम्बन्धी तस्येति; द्वितीये तु—अयतौ परतो य उपसर्गस्तस्य यो रेफस्तस्येति। **प्लायत इति।** अयतिरनुदात्तेत्। कथं तर्हि 'उदयति विततोर्ध्वरश्मिरज्जौ' इति परस्मैपदम् ? किमनेन वन्यगजशौचेन! यदि वा—पचाद्यजन्तादुदयशब्दादाचारे क्विपि लट्। केचित्तु 'इट कटी गतौ' इत्यत्र इकारमपि धातुं पठन्ति। यथा त्वत्र दर्शिते पक्षद्वयेऽपि दोषो न भवति, तथा क्रमेण दर्शयति—**अत्रेति। स्थानिवद्भावादिति।** 'पूर्वत्रासिद्धे न स्थानिवत्' इत्येतत्त्विह न भवति; 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इत्यपवादस्मरणात्। **यद्ययतिग्रहणं रेफस्य विशेषणमिति। अत्रेति।** कार्यित्वेन प्रधानत्वात्। **एकेन वर्णेनेति।** एकग्रहणं प्रत्यय इत्यत्र सङ्घातेन व्यवाये न भवतीति प्रदर्शनार्थम्। **तथा चेति।** एवं च कृत्वेत्यर्थः। **पल्ययत इत्यत्रापीति।** यत्र श्रूयमाणेनैकेनैव वर्णेन लौकिकं व्यवधानम्, तत्रापि प्रवर्तते। न केवलं प्लायत इत्यादौ यत्र स्थानिभावद्वारेण शास्त्रीयं तत्रैवेत्यपिशब्दस्यार्थः। अमुमेव विशेषं दर्शयितुमस्य पृथगुपन्यासः।

**भावबोधिनी**

उसका स्थानिवद्भाव हो जाने से 'अय' तथा उपसर्ग का विभाग होने पर यदि 'अयति' का ग्रहण रेफ का विशेषण होता है अर्थात् अयति परे उपसर्ग का जो रेफ उसका ल होता है, तब 'जिसका व्यवधान अनिवार्य रूप से रहता है उसके व्यवधान में भी कार्य होता है' इस परिभाषा के द्वारा एक वर्ण के व्यवधान में भी लत्व हो जाता है। [ भाव यह है प्र + अय में रेफ तथा अय् के बीच में अवर्ण का व्यवधान है किन्तु यह सर्वत्र रहता है। अतः इसे सह्य मानकर लत्व कर लेना चाहिये। ] इसीलिये—पल्ययते, [ परि + आयते, यण्, लत्व ] में भी लत्व होता है।

उपसर्ग विशेषण होने पर तो अर्थात् अयति परे रहते जो उपसर्ग उसके रेफ का लत्व होता है—ऐसा मानने पर तो अयति के ग्रहण में यह सब सिद्ध ही है किन्तु 'प्रति' उपसर्ग के [ संघात के ] व्यवधान में भी लत्व प्राप्त होता है। [ सामान्य नियम से एक वर्ण का ही व्यवधान सह्य माना जाता है। परन्तु 'उपसर्ग का रेफ' ऐसा मानने पर 'प्रति' के रेफ का भी लत्व प्रसक्त होता है। ] इसमें कुछ लोगों का मत है कि 'प्लत्ययते' में लत्व होना ही चाहिये।

**प्रथमपक्षदर्शनाभिनिविष्टास्तु प्रत्ययत इत्येव भवतीति मन्यन्ते। अपरे तु प्रतिशब्दोपसृष्टस्यायतेः प्रयोगमेव नेच्छन्ति।**

**निस्, दुस्—इत्येतयोस्तु रुत्वस्यासिद्धत्वाल्लत्वेन नैव भवितव्यम्। निरयणम्। दुरयणम्॥**

**न्यासः**

ननु च 'निरः कुषः' इत्यत्र निर इति निर्देशेन ज्ञापितमेतत्—निरिति रेफान्तमुपसर्गान्तरमस्तीति, ततश्च निलय इत्यत्र वचनस्यावकाशे सति कथम् 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् इत्युक्तम्? एवं मन्यते—नैकमुदाहरणं सामान्यलक्षणं प्रयोजयति, यदि ह्येतावत् प्रयोजनं स्यात्; निर एव ग्रहणं कुर्यादिति। एवं प्रथमं पक्षे सर्वस्य सिद्धतां प्रतिपाद्य द्वितीये पक्षे प्रतिपादयितुमाह—**उपसर्गविशेषणे त्वित्यादि।** तुशब्दोऽयमपिशब्दस्यार्थे वर्तते। न केवलं रेफविशेषणेऽयतिग्रहणे पल्ययत इत्यादि सर्वं सिद्धम्, अपि तूपसर्गविशेषणेऽपि तस्मिन् सर्वमेतत् सिद्धम्। अथ वा—तुशब्दः पूर्वस्मात् पक्षादस्य विशेषं द्योतयति। तत्र हि व्यवधानाल्लत्वं प्राप्नोतीत्येतच्चोद्यमवतरति। अतो यदेतत् प्रतिपाद्यमेतत् सर्वम्। इह त्वस्य चोद्यस्यावतार एव नास्तीति सिद्धमेवैतत्, न यत्नसाध्यमित्यर्थः। प्रतेरपि प्राप्नोतीति चोदकः। तुशब्दः पूर्वस्माद् विशेषणार्थः, पूर्वत्र प्रतेर्न प्राप्नोति; सङ्घातेन व्यवधानात्; इह तु नास्ति केनचिद् व्यवधानम्, अतः प्रतेरपि प्राप्नोतीति मन्यन्ते। **अपर इति।** द्वितीयपक्षाभिनिविष्टानामन्यतमे। **निस्दुसित्येतयोरिति।** यद्ययतिग्रहणं रेफस्य विशेषणम्, अथाप्युपसर्गस्य विशेषणम्, सर्वथा रुत्वे कृते लत्वं प्राप्नोति? इति यश्चोदयेत्, तं प्रत्याह—**निस्दुसित्यादि।** गतार्थम्॥ १९॥

**पदमञ्जरी**

ननु च 'निर कुषः', 'सुदुरोरधिकरणे' इति निर्देशाद्रेफान्तावप्युपसर्गौ स्तः, तौ वचनस्यावकाशौ इति कथं व्यवधाने भवति? उच्यते; यद्येतावत्प्रयोजनं स्यात्, 'दुरोरयतौ' इत्येव ब्रूयात्, उपसर्गग्रहणात्तु व्यवायेऽपि भविष्यति, एतच्चैकवर्णव्यवधानेनाप्युपपन्नमिति न प्रत्ययत इत्यत्र प्रसङ्गः। **उपसर्गविशेषणे त्विति।** श्रुतत्वादिति भावः। **सिद्धमेवैतत्सर्वमिति।** 'येन नाव्यवधानमित्यादि न कश्चित् यत्नोऽस्मिन्पक्षे' इत्येवशब्दस्यार्थः। **प्रतेरपि तु प्राप्नोतीति।** पूर्वस्मिन्पक्षे सङ्घातेन व्यवायान्न प्राप्नोति, अत्र तु प्राप्नोतीत्यमुं विशेषं तु शब्दो द्योतयति। **प्रथमपक्षदर्शनाभिनिविष्टास्त्विति।** प्रथमपक्षस्य या दर्शना = परेभ्यः प्रतिपादना, तत्राभिनिविष्टाः = तत्परायणा इत्यर्थः। **अपरे त्वित्यादि।** आप्तपर्यायः प्रत्ययितशब्द इतच्प्रत्ययान्तः, सञ्जातप्रत्ययाः प्रत्ययिता इति।

**निस्दुस् इत्येतयोस्त्विति।** सकारान्तविषयो ग्रन्थः, रेफान्तयोस्तु भवितव्यमेव लत्वेन॥ १९॥

**भावबोधिनी**

[ ऊपर दो पक्ष दिये गये हैं—(१) अयति जिससे परे है ऐसे रेफ का लत्व होता है यदि वह उपसर्ग का हो। (२) अयति परे रहते जो उपसर्ग उसका जो रेफ उसका लत्व होता है। इनमें ] प्रथम पक्ष में अभिनिवेश करने वाले 'प्रत्ययते' यही होता है, ऐसा मानते हैं। [ लत्व नहीं करते हैं। ]

तीसरे वे विद्वान् हैं जो 'प्रति' इस उपसर्ग से युक्त 'अयति' धातु का प्रयोग करना ही नहीं चाहते हैं।

निस् तथा दुस्—इन उपसर्गों के रुत्व के असिद्ध हो जाने के कारण लत्व नहीं ही होना चाहिए। उदा० निरयणम्। दुरयणम्। [ निस्, दुस्—ये सकारान्त भी हैं और रेफान्त भी। जब सकारान्तों का रुत्व करके 'अय' धातु के साथ प्रयोग होता है। तब रुत्व असिद्ध होने से लत्व नहीं हो पाता है। किन्तु जब मूलतः रेफान्तों का प्रयोग है तब तो लत्व होने में बाधा नही होनी चाहिये, ऐसा पदमञ्जरीकार मानते हैं। ]॥ १९॥

**३७०८. ग्रो यङि ॥ २० ॥ (२६३९)**

**'गॄ' इत्येतस्य धातो रेफस्य लकार आदेशो भवति यङि परतः। निजेगिल्यते, निजेगिल्येते, निजेगिल्यन्ते।**

**भावगर्ह्यायां ग्रो यङ्विहितः[1]।**

**केचित्—'ग्रः' इति गिरतेर्गृणातेश्च सामान्येन ग्रहणमिच्छन्ति। अपरे तु—गिरतेरेव न गृणातेः। गृणातेर्हि यङेव नास्ति; अनभिधानादिति॥**

**यङीति किम्? निगीर्यते॥**

**न्यासः**

**ग्रो यङि॥ निजेगिल्यत इति।** 'ऋत इद्धातोः' इतीत्वम्, द्विर्वचनम्, अभ्यासकार्यम्।

**भावगर्ह्यायां ग्रो यङ् विहित इति।** 'लुपसदचर' इत्यादिना। **गिरतेरिति।** 'गॄ निगरणे'—इत्येतस्य तौदादिकस्य।

**गृणातेरिति।** 'गॄ शब्दे'—इत्यस्य क्रैयादिकस्य। **सामान्येन ग्रहणमिच्छन्तीति।** विशेषानुपादानात्। **अपरे स्वित्यादि।** कथं पुनः सामान्योपादानेऽपि गिरतेरेव ग्रहणं लभ्यते? इत्याह—**गृणातेरित्यादि।** किं कारणं यङेव नास्ति? इत्याह—**अनभिधानादिति।**

**निगीर्यत इति।** 'सार्वधातुके यक्', 'हलि च' इति दीर्घः॥ २०॥

**पदमञ्जरी**

**ग्रो यङि॥** उदाहरणे 'ऋत इद्धातोः' इतीत्वम्, रपरत्वम्, 'हलि च' इति दीर्घस्यासिद्धत्वात्पूर्वमनेन लत्वम्, ततोऽपहृतनिमित्तत्वाद्दीर्घाभावः।

**गिरतेः, गृणातेश्चेति।** निगरणार्थस्य, शब्दार्थस्य च। **सामान्येनेति।** विशेषानुपादानात्। अपरे तु गिरतेरेव ग्रहणमिच्छन्तीत्यनुषङ्गः। कः पुनरत्र हेतुः? इत्यत **आह—गृणातेस्त्विति।** तु ह्यर्थे। **निगीर्यत इति।** यक्॥ २०॥

**भावबोधिनी**

'गॄ'√इस धातु के रेफ का लकार आदेश यङ् परे रहते होता है। उदा० निजेगिल्यते, निजेगिल्येते, निजेगिल्यन्ते।

भाव = क्रिया की गर्हा = निन्दा में [ '"लुप सद चर०' सूत्र से ] यङ प्रत्यय किया जाता है। [ द्वित्व, अभ्यास कार्य, गुणादि करने के बाद नि + जेगिर् + ये में लत्व होता है। ]

कुछ लोग—'ग्रः' यह निर्दि गॄ = निगरणे ( धा० पा० १४३५ ) और गृणाति गॄ = शब्दे ( धा० पा० १५२२ ) दोनों का सामान्य रूप से ग्रहण मानते हैं।

दूसरे विद्वान् केवल गिरति = 'गॄ निगरणे' का ही ग्रहण मानते हैं, न कि गृणाति = गॄ शब्दे का। कारण यह है कि गृणाति से यङ् ही नहीं होता है क्योंकि अनभिधान है।

यङ् परे रहते—इसका क्या फल है? निगीर्यते। [ यहाँ यक् है यङ् नहीं। अतः लत्व नहीं होता है। ] ॥ २०॥

---

१. 'इत्वे कृते रपरत्वे च दीर्घस्यासिद्धत्वान्नित्यत्वाच्च लत्वे कृते तन्निमित्तत्वाभावाद्दीर्घत्वं न भवति'—इत्यधिकमेकस्मिन्पुस्तके।

## ३७०९. अचि विभाषा ॥ २१ ॥ (२५४१)

**अजादौ प्रत्यये परतो ग्रो रेफस्य विभाषा लकारादेशो भवति । निगिरति, निगिलति । निगरणम्, निगलनम् । निगारकः, निगालकः ।**

इयं तु व्यवस्थितविभाषा । तेन 'गल' इति प्राण्यङ्गे नित्यं लत्वं भवति; 'गर' इति विषे नित्यं न भवति । निगार्यते, निगाल्यत इति । णिलोपस्य स्थानिवद्भावाद् 'अचि विभाषा' इति लत्वविकल्पः ।

'पूर्वत्रासिद्धे न स्थानिवत्' ( पु० वृ० ११२ ) इति एतदपि सापवादमेव; 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' ( म० भा० ) इति । अन्तरङ्गत्वाद्वा कृते लत्वविकल्पे णिलोपो भविष्यति । गिरौ, गिर

### न्यासः

**अचि विभाषा ॥ गिरतीति ।** निगरणार्थस्य रूपम् । **निगरणमिति ।** ल्युट् । **निगारक इति ।** ण्वुल् । **निगार्यत इति ।** अत्र यदि णिलोपे कृते विकल्पो न सिध्यत्यचः परस्याभावात् ? इत्येतच्चोद्यमपाकर्तुमाह—**निगार्यते, निगाल्यत इति ।** स्थानिवद्भावस्तु पूर्ववत् ।

स्यादेतत् । नास्त्येवात्र स्थानिवद्भावः, 'पूर्वत्रासिद्धे न स्थानिवत्' इति प्रतिषेधात् । इत्यत आह—**पूर्वत्रासिद्ध इत्यादि ।** अपवादः = दोषः, सह तेन वर्तत इति सापवादम् । दोष एवायमस्याः परिभाषाया इत्यर्थः । अपिशब्दः समुच्चये । न केवलं तच्चोद्यं सापवादम्, अपि तु 'पूर्वत्रासिद्धे न स्थानिवत्' इत्येतदपि वचनं सापवादमेव । तदेव सापवादत्वमाप्तवचनेन प्रतिपादयितुमाह—**तस्येत्यादि ।** तत्र संयोगादिलोपविधावयं दोषः—काक्यर्थः, वास्यर्थ इति; अत्रासति यणादेशस्य स्थानिवद्भावे 'स्कोः संयोगाद्योः' इति ककारसकारयोर्लोपः प्रसज्येत । लत्वविधौ—निगार्यते, निगाल्यत इति; णिलोपस्य सति स्थानिवद्भावे विकल्पेन लत्वं न स्यात् । णत्वविधौ—प्रहिणोति प्रमीणित इति; अत्र गुणेत्त्वयोरसति स्थानिवद्भावे 'हिनुमीना' इति णत्वं

### पदमञ्जरी

**अचि विभाषा ॥** धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्प्रत्ययः सन्निधापितः, तस्याचा विशेषणात्तदादिविधिर्विज्ञायते, यदाह—**अजादौ प्रत्यये इति । निगिरतीति ।** तुदादित्वाच्छः, तस्य ङित्त्वादसति गुणे इत्वम् । **णिलोपस्य स्थानिवद्भावादिति ।** पदस्य लत्वविधानादन्तरङ्गत्वाभावात् 'पूर्वत्रासिद्धम्' इति च लत्वस्यासिद्धत्वात्पूर्वं णिलोप एव भवतीति भावः । प्रत्ययलक्षणमप्यत्र शक्यं वक्तुम् । न च वर्णाश्रयत्वम्; 'अजादौ प्रत्यये' इत्युक्तत्वात् ।

कथं पुनः स्थानिवद्भावः, यावता 'पूर्वत्रासिद्धे न स्थानिवत्' इति पठ्यते ? अत आह—**पूर्वत्रासिद्ध**

### भावबोधिनी

अजादि प्रत्यय परे रहते 'गॄ' के रेफ का विकल्प से लकार आदेश होता है । उदा० निगिरति, निगिलति । निगरणम्, निगलनम् । निगारकः निगालकः । [ नि पूर्वक 'गॄ निगरणे' इस तुदादिगणीय से, श = अ ल्युट् = अन और ण्वुल् = अक परे रहते रेफ का ल विकल्प से होता है । ]

यह तो व्यवस्थित विभाषा है । इस कारण—गलः = गला इस प्राण्यंग अर्थ में नित्य ही लत्व होता है । 'गरः = विष अर्थ में नित्य ही लत्व नहीं होता है । निगार्यते, निगाल्यते । [ नि गॄ + णिच् + यक् + लट् में ] णिलोप का स्थानिवद्भाव हो जाने से इस 'अचि विभाषा' सूत्र से विकल्प से लत्व होता है ।

'पूर्वत्रासिद्ध के विषय में स्थानिवद्भाव नहीं होता है' यह वचन भी सापवाद ही है' क्योंकि 'इस वचन का दोष संयोगादिलोप, लत्व और णत्व विषय में होता है ।' अथवा अन्तरङ्ग होने से लत्व का विकल्प कर देने पर णिलोप होता है । [ अतः अच् परे मिल जाने से लत्व में बाधा नहीं है । ] 'गिरौ गिरः' [ इन द्विवचनान्त और

इत्यत्र 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति लत्वं न भवति। गिरतिर्वा लत्वविधावधिकृतः; गृणातेरेतद्रूपम् ॥

**३७१०. परेश्च घाङ्कयोः ॥ २२ ॥ (३२६२)**

**परि इत्येतस्य यो रेफस्तस्य घशब्देऽङ्कशब्दे च परतो विभाषा लकार आदेशो भवति। परिघः, पलिघः। पर्यङ्कः, पल्यङ्कः।**

**घ इति स्वरूपग्रहणमत्रेष्यते, न तरप्तमपौ इति।**

**न्यासः**

न प्राप्नोति। **अन्तरङ्गत्वाद्वेत्यादि।** परिहारान्तरम्। अन्तरङ्गत्वं तु लत्वविकल्पस्य वर्णाश्रयत्वात्। णिलोपस्य तु बहिरङ्गत्वम्; आर्धधातुकाश्रयत्वात्।

अथ गिरौ, गिरः—इत्यत्र लत्वं कस्मान्न भवति? इत्याह—**गिरौ, गिर इत्यादि।** इतिकरणो हेतौ। धातोः स्वरूपेण ग्रहणे सति तत्प्रत्यये धातोरित्येव यः प्रत्ययो विहितस्तत्र तत् कार्यं विज्ञायते। तस्माद् गिरौ, गिर इत्यत्र न भवति। न ह्यत्र धातोरित्येव गिरतेः क्विबन्तादौजसौ विहितौ, किं तर्हि? प्रातिपदिकाधिकारात् ॥ २१ ॥

**परेश्च घाङ्कयोः ॥ परिघ इति।** परि उपपदे हन्तेर्धातोरप्प्रत्ययः। हलोपः, घत्वञ्च निपात्यते, उपपदसमासः। **पर्यङ्क इति।** 'अकि लक्षणे'—इत्यस्मात् पचाद्यच्, 'हलश्च' इति वा घञ्, प्रादिसमासः—परिगतोऽङ्कः।

ननु 'घ' इति तरप्तमपोरपीयं संज्ञा, 'स्वं रूपं शब्दस्य' इति स्वरूपग्रहणं प्रतिषिध्यते, तत् किमिति घरूप एव लत्वमुदाह्रियते? इत्याह—**घ इति स्वरूपग्रहणमत्रेति।** एवं मन्यते—अङ्क इत्यनेनासंज्ञाशब्देन साहचर्याद् घ इत्यस्याप्यसंज्ञाशब्दस्यैव ग्रहणमिति।

**पदमञ्जरी**

**इति। कः पुनरस्यापवादः? इत्यत आह—तस्य दोष इति। अन्तरङ्गत्वाद्वेति।** 'पदस्य' इत्यधिकारात् कालतोऽन्तरङ्गत्वाभावेऽप्यन्तर्भूताजाद्यपेक्षत्वाल्लत्वमन्तरङ्गम्, बहिर्भूतयगपेक्षत्वात्तु णिलोपो बहिरङ्ग इति भावः। **गिरौ, गिर इति।** विस्पष्टार्थम् ॥ २१ ॥

**परेश्च घाङ्कयोः ॥ परि घ इति।** 'परौ घः' इत्यप्, हन्तेष्टिलोपः, घत्वं च। **पर्यङ्क इति।** 'अकि लक्षणे' पचाद्यच् 'हलश्च' इति घञ्, चाद घश्च।

**भावबोधिनी**

बहुवचन में अजादि प्रत्यय औ, जस् परे होने पर लत्व विकल्प की शंका नहीं करनी चाहिये, क्योंकि ] 'धातोः' के स्वरूपग्रहण में अर्थात् धातु इसको मान कर जो प्रत्यय होता है उस प्रत्यय के परे रहते ही वह कार्य समझना चाहिये।' इस वचन से लत्व नहीं होता है। [ क्योंकि यहाँ तो औ, जस् ये प्रत्यय 'प्रातिपदिकात्' से किये जाते हैं 'धातोः' से नहीं। इससे तो क्विप् किया जा चुका है। ] अथवा 'गॄ निगरणे' यह ( तुदादिगणीय ) धातु ही लत्व की विधि में विषय बनती है, और 'गिरौ गिरः' आदि तो गृणाति ( गॄ शब्दे—इस क्र्यादिगणीय ) का ही रूप है। [ अतः लत्व का विषय न होने से दोष नहीं है। ] ॥ २१ ॥

'परि' इसका जो रेफ उसका 'घ' शब्द परे और 'अङ्क' शब्द परे रहते विकल्प से लकार आदेश होता है। उदा० पलिघः, परिघः। [ परि पूर्वक हन् धातु से 'परौ घः' सूत्र से अप् प्रत्यय, टिलोप और ह का घ—ये निपातित होते हैं—परि + घ, विकल्प से लत्व होता है। ] पर्यङ्कः, पल्यङ्कः। [ परि पूर्वक 'अकि' लक्षणे' धातु से पचादि मानकर अच् प्रत्यय, इदित् होने से नुम्, अनुस्वार, परसवर्ण होता है। परिगतो अङ्कः इस अर्थ में समास के बाद यण्, लत्वविकल्प होता है। ]

'घ' यह स्वरूप ही यहाँ लिया जाता है न कि 'तरप्तमपौ घः' सूत्र से घ संज्ञक = तरप् तमप्। [ यह भाष्यकार की इष्टि है। ]

※ योगे चेति वक्तव्यम् ※ ( म० भा० ) । परियोगः, पलियोगः ॥

**३७११. संयोगान्तस्य लोपः ॥ २३ ॥ (५४)**

संयोगान्तस्य पदस्य लोपो भवति । गोमान् । यवमान् । कृतवान् । हृतवान् ।
इह श्रेयान्, भूयान्—इति रुत्वं परमप्यसिद्धत्वात् संयोगान्तस्य लोपं न बाधते ।
जश्त्वे तु नाप्राप्ते तदारभ्यत इति तस्य बाधकं भवति—यशः, पय इति ।

### न्यासः

**योगे चेति वक्तव्यमिति ।** योगशब्दे च परतः परविकल्पेन लत्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—चकारोऽनुक्तसमुच्चयार्थः क्रियते, तेन योगेऽपि भविष्यतीति ॥ २२ ॥

**संयोगान्तस्य लोपः ॥ संयोगान्तस्येति**—संयोगोऽन्तो यस्य तत् तथोक्तम् । अन्तग्रहणं विस्पष्टार्थम् । 'पदस्य' इति हि वर्तते, तत्र संयोगेन पदे विशिष्यमाणे 'येन विधिस्तदन्तस्य' इत्येव संयोगान्तता पदस्य लभ्यते । **गोमानिति ।** हल्ङ्यादिलोपे कृतेऽलोऽन्त्यस्य लोपः, 'अत्वसन्तस्य चाधातोः' इति दीर्घः । श्रेयान्; भूयानित्यत्र संयोगान्तलोपो न प्राप्नोति, परत्वाद्रुत्वेन बाध्यत इति यो मन्येत, तं प्रत्याह—**श्रेयान्, भूयानित्यादि ।**

यदि तर्हि परमपि रुत्वमसिद्धत्वात् संयोगान्तलोपस्य बाधकं न भवति, एवं सत्यत एव हेतोर्जश्त्वस्यापि बाधकं न स्यात्, ततश्च यशः, पय इति जश्त्वमेव स्यात्, न रुत्वम् ? इत्यत आह—**जश्त्वे त्वित्यादि ।** संयोगान्तलोपे हि प्राप्ते चाप्राप्ते च रुत्वमारभ्यते—श्रेयानित्यादौ प्राप्ते, पय इत्यत्र त्वप्राप्त इति युक्तं यद्रुत्वं न बाधते । जश्त्वे तु सर्वत्र प्राप्त एव तदारभ्यते । तस्माद् बाधकलक्षणयोगाद् रुत्वं जश्त्वस्य बाधकं भवत्येव । श्रेयानिति—'प्रशस्यस्य श्रः' इतीयसुनि श्रभावः, 'आद् गुणः', 'सान्तमहतः' इति दीर्घः । भूयानिति—'बहोर्लोपो भू च बहोः' इतीयसुनि ईकारस्य लोपः, बहोश्च भूभावः ।

### पदमञ्जरी

**च इति स्वरूपग्रहणमत्रेष्यत इति ।** इष्टिरेवेयम् । परियोगः, पर्यनुयोगः ॥ २२ ॥

**संयोगान्तस्य लोपः ॥ इह श्रेयान्, भूयानिति** संयोगान्तलोपो न प्राप्नोति, परत्वाद्रुत्वेन बाध्यमानत्वात् ? इत्याशङ्क्याह—**इहेति ।**

यथैव तर्हि रुत्वमसिद्धत्वात्संयोगान्तलोपं न बाधते, तथा जश्त्वमपि न बाधेत; ततश्च पयः, यश इति जश्त्वमेव स्याद् ? अत आह—**जश्त्वे त्विति ।** संयोगान्तलोपे हि प्राप्तेऽप्राप्ते च रुत्वमारभ्यते—श्रेयानित्यादौ प्राप्ते, पय इत्यादौ त्वप्राप्ते । जश्त्वे तु सर्वत्र प्राप्ते एव । तस्माद्येननाप्राप्तिन्यायेन जश्त्वमेव बाध्यते, न संयोगान्तलोपः ।

### भावबोधिनी

* योग शब्द परे रहते भी 'परि' का विकल्प से लत्व होता है ऐसा कहना चाहिये । * उदा० परियोगः, पलियोगः ॥ २२ ॥

संयोग जिसके अन्त में है ऐसे पद का लोप होता है । [ 'अलोऽन्त्यस्य' इस परिभाषा के कारण केवल अन्त्य वर्ण का लोप होता है । ] उदा० गोमान् । यवमान् । [ गो + मतुप्, यव + मतुप्, सु प्रत्यय, नुम् आगम करने पर—गोमन्त् + सु, यवमन्त् + सु, 'हल्ङ्यादि' सूत्र से नु का लोप कर देने के बाद संयोगान्त पद के अन्त्य वर्ण त् का लोप होता है ] कृतवान । हृतवान् । [ कृ + क्तवतु, हृ + क्तवतु में भी सु, नुम्, सुलोप, संयोगान्तलोप आदि होता है । ]

[ ससजुषोः रुः ( ८।२।६६ ) से होने वाला रुत्व परवर्ती होने के कारण संयोगान्तलोप का बाध कर लेगा । तब श्रेयान् आदि शब्द रूप कैसे बनेंगे ? ] श्रेयान्, भूयान् [ श्रेयान्स् + सु, भूयान्स् + सु अवस्था में सुलोप के बाद ] परवर्ती भी रुत्व असिद्ध हो जाने के कारण संयोगान्तलोप का बाध नहीं करता है, लोप ही होता है ।

दध्यत्र, मध्वत्र—इत्यत्र तु यणादेशस्य बहिरङ्गलक्षणस्यासिद्धत्वात् संयोगान्तलोपो न भवति ॥

**३७१२. रात्सस्य ॥ २४ ॥ (३८०)**

**संयोगान्तपदस्य यो रेफस्तस्मादुत्तरस्यान्तस्य सकारस्य लोपो भवति। गोभिरक्षाः। प्रत्यञ्चमत्साः ( ऋ० १०।२८।४ )। क्षरतेः, त्सरतेश्च लुङि सिचश्छान्दसत्वादीडभावः; 'बहुलं छन्दसि' (७।३।९७) इति वचनात्। दीर्घे सति रूपमेतत्।[1]**

**मातुः, पितुरिति—'ऋत उत्' ( ६।१।१११ ) इति उत्त्वे कृते रपरत्वे च सति 'रात्सस्य' इति सलोपः।**

**न्यासः**

अथ दध्यत्र, मध्वत्रेत्यत्र संयोगान्तलोपः कस्मान्न भवति? इत्याह—**दध्यत्रेत्यादि**। बहिरङ्गत्वं यणादेशस्य द्विपदाश्रयत्वात्। संयोगान्तलोपस्य त्वेकपदाश्रयत्वादन्तरङ्गत्वम्। पदस्येति किम्? गोमन्तौ, गोमन्तः ॥ २३ ॥

**रात्सस्य ॥ संयोगान्तस्य पदस्येत्यादि**। अत्र संयोगान्तं पदं रेफस्य विशेषणम्, रेफोऽपि सकारस्य। संयोगान्तस्य पदस्य योऽवयवो रेफस्तस्मादुत्तरो यः सकारस्तस्यालोऽन्त्यस्य लोपो भवति। **अक्षाः, अत्सा इति**। 'क्षर सञ्चलने', 'त्सर चछद्मगतौ', लुङ्, 'अतो ल्रान्तस्य' इति वृद्धिः, तिपो हल्ङ्यादिलोपः, सिचः सकारस्याप्यनेन, अडागमः, रेफस्य विसर्जनीयः।

ननु चैतत् पूर्वेणैव सिद्धम्, तत् किमर्थमिदमारभ्यते? इत्याह—**सिद्ध इत्यादि। रात् सस्यैवेति** नियमस्य स्वरूपं दर्शयति। रादेव सस्य—इत्येष तु विपरीतनियमोऽत्र नाशङ्कनीयः; उरःप्रभृतिषु पुमानिति

**पदमञ्जरी**

**दध्यत्रेत्यादि**। यणादेशो हि द्विपदाश्रयत्वाद्बहिरङ्गः, संयोगान्तस्य लोपस्तु एकपदाश्रयत्वादन्तरङ्गः। अन्तग्रहणं शक्यमकर्तुम्। 'पदस्य' इति वर्त्तते, संयोगेन हि पदे विशेष्यमाणे तदन्तविधिना 'संयोगान्तस्य' इति लभ्यत एव ॥ २३ ॥

**रात्सस्य ॥ संयोगान्तस्य पदस्येत्यादि**। संयोगान्तस्य पदस्य योऽवयवो रेफः, तस्मादुत्तरस्य सकारस्य लोपो भवति, तदेव पदं प्रत्यलोऽन्त्यस्येत्यर्थः। **अक्षाः, अत्सा इति**। 'क्षर सञ्चलने' 'त्सर छद्मगतौ'। **रात्सस्यैवेति**। रादेव सस्य नान्यतः, श्रेयानित्यादौ—एवं तु नियमो न भवति; उरः प्रभृतिषु पुमानिति

**भावबोधिनी**

[ यदि ऐसा है तब तो इसी प्रकार जश्त्व ( ८।२।३९ ) का भी बाधक नहीं होगा। जिससे 'यशः', 'पयः' आदि में जश्त्व ही होगा रुत्व नहीं होगा? ] जश्त्व की तो अवश्य प्राप्ति रहने पर रुत्व विधायक शास्त्र आरम्भ किया है अर्थात् जहाँ-जहाँ रुत्व प्राप्त है वहाँ-वहाँ जश्त्व भी प्राप्त है, अतः रुत्व जश्त्व का बाधक बनता है। [अन्यथा रुत्वविधान व्यर्थ हो जायगा। ]

दध्यत्र, मध्यत्र—इनमें तो बहिरङ्ग यणादेश के असिद्ध हो जाने से संयोगान्त लोप नहीं होता है। [चूंकि यणादेश दो पदों के दो वर्णों पर आश्रित है और संयोगान्तलोप एक पद पर। अतः लोप की दृष्टि में यण् असिद्ध है। 'यणः प्रतिषेधो वाच्यः' इस वार्तिक से भी लोप का वारण किया जाता है। ] ॥ २३ ॥

संयोगान्त पद का जो रेफ उससे उत्तरवर्ती अन्त्य सकार का लोप होता है। उदा० गोभिरक्षाः। प्रत्यञ्चमत्साः। [ क्षर्√ और त्सर्√ से लङ्, तिप् सिच् = स्, अट्, 'अतो ल्रन्तस्य' से वृद्धि—अक्षार् स् + ति, अ त्सार् + स् ति, इलोप, त् लोप—अक्षार् स् अत्सार् स्, सलोप, रेफ का विसर्ग—यही लिखते हैं— ] क्षर√ तथा त्सर√ से लुङ् में सिच् को छान्दसे ईट् आगम का अभाव 'बहुलं छन्दसि' ( ७।३।९७ ) सूत्र से होता है। ]

दीर्घ होने पर यह रूप बनता है।

---

१. इदं वाक्यं प्रक्षिप्तं प्रतीयते, प्रकृतेऽस्यार्थस्यावश्यकताऽभावात्।

**सिद्धे सत्यारम्भो नियमार्थः—रात्सस्यैव लोपो भवति, नान्यस्येति। ऊर्जेः—क्विप्, ऊर्क्। मृजेर्लङि—अमार्ट् [न्यमार्ट्] ॥**

## ३७१३. धि च ॥ २५ ॥ (२२४८)

**धकारादौ प्रत्यये परतः सकारस्य लोपो भवति। अलविध्वम्, अलविढ्वम्। अपविध्वम्, अप-**

**न्यासः**

कृतसंयोगान्तस्य लोपस्य पुम्स्शब्दस्य पाठात्। न हि विपरीतनियमे तस्य संयोगान्तलोप उपपद्यते। **ऊर्गिति।** 'ऊर्ज बलप्राणनयोः', 'भ्राजभ्रास' इत्यादिना क्विप्। अत्र नियमाज्जकारस्य लोपो न भवति, तस्मिन्नसति 'चोः कुः' इति कुत्वम्—जकारस्य गकारः, 'वावसाने' इति चर्त्वम्—ककारः। **न्यमार्डिति।** 'मृजू शुद्धौ', अदादित्वाच्छपो लुक्, तिपो हल्ङ्यादिलोपः, 'मृजेर्वृद्धिः', 'व्रश्च' इत्यादिना षत्वम्, तस्य च जश्त्वम्—डकारः, तस्यापि चर्त्वम्—टकारः ॥ २४ ॥

**धि च ॥ अलविध्वम्, अलविढ्वमिति।** लुङ्, च्लेः सिच्, सस्य 'धि च' इति लोपः, 'विभाषेटः' इति पक्षे मूर्धन्यः। **तद्यत्रेत्यादिना** सति सकारलोपे 'यदिष्टं प्राप्नोति तद् दर्शयति। असति हि सकारलोपे सिचः 'आदेशप्रत्यययोः' इति षत्वे कृते 'झलां जश्झशि' इति जश्त्वे च डकारे 'ष्टुना ष्टुः' इति धकारस्य

**पदमञ्जरी**

कृतसंयोगान्तलोपस्य पाठात्। **ऊर्गिति।** 'ऊर्ज बलप्राणनयोः', 'भ्राजभास' इत्यादिना क्विप्। अत्र नियमाज्जकारस्य लोपाभावे 'चोः कुः' इति कुत्वम्—गकारः, 'वावसाने' इति चर्त्वम्। **न्यमार्डिति।** 'मृजू शुद्धौ' अदादिः, तिपो हल्ङ्यादिलोपः, 'मृजेर्वृद्धिः', व्रश्चादिना षत्वम्, जश्त्वचर्त्वे ॥ २४ ॥

**धि च ॥** 'इतः प्रभृति सिचः सकारस्य लोपः' इति वक्ष्यति, ततश्च सिचा प्रत्यय आक्षिप्यते, तस्य धकारेण विशेषणात्तदादिविधिर्विज्ञायते, इत्याह—**धकारादौ प्रत्यय इति। भाष्यकारमते** तु धकारे पर इति द्रष्टव्यम्। **अलविढ्वमिति।** लुङ्, च्लेः सिच्, इट्, सिचो लोपः, 'विभाषेटः' इति पक्षे मूर्धन्यः।

**भावबोधिनी**

**विमर्श—**'दीर्घे सति रूपमेतत्' यह वाक्य अनावश्यक और अप्रासङ्गिक प्रतीत होता है। यदि दीर्घ आ को वृद्धि का पर्याय मान लें तो दीर्घ होने पर = वृद्धि होने पर यह रूप होता है—ऐसी व्याख्या करके संगति बैठायी जा सकती है। अन्यथा 'अतो ल्रान्तस्य' से वृद्धि होने में कोई बाधा नहीं दिखाई देती है।

(अनु०) मातुः, पितुः—इनमें [ मातृ + ङस्, पितृ + ङस् = अस् में ] 'ऋत उत्' सूत्र से ऋ और अ दोनों का उत्व और रपर कर देने पर मातुर् स्, पितुर् स् 'रात्सस्य' से स का लोप, [ रेफ का विसर्ग ] होता है।

[ संयोगान्तलोप से ही सिद्ध रहते इस प्रस्तुत सूत्र का आरम्भ करना नियम के लिए है—'रेफ से परे स्' का ही लोप होता है अन्य किसी का नहीं।' इसलिये उर्ज् √ धातु से क्विप्—ऊर्क् [ में रेफ से परे क् लोप नहीं होता है। इसी प्रकार ] अकाट्। [ मृजू इस अदादिगणीय धातु के लङ्, प्रथमपुरुष एकवचन के रूप में 'ट्' का लोप नहीं होता है। यदि यह नियमार्थ सूत्र नहीं होता तो उक्त उदा० में भी संयोगान्त लोप प्रसक्त होने लगता। ] ॥२४॥

धकारादि प्रत्यय परे रहते सकार का लोप होता है। उदा० अलविध्वम्, अलविढ्वम्। अपविध्वम्, अपविढ्वम्। [ लूञ् तथा पुञ् धातुओं से लुङ् आत्मनेपद मध्यमपुरुष बहुवचन में ध्वम् प्रत्यय, च्लि का सिच् = स्, इट्, गुण अवादेश अलव् इस् ध्वम्, स का लोप् 'विभाषेटः' सूत्र से वैकल्पिक ढत्व होने से दो-दो रूप हैं। ] यदि इनमें सकार का लोप नहीं होता तो सिच् के सकार का [ 'आदेशप्रत्यययोः' सूत्र से ] षत्व और [ ष का ] जश्त्व करने पर 'विभाषेटः' इससे मूर्धन्य = ढत्व के अभावपक्ष में भी धकार नहीं सुनाई देता अर्थात् जश्त्व से ढ्वम् और ष्टुत्व से धकार का ढकार हो जाने से दोनों में ढकार ही सुनाई देगा। अतः सलोप करके धकार वाला रूप बनाना आवश्यक है। ]

**विढ्वम्।** यद्यत्र सकारलोपो न स्यात्, सिचः षत्वे जश्त्वे च 'विभाषेटः' ( ८।३।७९ ) इति मूर्द्धन्याभावपक्षेऽपि न धकारः श्रूयेत।

**इतः प्रभृति सिचः सकारस्य लोप इष्यते।** इह न भवति—चकाद्धि पलितं शिर इति। तथा पयो धावतीत्येवमादावपि न भवति। सग्धिः ( वा० सं० १९।९ ) बब्धामिति ( नि० ५।१२ ) छान्दसो वर्णलोपः।

**न्यासः**

ष्टुत्वे ढकारेण भवितव्यम्, ततश्च मूर्धन्याभावपक्षेऽपि धकारो न श्रूयते। विभाषाग्रहणं तु सिद्धं लिडर्थं लिङर्थंञ्च स्यात्। तस्मादमूर्धन्यपक्षे धकारस्य श्रवणं यथा स्यादिति लोपो विधीयते।

**इतः प्रभृति सिचः सकारस्य लोप इष्यत इति।** स च 'अचि विभाषा' इत्यतो विभाषाग्रहणानुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच्च लभ्यते। **चकाद्धीति।** 'चकासृ दीप्तौ', लोट्, सिप् सेर्ह्यपिच्च' इति हिरादेशः, 'हुझल्भ्यो हेर्धिः' इति हेर्धिभावः, पूर्ववच्छपो लुक्, पूर्ववज्जश्त्वम्—सकारस्य दकारः। **पयो धावतीति।** पयः शब्दस्य रुत्वम्, 'हशि च' इत्युत्वम्, 'आद् गुणः'। यदीतः प्रभृति सिचो लोप इष्यते, सग्धिः, बब्धामित्यत्र 'झलो झलि' इति सकारस्य लोपो न प्राप्नोतीति चोद्यमाशङ्क्याह—**सग्धिर्बब्धामित्यादि।** 'अद भक्षणे', स्त्रियां क्तिन्, 'बहुलं छन्दसि' इति घस्लादेशः, 'घसिभसोर्हलि च' इत्युपधालोपः, सकारस्य 'बहुलं छन्दसि' इति च्छान्दसो लोपः। क्वचिदन्यदेवोच्यते। एषोऽपि बहुलस्यार्थं इष्यते। 'झषस्तथोर्धोऽधः' इति तकारस्य धत्वम्, पूर्ववज्जश्त्वम्—धकारस्य गकारः। समाना ग्धिरिति विशेषणसमासः, 'समानस्य च्छन्दसि' इति सभावः। बब्धामिति—'भस भर्त्सनदीप्त्योः', लोट्, तस्य लोटो लङ्वत्' इत्यतिदेशात् तसस्ताम्, जुहोत्यादित्वाच्छपः श्लुः, 'श्लौ' इति द्विर्वचनम्, पूर्ववदुपधासलोपौ, पूर्ववदेव तकारस्य धत्वञ्च, भकारस्य बकारः, 'अभ्यासे चर्च' इति जश्त्वम्। एवमिदं तावत् श्लोकवार्त्तिककारस्याभिमतं दर्शितम्।

**पदमञ्जरी**

**धकारो न श्रूयेतेति।** ष्टुत्वे कृते अलविढ्वमित्येव स्यात्। विभाषाग्रहणं तु तत्र षोढ्वमर्थम्, लिङर्थं च स्यात्।

**इतः प्रभृतीत्यादि।** 'उदः स्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णविधानमत्र ज्ञापकमाहुः। अन्यथा उत् + स्था इति स्थिते तकारात्परस्य सकारस्य 'झलो झलि' इति लोपे सति उत्थानमित्यादेः सिद्धत्वादनर्थकं तत् स्यात्। सामान्यापेक्षं च ज्ञापकम्—अस्मिन् प्रकरणे यो लोपः स सिच एवेति। **चकाद्धीति।** हे शिरः पलितं सच्चकाद्धि, शोभस्वेत्यर्थः 'चकासृ दीप्तौ' अदादिः, लोट्, सिपो हिः, हेर्धिः, 'झलां जश् झशि' इति सकारस्य दकारः। **पयो धावतीति।** 'हशि च' इति रोरुत्वम्। यदि सिचो लोप इष्यते, सग्धिः, बब्धाम्—'झलो झलि' इति लोपो न स्यात्? अत आह—**सग्धिर्बब्धामिति।** अदेः क्तिनि 'बहुलं छन्दसि' इति घस्लादेशः, 'घसिभसोर्हलि च' इत्युपधालोपः, 'बहुलं छन्दसि' इति सलोपः, 'झषस्तथोर्धोऽधः' जश्त्वेन

**भावबोधिनी**

*यहाँ से आगे सिच् के सकार का लोप करना इष्ट है।* इनमें सकारलोप नहीं होता है—चकाद्धि पलितं शिरः। [ हे शिर! पक कर = श्वेत बालों वाले होकर शोभित हो जाओ'। 'चकासृ दीप्तौ' धातु से लोट् = सिप्, हि शप् का लुक् चकास् हि 'हुझल्भ्यो हेर्धिः' सूत्र से 'हि' का धिः, 'झलां जश् झशि' सूत्र से स् का जश्त्व से दकार करने पर चकाद्धि = चकाद्धि रूप होता है। इसके स् का लोप नहीं होता है। ] इसी प्रकार 'पयो धावति' [ पयस् + धावति अवस्था में ] इत्यादि में भी सलोप नहीं होता है। 'सग्धिः, बब्धाम्'—इनमें वैदिक रूप मान कर वर्ण लोप हो जाता है।

[ यदि सिच् के ही सकार का लोप होता है तो इनमें कैसे होगा? सग्धिः, बब्धाम्। [ अद् + क्तिन्, 'बहुलं छन्दसि' सूत्र से अद् का घस्लृ, 'घसिभसोर्हलि च' सूत्र से उपधा अ का लोप घ् स् + ति, 'बहुलं छन्दसि' से सकार का लोप घ् + ति, 'झषस्तथोर्धोऽधः' से तकार का धकार, जश्त्व से घकार का गकार करने पर—ग्धिः।

**भाष्यकारस्त्वाह—चकाधीत्येव भवितव्यमिति । तेन पयो धावतीत्येवमादौ यत्नान्तरमास्थेयम् ।**
**धि सकारे सिचो लोपश्चकाद्धीति प्रयोजनम् ।**
**आशाध्वं तु कथं जश्त्वं सकारस्य भविष्यति ॥**[1]

**न्यासः**

इदानीं भाष्यकारस्य मतं दर्शयितुमाह—**भाष्यकारस्त्वाहेत्यादि ।** एतेनाविशेषेणैव सकारमात्रस्य भाष्यकारो लोपमिच्छतीति दर्शयति । **तेनेत्यादि ।** अविशेषेण हि सकारमात्रस्य यो लोपमिच्छति तस्य पयो धावतीत्यत्रापि प्राप्नोति । तस्मादिह मा भूदिति **यत्नान्तरमास्थेयम् ।** यत्नान्तरं तु व्यवस्थितविभाषाश्रयणमेव पूर्ववत् । अयं तु विशेषः—पूर्वत्र व्यवस्थितविभाषया धि चैव सिचो भविष्यति, नान्यस्य; इह तु यत्र समानपदस्थौ निमित्तनिमित्तिनौ तत्रैवाविशेषण सकारमात्रस्य लोपो भवति । अत्र तु भिन्नपदस्थौ—पयो भावतीत्यादौ, तत्र न भवत्येवेति । एतावता विशेषेण व्यवस्थितविभाषा यत्नान्तरमित्युच्यते ।

संक्षिप्तमेतदर्थं विस्तरेण सचोद्यपरिहारं वक्तुमाह—**धि सकारे सिचो लोप इत्यादि ।** धीत्येतद् यत्र परभूते सकारलोप इत्यतः प्रभृति विधातव्यः, तदुपलक्षणं वेदितव्यम् । कुत एतत् ? इतः प्रभृति सिचः सकारस्य लोप इष्यत इति प्राग्वचनात् । लोपं प्रति सकारस्याधिकरणत्वेन विवक्षितत्वात् सप्तम्या निर्देशः । किं प्रयोजनम् ? इत्याह—**चकाद्धीत्यादि ।** यदि सिचो लोपः, आशाध्वं तु कथम् ? 'आङः शासु इच्छायाम्', लोट्, ध्वम्, टेरेत्वम्, 'सवाभ्यां वामौ' इत्यमादेशः, पूर्ववच्छपो लुक् । अत्र सकारस्य लोप इष्यते, स न प्राप्नोति; यदि सिच एव सकारस्य लोपो विधीयते ? **जश्त्वं सकारस्य भविष्यतीति ।** 'झलां जश्झशि' इत्यनेन जश्त्वम् सकारस्य दकारो भविष्यतीति सिद्धम्—आशाध्वमित्येतत् ।

इतः सकारलोपशास्त्रं प्रत्याख्यातुमाह—**सर्वमेवं प्रसिद्धं स्यादिति ।** यदि सकारस्य भवति, एवं सति तेनैव जश्त्वेन सर्वं लक्ष्यं प्रसिद्धं स्यात् । ततश्च सकारलोपशास्त्रमेतन्न कर्तव्यमेवेत्यभिप्रायः । तत्रैतत् स्यात्—जश्त्वे सति श्रुतिभेदो भवति, तथा हि 'अनचि च' इति सकारस्य द्विर्वचने कृते सकारयोश्च जश्त्वे

**पदमञ्जरी**

धकारस्य गकारः, समाना ग्धिः सग्धिरिति 'पूर्वापरप्रथम' इत्यादिना कर्मधारयः, 'समानस्य छन्दसि' इति सभावः । **बब्धामिति ।** 'भस भर्त्सनदीप्त्योः' जुहोत्यादिः, लोट्, तसस्ताम्, श्लौ द्विर्वचनम्, पूर्ववदुपधालोपः, सकारस्य च लोपः, तकारस्य धकारः, भकारस्य जश्त्वम्—बकारः । **पयो धावतीत्येवमादावपीति ।** अन्यथा रुत्वस्य सिद्धत्वात् पूर्वं सलोपः स्यात् ।

**भाष्यकारस्त्वाहेति ।** पूर्वं तु **श्लोकवार्त्तिककारस्य** मतं दर्शितम् । **यत्नान्तरमास्थेयमिति ।** एकपदाश्रयत्वादन्तरङ्गं रुत्वम्, पदद्वयाश्रयत्वाद्बहिरङ्गः सलोपः; तत्र सलोपस्यासिद्धत्वात् पूर्वत्रेति निर्दिष्टस्य विषयस्याभावादसिद्धत्वाभावादुत्वमेव तावत्प्रवर्तते, अल्विधित्वाच्च स्थानिवत्त्वाभावादोर्लोपाभाव इति ।

**भावबोधिनी**

समाना ग्धिः—इस विग्रह में समास और 'समानस्य छन्दसि' से समान का स आदेश—सग्धिः = सह भोजन । बब्धाम्—'भस् भर्त्सन-दीप्त्योः' धातु से लोट्, 'लोटो लङ्वत्' इस अतिदेश से तस् का ताम्—भस्+ताम् शप् का श्लु, 'श्लौ' से द्वित्व अभ्यासकार्य—घसिभसोर्हलि च' सूत्र से उपधा का लोप और छान्दस होने से सकार का लोप भ्+ताम्, 'झषस्तथोर्धोऽधः' से त का ध जश्त्व से भ् का ब—ब ब् धाम् = बब्धाम् । ]

भाष्यकार तो यह कहते हैं—'चकाधि' यही रूप होना चाहिये । [ इनके अनुसार ध् परे स् लोप सर्वत्र होना चाहिये । ] इसलिये 'पयो धावति' आदि में [ स लोप रोकने के लिए ] कोई अन्य प्रयत्न करना चाहिये । [ रुत्व को अन्तरङ्ग और सलोप को बहिरङ्ग मानकर असिद्ध करके रुत्व करना चाहिये । ] [ यहाँ काशिकाकार ने भाष्योक्त तीन श्लोक वार्तिक उद्धृत किये हैं— ]

१. भाष्ये पाठान्तरं दृश्यते ।

सर्वमेवं प्रसिद्धं स्याच्छ्रुतिश्चापि न भिद्यते[1]।
लुङश्चापि न मूर्धन्ये ग्रहणं सेटि दुष्यति ॥

**न्यासः**

दकारद्वयस्य श्रवणं प्रसजतीत्याह—**श्रुतिश्चापि न भिद्यत इति**। नहि व्यञ्जनपरस्यैकस्यानेकस्य वा हलः श्रुतिं प्रति विशेषोऽस्तीति भावः। **लुङश्चापि न मूर्धन्ये ग्रहणमिति**। कर्त्तव्यं भवतीति शेषः। अयं चान्यो जश्त्वे सति गुणः। 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्' इत्यत्र मूर्धन्ये कर्तव्ये लुङ उपादानं कर्त्तव्यं न भवतीति; अच्योढ्वम्, अप्लोढ्वमित्यादौ षत्वजश्त्वष्टुत्वैरेव मूर्धन्यस्य सिद्धत्वात्। 'च्युङ् छ्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ', लुङ्, ध्वम्, सिच्, 'आदेशप्रत्यययोः' इति षत्वम्, 'झलां जश् झशि' इत्यनेन षकारस्य जशत्वम्—डकारः, धकारस्य ष्टुत्वम्—ढकारः। एवं षत्वादिकार्यक्रमेण लुङि धकारस्य मूर्धन्यः सिद्ध इति, किं लुङ्ग्रहणेन ? एवं लुङ् प्रत्याख्यायते। सलोपे परे लुङ्ग्रहणं कर्त्तव्यमिति यस्याभिमतम्, स आह—**सेटि दुष्यतीति**। यदि मूर्धन्यविधौ लुङ्हणं न क्रियेत, ततः 'विभाषेटः' इत्यत्र मूर्धन्यो न प्राप्नोति, ततश्च पूर्ववत् षत्वादिषु कृतेष्वलविध्वमित्येव नित्यं स्यात्, न तु कदाचिदप्यलविढ्वमिति। तस्मादुत्तरार्थं लुङ्ग्रहणं कर्तव्यम्। 'धि च' इति सकारलोपो वक्तव्यः—अलविढ्वमित्यस्य सिद्ध्यर्थम्। न ह्येतदसति सकारलोपे सिध्यति, ततश्च

**पदमञ्जरी**

**धि सकार इति**। स्थानिनोऽपि विषयत्वविवक्षया सकार इति सप्तमीनिर्देशः। **आशाध्वमिति**। आङः शासु इच्छायाम्' अदादिरनुदात्तेत्। **जश्त्वमिति**। 'झलां जश् झशि' इत्यनेन। **सर्वमेवमिति**। यदि सकारस्य जश्त्वेनाशाध्वमिति सिद्धम्, ततः सर्वमेव लक्ष्यजातं जश्त्वेनैव सिद्धं स्यात्, ततश्च सूत्रमेवेदं न कर्त्तव्यमिति। **श्रुतिश्चापि न भिद्यत इति**। व्यञ्जनपरस्यैकस्यानेकस्य वा हलः श्रवणे विशेषो न धार्यत इत्यर्थः। **लुङश्चापीति**। अयं चापरो जश्त्वे सति गुणः, 'इणः षीध्वम्' इत्यत्र लुङो ग्रहणं न कर्तव्यं भवति; अच्योढ्वम्, अलोढ्वमित्यादौ षत्वजश्त्वष्टुत्वैरेव रूपस्य सिद्धत्वात्।

ह्रस्वादङ्गादिति सिचो लोपेऽकृढ्वं कथं भवेत्।
दोषान्तराभिधानात्तु नैतत्सुष्ठु निरूपितम् ॥

तद्दर्शयति—**सेटि दुष्यतीति**। एतच्च यद्यत्र सकारस्य लोपो न स्यादित्युपक्रमे एवोक्तम्। तस्माद्धि

**भावबोधिनी**

धपरक सकार में सिच् के ही स् का लोप [ कहना चाहिये। इसका क्या प्रयोजन है ? ] 'चकाद्धि' यह रूप बनना प्रयोजन है अर्थात् इसमें सलोप न होकर जश्त्व होना फल है। [ यदि सिच् के ही स् का लोप होगा ] तो फिर 'आशाध्वम्' यह रूप तुम्हारे मत में कैसे होगा [ क्योंकि आङ् शास् + ध्वम् में भी स् लोप नहीं हो सकेगा ]? सकार का जश्त्व हो जायगा अर्थात् 'झलां जश् झशि' सूत्र से स् का जश्त्व द् होकर आशाद्ध्वम् रूप बन जायगा। यदि ऐसा है तब सभी रूपों में जश्त्व से निर्वाह हो जायगा, [ अतः लोप की आवश्यकता ही नहीं है। ] और श्रुति = सुनने में भी कोई भेद नहीं होगा, [ क्योंकि सलोप करने पर भी 'अनचि च' सूत्र से ध् का द्वित्व और जश्त्व होगा। सलोप न होने पर स् का जश्त्व होगा। हर स्थिति में रूप एक-सा ही सुनाई देगा। ] [ एक यह भी लाभ होगा कि ] मूर्धन्य-विधायक [ 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्' सूत्र ] में लुङ् का ग्रहण नहीं करना पड़ेगा। क्योंकि सभी अभीष्ट रूप सिच् का षत्व और ध का ष्टुत्व करके जश्त्व से सिद्ध हो सकते हैं। ] किन्तु सेट् धातुरूप में दोष आयेगा। [ अतः सिच् के सकार का लोप कहना चाहिये। परन्तु ] घस् और भस् के रूप नहीं सिद्ध हो

---

१. मुद्रितकाशिकायां तु 'श्रुतिश्चापि न भिद्यत' इति पाठः।

**घसिभसोर्न सिध्येत तस्मात्सिज्ग्रहणं न तत् ।**
**छान्दसो वर्णलोपो वा यथेष्कर्त्तारमध्वरे ।। ( म० भा० )**
**निष्कर्त्तारमध्वरस्येत्येवं प्राप्ते ।।**

**न्यासः**

यदुक्तम्—'सर्वमेवं प्रसिद्धं स्यात्' इति तदयुक्तम् । 'धि च' इत्येतस्मिंश्च क्रियमाणे चकाद्धीति मा भूदिति सिज्ग्रहणं कर्तव्यम् । एवं **श्लोकवार्त्तिककारमतेन** सिज्गहणं कर्तव्यमिति स्थितम् ।

इतरस्तस्मिन् क्रियमाणेऽपरं दोषं दर्शयितुमाह—**घसिभसोर्न सिध्येत् त्वित्यादि** । तुशब्दो हेतौ । यस्मात् सिज्ग्रहणस्य हि घसिभसोः सकारलोपः सग्धिर्बब्धामित्यत्र न सिध्यतीत्येष हेतुरुक्तः, स चायमहेतुः; यस्माद् यद्यपि सिज्ग्रहणे क्रियमाणे घसिभसोः 'झलो झलि' इत्यनेन लोपो न भविष्यति, तथापि च्छान्दसो वर्णलोपो भविष्यति; तेनापि सग्धिः, बब्धामित्येतदुभयं सिध्यत्येव । क्व यथा च्छान्दसो वर्णलोपः ? इत्याह—**यथेत्यादि** । यथाध्वरविषये प्रयोगे इष्कर्त्तारमध्वरस्येत्यत्र च्छान्दसो वर्णलोपो भवति, तथा सग्धिः, बब्धामित्यत्रापि घसिभसोर्भविष्यति । वाशब्दोऽत्रैवोपपत्त्यन्तरं सूचयति । तत्रेदमुपपत्त्यन्तरम्—सग्धिरिति नैतद् घसे रूपम्, किं तर्हि ? 'षघ हिंसायाम्' इत्यस्य । ननु चार्थभेदो भवति, स्वरभेदश्च; पूर्वस्यां व्युत्पत्तौ समानादनमित्येषोऽर्थो भवति, समासस्परेणान्तोदात्तत्वञ्च; षघिस्तु क्तिनि विहिते हिंसार्थो भवति, नित्स्वरेणाद्युदात्तश्च ? अनेकार्थत्वाद्धातूनां षघिश्च समानादनमित्यस्मिन्नर्थे वर्त्तिष्यते, स्वरव्यत्ययेन चान्तोदात्तत्वं भविष्यतीत्यदोषः । बब्धामिति च नैतद् भसे रूपम्, किं तर्हि ? 'बध बन्धने'—इत्यस्माल्लोटि तसस्ताम्, 'व्यत्ययो बहुलम्' इति विकरणस्य लुकि 'अनिदिताम्' इत्यनुनासिकलोपे 'झषस्तथोर्धोऽधः' इति धत्वे तकारस्य 'व्यत्ययो बहुलम्' इति धातुधकारस्य बकारे च कृते बब्धामिति भवति । एवञ्च सिज्ग्रहणे क्रियमाणे घसिभसोर्यदि न सिध्यति नाम, तथापि नैव किञ्चिदनिष्टम्; यस्मादनयापि व्युत्पत्त्या तदपाकृतं भवति । तदुक्तम्—'घसिभसोर्न सिध्येत्त तस्मात् सिज्ग्रहणं न तत्' इति । ततश्च 'धि सकारे सिचो लोपश्चकाद्धीति प्रयोजनम्' इत्येतदवस्थितं **श्लोकवार्त्तिकारस्य** मतम् ।। २५ ।।

**पदमञ्जरी**

चेति कर्तव्यम्, मूर्धन्ये च लुङो ग्रहः । धिसकारे सिचो लोप इति त्वेतदवस्थितम् । तत्र दोषान्तरं दर्शयति—**घसिभसोरिति** । सग्धिर्बब्धामित्येतयोरसिद्धिप्रसङ्गात्, न सिचो लोपः शक्यो विज्ञातुमित्यर्थः । परिहरति—**छान्दसो वर्णलोपो वेति** । वाशब्दः पक्षं व्यावर्त्तयति, सिच एवायं लोपः, घसिभसोस्तु छान्दसो वर्णलोप इति । क्व यथा ? इत्याह—**यथेति** । इष्कर्त्तारमध्वरस्येत्यस्यैकदेशानुकरणादिष्कर्तारमध्वरशब्दात्सप्तमी । तत्र बह्वृचाः—इष्कर्त्तारमिति पठन्ति, **तैत्तिरीयास्तु** निष्कर्त्तारमिति ।। २५ ।।

**भावबोधिनी**

सकते इस कारण सिच् का ग्रहण नहीं करना चाहिये, सामान्य रूप से ध परे स् लोप करना चाहिये । अथवा इनमें छान्दस वर्ण=स् का लोप कर लेना चाहिये जैसा कि 'इष्कर्तारमध्वरे' में होता है । निष्कर्त्तारमध्वरस्य' ऐसे रूप की प्राप्ति रहते [ 'न्' वर्ण का छान्दस लोप हो जाता है । वैसे ही 'बब्धाम्' 'सग्धिः' में स् लोप करना चाहिये, सलोप नहीं । ऐसा वार्तिककार का मत है । भाष्यकार सिच् के सकार का लोप न मान कर सामान्य रूप स मात्र का लोप मानते हैं—"इष्टमेवैतत् संगृहीतम्—'चकाधि' इत्येव भवितव्यम् । ] ।। २५ ।।

**३७१४. झलो झलि ॥ २६ ॥ (२२८१)**

**झल उत्तरस्य सकारस्य झलि परतो लोपो भवति । अभित्त, अभित्थाः । अच्छित्त । अच्छित्थाः ।**

**अवात्ताम्, अवात्त—इत्यत्र वा सिचः सकारलोपस्यासिद्धत्वात् 'सस्यार्धधातुके' ( ७।४।४९ ) इति सकारस्य तकारः ।**

**झल इति किम् ? अमंस्त । अमंस्थाः । झलीति किम् ? अभित्साताम् । अभित्सत ।**

**अयमपि सिच एव लोपः, तेनेह न भवति—सोमसुत् स्तोता । दृषत्स्थानमिति ॥**

**न्यासः**

**झलो झलि ॥ अभित्त, अभित्था इति ।** भिदेर्लुङि स्वरितेत्त्वादात्मनेपदम्, त-थासौ, दकारस्य 'खरि च' इति चर्त्वम्—तकारः । **अवात्तामिति ।** वसेर्लुङि तसस्ताम् । **अवात्तेति ।** थस्य तः, 'वदव्रज' इत्यादिना वृद्धिः । अत्र सकारलोपे कृते 'सः स्यार्धधातुके' इति तकारो न प्राप्नोतीति यस्य भ्रान्तिः स्यात्, तं प्रत्याह—**अवात्तामित्यादि ।**

**अमंस्त, अमंस्था इति ।** 'मन ज्ञाने', अनुदात्तेत्वादात्मनेपदम् । **अभित्सातामिति ।** भिदेराताम् । **अभित्सतेति ।** 'आत्मनेपदेष्वनतः' इति झस्यादादेशः ॥ २६ ॥

**पदमञ्जरी**

**झलो झलि ॥** भिदिच्छिदी स्वरितेतौ, मन्यतिरनुदात्तेत् ।

**अयमपि सिच एव लोप इति ।** यदि वा 'पदस्य' इति वर्त्तते, तत्र प्रत्यासत्तेः 'झलो झलि' सस्येति निर्दिष्टानां त्रयाणामप्येकसम्बन्धत्वे विधिरयमिति सोमसुत् स्तोतेत्यादौ न भविष्यति । समासेऽपि न भवति—सोमसुत्स्थितिरिति । किं कारणम् ? सकारथकाराभ्यां यत्पदमारब्धं तत्प्रति तकारस्यावयवत्वाभावात् ॥ २६ ॥

**भावबोधिनी**

झल् से उत्तरवर्ती सकार का झल् परे रहते लोप होता है । उदा० अभित्त, अभित्थाः । अच्छित्त, अच्छित्थाः । [ भिदिर् तथा छिदिर् धातुओं से लुङ् प्रथमपुरुष तथा मध्यमपुरुष एकवचन में च्लि का सिच्, अट् अभिद् + त अभिद + स् + थस्, अच्छिद् + स् त, अच्छिद + स् + थास् में झल् से परे स् का लोप, 'खरि च' से चर्त्वं द् का त् करने पर उक्त रूप बनते हैं । ]

अवात्ताम् अथवा अवात्तम्—इनमें सिच् के सकार का लोप असिद्ध हो जाने से 'सः स्यार्धधातुके' ( ७।४।४९ ) सूत्र से सकार का तकार आदेश होता है । [ वस् + लुङ्, तस् का ताम्, थ का त, अट् च्लि का सिच् अवस् स् + ताम्, अवस् + स् + त, यहाँ सिच् = सलोप तकार-विधायक 'सः स्यार्धधातुके' इसकी दृष्टि में असिद्ध है अतः पहले वस् के स् का त् हो जाता है, तब सलोप होता है, "वदव्रजहलन्तस्याचः" सूत्र से वृद्धि होने पर अ वात् ताम्, अ वात् त रूप बनते हैं । कोई अनुपपत्ति नहीं है । ]

झल् से परे स्—इसका क्या फल है ? अमंस्त, अमंस्थाः । [ मन् + लुङ् सिचादि करने पर स् लोप नहीं होता है क्योंकि मन् का न् झल् नहीं है । ] झल् परे रहते—इसका क्या फल है ? अभित्साताम् । अभित्सत । [ भिद् + सिच् + आताम्, भिद्सिच् + झ = अत में अ परे है झल् नहीं । अतः स् लोप नहीं होता है । ]

यह भी सिच् के ही स् का लोप करता है, इसलिये इनमें लोप नहीं होता है—सोमसुत् स्तोता । दृषत्-स्थानम् । [ त् = झल् से परे स् झल् = त् परे है । त् = झल् से परे स् झल् = थ परे है । सिच् का स् न होने से लोप नहीं होता है । ] ॥ २६ ॥

**३७१५. ह्रस्वादङ्गात् ॥ २७ ॥ (२३६९)**

ह्रस्वान्तादङ्गादुत्तरस्य लोपो भवति झलि परतः । अकृत, अकृथाः । अहृत, अहृथाः ।
ह्रस्वादिति किम् ? अच्योष्ट । अप्लोष्ट । अङ्गादिति किम् ? अलाविष्टाम् । अलाविषुः ।
'झलि' इत्येव—अकृषाताम् । अकृषत ।
अयमपि सिच एव लोपः, तेनेह न भवति—द्विष्टराम्, द्विष्टमामिति । सुजन्ताद् द्विशब्दात्तरप्तमपौ, अद्रव्यप्रकर्षे आतिशयिकः आम् प्रत्ययः ॥

**३७१६. इट ईटि ॥ २८ ॥ (२२६६)**

इट उत्तरस्य सकारस्य लोपो भवति ईटि परतः । अदेवीत् । असेवीत् । अकोषीत् । अमोषीत् ।
इट इति किम् ? अकार्षीत् । अहार्षीत् । ईटीति किम् ? अलाविष्टाम् । अलाविषुः ॥

**न्यासः**

**ह्रस्वादङ्गात् ॥ अलाविष्टामिति ।** तसस्ताम्, सिचि वृद्धिः । अत्र श्रुतिकृते पौर्वापर्ये सति ह्रस्वादिटः परः सकारो भवति, न त्वङ्गात्; इडागमः प्रत्ययभक्तत्वेनानङ्गत्वात् । **अलाविषुरिति ।** 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस् । **अकृषातामिति ।** 'उश्च' इति कित्वाद् गुणाभावः । **द्विष्टरामिति ।** 'द्वित्रिचतुर्भ्यः सुच्' तदन्ताद्गतिशायने तरप्, 'किमेत्तिङ्' इत्यादिनामुः, 'ह्रस्वात्तादौ तद्धिते' इति सकारस्य मूर्धन्यः ॥२७॥

**इट ईटि ॥ अदेवीदिति ।** 'नेटि' इति वृद्धिप्रतिषेधे कृते लघूपधगुणः, अस्तिसिचोऽपृक्ते' इतीट् ॥२८॥

**पदमञ्जरी**

**ह्रस्वादङ्गात् ॥ अच्योष्टेटि ।** सलोपस्यासिद्धत्वात्पूर्वं गुणः, ततो विहितनिमित्तत्वाल्लोपाभावः । **अयमपीति ।** अत्र 'उदः स्थास्तम्भोः' इति पूर्वोक्तं ज्ञापकमेव शरणम् । **द्विष्टमामिति ।** 'ह्रस्वात्तादौ तद्धिते' इति षत्वम् ॥ २७ ॥

**इट ईटि ॥** अत्र सिच एव सम्भवः ॥ २८ ॥

**भावबोधिनी**

ह्रस्ववर्णान्त अङ्ग से परवर्ती [ सिच् के स् का ] लोप झल् परे रहने पर होता है। उदा० अकृत, अकृथाः । अहृत, अहृथाः । [ कृ√ तथा हृ√ धातुओं से आत्मनेपद प्रथमपुरुष तथा मध्यमपुरुष के एकवचन और बहुवचन में लुङ्—अकृ+त, अकृ+थास्, अहृ+त, अहृ+थास्, च्लि का सिच्, प्रस्तुत सूत्र से स् का लोप होता है । ]

ह्रस्व अङ्ग से परे—इसका क्या फल है ? अच्योष्ट । अप्लोष्ट । [ च्यु√ तथा प्लु√ धातु, लुङ् = त, च्लि का सिच् = स् धातु का गुण होने पर 'ओ' द्विमात्रिक दीर्घ से परे स् का लोप नहीं होता है । षत्व, ष्टुत्व करने पर रूप बनते हैं । ] अङ्ग से परे—इसका क्या फल है ? अलाविष्टाम्, अलाविषुः । [ इनमें ह्रस्व से परे सिच् किन्तु वह अङ्ग नहीं है क्योंकि इट् अङ्ग का अवयव नहीं है अपि तु सिच् का है । अतः सिच् का लोप नहीं होता है । ]

झल् परे रहते ही लोप होता है—अतः 'अकृषाताम्' अकृषत । [ आताम् झ = अत परे लोप नहीं होता है । ]

यह भी सिच् के ही स् का लोप होता है। इस कारण इनमें [ स् लोप ] नहीं होता है—द्विष्टराम्, द्विष्टमाम् । [ 'द्वित्रिचतुर्भ्यः सुच्' सूत्र से सुच् = स् प्रत्यय के बाद अतिशायन अर्थ में तरप् और तमप् करके तदन्त से 'अमु' प्रत्यय होता है—द्विस् तमाम्, द्विस् तराम्, 'ह्रस्वात्तादौ तद्धिते' सूत्र से स् का ष्, ष्टुत्व होता है। यह स् सिच् का नहीं हैं। अतः इसका लोप नहीं होता है—यही लिखते हैं— ] सुजन्त द्विशब्द से तरप् और तमप्, अद्रव्यप्रकर्ष अर्थ में आतिशयिक आम् प्रत्यय होता है । [ स् लोप नही होता है । ] ॥ २७ ॥

इट् से उत्तरवर्ती सकार का लोप ईट् परे रहने पर होता है। उदा० अदेवीत् । असेवीत् । अकोषत् । अमोषीत् । [ दिव्, सेव्, कुष्, मुष् से लुङ् = तिप्, च्लि = सिच्, वलादि इट्, उपधा गुण, ति के इ का लोप 'अस्तिसिचोऽपृक्ते' से ईट् का आगम अ देव् इ स् ई त्, इसी प्रकार अन्यों में भी करने पर प्रस्तुत सूत्र से सिच् का लोप और सवर्णदीर्घ होता है । ]

## ३७१७. स्कोः संयोगाद्योरन्ते च ॥ २९॥ (३८०)

**पदस्यान्ते यः संयोगः, झलि परतो वा संयोगः, तदाद्योः सकारककारयोर्लोपो भवति । लस्जेः— लग्नः, लग्नवान्, साधुलक् । मस्जेः—मग्नः ।**

**ककारस्य, तक्षेः—तट् । तष्टः, तष्टवान् । काष्ठतट् ।**

**न्यासः**

**स्कोः संयोगाद्योरन्ते च ॥** झलीति वर्त्तते । **संयोगाद्योरिति** षष्ठीसमासः । अत्र यद्यपि संयोग उत्तरपदार्थे गुणभूतः, तथापि संयोगाद्योः स्कोरन्तग्रहणं विशेषणं न भवतीति गुणभूतोऽपि तेन संयोग एव विशिष्यत इति विज्ञायते, इत्याह—**पदस्यान्ते यः संयोग इति । अन्त इति ।** अवसान इत्यर्थः । **झलि परत इति ।** पदस्येत्यपेक्षते । **तदाद्योरिति ।** तस्यैवम्भूतस्य संयोगस्यादिभूतयोरित्यर्थः । **लग्न इति ।** 'ओलजी ओलस्जी व्रीडे', निष्ठा । अत्र जकारे झलि परतः सकारजकारयोर्यः संयोगः पदस्यावयवस्तदादेः सकारस्य लोपः, 'ओदितश्च' इति नत्वम्, 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधः, 'चोः कुः' इति कुत्वं गकारः । **साधुलगिति ।** साधु लज्जत इति क्विप् । अत्र पदस्यावसाने संयोगः । **मग्न इति ।** 'टुमस्जो शुद्धौ', 'एकाचः' इतीट्प्रतिषेधः । 'मस्जिनशोर्झलि' इति नुम्, स च भवन् 'मस्जेरन्त्यात् पूर्वो नुमनुषङ्गसंयोगादिलोपार्थम्' इति वचनाद् अन्त्याज्जकारात् पूर्वो भवति, तस्य च 'अनिदिताम्' इत्यनुनासिकलोपः ।

**पदमञ्जरी**

**स्कोः संयोगाद्योरन्ते च ॥**

गुणभूतोऽपि संयोगो झलन्ताभ्यां विशेष्यते ।
संयोगाद्योः पदस्यान्ते स्कोर्यस्मान्नास्ति सम्भवः ॥

इति मत्वाऽऽह—**पदस्यान्त इति । झलि च परत इति ।** पदस्य यः संयोग इत्यपेक्षते । **लग्न इति ।** 'ओलस्जी व्रीडे', निष्ठा, ईदित्त्वादिट्प्रतिषेधः । अत्र तकारे झलि परतः सजयोर्यस्संयोगः तदादिः सकारः, 'ओदितश्च' इति निष्ठानत्वम्, तस्यासिद्धत्वात् कुत्वम् । **साधुलगिति ।** साधु लज्जत इति क्विप् । **मग्न इति ।** 'मस्जिनशोर्झलि' इति नुम्, स च जकारात्पूर्वः, 'मस्जेरन्त्यात्पूर्वं नुममिच्छन्ति' इति वचनात् । तेन 'अनिदिताम्' इति नलोपः, सलोपादि पूर्ववत् । **तष्ट इति ।** 'तक्षू तनूकरणे', ऊदित्त्वाद्विकल्पितेट्, 'यस्य विभाषा' इतीट्प्रतिषेधः ।

**भावबोधिनी**

इट् ते परे—इसका क्या फल है ? अकार्षीत् । अहार्षीत् । [ कृ, हृ से वलादि इट् नहीं होता है । अतः सिच् का लोप भी नहीं होता है । ] ईट् परे रहने पर—इसका क्या फल है ? अलाविष्टाम्, अलाविषुः । [ इनमें अपृक्त परे न होने से ईट् आगम नहीं होता है । अतः सिच् लोप भी नहीं होता है । ] ॥ २८ ॥

पद के अन्त में जो संयोग तथा झल् परे रहते जो संयोग—इनके आदि में विद्यमान सकार तथा ककार का लोप होता है । उदा० ओ लस्ज्—लग्नः, लग्नवान् । [ ओ लस्जी धातु के ओ और ई की इत्संज्ञा लोप के बाद क्त और क्तवतु प्रत्यय लस्ज् + त, लस्ज् + तवत् में झल् = त परे रहते स् ज् का संयोग है । इसके आदि वर्ण स् का लोप होता है—लज् + त, लज् + तवत् 'ओदितश्च' सूत्र से निष्ठा, त का न होने पर रूप बनते हैं । ] साधुलक् । [ साधु लज्जते—इस अर्थ में क्विप् प्रत्यय, लोप के बाद उपपद समास—साधुलस्ज् में पद के अन्त में संयोग है इसके आदिभूत स् का लोप करने के बाद कुत्व, चर्त्व होता है । ] मस्ज् से—मग्नः । मग्नवान् । [ मस्ज् + त, मस्ज् + तवत्, यहाँ नुम् होता है उसका लोप भी हो जाता है । झल् परे संयोग के आदि स् का लोप, ओदित होने से त का न होता है । ]

ककार [लोप] के उदा० तक्ष् से—तट् । तष्टः, तष्टवान् । काष्ठतट् [ 'तक्ष् तनूकरणे' धातु से क्विप्, इसका लोप करने पर तक्ष् में क्ष = क् ष् के संयोग के आदि ककार का लोप, ष् का जश्त्व, चर्त्व—तट् । तक्ष् +, तवत्

❀ **झलि सङीति वक्तव्यम्** ❀ **किमिदं सङीति ? सनः सप्रभृति महिङो ङकारेण प्रत्याहारः। इह मा भूत्—काष्ठशक्स्थातेति। थकारे झलि ककारस्य संयोगादिलोपः प्राप्नोति। तदत्र शकेः क्विबन्तस्य प्रयोग एव नास्तीत्याह—'काष्ठशगेव नास्ति, कुतोऽयं काष्ठशकि तिष्ठेत्' इति !**

**वाक्यर्थम्, काक्यर्थम्–इत्यत्रापि बहिरङ्गलक्षणस्य यणादेशस्यासिद्धत्वात् संयोगादिलोपो न भवति।**

**न्यासः**

**तष्ट इति।** 'तक्षू तनूकरणे'। ऊदित्वात् स्वरत्यादिसूत्रेण विभाषितेट्, तेन निष्ठायाम् 'यस्य विभाषा' इतीट्प्रतिषेधः। **काष्ठशक्स्थातेति।** काष्ठं शक्नोतीति क्विप्; काष्ठशकि स्थातेति 'सप्तमी' इति योग-विभागात् समासः।

**तदत्रेत्यादिना** 'झलि सङीति वक्तव्यम्' इति यदुक्तम्, तत् प्रत्याचष्टे। तदिति वाक्योपन्यासार्थः। **शकेः क्विबन्तस्य प्रयोग एव नास्तीति।** शकेः 'अन्येभ्योऽपि दृश्यते' इति क्विप् स्यात्, इह च 'दृश्यते' इत्यस्य ग्रहण एवायमर्थः—यत्र लौकिके प्रयोगे क्विबन्तस्य प्रयोगो दृश्यते तत्र यथा स्यादिति, न च लोके काष्ठशगित्येवंविधः शकेः क्विबन्तस्य प्रयोगो दृश्यते। अतः शकेः क्विबन्तस्य प्रयोग एव नास्ति, अतो हेतोः 'झलि सङीति वक्तव्यम्' इत्येतत् प्रत्याख्यातुमाह **भाष्यकारः—काष्ठशगेव नास्ति कुतोऽयं काष्ठशकि तिष्ठेदिति।** आधारपरतन्त्र उद्घनादावस्य वृत्तिः, अतो यत्र काष्ठशगाधार एव नास्ति तत्र तदाधेयः स्थाता सुतरामेव नास्ति, तस्मान्न झलि सङीति वक्तव्यम्; व्यावर्त्याभावात्। इह कस्मान्न भवति—वाक्स्थातेति ? संयोगादिलोपे कुत्वस्यासिद्धत्वात्।

अथेह कस्मान्न भवति—वाक्यर्थम्, काक्यर्थम् ? इत्याह—**वाक्यर्थं काक्यर्थमित्यादि।**

**पदमञ्जरी**

**झलि सङीति वक्तव्यमिति।** सङीत्ययं प्रकरणशेषः। किं प्रयोजनम् ?

गिरोऽभोधिर्द्विष्टरां च दृषत्स्थः काष्ठशक्स्थिरः।
कुब्वा धुर्येति मा स्मेषु लत्वादीनि भवन्त्विति॥

गिर इति—अत्र 'अचि विभाषा' इति लत्वं मा भूत्। अभोधिरिति—'धि च' इति सलोपो न भवति। द्विष्टरामिति—'ह्रस्वादङ्गात्' इति न भवति। दृषत्स्थः—'झलो झलि' इति न भवति। काष्ठशक्स्थिरः—'स्कोः संयोगाद्योः' इति न भवति। कुब्वा—'चोः कुः' इति कुत्वं न भवति। धुरं वहतीति धुर्येति—'हलि च' इति दीर्घत्वं न भवति। तथा च वार्त्तिकम्—'सङि लत्वलोपसंयोगादिलोपकुत्वदीर्घत्वानि' इति। सङीति प्रकृत्य लत्वादीनि वक्तव्यानीत्यर्थः। तदेवं **वार्त्तिककार**मतेऽपि चकाधोत्येव भवितव्यम्;

**भावबोधिनी**

में भी क् लोप के बाद तष्+त, तवत् में ष्टुत्व होता है। उदित् होने से इसमें इट् विकल्प से होता है। अतः इडभाव पक्ष में उदा० है।] काष्ठतट्। [ काष्ठं तक्ष्णोति—इस अर्थ में क्विप्, उपपद समास के बाद पदान्त संयोग के आदि ककार के लोप के बाद जश्त्व, चर्त्व होता है।]

★ झल् में सङ् परे रहते ऐसा कहना चाहिये। ★ यह सङ् क्या है ? सन् से लेकर महिङ् के ङकार तक का प्रत्याहार है। इसमें लोप न होने लग जाय—काष्ठशक्स्थाता। [ काष्ठं शक्नोति अर्थ से क्विप्, उपपद समास आदि के बाद—काष्ठशक्। पुनः 'काष्ठशकि स्थाता' इस सप्तमी समास में विभक्तिलोप के बाद झल् = थ् परे क्थ के संयोग में आदि क् का लोप प्राप्त होता है। चूँकि सङ् का कोई परे नहीं है। अतः लोप नहीं होता है। यही लिख रहे हैं— ] थकार = झल् परे रहते संयोगादि ककार का लोप प्राप्त होता है। [ इसका वारण होता है। ] किन्तु क्विप् प्रत्ययान्त शक् धातु का प्रयोग ही नहीं होता है, यह [ भाष्यकार ने ] कहा है—काष्ठशक् यही जब रूप नहीं बनता है तब काष्ठशक् में कैसे कोई बैठ सकता है। [अर्थात् अनभिधान है। अतः सङ् प्रत्याहार की आवश्यकता नहीं है। ]

स्कोरिति किम् ? नर्नर्ति । वर्वर्ति । संयोगाद्योरिति किम् ? पयःशक् ॥

**३७१८. चोः कुः ॥ ३० ॥ (३७८)**

चवर्गस्य कवर्गादेशो भवति झलि च परतः, पदान्ते च । पक्ता, पक्तुम्, पक्तव्यम्, ओदनपक् । वक्ता, वक्तुम्, वक्तव्यम्, वाक् ।

क्रुञ्चेत्यत्र सङीति, वचनाद् ञकारस्य चकारे झलि कुत्वं न भवति, 'युजिक्रुञ्चां च' (३।२।५९) इति निपातनाद्वा ।

**न्यासः**

अथ स्कोरिति किमर्थम्? नर्नर्तीत्यत्र मा भूत् । नृतेर्यङ्लुगन्तस्य 'रुग्रिकौ च लुकि' इत्यभ्यासस्य रुकि कृते रूपमेतत् । **संयोगाद्योरिति किम् ? पयःशगिति ।** क्विबन्तमेतत् । सोपपदस्य हि शकेः क्विबन्तस्य प्रयोग एव नास्ति । केवलस्य तु स्यादेव । अन्ते चेति किम् ? तक्षिता, तक्षकः ॥ २९ ॥

**चोः कुः ॥ झलि च पदान्ते चेति । परत इति** प्रत्येकमभिसम्बध्यते । ननु च पूर्वसूत्रे चकारेण झलनुकृष्ट इति तस्येहानुवृत्तिरयुक्ता ? नैतदस्ति; न हि तत्र चकारेण झलनुकृष्टः, किं तर्हि ? स्वरितत्वादेवानुवर्त्तमानस्यान्तग्रहणं न बाधकमित्येतावच्चकारेण व्याख्यातम् । **वागिति ।** वचेः 'क्विब्वचि' इत्यादिना क्विब्, दीर्घश्च ।

**क्रुञ्चेति ।** इह केचित् 'क्रुञ्च कौटिल्याल्पीभावयोः' इति सरेफं ञकारोपधं धातुं पठन्ति, 'कुञ्च कौटिल्याल्पीभावयोः' इत्यरेफं नकारोपधं परे । तत्र पूर्वपाठं गृहीत्वा यश्चोदयेद्—अथ क्रुञ्चेत्यत्र कस्मान्न न भवतीति ? तं प्रत्याह—**क्रुञ्चेत्यादि ।** अनेन 'झलि सङीति न वक्तव्यम्' इति यत् पूर्वं प्रत्याख्यातं तस्येहार्थतां दर्शयति । 'युजिक्रुञ्चाञ्च' इति निपातनाद् वेति । क्रुञ्चेत्यत्र ञकारस्य चकारे कुत्वं न भवतीति सम्बन्धः । ञकारिपदस्य सरेफस्य पाठमभ्युपेत्य प्राप्तौ तस्यामेवं परिहारद्वयमुक्तम् । इदानीं कुत्वस्य प्राप्तिरेव

**पदमञ्जरी**

सङीति वचनात् । **सनः प्रभृतीति ।** धातुप्रत्ययानां ग्रहणमित्यर्थः । अत्र संयोगादिलोपं प्रयोजनं व्याचष्टे—**तदिति ।** तदिति वाक्योपन्यासे । **शकेरिति ।** ककारान्तोपलक्षणमेतत्, तेन 'कक लौल्ये', 'कुक वृक आदाने' इत्यादेरपि क्विबन्तस्य प्रयोगो नास्त्येव । **आहुरिति । भाष्यकारादयः ।** तत्र भाष्यं तावत् पठति—**काष्ठशगेवेति । काक्यार्थमित्यत्र** स्थानिवद्भावेऽपि शक्यो वक्तुम्, 'तस्य दोषः संयोगादिलोप' इत्युक्तत्वात् ॥२९॥

**चोः कुः ॥ नकारोपधो वेति ।** पूर्वमौत्पत्तिकं ञकारोपधत्वमाश्रित्योक्तम्, इदानीं तु नकारस्यानु-

**भावबोधिनी**

वास्यर्थम्, काक्यर्थम्—इनमें भी बहिरङ्गनिमित्तक यणादेश के असिद्ध हो जाने के कारण संयोग के आदि के स् और क् का लोप नहीं होता है । [ यणादेश दूसरे पद की अपेक्षा करता है और कि लोप केवल संयोगादि स् क् की । अतः लोप की कर्तव्यता में यण् ही असिद्ध हो जाता है । लोप की प्राप्ति न रहने से नहीं होता है । ]

स् और क् का—इसका क्या फल है ? नर्नर्ति । वर्वर्ति । इनमें र्ति में संयोगादि रेफ का लोप नहीं होता है । ये नृत् के यङ्लुगन्त के रुक् आगम में रूप हैं । ] संयोग के आदि वाले स् क् का—इसका क्या फल है । पयःशक् । [ पयः शक्नोति इति—पयस्शक् विसर्ग होता है । यहाँ संयोगादि क् नहीं है । लोप नहीं होता है । ] ॥ २९ ॥

चवर्ग का कवर्ग आदेश झल् परे रहते और पदान्त में होता है । उदा० पक्ता, पक्तुम्, पक्तव्यम्, ओदनपक् । [ डुपचष्=पच् से तृच्, तुमुन्, तव्यत् झल् परे च् का क् होता है । ओदनं पचति—इस अर्थ में क्विप्, लोप, उपपद समास के बाद, अन्त में च् का क् होता है । ]

क्रुञ्च—यहाँ पर सङ् प्रत्याहार परे कुत्व होता है । इस वचन के कारण ञकार=चवर्ग का चकार=झल् परे रहते कुत्व नहीं होता है । अथवा—'युजिक्रुञ्चां च' ऐसा निपातन होने से कुत्व नहीं होता है ।

**नकारोपधो वा धातुरयं रेफरहितश्च 'कुञ्च कौटिल्याल्पीभावयोः' (धा.पा. १८६) इति पठ्यते। नकारलोपे हि निकुचित इति दृश्यते। 'युजिक्रुञ्चां च' (३।२।५९) इति तस्यैव रेफोऽधिकः, नकारस्य लोपाभावश्चेति निपात्यते। तत्रानुस्वारस्य, परसवर्णस्य चासिद्धत्वात् ञकार एव नास्तीति कुत्वं न भविष्यति।।**

## ३७१९. हो ढः।।३१।। (३२४)

**हकारस्य ढकारादेशो भवति झलि परतः, पदान्ते च। सोढा, सोढुम्, सोढव्यम्। जलाषाट्[1]। वोढा, वोढुम्, वोढव्यम्। प्रष्ठवाट्। दित्यवाट्।**

### न्यासः

नास्ति; यस्मान्नायं ञकारोपधः पठ्यते, किं तर्हि? नकारोपध इति दर्शयितुमाह—**नकारोपधो वेत्यादि**। किं पुनः कारणं नकारोपधः पठ्यते? इत्याह—**नकारलोपे हीत्यादि**। निकुचित इत्येष प्रयोगोऽस्त्येव। धातोर्निष्ठान्तस्य 'श्नान्नलोपः' इत्यनुवर्त्तमाने 'अनिदिताम्' इति नलोपादिह नकारलोपस्य दर्शनान्नकारोपधोऽयं पठ्यते; अन्यथा ह्येष प्रयोगो नोपपद्यते। न हि ञकारलोपस्य किञ्चिल्लक्षणमस्ति। यदि तर्हि कुञ्चेति रेफरहितो नकारोपधः पठ्यते, एवं सति क्रुङ् क्रुञ्चौ, क्रुञ्चः—इति न सिध्यति; ऋत्विगित्यादिना सूत्रेण हि क्विनि कृते 'अनिदिताम्' इति नलोपे कुक्, कुचौ, कुचः—इत्येवं प्राप्नोतीत्यत आह—**युजिक्रुञ्चामित्यादि**। स्यादेतत्—यद्यपि नकारलोपाभावो निपात्यते, तथापि नकारस्यानुस्वारे तस्य ययि परसवर्णे ञकारे स्यादेव कुत्वम्? इत्यत आह—**तत्रेत्यादि**। गतार्थम्।।३०।।

**हो ढः।। सोढेति**। 'हो ढः' इति ढत्वे कृते 'झषस्तथोर्धोऽधः' इति तृच्-तकारस्य धत्वम्, ष्टुत्वम्, 'ढो ढे लोपः', 'सहिवहोरोदवर्णस्य' इत्योत्वम्। **जलाषाडिति**। जलं सहत इति 'भजो ण्विः', 'छन्दसि सहः' इति ण्विः,

### पदमञ्जरी

स्वार-परसवर्णाभ्यामागतो ञकार इत्युच्यते। **नकारलोपे हीति**। तथा सन्निपातपरिभाषायाः प्रयोजनेषु पठितम्—उदुपधत्वस्य निकुचित इति। कुचितशब्दे कित्त्वसन्निपातकृतमुदुपधत्वम्, 'उदुपधाद् भावादिकर्मणोरन्यतरस्याम्' कित्त्वस्य निमित्तं न भवतीत्यर्थः। नन्वस्तु नोपधः, तथाप्यनुस्वारपरसवर्णयोः कृतयोः नकारस्य कुत्वप्रसङ्गः? अत आह—**तत्रेति**। चुत्वस्य त्वत्र प्रसङ्गो नास्ति; अनुस्वारं प्रति तस्यासिद्धत्वात्।।३०।।

**हो ढः।। सोढेति**। 'तीषसह' इतीड्विकल्पः। [1]**तुराषाडिति**। 'छन्दसि सहः' इति ण्विः, 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम्; 'सहेः साडः सः' इति षत्वम्। **प्रष्ठवाडिति**। 'वहश्च' इति ण्विः।।३१।।

### भावबोधिनी

अथवा नकारोपध और रेफ से रहित यह 'कुञ्च' धातु कौटिल्य तथा अल्पीभाव अर्थों में' पढा जाता है क्योंकि [ "अनिदितां हल उपधायाः क्ङिति" सूत्र से ] नकार का लोप कर देने पर [ नि कुच् + इ क्त में ] **'निकुचितः' ऐसा रूप देखा जाता है। और** 'युजिक्रुञ्चां च' इसमें इसी (कुञ्च) के रेफ अधिक और नकारलोप का **अभाव [ ये दोनों ] निपातित किये जाते हैं। इनमें अनुस्वार** और परसवर्ण इस दोनों कार्यों के असिद्ध हो जाने के कारण ञकार **रहता ही नहीं है (अपितु 'न्' रहता है) इसलिये कुत्व नहीं** होगा। [ अतः चवर्ग का अस्तित्व न होने से उसके कुत्व की प्राप्ति ही नहीं है। ]।।३०।।

हकार का ढकार आदेश झल् परे रहते और पदान्त में होता है। उदा॰ सोढा, सोढुम्, सोढव्यम्। [ 'सह्' धातु से तृच्, तुमुन्, तव्यत् प्रत्ययों के परे रहते इट् के अभाव में 'हो ढः' से ह् का ढ्, 'झषस्तथोर्धोऽधः' से त का ध, ष्टुत्व— सढ् ढ्ऋ आदि में 'सहिवहोरोदवर्णस्य' से अ का ओत्व, 'ढो ढे लोपः' से प्रथम ढ् का लोप करने के बाद प्रातिपदिक संज्ञा **तथा विभक्तिकार्य होते** हैं। ] जलाषाट्। [ जलं सहते—इस अर्थ में 'छन्दसि सहः' (३।२।१५) सूत्र से ण्वि प्रत्यय, उपधा की वृद्धि **उपपद समास—**

१.१. 'तुराषाट्'—इति पदमञ्जरीसम्मतः पाठः।

## ३७२०. दादेर्धातोर्घः।।३२।। (३२५)

**दकारादेर्धातोर्हकारस्य घकारादेशो भवति झलि परतः, पदान्ते च। दग्धा, दग्धुम्, दग्धव्यम्। काष्ठधक्। दोग्धा, दोग्धुम्, दोग्धव्यम्। [ काष्ठधुक्। ] गोधुक्।**

**दादेरिति किम्? लेढा, लेढुम्, लेढव्यम्। गुडलिट्।**

**'धातोः' इति दादिसमानाधिकरणमेतन् न, किं तर्हि? तद्विशेषणमवयवषष्ठ्यन्तम्–धातोरवयवो यो दादिः शब्दस्तदवयवस्य हकारस्येति। किं[1] कृतं भवति? अधोगित्यत्रापि घकारः सिद्धो भवति।**

**न्यासः**

उपधावृद्धिः' उपपदसमासः, 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः, ढकारस्य जश्त्वम्-डकारः, तस्य चर्त्वम्-टकारः, 'सहेः साडः सः' इति मूर्धन्यः। **प्रष्ठवाडिति**। 'वहश्च' इति ण्विः।

'चुहोः कुढौ'—इत्येकयोग एव कर्तव्ये पृथग्योगकरणं समसंख्यात्वप्रतिषेधार्थम्। एकयोगे तु समसंख्यात्वाज्झलादौ कुत्वं पदान्ते ढत्वं स्यात्।।३१।।

**दादेर्धातोर्घः।। दग्धा, दग्धुमिति**। पूर्ववद्धत्वम्, घकारस्य झशि जश्त्वम्-गकारः। **काष्ठधगिति**। क्विबन्तमेतत्। 'एकाचो बशो भष्' इत्यादिना दकारस्य भष्—धकारः, घकारस्य जश्त्वम्—गकारः, तस्य चर्त्वम्—ककारः। 'दादेः' इत्युच्यते, तेनाधोगित्यत्र घत्वं न सिध्यति, अदकारादित्वेऽस्याविहितत्वादित्यत आह—**धातोरित्यादि**। **तद्विशेषणमिति**। दादेर्विशेषणमित्यर्थः। किंविशिष्टम्? अवयवषष्ठ्यन्तमिति। अवयव-

**पदमञ्जरी**

**दादेर्धातोर्घः।। किं तर्हि तद्विशेषणमिति**। यद्यपि समानाधिकरणं न भवतीत्यस्यैतत्प्रतिपक्षभूतं न भवति, समानाधिकरणस्यापि विशेषणत्वोपपत्तेः, तथापि सामानाधिकरण्यपक्षे 'धातोः' इत्येतद्विशेष्यम्; अत्र तु पक्षे विशेषणमित्यस्यैव प्रतिपक्षता। **अवयवषष्ठ्यन्तमिति**। अवयवसम्बन्धे या षष्ठी तदन्तमित्यर्थः। अत्र स्पष्टमेव प्रतिपक्षत्वम्-धातोरवयवो यो दादिःशब्द इति। एवं चोपक्रमेऽपि दकारादेः, धातोः—इति व्यधिकरणे षष्ठ्यौ। **किं कृतं भवतीति**। किमिष्टं सिद्धं भवतीत्यर्थः। **अधोगित्यत्रापीति**। सामानाधिकरण्ये त्वडागमेन दादित्वस्य विहतत्वान्न स्यात्।

**भावबोधिनी**

जलसाह् 'अन्येषामपि दृश्यते' से पूर्वपद का दीर्घ, ह् का ढ्, ज़श्त्व से ढ् का ड्, चर्त्व से ट् होता है—जलाषाट्। वेद में ही ऐसा होता है। ] वोढा, वोढुम्, वोढव्यम्। [ वह् धातु से भी तृच् आदि प्रत्यय परे ह् का ढत्व, त का ध, ष्टुत्व और ढलोप के बाद 'सहिवहोरोदवर्णस्य' से अ का ओत्व करने पर रूप बनते हैं। ] 'प्रष्ठवाट्। दित्यवाट्। [ प्रष्ठं वहति; दित्यं वहति—इनमें 'वहश्च' सूत्र से 'ण्वि' प्रत्यय उपधावृद्धि, उपपद समास आदि के बाद में अन्त में ह् का ढ, जश्त्व से ड् और चर्त्व से ट् होता है। ]।।३१।।

दकारादि धातु के हकार का घकार आदेश झल् परे रहते और पदान्त में होता है। उदा० दग्धा, दग्धुम्, दग्धव्यम्। [ दह् + तृच्, तुमुन्, तव्यत् परे ह का घ होता है। त् का ध् करने पर 'झलां जश् झशि' सूत्र से जश्त्व द्वारा घ का ग्— द ग् धृ आदि से विभक्तिकार्य होता है। ] काष्ठधक् [ काष्ठं दहति—इसमें क्विप्, उपपद समास—काष्ठदह्, ह् का घ्, 'एकाचो बशो भष्' सूत्र से भष्भाव से द का ध—काष्ठधक् जश्त्व, चर्त्व-काष्ठधक्। ] दोग्धा; दोग्धुम्, दोग्धव्यम्। [ दुह् धातु से तृच् आदि प्रत्ययों के परे पूर्वोक्त सारी प्रक्रिया होती है। ] काष्ठधुक्। [ काष्ठं दोग्धि—यहाँ भी पूर्ववत् सभी कार्य होते हैं। ] गोधुक् [ गां दोग्धि ]

दकार आदि में है जिसके उसका—इसका क्या फल है? लेढा, लेढुम्, लेढव्यम्। [ लिह्, तृच् आदि परे रूप हैं। ह् का घ् न होकर पूर्व सूत्र से ढ् ही होता है। ] गुडलिट्। [ गुडं लेढि—इस अर्थ में है। यहाँ भी दादि न होने से घत्व नहीं होता है ढत्व, जश्त्व, चर्त्व होता है। ]

---

१. किमेवम्—इति मुद्रितः पाठः।

**कथं दोग्धा, दोग्धुमिति? व्यपदेशिवद्भावात्।**

**अथ वा–धातूपदेशे यो दादिरित्येवं विज्ञायते। तथा च–दामलिहमिच्छति–दामलिह्यति, दामलिह्यतेः क्विप्प्रत्ययः–दामलिडित्यत्रापि न भवति।।**

**न्यासः**

सम्बन्धिनी या षष्ठी तदन्तमित्यर्थः। **किं कृतं भवतीति**? एवं सति किमिष्टं साधितं भवतीत्यर्थः। **अधोगित्यत्रापि घकारः सिद्धो भवतीति**। अत्रापि धातोरवयवो यो दादिशब्दस्तदवयवत्वाद् हकारस्य। दुहेर्लङ्, तिप्, अदादित्वाच्छपो लुक्, हल्ङ्यादिलोपः, पूर्ववद् भष्भावः, अट्।

**कथमित्यादि**। धातोरवयवो यो दादिशब्दस्तदवयवस्य हकारस्य घत्वं भवति। एवं सति दग्धा, दग्धुमित्यत्र घत्वं न कथञ्चिदित्यर्थः। तथा ह्यत्र धातोरवयवो यो दादिशब्दो न तस्यावयवो हकारः। यस्य तु समुदायस्य हकारोऽवयवः स धातुरेव, न हकारावयवः। अत्रोत्तरमाह—**व्यपदेशिद्भावादिति**। एषोऽपि व्यपदेशिवद्भावेन धातोर्दादिरवयवो भवति। अभेदेऽपि व्यपदेशिवद्व्यवहारो लोके दृश्यते। तथा हि—शिलापुत्रकस्य शरीरम्, राहोः शिर इति च।

**अथ वेत्यादि**। धातूपदेशः = धातुपाठः। तत्र यो दादिरित्येवं विज्ञायते। कथं पुनर्धातुपाठे दकारादित्वं विशेषणं लभ्यते, धातुग्रहणसामर्थ्यात् तस्य हीदं प्रयोजनं स्याद्—अधातोर्मा भूदिति। एतच्चाप्रयोजनम्, न ह्यधातोर्धकारादेर्झलि वा पदान्ते च हकारोऽवयवः सम्भवति, यन्निवृत्त्यर्थं धातुग्रहणम्। तदतिरिच्यमानं **धातूपदेश** एव दकारादित्वं विशेषणं भवतीत्यमुमर्थं गमयति। एवं विज्ञायमाने यद्यपि 'धातोः' इत्यस्य 'दादेः' इत्यनेन सामानाधिकरण्यम्, तथाप्यधोगित्यत्र घत्वं प्रवर्तत एव; धातुपाठे दुहेर्दकारादित्वात्। **तथा चेत्यादि**। एवञ्च

**पदमञ्जरी**

**कथमिति**। धातुरेवायं न धातोरवयव इति प्रश्नः। **अथ वेति**। अस्मिन्पक्षे उपक्रमेऽपि 'दादेर्धातोः' इति यथाश्रुतमेव। **धातूपदेश इति**। एतच्च धातुग्रहणाल्लभ्यते।

न ह्यधातोर्दकारादेर्हकारान्तस्य सम्भवः। देवानडुद्भ्यामित्यादौ यस्माड्ढत्वं प्रवर्त्तते।।१।।

तदेतदसमीचीनमवधानच्युतं वचः। यस्माद्दामलिडित्यादेरधातोरपि सम्भवः।।२।।

तस्माद्धातुग्रहणमावर्तनीयम्। तत्रैकमतिरिच्यमानमुपदेशकालं लक्षयति। **तथा चेति**। पूर्वत्र तु पक्षे व्यपदेशिवद्भावेन दामलिडित्यत्रापि प्रसङ्गः।।३२।।

**भावबोधिनी**

'धातोः' यह दादि का समानाधिकरण नहीं है। तो क्या है? उसका विशेषण अवयव-षष्ठ्यन्त है—धातु का अवयव जो दकारादि शब्द उसके अवयव हकार का घकार होता है। इससे क्या किया जाता है? अधोक्—यहाँ भी घकार सिद्ध होता है। [ दुह् + लङ् = तिप्, अट् आगम कर देने पर अदुह् + त् अवस्था में दादि न होने से घत्व सम्भव नहीं रहता। अतः धातु के अवयव दकारादि शब्द के हकार का घत्व माना जाता है। आगमविशिष्ट होने पर भी धातु का अवयव यह दकारादि ही माना जाता है। अतः घत्व हो जाता है। ]

[ यदि धातु का अवयव होते हुए दकारादि होना चाहिये, ऐसा मानते हैं तो ] दोग्धा, दोग्धुम्—इनमें घत्व कैसे होगा? व्यपदेशि-वद्भाव से। [ भाव यह है कि उसी एक में अवयव-अवयविभाव की कल्पना करके उसको धातु का अवयव मान लेने से सिद्ध हो जाता है। ]

अथवा धातु के उपदेशकाल में जो दकारादि है उसके ह् का घ् होता है—ऐसा समझा जाता है। इसलिये 'दामलिहम् इच्छति' इस अर्थ में 'दामलिह्यति' इस (क्यजन्त) से क्विप् प्रत्यय करने पर—'दामलिट्' इस रूप में भी घत्व नहीं होता है। [ क्योंकि धातुपाठ में इसका उल्लेख नहीं है अपितु नामधातु बनाया गया है। ]।।३२।।

**३७२१. वा द्रुहमुहष्णुहष्णिहाम्।।३३।। (३२७)**

**द्रुह, मुह, ष्णुह, ष्णिह–इत्येतेषां धातूनां हकारस्य वा घकारादेशो भवति झलि परतः, पदान्ते च। द्रुह्–द्रोग्धा, द्रोढा। मित्रध्रुक्, मित्रध्रुट्। मुह्–उन्मोग्धा, उन्मोढा। उन्मुक्, उन्मुट्। स्नुह्–उत्स्नोग्धा, उत्स्नोढा। उत्स्नुक्, उत्स्नुट्। स्निह्–स्नेग्धा, स्नेढा। स्निक्, स्निट्।**

**द्रुहेर्दादित्वाद् घत्वं नित्यं प्राप्तम्, इतरेषामप्राप्तमेव घत्वं विकल्प्यते।।**

**३७२२. नहो धः।।३४।। (४४०)**

**नहो हकारस्य धकारादेशो भवति झलि परे पदान्ते च। नद्धम्, नद्धुम्, नद्धव्यम्। उपानत्। परीणत्।**

**न्यासः**

विज्ञायमाने यद्यपि दामलिह्यतेर्दकारादित्वम्, तथापि दामलिडित्यत्र न भवति घत्वम्; धातूपदेशे तस्यादकारादित्वात्। धातुत्वं तस्य 'सनाद्यन्ता धातवः' इति। न केवलमधोगित्यत्र घत्वं भवति, अपि तु दामलिहेरपि भवतीत्यपिशब्दो द्योतयति। दाम लेढीति दामलिडिति क्विप्, तदन्ताद् दामलिहमिच्छतीति 'सुप आत्मनः क्यच्' इति, क्यजन्तात् क्विप्, 'अतो लोपः' इत्यकारलोपः, 'क्यस्य विभाषा' इति यकारस्य च, 'हो ढः' इति ढत्वम्, ढकारस्य जश्त्वम्।।३२।।

**वा द्रुहमुहष्णुहष्णिहाम्**।। **द्रुहेरिति**। 'द्रुह जिघांसायाम्' इत्यस्य। **इतरेषामिति**। 'मुह वैचित्ये', 'ष्णुह उद्गिरणे', ष्णिह प्रीतौ'—इत्येतेषामप्राप्तेः। [ न ] पुनरेषां घत्वं स्याद् ; अदकारादित्वात्।।३३।।

**नहो धः**।। **उपानदिति**। 'णह बन्धने', क्विप्, 'नहिवृति' इत्यादिना दीर्घः। **एवं परीणदिति**। अत्र णत्वं तु 'उपसर्गादसमासेऽपि' इत्यादिना। प्रक्रियालाघवार्थं दकारे विधातव्ये धकारविधानम्—नद्धेत्यत्र 'झषस्तथोर्धोऽधः'

**पदमञ्जरी**

**वा द्रुहमुहष्णुहष्णिहाम्**। दुहादय एते दिवादिष्वनेनैव क्रमेण प्रपठ्यन्ते, रधादित्वाद्विकल्पितेटः। तत्र 'वा द्रुहादीनाम्' इति वक्तव्ये प्रतिपदपाठो यङ्लुक्यपि यथा स्यात्-दोर्धुक्, दोर्धुट्; अन्यथा 'निर्दिष्टं यद्गणेन च' इति न स्यात्।।३३।।

**नहो धः**।। **परीणदीति**। सम्पदादित्वात्क्विप्, 'नहिवृति' इति दीर्घत्वम्, 'उपसर्गादसमासेऽपि' इति णत्वम्। प्रक्रियालाघवार्थं दकार एव विधातव्ये धकारविधानम् 'झषस्तथोर्धोऽधः' इति धत्वं यथा स्यात्, नद्धमित्यत्र रदाभ्यां निष्ठानत्वं च मा भूदिति।।३४।।

**भावबोधिनी**

द्रुह, मुह, ष्णुह, ष्णिह—इन धातुओं के हकार का घकार आदेश विकल्प से होता है झल् परे रहते और पदान्त में। उदा॰ द्रुह-द्रोग्धा द्रोढा। [ द्रुह् + तृच का रूप है। घत्व और विकल्प में ढत्व से दो रूप है। सभी में ऐसा समझना चाहिए। ] मित्रधुक्। मित्रधुट्। [ मित्रं द्रुह्यति—इस अर्थ में क्विप्, उपपद समास आदि के बाद विकल्प से ह् का घ्, भष्भाव से द् का ध् है। जश्त्व और चर्त्व से घ् का ग् और ग् का क् मित्रधुक्। पक्ष में ढत्व, भष्भाव, ढ का जश्त्व चर्त्व से ट् मित्रधुट्। ] मुह्—उन्मोग्धा, उन्मोढा। [ उत् मुह् + तृच्, घत्व के विकल्प में ढत्व, जश्त्व, आदि कार्य। ] उन्मुक्, उन्मुट्। [ यहाँ भी पक्ष में दोनों में ढत्व, जश्त्व चर्त्व होते हैं। ] स्नुह्—उत्स्नोग्धा उत्स्नोढा। उत्स्नुक् उत्स्नुट्। स्निह्—स्नेग्धा, स्नेढा। स्निक्, स्निट्।

द्रुह् धातु दकारादि है अतः पूर्व सूत्र से (द्रोग्धा में) नित्य घत्व प्राप्त है और अन्य धातुओं में घत्व की प्राप्ति नहीं है, इसमें यह विकल्प किया जाता है। [ अतः प्राप्ताप्राप्तविभाषा है। ]।।३३।।

'नह √'' धातु के हकार का धकार आदेश झल् परे रहते और पदान्त में होता है। उदा॰ नद्धम्, नद्धुम्, नद्धव्यम्। [ नह् धातु से क्त, तुमुन् और तव्यत् परे रहते 'ह्' का ध् होता है। 'झषस्तथोर्धोऽधः' सूत्र से त का ध, पूर्व ध् का जत्व आदि होने पर रूप

**३७२३. आहस्थः।।३५।। (२४५१)**

**आहो हकारस्य थकारादेशो भवति झलि परतः। इदमात्थ। किमात्थ?**

**आदेशान्तरकरणम्–'झषस्तथोर्धोऽधः' (८।२।४०) इत्यस्य निवृत्त्यर्थम्।**

**'झलि' इत्येव–आह, आहतु, आहुः।**

**❀ हृग्रहोर्भश्छन्दसि हस्येति वक्तव्यम्। ❀ गर्दुभेन सम्भंरति। (तै.सं. ५।१।५।५) ग्रभीता। जभ्रिरे। उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् (तै.स. (१।१।१३।१))।।**

**न्यासः**

इति धत्वं यथा स्यादित्येवमर्थम्। दकारे हि तन्न स्यात्, दकारस्याझष्त्वात्। 'रदाभ्या निष्ठातो नः' इत्येवमर्थं च, नकारो यथा न स्यादिति।।३४।।

**आहस्थः**।। **आत्थेति**। 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इति लडादेशस्य सिपस्थल् ब्रुवश्चाहादेशः, तस्यानेन थकारः, तस्य 'खरि च' इति चर्त्वम्—तकारः। किमर्थमादेशान्तरं क्रियते, न प्रकृतेर्विकार एव विधीयेत? इत्यत आह—**आदेशान्तरकरणमित्यादि**। यदि धकार आदिश्येत, ततः 'झषस्तथोर्धोऽधः' इति धत्वं स्यात्, अतस्तन्निवृत्त्यर्थमादेशान्तरं क्रियते।

**पदमञ्जरी**

**आहस्थः**।। अथ प्रकृतो धकार एव कस्मान्न विधीयते, तस्यापि हि चर्त्वेन आत्थेति सिद्धम्, थकारस्यापि चर्त्वेन भवितव्यम्, एवं च कृत्वा 'आहनहोर्धः' इत्येक एव योगः कर्त्तव्यः? अत आह—**आदेशान्तरकरणमिति**। एवमपि तकार एव कर्त्तव्यः।

**हृग्रहोरिति**। हकारस्येति वचनं हरत्यर्थम्। **निग्राभमिति**। 'उदि ग्रहः' इत्यत्र 'छन्दसि निपूर्वादपीष्यते' 'स्रुगुद्यमननिपातनयोः' इति वचनाद् वा घञ्।।३५।।

**भावबोधिनी**

बनते हैं। ] उपानत्। परीणत्। [ उपपूर्वक नह् से क्विप् परिपूर्वक नह् से क्विप् होता है। ह् का ध् और जश्त्व, चर्त्व करने के बाद 'नहि-वृति' (६-३-११६) सूत्र से उपसर्ग का दीर्घ होता है ]।।३४।।

'आह्' धातु के हकार का थकार आदेश झल् परे रहते होता है। उदा० इदम् आत्थ। किम् आत्थ? [ ब्रू + लट् = सिप् में 'ब्रुवः पञ्चानामादित आहो ब्रुवः' (३।४।८४) सूत्र से सिप् का थल् और ब्रू का आह् आदेश होता है—आह् + थ प्रस्तुत सूत्र से ह् का थ्, 'खरि च' से थ् का चर्त्व त्—आत्थ। ]

[ यहाँ भी ह का 'ध' क्यों नहीं किया गया क्योंकि इसका भी चर्त्व से तकार सम्भव था? ] अन्य आदेश करना अर्थात् ह् का ध् न करके थ् करना 'झषस्तथोर्धोऽधः (८-२-४०) से प्राप्त आदेश को रोकने के लिये है। [ जब ध किया जाता है तब झषन्त मान कर थ का ध् प्राप्त होने लगता है। फलतः 'आत्थ' रूप नहीं बन पाता। जब 'थ' किया जाता है तब झषन्त न होने से थ का ध् नहीं होता है। वास्तव में 'आहस्थः' सूत्र न बना कर 'आहस्तः' बनाने में और भी लाघव है। ]

झल् परे ही होता है—आह, आहतुः आहुः हैं [ यहाँ लट् के तिप्, तस्, झि के स्थान पर णल्, अतुस्, उस् आदेश। झल् परे नहीं है। ह का थ नहीं होता है। ]

❀ वेदविषय में हृ तथा ग्रह धातुओं के हकार का भकार आदेश होता है—ऐसा कहना चाहिये। ❀ उदा० गर्दभेन सम्भरति। [ सम् + हरति, ह् का भ ] ग्रभीता। जभ्रिरे। [ ग्रह् + इ ता में ह का भ, 'ग्रहोऽलिटि' से इट् का दीर्घ होता है। ग्रह + लिट् = झि = इरे में द्वित्व आदि और ह का भ् होता है। ] "उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्।"

## ३७२४. व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः।।३६।। (२९४)

**व्रश्च, भ्रस्ज, सृज, मृज, यज, राज, भ्राज-इत्येतेषाम्, छकारान्तानाम्, शकारान्तानां च षकार आदेशो भवति झलि परतः, पदान्ते च। व्रश्च-व्रष्टा, व्रष्टुम्, व्रष्टव्यम्। मूलवृट्। भ्रस्ज-भ्रष्टा, भ्रष्टुम्, भ्रष्टव्यम्। धानाभृट्। सृज-स्रष्टा, स्रष्टुम्, स्रष्टव्यम्। रज्जुसृट्। मृज-मार्ष्टा, मार्ष्टुम्, मार्ष्टव्यम्। कंसपरिमृट्। यज-यष्टा, यष्टुम्, यष्टव्यम्। उपयट्। राज्-सम्राट्। स्वराट्। विराट्। भ्राज-विभ्राट्।**

### न्यासः

**हग्रहोरित्यादि**। हरतेः, ग्रहेश्च यो हकारस्तस्य च्छन्दसि विषये भकारो वक्तव्यः। हकारस्येति वचनं हरत्यर्थम्। ग्रहेस्तु 'अलोऽन्त्यस्य' इत्येव भविष्यति हकारस्य। ग्रभीतेति। तृन्, इट्, 'ग्रहोऽलिटि दीर्घः'। **जभ्रिर इति**। हृञो लिट् 'लिटस्तझयोरेशिरेच्' इति झस्येरेच्, यणादेशः, द्विर्वचनम्, अभ्यासकार्यम्। **उद्ग्राभम्, निग्राभमिति**। ग्रहेः 'हलश्च' इति घञ्। एतत्तु सर्वम् 'व्यत्ययो बहुलम्' इति वर्णव्यत्ययेनैव सिद्धम्। वक्तव्यशब्दस्य व्याख्येयमित्येषोऽर्थो वेदितव्यः।।३५।।

**व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः**।। 'ओव्रश्चू छेदने' 'भ्रस्जो पाके', 'सृज विसर्गे', 'मृजूष् शुद्धौ', 'यज देवपूजासङ्गतिकरणदानेषु', 'राजृ दीप्तौ', 'टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ'। छ इतिच्छकारान्तानां ग्रहणम्, श इति शकारान्तानाम्। अत्र च शकारस्य जश्त्वे प्राप्ते, इतरेषां तु कत्वे, तदपवादः षकारो विधीयते। **व्रष्टेति**। 'स्कोः

### पदमञ्जरी

**व्रश्चभ्रस्जसृजमृजयजराभ्राजच्छशां षः**।। अत्र शकारान्तस्य जश्त्वे प्राप्ते, इतरेषां तु कुत्वे तदपवादः षत्वं विधीयते। **मूलवृट् धानाभृडिति**। ग्रहिज्यादिना सम्प्रसारणम्, 'स्कोः संयोगाद्योः', इति सलोपः, षकारस्य जश्त्वम्—डकारः, 'वावसाने' इति पक्षे टकारः।

### भावबोधिनी

[उद् ग्रह + घञ् = अ, नि ग्रह + घञ् = अ, उपधा की वृद्धि के बाद ह का भ होता है। वास्तव में वेद में 'व्यत्ययो बहुलम्' इसी वचन से सम्भव है। अलग वार्तिक आवश्यक नहीं है।]।।३५।।

व्रश्च, भ्रस्ज्, सृज, मृज, यज, राज, भ्राज—इन धातुओं का और छकारान्त तथा शकारान्त धातुओं का षकार (अन्त) आदेश होता है झल् परे रहते तथा पदान्त में। क्रमशः उदा० (१) व्रश्च—व्रष्टा, व्रष्टुम्, व्रष्टव्यम्। [वृश्च से तृच्, तुमुन, तव्यत् करने के बाद श्च में मूलतः स् है उसका लोप 'स्कोः संयोगाद्योरन्ते च' सूत्र से होता है। प्रस्तुत सूत्र से च् का ष् होता है, त का ष्टुत्व ट करने पर रूप बनते हैं। 'ओ व्रश्चू छेदने' धातु ऊदित है। इनमें वैकल्पिक इट् के अभावपक्ष में रूप हैं।] [मूलं वृश्चति—इस अर्थ में क्विप्, उपपद समासादि के बाद "ग्रहिज्या." से रेफ का सम्प्रसारण ऋ, अ का पूर्वरूप, पूर्ववत् स् लोप, षत्व, जश्त्व, चर्त्व होने पर—] मूलवृट्। (२) भ्रस्ज—भ्रष्टा, भ्रष्टुम्, भ्रष्टव्यम्। [भ्रस्ज् से तृच्, तुमुन, तव्यत् परे हैं। संयोगादि स् का लोप, ज् का ष्, ष्टुत्व होते हैं।] धानाभृट्। [धानां भृज्जति— अर्थ में क्विप्, उपपद समास, रेफ का सम्प्रसारण, अ का पूर्वरूप आदि के बाद स् लोप, ज् का ष, जश्त्व, चर्त्व] (३) सृज्—स्रष्टा, स्रष्टुम, स्रष्टव्यम् [सृज् से तृच् आदि के बाद 'सृजिदृशोर्झल्यमकिति' सूत्र से अम् का आगम अन्त्य अच् से पूर्व में—सृ अज् + तृ, यण् स्रज् + त, ज् का ष्, ष्टुत्व आदि होता है।] रज्जुसृट्। [यहाँ क्विप् परे होने से अम् का आगम नहीं होता है।] (४) मृज्—मार्ष्टा, मार्ष्टुम्, मार्ष्टव्यम्। [मृज्—तृच् आदि में 'मृजेर्वृद्धिः' सूत्र से ऋ की वृद्धि आ, रपर ज् का ष्, ष्टुत्व आदि होता है।] कंसपरिमृट्। [कंसं परिमार्ष्टि—अर्थ में उपपद समास आदि के बाद स् लोप, ज् का ष, जश्त्व, चर्त्व।] (५) यज्—यष्टा, यष्टुम्, यष्टव्यम्। उपयट्। (ज का ष्, ष्टुत्व) (६) राज्—सम्राट्। [सम् + राज्, षत्व, जश्त्व, चर्त्व के बाद 'मो राजि समः क्वौ' से म का म ही आदेश होता है।] स्वराट्। विराट्। [सभी में क्विप् प्रत्यय परे पदान्त के रूप हैं।] भ्राज्—विभ्राट्। [विपूर्वक भ्राज् + क्विप् शेष पूर्ववत्]

**राजभ्राजोः पदान्तार्थं ग्रहणम्, झलादिराभ्यामिटा पर्यवपद्यते। केचित्तु–राष्टिः, भ्राष्टिरिति क्तिन्नन्तमिच्छन्ति।**

**छकारान्तानाम्–प्रच्छ–प्रष्टा, प्रष्टुम्, प्रष्टव्यम्। शब्दप्राट्।**

**'च्छ्वोः शूडनुनासिके च' (६।४।१९) इत्यत्र 'क्ङिति' इत्यनुवर्त्तते–इति छग्रहणमिह क्रियते।**

### न्यासः

संयोगाद्योः' इति सकारलोपः, ऊदित्त्वात् पक्ष इडभावः। **मूलवृड्, धानाभृडिति**। 'ग्रहिज्या' इति सूत्रेण सम्प्रसारणम्। **स्रष्टेति**। 'सृजिदृशोर्झल्यमकिति' इत्यमागमः। **मार्ष्टीति**। 'मृजेवृद्धिः'। **उपयडिति**। यजेः 'विजुपे छन्दसि' इति विच्। **सम्राडिति**, 'मो राजि समः क्वौ' इति समौ मकारस्य मकारादेशः।

किं पुनः कारणं राजभ्राजोर्झल्युदाहरणं न प्रदर्शितम्? इत्याह—**राजभ्राजोरित्यादि**। झल्त्वं कस्मान्न भवतीत्याह—**झलादिराभ्यामित्यादि**। आभ्यां परो यो झलादिः स इटा पर्यवपद्यत इतीड् विधीयते; सेट्त्वानदनयोः। इतरेष्वाद्यचतुर्थौ विभाषितेटौ, स्वरतीत्यादिसूत्रेण। शेषास्त्वनिटः; 'एकाचः' इतीट्प्रतिषेधात्। तस्मात् तेषामुभयार्थमेव ग्रहणम्। **राष्टिः, भ्राष्टिरिति**। 'क्तिन्नाबादिभ्यश्च' इति क्तिन्प्रत्ययः, 'तितुत्र' इत्यादिनेट्प्रतिषेधः। **शब्दप्राडिति**। शब्दं पृच्छतीति 'क्विब्वचि' इत्यादिना क्विप्, दीर्घश्च।

अथ किमर्थं छग्रहणम्, यावता 'च्छ्वोः शूडनुनासिके च' इति च्छकारस्य शकारे कृते शकारान्तत्वादेव पृष्ट इत्यादौ षत्वं भविष्यति? इत्यत आह—**च्छ्वोः शूडित्यादि**। **अत्रेत्यादि**। इतिकरणो हेतौ। तत्र हि 'अनुनासिकस्य क्विझलोः क्ङिति' इत्यनुवर्त्तते, तेन च्छग्रहणं क्रियते; अन्यथा पृष्टः, पृष्टवानित्याद्येव सिध्येत् ; न तु प्रष्टा,

### पदमञ्जरी

**झलादिराभ्यामित्यादि**। **पर्यवपद्यते**-व्यवधीयते। **राष्टिः, भ्राष्टिरिति**। 'गुरोश्च हलः' इत्यकारे प्राप्ते 'क्तिन्नाबादिभ्यः' इति क्तिन्प्रत्ययः, 'तितुत्रतथ' इत्यादिनेट्प्रतिषेधः।

**शब्दप्राडिति**। 'क्विब्वचि' इत्यादिना क्विप्, दीर्घत्वम्, सम्प्रसारणाभावश्च। छग्रहणमनर्थकम्; 'च्छ्वोः शूड्' इत्यादिना छस्य शत्वे कृते शान्तानामित्येव षत्वं सिद्धम्? अत आह—**च्छ्वोः शूडित्यादि**।।३६।।

### भावबोधिनी

राज √ तथा भ्राज √ इन धातुओं का ग्रहण पदान्त [ में ष करने ] के लिये हैं, क्योंकि इन दोनों से परे झलादि प्रत्यय इट् से व्यवहित हो जाता है। [ चूँकि ये दोनों धातुयें नित्य सेट् हैं। अतः झलादि कहीं नहीं मिल सकता, मध्य में इट् आगम का व्यवधान हो जाता है। कई विकल्प से इट्वाली अथवा सर्वथा अनिट् हैं। उन्हीं में झलादि परे षत्व करना सम्भव है। ] कुछ विद्वान्—'राष्टि': भ्राष्टिः, ऐसा क्विन् प्रत्ययान्त रूप चाहते हैं। [ इनके लिये झलादि परे भी इन धातुओं का षत्व करना प्रयोजन हैं। क्योंकि 'तितुत्रतथ॰ आदि सूत्र से इट् निषेध हो जाता है। ]'

छकारान्तों के उदा॰ प्रच्छ—प्रष्टा, प्रष्टुम्, प्रष्टव्यम्। [ प्रच्छ + तृच, तुमुन्, तव्यत् परे 'च्छ्' का ष्, ष्टुत्व होता है। ] शब्दप्राट्। [ शब्दं पृच्छति अर्थ में क्विप्, सम्प्रसारण, उपपद समास, षत्व, जत्व, चत्व ]

[ 'च्छ्वोः शूडनुनासिके च' इसी सूत्र से श् का ष् करने पर 'पृष्टः' आदि बन सकते हैं। तब अलग से 'छ' ग्रहण की क्या आवश्यकता? ] च्छ्वोः शूडनुनासिके 'च' (६।३।१९) इस सूत्र में 'कित् ङित् परे' इसकी अनुवृत्ति होती है। इसलिये प्रस्तुत सूत्र में 'छ' का भी ग्रहण किया जाता है। [ क्योंकि यह सूत्र कित् न रहने पर भी तृच् तुमुन् आदि में छ् का ष कर सके—प्रष्टुम्। ]

**शकारान्तानाम्–लिश्–लेष्टा, लेष्टुम्, लेष्टव्यम्। लिट्। विश्-वेष्टा, वेष्टुम्, वेष्टव्यम्। विट्।।**

## ३७२५. एकाचो बशो भष् झषन्तस्य स्ध्वोः।।३७।। (३२६)

**धातोरवयवो य एकाच् झषन्तः तदवयवस्य बशः स्थाने भष् आदेशो भवति झलि सकारे ध्वशब्दे च परतः पदान्ते च।**

**अत्र चत्वारो बशः स्थानिनः, भषादेशाश्चत्वार एव; तत्र संख्यातानुदेशे प्राप्ते डकारस्य स्थानिनोऽभावाद् ढकारादेशो न भवति? आन्तर्यतो व्यवस्था विज्ञास्यते।।**

**न्यासः**

प्रष्टुमित्यादि; तृजादावक्ङिति शत्वाभावात्। **एतच्च सूत्रकारमतेनोक्तम्।** केचिदाचार्याः छग्रहणमिह सूत्रे प्रत्याचक्षत एव। तथा हि —'च्छ्वोः शूडनुनासिके च' इत्यत्रोक्तम्—"केचिदिह क्ङितीत्येतन्नानुवर्त्तयन्ति। कथं द्युभ्याम्, द्युभिरित्यूठि कृते? 'दिव उत्' इति तपरकरणान्मात्राकालो भविष्यतीति। 'छशां षः' इत्यत्र च्छग्रहणं न कर्तव्यम्, अनेनैव हि सर्वत्र शकारो विधीयते" इति।

**लेष्टेति**। 'लिश अल्पीभावे'। **वेष्टेति**। 'विश प्रवेशने'।।३६।।

**एकाचो बशो भष् झषन्तस्य स्ध्वोः**।। 'धातोः' इति यदीहानुवर्तते तदवयवषष्ठ्यन्तमेकाचो विशेषणम्। 'झषन्तस्य' इत्येतदपि समानाधिकरणं तस्यैव विशेषणम्। 'एकाचः' इत्येतदवयवषष्ठ्यन्तं बशः। **तदवयवस्येति**। तस्यावयवस्तदवयवः। योऽसौ धातोरवयव एकाज् झषन्तस्तस्य, तदित्यनेनाभिसम्बध्यते। **झलि परत** इत्यनेन झलीत्यनुवर्तते, तस्य सकारो विशेषणमिति दर्शयति। किमर्थं पुनर्झलीत्यनुवर्तते? पदान्तस्येत्यनुवृत्तिर्यथा स्यात्; अन्यथा झलीत्यस्मिन् निवर्तमाने तत्सम्बद्धं पदान्तग्रहणमपि निवर्तेत, ततश्च पदान्ते न सिध्येत्। ननु च

**पदमञ्जरी**

**एकाचो बशो भष् झषन्तस्य स्ध्वोः**।। 'धातोः' इति यदिहानुवर्तते तद्व्यधिकरणमवयवषष्ठ्यन्तम् 'एकाचः' इत्यस्य विशेषणम्। 'झषन्तस्य' इत्येतदपि तस्यैव समानाधिकरणं विशेषणम्। एवंविशिष्टं त 'एकाचः' इत्येतदवयवषष्ठ्यन्तविशेषणम्। तदाह—**धातोरवयव इत्यादि। झलि सकार इति**। एतेनानुवर्त्तमानस्य झलो विशेषणं सकार इति दर्शयति। **किमर्थं पुनरिह झलीत्यनुवर्तते**? 'अन्त' इत्यस्यानुवृत्तिर्यथा स्याद्, अन्यथा झलीत्यस्य निवृत्तौ तत्सम्बद्धमन्त इत्यपि निवर्त्तेत। ननु

चत्वारो भष आदेशाः स्थानिनस्तु बशस्त्रयः।
डकारस्य तु न क्वापि सम्भवोऽस्ति कथञ्चन।।

ततश्च वैषम्यात्संख्यातानुदेशो न प्राप्नोति? तत्राह—**चत्वारो बशः स्थानिन इत्यादि**।

**भावबोधिनी**

शकारान्तों के उदा॰ लिश्—लेष्टा, लेष्टुम्, लेष्टव्यम्। [ लिश अल्प होना अर्थ में है। इससे तृच् आदि परे श का ष और ष्टुत्व होता है। ] लिट्। [ लिश् क्विप्, श का षत्व, जश्त्व, चर्त्व ] विश्—वेष्टा, वेष्टुम्, वेष्टव्यम् [ विश् + तृच् आदि परे षत्व, ष्टुत्व ] विट् [ विश् + क्विप्, षत्व, जश्त्व, चत्व। ]।।३६।।

धातु का अवयव जो एकाच् (एक अच्वाला) झषन्त (= झष् प्रत्याहार का कोई वर्ण जिसके अन्त में है) उस धातु के अवयव बश् (प्रत्याहार के वर्ण) के स्थान में भष् आदेश झल् = झलादि, सकार और ध्व शब्द परे रहते तथा पदान्त में होता है।

इनमें चारों बश् = बगडद स्थानी हैं और भष् = भ घ ढ ध ये भी चार ही आदेश हैं इनमें संख्याक्रम से आदेश प्राप्त होने पर डकार वर्ण स्थानी के रूप में कहीं नहीं हो सकता। अतः ढकार आदेश नहीं होगा? इनमें आन्तर्य = सादृश्य के द्वारा व्यवस्था समझ ली जायगी। [ अतः यथासंख्य सम्भव न होने पर भी कोई अव्यवस्था नहीं होती है। ]

**बुध्–भोत्स्यन्ते। अभुद्ध्वम्**[1]**। अर्थभुत्। गुह्–निघोक्ष्यते। न्यघूढ्वम्। पर्णघुट्। दुह्–धोक्ष्यते। अधुग्ध्वम्। गोधुक्।**

**अजर्घाः–गृधेर्यङ्लुगन्तस्य लङि सिपि लघूपधगुणे कृते सिपो हल्ङ्यादिलोपे च धातोरवयवस्यैकाचो बशः स्थाने भष्भावः, ततो धकारस्य जश्त्वम्, 'दश्च' (८।२।७५) इति रुत्वम्, 'रो रि' (८।३।१४) इति पूर्वरेफस्य लोपः,'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (६।३।१११) इति दीर्घत्वम्।**

**न्यासः**

स्वरितत्वात् पदान्तस्येत्यस्यानुवृत्तिर्भविष्यति? तर्ह्यनेनापि प्रकारेणाख्यायते मन्दधियां सुखप्रतिपत्तये। **ध्वशब्दे चेति**। अत्र झलीत्येतन्नापेक्षते; असम्भवात्। न हि कश्चित् झल् ध्वशब्दोऽस्ति; तस्य प्रत्याहारेष्वसन्निवेशात्। **भोत्स्यत इति**। 'बुध अवगमने', लृट्, स्यः, 'खरि च' इति चर्त्वम्—तकारः, अनुदात्तेत्त्वादात्मनेपदम्। अत्र बुधेर्धातोर्व्यपदेशिवद्भावेन स्वरूपेमेवैकाजवयवो झषन्तः, तदवयवो बकारो बश्, अस्यान्तरतम्यादोष्ठ्यस्य स्थान ओष्ठ्य एव भकारो भविष्यति। एवमन्यत्रापि विज्ञेयम्। **अभुद्ध्वमिति**। लुङ्, 'धि च' इति सकारलोपः, 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वाद् गुणाभावः। **अर्थभुदिति**। क्विप्। **निघोक्ष्यत इति**। 'गुहू संवरणे', हो ढः' इति ढत्वम्, 'षढोः कः सि' इति कत्वम्, 'आदेशप्रत्ययोः' इति षत्वम्। **न्यघूढ्वमिति**। 'ढ्रलोपे पूर्वस्य दीर्घोऽणः'। **धोक्ष्यत इति**। दुहो लृट्, 'दादेर्धातोर्घः', तस्य 'खरि च' इति चर्त्वम्—ककारः।

**अजर्घा इति**। 'गृधु अभिकाङ्क्षायाम्', यङ्, द्विर्वचनम्, हलादिशेषः, 'उरत्' इत्यत्वम्, 'कुहोश्चुः' इति चुत्वम्, यङ्लुक्, 'रुग्रिकौ च लुकि' इति रुक्। जगृध इति स्थिते लङादयो विधेयाः। अत्र मुख्य एव गृध इत्ययं धातोर्झषन्तोऽवयवः।

**पदमञ्जरी**

शास्त्रप्रतीतिवेलायां संख्यासाम्यस्य सम्भवात्।
प्रवर्तते यथासंख्यमनुष्ठाने त्वसम्भवः।।

इत्यर्थः। क्वचित्तु नायं पठ्यते। **भोत्स्यन्त इति**। बुधिरनुदात्तेत्, लुटि स्यः, तत्र व्यपदेशिवद्भावेन धातुं प्रत्येकाचोऽवयवत्वम्। **अभुद्ध्वमिति**। 'धि च' इति सिचो लोपः। गुहिदुही स्वरितेतौ।

**अजर्घा इति**। गृधेर्यङ्लुकि द्विर्वचने धातुं प्रत्येकाचोऽवयवत्वम्, 'रुग्रिकौ च लुकि' इति रुक्, जर्गृध् इति स्थिते लङादि।

**भावबोधिनी**

**विमर्श**—इस प्रघट्टक पर न्यास व्याख्यान नहीं प्राप्त होता है परन्तु उनकी शैली के अनुसार इसकी भी सरल व्याख्या होनी चाहिए थी। सम्भव है सर्वप्रथम प्रतिलिपिकर्ता ने यह अंश छोड़ दिया हो, उसके बाद किसी ने इस न्यूनता की ओर ध्यान नहीं दिया और आज तक यह अंश ही प्रकाशित हो रहा है। इस अंश की न्यास व्याख्या खोजनी चाहिए। यह भी सम्भव है न्यासकार के समक्ष यह मूल ही न रहा हो जैसाकि पदमञ्जरी से संकेत मिलता है—"क्वचित्तु नायं ग्रन्थः पठ्यते।"

(अनु॰) उदा॰ बुध्—भोत्स्यते। [ बुध् + स्य + ऌट् = त भष्भाव से ब का भ भुध् + स्य त जश्त्व चर्त्व ध् का त्, उपधागुण ] अभुद्ध्वम्। [ बुध् + लुङ् = ध्वम्, अट् सिच् अ बुध् + स् ध्वम् जश्त्व से ध् का द् 'धि च' सूत्र से सलोप के बाद ध्व शब्द परे मान कर भष्भाव से ब का भ्—अभुद्ध्वम्, कित् होने से उपधागुण नहीं होता है। ] अर्थभुत्। [ अर्थं बुध्यते—इसमें क्विप्, उपपद समास—अर्थबुध्, भष्भाव, अर्थभुद्-जश्त्व, चर्त्व ] गुह्—निघोक्ष्यते। [ 'गुह् संवरणे' से लट्, स्य, नि गुह् + स्य + त, उपधागुण ह् का ढ्, भष्भाव से ग् का घ् 'षढोः कः सि' से ढ् का क् और 'आदेश-प्रत्यययोः' से स् का ष् निघोक्ष्य + त, क् + ष् = क्ष, एत्व निघोक्ष्यते ] न्यघूढ्वम्। [ नि पूर्वक गुह् + लुङ् = ध्वम् ह का ढ, ष्टुत्व से ध् का भी ढ्—न्य गुढ् ढ्वम्' ढो ढे लोपः' 'से ढलोप' और 'ढ्रलोपे पूर्वस्य' से उकार का दीर्घ—न्यघूढ्वम्। ] पर्णघुट्। दुह—धोक्ष्यते। [ दुह् + स्य + ऌट् = तं, भष्भाव से द् का ध् ] अधुग्ध्वम् [ दुह् + लुङ् = ध्वम् भष्भाव, ह् का घ्, जश्त्व आदि ] गोधुक्। [ गां दोग्धि—इस अर्थ में क्विप्, उपपद् समास आदि के बाद, भष्भाव द का ध और ह् का घ् जश्त्व, चर्त्व करने पर रूप बनते हैं। ]

अजर्घाः—'गृधू अभिकाङ्क्षायाम्' इस धातु से यङ् प्रत्यय और उसका लुक् करके लङ् लकार में सिप् प्रत्यय परे रहते

१. 'अभुत्सत'—इति काशिकायां मुद्रितः पाठः। 'अभुध्वम्' इति दकाररहितः पाठः प्रकाशितोऽसङ्गतः, दकारलोपस्यासंभवात्।

**गर्दभयतेरप्रत्ययः-गर्धप्।**

**एकाचः इति किम्? दामलिहमिच्छति दामलिह्यति, दामलिह्यतेरप्रत्ययः, दामलिट्। असत्येकाज्ग्रहणे, 'धातोः' इत्येतद् बशो विशेषणं स्यात्।**

**न्यासः**

**गर्दभयतेरिति**। गर्दभशब्दात् तदाचष्ट इति णिच्, 'णाविष्ठवत् प्रातिपदिकस्य' इति टिलोपः। अत्र गर्दभीत्ययं मुख्य एव धातोर्झषन्तोऽवयवः।

**अप्रत्यय इति**। अश्राविप्रत्ययः क्विबादि अप्रत्यय इत्युच्यते। **दामलिडिति**। अत्र 'हो ढः' इति ढत्वे कृते झषन्ततायामुपजातायामेकाज्ग्रहणाद् भष्भावो न भवति। ननु चात्र द्वावेकाजवयवौ-दकारादिर्मकारान्तः, लकारादिर्झषन्तश्च; तयोश्चासत्यप्येकाज्ग्रहणे नैव भष्भावः प्रसज्यते। तथा हि-यो झषन्तस्तय बश् न विद्यते, यस्तु दकारादिर्मकारान्तस्तस्य बश् विद्यते, झषन्तता नु नास्ति, तदनर्थकममेकाज्ग्रहणम्? इत्यत आह— **असत्येकाज्ग्रहण इत्यादि**। बशो विशेषणं व्यवच्छेदार्थम्। व्यवच्छेदोऽर्थः प्रयोजनं यस्य तत् तथोक्तम्।

**पदमञ्जरी**

**गर्दभयतेरिति**। गर्दभमाचष्ट इति णिच्। अश्रावी प्रत्ययः = अप्रत्ययः क्विबादिः।

**असत्येकाज्ग्रहणे इत्यादि**। यद्येकाज्ग्रहणं न क्रियेत, ततोऽन्यस्येहाश्रुतत्वाद् बशेव धातोरित्यनेन विशेष्येत। बशो झषन्तत्वस्यासम्भवाज्झषन्तस्येत्यनेनापि धातुरेव विशेष्येत, ततश्चायमर्थः स्यात्—झषन्तस्य धातोर्योऽवयवो बश् तस्य भषिति, ततो दामलिडित्यत्रापि प्रसङ्गः। 'एकाचः' इत्यस्मिंस्तु सति वृत्तिकारोपदर्शित एवार्थो भवतीति न तत्र प्रसङ्गः। अत्र हि यो झषन्त एकाच् लिडिति न तस्यावयवो बश् दकारः, यस्य चावयवो दामित्यस्य न स झषन्तः। **क्रोत्स्यतीति**। अत्र ककारस्य घकारो न भवति।।३७।।

**भावबोधिनी**

[ गृध् + यङ्, लुक्, प्रत्ययलक्षण से द्वित्व, हलादिशेष गृध् गृध् + सि 'उरत्' से अत्व रपर, 'कुहोश्चुः' से चुत्व, लङ् अट्— अज गृध् + सि, 'रुग्रिकौ च लुकि' सूत्र से रुक् आगम, ऋ का ] लघु उपधा का गुण, (अजर्गर्ध् + सि) हल्ङ्यादि से सिलोप करने पर (यङ्लुङन्त धातु के अवयव एकाच बश् = ग् के स्थान पर भष्भाव = घ होता है—अजर्घर्ध् बनाने के बाद धकार का जश्त्व से दकार—अजर्घर्द् 'दश्च' (८।२।७५) सूत्र से द् का रुं—अजर्घ र् र्—'रोरि' (८।३।१४) सूत्र से पूर्व रेफ का लोप, 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (६।३।१११) से रेफपूर्ववर्त्ती अ का दीर्घ [ अजर्घार्, रेफ का विसर्ग—अजर्घाः यह रूप ] होता है।

गदर्भयति [ गर्दभम् आचष्टे-अर्थ में णिजन्त ] से अप्रत्यय = न सुनाई देने वाला = सर्वलोपी क्विप् प्रत्यय होता है—गर्धप्। [ गदर्भ + णिच् 'णाष्ठिवत् प्रातिपदिकस्य' वचन से टिलोप-'गर्दभि', इससे क्विप् होने पर णिलोप होता है—गर्दभ्, भष्भाव से द का ध, जश्त्व से भ् का ब्, और चर्त्व प् होता है। ]

एक अच् वाली धातु का—इसका क्या फल है? दामलिहम् आत्मन इच्छति—इस अर्थ में [ क्यच् करने पर ] दामलिह्यति। इससे पुनः अप्रत्यय = अश्रावी = क्विप् प्रत्यय, अलोप, यलोप के बाद दामलिह् + सु, लोप, ह् का ढ्, जश्त्व, चर्त्व— दामलिट्। [ अनेकाच् होने से द का ध नहीं होता है। ] यदि एकाच् (एक अच् वाला)—इसका ग्रहण नहीं रहता तो 'धातोः' यह

**बश इति किम्? क्रुध-क्रोत्स्यति। झषन्तस्येति किम्? दास्यति। स्ध्वोरिति किम्? बोद्धा, बोद्धुम्, बोद्धव्यम्। धकारस्य वकारोपसृष्टस्य ग्रहणं किम्? दादद्धि। 'दध धारणे' (धा.पा. ८)–इत्येतस्य यङ्लुकि लोटि 'हुझल्भ्यो हेर्धिः' (६।४।१०१) इति धिभावे सत्येतद्भवति।**

**३७२६. दधस्तथोश्च।।३८।। (२५०१)**

**'दध' इति दधातिः कृतद्विर्वचनो निर्दिश्यते। तस्य झलन्तस्य बशः स्थाने भष् आदेशो भवति तकारथकारयोः परतः, चकारात् स्ध्वोश्च परतः। धत्तः। धत्थः। धत्से। धत्स्व। धद्ध्वे। धद्ध्वम्।**

**न्यासः**

यद्येकाज्ग्रहणं न स्यात्, ततोऽन्यस्येहाश्रुतत्वाद् बशस्तु श्रुतत्वाच्च स एव धातोरित्यनेन विशेष्यते, न धातोरवयवो बशिति। एवं च बशो झषन्तता न सम्भवतीति झषन्तस्येत्यनेन धातुरेव विशेष्यते; अन्यस्येहासम्भवात्। तथा चायं सूत्रार्थः स्यात्—झषन्तस्य धातोर्योऽवयवो बश् तस्य झलि सकारे ध्वे च परतः पदान्ते च भष् भवतीति। अस्मिंश्च सूत्रार्थे दामलिडित्यत्रापि प्रसज्येत। भवति दकारोऽत्र बश् झषन्तस्य धातोरवयवः। एकाच इत्येतस्मिन् सति धातोर्झषन्तस्येत्येतदुभयान्तस्यान्तस्यैव विशेषणं भवति, तदपि बशः। तेन वृत्तिकारोपदर्शित एव सूत्रार्थो जायते; ततश्च न किञ्चिदनिष्टमापद्यते। दामलिडित्यत्र हि यो झषन्त एकाजवयवो लकारादिर्न तस्य बश् विद्यते, यस्य तु विद्यते दकारादिर्मान्तस्य स झषन्तो न भवति।

**क्रोत्स्यतीति** 'क्रुध कोपे'। **दादद्धीति**। 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घत्वम्।

अन्तग्रहणमसन्देहार्थम्। असति हि तस्मिन् सन्देहः स्यात्—किमत्र बशः स्थानित्वम्? अथ झषः? इति।।३७।।

**दधस्तथोश्च**।। दधातेरप्येतत् कृतद्विर्वचनस्य रूपमस्ति। 'दध धारणे'—इत्यस्य चाकृतद्विर्वचनस्य रूपम्। तत्र तु शपा व्यवहितत्वादनन्तरौ तथौ न सम्भवतः; तस्माद् दधातेरेव ग्रहणं विज्ञायते, इत्याह—**दध इति**

**पदमञ्जरी**

**दधस्तथोश्च**।। **दधातिर्निदिश्यत इति**। 'दध धारणे' इत्यस्य ग्रहणं न भवति; शपा तयोर्व्यवायात्।

ननु यङ्लुकि व्यवायो नास्ति, ततश्च तस्यैव ग्रहणप्रसङ्गः, एवं च वचनसामर्थ्यादिति वक्ष्यमाणं नाश्रयितव्यं भवति? तस्माद् व्याख्यानमेवात्र शरणम्।

**भावबोधिनी**

'बश्' इसका विशेषण होने लगता। [ फलतः झषन्त धातु का अवयव जो 'बश्' उसका 'भष्' होता है—यह सूत्रार्थ होता तब 'दामलिट्' यहाँ भी भष्भाव होने लगता। अतः 'एकाच्'-ग्रहण आवश्यक है। ]

'बशः' = बश् प्रत्यहार के वर्ण का—इसका क्या फल है? क्रुध् से—क्रोत्स्यति। [ क बश् में नहीं आता है। ] **झषन्त का—** इसका क्या फल है? दास्यति। [ डुदाञ् = दा यह आकारान्त है। ] स् और ध्व परे—इसका क्या फल है? **बोद्धा, बोद्धुम्,** बोद्धव्यम्। [ बुध् से तृच्, तुमुन्, तव्यत् परे है। ] वकार से युक्त ध् अर्थात् 'ध्व' इस रूप के ग्रहण का क्या प्रयोजन है? **दादद्धि।** 'दध धारणे' इस धातु का यङ्लुक् में लोट् = सि 'हुझल्भ्यो हेर्धि' सूत्र से धि करने पर यह रूप बनता है। [ **दध् से द्वित्वाभ्यासकार्य** के बाद द दध् + धि, 'दीर्घोऽकितः' से अभ्यास का दीर्घ—दादध् + धि, 'झलां जश् झशि' से जश्त्व-दादद्धि। ] [ **यहाँ ध तो** है किन्तु वकार से युक्त नहीं है, भष्भाव नहीं होता है। ]।।३७।।

'दध' यह दधाति = धा धातु के द्वित्व किये गये रूप का निर्देश किया गया है। इस दध् =धा के झलन्त रूप के **'बश्'** के स्थान पर भष्भाव होता है तकार और थकार के परे रहते, [ सूत्रस्थ ] 'च' के बल से स् और ध्व शब्द परे भी होता है। उदा० धत्तः। धत्थः। धत्से। धत्स्व। धद्ध्वे। धद्ध्वम्। [ धा + लट् = तस् और थस् प्रत्ययों में, शप् का श्लु, 'श्लौ' से द्वित्व, अभ्यास

**वचनसामर्थ्यादातो लोपस्य स्थानिवद्भावो न भवति, अभ्यासजश्त्वस्य चासिद्धत्वम्।**
**तथोरिति किम्? आनन्तर्यात् स्ध्वोरेव विज्ञायेत।**
**चकारस्तयोरनुवृत्त्यर्थः। 'झषन्तस्य' इत्येव–दधाति।।**

**न्यासः**

**कृतद्विर्वचनो दधातिः परिगृह्यत इति। धत्तः, धत्थ इति।** लटस्तस्थसौ, शपः श्लुः, 'श्लौ' द्विर्वचनम्, 'अभ्यासे चर्च' इति जश्त्वम्-दकारः, 'श्नाभ्यस्तयोरातः' इत्याकारलोपः, अभ्यासदकारस्य भष् धकारः। धातुधकारस्य चर्त्वम्-तकारः। **धत्स इति।** 'थासः से'। **धद्ध्वे इति।** टेरेत्त्वम्। **धद्ध्वमिति।** लोटि 'सवाभ्यां वामौ' इत्यमादेशः।

कथं पुनरत्र भष्भावः, यावता दधातेर्झषन्तस्य यो बश् तस्य भष् भवतीत्युच्यते, अत्र नापि झषन्ततास्ति; आकारलोपस्य 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावात्; नापि बश्, अभ्यासजश्त्वस्यासिद्धत्वात्? इत्यत आह—**वचनसामर्थ्यादित्यादि। अभ्यासजश्त्वस्यासिद्धत्वमिति।** वचनसामर्थ्यान्न भवतीत्यपेक्षते। यद्याकारलोपस्य स्थानिवद्भावः स्यादभ्यासजश्त्वस्यासिद्धत्वम्। एवं सत्यपार्थकतैवास्य वचनस्य स्यात्, न हि दधातेराकारलोपेन विना बश् स्यात्। तस्माद् वचनप्रामाण्यादुभयं न भवति।

इह झलीत्यनुवर्त्तते, झषन्तस्येति, च, तकारथकाराभ्यामन्यः स झलस्ति यत्र दधातेर्झषन्तस्य भष्भावो नेष्यते। तस्मात् 'तथोः' इति वचनमन्तरेणापि सिद्धमिष्टमित्यभिप्रायेणाह—**तथोरिति किमिति। आनन्तर्यादित्यादि।** अनन्तरसूत्रे हि 'स्ध्वोः' इत्युक्तम्, ततश्च 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति स्ध्वोरेव भष्भावो विज्ञायते, न तथोः; अतः 'तथोः' इत्युच्यते। यद्येवम्, निमित्तान्तरोपादाने पूर्वस्य निमित्तस्य निवृत्त्या भवितव्यम्, ततश्च तथोरेव स्यात्, न स्ध्वोः? इत्यत आह—**चकार इत्यादि।** परिहारः।।३८।।

**पदमञ्जरी**

**वचनसामर्थ्यादिति।** न हि दधातिराकारलोपेन विना झषन्तो भवति। एतच्च 'पूर्वत्रासिद्धे न स्थानिवत्' इत्यनाश्रित्योक्तम्। **अभ्यासजश्त्वस्य चासिद्धत्वमिति।** वचनसामर्थ्यान्न भवतीत्यपेक्षते। न ह्यभ्यासस्य जश्त्वेन विना दधातेर्बश् क्वचित् सम्भवति।

**तथोरिति किमिति।** 'झलि' इति वर्तते, 'झषन्तस्य' इति च; न च तकारथकाराभ्यामन्यो दधो झलस्ति, स्ध्वोस्तावदिष्टमेव। तस्मात्तथोरिति न वक्तव्यम्। एवं च कृत्वा चकारोऽपि न कर्त्तव्यः, सर्वत्र झलीत्येव सिद्धमिति प्रश्नः। **आनन्तर्यादिति।** ननु च स्ध्वोः पूर्वेणैव सिद्धम्? न सिध्यति; आल्लोपस्य स्थानिवद्भावे सति अझषन्तत्वात्। ननु च पूर्वत्रासिद्धे नास्ति स्थानिवद्भावः? एवमप्यभ्यासजश्त्वस्यासिद्धत्वान्न सिध्यति।

**भावबोधिनी**

कार्य, जश्त्व दधा + तस् थस्, 'श्नाभ्यस्तयोरातः' सूत्र से आकार का लोप दध् + तस्, अभ्यास के द् का भष्भाव से ध्-धध् + तस्, द्वितीय ध् का चर्त्व से त्—धत् + तस्, स् का विसर्ग—धत्तः। थास् का से—धत्से। इसी प्रकार सभी में भष्भाव से द का ध करना चाहिए। ]

इस वचननिर्माण के कारण 'आ' लोप का स्थानिवद्भाव नहीं होता है। और अभ्यास के जश्वत्व का असिद्धत्व भी नहीं होता है। [ क्योंकि आलोप का स्थानिवद्भाव करने पर झषन्तता नष्ट हो जाती है। जश्त्व असिद्ध होने पर स्वतः ध रह जाता है। तब इस सूत्र की कोई उपयोगिता नहीं रहती। अतः आलोप का स्थानिवद्भाव और अभ्यास के जश्त्व का असिद्धत्व ये दोनों नहीं होते हैं। ]

त और थ परे रहते—इसका क्या फल है? आनन्तर्य—अव्यवधान होने से स् और ध्व के ही भष्भाव होने का ज्ञान होने लगता और चकार उन (स् ध्व) की अनुवृत्ति के लिये है ही। [ अतः स्, ध्व, त, थ—चारों के परे रहते भष्भाव होता है यही माना जता है। ]

झषन्त का ही भ्ष्भाव होता है—दधाति। [ यहाँ आकारान्त होंने से नहीं होता है। ]।।३८।।

**३७२७. झलां जशोऽन्ते।।३९।। (८४)**

**झलां जश आदेशा भवन्ति पदस्यान्ते वर्तमानानाम्। वागत्र। श्वलिडत्र। अग्निचिदत्र। त्रिष्टुबत्र। अन्तग्रहणं झलीत्येतस्य निवृत्त्यर्थम्। वस्ता। वस्तव्यम्।।**

**३७२८. झषस्तथोर्धोऽधः।।४०।। (२२८०)**

**झष उत्तरयोस्तकारथकारयोः स्थाने धकार आदेशो भवति, दधातिं वर्जयित्वा। लब्धा। लब्धुम्। लब्धव्यम्। अलब्ध। अलब्धाः। दुह–दोग्धा। दोग्धुम्। दोग्धव्यम्। अदुग्ध। अदुग्धाः। लिह–लेढा।**

**न्यासः**

**झलां जशोऽन्ते।। श्वलिडिति।** ढत्वे कृते जश्त्वम्।

अथान्तग्रहणं किमर्थम्, ननु 'स्कोः संयोगाद्योरन्ते च' इत्यतोऽन्तग्रहणमनुवर्त्तत एव? इत्यत आह—**अन्तग्रहणमित्यादि।** तद्ध्यन्तग्रहणं झलीत्यनेन सम्बद्धम्, अतस्तदनुवृत्तौ झलीत्येतदप्यनुवर्त्तेत, तस्मादेतन्निवृत्त्यर्थमन्यदेवान्तग्रहणं क्रियते। तेन च वसतेः—वस्ता, वस्तुमित्यत्र न भवति।।३९।।

**झषस्तथोर्धोऽधः।। अध इति।** अनेन धातुप्रतिषेधोऽयं न धकारप्रतिषेध इति दर्शयति। यदि हि धकारप्रतिषेधः स्याद्, धकारात् परयोस्तथोर्धकारो न भवतीति। ततः 'मतिबुद्धिपूजार्थेभ्यश्च', 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इत्येवमाद्यो निर्देशा नोपपद्यरेन्। **अलब्ध, अलब्धा इति।** लुङ्, तस्य त-थासौ, 'झलि' इति सकारलोपः। **अलीढ, अलीढा इति।** ढत्वष्टुत्वढलोपदीर्घत्वानि कर्त्तव्यानि।।४०।।

**पदमञ्जरी**

यदि तु 'अभ्यासजश्त्वचर्त्वमेत्वतुकोः सिद्धं वक्तव्यम्' इत्यत्र एत्वतुकोरित्यपनीयाविशेणेण सिद्धत्वमुच्येत, फलिभजिग्रहणं वा सामान्येन ज्ञापकमाश्रीयेत, न त्वेत्वविषयमेव; ततः 'तथोश्च' इति शक्यमकर्तुम्। कथम्? स्ध्वोः पूर्वेणैव सिद्धम्, इदं तु व्यतिरिक्ते झलि यथा स्यादित्येवमर्थं भविष्यति।।३८।।

**झलां जशोऽन्ते।। पदस्यान्ते वर्त्तमानानामिति।** पदावसाने वर्तमानानाम्। अन्तशब्दोऽवसानवचनः, न त्ववयववचनः। **श्वलिडिति।** अत्र हकारस्य जश्त्वे प्राप्ते तस्यासिद्धत्वात् पूर्वं ढत्वम्, ढकारस्य जश्त्वम्—डकारः।।३९।।

**झषस्तथोर्धोऽधः।। दधातिं वर्जयित्वेति।** अनेनाध इति धातुप्रतिषेधं दर्शयति। यदि धकारप्रतिषेधः स्यात्—धकारात्परयोर्नेति, ततः 'गतिबुद्धि' इत्यादयो निर्देशा नोपपद्येरन्। **अलब्ध, अलब्धा इति।** लुङि त-थासौ। **एवमलीढ, अलीढा इति। धत्तः, धत्थ इति।** धत्वे प्रतिषिद्धे धकारस्य चर्त्वम्।

**भावबोधिनी**

झलों के स्थान पर जश् आदेश होते हैं यदि वे झल् पद के अन्त में विद्यमान हों तो। उदा० वागत्र। [ वाक् + अत्र ]। श्वलिडत्र। [ श्वलिट् + अत्र ] अग्निचिदत्र। [ अग्निचित् + अत्र ] त्रिष्टुबत्र [ त्रिष्टुप् + अत्र। इनमें पद के अन्त में झल् = क्, ट्, त्, प् हैं इनके साम्य के आधार पर क्रमशः ग् ड् द् ब् = जश् होते हैं। काशिकाकार ने च् के जश्त्व का उदा० नहीं दिया है। अच् + अन्त = अजन्त आदि प्रसिद्ध उदा० हैं। ]

'अन्त' इसका ग्रहण 'झल् परे' इसकी निवृत्ति के लिये है—वस्ता, वस्तव्यम्। [ इनमें झल् परे जश्त्व नहीं होता है। ]।।३९।।

झष् (प्रत्याहार के वर्ण) से परे = विद्यमान तकार और थकार के स्थान पर धकार आदेश होता है दधाति = धाधातु को छोड़कर। उदा० लब्धा। लब्धुम्। लब्धव्यम्। [ लभ् धातु से तृच्, तुमुन्, तव्यत् परे हैं झष् = भ् से परे त् का ध्

**लेढुम्। लेढव्यम्। अलीढ। अलीढाः। बुध–बोद्धा। बोद्धुम्। बोद्धव्यम्। अबुद्ध। अबुद्धाः।**

**अधः इति किम्? धत्तः। धत्थः।**

**३७२९. षढोः कः सि।।४१।। (२९५)**

**षकारढकारयोः ककारादेशो भवति सकारे परतः। षकारस्य, पिष्–पेक्ष्यति। अपेक्ष्यत्। पिपक्षति। ढकारस्य, लिह्–लेक्ष्यति। अलेक्ष्यत्। लिलिक्षति।**

**सीति किम्? पिनष्टि। लेढि।।**

**न्यासः**

**षढोः कः सि।। पेक्ष्यतीति।** 'पिष्लृ सञ्चूर्णने', लृट्। **अपेक्ष्यदिति।** लृङ्। **पिपिक्षतीति।** सन्, 'हलन्ताच्च' इति कित्त्वाद् गुणाभावः।

**पिनष्टीति।** रुधादित्वात् श्नम्। **लेढीति।** अदादित्वाच्छपो लुक्।।४१।।

**पदमञ्जरी**

'अधः' इति शक्यमवक्तुम्। इह कस्मान्न-धत्तः, धत्थ इति? जश्त्वे योगविभागः करिष्यते, 'दधस्तथोश्च', 'झलां जशो भवन्ति दधस्तथोः, ततः 'अन्ते'—अन्ते च झलां जशो भवन्ति, तत्र 'पूर्वत्रासिद्धम्' इति भष्भावे जश्त्वस्यासिद्धत्वात्झषन्तत्वम्। धत्वे परस्मिन् सिद्धं जश्त्वमित्यझषन्तत्वाद्धत्वाभाव इति सिद्धमिष्टम्।।४०।।४१।।

**भावबोधिनी**

करने पर "झलां जश् झशि' से जश्त्व = भ् का ब् होता है। ] अलब्ध। अलब्धाः। [ लभ् + लङ् = त, थास् परे अट् सिच् अलभ् स् ध, 'झलो झलि' से स् के लोप के बाद झष् से परे त् और थ् का ध् होता है। जश्त्व से भ् का ब् ] दुह्—दोग्धा। दोग्धुम्। दोग्धव्यम्। [ दुह् से तृच् आदि परे 'ह' का घ् करने पर प्रस्तुत सूत्र से 'त्' का ध् और जश्त्व से घ् का ग् होता है। ] अदुग्ध। अदुग्धाः। [ दुह् + लुङ् = त, थास् परे रूप हैं। ] लिह्—लेढा। लेढुम्। लेढव्यम्। [ लिह् से तृच् आदि परे 'हो ढः' से ढत्व करने के बाद प्रस्तुत सूत्र से त और था का ध तब ष्टुत्व से ध का ढ् 'ढो ढे लोपः' प्रथम ढ् का लोप, उपधागुण होने पर रूप बनते हैं ] अलीढ। अलीढाः। [ लिह् + लुङ् = त, थास् के रूप हैं। ] बुध्–बोद्धा। बोद्धुम्, बोद्धव्यम्। [ बुध् से तृच् आदि में त् का ध्, जश्त्व से धातु के ध् का द् होता है। ] अबुद्ध। अबुद्धाः। [ बुध् + लुङ् = त, थास् के रूप हैं। ]

डुधाञ् को छोड़कर—इसका क्या फल है? धत्तः। धत्थः। [ धा + लट् = तस्, थस् में शप् का श्लु और द्वित्व, अभ्यासकार्य के बाद 'श्नाभ्यस्तयोरातः' से आ का लोप, दध् + तस् दध् + थस् में 'त' 'थ' का ध नहीं होता है। 'दधस्तथोश्च' (८।२।३८) से भष्भाव करने पर पुनः द् का ध् होता है—ध ध् + तस्, थस् में ध् का चर्त्व से त् होता है। ]।।४०।।

सकार परे रहते ष् और ढ् के स्थान पर 'क्' आदेश होता है। षकार के ककारादेश का उदा० पिष्—पेक्ष्यति। अपेक्ष्यत्। पिपक्षति। [ पिष् + स्य + लट्, उपधागुण, ष् का क् आदेश, 'आदेशप्रत्यययोः से स् का ष्, क् + ष् का क्ष् आदेश—पेक्ष्यति। लङ् में अपेक्ष्यत्। पिष् + सन् में द्वित्वाभ्यासकार्य ष् का क् + ष, क्षत्व होते हैं। ] ढकार के ककार आदेश के उदा० लिह्-लेक्ष्यति। अलेक्ष्यत्। लिलिक्षति। [ लिह् + स्य + लृट् = तिप् में 'हो ढः' सूत्र से ह् का ढ् करने के बाद प्रस्तुत सूत्र से ढ् का क् आदेश, स् का ष्, क् + ष् = क्षत्व में रूप बनता है। लङ् और सन् में भी यही प्रक्रिया है। ]

स् परे रहते—इसका क्या फल है? पिनष्टि। लेढि। [ पिष्लृ = पिष् + लट् = तिप्, श्नम् = न अन्त्य अच् से परे होता है—पिनष् + ति सकार परे न होने से ककार आदेश नहीं होता है। ष्टुत्व में रूप होता है। लिह् + ति, शप् का लुक्, ह् का ढ्, गुण—लेढ् + ति, ककार नहीं होता है, त का ध और ष्टुत्व से ढ्, ढो ढे लोपः' से ढ् लोप होता है। ]।।४१।।

## ३७३०. रदाभ्यां निष्ठातो नः पूर्वस्य च दः।।४२।। (३०१६)

**रेफदकाराभ्यामुत्तरस्य निष्ठातकारस्य नकार आदेशो भवति पूर्वस्य च दकारस्य। रेफान्तात्तावत्– आस्तीर्णम्। विस्तीर्णम्। विशीर्णम्। निगीर्णम्। अवगूर्णम्। दकारात्–भिन्नः, भिन्नवान्। छिन्नः, छिन्नवान्।**

**रदाभ्यामिति किम्? कृतः, कृतवान्।**

**'र' इत्यत्र रश्रुतिसामान्यं नोपादीयते, किं तर्हि? व्यञ्जनमात्रम्। रेफसामान्यनिर्देशेऽपि सति रेफात्परा याऽज्भक्तिस्तद्व्यवधानान्नत्वं न भवति।**

**न्यासः**

**रदाभ्यां निष्ठातो नः पूर्वस्य च दः**।। **आस्तीर्णमिति**। 'स्तॄञ् आच्छादने'। 'ॠत इद्धातोः' इतीत्वम्, 'हलि च' इति दीर्घः। **विशीर्णमिति**। 'शॄ हिंसायाम्'। **निगीर्णमिति**। 'गॄ निगरणे'। एषु 'श्र्युकः किति' इतीट्प्रतिषेधः। **अवगूर्णमिति**। 'गुरी उद्यमने'। 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधः।

अथ यथा 'कृपो रो लः' इत्यत्र 'र' इति वर्णत्वावर्णत्वकृतं भेदमुत्सृज्य सामान्यस्योपादानम्, तथेहापि, अस्ति च ऋकारे रेफः; ततश्च कृतः, कृतवानित्यत्र भवितव्यमेव नत्वेनेति यो मन्यते, तं प्रत्याह—**र इत्यत्रेत्यादि**। यद्यत्र 'र' इति सामान्यमुपादीयेत तस्मादेषः प्रसङ्गः, न तु रश्रुतिसामान्यमुपादीयते, किं तर्हि? व्यञ्जनमर्धमात्रात्मकम्। न च समानाकारोऽस्तीति कुतो नत्वप्रसङ्गः? भवतु नाम सामान्यस्योपादानम्, तथापि नैवात्र

**पदमञ्जरी**

**रदाभ्यां निष्ठातो नः पूर्वस्य च दः**।। 'निष्ठातः' इति समासनिर्देशः। तत्र प्रधानभूततकारः 'रदाभ्याम्' इत्यनेन विशेष्यते, न गुणभूता निष्ठेत्याह—**रेफदकाराभ्यामुत्तरस्येति**। तेन चरितम्, मुदितमित्यत्र निष्ठाया अव्यवधानेऽपि तस्येटा व्यवहितत्वान्नत्वं न भवति। **अवगूर्णमिति**। 'गुरी उद्यमने', 'श्वीदितो निष्ठायाम्' इतीट् प्रतिषेधः, पूर्वेषु 'श्र्युकः किति' इति। **भिन्नः, भिन्नवानिति**। आदेशे 'न' इत्यकार उच्चारणार्थः, तेन दकारस्य स्थाने शुद्धो नकारो भवति। **कृतः, कृतवानिति**।

ननु यथा 'कृपो रो लः' इत्यृकारस्यापि रेफस्य लकारो भवति, तथेहापि ऋकारस्य रेफमाश्रित्य नत्वं प्राप्नोति? अत आह—**र इत्यत्रेति**। युक्तं तत्र सामान्योपादानात्, इह तु न सामान्यमुपादीयते, किं तर्हि? व्यञ्जनम्।

**भावबोधिनी**

रेफ और दकार से उत्तरवर्त्ती निष्ठासंज्ञक प्रत्यय के तकार का नकार आदेश होता है और पूर्ववर्त्ती दकार का भी नकार होता है अर्थात् दकारान्त धातुओं के द् के तथा प्रत्यय के त् के स्थानों पर दो नकार हो जाते हैं। पहले रेफान्त के परवर्त्ती का उदा॰ आस्तीर्णम् विस्तीर्णम्। विशीर्णम्। निगीर्णम्। अवगूर्णम्। [ आङ्पूर्वक स्तॄ धातु से क्त, 'ॠत इद् धातोः' सूत्र से ॠ का इत्व, रपर आस्तिर् + त, 'हलि च' से उपधा का दीर्घ, प्रस्तुत सूत्र से त का न—आस्तीर् + न, णत्व- आस्तीर्णम्। वि पूर्वक स्तॄ से-विस्तीर्णम्। विशीर्णम् 'शॄ हिंसार्थक, धातु से भी क्त, इत्व, रपर, दीर्घ, त का न, णत्व। निगीर्णम्। अवगूर्णम्। 'नि पूर्वक गॄ से क्त, ॠ का उत्व रपर, दीर्घ, पूर्ववत् प्रक्रिया। अवपूर्वक 'गुरी उद्यमने' गुर् धातु से क्त, पूर्ववत् सारी प्रक्रिया। ]

दकारान्त से परे के उदा॰—भिन्नः, भिन्नवान्। छिन्नः, छिन्नवान्। [ भिद् और छिद् से क्त, क्तवतु प्रत्यय परे रहते निष्ठा-त् के और धातु के द् के स्थानों पर दो न् आदेश—भिन् न, छिन् न्, भिन्नवत्, छिन्नवत् होने पर सुबादि विभक्ति कार्य होते हैं। ]

रेफ और दकार से परे-इसका क्या फल है? कृतः कृतवान्। [ यहाँ दोनों से परे त नहीं है। ]

'र' इसमें रेफ की श्रुतिसामान्य का ग्रहण नहीं है। तो किसका ग्रहण है? व्यञ्जनमात्र का। रेफ-सामान्य का निर्देश होने पर भी रेफ से परवर्ती जो अज्भक्ति = अज्रूप भाग उसके व्यवधान से नत्व नहीं होता है। [ अतः जहाँ र् व्यञ्जनमात्र है वहीं नत्व होता है। यदि र् के साथ कोई अच् = स्वर है तो नहीं होता है। ]

**निष्ठेति किम्? कर्ता, हर्ता। त इति किम्? चरितम्। मुदितम्। पूर्वस्येति किम्? परस्य मा भूत्– भिन्नवद्भ्यम्। भिन्नवद्भिः।**

**इह कृतस्यापत्यं कार्तिरिति वृद्धेर्बहिरङ्गलक्षणाया असिद्धत्वात् नत्वे कर्त्तव्ये रेफस्यासिद्धत्वम्।।**

**न्यासः**

नत्वं प्रसज्यत इति दर्शयितुमाह—**सामान्यनिर्देशेऽपीत्यादि**। ऋकारेऽत्र ये भागास्तन्मध्यवर्ती रेफो मात्राचतुर्भागात्मकः, तत्र योऽसौ रेफात्परस्तृतीयो भागस्तेन व्यवधानान्न भवति।

**चरितम्, मुदितमिति**। 'चर गत्यर्थः', 'मुद हर्षे'। असति हि 'त' इति ग्रहणे 'रदाभ्याम्' इत्यनेन निष्ठा विशेष्येत—रदाभ्यां परा या निष्ठेति, ततश्चरितमित्यादौ 'आदेः परस्य' इति इट एव नत्वं स्यात ; तस्य निष्ठाभक्तत्वात्। अथ 'त' इत्युच्यमाने चरितमित्यादौ तकारस्य कस्मान्न भवति? इटा व्यवहितत्वात्। स हि प्रत्ययभक्तत्वात् प्रत्ययमेव न व्यवद्ध्यात्। तदवयवत्वं तु व्यवदध्यादेव। **परस्य मा भूदिति**। असति हि पूर्वग्रहणे यदि हि सन्निहितया निष्ठया दकारो विशेष्येत-निष्ठाया यो दकार इति, ततो जश्त्वे कृते परस्यैव स्याद्— भिन्नवद्भ्याम्, भिन्नवद्भिरित्यादौ। अथ न विशेष्येत, ततो विशेषानुपादानाद् यथा पूर्वस्य भवति, तथा परस्यापि। तस्मात् परस्य मा भूदित्येवमर्थं पूर्वग्रहणं कृतम्।

अथ कृतस्यापत्यम् 'अत इञ्' कार्त्तिरित्यत्र कस्मान्न भवति? इत्याह—**इहेत्यादि**। वृद्धिर्हि तद्धितं निमित्तमाश्रित्यं भवतीति बहिरङ्गा, नत्वं तु न किञ्चिद् बाह्यं निमित्तमाश्रित्य भविष्यतीत्यतस्तदन्तरङ्गम्। तस्माद् वृद्धेर्बहिरङ्गत्वान्नत्वे कर्त्तव्ये रेफस्यासिद्धत्वम्। ननु च यदि तर्हि बहिरङ्गलक्षणा सा, तस्या एवासिद्धित्वेन भवितुं युक्तम्, न तु रेफस्यापि, न हि रेफो वृद्धिर्भवति? नैष दोषः; वृद्ध्याश्रितो हि रेफः, ततो वृद्धेर्बहिरङ्गत्वाद्रेफस्यापि बहिरङ्गत्वेन भाव्यम्।।४२।।

**पदमञ्जरी**

किमात्मकम्? अर्द्धमात्रात्मकम्, ऋकारस्तु मात्राचतुर्भागात्मकः। अस्तु वा सामान्यनिर्देशः, तथापि न दोष इत्याह—**सामान्यनिर्देशे चेति**। ऋकारे ह्यभितोऽज्भक्तिः, मध्ये रेफभक्तिः; ततश्च परयाऽज्भक्त्या व्यवधानान्नास्ति नत्वप्रसङ्गः।

**चरितम्, मुदितमिति**। 'त' इत्यनुच्यमाने इटो निष्ठाभक्तत्वात्तस्य नत्वप्रसङ्गः। **परस्य मा भूदिति**। परस्यैव मा भूदित्यर्थः। असति पूर्वग्रहणे पाठक्रमे निष्ठा प्रत्यासन्नेति तद्दकारस्यैव नत्वेन भाव्यम्। तेनैतदपि न चोदनीयम्—बहिरङ्गत्वाल्लाक्षणिकत्वाच्च न भविष्यतीति। किञ्च—पदस्येत्यधिकारात् पदावस्थायां नत्वविधानाद्बहिरङ्गत्वमपि नास्ति। केवलस्य वर्णस्यानुपदेशात् प्रतिपदोक्तत्वमपि नास्ति। अथापि प्रत्यासत्तिर्नापेक्ष्यते, तथापि पञ्चमीनिर्देशात् परस्यैव प्रसङ्गः। कार्तिरित्यत्र बहिर्भूततद्धितापेक्षत्वाद्बहिरङ्गा वृद्धिः। वृद्धेश्च यन्निमित्तं तदेव रेफस्यापि; 'उरण् रपरः' इत्यस्य वृद्धिविधिनैकवाक्यत्वात्।।४२।।

**भावबोधिनी**

निष्ठा के तकार का—इसका क्या फल हैं? कर्ता, हर्ता। [ रेफ से परे त है। किन्तु निष्ठा का नहीं है। अतः नत्व नहीं होता है। ] तकार का—इसका क्या फल है? चरितम्। मुदितम्। [ यहाँ निष्ठा से पूर्व इ है, अतः उसका नत्व नहीं होता है। यदि त न रहता तो इट् निष्ठा का आगम होने से उसी का अवयव मानकर इ का ही नत्व होने लग जाता। ] पूर्व के द् का न्—इसका क्या फल है? परवर्त्ती का न् न हो—भिन्नवद्भ्याम्। भिन्नवद्भिः। [ भिद् + तवत् में त् और पूर्व द् का तो नकार होता है किन्तु भ्याम् को मानकर हुये जश्त्व को मानकर जश्त्व के बाद भिन्नवद् + भ्याम् भिस् परे द् का न् नहीं होता है। ]

कृतस्य अपत्यम्—इस अर्थ में कार्तिः। यहाँ बहिरङ्ग लक्षण वाली वृद्धि के असिद्ध हो जाने से नत्व की कर्तव्यता में रेफ असिद्ध हो जाता है। [ अतः रेफ से परे 'त' न होने से नत्व नहीं होता है। ]।।४२।।

### ३७३१. संयोगादेरातो धातोर्यण्वतः ।।४३।। (३०१७)

**संयोगादिर्यो धातुराकारान्तो यण्वान् तस्मादुत्तरस्य निष्ठातकारस्य नकारादेशो भवति। प्रद्राणः, प्रद्राणवान्। म्लानः, म्लानवान्।**

**संयोगादेरिति किम्? यातः, यातवान्। आत इति किम्? च्युतः, च्युतवान्। प्लुतः, प्लुतवान्। धातोरिति किम्? निर्यातः। निर्वातः। यण्वत इति किम्? स्नातः, स्नातवान्।।**

**न्यासः**

**संयोगादेरातो धातोर्यण्वतः।। प्रद्राण इति।** 'द्रा कुत्सायां गतौ'। 'कृत्यचः' इति णत्वम्। **म्लान इति।** ग्लै गात्रविनामे'।

**च्युतः, प्लुत इति।** 'च्युङ् प्लुङ् गतौ'। **निर्यात इति।** 'या प्रापणे'। **निर्वात इति।** 'वा गतिगन्धनयोः'। अत्र र्या, र्वा—इत्येतयोर्धातुत्वं न भवति। 'र्या' इत्ययं हि समुदायः संयोगादिः, न चायं धातुः, किं तर्हि? 'या' इत्ययम्। एवं 'र्वा' इत्ययं संयोगादिः, न चैष धातुः, कि तर्हि? 'वा' इत्ययम्। ननु च बहिरङ्गमत्र संयोगादित्वम्; द्विपदाश्रयत्वात्, नत्वं तु विपर्ययादन्तरङ्गम्; 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वादेव संयोगादित्वस्य नत्वं न भवतीति किं धातुग्रहणेन? एवं तर्हि एतज्ज्ञापयति-उपसर्गसम्बन्धेन यो धर्म उपजायते धातूपसर्गसमुदायस्य स धातोरतद्धर्मवतोऽपि कार्याणि प्रापयतीति। तेनोपास्यते गुरुः, अभिभूयते शत्रुरिति कर्मणि लकारः सिद्धो भवति। अत्र ह्युपसर्गसम्बन्धेन सकर्मकत्वधर्मो जातः। स च धातूपसर्गसमुदायस्य, न धातुमात्रस्य। तत्र यद्ययमर्थो न ज्ञाप्येत, कर्मणि लकारो न स्यात्; धातोरकर्मकत्वात्। अस्मिंश्चार्थे ज्ञापिते तु भवति। **स्नात इति।** 'ष्णा शौचे'।।४३।।

**पदमञ्जरी**

**संयोगादेरातो धातोर्यण्वतः।। प्रद्राण इति।** 'कृत्यचः' इति णत्वम्।

**निर्यात इति।** योऽत्र धातुर्नासौ संयोगादिः, यश्च संयोगादिर्नासौ धातुः। न चात्र संयोगादित्वस्य बहिरङ्गत्वम्। कथम्? पूर्वं धातुरुपसर्गेण युज्यते, ततश्च निष्ठोत्पत्तेः प्रागेव संयोगः सन्निहितः। **प्रद्राण** इत्यादावप्येतावदेव।।४३।।

**भावबोधिनी**

संयोग जिसके आदि में है ऐसी यण्वाली (यण् वर्णयुक्त) आकारान्त जो धातु है उससे उत्तरवर्ती निष्ठा के तकार का नकार आदेश होता है। [ इसमें धातु की तीन विशेषतायें कहीं गई हैं, (१) जिसके आदि में संयोग है, (२) जिसमें यण् का कोई वर्ण है, (३) जिसके अन्त में आकार है। ] उदा० प्रद्राणः, प्रद्राणवान्। [ 'द्रा कुत्सायां गतौ' धातु से क्त, क्तवत् प्रत्यय द्रा में उपर्युक्त तीनों विशेषतायें हैं। अतः इससे परे त का न होता है। 'कृत्यचः' सूत्र से णत्व होता है। ] म्लानः, म्लानवान्। [ 'म्लै गात्रविनामे' धातु के ऐ का आत्व, क्त, क्तवतु प्रत्यय परे म्लै = म्ला + त, तवत्, त का नत्व होता है। ]

संयोगादि धातु से परे—इसका क्या फल है? यातः। यातवान्। [ या + क्त, क्तवतु आकारान्त और यण्वान् या धातु है किन्तु संयोगादि नहीं है। अतः इससे परे 'त' का 'न' नहीं होता है। ] आकारान्त से—इसका क्या फल है? च्युतः, च्युतवान्। प्लुतः, प्लुतवान्। [ 'च्युङ् प्लुङ गतौ' से क्त, क्तवतु परे है। आकारान्त न होने से नत्व नहीं होता है। ] धातु से परे—इसका क्या फल है? निर्याता निर्वातः। [ यहाँ 'निर् या', 'निर् वा' में जो संयोग है वह धातु का अपना न होकर उपसर्ग और धातु का है। अतः ऐसी धातु से परे नत्व नहीं होता है। ] यण्वान् से परे—इसका क्या फल है? स्नातः, स्नातवान्। [ स्ना संयोगादि धातु में यण् का कोई वर्ण नहीं है। अतः नत्व नहीं होता है। ]।।४३।।

**३७३२. ल्वादिभ्यः।।४४।। (३०१८)**

**'लूञ् छेदने' (धा.पा. १४८४)–इत्येतत्प्रभृति 'व्री वरणे' (धा.पा. १४८७) इति यावत् वृत्करणेन समापिता ल्वादयो गृह्यन्ते। तेभ्य उत्तरस्य निष्ठातकारस्य नकारादेशो भवति। लूनः, लूनवान्। धूनः, धूनवान्। जीनः, जीनवान्।**

**❁ ऋकारल्वादिभ्यः क्तिन्निष्ठावद्भवतीति वक्तव्यम्। ❁ कीर्णिः। गीर्णिः। शीर्णिः। लूनिः। पूनिः।**

**न्यासः**

**ल्वादिभ्यः**।। **जीन इति**। 'ज्या वयोहानौ', 'ग्रहिज्या' इत्यादिसूत्रेण सम्प्रसारणम्, 'हलः' इति दीर्घः।

**ऋकारल्वादिभ्य इत्यादि**। ऋकारान्तेभ्यो ल्वादिभ्यश्च परो यः क्तिन् स निष्ठा भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु 'ओदितश्च' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात्। यथा ऋकारल्वादिभ्यो निष्ठा तकारस्य नत्वं भवति, तथा क्तिनोऽपि तकारस्य नत्वं भवतीति।

**पदमञ्जरी**

**ल्वादिभ्यः**।। **जीन इति**। 'ज्या वयोहानौ', ग्रहिज्यादिना सम्प्रसारणम्। **निष्ठावदिति**। नत्वसन्निधौ वचनात्तदेवातिदिश्यते, तेन पूनिरित्यत्र 'क्लिशःक्त्वानिष्ठयोः' 'पूङश्च' इतीड्विकल्पो न भवति।

**भावबोधिनी**

'लूञ् छेदने' इस धातु से आरम्भ करके 'व्री वरणे' यहाँ तक वृत् करने से समाप्त की गईं ल्वादि धातुयें ली जाती हैं, अर्थात् आदि पद से 'व्री वरणे' तक का ग्रहण होता है। इनसे उत्तरवर्ती निष्ठा के तकार का नकार आदेश होता है।

**विमर्श**—एक प्रमाद का संशोधन।

प्रस्तुत सूत्र की काशिका वृत्ति में प्रायः सर्वत्र यहाँ तक कि पं. जिज्ञासु जी और प्रोफेसर आर्येन्द्र शर्मा जी के संस्करणों में तथा उनपर आधृत व्याख्या ग्रन्थों में सभी में 'लूञ् छेदने' इत्येतत् प्रभृति 'वृ वरणे' [ वृञ् वरणे' ] इति यावत् वृत्करणेन समापिता ल्वादयो गृह्यन्ते।' यही पाठ प्राप्त होता है। किन्तु यह एक महान् प्रमाद है क्योंकि इसके अनुसार तो 'लूञ्, स्तॄञ्, कॄञ्, वॄञ् वरणे' = ४ केवल चार ही धातुयें ल्वादि कही जा सकती हैं। तब अनेक प्रसिद्ध धातुरूप—जीनः, धूनः, लीनः' आदि सम्भव नही हो सकते।

अतः इससे आगे 'प्ली गतौ' ल्वादि को सीमा है। क्योंकि इसके बाद 'व्री वरणे' यह धातु है। चूँकि 'वृञ् वरणे' यह अति प्रसिद्ध धातु है। अतः सभी ने इसी का उल्लेख कर दिया। जबकि वास्तविकता यह है कि 'व्री वरणे' इससे पहले तक ही ल्वादि मानी जाती है।। इसीलिये सिद्धान्तकौमुदी में ऐसा पाठ है—"प्ली गतौ" वृत्। ल्वादयो वृत्ताः। प्वादयोऽपीत्यके। 'व्री वरणे' (क्र्यादि, घा, पा. १५.२८)। इसके मध्य में 'वृञ् वरणे' ऐसा भ्रम सिद्धान्तकौमुदीकार के पहले भी किसी को हुआ था इसीलिये उन्होंने वृत्ति में ल्वादि धातुओं की संख्या भी लिख दी—"ल्वादिभ्यः। एकविंशतेर्लूञादिभ्यः प्राग्वत्।" (सिं०कौ०) इसका भी पाठ होने से भ्रम हुआ प्रतीत होता है। ध्वनिसाम्य के भ्रम का यह बहुत अच्छा उदाहरण है।

'लू' से लेकर 'व्रीं' से पूर्व तक मध्य में २१ धातुयें ल्वादि में समझनीं चाहिये। इन्हें उदा० में देखा जा सकता है।

(अनु०) उदा० लूनः, लूनवान्। धूनः, धूनवान्। जीनः, जीनवान्। [ लूञ्, धूञ् से क्त, क्तवतु में त का न होता है। 'ज्या वयोहानौ' से क्त, क्तवतु परे कित् मान कर 'ग्रहिज्यावयिव्यधि' सूत्र से य का सम्प्रसारण, आ का पूर्वरूप—जि + त, तवत् 'हलः' से उपधा का दीर्घ प्रस्तु सूत्र से त का न—जीनः जीनवान्। ]

❁ ऋकारान्त और ल्वादि से परे क्तिन् प्रत्यय (भी) निष्ठा के समान समझना चाहिए अर्थात् उसमें भी निष्ठा वाले कार्य कर लेने चाहिए। ❁ उदा० कीर्णिः। गीर्णिः। शीर्णिः। लूनिः। पूनिः। धूनिः। [ कॄ, गॄ. शॄ, लू, पू, धू—इनसे भावार्थ में क्तिन् और निष्ठावद् अतिदेश करने पर ऋकारान्तो में रेफ से परे और शेष में ल्वादि मानकर क्रमशः 'रदाभ्याम्' तथा 'ल्वादिभ्यः' सूत्रों से नत्व और णत्व करना चाहिए। ]

**❀ दुग्वोर्दीर्घश्चेति वक्तव्यम्। ❀ दु-आदूनः। गु-विगूनः।**

**❀ पूञो विनाश इति वक्तव्यम्। ❀ पूना यवाः। विनष्टा इत्यर्थः। विनाश इति किम्? पूतं धान्यम्।**

**❀ सिनोतेर्ग्रासकर्मकर्तृकस्येति वक्तव्यम्। ❀ सिनो ग्रासः स्वयमेव। ग्रासकर्मकर्तृकस्येति किम्? सिता पाशेन सूकरी। ग्रासोऽपि यदा कर्मैव भवति न कर्मकर्ता, तदा न भवति-सितो ग्रासो देवदत्तेनेति।।**

**न्यासः**

**दुग्वोरिति**। 'दु उपतापे'। 'गु पुरीषोत्सर्गे'।

**पूना इति**। विनष्टा इत्यर्थः। **पूतं धान्यमिति**। विधूतमित्यर्थः।

**सिनोतेरिति**। 'षिञ् बन्धने' इत्येतस्य। **ग्रासकर्मकर्तृकस्येति**। ग्रासः कर्मकर्त्ता यस्य स तथोक्तः। अर्थद्वारकञ्चेदम्। तस्य ग्रासकर्मकर्तृकत्वं विशेषणं वेदितव्यम्। यथा सिनो ग्रास बन्धनक्रियायां व्यञ्जनविशेषयोगादानुकूल्यं प्रतिपद्यते, तथा कर्मणोऽपि सतस्तस्य कर्तृत्वं विवक्षितमिति कर्मकर्त्तासौ भवति। **सिनो ग्रास इति**। स्वयमेव बद्ध इत्यर्थः। **सिता पाशेन शूकरीति**। समुदायप्रत्युदाहरणमेतत्। अवयवप्रत्युदाहरणं दर्शयितुमाह—**ग्रासोऽपीत्यादि**। ग्रासोऽपि यदि कर्मैव भवति न कर्मकर्त्ता, तदापि न भवति; ग्रासकर्मकर्तृकत्वस्य तदाभावात्। ग्रासकर्मतो हि स तदानीं भवति ग्रासकर्मकर्तृकः।।४४।।

**पदमञ्जरी**

**दुग्वोरिति**। 'दु गतौ' इत्यस्यैव दोर्ग्रहणम्, न तु 'टुदु उपतापे' इत्यस्य; सानुबन्धकत्वात्। तथा माघे प्रयुक्तम्—'मृदुतया दुतया[१]' इति। 'गु पुरीषोत्सर्गे'।

**पूना इति**। अनेकार्थत्वाद्धातूनां पूञ् विनाशार्थः।

**सिनो ग्रास इति**। 'षिञ् बन्धने', बध्यमानः -पिण्डीक्रियमाणो ग्रासो यदा दध्यादिव्यञ्जनवशेन तत्रानुकूल्यं प्रतिपद्यते, तदा कर्मणः कर्तृत्वविवक्षायामयं प्रयोगः। **सिता पाशेनेति**। शुद्धे कर्मणि क्तः, समुदायप्रत्युदाहरणमेतत्। इदानीमवयवप्रत्युदाहरणं दर्शयति—**ग्रासोऽपीति**।।४४।।

**भावबोधिनी**

**विमर्श**—उदाहरणों में सभी ऐसी धातुएँ हैं जो ल्वादि में ही पठित हैं। ऋकारान्त के उदा० ल्वादि में ऋकारान्त से भिन्न के देना उचित था। सम्भव है काशिकाकार ने ल्वादि से भिन्न ॠकारान्त के उदा० दिये हों किन्तु किन्हीं कारणों से छूट गये हों। क्योंकि ये सभी उदा० ल्वादि के हैं अतः वार्त्तिक में 'ऋकार' ग्रहण व्यर्थ होने लगेगा।

(वा,) ❀ दु और गु धातुओं का दीर्घ भी कहना चाहिए अर्थात् निष्ठा के त का न और दीर्घ—ये दो कार्य होते हैं। ❀ उदा० दु-आदूनः। गु-विगूनः। [ 'दु गति अर्थ में है' 'गु यह मलत्याग = शौच करना अर्थ में है।' क्त प्रत्यय, निष्ठा के त का नत्व और धातु का दीर्घ होता है। ]

❀ पूञ् से विनाश अर्थ में निष्ठा त का न होता है। ❀ उदा० पूनाः यवाः। जौं नष्ट हो गये-यह अर्थ है। [ पू + त, नत्व ]। विनाश अर्थ में—इसका क्या फल है? पूतं धान्यम्। [ यहाँ 'पवित्र' अर्थ होने से नत्व नहीं होता है। ]

❀ ग्रास जिसका कर्मकर्ता है ऐसी सिनोति (षिञ् बन्धने) धातु के निष्ठा 'त का न होता है' ऐसा कहना चाहिए ❀ उदा० सिनः ग्रासः स्वयम् एव। [ ग्रास = भोजन का कोई पदार्थ जब अपने आप पिण्ड सा बन जाता है, खाने में सुविधाजनक होता है तब ऐसा प्रयोग किया जाता है। सि + क्त, त का न-सिनः। ] ग्रास जिसका कर्मकर्ता हो उसका—इसका क्या फल है? सिता पाशेन सूकरी। [ यहाँ ग्रास नहीं शूकरी कर्म है। अतः नत्व नहीं होता है।] और जब ग्रास भी कर्म ही रहता है, कर्मकर्त्ता नहीं होता है, तब भी नत्व नहीं होता है—सितः ग्रासः देवदत्तेन। [ यहाँ ग्रास केवल कर्म है। कर्म उक्त होने से प्रथमा विभक्ति हुई है। ]।।४४।।

**३७३३. ओदितश्च।।४५।। (३०१९)**

**ओकारेतो धातोरुत्तरस्य निष्ठातकारस्य नकारादेशो भवति। ओलस्जी (धा.पा. १३१७)–लग्नः, लग्नवान्। ओविजी (धा.पा. १३१५)–उद्विग्नः, उद्विग्नवान्। 'ओप्यायी वृद्धौ' (धा.पा. ४८८)–आपीनः, आपीनवान्।**

**स्वादय ओदितः (दिवादिगण.)। षूङ्–सूनः, सूनवान्। दूङ्–दूनः, दूनवान। दीङ्–दीनः, दीनवान्। डीङ्–डीनः, डीनवान्। धीङ्–धीनः, धीनवान्। मीङ्–मीनः, मीनवान्। रीङ्–रीणः, रीणवान्। लीङ्–लीनः, लीनवान्। व्रीङ्–व्रीणः, व्रीणवान्।।**

**३७३४. क्षियो दीर्घात्।।४६।। (३०१५)**

**क्षियो धातोर्दीर्घादुत्तरस्य निष्ठातकारस्य नकारादेशो भवति। क्षीणाः क्लेशाः। क्षीणो जाल्मः। क्षीणस्तपस्वी। क्षियः 'निष्ठायामण्यदर्थे', (६।४।६०) 'वाऽऽक्रोशदैन्ययोः' (६।४।६१) इति दीर्घत्वं भवति।**

**न्यासः**

**ओदितश्च।। आपीन इति।** 'प्यायः पी' इति पीभावः।

**स्वादय ओदित इति।** ते पुनः 'षूङ् प्राणिप्रसवे'—इत्यादयः 'व्रीङ् वृणोत्यर्थे'-इत्येवमन्ता दिवादिषु पठ्यन्ते।।४५।।

**क्षियो दीर्घात्।। क्षिय इति।** 'क्षि क्षये', 'क्षि निवासगत्योः'-इति द्वयोरपि ग्रहणम्; विशेषानुपादानात्। **क्षीणाः क्लेशा इति।** 'क्तोऽधिकरणे च' इत्यादिनाकर्मकत्वात् कर्त्तरि निष्ठा, 'निष्ठायामण्यदर्थे' इति दीर्घः। **क्षीणो जाल्मः क्षीणस्तपस्वीत्यादि।** 'वाऽऽक्रोशदैन्ययोः' इति।

**पदमञ्जरी**

**ओदितश्च।। आपीन इति।** 'प्यायः पी' इति पीभावः। **स्वादयः** 'षूङ् प्राणिप्रसवे' इत्यादयः 'व्रीङ् वृणोत्यर्थे' इत्येवमन्ता दिवादौ पठ्यन्ते।।४५।।

**क्षियो दीर्घात्।।** 'क्षि क्षये', 'क्षि निवासगत्योः'—द्वयोरपि ग्रहणम्। **क्षीणा इति।** अकर्मकत्वात् कर्त्तरि क्तः, निष्ठायामण्यदर्थे' इति दीर्घः। **क्षीणस्तपस्वीति।** अत्रापि 'वाऽऽक्रोशदैन्ययोः' इति।

**भावबोधिनी**

ओकार की इत्संज्ञा वाली धातु से उत्तरवर्ती निष्ठा प्रत्यय के तकार का नकार आदेश होता है। उदा॰ 'ओ लस्जी' (लज्जा करना अर्थ है) से—लग्नः लग्नवान्। [ 'ओ लस्जी' के ओ तथा ई की इत्संज्ञा लोप के बाद 'स्कोः संयोगाद्योरन्ते च' सूत्र से स् का लोप—लज् + त, त् का न और 'चोः कुः' सूत्र से कुत्व से ज् का ग्—लग्नः। लग्नवान्। ] ओ विजी से—उद्विग्नवान्। [ ओ ई की इत्संज्ञा लोप के बाद उत् पूर्वक विज् + क्त, क्तवतु में त का न होता है, ज का कुत्व से ग्। ] 'ओ प्यायी' से—आपीनः आपीनवान्। [ ओ ई की इत्संज्ञा, लोप, 'प्यायः पी' (६।१।२८) सूत्र से 'पी' आदेश, त का न करने पर रूप बनते हैं'। ]

● स्वादि ओदित् हैं। ● [ यहाँ पर स्वादिगणीय नहीं ली जाती है अपितु दिवादिगण की 'षूङ् प्राणिप्रसवे' धातु से लेकर 'व्रीङ् वृणोत्यर्थे' तक की धातुओं को ही लिया जाता है। इन्हीं से परे निष्ठा त का न होता है। ] उदा॰ पूङ्—सूनः, सूनवान्। [ षू (प्राणि का जन्म), सू + क्त, क्तवत्, त का न ] दूङ् (परिताप करना)—दूनः, दूनवान्। दीङ् (= क्षय होना)—दीनः, दीनवान्। डीङ् (= उड़ना)—डीनः, डीनवान्। धीङ् (= आधार होना)—धीनः, धीनवान्। मीङ् (= हिंसा = मार डालना)—मीनः, मीनवान्। रीङ् (= सुनना)—रीणः रीणवान्। [ त का न, न का ण। लीङ् (= मिल जाना)—लीनः, लीनवान्। व्रीङ् (= वृणोति = वरण करना)—व्रीणः, व्रीणवान्। [ सभी में क्त और क्तवतु परे है त का न। रेफ से परे न का ण ]।।४५।।

दीर्घवर्णवाली क्षि धातु से उत्तरवर्ती निष्ठातकार का नकार आदेश होता है। उदा॰ क्षीणाः क्लेशाः। क्षीणः जाल्मः। क्षीणः तपस्वी। [ सभी में क्षि धातु से क्त परे है "निष्ठायामण्यदर्थे" (६-४-६०) सूत्र से दीर्घ होता है, 'वाक्रोशदैन्ययोः (६।४।६१) से

**दीर्घादिति किम्? 'अक्षितमसि मामेक्षेष्ठाः'। अक्षितमिति क्तप्रत्ययो भावे, भावश्च ण्यदर्थ इति दीर्घाभावः।**

**ह्रस्वस्यापि हि धात्वनुकरणस्य इह इयङा निर्देशः।**

**क्षियः[1] 'निष्ठायामण्यदर्थे' (६।४।६०) इत्यत्र दीर्घग्रहणं क्रियते।**

**'विपराभ्यां जेः' (१।३।१९) इत्येवमादौ तु धातुत्वमनुकार्यगतं सदप्यविवक्षितत्वात् जिरूपसामान्यानुकरणं द्रष्टव्यम्।।**

### न्यासः

ननु च 'क्षियः' इति निर्देशादेव दीर्घस्य ग्रहणं विज्ञायते, तत् किं दीर्घग्रहणेन? यदि ह्रस्वस्येदं ग्रहणं स्यात्, एवं सति परत्वाद् 'घेर्ङिति' इति गुणे क्षेरति निर्देशः स्यात्? इत्यत आह—**ह्रस्वस्यापि हीत्यादि**। यदि नियोगतो दीर्घस्यैव धात्वनुकरणस्येयङा निर्देशः स्यात्, ततोऽस्मान्निर्देशाद् दीर्घस्येदं ग्रहणमिति विज्ञायते। न च दीर्घस्यैवेयङा निर्देशो भवति। तथा हि ह्रस्वान्तस्यासौ दृष्टः। 'क्षियः' 'निष्ठायामण्यदर्थे' इत्यत्रावसितं ह्रस्वान्तस्येदमनुकरणम्, न दीर्घान्तस्येति? उच्यते; यथाभूतस्यैवानुकर्तुं युक्तम्। ह्रस्वान्तस्य च दीर्घत्वं विधेयम्। अतस्तस्यैवानुकरणमिदमिति विज्ञायते। यदि तर्हि ह्रस्वान्तस्यापि धात्वनुकरणस्येयङा निर्देशो भवति, 'विपराभ्यां जेः', विभाषा चेः' इत्येवमादावपि कस्मान्न भवति? **इह विपराभ्यां जेरित्येवमादावित्यादि**। अत्रासङ्कल्प-

### पदमञ्जरी

'दीर्घात्' इति शक्यमवक्तुम्, 'क्षियः' इति निर्देशादेव दीर्घस्य ग्रहणं विज्ञायते, ह्रस्वस्य हि ग्रहणे इयङादेशात्परत्वात् 'घेर्ङिति' इति गुणे कृते क्षेरिति निर्देष्टव्यं स्यादित्यत आह—**ह्रस्वान्तस्यापीति**। यथाभूतस्य दीर्घत्वं विधेयं तथाभूतमेवानुकर्तुं युक्तम्। ह्रस्वान्तस्य च दीर्घत्वं विधेयमिति तस्यैव दीर्घविधावनुकरणम्। तत्रापि चेयङादेशो दृष्टः, तस्मादियङादेशो न दीर्घग्रहणे प्रमाणमित्यर्थः।

यदि तर्हि ह्रस्वान्तस्यापि धात्वनुकरणस्येङादेशो भवति 'विपराभ्यां जेः' इत्यादावपि प्रसङ्गः? इत्यत आह— **विपराभ्यां जेरित्येवमादौ त्विति। अविवक्षितत्वेति**। पाठः। तत्र हि धातावनुकार्येऽवस्थितं धातुत्वं

### भावबोधिनी

वैकल्पिक दीर्घ भी होता है। ] [ क्षीणो, जाल्मः क्षीणः तपस्वी—में आक्रोश और दैन्य की प्रतीति में विकल्प से दीर्घ होता है। पक्ष में दीर्घ न होने पर नत्व भी नहीं होता है। क्षितः जाल्मः, क्षितः तपस्वी। ]

दीर्घ से परे—इसका क्या फल है? 'अक्षितमसि मामेक्षेष्ठाः'। अक्षितम्—यहाँ भाव अर्थ में क्त प्रत्यय है और भाव तो ण्यदर्थ = ण्यत् के समान अर्थ वाला है इस लिये [ अतः 'निष्ठायामण्यदर्थे' से ] दीर्घ नहीं होता है। [ अतः नत्व भी नहीं होता है। ]

'क्षियः' इसमें ह्रस्व भी ('क्षि') धातु के अनुकरण का इयङ् द्वारा निदेश किया गया है। [ जब ह्रस्व है तो उसकी घि संज्ञा होने से 'घेर्ङिति' से गुण होकर 'क्षेः' ऐसा होना चाहिए था। इसी से स्पष्ट है कि दीर्घ 'क्षी' का ही निर्देश है क्योंकि दीर्घ की ही नदी संज्ञा और इयङ् आदेश सम्भव है—इस शंका का समाधान करने के लिये कहा गया है कि 'क्षि' यह ह्रस्व धातु का ही अनुकरण है। ]

''क्षियः'' (६-४-५९) 'निष्ठायामण्यदर्थे (९-४-६०) इनमें ह्रस्व 'क्षि' का दीर्घ किया जाता है। [ इसके बाद ही 'क्षियो दीर्घात्' इस सूत्र की प्रवृत्ति सम्भव होने से यही माना जाता है कि 'क्षियः' यह ह्रस्व धातु का ही अनुकरण है। ]

## ३७३५. श्योऽस्पर्शे।।४७।। (३०२१)

**श्यायतेरुत्तरस्य निष्ठातकारस्यास्पर्शे नकार आदेशो भवति। शीनं घृतम्। शीनं मेदः। शीना वसा। अस्पर्श इति किम्? शीतं वर्तते। शीतो वायुः।**

**न्यासः**

मित्येतदध्याहार्यम्। धात्वनुकरणस्य हि प्रकृतिवदनुकरणं भवतीतीयङा निर्देशो भवति। धात्वनुकरणञ्च किं भवितुमर्हति येन धातावनुकार्येव स्थितम्? धातुत्वं क्रियावाचित्वलक्षणं विवक्ष्यते। 'विपराभ्यां जेः' इत्येवमादौ त्वनुकार्यगतं धातुत्वं सदप्यविवक्षितत्वादसङ्कल्पम्। तस्मान्नात्र धात्वनुकरणम्। अपि तु ङीप्रभृतेः क्रियावाचिनश्च तत्सादृश्यशब्दान्तरस्य ङीत्येवमादेर्यद्रूपसामान्यमर्थशून्यं तदनुकरणं द्रष्टव्यम्। तस्मादधात्वनुकरणत्वान्न भवतीयङादेश इत्यभिप्रायः। यदि तर्हि धात्वनुकरणं स्यात्, प्रकृतिवदनुकरणं भवतीति, एवं सत्यधातोरिति प्रातिपदिकसंज्ञाप्रतिषेधोऽपि स्यात्, ततश्च विभक्तिर्नोपपद्येते? वत्करणेनानुकार्येणनार्थत्त्वस्याश्रयात् प्रातिपदिकसंज्ञा भविष्यतीत्यदोषः।।४६।।

**श्योऽस्पर्शे।। शीनमिति।** 'श्यैङ् गतौ', 'द्रवमूर्त्तिस्पर्शयोः श्यः' इति सम्प्रसारणम्, 'हलः' इति दीर्घः। **शीतं वर्तत इति।** भावे निष्ठा। पूर्वत्र तु कर्त्तरि। **एवं शीतो वायुरित्यादौ।**

**शीतमुदकमित्यत्रेत्यादि। गुणभूतोऽपीति।** अप्रधानभूतोऽपीत्यर्थः। ननु च प्रधाने कार्यसम्प्रत्ययादप्रधानस्य नत्वप्रतिषेधादि कार्यं प्रति निमित्तभावो नोपपद्यते? नैष दोषः; 'अस्पर्शे' इति हि यद्ययं पर्युदासः स्यात्, एवं सति शीतो वायुरित्यादौ स्पर्शादन्यद् द्रव्यमस्तीति नत्वं स्यात्; न त्वयं पर्युदासः, किं तर्हि? प्रसज्यप्रतिषधः। तेन यत्र स्पर्शगन्धोऽस्ति तत्र तदाश्रयेण नत्वप्रतिषेधेन भवितव्यम्। अस्ति चेह गुणभूतः स्पर्शः, तेन तदाश्रयो नत्वप्रतिषेधो

**पदमञ्जरी**

क्रियावाचित्वलक्षणमविवक्षितत्वात्तस्य विवक्षामकृत्वा रूपसामान्यस्य-विजितम्, कूजितमित्यादिसाधारणस्य रूपस्यानुकरणम्, ततश्च विशेषनिबन्धनस्य कार्यस्य सामान्येऽभावात्प्रकृतावदृष्टत्वादनुकरणेऽप्यभाव इत्यर्थः। यदा तु विशेषोऽनुक्रियते, तदा तन्निबन्धनं कार्यमनुकरणे प्रवर्त्तते, यथात्रेयङादेशः। यद्येवम्, विभक्त्युत्पत्तिर्न प्राप्नोति, 'अधातुः' इति प्रतिषेधेन प्रातिपदिकसंज्ञाया अभावात्? नैष दोषः; अधातुरिति पर्युदासोऽयम्, न प्रसज्यप्रतिषेधः। ततः किम्? आतिदेशिकस्य कस्यचित् कार्यस्याभावात् धातोरन्यत्वात्स्वाश्रया प्रातिपदिकसंज्ञा प्रवर्त्तते। इयङादेशस्त्वातिदेशिको धातोर्विधीयमानत्वाद् भवति।।४६।।

**श्योऽस्पर्शे।। शीनमिति।** 'श्यैङ् गतौ', 'द्रवमूर्त्तिस्पर्शयोः श्यः' इति सम्प्रसारणम्।

**गुणभूतोऽपि स्पर्श इति।** एतच्च व्याख्यानाल्लभ्यते, स्पर्शशब्दोऽयमस्ति गुणवचनः, 'स्पर्श संस्पर्शने', भावे कर्मणि वा घञ्—स्पर्शस्त्वगिन्द्रियग्राह्यो गुणः; अस्ति रोगवचनः, 'स्पृश उपतापे', घञ्—स्पर्शः; तदिह विशेषानुपादानाद् द्वयोरपि ग्रहणम्।

**भावबोधिनी**

[ यदि ह्रस्वान्त धातु के भी अनुकरण में इयङ् होता है तो 'विपराभ्यां जेः' का भी इयङ् से निर्देश क्यों नहीं किया गया? ] 'विपराभ्यां जेः (१।३।१९) इत्यादि में तो अनुकार्य 'जि' में रहने वाले (विद्यमान) भी धातुत्व की अविवक्षा होने के कारण 'जि' रूप सामान्य का ही अनुकरण समझना चाहिए। [ भाव यह कि 'विजितम्' आदि के 'जि' सामान्य का अनुकरण है। अतः विशेष धातु मान कर होने वाला इयङादेश रूप कार्य नहीं होता है। प्रातिपदिक-संज्ञाविधायक सूत्र में 'अधातोः' यह प्रसज्यप्रतिषेध नहीं है अपितु पर्युदास है। अतः अनुकार्य रूप अर्थ से अर्थवान् मानकर प्रातिपदिक संज्ञा और विभक्ति उत्पत्ति आदि सम्भव है। ]।।४६।।

'श्यैङ् गतौ' = श्यायति से उत्तरवर्ती निष्ठा के तकार का स्पर्शभिन्न अर्थ में नकार आदेश होता है। उदा॰ शीनं घृतम्। शीनं मेदः। शीना वसा। [ श्यै + क्त 'आदेच उपदेशेऽशिति' सूत्र से आत्व 'द्रवमूर्तिस्पर्शयोः श्यः' से य् का सम्प्रसारण इ, आ का पूर्वरूप शि + त, 'हलः' से दीर्घ, त का न—शीन, नपुंसक लिङ्ग में सु, अम् आदि। पिघला हुआ घी, पिघली मेदा, पिघली चर्बी। ]

**शीतमुदकम्–इत्यत्र गुणभूतोऽपि स्पर्शो नत्वप्रतिषेधस्य सम्प्रसारणस्य च निमित्तं भवति। गुणे च स्पर्शे प्रतिषेधोऽयम्, न रोगे, तेन प्रतिशीन इत्यत्र नत्वं भवत्येव।।**

## ३७३६. अञ्चोऽनपादाने।।४८।। (३०२४)

**अञ्चतेरुत्तरपदस्य निष्ठातकारस्य नकारादेशो भवति न चेदपादानं तत्र भवति। समक्नौ शकुनेः पादौ। तस्मात्पशवो न्यक्नाः।**

### न्यासः

भवत्येव। भवत्वेवं नत्वप्रतिषेधः, सम्प्रसारणस्य तु गुणभूतः स्पर्शः कथं कारणं भवति? नियमस्य त्यागात्। इह 'अल्पाच्तरम्' इति नियमः—अल्पाच्तरं द्वन्द्वे पूर्वमेव प्रयोक्तव्यमिति, 'द्रव्यमूर्तिस्पर्शयोः श्यः' इत्यत्र स्पर्शशब्दस्याल्पाच्तरस्य परनिपातं कुर्वताऽस्य नियमस्य त्यागः कृतः। स किमर्थं कृतः? स्पर्शोऽत्रानियमेन प्रधानभूत उपसर्जनभूतो वा सम्प्रसारणस्य कारणमित्यस्यार्थस्य सूचनार्थः। तेन गुणभूतोऽपि स्पर्शः सम्प्रसारणस्य निमित्तं भवति।

स्पर्शशब्दोऽयमस्ति गुणवचनः, अस्ति च रोगवचनः; तदिह विशेषानुपादानादुभयोरपि ग्रहणम्। ततो रोगेऽपि प्राप्नोतीति प्रतिशीन इत्येतन्न सिध्येदिति चोद्यमाशङ्क्याह—**गुणे चेत्यादि**। गुण एवेत्यर्थः। कथं पुनर्गुण एव प्रतिषेधो लभ्यते? ज्ञापकात्। यदयम् 'द्रवमूर्त्तिस्पर्शयोः श्यः' इत्यत्र सम्प्रसारणं विधाय पुनः 'प्रतेश्च' इति विधत्ते, तज्ज्ञापयति—श्यायतेर्यत्र ग्रहणं तत्र स्पर्श उपादीयमानो रोगं न प्रत्याययतीति। यदि हि प्रत्याययेत्, पुनर्विधानमनर्थकं स्यात्; पूर्वेणैव सिद्धत्वात्। प्रतिपूर्वो हि रोग एव श्यायतिर्वर्त्तते, नान्यत्र।।४७।।

**अञ्चोऽनपादाने**।। **न चेदपादानं तत्र भवतीति**। तत्रेत्यनेनाञ्चतिः परामृश्यते। शब्दद्वारेणाञ्चत्यर्थ एवायमपादानस्य प्रतिषेधसामर्थ्याद् विज्ञायते। न ह्यञ्चतावपादानत्वं सम्भवति, किं तर्हि? तदर्थे क्रियाविषयत्वात् कारकाणाम्। तदेतदुक्तं भवति—

### पदमञ्जरी

ततश्च रोगेऽपि प्रतिषेधात्प्रशीन इति न सिध्येत्? अत आह—**गुणे चेति**। गुण एवेत्यर्थः। एवं मन्यते-यदयम् 'द्रवमूर्तिस्पर्शयोः श्यः' इति स्पर्शे संप्रसारणं विधाय पुनः 'प्रतेश्च' इत्याह, तज्ज्ञापयति-श्यायतेर्ग्रहणे स्पर्शशब्दो रोगं न प्रत्याययतीति। यदि प्रत्याययेत् पुनर्न विदध्यात्, प्रतिपूर्वो रोग एव श्यायतिर्वर्तते।।४७।।

**अञ्चोऽनपादाने**।। **न चेदपादानं तत्र भवतीति**। तत्राञ्चत्यर्थे विषयेऽपादानं चेन्न भवतीत्यर्थः। **समक्नाविति**। सङ्गतावित्यर्थः। 'यस्य विभाषा' इतीट्प्रतिषेधः, 'अनिदिताम्' इत्युपधालोपः।

### भावबोधिनी

स्पर्श से भिन्न अर्थ में—इसका क्या फल है? शीतं वर्तते। शीतो वायुः। [ यहाँ स्पर्श अर्थ की प्रतीति होने से त का न नहीं होता है। ]

शीतम् उदकम्—इसमें गुणभूत (अप्रधानभूत) भी स्पर्श नत्व के प्रतिषेध (अभाव) का और सम्प्रसारण का निमित्त बनता है।

तथा गुणवाची ही 'स्पर्श' में यह प्रतिषेध लगता है, न कि रोग अर्थ में। इस कारण 'प्रतिशीनः' इसमें नत्व होता ही है। [ प्रति उपसर्गपूर्वक श्यैङ् का प्रयोग रोग अर्थ में होता है। क्योंकि 'प्रतेश्च' सूत्र से अलग से सम्प्रसारण करने का यही फल है। अतः इसमें नत्व में बाधा नहीं है। प्रतिश्याय = जुकाम, प्रतिशीन = जुकाम, प्रतिशीन = जुकाम से ग्रस्त ]।।४७।।

अञ्चति = अञ्चू धातु से उत्तरवर्ती निष्ठा के तकार का नकार आदेश होता है, यदि वहाँ अपादान नहीं रहता है तो। उदा॰ समक्नौ शकुनेः पादौ। [ शकुनि के पैर मिले हुये होते हैं। ] तस्मात् पशवो न्यक्नाः। [ इस कारण पशु मिले हुये रहने वाले होते

**अनापादान इति किम्? उदक्तमुदकं कूपात्। व्यक्तमित्येतदञ्जेः रूपम्।।**

## ३७३७. दिवोऽविजिगीषायाम्।। ४९ ।। (३०२८)

**दिव उत्तरस्य निष्ठा-तकारस्य नकारादेशो भवति अविजिगीषायामर्थे। आद्यूनः। परिद्यूनः। अविजिगीषायामिति किम्? द्यूतं वर्तते। विजिगीषया हि तत्राक्षपातनादि क्रियते।।**

## ३७३८. निर्वाणोऽवाते।।५०।। (३०२९)

**न्यासः**

न चेदञ्चत्यर्थे विषयभूतेऽपादानं न भवतीति। **समक्नाविति**। सङ्गतावित्यर्थः। 'अन्चू गतिपूजनयोः' इत्यूदित्त्वाद् विभाषितेट्। तेन 'यस्य विभाषा' इति निष्ठायामिट्प्रतिषेधः, 'अनिदिताम्' इत्यनुनासिकलोपः। **उदक्तमुदकमिति**। उधृतमुदकमित्यर्थः। अथ व्यक्तमित्यत्र नत्वं कस्मान्न भवति? इत्याह—**व्यक्तमित्येतदित्यादि**। 'अन्जू व्यक्तिम्रक्षणकान्तिगतिषु' इत्येतद्रूपम्, नाञ्चते; ततो नत्वमिह न भवतीति भावः।।४८।।

**दिवोऽविजिगीषायाम्।। आद्यूनः, परिद्यून इति**। अविजिगीषुरित्यर्थः। 'च्छ्वोः शूडनुनासिके च' इति ऊठ्। **द्यूतं वर्तत इति**। विजीगीषार्थोऽत्र विवक्षित इति नत्वं न प्रवर्तते। कथं पुनरिह विजिगीषार्थः, यावता अक्षपातनलक्षणक्रीडा न प्रतीयते? इत्याह—**विजिगीषायां हीत्यादि**। विजेतुमिच्छा विजिगीषा, तस्याम्। तत्र क्रीडायामक्षपातनादि क्रियते। तस्माद् विजिगीषार्थेऽवतिष्ठत इति भावः। आदिशब्देन शलाकापातादेर्ग्रहणम्।।४९।।

**निर्वाणोऽवाते।। वातेरुत्तरस्येति**। 'वा गतिगन्धनयोः' इत्येतस्मात्। **न चेत्यादि**। वातमधिकरणमाधारो यस्य स तथोक्तः। एतदुक्तं भवति—वातेर्धातोर्योऽर्थः स यदि वातेन समवेतो भवतीत्यर्थः। **निर्वाणोऽग्निः, निर्वाणः**

**पदमञ्जरी**

**उदक्तमिति**। उद्धृतमित्यर्थः। **व्यक्तमित्येतदिति**। 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' इत्यस्येदं रूपम्, नाञ्चतेः; तेन नत्वमिदं न भवतीति भावः।।४८।।

**दिवोऽविजिगीषायाम्।। आद्यून इति**। 'च्छ्वोः शूड्'। **आद्यूनः** = औदरिकः। **परिद्यूनः** = क्षीणः।

**द्यूतं वर्तते इति**। नन्वत्राक्षादिपतनलक्षणा क्रीडा प्रतीयते, न विजिगीषा? अत आह—**विजिगीषया हीति**।।४९।।

**भावबोधिनी**

हैं। नि पूर्वक अञ्च्-क्त 'अनिदितां हल उपधायाः क्ङिति' से ञ् = न् अनुनासिक का लोप-नि अच् + त, ऊदित् होने से इट् का प्रतिषेध, 'कुहोश्चुः' से च् का क्, प्रस्तुत सूत्र से 'त' का 'न' नि अक् न, यण्, औ प्रत्यय-न्यक्नौ। जस् में—'न्यक्नाः। ]

अनपादान = अपादान न होनें पर—इसका क्या फल है? उदक्तम् उदकं कूपात्। [ उदक्त = उद्धृत, निकाला गया पानी कुयें से—इसमें कूप' अपादान है अतः 'त' का 'न' नहीं होता है। ] व्यक्तम्—यह तो (वि पूर्वक) 'अञ्जू व्यक्ति-म्रक्षण-कान्ति-गतिषु' इस धातु का रूप है। [ वि + अञ्ज् + क्त, अनुनासिकलोप, कुत्व, चर्त्व। इसमें नत्व की प्राप्ति ही नहीं है ]।।४८।।

अविजिगीषा = जीतने की इच्छा न होना अर्थ में दिव् धातु से उत्तरवर्त्ती निष्ठा तकार का नकार आदेश होता है। उदा० आद्यूनः। परिद्यूनः। [ आङ् दिव् + क्त, परि दिव् + क्त, इसमें कित् परे होने से 'च्छ्वोः शूडनुनासिके च' (६।४।१९) सूत्र से व् का ऊठ्-आ दि ऊ + त, वि दि ऊ त, यण्—आद्यू + त, विद्यू + त, त का न। जीतने की इच्छा न करने वाला यह अर्थ है। ]

अविजिगीषा = जीतने की इच्छा न होने में—इसका क्या फल है? द्यूतं वर्तते। [ यहाँ त का न नहीं होता है। ] क्योंकि जीतने की इच्छा से ही उसमें पांसे (अक्ष) आदि फेंके जाते हैं।।४९।।

'निर्वाणः'—इस रूप में निस् पूर्वक वाति = वा धातु से उत्तरवर्ती निष्ठा तकार का नकार आदेश निपातित होता है यदि 'वाति' वा धातु का अर्थ वात = वायुकर्तृक अधिकरण न हो तो। [ अधिकरण = वाच्य, वात = वायु कर्ता न हो अर्थात् यदि

**'निर्वाणः' इति निस्पूर्वाद् वातेरुत्तरस्य निष्ठातकारस्य नकारो निपात्यते, न चेद्वाताधिकरणो वात्यर्थो भवति। निर्वाणोऽग्निः। निर्वाणः प्रदीपः। (एष) निर्वाणो भिक्षुः।**

**अवात इति किम्? निर्वातो वातः। निर्वातं वातेन।**

**निर्वाणः प्रदीपो वातेन–इत्यत्र तु प्रदीपाधिकरणो वात्यर्थः, वातस्तु तस्य करणमिति भवत्येव नत्वम्।।**

## ३७३९. शुषः कः।।५१।। (३०३०)

**शुषेर्धातोरुत्तरस्य निष्ठातकारस्य ककारादेशो भवति। शुष्कः, शुष्कवान्।।**

**न्यासः**

**प्रदीप** इति। अत्र स्वरूपस्य यः प्रशम उपरतिलक्षणः स धात्वर्थः। **एष निर्वाणो भिक्षुरिति**। अत्रापि। अथ वा—रागादिप्रहाणं धात्वर्थः।

**निर्वातो वात इति**। अकर्मकत्वात् कर्त्तरि निष्ठा। **निर्वातं वातेनेति**। अत्र भावे। उभयत्राप्यत्र गतिनिरोधो धात्वर्थः।

**निर्वाणः प्रदीपो वातेनेति**। अत्र वातेनेति कर्त्तरि तृतीया। तस्माद् वात एव वात्यर्थस्याधारः, ततश्च नत्वेन न भवितव्यमिति कस्यचिद् व्यामोहः स्यात्, अतस्तन्निराकरणायाह—**निर्वाणः प्रदीप इत्यादि**। अत्र निर्वाणं धात्वर्थः, तच्च प्रदीपाधारम्, न वाताधारम्। वाताधारे हि तस्मिन्निर्वाण इति यदि कर्त्तरि निष्ठा, तदा तयैवाभिहितत्वात् कर्त्तुर्वातात् तृतीया न स्यात्। अथ 'नपुंसके भावे क्तः' इति भावे? एवं सति निर्वाण इति पुंल्लिङ्गं न स्यात्। तस्मात् प्रदीप एव कर्ता धात्वर्थस्याधारः। यद्येवम्, कथं वातेनेत्यत्र तृतीया? इत्य आह—**वातस्त्वित्यादि**। एतेनैषा तृतीया न कर्त्तरीति दर्शयति।।५०।।

**शुषः कः**।। 'शुष शोषणे' इत्यस्मात् परस्य निष्ठातकारस्य ष्टुत्वे प्राप्ते ककारो विधीयते। अकार उच्चारणार्थः। **शुष्कः, शुष्कवानिति**। युक्तं शुष्कवानित्येतदुदाहरणम्, शुष्क इत्येतत्त्वयुक्तम्, न ह्येतदर्थेऽस्य सूत्रस्यारम्भो युज्यते, 'शुष्कधृष्टौ' इति निपातनेनैव सिदधत्वात्? नैतदस्ति; निपातनेन हि ककारे सति

**पदमञ्जरी**

**निर्वाणोऽवाते।। वाताधिकरण इति**। वातकर्तृक इत्यर्थः। यदि **'वातश्चेदभिधेयो न भवति'** इत्यर्थः स्यात्, तदा निर्वातो वात इत्यत्रैव प्रतिषेधः स्याद्यत्र कर्त्तरि क्तः; यत्र तु भावे तत्र न **स्यात्—निर्वातं वातेनेति**।

**भावबोधिनी**

कर्ता रूप से वायु अभिधेय न हो तो निष्ठा तकार का नकार होता है। ] उदा० निर्वाण: अग्निः। निर्वाण: प्रदीपः। एष निर्वाणो भिक्षुः। [ निर्‌वा + क्त, त का न, न का णत्व। अग्नि शान्त हो गयी। दीपक बुझ गया। यह भिक्षु मुक्त हो गया। ]

अवात—अर्थ में—इसका क्या फल है? निर्वातो वातः। [ हवा शान्त हो गयी। ] निर्वातं वातेन। [ हवा शान्त हो गयी। इसमें वात ही कर्ता = वाच्य है। अतः नत्व नहीं होता है। ]

'निर्वाणः प्रदीपः वातेन' (हवा से दीपक बुझ गया)—यहाँ वाति धातु प्रदीप रूप अधिकरण = वाच्य कर्ता वाली है, वात = वायु तो उसका करण बना है, [ कर्ता नहीं है ] अतः नत्व होता ही है। [ यहाँ निर्वाण = बुझना धात्वर्थ है और इसका आधार प्रदीप है न कि वात। अतः णत्व होता है। ]।।५०।।

शुष् धातु से उत्तरवर्ती निष्ठा के तकार का ककार आदेश होता है। उदा० शुष्कः, शुष्कवान्। [ शुष् + क्त, क्तवत्, क् की इत्संज्ञा, लोप के बाद 'त' का 'क' होता है। सूखा, सूख गया—अर्थ हैं। ]।।५१।।

**३७४०. पचो वः।।५२।। (३०३१)**

**पचेर्धातोरुत्तरस्य निष्ठातकारस्य वकारादेशो भवति। पक्वः, पक्ववान्।**

**३७४१. क्षायो मः।।५३।। (३०३२)**

**क्षै-धातोरुत्तरस्य निष्ठातकारस्य मकारादेशो भवति। क्षामः, क्षामवान्।।**

**३७४२. प्रस्त्योऽन्तरस्याम्।।५४।। (३०३४)**

**प्रपूर्वात् स्त्यायतेरुत्तरस्य निष्ठातकारस्यान्यतरस्यां मकारादेशो भवति। प्रस्तीमः, प्रस्तीमवान्। प्रस्तीतः, प्रस्तीतवान्।**

**न्यासः**

शुष्किकेत्यत्र 'उदीचामातः स्थाने यकपूर्वायाः' इति विभाषेत्त्वं स्यात्, शुष्कजङ्घेत्यत्र च 'न कोपधायाः' इति पुंवद्भावप्रतिषेधः स्यात्; इह तु ककारस्य विधाने सति तस्यासिद्धत्वादेतदुभयं न भवति। तस्माच्छुष्क इत्येतदर्थोऽप्यस्यारम्भो युक्तः।।५१।।

**पचो वः।। पक्वः, पक्ववानिति।** 'डुपचष् पाके'। यद्येवम्, पक्व इत्येतत् 'सिद्धशुष्कपक्वबन्धैश्च' इति निपातनादपि हि सिध्यति; तथापि पक्ववानित्येतदर्थमिदमवश्यमारब्धव्यम्। अन्यार्थं चारभ्यमाणं पक्व इत्येतदर्थरूपमपि भवतीति पक्वशब्दोऽस्योदाहरणमुपन्यस्तम्। निपातनद्वारेण हि तद्व्युत्पत्तौ प्रतिपत्तिगौरवं स्यादित्यभिप्रायः।।५२।।

**क्षायो मः।।** 'क्षै जै षै क्षये'।।५३।।

**प्रस्त्योऽन्यतरस्याम्।। प्रस्तीम इति।** 'ष्ट्यै स्त्यै सङ्घातशब्दयोः'। 'स्त्यः प्रपूर्वस्य' इति सम्प्रसारणम्, पूर्ववद्दीर्घः। इह यदा मत्वं न भवति, तदा 'संयोगादेः' इत्यनेन नत्वेन भवितव्यम्; ततश्च प्रस्तीनः, प्रस्तीनवानितीष्टं स्याद्—इति कस्यचिद् भ्रान्ति स्यात्, अतस्तां निराकर्तुमाह—**यदा मत्वं नास्तीत्यादि।** कृते तर्हि प्रथमं सम्प्रसारणे नत्वं कस्मान्न भवति? इत्याह—**तत्र कृते इत्यादि।**।५४।।

**पदमञ्जरी**

**निर्वाणोऽग्निरिति।** उपशान्त इत्यर्थः। **निर्वाणो भिक्षुरिति।** उपरत इत्यर्थः। **वातस्तु करणमिति।** यथासंभवं करणत्वे हेतौ वा तृतीया द्रष्टव्या। यथा तु वार्त्तिकं तथा भावे प्रतिषेधो न भवति, निर्वाणं वातेनेत्येव भवति।।५०।।५१-५३।।

**प्रस्त्योऽन्यतरस्याम्।। प्रस्तीम इति।** 'स्त्यः प्रपूर्वस्य' इति सम्प्रसारणम्।।५४।।

**भावबोधिनी**

पच् धातु से उत्तरवर्ती निष्ठा तकार का वकार आदेश होता है। उदा० पक्वः, पक्ववान्। [ डुपचष् = पच् + क्त, क्तवतु में तकार का वकार आदेश होता है। 'चो कुः' (८।२।३०) की दृष्टि में वकार आदेश असिद्ध हो जाता है। अतः तकार = झल् परे मानकर "चोः कुः" से च् का क् कुत्व होता ही है—पक्। त का व हुआ—पक्वः, पक्ववान्। पका हुआ, पकाया—ये अर्थ हैं। ]।।५२।।

'क्षै' (= क्षय अर्थवाली) धातु से उत्तरवर्ती निष्ठा के तकार का मकार आदेश होता है। उदा० क्षामः, क्षामवान्। [ क्षै + क्त, क्तवतु में 'आदेच उपदेशेऽशिति' सूत्र से ऐ का आत्व—क्षा, प्रस्तुत सूत्र से तकार का मकार आदेश। मुरझाया हुआ, मुरझा गया—अर्थ है। ]।।५३।।

प्रपूर्वक 'स्त्यै' धातु से उत्तरवर्त्ती निष्ठा तकार का मकार आदेश विकल्प से होता है। उदा० प्रस्तीमः, प्रस्तीमवान्। प्रस्तीतः प्रस्तीतवान्। [ 'स्त्यै संघातशब्दयोः' धातु से क्त और क्तवतु ऐ का आत्व-स्त्या, "स्त्यः प्रपूर्वस्य" (५।१।२३) सूत्र से य का सम्प्रसारण इ, अ का पूर्वरूप, आ का पूर्वरूप, 'हलि च' से दीर्घ—प्रस्ती + त, तवत्, त का म विकल्प से होने पर प्रस्तीमः, प्रस्तीमवान्। पक्ष में प्रस्तीतः, प्रस्तीतवान्। ]

**यदा मत्वं नास्ति, तदा 'संयोगादेरातो धातोर्यण्वतः' (८।२।४३) इत्यस्य पूर्वत्रासिद्धत्वात् सम्प्रसारणं प्रथमं क्रियते, तत्र कृते निमित्तव्याघातान्नत्वं न भवति।।**

## ३७४३. अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः।।५५।। (३०२५)

**फुल्ल, क्षीब, कृश, उल्लाघ–इत्येते निपात्यन्ते, न चेदुपसर्गादुत्तरा भवन्ति। फुल्ल इति – 'ञिफला विशरणे' (धा.पा.५१६) इत्येतस्माद्धात्तोरुत्तरस्य निष्ठातकारस्य लकारो निपात्यते। उत्वमिडभावश्च सिद्ध एव।**

**क्तवत्वन्तस्याप्येतल्लत्वमिष्यते। फुल्लः, फुल्लवान् इति।**

### न्यासः

**अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः।। फुल्ल इति।** 'ञिफला विशरणे', 'आदितश्च' इतीट्प्रतिषेधः, 'उत्परस्यातः' इत्युत्वम्।

**क्तवत्वन्तस्याप्येतल्लत्वमिष्यत इति।** कथं पुनरिष्यमाणमपि लभ्यते, न हि क्तवत्वन्तः शब्दः सूत्र उपात्तः? उच्यते; इह निष्ठायास्तकारान्तं यच्छब्दरूपं तस्य 'फुल्ल' इत्येतन्निपात्येत, क्तक्तवतोश्च तत् तुल्यम्। परस्तु यदि क्तवतोऽर्थो वा विशेष्यते? विशेष्यताम्, न हि तेन समानेनासमानेन वा प्रयोजनमस्ति। तस्मात् क्तवत्वन्तस्याप्येतल्लत्वं भवति। एवमनयैव युक्त्या क्षीबकृशोल्लाघादिष्वपि यन्निपात्यते, तदपि क्तवत्वन्तस्य प्रसज्येत? नैष दोषः; वक्ष्यमाणमन्यतरस्यांग्रहणमुभयोर्योगयोः शेषः। व्यवस्थितविभाषा च न ज्ञायते, तेनातिप्रसङ्गो न भविष्यतीति।

**क्षीबिकृशिभ्यामिति।** 'क्षीबृ मदे', 'कृश तनूकरणे'। **इडभावश्च निपात्यत इति।** क्तलोपस्यासिद्धत्वाद् वलादिरार्धधातुको भवतीतीट् प्राप्नोति; अतस्तदभावश्च निपात्यते। **कृते वा इटि इच्छब्दलोप इति।** निपात्यत इति सम्बन्धः। इडभावापेक्षो विकल्पः। अथ वा—नेडभावो निपात्यते। किं तर्हि? कृत इटीच्छब्दलोपः।

### पदमञ्जरी

**अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः।। फुल्ल इति।** 'आदितश्च' इतीट्प्रतिषेधः, 'उत्परस्यातः', 'ति च' इत्युत्वम्।

**क्तवत्वन्तस्याप्येतल्लत्वमिष्यत इति।** निष्ठायास्तशब्दान्तं यद्रूपं तस्य फुल्लः—इत्येतन्निपात्यत इति भावः। क्षीबादिषु तु नैतदिष्यते।

### भावबोधिनी

जब मत्व नहीं होता है तब 'संयोगादेरातो धातोर्यण्वतः' इसके पूर्व के प्रति असिद्ध हो जाने से पहले सम्प्रसारण ही होता है, सम्प्रसारण के कर देने पर निमित्त के नष्ट हो जाने के कारण नत्व नहीं होता है। [ भाव यह है कि 'स्त्या' रहने पर ही आकारान्त मान कर 'संयोगादेरातो' सूत्र से नत्व सम्भव है। किन्तु सम्प्रसारणविधायक सूत्र की दृष्टि में नत्वविधायक सूत्र असिद्ध है, अतः पहले सम्प्रसारण ही होता है। सम्प्रसारण करने पर आकारान्त नहीं रह जाता है, नत्व की प्राप्ति नहीं है।, प्रस्तीनः, प्रस्तीनवान् रूप नहीं बन सकते ]।।५४।।

फुल्ल, क्षीब, कृश, उल्लाघ—ये शब्द निपातित होते हैं यदि ये किसी उपसर्ग से उत्तरवर्त्ती न हों तो। उदा॰ फुल्लः—यह 'ञिफला विशरणे' [ अनुबन्धों के लोप के बाद ] फल् धातु से उत्तरवर्त्ती निष्ठा तकार का लकार आदेश निपातित होता है। इसमें [ 'उत्परस्यातः' सूत्र से ] अ का उत्व और [ 'आदितश्च' सूत्र से ] इट् का अभाव सिद्ध ही है। [ फुल् + ल = फुल्लः। ]

क्तवतु प्रत्यत्यान्त का भी यह लत्व इष्ट ही है। उदा॰ फुल्लः, फुल्लवान्।

**क्षीबकृशोल्लाघा इति–क्षीबि (धा.पा. ३८२)–कृशि (धा.पा. १२५२)–ध्यामुत्पूर्वाच्च लाघेः (धा.पा. ११२) क्तप्रत्ययस्य तलोप इडभावश्च निपात्यते। कृते वा इटि इच्छब्दलोपः। क्षीबः। कृशः। उल्लाघः।**

**अनुपसर्गादिति किम्? प्रफुल्ताः सुमनसः। प्रक्षीबितः। प्रकृशितः। प्रोल्लाघितः। लाघेरुदोऽन्य उपसर्गः प्रतिषिध्यते।**

*** उत्फुल्लसम्फुल्लयोरिति वक्तव्यम्। * उत्फुल्लः। सम्फुल्लः। परिकृश इत्यत्र यः परिशब्दः स क्रियान्तरयोगात् कृशिं प्रत्यनुपसर्ग एव-परिगतः कृशः = परिकृश इति।।**

**न्यासः**

**लाघेरुदोऽन्य उपसर्गः प्रतिषिध्यत इति।** उत्पूर्वस्य ग्रहणसामर्थ्यात्। अन्यथा ह्युत्पूर्वस्योपादानमनर्थकं स्यादित्यभिप्रायः।

अनुपसर्गादित्युच्यते, तत्र परिकृश इति न सिध्यति? इत्यत आह—**परिकृश इत्यत्रेत्यादि।** तनूकरणलक्षणक्रियाया अन्यक्रिया गमनलक्षणा क्रियान्तरम्, तेन योगोऽयम्, न परिशब्दः, अत्र कृशिं प्रत्युपसर्गसंज्ञा भवतीति कृत्वा। **परिगतः कृश इति।** अनेन तं क्रियान्तरयोगं दर्शयति। अथ किमर्थं निपातनम्, यावता फुल्ल इति—'फुल्ल विकसने' इत्येतस्मात् पचाद्यचि सिध्यति, क्षीबेरिगुपधलक्षणे के—क्षीब इति, कृश इत्यपि कृशेरचैव, उल्लाघ इति—लाघ इत्येव पचाद्यचि सिद्ध्यत्येव? सत्यमेवैतत्; निष्ठायां तु फलतिप्रभृतीनामसत्यस्मिन्निष्टं रूपं प्राप्नोति। अतस्तन्निवृत्त्यर्थमारब्धव्यमेतत्।।५५।।

**पदमञ्जरी**

**इडभाव इति।** अन्यथा तलोपस्यासिद्धत्वाद्वलादित्वादिट् प्रसज्येत। **कृते वा इटि इच्छब्दलोप इति।** निपात्यत इत्यपेक्षते। **लाघेरुदोऽन्य इति।** उदस्तु प्रतिषेधो न भवति; निर्देशसामर्थ्यात्। **कृशिं प्रत्यनुपसर्ग एवेति।** 'यत्क्रियायुक्ताः प्रादयस्तं प्रति' इति वचनात्। क्रियान्तरयोगमेव दर्शयति—**परिगतः कृश इति।** कार्श्येन परिगत इत्यर्थः। यद्यपि फुल्लादयः पचाद्यपि इगुपधलक्षणे के च सिध्यन्ति, तथापि 'निष्ठा च द्व्यजनात्' इत्यादिकार्यसिद्धये, क्षीबिताद्यनिष्टशब्दनिवृत्तये च निपातनम्; फुल्लशब्दे तु फुल्लवानित्येतदर्थं च।।५५।।

**भावबोधिनी**

क्षीव, कृश, उल्लाघ-इसमें 'क्षीबि' और 'कृश' धातुओं से तथा 'उत्' पूर्वक 'लाघि' धातु से [ अनुबन्ध इकार के लोप के बाद ] क्त प्रत्यय के त् व्यञ्जनमात्र का लोप और इट् का अभाव निपातित होता है। अथवा इट कर लेने पर [ क्षीब् इत् अ, कृश् इ त् अ, उत् लाघ् इ त् अ में ] 'इत्' इसका लोप हो जाता है—क्षीबः, कृशः [ उद् + लाघ 'तोर्लि' से परसवर्ण होने पर ] उल्लाघः।

उपसर्ग से परे न हो—इसका क्या फल है? प्रफुल्ताः, सुमनसः। प्रक्षीबितः। प्रकृशितः। प्रोल्लाघितः। 'लाघ' के 'उत्' से भिन्न उपसर्ग का प्रतिषेध होता है। [ अतः 'प्र' के साथ यह निपातन नहीं होता है। इट् होता है। प्रोल्लाघितः। ]

* उत्फुल्ल और सम्फुल्ल इन का भी निपातन होता है, ऐसा कहना चाहिए। * उदा० उत्फुल्लः, सम्फुल्लः। [ पूर्ववत् ही प्रक्रिया है। ]

'परिकृशः' इसमें जो परि' शब्द है वह अन्य (= गमन) क्रिया के साथ योग होने से 'कृश' धातु के प्रति अनुपसर्ग ही रहता है। [अतः निपातन के कार्य होते ही है। ] परिगतः कृशः = परिकृशः। [ यहाँ परि का योग गम् धातु के साथ होने से उस के लिये उसर्गत्व है कृश् के प्रति नहीं। अतः अनुपसर्गक मानकर निपातन होता है। ]।।५५।।

## ३७४४. नुदविदोन्दत्राघ्राह्रीभ्योन्यरस्याम्।।५६।। (३०३८)

**नुद, विद, उन्दी, त्रा, घ्रा, ह्री–इत्येतेभ्य उत्तरस्य निष्ठातकारस्य नकार आदेशो भवति अन्यतरस्याम्। नुद–नुन्नः, नुत्तः। विद–विन्नः, वित्तः। उन्द–समुन्नः, समुत्तः। त्रा–त्राणः, त्रातः। घ्रा–घ्राणः, घ्रातः। ह्री–ह्रीणः, ह्रीतः।**

**'ह्री' इत्येतस्याप्राप्तं नत्वम्, इतरेषां नित्यं प्राप्तं विकल्प्यते। 'विद विचारणे' (धा.पा. १४५१) इत्यस्य विदेरिह ग्रहणमिष्यते। एवं ह्युक्तम्–**

**वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते।**
**विन्तेर्विन्नश्च वित्तश्च भोगवित्तश्च विन्दतेः[१]।।इति।।**

**न्यासः**

**नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्।। समुन्नः, समुत्त इति।** 'अनिदिताम्' इति नलोपः। **ह्रीत्यस्येति।** 'ह्री लज्जायाम्' इत्यस्य। **अप्राप्त इति।** केनचिदविधानात्। **इतरेषामिति।** तत्र 'नुद प्रेरणे', 'उन्दी क्लेदने'—तयोः 'रदाभ्याम्' इति नित्यं प्राप्तम्। 'त्रैङ् पालने', 'घ्रा गन्धोपादाने'—एतयोः 'संयोगादेः' इत्यादिना।

**'विद विचारणे' इत्यस्य विदेरिह ग्रहणमिष्यत इति।** कथं पुनरस्य ग्रहणमिष्यते, श्लुविकरणेन ह्रीत्यनेन साहचर्यात्? नैतदस्ति; शविकरणेन नुदिना साहचर्याल्लाभार्थस्य विदेर्ग्रहणप्रसङ्गात्? एवं तर्ह्यन्यतरस्यामित्येषा व्यवस्थितविभाषा, तेन विचारणार्थस्यैव भवितव्यम्, नान्यस्यः यस्यैवं भवितव्यं तस्यैव ग्रहणं युक्तमिति स एव गृह्यते।

**पदमञ्जरी**

**नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्।।** अत्रानन्तरस्य निपातनस्य विधातुमशक्यत्वाद्व्यवहितं विधेयमिति स्थिते 'शुषः कः' इत्यादिभिरादेशान्तरैर्व्यवहितमपि नत्वमेव विधीयते। कथम्? उत्तरसूत्रे तावत्तदेव प्रतिषिध्यते; प्राप्तिपूर्वकत्वात्प्रतिषेधस्य। तस्मात्तदेव बुद्धौ विपरिवर्तमानमत्रापि विकल्पयते। **समुन्न इति।** 'उन्दी क्लेदने;, ईदित्त्वादिट्प्रतिषेधः, 'अनिदिताम्' इत्युपधालोपः।

उभयत्र विभाषेयमित्याह—**ह्री इत्येतस्येति।**

**भावबोधिनी**

नुद, विद, उन्दी, त्रा, घ्रा, और ह्री—इन (छह) धातुओं से उत्तरवर्ती निष्ठा तकार का विकल्प से नकार आदेश होता है। उदा॰ नुद—नुन्नः, नुत्तः। [ नुद् + क्त— में निष्ठा तकार का विकल्प से नकार, 'यरोऽनुनासिकेऽनुनासिको वा' से द् का अनुनासिक न् नुन्नः। पक्ष में चर्त्व—नुत्तः। ] विद—विन्नः, वित्तः। [ विद + क्त, प्रक्रिया पूर्ववत् ] उन्द—समुन्नः, समुत्तः। [ सम् उन्द् + क्त, 'अनिदितां हल उपधायाः क्ङिति' से नलोप पूर्ववत् नत्व, परसवर्ण-समुन्नः, पक्ष में—समुत्तः] त्रा—त्राणः, त्रातः [ त्रैङ्, ऐ का आत्व, त्रा + क्त,, नत्व, णत्व। ] घ्रा—घ्राणः, घ्रातः। [ घ्रा + क्त, नत्व, णत्व ] ह्री—ह्रीणः, ह्रीतः। [ ह्री + क्त, नत्व, णत्व। ]

ह्री—इससे पर क्त का नत्व प्राप्त नहीं है अतः अप्राप्त का विधान है। और उससे भिन्न धातुओं का नित्य प्राप्त नत्व विकल्प से किया जाता है।

'विद विचारणे' (धा.पा. १४७५) इस 'विद' धातु का यहाँ पर ग्रहण है। क्योंकि ऐसा कहा गया है—

वेत्ति = अदादिगणीय 'विद ज्ञाने' का निष्ठा का रूप 'विदितः होता है। 'विद सत्तायाम्' इस दिवादिगणीय का 'विन्नः' यह रूप इष्ट है। 'विचारणे' इस रुधादिगणीय के 'विन्नः,' वित्तः, रूप होते हैं, भोग अर्थ में 'वित्त' यह रूप 'विद्लृ लाभे' इस तुदादिगणीय का होता है।

१. 'भोगे विन्नश्च विन्दतेः'—इति मुद्रितः पाठः, 'वित्तो भोगेषु विन्दतेः'—इति च भाष्यसम्मतः।

## न्यासः

कथं पुनर्ज्ञायते—विचारणार्थस्य विदेर्ग्रहणमिष्यते? इत्याह—**एवं हीत्यादि**। इष्यत इति वक्ष्यमाणं प्रत्येकमभिसम्बध्यते। **निष्ठेत्यनेन** निष्ठान्तमुपलक्षयति। **वेत्तेरित्यादि**। 'विद ज्ञाने' इत्यस्य विदित इत्येतद्रूपमिष्यते; नित्येट्त्वात्, तस्येटा निष्ठातकारस्य व्यवधाने सति नत्वस्यासम्भवात्। **विद्यतेरिति**। 'विद सत्तायाम्' इत्यस्य'निष्ठान्तस्य **विन्न** इत्येतद्रूपमिष्यते; 'एकाचः' इतीट्प्रतिषेधात्, 'रदाभ्याम्' इत्यादिना च नित्यं नत्वविधानात्। **विन्तेर्विन्नश्च वित्तश्चेति**। 'विद विचारणे'—इत्यस्य निष्ठान्तस्यैतद्रूपद्वयमिष्यते; पूर्ववदिट्प्रतिषेधात्, अनेन च सूत्रेण पक्षे नत्वविधानात्। **भोगवित्तश्च विन्दतेरिति**। विन्दतेरित्यनेन लाभार्थविदिं दर्शयति। तस्य हि 'शे मुचादीनाम्' इति नुमि कृते विन्दतीत्येतद्रूपं भवति। भोगवित्त इति—भोगे वित्तो भोगवित्तः, 'सप्तमी' इति योगविभागात् समासः। भोगग्रहणं चोपलक्षणमात्रम्। प्रत्ययोऽपि गृह्यते। 'विद्लृ लाभे' इत्यस्य भोगे प्रत्यये चार्थे वित्त इत्येतद्रूपं निष्ठायामिष्यते; 'वित्तो भोगप्रत्यययोः' इति नत्वाभावस्य निपातनात्, 'यस्य विभाषा' इति निष्ठायामिट्प्रतिषेधाच्च। विन्दतेर्हि क्वसौ 'विभाषा गमहनविदविशाम्' इतीड् विभाषितः; 'भोगवित्तश्च विन्दतेः' इति ब्रुवताऽर्थतो भोगप्रत्ययाभ्यामन्यत्र विन्न इत्येद्रूपमिष्यत इत्युक्तं भवति।।५६।।

## पदमञ्जरी

**विद विचारण इत्यस्येति**। रौधादिकस्य; उन्दिना रौधादिकेन साहचर्यात्। यद्यपि तौदादिकेन नुदिनापि साहचर्यम्, तथापि परसाहचर्यमेव व्यवस्थापकम्; 'विप्रतिषेधे परम्' इत्यस्यैवमादावप्युपयोगात्।

विचारणार्थस्य ग्रहणमित्येतदाप्तागमेन द्रढयति—**एवं ह्युक्तमिति**। वित्तेर्धातोर्निष्ठान्तशब्दरूपं विदित इतीष्यते, तस्य सेट्त्वात्; इह च 'रदाभ्यां निष्ठातः' इत्यनुवृत्तेः विद्यतेः सत्तार्थस्य विदेर्विन्न इतीष्यते; तस्यानिट्त्वात्, इह च तस्याग्रहणात्। **विन्तेरिति**। तिङन्तानुकरणात् षष्ठी। **भोगवित्त इति**। एकार्थीभावाभावेऽपि भाष्यकारनिपातनात्सप्तमीसमासः। भोगग्रहणमुपलक्षणम्। भोगप्रत्यययोरर्थयोः विन्दतेस्तौदादिकस्य विदेर्वित्त इतीष्यते, अन्यत्र विन्न इति नत्वमेव भवति, न त्वयं विकल्प इत्यर्थः। उक्तोऽत्र हेतुः।।५६।।

## भावबोधिनी

**विमर्श**—धातुपाठ में 'विद' धातु का कई अर्थों में और कई गणों में पाठ देखा जाता है। अतः प्रस्तुत सूत्र में जिस 'विद' का ग्रहण है उसे समझाने के लिये काशिकाकार ने भाष्योक्त एक श्लोक उद्धृत किया है। इसका भाव यह है—अदादिगणीय विद् ज्ञाने' से क्त प्रत्यय में 'विदितः' यही होता है क्योंकि यह नित्य सेट् है अतः मध्य में इट् का व्यवधान हो जाने से विद् से अव्यवहित परे 'त' नहीं मिलने से नत्व का प्रश्न ही नहीं है। (२) दिवादिगणीय 'विद् सत्तायाम्' से क्त प्रत्यय में 'विन्नः' यही एक रूप होता है क्योंकि 'एकाचोऽनुदात्तात्' सूत्र से इट् का प्रतिषेध होता है तब 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' सूत्र से नित्य ही 'त' और 'द' के स्थानों पर दो नकार हो जाते हैं। (३) रुधादिगणीय 'विद विचारणे' इसी के निष्ठान्त दो रूप होते हैं—विन्नः, वित्तः। इसी में प्रस्तुत सूत्र प्रवृत्त होता है। (४) तुदादिगणीय 'विद्लृ लाभे' इसका भोग = धन अर्थ में 'वित्त' यही होता है। इसमें 'वित्ते भोगप्रत्यययोः' सूत्र से निष्ठा नत्व का अभाव निपातित होता है तथा 'यस्य विभाषा' से इट् का प्रतिषेध भी होता है। किन्तु भोग और प्रत्यय अर्थों में ही वित्तम्' होता है इनसे भिन्न अर्थ में नत्वाभाव निपातन न होने से सामान्य सूत्र से त और द् के नकार हो जाते हैं—विन्नः यह रूप भी होता है।।५६।।

**३७४५. न ध्याख्यापॄमूर्च्छिमदाम्।।५७।। (३०४०)**

**ध्या, ख्या, पॄ, मूर्च्छि, मद–इत्येतेषां निष्ठातकारस्य नकारादेशो न भवति। ध्यातः, ध्यातवान्। ख्यातः, ख्यातवान्। पूर्त्तः, पूर्त्तवान्। मूर्त्तः, मूर्त्तवान्। मत्तः, मत्तवान्। 'रदाभ्याम्' (८।२।४२), 'संयोगादेः' (८।२।४३) इति च प्राप्तः प्रतिषिद्ध्यते।।**

**३७४६. वित्तो भोगप्रत्यययोः।।५८।। (३०४१)**

**न्यासः**

**न ध्याख्यापॄमूर्च्छिमदाम्**।। 'ध्यै चिन्तायाम्'; 'ख्या प्रकथने', 'चक्षिङः ख्याञ्' इति च—द्वयोरपि ग्रहणम्। ननु च चक्षिङादेशस्य सानुबन्धकत्वान्निरनुबन्धकग्रहणपरिभाषया न प्राप्नोतीति? नैष दोषः; इह हि निष्ठातकारस्य परत्वप्रतिपादने पञ्चमी युक्ता, यथा—'रदाभ्याम्' इति। तत्र पञ्चमीनिर्देशे कर्तव्ये यः षष्ठीनिर्देशः क्रियते, स सम्बन्धसामान्यं प्रतिपादयितुम्। न च सम्बन्धिनमन्तरेण सम्बन्धसामान्यमुपपद्यते। न च सानुबन्धके परित्यज्यमाने सम्बन्धिभेदः सम्भवतीति युक्तं तस्यापि ग्रहणम्। 'पॄ. पालनपूरणयोः', 'मुर्च्छा मोहसमुच्छ्राययोः', 'मदी हर्षे'। एषु ध्याख्याप्रभृतिषु आद्ययोः 'संयोगादेः' इत्यादिना नत्वे प्राप्ते, इतरेषामपि 'रदाभ्याम्' इत्यादिना, प्रतिषेधोऽयमारभ्यते। **पूर्त इति**। 'श्र्युकः किति' इतीट्प्रतिषेधः, 'उदोष्ठ्यपूर्वस्य' इत्युत्वम्, पूर्ववद्दीर्घः। **मूर्त इति**। 'राल्लोपः' इति च्छकारलोपः, 'आदितश्च' इतीट्प्रतिषेधः। **मत्त इति**। अत्रापि 'श्वीदितो निष्ठायाम्' इति।।५७।।

**वित्तो भोगप्रत्यययोः**।। **धनमस्य बह्वित्यर्थ इति**। कथं पुनर्भोगे व्युत्पादितस्य धने वृत्तिरर्थो भवति? इत्याह—**धनं हीत्यादि**। अनेन कर्मसाधनत्वं भोगशब्दस्य दर्शयन् धनेऽस्य वृत्तिं दर्शयति।

**पदमञ्जरी**

**न ध्याख्यापॄमूर्च्छिमदाम्**।। **मूर्त इति**। 'आदितश्च' इतीट्प्रतिषेधः, 'राल्लोपः' इति छस्य लोपः। **मत्त इति**। ईदित्त्वादिट्प्रतिषेधः।।५७।।

**वित्तो भोगप्रत्यययोः**।। **लाभार्थादिति**। ज्ञानार्थादिटा भाव्यम्। सत्ताविचारणार्थयोरपि न भोगप्रत्यययोर्वृत्तिः सम्भवतीति भावः। कथं पुनर्भोगे निपात्यमानो वित्तशब्दो धने भवति? इत्यत—आह—**धनं हीति**। कर्मसाधनः सूत्रे भोगशब्द इत्यर्थः। एतेन 'प्रत्ययः' इति व्याख्यातम्।

**भावबोधिनी**

(ध्यै) ध्या, ख्या, पॄ, मूर्छि और (मदी) मद्—इनके निष्ठा तकार का नकार आदेश नहीं होता है। उदा॰ ध्यातः, ध्यातवान्। [ ध्यै चिन्तायाम्' से क्त, क्तवतु परे ऐ का आत्व करने के बाद 'संयोगादेरातो धातोर्यण्वतः' (८।२।४३) से नत्व प्राप्त है, इससे निषेध हो जाता है। ] ख्यातः, ख्यातवान्। [ 'ख्या प्रकथने' और 'चक्षिङः ख्याञ्' के आदेशभूत ख्या—इन दोनों का ग्रहण है। क्तु, क्तवतु में 'संयोगादेरातः' सूत्र से प्राप्त नत्व का प्रतिषेध हो जाता है। ] पूर्त्तः, पूर्त्तवान्। [ 'पॄ पालन-पूरणयोः' धातु से क्त, क्तवतु परे रहते 'उदोष्ठ्यपूर्वस्य' (७।१।११) से ॠ का उत्व, रपर, इट् का निषेध 'हलि च' (८।२।७७) से उपधा का दीर्घ-पू र्त, पूर् तवत् 'रदाभ्याम्' से प्राप्त नत्व का निषेध। ] मूर्त्तः, मूर्त्तवान्। [ 'मुर्छा समुच्छ्राययोः' धातु से क्त, क्तवतु में 'राल्लोपः (६।४।२१) से रेफ से परवर्ती 'च्छा' का लोप, 'आदितश्च' से इट्प्रतिषेध, 'हलि च' से उपधादीर्घ, 'अचो रहाभ्यां द्वे' से त् का द्वित्वविकल्प। इसमें भी 'रदाभ्यां' से प्राप्त नत्व का प्रतिषेध। ] मत्तः, मत्तवान्। [ 'मदी हर्षे' से क्त, क्तवतु में 'रदाभ्याम्' से प्राप्त नत्व का प्रतिषेध होने पर चर्त्व से द् का त्। ]

उक्त उदाहरणों में [ पॄ, मुर्च्छ, मद् के रूपों में ] 'रदाभ्यां निष्ठातः' (८।२।४२) से और [ ध्या, ख्या के रूपों में ] 'संयोगादेरातो धातोः' (८।२।४३) से प्राप्त [ नत्व का ] निषेध होता है।।५७।।

'वित्त' इस रूप में 'लाभ अर्थवाली विद्लृ' धातु से उत्तरवर्ती क्त के नत्व का अभाव निपातित होता है यदि भोग और प्रत्यय (ज्ञान) अर्थ हो तो। उदा॰ वित्तम् अस्य बहु। इसका बहुत वित्त = धन है। इसका बहुत धन है—यह अर्थ है। चूँकि धन का उपभोग किया जाता है। इसलिये इसे 'भोग' कहा जाता है। [ विद् + क्त, में 'रदाभ्याम्' से प्राप्त नत्व का अभाव निपातित होता है। ]

**'वित्त'–(धा.पा. १४३३) इति विदेर्लाभार्थादुत्तरस्य क्तस्य नत्वाभावो निपात्यते भोगे प्रत्यये चाभिधेये। वित्तमस्य बहु। धनमस्य बह्वित्यर्थः। धनं हि भुज्यत इति भोगोऽभिधीयते।**

**प्रत्यये–वित्तोऽयं मनुष्यः। प्रतीत इत्यर्थः। प्रतीयत इति प्रत्ययः।**

**भोगप्रत्यययोरिति किम्? विन्नः।।**

**३७४७. भित्तं शकलम्।।५९।। (३०४२)**

**'भित्तम्' इति निपात्यते शकलं चेत्तद्भवति। भित्तं तिष्ठति। भित्तं प्रपतति। शकलपर्यायोऽयम्।**

**अत्र भिदिक्रिया शब्दव्युत्पत्तेरेव निमित्तम्। भिदिक्रियाविवक्षायां हि शकलविषये भिन्नं भित्तमित्येव भवति।।**

**न्यासः**

**प्रतीत इत्यर्थ इति**। एतेन प्रत्ययशब्दस्य कर्मसाधनतामाचष्टे। प्रतीत इति कर्मणि निष्ठा। प्रतीत आख्यात इत्यर्थः। स चायमर्थः प्रत्यये व्युत्पाद्यमानेऽस्य भवति, यदि प्रत्ययशब्दोऽपि कर्मसाधनो भवति—प्रतीयत इति प्रत्ययः। तेन प्रत्ययशब्दस्य कर्मसाधनता वेदितव्या।।५८।।

**भित्तं शकलम्।। भित्तमिति निपात्यत इति**। किं निपात्यते? रदाभ्यामिति नत्वे प्राप्ते तदभाव इति। **शकलं चेत् तद् भवतीति**। शकलशब्दस्य योऽर्थः खण्ड इति यस्यापरमभिधान्, भित्तशब्दस्यापि यदि स एवार्थो भवतीत्यर्थः। कथं पुनर्भित्तशब्दस्य शकलमर्थो भवति? इत्याह—**शकलपर्यायोऽयमिति**। भित्तशब्दः शकलस्यैव पर्यायः। तस्माद् यथा शकलशब्दस्य शकलमभिधेयं भवति, एवं भित्तशब्दस्यापि।

ननु च शकलशब्दोऽयं जातिशब्दः जातिप्रवृत्तिनिमित्तमुपादाय स्वाभिधेये प्रवृत्तत्वात्; भित्तशब्दस्तु क्रियाशब्दः क्रियाप्रवृत्तिनिमित्तत्वात्; तथा हि—भिदेर्विदारणार्थात् क्ते विहिते भित्तमिति निपात्यते, न च क्रियाशब्दो जातिशब्दपर्याय उपपद्यते? इत्याह—**अत्रेत्यादि**। शब्दव्युत्पत्तिः = शब्दसंस्कारः, तस्या एवात्र भित्तशब्दे भिदिक्रियानिमित्तत्वम्, न तु तत्प्रवृत्तेः; असत्त्वात्। जातिरेव तु तत्प्रवृत्तिं प्रति निमित्तम्; तस्या

**पदमञ्जरी**

**विन्न इति**। 'विभाषा गमहनविदविशाम्' इति तौदादिकस्य क्वसौ विकल्पितेत्वाद् 'यस्य विभाषा' इति निष्ठायामिट्प्रतिषेधः।।५८।।

**भित्तं शकलम्।। शकलपर्यायोऽयमिति**। यथा शकलशब्दो जातिशब्दः, न क्रियाशब्दः, तथा भित्तशब्दोऽपीत्यर्थः।

नन्वयं भिदेर्धातोः व्युत्पाद्यमानः क्रियाशब्दः, स कथं जातिशब्दस्य पर्यायो भवति? अत आह—**अत्रेति**। सन्ति हि ते शब्दा येषु व्युत्पत्तिमात्रोयोगिनी क्रिया, जातिरेव तु समुदायशक्त्या शब्दार्थः, यथा—तैलं पिबतीति तैलपायिकेति। किमर्थं पुनरेवमाश्रीयते? इत्याह—**भिदिक्रियाविवक्षायां हीति**। साम्यप्रतिपादनार्थं शकलग्रहणम्।

**भावबोधिनी**

प्रत्यय = ज्ञान, पहचान अर्थ में उदा॰ वित्तोऽयं मनुष्यः। यह मनुष्य प्रतीत = जाना हुआ है—यह अर्थ है। प्रतीत होने वाला = प्रत्यय है।

भोग और प्रत्यय अर्थों में—इसका क्या फल है? विन्नः [ विद् + त में त के और द् के स्थान नकार आदेश होते हैं। भोग और प्रत्यय से भिन्न अर्थ हैं। ]।।५८।।

'भित्तम्' यह निपातित होता है यदि वह शकल = खण्ड अर्थ वाला हो तो। उदा॰ भित्तं तिष्ठति। भित्तं प्रपतति। यह शकल = खण्ड का पर्याय है। [ 'भिदिर् विदारणे' के इर् की इत्संज्ञालोप, भिद् + त, प्राप्त नत्व का निषेध होता है द् का चर्त्व से त्।]

### ३७४८. ऋणमाधमर्ण्ये।।६०।। (३०४३)

**'ऋणम्' इति 'ऋ' (धा.पा. ९६१) इत्येतस्माद्धातोरुत्तरस्य निष्ठातकारस्य नकारो निपात्यते**

**न्यासः**

विद्यमानत्वात्। तस्माच्छकलशब्दवद् भित्तशब्दोऽपि जातिशब्द एव, न क्रियाशब्द इति युक्ता तस्य तत्पर्यायता। यदि तर्ह्यसत्येवात्र भिदिक्रिया, शब्दसंस्कारत्वस्यापि सा निमित्तं नोपपद्यते? नैतदस्ति; न यं नियोगोऽभिधीयते—विद्यमानैव क्रिया शब्दसंस्कारस्य निमित्तं भवतीति। तथा हि तैलपायिकाशब्दो यत्र प्राणिविशेषे रूढः, तत्र तैलपानक्रियाशब्दोऽपि नास्ति; तथापि तैलपानक्रिया तत्संस्कारनिमित्तत्वेनाश्रीयते। कथं पुनर्भित्तशब्दो भिदिक्रियाप्रवृत्तिनिमित्तं न भवति? इत्याह—**भिदिक्रियाविवक्षायां हीत्यादि**। अत्र भिन्नमित्यस्य च भित्तशकलशब्दाभ्यां प्रत्येकमभिसम्बन्धः। तेन **भिन्नम् भित्तमित्येव भवतीति**। एतत् प्रयोगद्वयमपि भिदिक्रियाविवक्षायां सिद्धं भवति। विदीर्णे हि शकले तस्य विदीर्णतां प्रतिपादयितुं 'भिन्नम्; 'भित्तमि'त्येष प्रयोगो भिदिक्रियाविवक्षायां क्रियते। यदि च भित्तशब्दः क्रियाप्रवृत्तिनिमित्तं स्यात्, ततो भित्तशब्देनैव भिदिक्रियानिमित्तकेन विदीर्णता शकलस्य प्रतिपाद्यत इत्येष प्रयोगो नोपपद्यते, न हि तदस्ति यस्य भित्तशब्देनाप्रतिपादितस्य भिन्नशब्दयोगो भवेत्। भिन्नं शकलमित्येष च प्रयोगो नोपपद्यते; शकलव्युत्पादितेन भित्तशब्देन भिदिक्रियानिमित्तकेन भिन्नशब्दस्य बाधित्वात्. अस्ति चायं द्विविधोऽपि प्रयोगः, तस्माद् भित्तशब्दस्य भिदिक्रियानिमित्तत्वं न गम्यते।।५९।।

**ऋणमाधमर्ण्ये।। ऋ इत्येतस्मादिति**। 'ऋ गतौ' इत्येतस्मात्, 'ऋ गतिप्रापणयोः' इत्येतस्माद्वा।

**पदमञ्जरी**

यथा विदारणविवक्षायां भिन्नं शकलमिति भवति, तथा भिन्नं भित्तमित्येव प्रयोग इत्यर्थः। क्रियाशब्दत्वे तु भिन्नशब्देनैव क्रियाया उपात्तत्वाद्भिन्नमित्यस्यैव प्रयोगो न स्यात्। अन्ये त्वाहुः—यथा विदारणक्रियया शकलं निवर्तते, तदा तामङ्गीकरोत्येव भिन्नशब्दः, यत् शकलस्य सतो विदारणं तदा तत्प्रतिपादनाय भिन्नं भित्तमिति प्रयोग इति।।५९।।

**ऋणमाधमर्ण्ये।। ऋ इत्येतस्मादिति**। 'ऋ सृ गतौ', 'ऋ गतिप्रापणयोः' इति वा।

**भावबोधिनी**

इसमें 'भिदि' क्रिया शब्द की व्युत्पत्ति की ही केवल निमित्त है। क्योंकि भिदि क्रिया की विवक्षा में शकल = खण्ड अर्थ के विषय में—भिन्नम्, भित्तम् दोनों ही होते हैं।

**विमर्श**—भाव यह है कि भित्त शब्द शकल का पर्याय है। शकल तो जाति शब्द है किन्तु 'भित्त' क्रिया शब्द है। क्रिया शब्द जातिशब्द का पर्याय नहीं हो सकता। अतः क्रियानिमित्तता नहीं ली जाती है। यदि भिदिक्रिया की विवक्षा हो तो यह सूत्र नहीं लगता है।

"यहाँ का पाठ कुछ अस्पष्ट है 'भिदि क्रियाविवक्षायां हि शकलविषये भिन्नं भित्तमित्येव भवति।" यहाँ "इत्येव' का प्रयोग करके भी दोनों शब्दों का लिखना सन्देहजनक है। इसीलिये पं॰ जिज्ञासु जी ने 'भित्तम्' को हटा धिया है—'भिदिक्रियाविवक्षायां हि शकलविषये भिन्नम्' इत्येव भवति।'' पृ॰ ७२७। परन्तु न्यास में प्रतीकरूप में यह पाठ है "तेन भिन्नं भित्तमित्येव भवतीति।" (देखें ऊपर न्यास) इसका आशय यह प्रतीत होता है कि भिदि क्रिया की विवक्षा में दोनों रूप होते हैं। विदारण शकल = खण्ड में उसकी विदीर्णता का प्रतिपादन करने के लिये 'भिन्नम्' ऐसा और भिदि क्रिया की विवक्षा में 'भित्तम्' ऐसा प्रयोग किया जाता है। न्यासकार का यह मत है कि चूँकि दोनों प्रकार के प्रयोग मिलते हैं अतः 'भित्त' शब्द का भिदि क्रियानिमित्तत्व प्रतीत नहीं होता है। यहाँ काशिकाकार कुछ अधिक स्पष्ट कर देते तो अच्छा रहता।।५९।।

'ऋणम्' यहाँ 'ऋ' [ 'ऋ सृ गतौ' और 'ऋ गतिप्रापणयोः' दोनों धातुओं का ग्रहण है। ] इस धातु से उत्तरवर्ती निष्ठा तकार का नकार आदेश निपातित होता है—अधमर्णता के विषय में। ]

**आधमर्ण्यविषये।**

**अधम ऋणे–अधमर्णः, एतस्मादेव निपातनात्सप्तम्यन्तेनोत्तरपदेन समासः, तद्भाव आधमर्ण्यम्। यद्येवम्, उत्तमर्ण इति न सिध्यति? नैष दोषः, कालान्तरदेयविनिमयोपलक्षणार्थं चेदमुपात्तम्। तेन उत्तमर्ण इत्यपि हि भवति। ऋणं ददाति। ऋणं धारयति।**

**आधमर्ण्ये इति किम्? ऋतं वक्ष्यामि नानृतम्।।**

## ३७४९. नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि।।६१।। (३६०३)

**न्यासः**

**अधम ऋणेऽधमर्ण इति।** केन पुनरत्र समास इति, यावता नात्र किञ्चित् समासलक्षणमस्ति; 'सप्तमीति योगविभागात् समासः'—इत्येतच्च न वक्तव्यम्, सप्तम्याः पूर्वनिपातप्रसङ्गात्? इत्यत आह—**एतस्मादेवेत्यादि। तद्भाव आधमर्ण्यमिति।** तत् प्रतिदास्यतीति ग्रहणक्रियाभिसम्बन्धः। तद्योगाद् भावेऽसावधमर्ण इत्युच्यते। **कालान्तर इत्यादि।** यस्मिन् कालेऽधमर्णो गृह्णाति तस्मात् कालादन्य आगामी कालः कालान्तरम्, तत्र यद् देयं तत् कालान्तरदेयम्, तेन यो विनिमयः = विपरिवर्त्तनम्, तदुपलक्षणार्थमेवाधमर्णग्रहणमेवमुपात्तम्, न च स्वार्थप्रतिपादनार्थमेव। किं कारणमेवं व्याख्यायते? इत्याह—**उत्तमर्ण इत्यपि भवतीति।** ऋणे ह्येकोऽधमर्णो भवति, यो गृहीत्वा प्रतिदास्यतीतिः यस्तु दत्त्वा ग्रहीष्यति स उत्तमर्णः। तत्र यद्याधमर्ण्यग्रहणं स्वार्थप्रतिपादनार्थमेवोपात्तम्, तदोत्तमर्ण इति न सिध्येत्, न ह्यत्राधमर्ण्यं विवक्षितम्। तत् तर्हीदं चोत्तमर्णेऽपि कालान्तरदेयविनिमयोपलक्षणार्थत्वादाधमर्ण्यग्रहणे सत्येतदपि सिध्यति, अस्ति ह्यत्र कालान्तरदेयविनियमः। तथा ह्युत्तमर्णोऽपि प्रयच्छन् कालान्तरे यद् देयं तेन विनिमयं करोति।।६०।।

**नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि च्छन्दसि।। सदेरिति।** 'षद्लृ विशरणगत्यवसादनेषु' इत्येतस्मात्। **निषत्त इति।** 'सदिरप्रतेः' इति षत्वम्।

**पदमञ्जरी**

**एतस्मादेवेति।** शौण्डादिव्यतिरेकेण सप्तमीसमास एव मृग्यः, प्रागेव सप्तम्यन्तोत्तरपद इति भावः। **कालान्तरेत्यादि।** ऋणग्रहणकालापेक्षया कालान्तरत्वम्, तत्र देयं कालान्तरदेयम्, तत्र यो विनिमयः = विपरिवर्त्तनं तदुपलक्षणार्थमाधमर्ण्यग्रहणम्, न तु स्वार्थप्रतिपादनार्थम्। किं पुनः कारणमेवं व्याख्यायते? इत्याह—**उत्तमर्ण इत्यपि हीति।** एतच्च 'धारेरुत्तमर्णः' इति निर्देशादवसितम्।।६०।।

**नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि।।** नसत्तेत्यादीनामनुकरणपदानां द्वन्द्वः। **निषत्तमिति।** 'सदिरप्रतेः' इति षत्वम्।

**भावबोधिनी**

'अधमः ऋणे'—इस विग्रह में 'अधमर्णः' यह होता है। इसी निपातन के कारण ही सप्तम्यन्त (ऋणे) उत्तरपद के साथ समास होता है। [ क्योंकि अन्य कोई नियम समास करने वाला नहीं है। ] 'अधमर्णस्य भावः—आधमर्ण्यम्' = अधमर्ण होना।

यदि इस प्रकार का विग्रह और समास होता है तब तो उत्तमर्णः' इसकी सिद्धि नहीं होती है? यह दोष नहीं है, क्योंकि कालान्तर में दिये = लौटाये जाने वाले विनिमय के उपलक्षणार्थ यह कहा गया है। [ ऋण वह है जो कुछ समय बाद वापस कर दिया जाता है। वह लेने वाले और देनेवाले दोनों के लिये है। ] इस कारण उत्तमर्ण यह भी होता है उत्तमर्ण—ऋण देता है। अधमर्ण ऋण अपने ऊपर रखता है लेता है। [ ऋ + क्त, नत्व, णत्व। ]

अधर्मणताविषय में—इसका क्या फल है—'ऋतं वक्ष्यामि नानृतम्।' [ मैं सत्य बोलूँगा, असत्य नहीं']। यहाँ 'आधमर्ण्य' अर्थ नहीं है। अतः नत्व नहीं होता है। ]।।६०।।

नसत्त, निषत्त, अनुत्त, प्रतूर्त, सूर्त, गूर्त—इतने (छह) शब्दरूप वेदविषय में निपातित होते हैं। (१) नसत्त, (२) निषत्त—इन दो रूपों में नञ्पूर्वक सद्, और निपूर्वक सद् धातु से [ निष्ठातकार का ] नत्वाभाव निपातित होता है। [ निषत्त—में षत्व भी होता है। ]

**नसत्त, निषत्त, अनुत्त, प्रतूर्त, सूर्त, गूर्त–इत्येतानि छन्दसि विषये निपात्यन्ते। नसत्त-निषत्तेति–सदेर्नञ्पूर्वान्निपूर्वाच्च नत्वाभावो निपात्यते। नसत्तमञ्जसा। नसन्नमिति भाषायाम्। 'निषत्तः'। (ऋ. १।५८।३) निषण्ण इति भाषायाम्।**

**अनुत्तमिति–उन्देर्नञ्पूर्वस्य निपातनम्। 'अनुत्तमा ते मघवन्' (ऋ. १।१६५।९) अनुन्नमिति भाषायाम्।**

**प्रतूर्तमिति–'त्वरतेः', 'तुर्वी' इत्येतस्य वा निपातनम्। 'प्रतूर्तं वाजिनम्। (तै. ४।१।२।१) प्रतूर्णमिति भाषायाम्।**

**सूर्तमिति'सृ' इत्येतस्य उत्वं निपात्यते। सूर्ता गावः। सृता गाव इति भाषायाम्।**

**गूर्त्तमिति–'गुरी' इत्येतस्य नत्वाभावो निपात्यते। 'गूर्त्ता अमृतस्य। (वा.सं.६।३४) गूर्णमिति भाषायाम्।।**

**न्यासः**

**अनुत्तमिति**।। 'उन्दी क्लेदने', 'अनिदिताम्' इति नलोपः।

**प्रतूर्त्तमिति**।। यदा 'ञित्वरा सम्भ्रमे' इत्यस्य निपात्यते, तदा 'ज्वरत्वर' इत्यादिना वकारस्योपधायाश्चोत्वम्। यदा 'उर्वी तुर्वी थुर्वी हिंसार्थाः' इत्यस्य, तदा 'राल्लोपः' इति वकारलोपः, पूर्ववद् दीर्घः।

**सूर्त्तमिति**। 'सृ गतौ'। उत्वसन्नियोगे रपरत्वम्, पूर्ववद् दीर्घः।

**गूर्त्तमिति**। 'गुरी उद्यमने'।।६१।।

**पदमञ्जरी**

**अनुन्नमिति भाषायामिति**। 'नुदविदोन्दत्रा' इति विकल्पो न भवति; एतन्निपातानारम्भसामर्थ्यादित्याहुः।

**प्रतूर्तमिति**। यदा त्वरतेः, तदा 'ज्वरत्वर' इत्यादिना ऊठ्। यदा तु 'तुर्वी हिंसायाम्' इत्यस्य, तदा 'राल्लोपः'। **उत्वमिति**। रपत्वम् 'उरण् रपरः' इत्येव सिद्धम्; परिभाषाणामसिद्धप्रकरणेऽपि प्रवृत्तेः।।६१।।

**भावबोधिनी**

उदा० (१) 'नसत्तमञ्जसा' [ न सद् + क्त, प्राप्त नत्व का निषेध। ] अतः भाषा में 'नसन्नम्' ऐसा होता है। [ नसद् + क्त, 'रदाभ्यां' सूत्र से द् + त दोनों के नकार होते हैं। ]

(२) निषत्तः। [ नि सद् + क्त, नत्वाभाव, 'सदिरप्रतेः' सूत्र से षत्व होता है। ] लोक में 'निषण्णः' यह रूप होता है। [ निसद् + त, 'रदाभ्यां' से दो नकार, स का ष, णत्व ]

(३) अनुत्तम्—नञ्पूर्वक 'उन्द्' धातु का यह निपातन है। उदा० 'अनुत्तमा ते मघवन्।' [ नञ् उन्द् + त, धातु के न् का लोप 'अनिदिताम्' सूत्र से, न उद् + त, नत्व का निषेध, चर्त्व, नञ्लोप, नुट् आगम 'अनुत्तम्' आ। भाषा में— 'अनुन्नम्' ऐसा होता है। [ क्योंकि 'रदाभ्याम्' सूत्र से नकार हो जाते हैं। ]

(४) प्रतूर्तम्—[ प्रपूर्वक ] 'ञित्वरा संभ्रमे' अथवा 'उर्वी तुर्वी' गत 'तुर्वी' का यह निपातन है। उदा० प्रतूर्तं वाजिनम्। भाषा में— प्रतूर्णम्'। [ जब 'त्वरा' धातु है तब 'ज्वर-त्वर-स्रिवि' इस सूत्र से वकार तथा उपधा अकार दोनों के स्थान पर ऊठ् होता है। त्वर = तूर् + क्त, नत्वाभाव। लोक में नत्व और णत्व होते हैं—प्रतूर्णम्। तुर्वी + क्त में 'राल्लोपः' से वलोप। उपधादीर्घ, णत्व। ]

(५) सूर्तम्—'सृ गतौ' इसका उत्व भी निपातित होता है। उदा० 'सूर्ता गावः।' लोक में 'सृता गावः।' [ सृ + क्त, उत्व, रपर, दीर्घ, नत्व, णत्वाभाव—सूर्ताः। भाषा में 'सृता गावः' यह होता है। ]

(६) गूर्तम्—यह 'गुरी उद्यमने' इसका नत्वाभाव निपातित होता है। उदा० गूर्ता अमृतस्य। [ गुर् + त, दीर्घ, प्राप्त नत्व का अभाव। ] भाषा में 'गूर्णम्' यह होता है। [ गुर् + त, 'रदाभ्याम्' से नत्व, णत्व, उपधादीर्घ होता है। ]।।६१।।

## ३७५०. क्विन्प्रत्ययस्य कुः ।।६२।। (३७७)

**'पदस्य' (८।१।१६) इति वर्त्तते। क्विन्प्रत्ययस्य सर्वत्र पदान्ते कुत्वमिष्यते[१]। क्विन्प्रत्ययो यस्माद्धातोः स क्विन्प्रत्ययः, तस्य पदस्यालोन्त्यस्य कवर्गादेशो भवति। 'स्पृशोऽनुदके क्विन्' (३।२।५८)। घृतस्पृक्। हलस्पृक्। मन्त्रस्पृक्।**

**'क्विनः कुः' इति वक्तव्ये प्रत्ययग्रहणं कृतम्–बहुव्रीहिविज्ञानार्थम् (म.भा.)। क्विन्प्रत्ययो यस्माद्विहितस्तस्मादन्यस्मिन्नपि प्रत्यये कुत्वं यथा स्यात्–मा नो अस्राक्। मा नो अद्राक्। सृजिदृशिभ्यां हि**

**न्यासः**

**क्विन्प्रत्ययस्य कुः।। घृतस्पृगिति।** अत्र शकारस्य विवृतकरणस्य श्वसानुप्रदानस्याघोषस्य तादृश एव खकारः, तस्य जश्त्वम्—गकारः। गकारस्यापि चर्त्वम्—ककारः।

अथ प्रत्ययग्रहणं किमर्थम्, न क्विन इत्येवोच्येत न हि क्विन् प्रत्ययत्वं व्यभिचरति। एवमुच्यमाने लोपापवादः क्विन एव कुत्वं स्यादित्येतच्च नाशङ्कनीयम्, तथा हि—क्विन्निति प्रत्ययग्रहणे यत्र प्रत्ययग्रहणं प्रत्ययग्रहणपरिभाषया क्विन्नन्त उपस्थापिते क्विनो लोपे कर्तव्ये कुत्वस्यासिद्धत्वात् पूर्वं लोपेनैव भवितव्यम्। तस्मिन् सति पश्चाद् भवत्कुत्वं परिशिष्टस्य धातोरेव भविष्यति? इत्यत आह—**क्विनः कुरिति वक्तव्य इत्यादि।**

असति हि प्रत्ययग्रहणे क्विन्प्रत्ययान्तस्यैव पदान्तस्य स्यात्, नान्यप्रत्ययान्तस्य, तस्यापि चेष्यते। तस्मात् प्रत्ययग्रहणं क्रियते। प्रत्ययग्रहणे सति बहुव्रीहिर्लभ्यते। तेन बहुव्रीहिणा यस्माद् विहितः स धातुरुपलक्ष्यत इति

**पदमञ्जरी**

**क्विन्प्रत्ययस्य कुः।। क्विनः कुरिति वक्तव्ये इति।** न हि क्विन्प्रत्ययत्वं व्यभिचरतीति भावः। न चैवमुच्यमाने 'वेरपृक्तस्य' इति लोपं बाधित्वा क्विन एव वकारस्य कुत्वं घकारः प्राप्नोति शङ्कनीयम्; तथा क्विन इति प्रत्ययग्रहणपरिभाषया तदन्तस्य ग्रहणे सति क्विनो वकारस्य लोपे कर्त्तव्ये सति कुत्वस्यासिद्धत्वात् 'राल्लोप' एव भवति, तस्मिंश्च सति पश्चाद्भवत्कुत्वं परिशिष्टस्य धातोरेव भविष्यति। स्यादेतत्—क्विबादिषु सावकाशं लोपं विशेषविहितं कुत्वमपवादो वचनप्रामाण्यादिति न्यायेन बाधेतेति? तन्न; एवं हि वर्गग्रहणमनर्थकं स्यात्। अनेकस्य स्थानिनोऽनेकादेशप्रतिपत्तये हि वर्गग्रहणम्, वकारस्यैव तु स्थानित्वे घकार एव निर्दिश्येत, 'वर्गाणां तृतीयचतुर्थाः' इति शिक्षायां वकारघकारयोर्गुणसाम्यप्रतिपादनात्। तस्मात् 'क्विनः कुः' इत्येव वक्तव्यम्। **बहुव्रीहिविज्ञानार्थमिति।** बहुव्रीहिश्चोपलक्षणेऽपि भवति, यथा—चित्रगुरानीयतामिति गवामभावेऽपि चित्रगवीभिरुप-

**भावबोधिनी**

'पदस्य' इसकी अनुवृत्ति होती है। क्विन्प्रत्ययान्त शब्द का सर्वत्र पदान्त में कुत्व इष्ट है। क्विन् प्रत्यय है जिस धातु से वह—क्विन्प्रत्यय है उस के पद के अन्त्य अल् का कवर्ग आदेश होता है। उदा॰ 'स्पृशोऽनुदके क्विन्' (३।२।५८) सूत्र से क्विन् प्रत्यय करने पर घृतस्पृक्। हलस्पृक्। मन्त्रस्पृक्। [ घृतं स्पृशति—आदि अर्थों में क्विन् प्रत्यय, उपपद समास के बाद—घृतस्पृश् में श् इस विवृत तथा महाप्राण प्रयत्न वाले के स्थान पर इसी प्रकार का 'ख' आदेश होता है, पुनः 'झलां जशोन्ते से ख् का जश्त्व ग् होता है, इसका भी वैकल्पिक चर्त्व करने पर 'क्' होता है। ]

'क्विनः कुः' ऐसा ही कहना चाहिए था किन्तु प्रत्यय का ग्रहण किया गया है—बहुव्रीहि का ज्ञान कराने के लिये। क्विन् प्रत्यय जिससे किया है उससे भिन्न प्रत्यय में भी कुत्व जिस प्रकार से हो सके, जैसे—मा नो अस्राक्, मा ना असोद्राक्। [ भाव यह है कि कहीं पर क्विन् किया जाता है वह धातु 'क्विन्प्रत्यय' होता है। अतः यदि उस धातु से कभी क्विन् न हो तो भी कुत्व हो सकता है—जैसे ] 'सृज्' और 'दृश्' इन धातुओं से [ 'ऋत्विग्दधृग्-स्रग्-दिगुष्णिगञ्चु-युजिक्रुञ्चा च' (३।२।५९) सूत्र से सृज् से तथा 'त्यदादिषु दृशानलोचने कञ्च' (३।२।६०) से दृश् से क्विन् प्रत्यय विहित है इनके लुङ् में भी कुत्व होता है। माङ् के योग

---

१. अत्र काशिकायामेकः श्लोको विच्छिन्नः पठितः, स चैवम्—
क्विन्प्रत्ययस्य सर्वत्र पदान्ते कुत्वमिष्यते। क्विनः कुरिति वक्तव्ये प्रत्ययग्रहणं कृतम्।।

**क्विन्विहितः, तयोर्लुङि कुत्वमेतत्। माङ्योगेऽपि छान्दसत्वादडागमः। ईट् च न भवति–'बहुलं छन्दसि' (७।३।९७) इति।**

**तथा दृग्भ्याम्, दृग्भिरिति–क्विबन्तस्यापि दृशेः कुत्वं भवति। एवं च सति रज्जुसृड्भ्यामित्यत्रापि कुत्वं प्राप्नोति।**

**अथ तु नेष्यते? प्रतिविधानं कर्तव्यमिति।**

**न्यासः**

सर्वस्य सिध्यति। **मा नो अस्राक्, मा नो अद्रागिति**। 'सृज विसर्गे', 'दृशिर् प्रेक्षणे' लुङ्, च्लेः सिच्, तिप्, 'सृजिदृशोर्झल्यमकिति' इत्यमागमः, 'वदव्रज' इत्यादिना वृद्धिः, हल्ङ्यादिलोपः, अडागमः, अनेन कुत्वम्।

**सृजिदृशिभ्यां क्विन् विहित इति**। 'ऋत्विक्' इत्यादिना सृजेः क्विन् विहितः। दृशेरपि 'त्यदादिषु दृशेरनालोचने कञ्च' इत्यनेन। कथं पुनरत्राडागमः, यावता 'न माङ्योगे' इति प्रतिषिद्धोऽसौ? इत्यत आह—**माङ्योगेऽपीत्यादि**। छान्दसौ ह्येतौ प्रयोगौ। तेन सत्यपि माङ्योगे 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडागमो भवत्येव। 'अस्तिसिचोऽपृक्ते' इतीट् तर्हि कस्मान्न भवति? इत्याह—**ईट् च न भवतीत्यादि**।

प्रत्ययग्रहणाद् यथा क्विन्प्रत्ययस्य लुगन्तस्य कुत्वं भवति, दृग्भ्यामित्यादौ दृशेः किबन्तस्यापि। **एवमित्यादि**। प्रत्ययग्रहणात् क्विन्प्रत्ययो यस्माद् विहितः, तस्यान्यप्रत्ययान्तस्यापि कुत्वं भवतीत्यस्मिन्नर्थे व्यवस्थिते रज्जुसृड्भ्यामित्यत्रापि व्रश्चादिसूत्रेण षत्वं यत् प्राप्नोति तद् बाधित्वा कुत्वेन भवितव्यम्।

**अथ तु नेष्यते, प्रतिविधानं कर्तव्यमिति**। प्रतिविधानमुत्तरसूत्रे वाग्रहणं यत् तदुभयोर्योगयोः शेषः। व्यवस्थितविभाषा च, तेनेह न भविष्यतीति। एवञ्च सति रज्जुसृड्भ्याम्, रज्जुसृड्भ्य इति भवितव्यम्॥६२॥

**पदमञ्जरी**

लक्षितस्यानयनं भवति, तथेहाप्यसत्यपि क्विपि क्विनोपलक्षितस्य धातोः कार्यं भवतीति। **अस्राग्, अद्रागिति**। सृजिदृशिभ्याम् 'माङि लुङ्', तिप्, च्लेः सिच्, हल्ङ्यादिलोपः, 'वदव्रज' इति वृद्धिः। अत्र व्रश्चादिषत्वे प्राप्ते कुत्वम्—जस्य गः, शस्य खः, तस्यापि जश्त्वम्, 'वावसाने' इति चर्त्वम्—ककारः। 'पूर्वत्रासिद्धम्' इत्यसिद्धत्वं षत्वे कुत्वस्य नास्ति; प्रत्ययग्रहणसामर्थ्यात् षत्वापवादत्वात् कुत्वस्य।

**क्विबन्तस्यापीति**। दृष्टेत्यदौ तु न भवति; अपदान्तत्वात्। **एवं च सतीत्यादि**। तद्वदेव। दृग्भ्यामिति कुत्वमुदाहृतम्।

**प्रतिविधातव्यमिति**। प्रतिविधानं कर्तव्यमिति। प्रतिविधानं वचनमेव॥६२॥

**भावबोधिनी**

में भी वैदिक होने से अट् का आगम होता है और ईट् नहीं होता है 'बहुलं छन्दसि' से। [ स्रज + लुङ् = तिप् च्लि = सिच् अट्, 'सृजिदृशोर्झल्यमकिति' सूत्र से अम् आगम अ सृ अ ज् + ति, यण् इ लोप, ईट् का अभाव, 'वदव्रज' से वृद्धि, ऋ का यण्—स्राज् त्, हल्ङ्यादिलोप-अस्राज्। ज् का कुत्व से ग्, चर्त्व से क्—अस्राक्। इसी प्रकार दृश् + लुङ् में भी 'अद्राक् + त्, 'अद्राक्' समझना चाहिये। ]

इसी प्रकार क्विप्प्रत्ययान्त [ दृश् का भी कुत्व होता है— ] दृग्भ्याम् दृग्भिः। [ 'पश्यति—इस अर्थ में क्विप्, सर्वापहारी लोप। कुत्व से ख, उसका जश्त्व से ग् होता है। ] परन्तु ऐसा होने पर तो 'रज्जुसृड्भ्याम्' यहाँ भी [ सृज् का ] कुत्व प्राप्त होता है?

परन्तु कुत्व इष्ट नहीं है। अतः प्रतिविधान करना चाहिए। [ प्रतिविधान यह है कि आगे वाले सूत्र 'नशेर्वा' से 'वा' की अनुवृत्ति करके व्यवस्थित विभाषा माननी चाहिए। अतः 'रज्जुसृड्भ्याम्' में कुत्व न होकर 'व्रश्चादि' से ज् का ष्, जश्त्व होकर रूप बनता है—रज्जुसृड्भ्याम्, रज्जुसृड्भिः। ]॥६२॥

**३७५१. नशेर्वा।।६३।। (४३१)**

**'पदस्य' इति वर्तते। नशेः पदस्य वा कवर्गादेशो भवति। 'सा वै जीवनगाहुतिः, सा वै जीवनडाहुति (मै. १।४।१३) नशेरयं सम्पदादित्वाद् भावे क्विप्। जीवस्य नाशो जीवनक्, जीवनट्। षत्वे प्राप्ते कुत्वविकल्पः।।**

**३७५२. मो नो धातोः।।६४।। (३४१)**

**मकारान्तस्य धातोः पदस्य नकारादेशो भवति। प्रशान्। प्रतान्। प्रदान्। 'शमितमिदमादीनां[1] क्विप्, 'अनुनासिकस्य क्विझलोः क्ङिति' (६।४।१५) इति दीर्घत्वम्[1]। नत्वस्यासिद्धत्वान्नलोपो न भवति।**

**म इति किम्? भित्। छित्। धातोरिति किम्? इदम्। किम्।**

**'पदस्य' इत्येव–प्रतामौ। प्रतामः।।**

**३७५३. म्वोश्च।।६५।। (२३०९)**

**मकारवकारयोश्च परतः मकारान्तस्य धातोर्नकारादेशो भवति। अगन्म तमसः पारम्। (वा.सं.**

**न्यासः**

**नशेर्वा।। जीवनडाहुतिरिति।** अत्राकुत्वपक्षे व्रश्चादिसूत्रेण षत्वे कृते जश्त्वम्—डकारः।।६३।।

**मो नो धातोः।।** 'पदस्य' इति वर्त्तते, तच्च धातुसमानाधिकरणं मकारेण विशेष्यते मकारान्तस्य पदस्य धातोरिति। **प्रशान्, प्रतानिति।** 'शमु उपशमे', 'तमु काङ्क्षायाम्', क्विप्, 'अनुनासिकस्य क्विझलोः क्ङिति' इत्युपधादीर्घत्वम्, हल्ङ्यादिलोपः। अथेह 'नलोपः प्रातिपदिकान्तस्य' इति नकारलोपः कस्मान्न भवति? इत्याह—**नत्वस्येत्यादि**।।६४।।

**म्वोश्च।। अगन्म इति।** 'स उत्तमस्य' इति सकारलोपः। **जगन्वानिति।** गमेर्लिट्, क्वसुः, हल्ङ्यादि-

**पदमञ्जरी**

**नशेर्वा।।** जीवनाशहेतुत्वादाहुतिः = जीवनगित्युच्यते, सम्पदादित्वाद्भावे क्विप्।।६३।।

**मो नो धातोः।। नलोपो न भवतीति।।** नत्वं तु लोपार्थमेव स्यादिति मन्यते।।६४।।६५।।

**भावबोधिनी**

'पद का' इसकी अनुवृत्ति होती है। 'नश' धातु के पद का विकल्प से कवर्ग आदेश होता है। उदा॰ सा वै जीवनगाहुतिः। सा वै जीवनडाहुतिः। यहाँ 'नश' धातु से 'सम्पदादिभ्यः क्विप्' (वा॰) से भाव अर्थ में क्विप् प्रत्यय होता है। जीवस्य नाशः—[ अर्थ में क्विप् आदि के बाद—जीव-नश् में कुत्व करने पर ख् उसका जश्त्व से ग्, 'चर्त्व से क्—जीवनक्। पक्ष में 'व्रश्चादि' सूत्र से श् का ष्, जश्त्व से ड्, चर्त्व से ट्—जीवनट्। ] नित्य षत्व की प्राप्ति में कुत्वविकल्प किया जाता है।।६३।।

मकारान्त धातु के पद का नकार आदेश होता है। उदा॰ प्रशान्। प्रतान्। प्रदान्। 'शमितमिदमादीनां क्विप्' से क्विप् प्रत्यय, लोप, 'अनुनासिस्य क्विझलोः से उपधादीर्घ। [ प्रस्तुत सूत्र से म् का न् होने पर उक्त रूप बनते हैं। ] [ 'नलोपः' प्रातिपदिकान्तस्य (८।२।७) की दृष्टि में नत्व आदेश के असिद्ध होने के कारण नलोप नहीं होता है। ]

मकार का—इसका क्या फल है? भित्। छित्। [ भिद् छिद् मकारान्त नहीं हैं। नत्व नहीं होता है। ] धातुका—इसका क्या फल है? इदम्। किम्। [ ये प्रातिपदिक हैं। ]

पद का [ अन्त्य मकार का ] ही—नत्व होता है—प्रतीमौ, प्रतामः। [ यहाँ औ, जस् मिलाकर सुबन्त की पद संज्ञा होती है। अतः मकार पद के अन्त्य में नहीं अपितु मध्य में है। ]।।६४।।

मकार और वकार परे रहते मकारान्त धातु का नकार आदेश होता है। उदा॰ अगन्म तमसः पारम्। अगन्व। गम् धातु से लङ् में 'बहुल' छन्दसि' (२।४।७३) से शप् का लुक्। [ वस्, तथा मस् परे है अट् आगम, स् का लोप म् का न् होता है—अ गन्

१-१. अयं पाठः पुस्तकान्तरे नास्ति।

**१२।७३) अगन्व। गमेर्लङि 'बहुलं छन्दसि' (२।४।७३) इति शपो लुक्। जगन्वान्। 'विभाषा गमहनजनविदविशाम्' (७।२।६८) इति क्वसाविडागमस्याभावः।**

**अपदान्तार्थ आरम्भः।।**

## ३७५४. स-सजुषो रुः।।६६।। (१६२)

**सकारान्तस्य पदस्य 'सजुष्' इत्येतस्य च रुर्भवति। सकारान्तस्य–अग्निरत्र। वायुरत्र। सजुषः– सजूर्ऋतुभिः (मै. २।८।१)। सजूर्देवेभिः (ऋ. ७।३४।१५)। जुषेः क्विपि सपूर्वस्य रूपमेतत्।।**

## ३७५५. अवयाः श्वेतवाः पुरोडाश्च।।६७।। (३४१६)

**अवयाः श्वेतवाः, पुरोडाः–इत्येते निपात्यन्ते। अवपूर्वस्य यजेः, श्वेतपूर्वस्य वहेः, पुरस्पूर्वस्य दाशतेः 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्', (३।२।७१) 'अवे यजः' (३।२।७२) इति ण्विनि कृते**

**न्यासः**

संयोगान्तलोपौ, 'सान्तमहतः' इत दीर्घः, 'गमहन' इत्यदिनोपधालोपः। 'छन्दस्युभयथा' इति सार्वधातुकत्वं न भवति।

चकारः 'घातोः' इत्यनुकर्षणार्थः।।६५।।

**ससजुषो रुः।। सजूरिति।** 'जुषी प्रीतिसेवनयोः', सह जुषते क्विप्, उपपदसमासः, 'सहस्य सः संज्ञायाम्' इति सभावः। रुत्वे कृते 'र्वोरुपधायाः' इति दीर्घः सजुषो ग्रहणमसकारान्तार्थम्। योगश्चायं जश्त्वापवादः।।६६।।

**अवयाः श्वेतवाः पुरोडाश्च।। दाशेरिति।** दाशृ दाने'—इत्यस्माण् ण्विनि कृत इति। वहिदाशिभ्याम् 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्' इत्यनेन, यजेश्च 'अवे यजः' इति ण्विन्प्रत्ययान्तेभ्यः सम्बुद्धिः, तस्या हल्ङ्यादिलोपः, ततः 'श्वेतवहादीनां डस्पदस्य' इति डस्प्रत्ययः, टिलोपः। किमर्थमेते निपात्यन्ते, यावता श्वेतवोभ्याम्, श्वेतवोभिरित्येवमाद्यर्थम् 'श्वेतवहादीनां डस्पदस्य' इत्यवश्यमिदं वक्तव्यम्, डसि च कृते 'ससजुषो रुः' इत्येव सिद्धम्? इत्याह—**श्वेतवहादीनामित्यादि।**

**पदमञ्जरी**

**ससजुषो रुः।। सजूरिति।** पूर्ववद्भावे क्विप्, रुत्वे कृते 'र्वोरुपधायाः' इति दीर्घत्वम्, बहुव्रीहौ सहस्य सभावः। सप्रीतिरित्यर्थः।।६६।।

**अवयाः श्वेतवाः पुरोडाश्च।। ण्विनि कृत इति।** प्राप्त इत्यर्थः। श्वेतवहादीनां यत्र पदत्वं भावि तत्र ण्विनोऽपवादो डस् वक्तव्य इति हि तत्रार्थः, न पुनर्ण्विनन्तानां पदत्वे सति डस् वक्तव्य इति।

**भावबोधिनी**

म, अ ग न् व। ] जगन्वान्। [ गम् से लिट् = क्वसुमें द्वित्व अभ्यासकार्य के बाद जगम् + वस् में ] 'विभाषा गम-हन-जनविदविशाम्' (७।२।६८) से क्वसु परे इट् के आगम का अभाव होता है। [ इट् नहीं होता है। सु प्रत्ययपरे नुम् आदि करने पर जगम्वान् में म् का न् होने से—जगन्वान्। ]

पदान्त से भिन्न [ के मकार का नकार करने ] के लिये यह सूत्र बनाया गया है।।६५।।

सकारान्त पद का और 'सजुष्' इस शब्द का 'रु' आदेश होता है। उदा॰ सकारान्त का—अग्निरत्र। वायुरत्र। [ अग्नि + सु, उकार की इत्संज्ञालोप—अग्निस्, वायुस्, सकार का रु, उकार की इत्संज्ञा लोप अग्निर् अत्र वायुर् अत्र। ] सजुष्—सजूर्ऋषिभिः। सजूर्देवेभिः। जुष् से क्विप् प्रत्यय में 'स' पूर्वक का यह रूप है। [ क्योंकि 'सह जुषते—अर्थ में क्विप् उपपदसमास, 'सहस्य स संज्ञायाम्' सूत्र से 'सह' का 'स' आदेश सजुष्, ष् का रुत्व, 'र्वोरुपधायाः दीर्घ इकः' सूत्र से उपधादीर्घ—सजूर्ऋषिभिः।।६६।। ]

अवयाः श्वेतवाः, पुरोडाः—ये शब्दरूप निपातित होते हैं। अवपूर्वक यज् धातु, श्वेतपूर्वक वह् धातु तथा पुरस् पूर्वक दाश् धातु—से 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्' (३।२।७१) तथा 'अवे यजः' (३।२।७२) सूत्रों से ण्विन् करने पर = प्राप्ति रहने पर "श्वेतवहादीनां डस पदस्येति वक्तव्यम्' इस वार्तिक से डस् प्रत्यय करने पर ये रूप निपातित

**'श्वेतवहादीनां डस्पदस्य' (का.वा) इति डस्प्रत्यये निपातनान्येतानि।**

**किमर्थं तर्हि निपातनम्, यावता पूर्वेणैव रुः सिद्धः, दीर्घत्वमपि 'अत्वसन्तस्य चाधातोः' (६।४।१४) इति? सम्बुद्धौ दीर्घार्थमेते निपात्यन्ते। 'अत्वसन्तस्य चाधातोः' (६।४।१४)–इत्यत्र हि 'असम्बुद्धौ' इति वर्त्तते। हे अवयाः (वा. सं.३।४६)। हे श्वेतवाः। हे पुरोडाः (ऋ.३।२८।२)।**

**चकारोऽनुक्तसमुच्चयार्थः। हे उक्थशाः (तै. ३।२।९।१)।।**

## ३७५६. अहन्।।६८।। (४४३)

**'अहन्' इत्येतस्य पदस्य रुर्भवति। अहोभ्याम्। अहोभिः। नलोपमकृत्वा निर्देशो ज्ञापकः– नलोपाभावो यथा स्यादिति। दीर्घाहा निदाघः, हे दीर्घाहोऽत्रेति।**

### न्यासः

नैते रुत्वार्थं निपात्यन्ते, किं तर्हि? सम्बुद्धौ दीर्घत्वार्थम्। ननु च दीर्घत्वमप्येषाम् 'अत्वसन्तस्य चाधातोः' इत्येव सिद्धम्? इत्यत आह—**अत्वसन्तस्य चेत्यादि**। तत्र हि 'सर्वनामस्थाने चासम्बुद्धौ' इत्यतः 'असम्बुद्धौ' इत्येतदनुवर्तते, तेन सम्बुद्धौ दीर्घत्वं प्राप्नोतीति तदर्थमेते निपात्यन्ते। **पुरोडा इति**। 'मन्त्रे श्वेतवहोक्थशस्' इत्यादिनैव सूत्रेण दकारस्य डकारो निपात्यते। **उक्थशा इति**। 'शन्सु स्तुतौ'। उक्थानि शंसतीति 'मन्त्रे श्वेतवह' इत्यादिनैव ण्विन्, ततः पूर्ववत् सम्बुद्ध्यादिः।।६७।।

**अहन्**।। 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे प्राप्ते रुत्वं विधीयते। **अहोभ्याम्, अहोभिरिति**। 'हशि च' इत्युत्वम्, 'आद् गुणः'। **दीर्घाहा निदाघ इति**। बहुव्रीहिः, हल्ङ्यादिलोपः, रुत्वस्यासिद्धत्वात् 'सर्वनामस्थाने च'

### पदमञ्जरी

ननु श्वेतवोभ्यामित्यादिसिद्ध्यर्थमवश्यं डस् वक्तव्यः, स चेदुच्यते नार्थोऽनेन, सान्तत्वात्पूर्वेणैव रुः सिद्धः, दीर्घत्वम् 'अत्वसन्तस्य' इत्येव सिद्धम्? तत्राह—**सम्बुद्धौ दीर्घार्थमिति**।।६७।।

**अहन्**।। **अहोभ्यामिति**। 'हशिच' इत्युत्वम्। **नलोपमकृत्वेत्यादि**। नलोपविधावेतद्व्याख्यातम्।

### भावबोधिनी

होते हैं। [ अव यज् + डस् = अस्, श्वेत वह् + डस्, पुरो दाश् + डस्, डित् होने के कारण धातु के टि का लोप कर देने पर—अवय् अस्, श्वेत व् अस्, पुरोद् अस्, सु प्रत्यय परे दीर्घ आदि कार्य करने पर ये रूप होते हैं। ]

ये निपातन किसलिये हैं, कारण यह है कि पूर्ववर्ती "ससजुषो: रुः" सूत्र से ही रुत्व सिद्ध है और दीर्घत्व भी 'अत्वसन्तस्य चाधातोः' सूत्र से सम्भव है? सम्बुद्धि = सम्बोधन एकवचन में दीर्घ करने के लिये ये निपातन हैं। क्योंकि 'अत्वसन्तस्य चाधातोः (६।४।१४) इस-सूत्र में 'असम्बुद्धौ' (सम्बोधन एकवचन से भिन्न में) इसकी अनुवृत्ति होती है। [ अतः सम्बुद्धि के रूपों के लिये निपातन आवश्यक है। ] हे अवयाः। हे श्वेतवाः। हे पुरोडाः।

चकार का ग्रहण [ सूत्र में ] अनुक्त शब्दों के समुच्चय के लिये है। हे उक्थशाः। [ उक्थानि शंसति—इस अर्थ में ण्विन्, सर्वापहारी लोप, निपातन के बल से अन्य कार्य करने पर—हे उक्थशाः। ]।।६७।।

'अहन्' इस पद का रु होता है। उदा० अहोभ्याम्। अहोभिः। [ अहन् + भ्याम्, अहन् + भिस् 'स्वादिष्वसर्वनामस्थाने' से अहन् की पदसंज्ञा, न् का रुत्व, 'हशि' च' (६।१।११०) से रु का उत्व, गुण-अहोभ्याम्, अहोभिः ] इस सूत्र में 'अहन्' के न का लोप न कर के निर्देश करना इसका ज्ञापक है—नलोप का अभाव जिस प्रकार से हो सके। जैसे—दीर्घाहा निदाघः, हे दीर्घाहोत्र ] [ दीर्घाणि अहानि अस्मिन् सः इस अर्थ में बहुव्रीहि समास—दीर्घाहन् + सु में हल्ङ्यादि सूत्र से स् लोप के बाद न् लोप प्राप्त है

**अहन् (हन् धा.पा. १०३७)–इत्यत्र तु लाक्षणिकत्वादहन्-शब्दस्य रुर्न भवति।**

**❀ अह्नो रुविधौ रूपरात्रिरथन्तरेषूपसङ्ख्यानं कर्त्तव्यम् (का.वा)। ❀ अहोरूम्। अहोरात्रः। अहो रथन्तरम्। 'रोऽसुपि' (८।२।६९) इत्यस्यापवादो रुत्वमुपसङ्ख्यायते।**

**अपर आह–सामान्येन रेफादौ रुत्वं भवति। अहो रम्यम्। अहो रत्नानीति।।**

**न्यासः**

इत्यादिना दीर्घः, 'भोभगो अघो' इत्यादिना रेफस्य यकारः, तस्य 'हलि सर्वेषाम्' इति लोपः। **हे दीर्घाहोऽत्रेति।** 'अतो रोरप्लुतादप्लुते' इत्युत्वम्, 'आद् गुणः', 'एङः पदान्तादति' परपूर्वत्वम्।

हन्तेर्लङि तिपा हल्ङ्यादिलोपे कृते तिपश्च लुक्यडागमे चाहन्नित्येतद्रूपं सम्पद्यते, तस्मात् तस्य रुत्वेन भवितव्यम्?—इति कस्यचिद् भ्रान्तिः स्यात्, अतस्तन्निरासायाह—**अहन्नित्यादि।**

उपसंख्यानशब्दोऽत्र प्रतिपादने वर्त्तते। अह्नो रुविधौ कर्त्तव्ये रूपादिषु रुत्वस्य प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्—पूर्वसूत्रादिह चकारोऽनुवर्तते, स चानुक्तसमुच्चयार्थः, तेनाह्नो रूपादिषु रुत्वं भविष्यतीति। **अहोरूपमिति।** अह्नो रूपमिति षष्ठीसमासः। **अहोरात्र इति।** अहश्च रात्रिश्चेति द्वन्द्वः। 'अहस्सर्वैकदेश' इत्यादिनाऽच् समासान्तः। कथं पुना रात्रिशब्द उच्यमानं रुत्वं रात्रशब्दे भवति? स्थानिवद्भावात्, एकदेशविकृतस्यानन्यत्वाद्वा। रात्रशब्दस्य तु ग्रहणं न कृतम्, रात्रिशब्दस्यापि यथा स्याद्—गतमहो रात्रिरागतेति। **अहो रथन्तरमिति।** षष्ठीसमासः। अथ वा—असमास एव। **'रोऽसुपि' इत्यस्यापवादो रुत्वमित्यादि।** अहोरूपमित्यादि यदि समासः, यद्यसमासो वा, सर्वथा विभक्तेर्लुका भवितव्यम्। लुकि सत्यह्नो रविधौ लुमता लुप्ते प्रत्ययलक्षणस्य प्रतिषेधः। तेन सुप्परत्वस्याभावाद् 'रोऽसुपि' इत्येतत् प्राप्नोतीति रुत्वं विधीयते। किमर्थम्? 'हशि च' इत्युत्वं यथा स्यात्। यदि रुरुदुत्पन्नस्य स्यात्, उत्वविधौ 'रोः' इत्युकारानुन्धविशिष्टस्य रेफस्यानुवृत्तेः।।६८।।

**पदमञ्जरी**

**लाक्षणिकत्वादिति।** अडागमेन अहन्निति रूपलाभात्।

**ह्रस्वाविधाविति।** समासे च लुमता लोपाद् रादेशे प्राप्ते रुत्वमुत्वार्थमुच्यते। **अहोरूपमिति।** षष्ठीसमासः। गतमहो रूपं पश्येत्यसमासः। **अहोरात्र इति।** 'अहस्सर्वैकदेश' इत्यादिनाच् समासान्तः, इकारलोपे कृतेऽप्येकदेशविकृतस्यानन्यत्वादुत्वम्। रात्रग्रहणं तु न कृतम्; गतमह्नो रात्रिरागतेत्यसमासेऽपि रुत्वार्थम्।।६८।।

**भावबोधिनी**

किन्तु इस निर्देश के कारण नहीं होता है। न् का रुत्व, होता है। किन्तु यहाँ 'सर्वनामस्थाने चासम्बुद्धौ' (६।४।८) से दीर्घ करने पर 'दीर्घाहार् में 'भो भागे अघो अपूर्वस्य योऽशि' (८।३।१७) से र् का य् और 'हलि सर्वेषाम्' (८।३।२२) से य लोप होने पर—दीर्घाहा निदाघः = लम्बलम्बे दिनों वाला ग्रीष्मकाल। हे दीर्घाहन् + सु में सुलोप, न् का रुत्व करने के बाद हे दीर्घाहरु + अत्र में रु के य् का अपवाद 'अतो रोरप्लुतादप्लुते' (६।१।१०९) से उत्व, और गुण—हे दीर्घाहो + अत्र, पूर्वरूप। ]

[ हन् + लुङ् = तिप्, अट्, तिलोप के बाद 'अहन्' यही बचता है। इसमें न् का रु क्यों नहीं होता है? ] 'अहन्' इसमें तो लाक्षणिक (अनेक सूत्रों की विधि से निष्पन्न) होने के कारण 'अहन्' शब्द का रु नहीं होता है।

❀ अहन् की रुविधि में रूप, रात्रि और रथन्तर परे रहने पर—(न् के रुत्व) उपसंख्यान करना चाहिये। ❀ उदा० अहोरूपम्। अहोरात्रः। अहो रथन्तरम्। [ सभी में न् का रुत्व, उत्व, गुण होता है। ] 'रोऽसुपि' (८।२।६९) इस आगामी सूत्र का अपवाद यह रुत्व कहा जा रहा है अर्थात् यह पूर्व होने पर भी परवर्ती का अपवाद होकर सम्भव लक्ष्य में प्रवृत्त होता है।

दूसरे आचार्य यह कहते हैं— सामान्य रूप से रेफादि परे रहने पर [ अहन् के न् का ] रुत्व होता है। अहोरम्यम्। अहोरत्नानि। [ अतः वार्तिकोक्त परिगणन आवश्यक नहीं है। ]।।६८।।

## ३७५७. रोऽसुपि।।६९।। (१७२)

**'अहन्' इत्येतस्य रेफादेशो भवत्यसुपि परतः। अहर्ददाति। अहर्भुङ्क्ते।**

**असुपीति किम्? अहोभ्याम्। अहोभिः।**

**ननु चात्रापि प्रत्ययलक्षणेन सुबस्ति–अहर्ददाति, अहर्भुङ्क्ते इति? नैतदस्ति; उक्तमेतत्–'अह्नो रविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवति' (म.भा.) इति। नायमहःशब्दःसुप्परो भवति।**

**यत्र तु लोपशब्देन लुप्यते तत्र प्रत्ययलक्षणं भवत्येव, यथा–हे दीर्घाहोऽत्र, दीर्घाहो निदाघ इति। अत्र हि 'हल्ङ्याब्भ्यः' (६।१।६८) इति लोपेन प्रत्ययस्य निवृत्तिः।।**

## ३७५८. अम्नरूधरवरित्युभयथा छन्दसि।।७०।। (३६०४)

**न्यासः**

**रोऽसुपि**।। पूर्वस्यायमपवादः। रेफेऽकार उच्चारणार्थः। **अहर्ददातीति**। यद्यत्र रुत्वं स्याद् 'हशि च' इत्युत्वं प्रसज्येत। तस्माद् रो विधीयते। ननु चात्रापि प्रत्ययलक्षणेन सुबस्ति? नैष दोषः, अह्नो रविधौ लुमता लुप्ते प्रत्यलक्षणस्य प्रतिषेधः।

लोपशब्देन यत्र लोपस्तत्र हि प्रत्ययलक्षणम्, यथा—**हे दीर्घाहोऽत्र। हे दीर्घाह निदाघेति**। अत्र हल्ङ्यादिलोपः।।६९।।

**अम्नरूधरवरित्युभयथा छन्दसि**।। नित्यं रुत्वे प्राप्ते पक्षे रोऽपि यथा स्यादित्येवमर्थमिदम्। सकारस्य रुत्वं कृत्वा निर्देशः—यस्मिन् प्राप्ते रेफ उच्यते, तस्य रुत्वस्योभयथाग्रहणेन पक्षेऽभावो विज्ञायेत-इत्येवमर्थञ्च; इतरथा

**पदमञ्जरी**

**रोऽसुपि। पूर्वस्यायमपवादः**। 'र' इत्यकार उच्चारणार्थः। **अहर्ददातीति**। अत्यन्तसंयोगे द्वितीया। **अह्नो रुविधाविति**। यथा चैतत्सूत्रेणैव सिद्धम्, तथा 'न लुमताङ्गस्य' इत्यत्रोक्तम्। **दीर्घाहो निदाघ इति**। 'असुपि' इति प्रसज्यप्रतिषेधः। पर्युदासे तु सुप्सदृशो हल्परोऽस्तीति स्यादेवात्र रेफः। प्रसज्यप्रतिषेधे तु प्रत्ययलक्षणेन प्रतिषेधे सति रुरेव भवति, ततश्च तन्निबन्धने यत्वोत्वे भवतः।।६९।।

**अम्नरूधरवरित्युभयथा छन्दसि**।। नित्यं रुत्वे प्राप्ते पक्षे रोऽपि यथा स्यदित्ययमारम्भः। अम्नस्शब्द ईषदर्थे, अम्नरस्तमित इति यथा। अवः = रक्षणम्।

**भावबोधिनी**

'अहन्' इस का रेफ आदेश असुप् = सुप् से भिन्न परे रहते होता है। उदा० अहर्ददाति। अहर्भुङ्क्ते। [ रेफ होने से उत्व नहीं होता है क्योंकि रु का ही उत्व होता है। ]

सुप्भिन्न परे रहते—इसका क्या फल है? अहोभ्याम्। अहोभिः। [ इनमें सुप् ही परे है। अतः यह सूत्र न लगकर पूर्ववर्ती सूत्र से न् का रुत्व, उत्व, गुण होता है। ]

क्यों जी, प्रत्ययलक्षण से इनमें भी सुप् परे मिलता ही है—अहर्ददाति, अहभङ्क्ते? [ सुलोप होने पर भी 'प्रत्ययलोपे प्रत्ययलक्षणम्' से सु मान कर होने वाला विधान-निषेध होना चाहिये। ] ऐसा नहीं है क्योंकि यह कहा गया है—'अहन्' शब्द को 'र्' करने में लुमान् से लुप्त होने पर प्रत्ययलक्षण नहीं होता है' इस लिये इन उदाहरणों में अहन् शब्द सुप्परक नहीं हो पाता है। [ अतः 'रोऽसुपि' का विषय रहता है, न् का र् होने में बाधा नहीं है। ]

परन्तु जहाँ लोप शब्द से सु का लोप होता है वहाँ पर प्रत्ययलक्षण होता ही है—'हे दीर्घाहोऽत्र, दीर्घाहो निदाघ! यहाँ। इनमें 'हल्ङ्यादि' सूत्र से सुलोप होता है। [ अतः प्रत्ययलक्षण से सुप् परे मान कर 'न्' का रेफ आदेश न होकर रुत्व, उत्व, गुण और रुत्व, यत्व, लोप होते हैं। किन्तु 'अहन् + सु' 'अहन् + अम्' इनमें तो 'स्वमोर्नपुंसकात्' सूत्र से सु और अम् का लुक् होता है। अतः 'अहर्ददाति' आदि में प्रत्ययलक्षण नहीं माना जा सकता ]।।६९।।

अम्नस्, ऊधस्, अवस्—इन शब्दों के वेदविषय में दोनों प्रकार के आदेश होते हैं—रु अथवा रेफ। उदा० अम्नस्—अम्नरेव अम्नएव। [ जब रु होता है तब यत्व करके य् लोप होता है। रेफ में र् ही रहता है। यही सभीमें होता है। ] ऊधस्—ऊधरेव,

**अम्नस्, ऊधस्, अवस्,–इत्येतेषां छन्दसि विषये उभयथा भवति–रुर्वा, रेफो वा। अम्नस्–अम्न एव, (मै. १।६।१०) अम्नरेव । ऊधस्–ऊध एव (कठ.७।५।२९) ऊधर् एव (ऋ. १०।१००।११)। अवस्–अवरेव, अव एव (अथर्व. २०।२५।२)। यदा रुत्वं तदा 'भोभगोअघोअपूर्वस्य योऽशि' (८।३।१७) इति यकारः।**

**❀ छन्दसि भाषायां च विभाषा प्रचेतसो राजन्युपसङ्ख्यानं कर्त्तव्यम् ❀ (म.भा.)। प्रचेता राजन्। (ऋ. १।२४।१४) प्रचेतो राजन् (ऋ. १।२४।१५)।**

**❀ अहरादीनां पत्यादिषूपसंस्थानं कर्तव्यम् ❀ (म.भा.)। अहर्पतिः, अहःपतिः[1]। गीर्पतिः। गीःपतिः। धूर्पतिः। धूःपति।**

**विसर्जनीयबाधनार्थमत्र पक्षे रेफस्यैव रेफो विधीयते।।**

**न्यासः**

हि द्वेष्यमपि विज्ञायेत। यस्मिन् प्राप्ते रुत्वमारभ्यते तस्य जश्त्वं पक्षेऽभ्यनुज्ञायत इति। **अम्न एवेति**। रुत्वपक्षे 'भो भगो' इत्यादिना यकारः, तस्य 'लोपः शाकल्यस्य' इति लोपः।

**प्रचेतस उपसंख्यानम्, अहरादीनां पत्यादिषूपसंख्यानमिति**—उभयत्रोपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्—इतिकरणः प्रदर्शनार्थः, एवम्प्रकारेष्वन्येष्वप्युभयथा भवति—रुत्वं वा, रेफो वेति। तेन प्रचेतःशब्दस्य राजनि, अहरादीनाञ्च पत्यादिषूभयथा भवति। **प्रचेतो राजन्निति**। प्रकृष्टं चेतो यस्येति बहुव्रीहिः, आमन्त्रितैकवचनम्, रुत्वम्, 'हशि च' इत्युत्वम्, 'आद् गुणः'। **प्रचेता राजन्निति**। रेफे कृते तस्य 'रो रि' इति लोपः, 'ढ्रलोपे' इत्यादिना दीर्घः। सम्बुद्ध्यन्तोदाहरणं रुत्वरेफयोर्विशेषसम्प्रतिपादनार्थम्; असंबुद्धौ हि रुत्वरेफयोरसिद्धत्वाद् 'अत्वसन्तस्य चाधातोः' इति दीर्घत्वे तुल्यमेव रूपं भवति। **अहर्पतिरिति**। षष्ठीसमासः। 'रोऽसुपि' इति रेफे कृते तस्य पक्षे रेफो विधीयते। [1]**अह ᳲपतिरिति**। रेफस्य विसर्जनीये कृते 'कुप्वोः ᳲक ᳲपौ च, इति पक्ष उपध्मानीयः। **गीर्पतिरिति**। 'गॄ शब्दे'। सम्पदादित्वात् क्विप्, 'ॠत इद्धातोः' इतीत्वम्, रपरत्वम्। **धूर्पतिरिति**। धुर्वेः क्विप्, 'राल्लोपः' इति वकारलोपः। अथ किमर्थं रेफस्यैव रेफो विधीयते? इत्याह—

**पदमञ्जरी**

**प्रचेता राजन्निति**। सकारस्य रेफः, तस्य 'रो रि' इति लोपः, 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घः।

**अहरादीनामित्यादि**। उभयत्राप्यादिशब्दः प्रकारे। इदमपि छन्दसि भाषायां च।।७०।।

**भावबोधिनी**

ऊध एव। अवस्—अवरेव, अव एव। जब रुत्व होता है तब 'भो भगो अघोऽपूर्वस्य योऽशि' (८।३।१७) सूत्र से रु का य् होता है। [ और 'लोपः शाकल्यस्य' से उसका लोप हो जाता है। जब रेफ होता है तब उसका श्रवण होता है। ]

❀ वेद में तथा भाषा में प्रचेतस् का [ रेफ आदेश ] राजन् शब्द परे रहते विकल्प से कहना चाहिए। ❀ उदा॰ प्रचेता राजन्, प्रचेतो राजन्। [ रेफ न होने पर स् का रुत्व और 'हशि च' से उत्व तथा गुण होता है। रेफ होने पर र् लोप, अ का दीर्घ होता है। ] ❀ अहन् आदि शब्दों का पति आदि शब्दों के परे रहते विकल्प से उपसंख्यान करना चाहिए, न् का रेफ करना चाहिए। ❀ उदा॰ अहर्पतिः, अहᳲपतिः। [ यहाँ षष्ठी समास विभक्तिलोप के बाद 'न्' का र् 'रोऽसुपि' से होता हैं उसी का यह पुनः रेफ आदेश करता है। अतः विसर्ग नहीं होता है। जब रेफ नहीं होता है तब विसर्ग होता है किन्तु पवर्ग परे होने से 'कुप्वोःᳲकᳲपौ च' सूत्र से विकल्प से उपध्मानीय, पक्ष में विसर्ग होने से तीन प्रकार के रूप हो जाते हैं—(१) अहर्पतिः, (२) अहᳲपतिः (३) अहःपतिः।

१-१. अत्र उपध्मानीयघटितः अह ᳲपतिरिति रूपं प्रायो न पठ्यते। न्यासकारेण तु इदमपि प्रदर्शितं तच्च सम्यगेव।

**३७५९. भुवश्च महाव्याहृतेः।।७१।। (३६०५)**

**'भुवस्'-इत्येतत् महाव्याहृतेश्छन्दसि विषये उभयथा भवति-रुर्वा, रेफो वा। भुवरित्यन्तरिक्षम्, भुव इत्यन्तरिक्षम्।**

**महाव्याहृतेरिति किम्? भुवो विश्वस्य[1] भुवनेषु यज्ञियः (ऋ.१०।५०।४)**

**'भुवः' इत्येतदव्ययमन्तरिक्षवाचि महाव्याहृतिः।।**

**न्यासः**

**विसर्जनीयबाधनार्थमित्यादि**। 'खरवसानयो' इति विसर्जनीयः प्राप्नोति, तद्बाधनार्थं रेफस्यैव रेफो विधीयते।।७०।।

**भुवश्च महाव्याहृतेः**।। भुवःशब्दः षष्ठ्यन्तप्रतिरूपकमव्ययम्, तस्य नित्यं रुत्वे प्राप्ते पक्षे रेफो यथा स्यादित्येवमर्थमिदम्। चकार उभयथेत्यस्यानुकर्षणार्थः। तेनोत्तरत्रानुवृत्तिर्न भवति।

**भुवो विश्वस्येति**। भूशब्दस्य षष्ठ्यन्तस्य पञ्चम्यन्तस्य वा प्रयोगः। यद्येवम्, लाक्षणिकत्वादेवास्य न भविष्यति, तत् किमेतन्निवृत्त्यर्थेन महाव्याहृतिग्रहणेन? एवं तर्ह्येतज्ज्ञापयति—अनित्यलक्षणा प्रतिपदोक्तपरिभाषेति। तेन क्रापयतीत्यत्र पुगागमः सिद्धो भवति, नित्यत्वे तु तस्य न स्यात्; अस्याकारान्तस्य लाक्षणिकत्वात्।

कीदृशो भुवःशब्दो महाव्याहृतिर्भवति? इत्याह—**भुवसित्येतदित्यादि**। अन्तरिक्षं हि महत्, तस्य व्याहृतिः = उक्तिर्यस्मात्; तस्मान् महाव्याहृतिर्भवति।।७१।।

**पदमञ्जरी**

**भुवश्च महाव्याहृतेः**।। तिस्रो महाव्याहृतयः—पृथिव्यन्तरिक्षस्वर्गाणां वाचिकाः, इह तु मध्यमाया ग्रहणम्। **भुवो विश्वेषु सवनेष्विति**। तिङन्तमेतत्। भवतेः 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङ्, सिप्, शपि गुणाभावश्छान्दसः, 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः। लाक्षणिकत्वादेवास्याग्रहणे सिद्धे महाव्याहृतिग्रहणम्—अस्याः परिभाषाया अनित्यत्वज्ञापनार्थम्। तेन क्रापयतीत्वादौ पुक् सिद्धो भवति।।७१।।

**भावबोधिनी**

यह स्थिति सभी में होती है। यह न्यासकार ने ठीक ही लिखा है। किन्तु प्रकाशित संस्करणों में उपध्मानीय वाला रूप नहीं प्राप्त होता है जो कि प्रमाद है। ] गीर्पतिः, गीः पतिः। धूर्पतिः, धूः पतिः। [ रेफ से परे यर् = पकार का द्वित्व विकल्प से होता है। ] [ रेफ के ] विसर्ग का बाध करने के लिये यहाँ रेफ पक्ष में रेफ का ही रेफ किया जाता है। [ जिससे एक रूप रेफवाला ही रहता है। उपध्मानीय वाले रूप गीᳵपतिः, धूᳵपतिः हैं। ]।।७०।।

'भुवस्' इस महाव्याहृति का वेदविषय मे दोनों प्रकार का आदेश होता है—रेफ और रुत्व दोनों होते हैं। उदा० भुवरित्यन्तरिक्षम्, भुव इत्यन्तरिक्षम्। [ भुवस् + इति में रेफ होने पर र् रहता है, रुत्व होने पर यत्व होकर लोप हो जाता है। ]

महाव्याहृति का—इसका क्या फल है? 'भुवो विश्वस्य भुवनेषु यज्ञियः।' [ यह 'भू' शब्द का षष्ठी एकवचन का रूप है, महाव्याहृति नहीं है। ] 'भुवः' यह अव्यय अन्तरिक्षवाची महाव्याहृति है। [ अन्य नहीं लिया जाता है। अन्तरिक्ष महान् है उसकी व्याहृति = व्यवहार = कथन जिससे किया जाय वह—'महाव्याहृति' कही जाती है। ]।।७१।।

१. 'विश्वेषु'—इति मुद्रितः पाठः।

## ३७६०. वसुस्रंसुध्वंस्वनडुहां दः।।७२।। (३३६)

**'ससजुषोः' (८।२।६६) इत्यतः 'स' इति वर्तते, तेन सम्भवाद्व्यभिचाराच्च वसुरेव विशेष्यते, न स्रंसुध्वंसू, व्यभिचाराभावाद्, असम्भवाच्च नानडुह्शब्दः। वस्वन्तस्य पदस्य सकारान्तस्य, स्रंसु, ध्वंसु, अनडुह्–इत्येतेषां च दकारादेशो भवति। वसु–विद्वद्भ्याम्, विद्वद्भिः। पपिवद्भ्याम्, पपिवद्भिः। स्रंसु–उखास्रद्भ्याम्, उखास्रद्भिः। ध्वंसु–पर्णध्वद्भ्याम्, पर्णध्वद्भिः। अनडुह्–अनडुद्भ्याम्, अनडुद्भिः।**

**स–इत्येव–विद्वान्, पपिवान्। नकारस्य न भवति।**

**रुत्वे नाप्राप्ते इदमारभ्यत इति तद्बाध्यते। संयोगान्तलोपस्तु नैवमिति तेनैतदेव दत्वं बाध्यते।**

### न्यासः

**वसुस्रंसुध्वंस्वनडुहां दः।। विद्वद्भ्यामिति।** विदेः शतुर्वसुः' इति वसुरादेशः। **पपिवद्भ्याम्, पपिवद्भिरिति।** पिबतेः, पातेर्वा लिट्, क्वसुः, 'वस्वेकाजाद्घसाम्' इतीट्, 'आतो लोप इटि च' इत्याकारलोपः, स्थानिवद्भावेन 'पा' इत्येतद् द्विरुच्यते। **उखास्रत्, पर्णध्वदिति।** स्रंसि-ध्वंसिभ्याम्—उखायाः स्रंसते, पर्णानि ध्वंसत इति क्विप्, 'अनिदिताम्' इति नलोपः।

इहेदं वसोर्दत्वमनवकाशम्, सर्वस्य विषयस्य विध्यन्तरेणावष्टब्धत्वात्; तथापि विद्वानित्यादौ संयोगान्तलोपः प्राप्नोति, विद्वद्भ्यामित्यादौ तु रुत्वम्। अतस्तदनवकाशत्वाद् यदा रुत्वं बाधते तदा संयोगान्तलोपोऽपि तेन बाधितव्यः, ततश्च विद्वानिति न सिध्यतीति यस्य व्यामोहः स्यात्, तं प्रत्याह—**रुत्वे नाप्राप्ते इत्यादि।**

### पदमञ्जरी

**वसुस्रंसुध्वंस्वनडुहां दः।। स इति वर्तत इति।** अननुवृत्तौ तु तस्य विद्वानित्यादौ नकारस्य दत्वं प्राप्नोति। **न तु स्रंसुध्वंसू इति।** विशेष्येते इति विपरिणामेनान्वयः। **असम्भवाच्चानडुच्छब्द इति।** न विशेष्यत इत्यन्वयः।

इहेदं वसोर्दत्वं नाप्राप्ते विध्यन्तरे आरम्भमाणं यथा विद्वद्भ्यामित्यादौ रुत्वं बाधते, तथा विद्वानित्यादौ संयोगान्तलोपमपि बाधेत? इत्यत आह—**रुत्वे नाप्राप्त इति।**

### भावबोधिनी

'ससजुषोः रु' इस पूर्ववर्ती सूत्र से 'स्' इसकी अनुवृत्ति होती है। इसके द्वारा संभव और व्यभिचार के कारण 'वसु' शब्द ही विशेषित होता है, स्रंसु और ध्वंसु नहीं है क्योंकि इनमें कहीं भी सकारान्त का व्यभिचार = अभाव नहीं मिलता है अर्थात् सर्वत्र स् रहता ही है। और असंभव होने के कारण 'अनडुह्' शब्द भी विशेषित नहीं होता है। [ अतः सूत्रार्थ यह है ] सकारान्त वस्वन्त पद का तथा स्रंसु, ध्वंसु, अनडुह्—इनका [ अन्त का ] दकार आदेश होता है। क्रमशः उदा॰ वसु—विद्वद्भ्याम्, विद्वद्भिः। [ विद् + लट् का शतृ और 'विदेः शतुर्वसुः' से शतृ का वसु, उकार की इत्संज्ञालोप विद्वस् + भ्याम् आदि में 'स्वादिष्वसर्वनामस्थाने' से पदसंज्ञा, प्रस्तुत सूत्र से स् का दकार—विद्वद्भ्याम्। यही आगे भी समझना चाहिये। ] पपिवद्भ्याम् पपिवद्भिः। [ पा + लिट् = द्वित्वादि कार्य 'वस्वेकाजाद्घसाम्' से इट् आगम, 'आतो लोप इटि च' से आलोप पप् इ-वस् = पपिवस् + भ्याम्, पूर्ववद् दकारादेश ] स्रंसु—उदा॰ उखास्रद्भ्याम्, उखास्रद्भिः। [ उसायाः स्रंसते—इस अर्थ में क्विप् और न् लोप—उखास्रस् + भ्याम्। स् का द् ] ध्वंसु—उदा॰ पर्णध्वद्भ्याम्, पर्णध्वद्भिः। [ पर्णानि ध्वंसते—क्विप्, न लोप आदि के बाद पर्णध्वस् + भ्याम्, भ्यस्, स् का द्। ] अनडुह्—उदा॰—अनडुद्भ्याम् + अनडुद्भिः। [ अनडुह् + भ्याम्, ह् का दकार आदेश होता है। ]

सकार का ही द्— विद्वान्, पपिवान्। [ इनमें नकार का दकार नहीं होता है। ]

स् का रुत्व अवश्य प्राप्त रहते यह सूत्र आरम्भ किया जा रहा है इस लिये यह उस रुत्व का बाध करता है अर्थात् रुत्व न होकर दकार ही होता है। परन्तु संयोगान्तलोप ऐसा नहीं है इसलिये संयोगान्तलोप के ही द्वारा प्रस्तुत दकारादेश का बाध किया जाता है। [ अतः विद्वान्स् में सलोप ही होता है। ]

**अनडुहोऽपि ढत्वमनेन बाध्यते।**

**नुमस्तु विधानसामर्थ्यान्न भवति–अनड्वान्, हे अनड्वन्निति।**

**'पदस्य' इत्येव–विद्वांसौ, विद्वांसः।।**

**३७६१. तिप्यनस्तेः।।७३।। (२४८४)**

**तिपि परतः सकारान्तस्य पदस्य अनस्तेर्दकार आदेशो भवति। अचकाद् भवान्। अन्वशाद् भवान् तिपीति किम्? चकास्तेः क्विप्, चकाः। अनस्तेरिति किम्? आप एवेदं सलिलं सर्वमाः। आ**

**न्यासः**

'यस्मिन्नाप्राप्ते यो, विधिरारभ्यते स तस्य, बाधको भवति, न चाप्राप्ते रुत्व इदमारभ्यते, अतस्तदेव दत्वेन बाध्यते। **संयोगान्तलोपस्तु नैवमिति**। तुशब्दो रुत्वाद् विशेषं दर्शयति। इतिकरणो हेतौ। यथा रुत्वं सर्वत्र प्राप्नोति नैवं संयोगान्तलोपः। स हि विद्वानित्यादावेव प्राप्नोति, न विद्वद्भ्यामित्यादौ। तस्मात् तेनैव दत्वं बाध्यते, न त्वसौ दत्वेन; संयोगान्तलोपे कर्तव्ये दत्वस्यासिद्धत्वादित्यभिप्रायः।

अथ यथा 'हो ढः' इत्यस्य दकारोऽत्रापवादः, तथा स 'सावनडुहः' इत्यस्यापि कस्मान्न भवति, यथा ह्यवकाशत्वाद् दकारो ढत्वस्य बाधकस्तथा नुमोऽपि बाधक एव युक्तः? इत्यत आह—**नुमस्तु विधानसामर्थ्यान्न भवतीति**। प्रतिपदं हि 'सावनडुहः' नुम् विधीयते, तस्य यद्ययं दकारोऽपवादः स्यात्, नुम्विधानमनर्थकं स्यात्। **अनड्वानिति**। 'चतुरनडुहोरामुदात्तः' इत्याम्, यणादेशः, हल्ङ्यादिसंयोगान्तलोपौ। **हे अनड्वन्निति**। 'अम् सम्बुद्धौ' इत्यम्। शेषं पूर्ववत्।।७२।।

**तिप्यनस्तेः**।। **अचकात्, अन्वशादिति**। 'चकासृ दीप्तौ', 'शासु अनुशिष्टौ', लङ्, तिप्, अदादित्वाच्छपो लुक्, हल्ङ्यादिलोपः। भवानित्यनुप्रयोगस्तिपोऽभिव्यक्तये। **आ इति**। 'आडजादीनाम्' इत्याट्, 'आटश्च' इति

**पदमञ्जरी**

अथानड्वानित्यत्र नुमो दकारः कस्मान्न भवति? अत आह—**नुमस्त्विति**। दत्वं यदि नकारस्य स्यात् नुमोऽनर्थको विधिः, हकारस्यापि दत्वेन ह्यनड्वादिति सिध्यति। यथैव तर्हि नुमो विधानसामर्थ्याद्दत्वं न भवति, तथानड्वान् अत्रेत्यादौ 'दीर्घादटि समानपादे' इति रुत्वमपि न प्राप्नोति? यं विधि प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते' दत्वं च प्रति नुमो विधिरनर्थकः, रुविधेः पुनर्निमित्तमेव।।७२।।७३।।

**भावबोधिनी**

अनडुह् का भी ढत्व इस से बाधित होता है। [ अनडुह् + भ्याम् में पद ऐसा होने से 'हो ढः' से ढत्व प्राप्त है। बाध करके दकार आदेश ही होता है। ]

[ जैसे यह दकार आदेश 'हो ढः' का बाधक है वैसे ही 'सावनुहः' इससे होने वाले नुम् का भी बाधक हो जाय? इसका उत्तर यह है कि ] विधान-सामर्थ्य के कारण नुम् आगम का अपवाद नहीं होता है—अनड्वान्, हे अनड्वन्। [ अनडुह + सु में 'चतुरनडुहोराम उदात्तः' से आम् आगम अन्त्य अच् से परे अनडुआह्—यण्, नुम्, आगम, हल्ङ्यादिलोप और संयोगान्तलोप। सम्बोधन एकवचन में 'अम् सम्बुद्धौ' से अम् का आगम होने से—'हे अनड्वन्'। ]

पदसंज्ञक का ही दत्व होता है—विद्वांसौ, विद्वांसः। [ यहाँ 'सुप्तिङन्तं पदम्' से औ, जस् मिलाकर ही पदसंज्ञा है। अतः मध्यवर्ती सकार का दकार नहीं होता है। ]।।७२।।

तिप् परे रहते, अस् धातु से भिन्न सकारान्त पद का दकार आदेश होता है। उदा० अचकाद् भवान्। अन्वशाद् भवान्। [ चकास् + लङ् = तिप् अट् शप् लोप, हल्ङ्यादिलोप के बाद अचकास् में स् का द् होता है। अनु शास् + लङ्, तिप्, अट्, शप् लुक्, हल्ङ्यादि से तिप् का लोप—अनु अ शास्, यण्, स् का दकार आदेश-अन्वशाद्। ]

**इत्यस्तेर्लङि तिपि 'बहुल छन्दसि' (७।३।९७) इति ईड् न कृतः।।**

**३७६२. सिपि धातो रुर्वा।।७४।। (२४८५)**

**सिपि परतः सकारान्तस्य पदस्य धातो 'रुः' इत्ययमादेशो भवति, दकारो वा। अचकास्त्वम्, अचकात्त्वम्। अन्वशास्त्वम्, अन्वशात्त्वम्।**

**धातुग्रहणं चोत्तरार्थं रुग्रहणं च।।**

**३७६३ दश्च।।७५।। (२४६८)**

**दकारान्तस्य धातोः पदस्य सिपि परतो रुर्भवति, दकारो वा। अभिनत्त्वम्, अभिनस्त्वम्। अच्छिनत्त्वम्, अच्छिनस्त्वम्।।**

**न्यासः**

वृद्धिः, तिपो लोपे कृते धातुसकारस्य रुत्वम्, तस्य विसर्जनीयः।।७३।।

**सिपि धातो रुर्वा**।। **अचकास्त्वमिति**। रुत्वे कृते तस्य विसर्जनीयः, तस्य 'विसर्जनीयस्यः' इति सकारः। त्वमित्यनुप्रयोगः सिपोऽभिव्यक्तये।

अथ धातुग्रहणं किमर्थम्, यावता सकारान्तस्यापि रेफदकारावुच्येते, न च सिपि सकारान्ताद् धातोरन्यदस्ति? इत्यत आह—**धातुग्रहणमित्यादि**। उत्तरार्थता चास्य 'र्वोरुपधायाः' इत्यत्र दर्शयिष्यते। क्रियतामुत्तरार्थं धातुग्रहणम्, रुग्रहणं तु न कर्त्तव्यम्; अनर्थकत्वात्, दकारे हि विकल्पिते यथाप्राप्तं रुत्वं लभ्यत एव? इत्यत आह—**रुग्रहणं चेति**। उत्तरार्थमित्यपेक्षते। 'दश्च' इति वक्ष्यति, तत्र पक्षे रुत्वं यथा स्यादित्येवमर्थम्। असति हि तस्मिन् यदा दत्वं न भवति, तदा यथाप्राप्तं चर्त्वं स्यात्।।७४।।

**दश्च**।। चकारेण 'द' इत्यनुकृष्यते, तेनोत्तरत्र तस्यानुवृत्तिर्न भवति। **अभिनस्त्वमिति**। लङ्, रुधादित्वात् श्नम्।।७५।।

**पदमञ्जरी**

**सिपि धातो रुर्वा**।। **धातुग्रहणमुत्तरार्थमिति**। इह तु सिपि परतो धातोरन्यस्यासम्भवः। **रुग्रहणं चेति**। **उत्तरार्थमित्यनुषङ्गः**, इह तु दत्वे विकल्पिते सान्तत्वादेव पक्षे रुः सिध्यति।।७४।।

**दश्च**।। **अभिनदिति**।। तन्मध्यपतितस्य श्नमस्तद्भक्तस्य वाटस्तद्ग्रहणेन ग्रहणादत्र पदस्य धातुत्वम्।।७५।।

**भावबोधिनी**

तिप् परे रहते—इसका क्या फल है? चकास् धातु से क्विप् करने पर [ प्रथमा एकवचन में ] चकाः। [ यहाँ चकास् है किन्तु तिप् परे नहीं है सु परे है। ] अस् धातु को छोड़ कर—इसका क्या फल है? 'आप एवेदं सलिलं सर्वमाः। 'आः' यह अस् धातु से लङ् = तिप् परे रहते 'बहुलं छन्दसि' से इट् आगम नहीं किया गया है। [ आ अस् + ति में 'आटश्च' से वृद्धि, हल्ङ्यादिलोप के बाद 'आस्' यह सकारान्त पद है किन्तु अस् धातु का ही होने से दकार न होकर रुत्व, विसर्ग होता है—आः। ]।।७३।।

सिप् परे रहते सकारान्त धातु के पद का [ अन्त्य का ] रु' यह आदेश होता है अथवा दकार यह भी होता है। उदा० अचकास्त्वम्, अचकात्त्वम्। [ चकास् + लङ् = सिप्, अट्, शप् का लोप, हल्ङ्यादि लोप—अचकास् + त्वम्, स् का रुत्व, विसर्गः पुनः विसर्ग का सत्व—अचकास्त्वम्। पक्षमें स् का द्, चर्त्व—अचकात्त्वम्। इसी प्रकार] अन्वशास्त्वम्, अन्वशात्त्वम्। [ अनु शास् + लङ् = सिप्, अट्, आदि। स् का रुत्व, विसर्ग और 'विसर्जनीयस्य सः' से विसर्ग का पुनः सत्व। ]

[ सूत्र में ] 'धातु' का ग्रहण और 'रु' का ग्रहण उत्तरवर्त्ती [ में अनुवृत्ति ] के लिये है। [ भाव यह है सकारान्त धातु के अन्त्य का विकल्प से दकार करने पर पक्ष में स् ही रहता है उसका रु सामान्य सूत्र से सम्भव है। अतः यहाँ आवश्यकता नहीं है किन्तु आगे वाले सूत्र में इसकी अनिवार्यता होने से यहीं पहले ग्रहण कर के अनुवृत्ति द्वारा वहाँ सम्बन्ध कर लिया जाता है। ]।।७४।।

दकारान्त धातु के पद [ के अन्त ] का सिप् परे रहते विकल्प से रु होता है अथवा दकार होता है। उदा० अभिनत्त्वम्, अभिनस्त्वम्। अच्छिनत्त्वम्, अच्छिनस्त्वम्। [ भिद् + लङ् = सिप्, छिद् + लङ् = सिप्, अट्, श्नम्, हल्ङ्यादिलोप—अभिनद्। स् का रुत्व, विसर्ग, सत्व—अभिनस्त्वम्। पक्ष में दकार और चर्त्व-अभिनत्त्वम्। अच्छिनस्त्वम्, अच्छिनत्त्वम् में तुक् = त् आगम, श्चुत्व ]।।७५।।

**३७६४. र्वोरुपधाया दीर्घ इकः।।७६।। (४३३)**

**रेफवकारान्तस्य धातोः पदस्य उपधाया इको दीर्घो भवति। गीः। धूः। पूः। आशीः।**

**वकारग्रहणमुत्तरार्थम्। उपधाग्रहणं किम्? अबिभर्भवान्–अभ्यासेकारस्य मा भूत्। इक इति किम्? अत्रैव प्रत्युदाहरणे भशब्दाकारस्य मा भूत्।**

**'धातोः' इत्येव–अग्निः, वायुः। 'पदस्य' इत्येव-गिरौ, गिरः।।**

**३७६५. हलि च।।७७।। (३५४)**

**हलि च परतः रेफवकारान्तस्य धातोरुपधाया इको दीर्घो भवति। आस्तीर्णम्। विस्तीर्णम्। विशीर्णम्। अवगूर्णम्। वकारान्तस्य–दीव्यति। सीव्यति।**

**न्यासः**

**र्वोरुपधाया दीर्घ इकः**।। पदस्येत्येव, धातोरिति च, तदुभयमिह समानाधिकरणं रेफवकाराभ्यां विशेष्यते, विशेषणेन च तदन्तविधिर्भवतीत्याह—**रेफवकारान्तस्येति**। वकारस्योदाहरणं कस्मात्र प्रदर्शितम्? इत्याह—**वकारग्रहणमुत्तरार्थमिति**। तेन वकारान्तस्योदाहरणं न प्रदर्शितमिति भावः। एतदर्थं तु तत्र भवति; वकारान्तस्य पदस्य धातोरसम्भवात्। **अबिभरिति**। भृञो लङ्, तिप्, गुणः, रपरत्वम्, 'जुहोत्यादिभ्यः श्लुः', द्विर्वचनम्, 'उरत्' इत्युत्वम्, 'भृञामित्' इतीत्त्वम्, हल्ङ्यादिलोपः।।७६।।

**हलि च**।। **दिव्यति, चतुर्यतीति**। दिव् चतुर्—इत्युभयं प्रातिपदिकमत्र, तेन न भवति। **स्मर्यत इति**। भावे यक्, 'गुणोर्तिसंयोगाद्योः' इति गुणः। **भव्यमिति**। 'अचो यत्' गुणः, 'धातोस्तन्निमित्तस्यैव' इत्यवादेशः।।७७।।

**पदमञ्जरी**

**र्वोरुपधाया दीर्घ इकः**। धातोः, पदस्य-इत्युभयं समानाधिकरणं रेफवकाराभ्यां विशेष्यते, विशेषणेन च तदन्तविधिर्भवतीत्याह—**रेफवकारान्तस्येति**।

**वग्रहणमुत्तरार्थमिति**। इह तु वकारान्तस्य पदस्य धातोरसम्भवः। **अभ्यासेकारस्य मा भूदिति**। यदि स्यात्, तस्यासिद्धत्वाद् 'ह्रस्वः' इति ह्रस्वो न स्यात्।।७६।।

**भावबोधिनी**

रेफान्त और वकारान्त धातु के पद की उपधा के इक् का दीर्घ होता है। उदा॰ गीः। धूः। पूः। आशीः। [ गिर्, धुर्, पुर्, आशिस् का षत्व 'शासिवसिघसीनां च ८।३।६० से होता है अतः 'ससजुषोः रुः ८।२।६६ की दृष्टि से असिद्ध होने से आशिस् सकारान्त मिलने से रुत्व करने पर—आशिर् रेफान्त है। सुलोप के बाद उपधा का दीर्घ, रेफ का विसर्ग होता है। उक्त रूप बनते हैं। ]

वकार का ग्रहण उत्तरवर्त्ती सूत्र के लिये है। उपधा का ग्रहण किस लिये है—अबिभर्भवान्। इसमें अभ्यास के इकार का दीर्घ न होने लगे। [ अबिभर् यह भृञ् लङ् = तिप् का रूप है। उपधा में इक् नहीं है। दीर्घ नहीं होता है। ] इक् का— इसका क्या फल है? इसी 'अबिभर् भवान्' प्रत्युदाहरण में भ शब्द के अकार का दीर्घ न होने लग जाय।

धातु की ही [ उपधा का दीर्घ होता है। ] अग्निः, वायुः। [ प्रातिपदिकों की उपधाका दीर्घ नहीं होता है। ] पद की ही उपधा का—गिरौ, गिरः। [ यहाँ औ, जस् मिलाकर तदन्त की पद संज्ञा होती है। अतः दीर्घ नहीं होता है। ]।।७६।।

हल् वर्ण परे रहने पर भी रेफान्त और वकारान्त धातु की उपधा के इक् का दीर्घ होता है। उदा॰ आस्तीर्णम्। विस्तीर्णम् विशीर्णम्। [ आङ्, वि-पूर्वक स्तॄ और विपूर्वक शॄ धातु से क्त प्रत्यय 'ॠत इद्धातोः' (७।१।१००) से ॠ का इत्व रपर, उपधादीर्घ इसी सूत्र से। रदाभ्याम्' (८।२।४२) सूत्र से त का न, 'रषाभ्यां नो णः' से णत्व—आस्तीर्णम् आदि रूप होते हैं। ] वकारान्त के उदा॰ दीव्यति। सीव्यति। [ दिव् + लट् श्यन्, उपधादीर्घ। ]

**'धातोः' इत्येव–दिवमिच्छति दिव्यति। चतुर इच्छति चतुर्यति।**

**'इकः' इत्येव–स्मर्यते। भव्यम्।**

**अपदान्तार्थोऽयमारम्भः।।**

## ३७६६. उपधायां च ।।७८।। (२२६५)

**'हलि' इत्यनुवर्त्तते। धातोरुपधाभूतौ यौ रेफवकारौ हल्परौ तयोरुपधाया इको दीर्घो भवति। हुर्छा–हूर्छिता। मुर्छा–मूर्छिता। उर्वी–ऊर्विता। धुर्वी–धूर्विता।**

**'हलि' इत्येव–चिरि, जिरि, चिरिणोति। जिरिणोति।**

### न्यासः

**उपधायां च**।। पूर्वं रेफवकारान्तस्य धातोदीर्घत्वविधानादरेफवकारान्तार्थमिदम्। उपधायामिति सुब्व्यत्येन षष्ठीद्विवचनस्य स्थाने सप्तम्येकवचनम्। **उपधाभूताविति**। उपधात्वं प्राप्तावित्यर्थः। अलोऽन्त्यात् पूर्वौ इति यावत्। **हल्पराविति**। हल् पर आभ्यामिति बहुव्रीहिः। स पुनर्हल् धात्ववयव एव वेदितव्यः। यत्र हि प्रत्ययावयवो रेफवकाराभ्यां हल्परस्तत्र पूर्वेणैव सिद्धः। **हूर्च्छितेति**। 'हुर्च्छ कौटिल्ये'। **मूर्च्छितेति**। 'मुर्च्छा मोहसमुच्छ्रयोः'। ननु च 'अचो रहाभ्यां द्वे' इति द्विर्वचने कृते रेफोऽत्रोपधा न भवति? नैतदस्ति; दीर्घत्वे कर्तव्ये द्विर्वचनस्यासिद्धत्वात् छकारोऽत्रैक एव हलिति भवत्येवोपधात्वं रेफस्य।

**चिरिणोति, जिरिणोतीति**। 'रि क्षि चिरि जिरि दाश दृ हिंसायाम्', स्वादित्वात्श्नुः।

### पदमञ्जरी

**उपधायां च**।। 'वोरुपधायाः' इत्यादि सर्वमनुवर्त्तते। इदमुपधाग्रहणं वोर्विशेषणम्। **षष्ठीद्विवचनस्य** तु स्थाने सप्तम्येकवचनम्। प्रकृतमुपधाग्रहणमिको विशेषणम्, तच्च वपेक्षया पूर्वत्वं प्रतिपादयति, तेन वृत्तिकारोपदर्शितः सूत्रार्थो भवति। **हूर्छितेत्यादि**। 'हुर्छा कौटिल्ये', 'मुर्छा मोहसमुछ्राययोः', 'अचो रहाभ्याम्' इति द्विर्वचनस्यासिद्धत्वाद्रेफस्योपधात्वे सति पूर्ववद्दीर्घत्वम्। 'चिरिजिरी हिंसार्थौ'।

### भावबोधिनी

धातु की ही [ उपधा का दीर्घ होता है ] दिवम् इच्छति—इस अर्थ में—दिव्यति। [ यहाँ नामधातु से क्यच् हुआ है। दिव् इतना धातु नहीं है, अपितु 'दिव्य' की धातु संज्ञा है। अतः दीर्घ नहीं होता है। ] चतुरः इच्छति—चतुर्यति। [ 'चतुर्य' यह नामधातु है, केवल 'चतुर्' धातु नहीं है। अतः दीर्घ नहीं होता है। ]

इक् का ही [ दीर्घ ]—स्मर्यते। भव्यम्। [ यहाँ रेफान्त और वान्त धातु हो जाने पर भी उपधा में इक् नहीं होने से दीर्घ नहीं होता है। ]

अपदान्त का भी दीर्घ करने के लिये यह सूत्र बनाया गया है। [ क्योंकि पदान्त रेफ और वकार वाली धातु की उपधाका दीर्घ तो पूर्ववर्त्ती सूत्र से ही हो जाता है। ]।।७७।।

'हलि' = हल् वर्ण परे रहते' इसकी अनुवृत्ति होती है। धातु के उपधाभूत जो रेफ और वकार हल्परक हैं उनकी रेफ और वकार की उपधा के इक् का दीर्घ होता है। [ भाव यह है कि जिन धातुओं में हल् परे रहते उपधा में रेफ और वकार हैं, इन रेफ और वकार की उपधा में अर्थात् रेफ और वकार से पूर्व में यदि इक् है तो उसका दीर्घ हो जाता है। ] उदा० हुर्छा—हूर्छिता। मुर्छा—मूर्छिता। उर्वी—ऊर्विता। धुर्वी—धूर्विता। [ हुर्छा धातु के आ की इत् संज्ञा, लोप करने पर हुर्छ बचता है। 'अलोऽन्त्यात् पूर्व उपधा' (१।१।६५) सूत्र से उपधा का रेफ है। अब इस रेफ को अन्त्य अल् मानकर हुर्छ में उकार इक् उपधा में है। इसका दीर्घ होकर 'हूर्च्छ' बनता है। क्त, इट् टाप् करने पर अथवा तृच् प्रत्यय परे 'हूर्च्छिता' रूप होता है। यही स्थिति अन्य उदाहरणों में भी है। ]

[ 'उपधायाम्' यहाँ विभक्तिव्यत्यय से षष्ठी द्विवचन के स्थान पर सप्तमी एकवचन हुआ है। 'उपधयोः' यह रेफ—षकार का विशेषण है। ]

**इह कस्मान्न भवति–'री गतौ' (धा.पा१५०१)–रिर्यतुः, रिर्युः, 'वी गत्यादिषु' (धा.पा.१०४९) विव्यतुः, विव्युरिति? यणादेशस्य स्थानिवत्त्वात् असिद्धत्वाच्च बहिरङ्गलक्षणत्वेन हल्परौ रेफवकारौ न भवतः।**

**चतुर्यिता–इत्यत्रापि बहिरङ्गलक्षणत्वादतो लोपस्य (६।४।४८) धातोरुपधाभूतो रेफो न भवति।**

**न्यासः**

इह 'री गतौ', 'वी गतिप्रजनादिषु'—एताभ्यां लिट्, अतुसि, उसि च 'एरनेकाचः' इत यणादेशः; तस्य स्थानिवद्भावाद् द्विर्वचने कृते रिर्यतुः, रिर्युः; विव्यतुः, विव्युरिति स्थितेऽभ्यासेकारस्य दीर्घत्वं प्राप्नोति, हल्परयो रेफवकारयोरुपधाभूतत्वात्। एतत् कस्मान्न भवति? इत्याह—**रिर्यतुः, रिर्युरित्यादि**। स्थानिवद्भावः 'अचः परस्मिन्' इत्यादिना। ननु च 'न पदान्त' इत्यादिना दीर्घविधौ प्रतिषिध्यते स्थानिवद्भावः, तत् कुतस्तस्येह सम्भवः? नैतदस्ति; परिगणनं हि तत्र क्रियते—'स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत्' इति। **असिद्धत्वाद्वेत्यादि**। अत्र बहिरङ्गत्वं यणादेशस्य; अङ्गाधिकारे विधीयमानस्य प्रत्ययाश्रितत्वात्। दीर्घत्वस्य त्वन्तरङ्गत्वम्; प्रकृत्याश्रयत्वात्। असिद्धञ्च बहिरङ्गमन्तरङ्ग इति दीर्घत्वे कर्तव्ये यणादेशस्य सिद्धत्वाद् रेफवकारौ हल्परौ न भवतः, तत् कुतो दीर्घत्वस्य प्राप्तिः!

इह तर्हि चतुर्यितेति दीर्घत्वं कस्मान्न भवति, अत्र हि चतुर्य—इत्यस्य क्यजन्तस्य धातोस्तृचि परतः 'अतो लोपः' इत्यकारलोपे कृत उपधाभूतो रेफो हल्परो भवतीत्यस्ति दीर्घत्वस्य प्राप्तिः, इत्याह—**चतुर्यितेत्यत्रापीत्यादि**। बहिरङ्गत्वमतो लोपस्यार्धधातुकाश्रयत्वात्। दीर्घस्यान्तरङ्गत्वं पूर्ववत्।

तर्हि प्रतिदीव्नेत्यत्रापि दीर्घत्वं न स्यात्, यथैव हि चतुर्यितेत्यत्र धातोरुपधा रेफो न भवति, तथा प्रतिदीव्नेत्यत्रापि वकारः। तथा हि—दीव्येत्येतावान् धातुः, नकारस्तु प्रत्ययसम्बन्धी; न च दिवेर्धातोर्वकार

**पदमञ्जरी**

इह रिर्यतुः, विव्यतुरिति 'रि गतौ', 'वी गत्यादिषु', लिट्. अतुस्, द्विर्वचने 'एरनेकाचः' इति यणादेशः। अत्राभ्यासेकारस्य दीर्घप्रसङ्गः, ततश्च तस्यासिद्धत्वाद् ह्रस्वो न स्यात् तत्राह—**रिर्यतुरित्यादि**। **यणादेशस्य स्थानिवद्भावादिति**। न च दीर्घविधौ स्थानिवद्भावप्रतिषेधः; अलोपाजादेशत्वात्। एवमपि 'पूर्वत्रासिद्धे न स्थानिवत्' इत्याशङ्क्य परिहारान्तरमाह—**असिद्धत्वाच्चेति**। अङ्गाधिकारे विधानात् प्रत्याश्रयत्वाद्यणो बहिरङ्गत्वम्, दीर्घस्य तु तदनपेक्षत्वादन्तरङ्गत्वम्।

इह चतुर्यतेः क्यजन्तात्तृच्, इट्, अतो लोपे कृते 'क्यस्य विभाषा' इति यदाऽयं लोपो न भवति, तदा धासोरुपधाभूतो रेफो हल्परश्चेति दीर्घप्रसङ्गः? इत्याशङ्कायामाह—**चतुर्यितेत्यत्रापीति**। अत्राप्यन्तरङ्गत्वबहिरङ्गत्वे

**भावबोधिनी**

हल् परे रहने पर ही [ रेफ और वकार उपधा में हो तभी यह सूत्र लगता है ] 'चिरि' 'जिरि' [ रेफ उपधा में है किन्तु उसके बाद हल् न होकर अच् है। अतः यह सूत्र नहीं लगता है। स्वादिगणीय होने से श्नु = नु, णत्व, उपधागुण करने पर ] चिरिणोति, जिरिणोति रूप होते हैं।

इनमें [ दीर्घ ] क्यों नहीं होता है—'री गतौ' का [ लिट् प्रथमपुरुष द्विवचन, बहुवचन में ] रिर्यतुः, रिर्युः। [ री + लिट् = तस् = अतुस्, द्वित्व अभ्यास ह्रस्व रि री + अतुस्, यण् रिर्य् अतुस्, रिर्य् उस्। ] 'वी' गति आदि अर्थों में हैं—विव्यतुः, विव्युः। [ वी + लिट् = तस् = अतुस्, द्वित्वादि के बाद विवी + अतुस्, यण्, विव्य् + अतुस्, विव्य् + उस्—में हल् परे उपधा में रेफ और वकार मिलते हैं। इनकी उपधा का दीर्घ होना चाहिये? ] यण् आदेश (य्, व्) का स्थानिवद्भाव होने से और बहिरङ्गनिमित्तक होने से असिद्ध हो जाने से रेफ और वकार हल्परक नहीं रह पाते हैं। [ अतः दीर्घ का प्रसङ्ग नहीं है। ]

**प्रतिदीव्ना–इत्यत्र तु 'हलि च' (८।२।७७) इति दीर्घत्वम्ः, दीर्घविधौ लोपाजादेशस्य स्थानिवद्भावप्रतिषेधात्। 'असिद्धं बहिरङ्गमन्तरङ्गे' (व्या.प.४२) इत्येतत्तु नाश्रयितव्यम्।**

**'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' (है.प.१०३) इति जिव्रिः, किर्योः, गिर्योरित्येवमादिषु दीर्घो न भवति।।**

**न्यासः**

उपधाभूतः, किं तर्हि? अन्तभूतः? इत्यत आह—**प्रतिदीव्नेत्यत्रेत्यादि**। प्रतिपूर्वाद् दिवः 'कनिन् युवृषितक्षि' इत्यादिना कनिन्, 'अल्लोपोऽनः' इत्यकारलोपः। ननु च 'अचः परस्मिन्' इत्यल्लोपस्य स्थानिवद्भावाद् हलि परतो वकारान्तोऽत्र धातुर्न भवति। तत् कथम् 'हलि च' इति दीर्घत्वम्? इत्याह—**दीर्घविधावित्यादि**। स्थानिवद्भावप्रतिषेधस्तु 'न पदान्त' इत्यादिना। नन्वेवमपि बहिरङ्गलक्षणासिद्धत्वादल्लोपस्य नैवात्र हलि परतो वकारान्तो धातुरुपपद्यते? इत्याह—**असिद्धं बहिरङ्गमित्यादि**। अनाश्रयणस्य तु हेतुरनित्यत्वमस्याः परिभाषायाः। अनित्यत्वं तु 'नलोपः सुप्स्वर' इत्यादौ सूत्रे तुग्विधिग्रहणाज्ज्ञापितम्।

अथ जिव्रिः, किर्योरित्यादौ 'हलि च' इति दीर्घत्वं कस्मान्न भवति? जिव्रिशब्दोऽप्ययमेवं व्युत्पाद्यते— 'जीर्यतेः क्रिन् रश्च वः' इति 'जॄष् झॄष् वयोहानौ' इत्यस्मात् क्रिन् प्रत्ययः, 'ॠत इद् धातोः' इतीत्त्वम्, रपरत्वम्, रेफस्य वकार आदेशः—इत्येवं व्युत्पत्तौ जिव्रिरित्येतस्य वकारान्तस्य धातो रेफे हलि परतः 'हलि च' इत्यस्ति दीर्घत्वस्य प्राप्तिः। किरिः, गिरिरित्येवमादीनायपि शब्दानामेवं व्युत्पत्तिः क्रियते। 'अच इ' इत्यत इप्रत्ययेऽनुवर्त्तमाने 'भुजेः किच्च' इति च 'कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यः' इति किरतिप्रभृतिभ्यो धातुभ्य इ प्रत्ययं विधाय व्युत्पाद्यन्त एते। एवं हि व्युत्पत्तावोसि यणादेशे कृते यकारे हलि परतो रेफान्तानां किरिप्रभृतीनाम् 'हलि च' इति दीर्घत्वं प्राप्नोति? इत्यत आह—**उणादयोऽव्युत्पन्नानीत्यादि**। ननु च किर्योः, गिर्योरित्यत्र

**पदमञ्जरी**

पूर्ववत्। इह प्रतिपूर्वाद्दिवेः 'कनिन्युवृषितक्षि' इति कनिन्प्रत्ययान्तात्तृतीयैकवचने 'अल्लोपोऽनः' इत्यकारस्य लोपे प्रतिदीव्नेति दीर्घत्वमिष्यते, तन्न प्राप्नोति; वकारस्य धातुं प्रत्यनुपधात्वदित्यत आह—**प्रतिदीव्नेत्यत्रेति**। कथं पुनः 'हलि च' इति दीर्घत्वम्, यावताल्लोपस्य स्थानिवद्भावे सति हल्परो वकारो न भवति? इत्यत आह— **दीर्घविधाविति**। ननु मा भूत्स्थानिवद्भावः, विभक्त्याश्रयत्वेनाल्लोपो बहिरङ्गः, तस्यासिद्धत्वाद्धल्परो न भवति? इत्यत आह—**असिद्धं बहिरङ्गमन्तरङ्ग इत्येतत्त्विति**। अनाश्रयणं त्वस्याः परिभाषाया अनित्यत्वात्। अनित्यत्वं च 'नलोपः सुप्स्वर' इत्यत्र तुग्विधिग्रहणेन ज्ञापितम्। इह जीर्यतेः क्रिन् रश्च वः—जिव्रिः, कॄगॄभ्यां किप्रत्ययः— किरिः, गिरिः, ताभ्यामोस्, यणादेशः—किर्योः, गिर्योरत्र 'हलि च' इति दीर्घत्वं प्राप्नोति? तत्राह— **उणादयोऽव्युत्पन्नानीति**। उणादिषु नावश्यं व्युत्पत्तिकार्यं भवतीत्यर्थः। एतच्च 'अतः कृकमिकंस' इत्यत्र

**भावबोधिनी**

[ चतुरः इच्छति—इस अर्थ में चतुर् से क्यच्—चतुर्यं नामधातु से तृच्, इट्, अलोप करने पर—चतुर्य् इ ता में उपधा में रेफ हल्परक है, इस रेफ से पूर्व उकार का दीर्घ होना चाहिये? ] चतुर्यिता— में अलोपरूप कार्य के बहिरङ्ग होने से असिद्ध हो जाने के कारण धातु की उपधा में रेफ नहीं मिलता है [ अपितु य् मिलता है। आर्धधातुक प्रत्यय परे मान कर होने वाला लोप बहिरंग है। प्रकृति को मानकर होनेवाल दीर्घत्व अन्तरङ्ग है। अतः दीर्घत्व की दृष्टि में अ का लोप असिद्ध है। ]

[ जैसे 'चतुर्यिता' में लोप असिद्ध होने के कारण रेफ उपधा में नहीं माना जाता और दीर्घ नहीं होता है वैसे ही 'प्रतिदीव्ना' में भी वकार उपधा में नहीं रहेगा क्योंकि इसमें भी अलोप असिद्ध हो जाता है, तब कैसे दीर्घ होगा? ] प्रतिदीव्ना यहाँ तो 'हलि च' (८।२।७७) सूत्र से दीर्घ होता है और दीर्घ की विधि में लोप रूप अजादेश के स्थानिद्भाव का प्रतिषेध 'न पदान्त' सूत्र से हो जाता है। [ प्रतिदिवन् + टा = आ, 'अल्लोपोऽनः' से अलोप उपधादीर्घ होता है। ] इसमें 'असिद्धं बहिरङ्गमन्तरङ्गे' इस परिभाषा का आश्रय नहीं लेना चाहिए। [ क्योंकि यह परिभाषा अनित्य है। लक्ष्यसिद्धि के अनुसार व्यवस्था की जाती है। ]

'उणादि अव्युत्पन्न प्रतिपदिक भी होते हैं' इसके कारण 'जिव्रिः' 'किर्योः, गिर्योः' आदि जैसे शब्दों में उपधा-दीर्घ नहीं होता है। [ जैसे हैं वैसे ही रूप साधु माने जाते हैं। इनमें व्याकरणशास्त्रीय प्रक्रिया नहीं प्रवृत्त होती है। इनकी व्युत्पत्ति न्यास और पदमंजरी में देखें। ]।।७८।।

**३७६७. न भकुर्छुराम्।।७९।। (१६२९)**

**रेफवकारान्तस्य भस्य कुर्, छुर्–इत्येतयोश्च दीर्घो न भवति। धुरं वहति धुर्यः। धुरि साधुर्धुर्यः। कुर्–कुर्यात्। छुर्–छुर्यात्। दिव्यम्।**

**रेफवकाराभ्यां भविशेषणं किम्? प्रतिदीव्ना। प्रतिदीव्ने।।**

**न्यासः**

व्युत्पत्तिपक्षेऽपि दीर्घत्वं न प्रसजति, न ह्यत्र हलि परतः किरतिगिरती रेफान्तौ, दीर्घत्वे कर्तव्ये यणादेशस्य स्थानिवद्भावात् स्वरादिलोपेषु हि लोपाजादेशो न स्थानिवत्, अन्यस्तु स्थानिवदेव? सत्यमेतत्; अभ्युपगम्यैवं परिहार उक्तः। एवं मन्यते—भवत्वविशेषेण स्थानिवद्भावप्रतिषेधः, तथापि नैवात्र दीर्घत्वं प्रसज्यते; अव्युत्पन्नत्वाद् उणादीनामिति। यद्युणादयोऽव्युत्पन्नानि प्रातिपदिकानि, प्रतिदीव्नेत्यत्रापि दीर्घत्वं न सिध्यति; प्रतिदिवञ्शब्दस्याप्यौणादिकत्वात्। अयम् 'कनिन् युवृषितक्षि' इत्यादिना कनिन्प्रत्ययान्तो व्युत्पाद्यते। न तर्हि वक्तव्यमुणादयोऽव्युत्पन्नानि प्रातिपदिकानीति, न हि तत्रैव सूत्रे व्युत्पत्तिपक्षश्चाश्रयितुं युक्तः, योऽपि 'आतो मनिन्क्वनिब्वनिपश्च' इति, 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप्प्रत्ययान्तं प्रतिदिवञ्शब्दं व्युत्पादयेत् तस्यापि नैव दीर्घत्वं सिध्यति, 'लोपो व्योर्वलि' इति वकारलोपे कृते धातोरवकारान्तत्वादिति? कर्त्तव्योऽत्र यत्नः। एष क्रियते—'हलि च' इत्यत्र 'व्यक्तिः पदार्थः' इत्येतद् दर्शनमाश्रीयते। अस्मिंश्च दर्शने प्रतिलक्ष्यं लक्षणभेदो भवतीति यावन्ति लक्ष्याणि तावन्त्येव लक्षणान्युपदिशन्ति, तत्र भिन्नेषु लक्ष्यानुरोधात् क्वचित् प्रतिदीव्नेत्यादौ व्युत्पत्तिपक्ष आश्रीयते; क्वचित् पुनर्जिव्रिः, किर्योः, गिर्योरित्यादावव्युत्पत्तिपक्ष इति।

चकारो हलीत्यस्यानुकर्षणार्थः।।७८।।

**न भकुर्छुराम्।।** 'हलि च' इति दीर्घत्वे प्राप्ते प्रतिषेधोऽयमारभ्यते। **धुर्य इति**। धुरं वहतीति 'धुरो यड्ढकौ' इति यत्। **कुर्यादिति**। करोतेर्लिङ्, 'तनादिकृञ्भ्य उः', धातोर्गुणः, रपरत्वम्, 'अत उत् सार्वधातुके' इत्युत्त्वम्, 'ये च' इत्युकारलोपः। **छुर्यादिति**। आशिषि लिङ्। करोतेर्विकरणेन निर्देशश्चिकीर्षतीत्यत्र प्रतिषेधो मा भूदित्येवमर्थः।।७९।।

**पदमञ्जरी**

कम्ग्रिहणेनैव सिद्धे कंसग्रहणेन ज्ञापितम्—क्वचिद् व्युत्पत्तिकार्यं भवत्येव, यथा—प्रतिदीव्नेति। किर्योरित्यत्र यणो बहिरङ्गत्वमनाश्रित्यायं परिहार उक्तः।।७८।।

**न भकुर्छुराम्।। छुर्यादिति**। 'छुर छेदने;, आशिषि लिङ्।

**प्रतिदीव्नेति**। योऽत्र वकारान्तो नासौ भसंज्ञकः, यश्च भसंज्ञो नासौ वकारान्तः, किं तर्हि? नकारान्तः।। ७९।।

**भावबोधिनी**

रेफान्त और वकारान्त भसंज्ञक का और 'कुर्' 'छुर्' इन दोनों की उपधा का दीर्घ नहीं होता है। उदा० धुरं वहति इस अर्थ में—धुर्यः। [ 'धुरो यड्ढकौ' सूत्र से यत् प्रत्यय, 'यचि भम्' से धुर् की भसंज्ञा होने के कारण उपधा का दीर्घ नहीं होता है। ] धुरि साधुः—इस अर्थ में भी—धुर्यः। कुर् का उदा०—कुर्यात्। छुर् का—छुर्यात्। [ कृ + लिङ् = तिप्, यासुट्, 'तनादिकृञ्भ्यः उः' से उ विकरण, गुण, रपर कर् उ + यास् + ति, 'अत उत् सार्वधातुके' सूत्र से अकार का उकार, 'ये च' सूत्र से विकरण उकार का लोप, कुर् या स् + त् 'स्कोः संयोगाद्योरन्ते च' सूत्र से स् लोप कुर्यात्—उपधादीर्घ प्राप्त है इस सूत्र से निषेध होता है। ] छुर्यात्। [ छुर् + लिङ् यहाँ भी दीर्घ प्राप्त है, प्रतिषेध होता है। ] वकारान्त का उदा० दिव्यम्। [ दिव् + य में भसंज्ञा होने से उपधादीर्घ नहीं होता है। यह उदा० 'धुर्यः' के बाद ही रखना उचित है। ]

रेफ और वकार से भ को विशेषित करने का क्या फल है? प्रतिदीव्ना। प्रतिदीव्ने। [ प्रतिदिवन् + टा आदि में अलोप कर देने पर प्रतिदिव् न् + आ में जो वकारान्त है उसकी भसंज्ञा नहीं होती है और जो भसंज्ञक अंश है प्रतिदिवन्, यह वकारान्त नहीं है अपितु नकारान्त है। अतः दीर्घ का निषेध नहीं होता है। ]।।७९।।

### ३७६८. अदसोऽसेर्दादु दो मः।।८०।। (४९९)

**अदसोऽसकारान्तस्य वर्णस्य दात्परस्य उवर्णादेशो भवति दकारस्य च मकारः। अमुम्, अमू, अमून्। अमुना। अमूभ्याम्। 'भाव्यमानेनाप्युकारेण सवर्णानां ग्रहणमिष्यते' (पु.प. २१)—इत्येकमात्रिकस्य मात्रिकः, द्विमात्रिकस्य द्विमात्रिक आदेशो भवति।**

**असेरिति किम्? अद इच्छति अदस्यति।**

**❀ अदसोऽनोस्त्र इति वक्तव्यम् ❀ (म.भा.)। ओकाररेफयोरपि प्रतिषेधो यथा स्यादिति। अदोऽत्र। अदः कुलम्।**

**न्यासः**

**अदसोऽसेर्दादु दो मः।।** 'असेः' इतीकार उच्चारणार्थः। अविद्यमानः सकारो यस्य स तथोक्तः। यश्चैवंविधः स सकारान्तो न भवतीत्याह—**असकारान्तस्येत्यादि**। **अमुमित्यादि**। अदसोऽमादिषु त्यदाद्यत्वे 'अतो गुणे' पररूपत्वे च कृतेऽमि पूर्वत्वम्। औटि, 'वृद्धिरेचि' इति वृद्धिः। शसि प्रथमयोः पूर्वसवर्णदीर्घत्वम्। अत्र स्थानेऽन्तरमपरिभाषयैकवचने मात्रिकस्य मात्रिक एव भवति, अन्यत्र द्विमात्रिकस्य द्विमात्रिकः। ननु च मात्रिकः सूत्र उपात्तः, तत् कथं द्विमात्रिको लभ्यते? 'अणुदित् सवर्णस्य चाप्रत्ययः' इति सवर्णग्रहणादिति चेत्? न; 'भाव्यमानोऽण् सवर्णान् न गृह्णाति' इति प्रतिषेधादित्यत आह—**भाव्यमानोऽपीत्यादि**। एतच्च 'ऋत उत्' इत्यत्र तपरकरणेन ज्ञापितम्।

**अदस्यतीति**। 'सुप आत्मनः क्यच्'।

**पदमञ्जरी**

**अदसोऽसेर्दादु दो मः।।** 'असेः' इति सकारे इकार उच्चारणार्थः। **अमूभ्यामिति**। अत्र त्यदाद्यत्वे कृते 'सुपि च' इति दीर्घत्वम्, तत आन्तरतम्यादाकारस्य ऊकारः। ननु च सूत्रे ह्रस्वो निर्दिष्टः, भाव्यमानत्वाच्च सवर्णग्रहणमपि नास्ति, तत्कथमूकारो लभ्यते? अत आह—**भाव्यमानेनापीति**। एतच्च 'दिवि उत्' इति तपकरणेन ज्ञापितम्। केचिदत्राप्युकारं दपरं पठन्ति—'उद्दोमः' इति, तेषामयमौत्पत्तिको दकारो मुखसुखार्थः, न पुनस्तकारस्य जश्त्वम्, तथा हि सति सवर्णग्रहणं न स्यात्। अदपरपाठस्तु भद्रः। **अदस्यतीति**। ननु च 'पदस्य' इति वर्तते, न चेदं पदम्; 'नः क्ये' इति नियमात्? एवं तर्ह्येतदेव ज्ञापयति—अपदस्याप्यदस एतन्मुत्वं भवतीति-अमुम्, अमुयेति, अन्यथा यत्र स्वादौ पदं तत्रैव स्याद्-अमुष्यै, अमूभ्यामिति।

**भावबोधिनी**

असकारान्त अदस् के दकार से परवर्ती वर्ण का उवर्ण आदेश होता है और दकार का मकार आदेश भी होता है। उदा॰ अमुम् अमू, अमून्। अमुना। अमूभ्याम्। [ अदस् + अम्, 'त्यदादीनामः' सूत्र से अत्व, 'अतो गुणे' से पररूप—अद + अम्, 'अमि पूर्वः' से पूर्वरूप—अदम् इसमें द् के बाद वाले अकार का उकार होता है और दकार का मकार—अमुम्। अदस् + औ, त्यदाद्यत्व, पररूप, वृद्धि—'अदौ' इसमें द् से परे 'औ' का ऊ और द् का म् होने पर—अमू। ऐसे ही सब में समझना चाहिए। ] 'भाव्यमान = किये जाने वाले भी उकार से सवर्णों का ग्रहण करना इष्ट है' इसके अनुसार एकमात्रिक वर्ण का एकमात्रिक = ह्रस्व, द्विमात्रिक का द्विमात्रिक = दीर्घ उ, ऊ आदेश होता है। [ अतः 'अमुम्' में एकमात्रिक और अमू, अमूभ्याम् आदि में द्विमात्रिक होते हैं। ]

असकारान्त अदस् का—इसका क्या फल है? अद इच्छति—इस अर्थ में 'अदस्यति'। [ इसमें क्यच् है। अदस् सकारान्त होने से उत्व, मत्व नहीं होते हैं। ]

❀ अदस् के अनोस्त्र = ओकार, सकार, रेफ को छोड़ कर आदेश कहना चाहिए। ❀ [ सकारान्त का प्रतिषेध तो सूत्र से है ही ] ओकार तथा रेफ जिसके अन्त में उनका भी प्रतिषेध जिसप्रकार हो सके। उदा॰ अदोऽत्र। अदः कुलम् [ नपुंसक लिङ्ग प्रथमा

**तदर्थं केचित्सूत्रं वर्णयन्ति–अः सेर्यस्य सोऽयमसिः–यत्र सकारस्य अकारः क्रियत इति, तेन त्यदाद्यत्वविधाने एतद् अन्यत्र न भवितव्यमेवेति।**

**अद्र्यादेशे कथम्?**

**अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत्।**
**केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते।। (म.भा.)**

**न्यासः**

**अदसोऽनोस्त्र इति वक्तव्यमिति।** ओकारसकाररेफाणां द्वन्द्वः, अविद्यमाना ओस्रोऽस्येति बहुव्रीहिः। अदोऽत्रेति नपुंसकत्वात् 'स्वमोर्नपुंसकात्' इति सोर्लुक्, सकारस्य रुत्वे 'अतो रोरप्लुतादप्लुते' इति रोरुत्वम्, 'आद् गुणः' 'एङः पदान्तादति' इति परपूर्वत्वम्। इदमोकारप्रतिषेधस्य प्रत्युदाहरणम्। **अद इति।** एतत्तु रेफप्रतिषेधस्य। रुत्वे कृते विसर्जनीयः।

**तदर्थमिति।** सकाररेफयोरपि प्रतिषेधो यथा स्यादित्येवमर्थम्। **अः सेर्यस्येति। उच्चारणार्थः।** अकारः सकारस्य यस्येत्यर्थः।

**कथमित्यादि।** यदादसोऽद्र्यादेशः क्रियते, तदेदमदसोऽद्रेश्च पृथग् मुत्वं भवति? उतान्त्यसदेशश्य? आहोस्विदद्र्यादेशविषये न भवत्येव? इत्येतत् पृच्छति।

**पदमञ्जरी**

**अनोस्त्र इति।** ओकारसकाररेफा न विद्यन्ते यस्य तस्येत्यर्थः। **अदः कुलमिति।** विसर्जनीयस्यासिद्धत्वाद्रेफान्तमेतत्।

**तदर्थमिति।** ओकाररेफयोरपि प्रतिषेधार्थम्। **अः सेर्यस्येति।** कोऽर्थः? इत्यत्राह—**यत्रेति।** तेन किं सिद्धं भवति? इत्याह—**तेनेति।**

**कथमद्र्यादेश इति।** अस्मिन्विषये वक्तव्यमस्तीति प्रश्नः, तदाह—**अदसोऽद्रेरिति।** श्लोकस्य पूर्वार्धं व्याचष्टे—**यैरति।** तृतीयं पादं व्याचष्टे—**ये त्विति।** चतुर्थं पादं व्याचष्टे—**येषां त्विति। अमुमुयङिति।**

**भावबोधिनी**

एकवचन में अदस् + अत्र में रुत्व, उत्व गुण, पूर्वरूप होने पर 'अदो' ओकारान्त अदस् है। उत्व, मत्व नहीं होता है। अदस् + कुलम् में सत्व करने पर प्रतिषेध होता है बाद में रेफ का विसर्ग हो जाता है। ]

कुछ विद्वान् इस [ सकार के साथ साथ ओकार तथा रेफ अन्त वाले ] के लिये सूत्र की यह व्याख्या करते है—अ: से: यस्य स: = असि: जहाँ सि = सकार का अकार किया जाता है [ वहीं उत्व मत्व होता है, अन्यत्र नहीं। ] इसलिये 'त्यदादीनामः' सूत्र से अत्व के विधान में ही यह (उत्व, मत्व) होता है और अन्यत्र नहीं ही होना चाहिए। [ इसलिये स् के अत्व से भिन्न स्थल में सकार, ओकार और रेफ जिसके अन्त में होते हैं उनमें यह सूत्र नहीं लगता है। ]

[ टि का ] अद्रि आदेश कर देने पर कैसे होगा?

[ अदस् की टि का अद्रि आदेश 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' (६।३।९२) से करने पर अद् अद्रि = अदद्रि में ] (१) कुछ लोग अदस् और अद्रि इन दोनों में द् से परवर्ती का उत्व और द् का मत्व अर्थात् दोनों का मुत्व उसी प्रकार चाहते हैं जिस प्रकार [ चलीक्लृप्यते में दोनों रेफों का ] लत्व होता है। (२) दूसरे विद्वान् अन्त्य के समीप वाले का ही मुत्व चाहते हैं। (३) कुछ विद्वान् किसी का नहीं चाहते हैं क्योंकि सूत्र में 'असेः' ऐसा देखा जाता है अर्थात् जहाँ सकार का अकार (त्यदाद्यत्व) होता है, वहीं मुत्व होना चाहिए। (म.भा.)

**यैः 'असेः' इति सकारस्य प्रतिषेधः क्रियते, 'अनन्त्यविकारेऽन्त्यसदेशस्य' (व्या.प.६३) इति च परिभाषा नाश्रीयते; तेषामुभयोरपि मुत्वेन भवितव्यम्–अमुमुयङ्, अमुमुयञ्चौ, अमुमुयञ्च इति; यथा-चलीक्लृप्यत इति लत्वम्।**

**ये तु परिभाषामाश्रयन्ति, तेषामन्त्यसदेशस्यैव भवितव्यम्–अदमुयङ्, अदमुयञ्चौ, अदमुयञ्च इति।**

**न्यासः**

**अदसोऽद्रेरित्यादि।** मश्च उश्च मुः, तस्य भावो मुत्वम्। अदसोऽद्रेश्चोभयोरपि केचित् मुत्वमिच्छन्तीत्यर्थः। विनापि हि चकारेण तदर्थो गम्यते। तद् यथा—अहरहर्नयमानो गामश्वं पुरुषं पशुमित्यादौ वाक्ये। कथम्? यथेत्याह—**लत्ववदिति।** यथा चलीक्लृप्यत इत्यत्र 'कृपो रो लः' इति धातो रेफस्य रीशब्दस्य चोभयोरपि लत्वमिच्छिन्ति, तद्वददसः, अद्रेश्च, मुत्वम्। **केचिदन्त्यसदेशस्येति।** अद्र्यादेश इकारान्तः, तस्य केचिदुत्वमिच्छन्ति। स पुनरद्र्यादेशसम्बन्धी दकारो रेफश्च। **नेत्येक इति।** अपरे तु—यदादसोऽद्र्यादेशः क्रियते तदा न भवितव्यमेव मुत्वेनेतीच्छन्ति। अत्रैव कारणमाह—**असेर्हि दृश्यत इति।** अः सेर्यस्य सोऽयमसिः, तस्यासेः। हिशब्दो यस्मादर्थे। यस्मात् सकारस्य स्थाने यस्यादसोऽकारो भवति तस्य पण्डितैर्मुत्वं दृश्यते। न च कृताद्र्यादेशस्यादसः सकारस्य स्थानेऽत्वं भवति; विभक्तेः परस्य निमित्तस्याभावात्। तस्मात् न तस्य मुत्वेन भवितव्यमिति।

**यैरित्यादिना** श्लोकस्य पूर्वार्धं व्याचष्टे। असेरिति सकारस्य प्रतिषेधः क्रियते—नास्य सिर्विद्यत इत्येवं व्याचक्षाणैः। **उभयोरपीति।** अदसः, अद्रेश्च। **अमुमुयङित्यादि।** अदोऽञ्चतीति ऋत्विगादिना सूत्रेणाञ्चतेः क्विन्, 'अनिदिताम्' इति नलोपः, उपपदसमासः, 'उगिदचाम्' इति नुम्, हल्ङ्यादिसंयोगान्तलोपौ। एकवचने 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्—नकारस्य ङकारः। अन्यत्र 'नश्चापदान्तस्य झलि' इत्यनुस्वारः, 'अनुस्वारस्य ययि परसवर्णः' इति परसवर्णो ङकारः, 'आ सर्वनाम्नः' इत्यतः 'सर्वनाम्नः' इत्यनुवर्त्तमाने 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इत्यदःशब्दस्य टेरद्र्यादेशः, पूर्वस्माद् दकारादुत्तरस्योत्वम्, दकारस्य मत्वम्, द्वितीयस्मादपि दकाराद्रेफस्योत्वम्, दकारस्य च मत्वम्—अमुमुयङ्, अमुमुयञ्चाविति भवति। **यथेत्यादिना** लत्ववदित्यस्यार्थमाचष्टे। **चलीक्लृप्यत इति।** 'कृपू सामर्थ्ये'। अत्यन्तं कल्पत इति यङ्, द्विर्वचनम्, 'उरत्' इत्यत्त्वम् 'हलादि शेषः', 'रीगृदुपधस्य च' इति रीक्, 'कुहोश्चुः' इति चुत्वम्, 'कृपो रो लः' इत्युभयोरपि लत्वम्; 'अनन्त्यविकारेऽन्त्यसदेशस्य' इति परिभाषानाश्रयणात्।

**भावबोधिनी**

[ भाष्यस्थ श्लोकवार्तिक की व्याख्या काशिकाकार कर रहे हैं— ] (१) जिनके मत में 'असेः' इससे सकारान्त का प्रतिषेध किया जाता है और 'अनन्त्य के विकार = आदेश में' अन्त्य के सदेश = समीपवाले का किया जाता है—यह परिभाषा नहीं मानी जाती है, उनके मत में तो दोनों अर्थात् अदस् और अद्रि दोनों के दकार और परवर्ती के स्थान पर मुत्व होता है—अमुमुयङ् अमुमुयञ्चौ अमुमुयञ्चः ये रूप उसी प्रकार होते हैं जैसे—चलीक्लृप्यते में दोनों का लत्व होता है। [ अदः अञ्चति इस अर्थ में 'ऋत्विग् दध्यृक्' सूत्र से अञ्च् से क्विन्, सर्वापहारी लोप, 'अनिदितां हल उपधायाः क्ङिति' से न् = ञ् का लोप, उपपदसमास अदस् अच् + सु 'उगिदचां सर्वनामस्थाने' सूत्र से नुम्, हल्ङ्यादि सूत्र से सुलोप, संयोगान्तलोप से च् लोप अदस् अन् 'क्विन्प्रत्ययस्य कुः' से न् का कुत्व ङ् अदस् अङ्। 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' में सर्वनाम की अनुवृत्ति होने से अदस् की टि = अस् का अद्रि आदेश—अद् अद्रि अङ्, यण्—अदद्र्यङ् इसमें द् से परे अ का और दूसरे द् से परे रेफ का उत्व तथा द् का मत्व अमुमुयङ्। द्विवचन में औ परे अद् अद्रि अञ्च् औ यण्—अदद्र्यञ्चौ में भी द् से परे अ और रेफ का उत्व तथा द् का मत्व—अमुमुयञ्चौ। इसी प्रकार अमुमुयञ्चः आदि रूप होते हैं। ]

(२) जो आचार्य [ 'अन्त्यविकारेऽन्त्यसदेशस्य' इस ] परिभाषा को मानते हैं उनके मत में अन्त्य के सदेश = समीप वाले का ही होना चाहिए [ अन्य का नहीं, अतः ] अदमुयङ्, अदमुयञ्चौ, अदमुयञ्चः। [ अदस् + अञ्च् अद्रि आदेश अदद्रिअञ्च्, यण् आदि करने पर अदद्र्यङ् बनते हैं। सूत्र के 'अदसः' इसमें 'स्थाने षष्ठी' मानकर अलोऽन्त्य परिभाषा

**येषां तु 'त्यदाद्यत्वविषय एव मुत्वेन भवितव्यम्' इति दर्शनम्, तेषामत्र न भवितव्यम्–अदद्र्यङ्, अदद्र्यञ्चौ, अदद्र्यञ्च इति।**

**दादिति किम्? अलोऽन्त्यस्य मा भूत्–अमुया, अमुयोः।।**

**न्यासः**

**ये त्वित्यादिना** 'केचिदन्त्यसदेशस्य' इत्यस्यार्थं कथयन्ति। **अदमुयङ्, अदमुयञ्चाविति**। अत्राद्रिदकारादेरुत्तरस्योत्वम्, अद्रिदकारस्यैव च मत्वम्। शेषं पूर्ववत्।

**येषां त्वित्यादिना** 'एके' इत्यादेर्व्याख्यानम्। केषां पुनस्त्यदाद्यत्वविषय एव मुत्वेन भवितव्यम्? ये 'अः सेर्यस्य सोऽयमसिस्तस्यासेः'—इत्येवं वर्णयन्ति तेषाम्। **अत्रेति**। अद्र्यादेशविषये नैव भवितव्यमिति;. त्यदाद्यत्वाभावात्। **अदद्र्यङ्, अदद्र्ययञ्चौ, अदद्र्यञ्च इति**। पूर्ववत्। मुभावस्तु विशेषः।

**अमुया, अमुयोरिति**। अदसस्तृतीयैकवचन ओसि च परतस्त्वदाद्यत्वम्, टाप्, एकादेशः, तस्य 'अन्तादिवच्च' इति पूर्वं प्रत्यन्तवद्भावो दादुदोग्रहणेनैव ग्रहणम्। अत्र यदि दादिति नोच्येत तदा 'आङि चापः' 'ओसि च' इति ङित्येत्वे कृते तस्य चायादेशेऽलोऽन्त्यपरिभाषया यकारस्यैवोत्वं स्यात्। दादिति वचनान्न भवति। उदिति तपरकरणं मुखसुखार्थम्।।८०।।

**पदमञ्जरी**

अदोऽञ्चतीति 'ऋत्विग्' इत्यादिना क्विन्, 'विष्वग्देवयोश्च' इत्यदसष्टेरद्र्यादेशः अदद्रयजिति स्थिते अदःशब्दस्याद्र्यादेशसम्बन्धिनो दकाररेफयोश्च मुत्वम्, सौ 'उगिदचाम्' इति नुम्' हल्ङ्यादिसंयोगान्तलोपौ 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्—नकारस्य ङकारः।

**अमुया, अमुयोरिति**। अत्र यकारस्योत्वप्रसङ्गः।।८०।।

**भावबोधिनी**

उपस्थित होने पर सूत्रार्थ होता है—अदस् का अन्त्य जो द् से परे है उसका उत्व मत्व होता है। उक्त अवस्था में अदस् का जो अन्त्य है वह द् से परे नहीं है और जो द् से परे है वह अदस् का अन्त्य नहीं है, इस प्रकार अन्त्य के स्थान पर बाध होने से अन्त्य के समीप वाले का ही उत्व मत्व होता है। अतः 'अदद्र्यङ् में 'द्र = द् र् का मु = म् उ होने से 'अदमुयङ्' बनता है। पहले वाले 'द' का मुत्व नहीं होता है। ]

(३) जिनका मत है कि 'त्यदाद्यत्व का विषय रहने पर ही मुत्व होता है, अन्यथा नहीं' उनके मत में तो [ अद्रि वाले रूप में ] मुत्व नहीं ही होना चाहिये—अदद्र्यङ्, अदद्र्यञ्चौ, अदद्र्यञ्चः।

दकार से परे का म्—इसका क्या फल है? 'अलोऽन्त्यस्य' से अन्त्य का न होने लग जाय—अमुया, अमुयोः। [ अदस् शब्द के तृतीया एकवचन और ओस् प्रत्यय परे रहते 'त्यदादीनामः' से अत्व और पररूप कर देने के बाद 'अजाद्यतष्टाप्' से टाप् = आ, दोनों अकारों का सवर्णदीर्घ एकादेश, अदा + आ, अदा + ओस् 'अन्तादिवच्च' ] इस सूत्र से पूर्व के प्रति अन्तवद्भाव से एकादेश आ का ही 'द्' से परे ग्रहण होता है, उसी का उत्व और द् का मत्त्व होता है। यदि 'द' से परे यह नहीं रहेगा तो 'आङ चापः' 'ओसि च' इन सूत्रों से एत्व करके अय, आदेश करने पर 'अदय् आ, अदय् ओस' में 'अलोऽन्त्यस्य' से यकार का ही उत्व होने लगेगा। जब 'दात्' दकार से परे' यह है तब अ का ही उत्व और द् का मत्व होने से इष्ट रूप सिद्ध होते है। ]।।८०।।

**३७६९. एत ईद्बहुवचने।।८१।। (४३८)**

**अदसो दकारादुत्तरस्य एकारस्य ईकारादेशो भवति, दकारस्य च मकारो बहुवचने = बहूनामर्थानामुक्तौ। अमी। अमीभिः। अमीभ्यः। अमीषाम्। अमीषु।**

**'बहुवचने' इत्यर्थनिर्देशोऽयम्, पारिभाषिकस्य हि बहुवचनस्य ग्रहणे–अमी इत्यत्र न स्यात्।।**

**३७७०. वाक्यस्य टेः प्लुत उदात्तः।।८२।। (९३)**

**अधिकारोऽयम्। वाक्यस्य टेरिति, प्लुत इति च, उदात्त इति च–एतत्त्रयमप्यधिकृतं वेदितव्यमापादपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामो वाक्यस्य टेः, प्लुतः, उदात्तः–इत्येवं तद्वेदितव्यम्।**

**न्यासः**

**एत ईद्बहुवचने।। बहुवचन इत्यर्थनिर्देशोऽयमिति।** अन्वर्थनिर्देश इत्यर्थः। एतदुक्तं भवति—नेदं पारिभाषिकस्य बहुवचनस्य ग्रहणम्, किं तर्हि? अन्वर्थस्य ग्रहणम्—बहूनामर्थानामुक्तिः = बहुवचनमिति! किं कारणमेवं व्याख्यातम्? इत्याह— **पारिभाषिकस्य हीत्यादि।** यदि पारिभाषिकस्य बहुवचनस्येदं ग्रहणं स्याद्, अमी इत्यत्र न स्यात्। न ह्यत्रैकारात् परं पारिभाषिकं बहुवचनमस्ति। अन्वर्थग्रहणे त्वत्रापि बहूनामर्थानामभिधानमस्तीति सिध्यति। अन्वर्थग्रहणं तु व्याप्तिन्यायाल्लभ्यते—एत इति एकारस्य स्थानिवत्त्वं यथा विज्ञायेत। 'एः' इत्युच्यमाने, इकारस्यापि स्थानित्वमाशङ्क्येत। किञ्च स्याद्? अद्र्यादेशे कृते तदवयवस्येकारस्य यणादेशो बाधितः स्यात्।

**ईदिति** तकारो मुखसुखार्थः।।८१।।

**वाक्यस्य टेः प्लुत उदात्तः।। वाक्यग्रहणमित्यादि।** असति हि वाक्यग्रहणे वाक्ये यावन्ति पदानि तेषां सर्वेषामेव प्लुतः प्रसज्येत। वाक्यग्रहणे त्वन्त्यस्यैव भविष्यति, नानन्त्यस्य। अन्त्यस्यैव हि पदस्य यष्टिः स वाक्यटिर्भवति, न त्वितरस्य। तस्मादनन्त्यस्य पदस्य प्लुतो मा भूत्, अन्त्यस्यैव यथा स्यादित्येवमर्थम्। अनन्त्यस्य कस्मान्न भवति? अनिष्टत्वात्। न हि पदाधिकारस्य निवृत्तिरिष्यते, तथा हि प्रागुक्तम्—पदाधिकारः

**पदमञ्जरी**

**एत ईद्बहुवचने।। अर्थनिर्देशोऽयमिति।** व्याप्तेर्न्यायात्। किं पुनः कारणमेवं व्याख्यायते? इत्याह आह- **पारिभषिके इति।** तदाहि 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषोपस्थानाद्बहुवचने परत एकारस्येत्त्वेन भवितव्यम्, न चात्र बहुवचन परम्।।८१।।

**वाक्यस्य टेः प्लुत उदात्तः।।** अधिकारोऽधिकारान्तरनिवर्त्तक इति वाक्याधिकारेण पदाधिकारस्य निवृत्तिः प्राप्नोति, ततश्च भवन्तौ—इत्यादावपदान्तस्यापि नकारस्य 'नश्छव्यप्रशान्' इति रुत्वं प्रसज्येत? इत्याशङ्क्याह—

**भावबोधिनी**

अदस् के दकार से उत्तरवर्त्ती एकार का ईकार आदेश और दकार का मकार आदेश बहुवचन = बहुत अर्थों के कथन में होता है। उदा० अमी। अमीभिः। अमीभ्यः। अमीषाम्। अमीषु। [ अदस् + जस्, 'त्यदादीनामः' से अत्व, पररूप अद + जस्, जस् का शी = ई, गुण—अदे। द् का मत्व, ए का ईत्व—अमी। इसी प्रकार सभी में मत्व, ईत्व होता है। ]

'बहुवचन में' यह अर्थ का निर्देश है क्योंकि पारिभाषिक बहुवचन का ग्रहण मानने पर 'अमी' इसमें मत्व, ईत्व नहीं हो सकेगा। [ क्योंकि गुण एकादेश हो जाने से बहुवचन = प्रत्यय परे नहीं मिलता है और 'तस्मिन्निति निर्दिष्टे पूर्वस्य' परिभाषा से बहुवचन परे होना अपेक्षित होता है। अतः बहुवचन = बहुतों का कहना—यही अर्थ लेना चाहिए। बहुत्व अर्थ यहाँ है ही। ]।।८१।।

यह अधिकार है। 'वाक्य की टि का', 'प्लुत होता है' और 'उदात्त होता है'—इन तीनों का अधिकार इस पाद की समाप्ति तक समझना चाहिए। इसके आगे जिनको कहेंगे उनमें 'वाक्य की टि का, प्लुत होता है, और उदात्त होता है'—ऐसा समझना चाहिए। आगे कहेंगे—"प्रत्यभिवादेऽशूद्रे' [ ८।२।८८३ प्रत्यभिवादन में शूद्रविषय को छोड़ कर वाक्य की टि का प्लुत होता है

**वक्ष्यति–"प्रत्यभिवादेऽशूद्रे" (८।२।८३) अभिवादये देवदत्तोऽहम्, भो आयुष्मानेधि देवदत्त३"।**

**पदाधिकारोऽनुवर्तत एव।**

**वाक्यग्रहणमनन्त्यस्य पदस्य प्लुतनिवृत्त्यर्थम्।**

**टिग्रहणं व्यञ्जनान्तस्यापि टेरचः प्लुतो यथा स्यात्–अग्निचि३दिति।।**

**न्यासः**

प्रागपदान्ताधिकारादिति। असत्यत्वाच्च; न हि वाक्यग्रहणेन वाक्ये यावन्ति पदानि तेषां सर्वेषाम् एक एव हि वाक्यस्य टिः, स नियोगतः पदस्यापि भवति, अतो न युक्ता वाक्यस्य पदाधिकारनिवृत्त्यर्थता।

अथ टिग्रहणं किमर्थम्, यावतालोऽन्त्यपरिभाषयैवायुष्मानेधि देवदत्त इत्यत्र टेः प्लुतो भविष्यति? इत्यत आह—**टिग्रहणमित्यादि**। असति टि टिग्रहणे यथा 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वग्रहणेन समुत्थापिते 'अचः' इत्येतस्मिन्नचा प्रातिपदिके विशेषिते तस्याजन्तस्यैव ह्रस्वत्वं भवति, नानजन्तस्य—सुवाग् ब्राह्मणकुलमिति; तथेहापि प्लुतग्रहणेन 'अचः' इत्येतस्मिन्नुपस्थापिते सत्यचा वाक्ये विशेषितेऽजन्तस्यैव प्लुतः स्यात्, न व्यञ्जनान्तस्य। टिग्रहणे तु सति टिसंज्ञकेनाज् विशेष्यते, न त्वचा टिसंज्ञकः। यदि ह्यचा टिसंज्ञको विशेष्येत, ततोऽजन्तो यष्टिस्तस्य प्लुतः स्यात्; तथा चानर्थकं हि टिग्रहणं स्यात्। विनापि तेनाचा वाक्ये विशेषिते तस्याजन्तस्य प्लुतो भवन्नलोऽन्त्यपरिभाषयान्त्यस्याचः सिध्यति। तस्माट्टिग्रहणस्य नानर्थक्यमिति। टिसंज्ञकेनाज् विशेष्यते—टिसंज्ञकस्य योऽजिति। एवं च सति व्यञ्जनस्यापि टेर्योऽच् तस्यापि प्लुतः सिध्यति। **अग्निचि३दिति**। अव्यञ्जनान्तस्यापि व्यपदेशिवद्भावेन—देवदत्त३ इति तस्माद्व्यञ्जनान्तस्यापि टेरचः प्लुतो यथा स्यादित्येवमर्थं टिग्रहणं कृतम्।

उदात्तग्रहणं तु स्वरान्तरनिवृत्त्यर्थम्, तच्चानन्तोदात्तं प्रयोजयति; यो ह्यन्तोदात्तस्तत्र स्थानिवद्भावादेवान्तोदात्तो भवति।।८२।।

**पदमञ्जरी**

**पदाधिकारोऽनुवर्तत एवेति**। न हि वाक्यग्रहणेन पदाधिकारः शक्यो निवर्त्तयितुम्; यो हि वाक्यस्य टिः, स सन्नियोगतः पदस्यापि भवत्येव।

अथ वाक्यग्रहणं किमर्थम्, यावता वाक्यस्थस्यैव पदस्य प्रयोगः, न केवलस्य? तत्राह—**वाक्यग्रहणमिति**। 'पदस्य टेः इत्युच्यमाने यावन्ति पदानि तेषां सर्वषां टेः प्राप्नोति, इष्यते च वाक्यपदयोर्यष्टिस्तस्यैव यथा स्यादिति।

**टिग्रहणमित्यादि**। असति टिग्रहणे प्लुतश्रुत्याऽच्परिभाषोपस्थानादचा तदन्तविधौ सति अजन्तस्यैव वाक्यस्यालोऽन्त्यस्य प्लुतः स्यात्; यथा नपुंसकह्रस्वत्वम्—ग्रामणि कुलमित्यादौ भवति, न पुनः सुवागित्यादौ; तद्वत्। टिग्रहणे तु सति तदुपादानसामर्थ्याट्टिना अज्विशेष्यते, न त्वचा टिरिति हलन्तस्यापि प्लुतः सिध्यति।।८२।।

**भावबोधिनी**

और उदात्त होता है। ] 'अभिवादये देवदत्तोहम्' भो आयुष्मान् एधि देवदत्त ३। (मैं देवदत्त आपका अभिवादन करता हूँ। हे देवदत्त आयुष्मान् हो जाओ। यहाँ अभिवादन के उत्तर में जो प्रत्यभिवादन वाक्य है उसमें देवदत्त अन्त में है, इसकी टि = अन्त्य अच् प्लुत = त्रिमात्रिक और उदात्त होता है—देवदत्त३।

'पदस्य' इस अधिकार की भी अनुवृत्ति होती ही है।

वाक्य का ग्रहण अनन्त्य = अन्त्य से भिन्न पद के प्लुत की निवृत्ति के लिये है अर्थात् वाक्य के अन्तिम पद की टि का ही प्लुत होता है।

टि का ग्रहण इसलिये है कि व्यञ्जनान्त शब्द की भी टि के अच् का प्लुत जैसे हो सके—अग्निचि३त्। [ यदि टि न रहता तो अन्त में अच् न होने से इसका प्लुत सम्भव नहीं था। उदात्त का ग्रहण इसलिये है कि कोई अन्य स्वर नहीं होता है। ]।।८२।।

## ३७७१. प्रत्यभिवादेऽशूद्रे।।८३।। (९४)

**प्रत्यभिवादो नाम यदभिवाद्यमानो गुरुराशिषं प्रयुङ्क्ते, तत्राशूद्रविषये यद्वाक्यं वर्त्तते तस्य टेः प्लुत उदात्तो भवति। अभिवादये देवदत्तोऽहम्, भो आयुष्मानेधि देवदत्त३।**

**अशूद्र इति किम्? अभिवादये तुषजकोऽहम्, भो आयुष्मानेधि तुषजक।**

**❀ स्त्रियामपि प्रतिषेधो वक्तव्यः ❀ (म.भा.)। अभिवादये गार्ग्यहम्, भो आयुष्मती भव गार्गि।**

**न्यासः**

**प्रत्यभिवादेऽशूद्रे।। यदभिवाद्यमानो गुरुरित्यादि।** अत्र सामान्योपक्रमेण विशेषस्यानभिधानाद् यदिति नपुंसकलिङ्गेन निर्देशः। **आयुष्मानेधि देवदत्त३ इति।** इदमत्रोदाहरणम्; प्रत्यभिवादवाक्यत्वात्। अत्राभिवादये देवदत्तोऽहमित्येतत्तु गुरोरभिवाद्यमानतां दर्शयितुमुपन्यस्तम्। अभिवाद्यमानो गुरुर्यामाशिषं प्रयुङ्क्ते स प्रत्यभिवादः। तत्रावश्यं गुरोरभिवाद्यमानता दर्शयितव्या; अन्यथा प्रत्यभिवादो न गम्येत। **एधीति।** भवेत्यर्थः। 'अस भुवि', लोट्, मध्यमपुरुषैकवचनम्, 'सेर्ह्यपिच्च', 'घ्वसोरेद्धावभ्यासलोपश्च' इत्येत्वम्, 'श्नसोरल्लोपः' इत्यकारलोपः, 'हुझल्भ्यो हेर्धिः' इति धिरादेशः।

**वक्तव्य इति। व्याख्येय** इत्यर्थः। तत्रेदं व्याख्यानम्—'सिपि धातो रुर्वा' इत्यतो मण्डूकप्लुतिन्यायेन वेत्यनुवर्तते, सा च व्यवस्थितविभाषा, तेन स्त्रियां न भविष्यतीति।

**असूयकेऽपीति।** असूयतीत्यसूयकः। यो गुरुमसाध्व्या प्रवृत्त्या सामर्षं करोति स उच्यतेऽसूयक इति। **तस्मिन्नित्यादिना** प्रतिषेध इष्यमाणोऽपि न वक्तव्य इति दर्शयति। यदा ह्यसावभिवादयितासूयकत्वेन न निर्ज्ञायते,

**पदमञ्जरी**

**प्रत्यभिवादेऽशूद्रे।। प्रत्यभिवादो नामेत्यादि।** गुरुरित्युपलक्षणम्। त्रिवर्षपूर्वः श्रोत्रियोऽभिवादमर्हति, **अभिवाद्यमानः**—आशिषं वाच्यमानो **गुरुराशिषं प्रयुङ्क्त** इति यत् स प्रत्यभिवादः, न प्रत्युक्तिमात्रम्; तत्रैव लोके प्रसिद्धत्वात्। तद्यथा 'अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः' इति। **तत्रेति।** आशीर्वादविषये। कीदृशे? **अशूद्रविषये।** अशूद्रो विषयो यस्य स तथोक्तः, अभिवादने सति प्रत्यभिवाद इति। तं तावदुदाहरति— **अभिवादय इति।** नमस्कारपूर्वमाशिषं वाचयामीत्यर्थः। एवमभिवादितो गुरुः प्रत्यभिवदति—**आयुष्मानिति।** आयुष्मत्त्वस्य विधेयत्वात्सम्बोधनविभक्त्यभावः। **एधीति।** अस्तेर्लोटि सिपो हिः। भवेत्यर्थः।

'आयुष्मान्भव सौम्येति विप्रो वाच्योऽभिवादने' (मनु०) इति मानवे भवेत्यर्थग्रहणम्, तेन पर्यायैरपि प्रत्यभिवादो भवति। ननु च तत्र 'अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः[१]' इत्युक्तम्, स कस्मादिह न विधीयते? उच्यते; यदर्थाभिधान उपयुज्यते तदेव व्याकरणे वक्तव्यम्; अकारस्तु केवलदृष्टार्थः प्रयुज्यते, न त्वस्य कश्चिदर्थोऽस्ति।

**भावबोधिनी**

प्रत्यभिवाद—इसका अर्थ है अभिवादित किया जाने वाला गुरु आदि आशीर्वाद के लिये जिस वाक्य का प्रयोग करता है, उसमें अशूद्रविषय = शूद्र से भिन्न के विषय में जिस वाक्य का प्रयोग किया जाता है उसकी टि का प्लुत और उदात्त होता है। उदा० अभिवादये देवदत्तोऽहम्। [ यह अभिवादन वाक्य है। ] भो आयुष्मान् एधि देवदत्त३। [ यह प्रत्यभिवाद वाक्य है। इसमें टि = अन्त्य अच् का प्लुत होता है। चूँकि वाक्य का घटक पद होता है। अतः वाक्य और पद की टि का प्लुत और उदात्त किया जाता है। ]

अशूद्रविषय में—इसका क्या फल है? 'अभिवादये तुषजकोऽहम्, भो आयुष्मान् एधि तुषजक। [ यहाँ प्लुत नहीं होता है। क्योंकि तुषजक शूद्र के लिये प्रयुक्त है ]

❀ स्त्री में भी प्लुत का प्रतिषेध कहना चाहिए। ❀ उदा० अभिवादये गार्गी अहम्, भो आयुष्मती भव गार्गि। [ यहाँ गार्गी स्त्री का प्लुत नहीं होता है। ]

---

१. मनु० २।१२५।

**असूयकेऽपि केचित् प्रतिषेधमिच्छन्ति–अभिवादये स्थाल्यहं भोः, आयुष्मानेधि स्थालिन्! यावच्च**

**न्यासः**

तदा तेनाभिवाद्यो गुरुः प्रत्यभिवादने तस्य प्लुतं करोत्येव। यदा तु 'असूयकोऽयं मा विहेडयितुकामः' इत्येवं विज्ञातो भवति, तदात्र प्रत्यभिवादना नास्त्येवेति किं प्रतिषेधेन? कथं पुनर्ज्ञायते—तत्रासूयकत्वेन निर्ज्ञाते प्रत्यभिवादो नास्ति? इत्याह—**तथा चेत्यादि**। केनाप्यविनीतेनोपगम्याविधिनाबिप्रायेणाभिवादयेऽहं भोः स्थालीत्येवमभिवादिते गुरुस्तस्यासूयकत्वमज्ञात्वा स्थालिञ्शब्दोऽयमस्य संज्ञेति मत्वा प्रत्यभिवादयन् प्लुतं प्रत्युक्तवान्—**आयुष्मानेधि स्थालि३न्निति**। अथ सोऽविनीत उक्तवान्—नैष मम संज्ञा, मया दण्डिन्यायो विवक्षितः। ततो गुरुः प्लुतरहितं प्रत्यभिवादनं कृतवान्—**आयुष्मानेधि स्थालिन्निति**। पुनः स उक्तवान् न मया दण्डिन्यायो विवक्षितः, संज्ञा ममैषेति; अथ स गुरुरसूयकत्वमस्य विज्ञायोक्तवान्—**असूयकसस्त्वं जाल्म, न त्वं प्रत्यभिवादमर्हसि, भिद्यस्व वृषल स्थालिन्निति**।

अथाभिवाद्यमानो यदा देवदत्तः कुशल्यसि, देवदत्तायुष्मानेधीत्येवं प्रत्यभिवादं प्रयुङ्क्ते, तदा कस्मात् प्लुतो न भवति? इत्याह—**अभिवादनवाक्य इत्यादि**। अभिवाद्यतेऽनेनेत्यभिवादनम्, अभिवादनञ्च तद्

**पदमञ्जरी**

अन्ये तु मानवमन्यथा व्याचक्षते—अस्याभिवादयितुर्नाम्नोऽन्ते = अवसाने योऽकारः स प्लुतो वाच्यः, अकार इत्युपलक्षणम्, पूर्वाक्षरश्च प्लुतो वाच्यः, हलन्तविषयमेतत्, अक्षर इत्यचमाह, हलन्तेष्वन्त्यात्पूर्वोऽच् प्लुतो वाच्य इति, उभाभ्यामिति ताभ्यां टेः प्लुत इत्युक्तं भवति।

वयं तु ब्रूमः-पृथगेवाकारः प्रयोक्तव्य इति, कुतः? अक्षरार्थस्त्वयम्। किञ्च **भरतशास्त्रे** प्रसङ्गेन प्रत्यभिवादप्रकारे वर्ण्यमाने पृथगकारप्रयोगो दर्शितः। तस्मादयमत्र प्रत्यभिवादनप्रयोगः—आयुष्मान् भव सौम्य देवदत्त ३ अ, अग्निचि३त् अ इति। एजन्तेषु 'एचोऽप्रगृह्यस्य' इत्यस्मिन्विधौ सत्यकारे परतः, 'तयोर्य्वावचि संहितायाम्' इति यणपि भवति पिनाकपाण३य, हर३य, शम्भ३व, विष्ण३व+इति। प्रत्यभिवादे शर्मवर्मशब्दयोः प्रयोगं नेच्छन्ति। 'शर्मान्तं ब्राह्मणस्य स्याद्वर्मान्तं क्षत्रियस्य तु'[1]—इत्यनेन नाम्न्यनन्तर्भूतयोरेव तयोः प्रयोग उक्तः, न तु नाम्न्यन्तर्भावः।

**तुषजक इति**। कुत्सिते कः, 'शूद्रस्य तु जुगुप्सितम्' इति वचनात् एवंविधं शूद्रनाम्।

**स्त्रियामपीति**। अस्त्रीशूद्रयोरिति वक्तव्यमित्यर्थः। केचिदाहुः—न स्त्र्यभिवादयते, पादोपसंग्रहणाद्येव तु

**भावबोधिनी**

असूयक = अविनीत के विषय में भी कुछ विद्वान् प्रतिषेध चाहते हैं—अभिवादये स्थाली अहं भोः, आयुष्मान् एधि स्थालिन्? जब तक उसका असूयकत्व ज्ञात नहीं होता है तभी तक प्रत्यभिवादन वाक्य है। किन्तु जब असूयकत्व रूप से ज्ञात हो जाता है तब तो प्रत्यभिवाद वाक्य ही नहीं रह पाता है, तब कहाँ से प्लुत होगा? जैसाकि कहा गया है—'असूयकः त्वं जाल्म, न त्वं प्रत्यभिवादनम् अर्हसि, भिद्यस्व वृषल स्थालिन्। [ अरे दुष्ट तू असूया करनेवाला है। तू प्रत्यभिवादन का पात्र नहीं है, अरे स्थाली तू फूट = टूट जा ]

**विमर्श**—भाव यह है कि किसी असूयक = अविनीत ने उपहास करने की इच्छा से यह कहा—"अभिवादये स्थाली अहं भोः।" यह अभिवादन सुनकर विना सोचे ही आचार्य ने प्रत्यभिवादन में कहा 'आयुष्मान् एधि स्थालिन्'। यह बोलते समय आचार्य या गुरु को उपहास का ज्ञान नहीं है। गुरु आदि ने संज्ञा मानकर 'स्थालिन्' की टि का प्लुत कर दिया। अब असूयक कहता है कि—स्थाली यह मेरी संज्ञा = नाम नहीं है, इसमें दण्डिन्याय विवक्षित है—स्थालम् अस्य अस्ति' इस अर्थ में 'अत इनिठनौ' सूत्र से मत्वर्थक इनि प्रत्यय है, यौगिक है।' यह सुनकर गुरु ने प्लुतरहित प्रत्यभिवादन का प्रयोग किया—'आयुष्मान् एधि स्थालिन्।' इस पर वह असूयक = अविनीत, धृष्ट कहता है—'दण्डिन्याय मुझे विवक्षित नहीं है अर्थात् स्थालम् अस्ति अस्य इस अर्थ में इनि प्रत्यय करके यह 'स्थालिन्' यौगिक नहीं है अपि तु मेरी संज्ञा = नाम = रूढ़ ही है। अब उसकी अविनीतता जान कर क्रुद्ध होकर गुरु आशीर्वाद न देकर शाप ही देता है—"अरे नीच तू उपहास करने वाला अविनीत है, तू प्रत्यभिवादन = आशीर्वाद के योग्य नहीं है। अरे शूद्र स्थालिन् तू छिन्न-भिन्न हो जाय।

**तस्यासूयकत्वं न ज्ञायते, तावदेव प्रत्यभिवादवाक्यम्। तस्मिंस्त्वसूयकत्वेन निर्ज्ञाते प्रत्यभिवाद एव नास्ति, कुतः प्लुतः! तथा चोक्तम्–असूयकस्तवं जाल्म, न त्वं प्रत्यभिवादनमर्हसि, भिद्यस्व वृषल स्थालिन्निति (म.भा.)।**

**अभिवादनवाक्ये यत् सङ्कीर्तितं नाम, गोत्रं वा, तद् यत्र प्रत्यभिवादनवाक्यान्ते प्रयुज्यते तत्र प्लुतिरिष्यते। इह न भवति–देवदत्त कुशल्यसि। देवदत्त आयुष्मानेधीति।**

**न्यासः**

वाक्यञ्चेत्यभिवादनवाक्यम्। तत्र तावत् सङ्कीर्त्तितम् = संशब्दितं नाम देवदत्तोऽहमित्येवम्, गोत्रम् = वात्स्योऽहमित्येवम्। यद् यत्र प्रत्यभिवादवाक्यस्यान्ते = अवसाने प्रयुज्यते तत्रायं प्लुत इष्यते। देवदत्त कुशल्यसीत्यादौ तु यदभिवादनवाक्ये सङ्कीर्तितं नाम देवदत्तशब्दः, तत् प्रत्यभिवादनवाक्यस्यादौ प्रयुक्तम्, नावसाने। तस्मात् प्लुतो न भवति। कुतः पुनरेतल्लभ्यते? वेत्यनुवृत्तेः, व्यस्थितविभाषाविज्ञानाच्च, प्राधान्याद्वा। इह हि प्रधाने कार्यसम्प्रत्ययात् प्रधानस्य वाक्यस्यान्ते टेः प्लुतेन भवितव्यम्। प्राधान्यञ्च पदस्यार्थद्वारकम्। प्रधानस्यार्थस्य यद्वाचकं पदं तत् प्रधाने चार्थोऽभिवादयिता, तदनुग्रहार्थत्वात् प्रत्यभिवादस्य। तथा ह्यभिवादयितुरनुग्रहीतार्थं गुरुः प्रत्यभिवादं प्रयङ्क्ते। तस्मादभिवादयिता संस्कार्यः, कुशलिताऽयुष्मत्तादीनि तस्यैव

**पदमञ्जरी**

करोतीति; अन्ये त्वाहुः—अभिवादयते, न तु स्वं नाम गोत्रं वा गृह्णातीति; द्वयोरपि पक्षयोः स्त्रीप्रतिषेधो न विधेयः। ये तु स्त्रीणामपि नामगोत्राभ्यामभिवाद-प्रत्यभिवादाविच्छन्ति तन्मतेनायं प्रतिषेधः।

असूयतीत्यसूयकः = अविनीतः। **तस्मिंस्त्वित्यादिनाऽ**सूयके प्रतिषेधं प्रत्याचष्टे। यावदसावसूयकत्वेन ज्ञातो न भवति तावत्प्लुतं करोत्येव, यदा त्वसूयकोऽयं मामुपहसितुकाम इति जानाति, तदा नैवाऽऽशीर्वादरूपं प्रत्यभिवादं प्रयुङ्क्ते, प्रत्युत शापमेव ददातीति भाष्ये दर्शितमित्याह—**तथा ह्युक्तमिति**। गुरुणा स्थालिशब्दं संज्ञां मत्वा प्लुते प्रयुक्ते, असूयक आह—नैषा मम संज्ञेति, किन्तु दण्डिन्यायो मया विवक्षितः—स्थालमस्यास्तीति स्थालीति; तदपि तत्त्वं मन्वानो गुरुः पुनरपि प्लुतरहितं प्रत्यभिवादनं कृतवान्—**आयुष्मानेधि स्थालिन्निति**। पुनरसूयक आह—न दण्डिन्यायो मया विवक्षितः, संज्ञैवैषा ममेति; ततोऽसूयकत्वं निर्ज्ञाय कुपितः सन् गुरुराह—**असूयकस्त्वमित्यादि। भिद्यस्वेति**। कर्मकर्त्तरि यक्। **स्थालिन्निति पाठः**, न तु स्थालीवदिति।

**अभिवादनवाक्ये यत् सङ्कीर्तितमिति**। येन वाक्येनाभिवाद्यते तदभिवादनवाक्यम्। नाम = संज्ञा। गोत्रम् = अपत्यप्रत्ययान्तः शब्दः। वाक्यस्य टेः प्लुतविधानादेवमुक्तम्। **तत्र प्लुतिरिष्यत इति। इष्टिरेवेयमिति** केचित्। अन्ये त्वाहुः—अभिवादनं तावन्नामगोत्राभ्यामिति समाचारप्राप्तम्। प्लुतोऽप्ययं प्रधाने कार्यसंप्रत्ययात्तस्यैव वाक्यान्ते वर्त्तमानस्य भवति, पदस्य च प्राधान्यमर्थद्वारकम्। प्रधानमर्थोऽभिवादयिता, तदनुग्रहार्थत्वात्प्रत्यभिवादस्य। कुशलित्वादिकं तु तस्यैव संस्कारकम्। एवम्—एधीत्याख्यातवाच्या साध्यरूपतया प्रधानभूतापि क्रिया संस्कारकत्वेन विवक्षितत्वादप्रधानमेव। तस्मात् प्रधानभूतस्याभिवादयितुर्यदुपस्थापकं पदं तस्य प्लुतः। तच्च नामगोत्रं चेति।

**भावबोधिनी**

भाष्य में वार्त्तिक है—"अशूद्रस्यासूयकेषु" परन्तु काशिकाकार ने 'स्त्रियामपि प्रतिषेधो वक्तव्यः' ऐसा लिखकर असूयक में प्रत्यभिवादन का प्रसङ्ग ही अस्वीकार कर दिया है अतः प्रतिषेध की आवश्यकता नहीं मानी है। यह इनकी सूक्ष्मदृष्टि का परिचायक है।

(अनु॰) अभिवादन वाक्य में जो संकीर्तित (प्रचलित) नाम [ जैसे देवदत्त आदि ] अथवा गोत्रज नाम [ जैसे वात्स्यः, गार्ग्यः आदि ] यह जहाँ प्रत्यभिवादन वाक्य के अन्त में प्रयुक्त होता है उसी में [ टि का ] प्लुत करना इष्ट है। इसलिये यहाँ प्लुत नहीं होता है—'देवदत्त! कुशली असि!' 'देवदत्त, आयुष्मान् एधि।' [ यहाँ नाम = संज्ञा वाक्य के अन्त में नहीं है। अन्य शब्द का प्लुत नहीं होता है। भाव यह है कि अन्त में प्रयुक्त नामों की ही टि का प्लुत होना भाष्यकार को अभिमत है। ]

**❀ भोराजन्यविशां वेति वक्तव्यम् ❀ (म.भा.)। भो अभिवादये देवदत्तोऽहम्, आयुष्मानेधि देवदत्त भो३ः, आयुष्मोनेधि देवदत्त भोः। राजन्य–अभिवादये इन्द्रवर्माहं भोः, आयुष्मानेधीन्द्रवर्म३न्, आयुष्मानेधीन्द्रवर्मन्। विश्–अभिवादये इन्द्रपालितोऽहं भोः, आयुष्मानेधीन्द्रपालित३, आयुष्मानेधी-पालित।।**

## ३७७२. दूराद्धूते च ।।८४।। (९५)

**दूराद्धूते यद्वाक्यं वर्तते तस्य टेः प्लुतो भवति स चोदात्तः। आह्वानम्–हूतम्, शब्देन सम्बोधनम्। आगच्छ भो माणवक देवदत्त३। आगच्छ भो माणवक यज्ञदत्त३।**

### न्यासः

संस्कारकाणि। अतोऽभिवादयिता संस्कार्यत्वात् प्रधानम्, तस्य वाचकं पदं संज्ञाशब्दो गोत्रशब्दश्चेति तस्यैव वाक्यान्ते वर्तमानस्य टेः प्लुतो भवति। यद्यपि तिङन्तवाच्योऽर्थः साध्यः, न तु तस्य साध्यत्वमिह प्राधान्येनाश्रितम्, किं तर्हि? संस्कारकत्वमेव, तस्मान्न तस्यापि प्राधान्यम्।

**भोराजन्यविशामित्यादि**। भो इति—स्वरूपग्रहणम्, राजन्य इति—क्षत्रियनाम्नः, विश इति वैश्यनाम्नः। अत्र भोःशब्दस्याप्राप्ते विभाषा, असंज्ञागोत्रशब्दत्वात्। इतरेषां तु प्राप्ते; संज्ञाशब्दत्वात्।।८३।।

**दूराद्धूते च**।। **दूरादिति**। आरात्। 'दूरान्तिकेभ्यो द्वितीया च' इति पञ्चमी। हानम् = हूतम्। भावे निष्ठा।

दूरादित्युच्यते, दूरञ्चानवस्थितम्। यदेवालस्यापहतं प्रति दूरं भवति तदेवोत्साहसम्पन्नं प्रत्यन्तिकम्। एवं हि कश्चित् कश्चिदाह—य एष पार्श्वतः करकस्तमानयेति। स आह—उत्थाय गृहाण, दूरं गन्तुं न शक्ष्यामीति। अतो

### पदमञ्जरी

**भोराजन्यविशां वेति**। भो इति स्वरूपग्रहणम्, इतयोस्तु तन्नाम्ना ग्रहणम्। तत्र भोःशब्दस्यासंज्ञागोत्र-शब्दत्वादप्राप्ते विभाषा, इतरत्र प्राप्ते; संज्ञाशब्दत्वात्।।८३।।

**दूराद्धूते च**।। दूरादिति 'दूरान्तिकार्थेभ्यो द्वितीया च' इति पञ्चमी, हूतम् = ह्वानम्, भावे निष्ठा। दूरादित्युच्यते, दूरं चानवस्थितम्, तदेव हि कञ्चित्प्रत्यतिदूरं कञ्चित्प्रत्यन्तिकं भवति। एवं हि कश्चित्कञ्चिदाह—य एष पार्श्वतः करकस्तमानयेति; स आह—उत्थाय गृहाण, दूरे न शक्नोमि गन्तुमिति; अपर आह—दूरं मथुरायाः

### भावबोधिनी

❀ भो, राजन्य और विश = वैश्य का विकल्प से प्लुत होता है।' ❀ क्रमशः उदा॰ भो अभिवादये देवदत्तोऽहम् [ इस अभिवादन के प्रत्यभिवादन में वाक्य है— ] आयुष्मानेधि देवदत्तभो३ः 'प्लुतरहित भी होता है—आयुष्मान् एधि देवदत्त भोः। राजन्य = क्षत्रिय के नाम का उदा॰ अभिवादये इन्द्रवर्मा अहं भोः, [ प्रत्यभिवादन में ] आयुष्मान् एधि इन्द्रवर्म३न्। [ पक्ष में प्लुतरहित भी ] आयुष्मान् एधि इन्द्रवर्मन्। विट् = वैश्य केनाम का उदा॰ अभिवादये इन्द्रपालितोऽहं भोः, आयुष्मान् एधि इन्द्रपालित३। [ पक्ष में प्लुतरहित भी ] आयुष्मान् एधि इन्द्रपालित। [ एधि = भव हो जाओ। ]।।८३।।

दूर से बुलाने में जिस वाक्य का प्रयोग होता है उसकी टि का प्लुत होता है और वह उदात्त होता है। आह्वान = बुलाना = हूत, शब्द द्वारा सम्बोधित करना है। उदा॰ आगच्छ भो माणवक देवदत्त३। आगच्छ भो माणवक यज्ञदत्त३। [ हे ब्रह्मचारी देवदत्त आओ। हे ब्रह्मचारी यज्ञदत्त आओ। दूर से बुलाना प्रतीत होने पर ही प्लुत होता है। ]

**दूरं यद्यप्यपेक्षाभेदादनवस्थितम्, तथापि हूतापेक्षं यत्तदाश्रीयते इति यत्र प्राकृतात् प्रयत्नाद्यत्नविशेष आश्रीयमाणे शब्दः श्रूयते-तद् दूरम्।**

**हूतग्रहणं च सम्बोधनमात्रोपलक्षणार्थं द्रष्टव्यम्। तेन यत्राप्याह्वानं नास्ति, तत्रापि प्लुतिर्भवति–सक्तून्पिब देवदत्त३। पलायस्व देवदत्त३ इति।**

**अस्याश्च प्लुतेरेकश्रुत्या समावेश इष्यते।**

### न्यासः

दूरस्यानवस्थितत्वान् न ज्ञायते—कस्यामवस्थायां प्लुत्या भविव्यमिति। अत आह—**दूरमित्यादि**। हूतम् = ह्वानम्, तदपेक्षं यद् दूरं तदिहाश्रीयते। इतिकरणो हेतौ। यस्माद् धूतापेक्षमिह दूरमाश्रीयते तस्मात् प्राकृतात् = प्रकृतौ भवात् प्रयत्नाद् यः प्रयत्नविशेषः प्राकृतयत्नादधिकस्तस्मिन्नाश्रीयमाणे यत्र शब्दाह्वानं तच् श्रूयते तद् दूरम्। ततो न भवति दूरस्यानवस्थितत्वमित्यभिप्रायः।

अथेहं कथं प्लुतः स्यात्—सक्तून् पिब देवदत्त३ इति? न शब्दमात्रं हूतम्, अपि तु शब्दविशेषः, येन परत आगमने नियुज्यते स शब्दविशेषो हूतम्, न च तदिहास्ति? इत्याह—**हूतग्रहणं चेत्यादि**। सम्बोधनं शब्दसाधनं हूतम्। चशब्दस्तस्मादित्यर्थे। तेन तत् साध्यं सम्बोधनं लक्ष्यत इति हूतग्रहणं सम्बोधनमात्रोपलक्षणं वेदितव्यम्। इहायं प्लुतोऽपि दूरात् सम्बोधने विधीयते, एकश्रुतिरपि; 'एकश्रुति दूरात् सम्बुद्धौ' इति; तत्रैवमेकत्र प्राप्नुवतामनेकेषां बाधाविकल्पसमुच्चयानामन्यतमेन भवितव्यम्, अत्र न ज्ञायते—किमेतयोः समुच्चयो भवति? उत विकल्पः? आहोस्विदन्यतरस्य बाधेति? तत् परिज्ञानायाह—**अस्याश्चेत्यादि**। बाधया तावन्न भवितव्यम्;

### पदमञ्जरी

पाटलिपुत्रमिति, स आह—न दूरमन्तिकमिति, तदेवं दूरस्यानवस्थितत्वान्न ज्ञायते-कस्यामवस्थायां प्लुत्या भवितव्यमिति? अत आह—**दूरमित्यादि**। ह्वानम् = हूतम्, तदपेक्षया यद्दूरं तदिहाश्रीयते; दूराद्धूतमित्यन्वयात्। इतिकरणो हेतौ, न तु देशमपेक्ष्य देशान्तरं दूरं भवति किमिदहं हूतापेक्षं दूरम्? इत्यहह आह—**यत्रेति**। यत्र हूते, प्राकृतात्स्वभावसिद्धात्। एवंविधे हूते देशद्वारकहूतापेक्षमपि दूरत्वमस्तीति भावः।

**हूतग्रहणं चेति**। येन पर आगमने नियुज्यते तद्धूतम्, तच्च नान्तरेण सम्बोधनं सम्भवति, सम्बोधितो हि पुरुष आगमने पानादौ वा नियुज्यते, अतो नान्तरीयकत्वाद्धूतेन सम्बोधनमात्रं लक्ष्यते। उपलक्षणे प्रयोजनमाह—**तेनेति**।

### भावबोधिनी

अपेक्षा के भेद से 'दूर' का स्वरूप सुनिश्चित नहीं है तथापि हूत = बुलाने की अपेक्षा वाला जो है उसका आश्रयण किया जाता है, जहाँ पर स्वाभाविक प्रयत्न की अपेक्षा और अधिक यत्न विशेष का आश्रयण लेने पर शब्द सुना जाता है वह दूर है, अर्थात् सामान्य से कुछ अधिक प्रयास करने पर जहाँ शब्द सुनाई दे, वह दूर है। ]

हूत का ग्रहण सम्बोधनमात्र का उपलक्षण है [ न की केवल बुलाने का। ] इस कारण जहाँ आह्वान = बुलाना नहीं है [ केवल सम्बोधन है ] वहाँ भी प्लुत होता है, जैसे—सक्तून् पिब देवदत३। पलायस्व देवदत्त३।

इस प्लुति का एकश्रुति के साथ समावेश इष्ट है। [ अतः 'एकश्रुति दूरात् सम्बुद्धौ' के साथ विरोध नहीं होता है। [ वास्तव में ऐसा होना चाहिए कि वाक्य की 'टि' का प्लुत और उदात्त हो, शेष की एक श्रुतिहो। क्योंकि उदात्त भी हो और एकश्रुति भी-ऐसा ठीक नहीं है। ]

**दूरादिति किम्? आगच्छ भो माणवक देवदत्त।**

**दूरादाह्वाने[१] वाक्यस्यान्ते यत्र सम्बोधनपदं भवति तत्रायं प्लुत इष्यते। तेनेह न भवति–देवदत्त आगच्छ[१]।।**

## ३७७३. हैहेप्रयोगे हैहयोः।।८५।। (९६)

**हैहेप्रयोगे दूराद्धूते यद्वाक्यं वर्त्तते तत्र हैहयोरेव प्लुतो भवति। है३ देवदत्त, हे३देवदत्त। देवदत्त है३, देवदत्त हे३।**

### न्यासः

समानविषयत्वात्। विषयभेदे हि सति बाध्यभाधकभावो भवति, तद् यथा—'कर्मण्यण्', 'आतोऽनुपसर्गे कः' इति; अत्र ह्येकस्य विशेषो विषयः, अपरस्य सामान्यमित्यस्ति विषयभेदः। अनयोस्तु विशेषो नास्तीत्ययुक्ता बाधा। विकल्पोऽप्ययुक्तः असहप्राप्तेः। सहप्राप्तयोर्हिविकल्पो भवति, यथा—तव्यदादानीम्। न चैकश्रुत्यपेक्ष्येह सहप्राप्तिरस्ति; प्लुतस्यासिद्धत्वात्। तस्मात् पारिशेष्यात् समावेश एव भवति। समावेशः पुनरत्रैकस्मिन् वाक्ये प्रवृत्तिः, न त्वेकस्मिन्नवयवे; विरुद्धयोरेकस्मिन् प्रवृत्तेरसम्भवात्। वाक्यस्य त्वनेकावयवात्मकत्वात् टेरचः प्लुतो भवति। अवशिष्टस्य त्वेकश्रुतिरिति युज्यते समावेशः।।८४।।

**हैहेप्रयोगे हैहयोः**।। पूर्वसूत्रेण प्राधान्याद् हूयमानस्यैव प्लुतो विहितः। प्राधान्यं तु तस्य तदभिमुखीकरणाय वाक्यप्रयोगात्। अतो हैहयोर्न प्राप्नोति, एतदर्थोऽयमारम्भः।

### पदमञ्जरी

इहायं प्लुतो दूरात्संबोधने विधीयते, एकश्रुतिरपि तत्रैव'एकश्रुति दूरात्सम्बुद्धौ' इति, एकस्मिंश्च विषये प्राप्तानां बाधविकल्पसमुच्चयानामन्यतमेन भवितव्यम्, तदिह को भवति? इत्याह—**अस्याश्चेति**। बाधस्तावद्विषयभेदे सति भवति, यथा काणोः; तत्र हि कस्य विशेषो विषयः, अणस्तु धातुसामान्यम्; इह तु नैवं विषयभेदोऽस्ति। विकल्पोऽपि सहप्राप्तयोर्भवति, यथा तव्यदादीनाम्। इह चैकश्रुतौ कर्तव्यायां प्लुतस्यासिद्धत्वात्सहप्राप्तिर्नास्ति, तस्मात्पारिशेष्यात्समावेश एव भवति। एकस्मिन्वाक्ये द्वयोरपि युगपत्प्रवृत्तिरित्येतावता चात्र समावेशवाचोयुक्तिः, तत्त्वतस्तु वाक्यस्य टेः प्लुत उदाहृतः, परिशिष्टस्यैकश्रुत्यमिति बाध एव।।८४।।

**हैहेप्रयोगे हैहयोः**।। पूर्वेण हूयमानार्थस्य वाक्यान्तस्य पदस्य टेः प्लुतविधानादतदर्थयोहैहयोर्न प्राप्नोतीति वचनम्। **हैहयोरेवेति**। एवकारः पौनर्वचनिकः-हैहयोः प्रयोगे तयोरेव हैहयोरिति। अन्य तु—हैहयोरेव भवति, न हूयमानार्थस्य वाक्यस्य टेरिति वर्णयन्ति। तदेतत्कथं लभ्यते? अपकृष्य विधानात्। हूयमानार्थस्य प्लुते प्राप्ते

### भावबोधिनी

दूर से आह्वान में—इसका क्या फल है? आगच्छ भो माणवक देवदत्त। [ यहाँ समीप में ही आह्वान है। अतः प्लुत नहीं होता है। ]

दूर से आह्वान के वाक्य में अन्त में जहाँ सम्बोधनवाचक पद रहता है वहीं पर यह प्लुत इष्ट माना जाता है। इस कारण इसमें प्लुत नहीं होता है—'देवदत्त आगच्छ।' [ क्योंकि सम्बोधन पद अन्त में न होकर आदि में है। [ प्रस्तुत सूत्र के महाभाष्य में ऐसा कोई उल्लेख नहीं है।]।।८४।।

'है' तथा 'हे' का प्रयोग रहने पर दूर से आह्वान (बुलाने) में जो वाक्य होता है उसमें 'है' तथा 'हे' शब्दों का ही प्लुत होता है अर्थात् टि का नहीं। उदा० है३ देवदत्त। देवदत्त है३। हे३ देवदत्त। देवदत्त हे३। [ इनमें कहीं भी 'है' 'हे' रहे उन्हीं शब्दों का प्लुत करना चाहिए। ]

---

१. पाठोऽयं पुस्तकारन्तरे नास्ति।

**पुनर्हैहयोर्ग्रहणमनन्त्ययोरपि यथा स्यात्।।**

## ३७७४. गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्।।८६।। (९७)

**'प्रत्यभिवादेऽशूद्रे' (८।२।९४)–इत्येवमादिना यः प्लुतो विहितः, तस्यैवायं स्थानिविशेष उच्यते। ऋृकारवर्जितस्य गुरोरनन्त्यस्य, अपिशब्दादन्त्यस्यापि टेरेकैकस्य सम्बोधने वर्तमानस्य प्लुतो भवति**

### न्यासः

अथ पुनर्हैहयोर्ग्रहणं किमर्थम्, यावता विनापि तेन श्रुतत्वात् तयोरेव भविष्यति? इत्याह—**पुनस्त्वित्यादि**। 'हैहेप्रयोगे' इत्युच्यमाने 'वाक्यस्य टेः प्लुत उदात्तः' इत्यधिकारादन्त्ययोरेव स्यात्, नानन्त्ययोः; तयोरपि यथा स्यादित्येवमर्थं पुनर्हैहेग्रहणम्, हैहेग्रहणे प्रयोगग्रहणं चानर्थकयोरपि यथा स्यात्। तदा चैतावनर्थकौ यदाऽऽमन्त्रितान्तम्। तेनैवामन्त्रितार्थस्यावगमितत्वादर्थान्तरस्य द्योत्यस्याभावात् तावनर्थकौ भवतः। अन्ये त्वाहुः—निपातसमाहारावपि तौ स्तो हन्त हैह इति। तत्रासति प्रयोगग्रहणे तयोर्न स्यात्; लाक्षणिकत्वात्। तस्मात् प्रयोगमात्रे लाक्षणिकयोरपि यथा स्यादित्येवमर्थं प्रयोगग्रहणमिति।।८५।।

**गुरोरनृतोऽन्त्यस्याप्येकैकस्य प्राचाम्**।। प्रत्यभिवादादिषु वाक्यटेः प्लुत उदात्तः। स एव तु ऋृकारवर्जितस्य गुरोरन्त्यस्य प्लुत उच्यते। **अन्त्यस्यापि टेरिति**। अनेनापिशब्दष्टेः समुच्चयं करोतीति दर्शयति। यदि ह्यपिशब्देन

### पदमञ्जरी

अतदर्थयोरेव तयोर्विधीयमानः प्लुतस्तं बाधते; सत्यपि सम्भवे बाधनं भवतीति न्यायात्। न चस्यासिद्धत्वम्; अपवादो वचनप्रामाण्यादित्युक्तत्वात्। **है३ इति**। 'प्लुतावैच इदुतौ' इति वचनादिकारभागः प्लुतः। **है३ इति**। 'एचोऽप्रगृह्यस्य' इत्यनेन प्लुतविकारो न भवति; दूराद्धूतत्वात्।

हैहयोरिति किमर्थम्? हैहयोः प्लुतो यथा स्यात्, अन्यथाऽऽरम्भसामर्थ्यादनन्त्यस्य हूयमानवाचिन एव स्यात्—देवदत्त है इत्यादौ। एवं तर्हि हैहयोरित्येवास्तु किं 'हैहेप्रयोगे' इत्यनेन, न ह्यप्रयुज्यमानयोः प्लुतविधिः सम्भवति? उच्यते; 'प्रयोगे' इति तावद्वक्तव्यम्, प्रयोगमात्रे यथा स्यात्। किं सिद्धं भवति? अनर्थकयोरपि ग्रहणं सिद्धं भवति। क्व च तावनर्थकौ? यत्र सम्बोधनवचनं प्राक् प्रयुज्यते, तत्र तेनैवाभिमुख्यस्य द्योतितत्वान्न हैहयोर्द्योत्यमस्तीत्यानर्थक्यम्। यत्र तु हैहयोः प्राक् प्रयोगः, तत्रानयोराभिमुख्यं द्योत्यमित्यर्थवत्त्वम्। एवमपि प्रयोगे हैहयोरित्येवास्तु हैहयोः प्लुतो भवति प्रयोगे कस्य? हैहयोरेवेति श्रुतत्वात्, तस्मात्पुनर्हैहेग्रहणस्य प्रयोजनं वक्तव्यम्? तदाह—**पुनरिति**।

यदि तु प्रयोगग्रहणादेवानर्थकयोरिवानन्त्ययोरपि भविष्यतीत्युच्येत; शक्यं पुनर्हैहेग्रहणमकर्तुम्।।८५।।

**गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्। अनन्त्यस्यापि टेरिति**। अनेनापिशब्देन प्रकृतष्टिः समुच्चीयत इति दर्शयति। यदि तु गुरोः सन्निधानात् स एवान्त्यः समुच्चीयेत—गुरोरनन्त्यस्यान्त्यस्यापीति, ततो तेन यत्रान्त्यो गुरुस्तत्रैव पर्यायः स्यात्। लघौ त्वन्त्ये पूर्वेण तस्य स्याद्, अनेन चानन्त्यस्य गुरोरिति द्वयोः प्लुतयोर्युगपच्छ्रवणं

### भावबोधिनी

पुनः 'है' और 'हे' का ग्रहण इसलिये है कि हर स्थिति में 'है' 'हे' का ही प्लुत हो, अन्य का नहीं। [ यदि दुबारा 'हैहयोः' नहीं रहता तो वाक्य का अधिकार होने से उसीकी टि प्लुत होने लग जाती। ]।।८५।।

'प्रत्यभिवादेऽशूद्रे' इस पूर्वोक्त सूत्र से जिस प्लुत का विधान किया गया है उसी का स्थानीविशेष इस सूत्र से कहा जा रहा है। ऋकार को छोड़कर गुरुसंज्ञक वर्ण जो अन्त्य का नहीं है, 'अपि' शब्द के बल से अन्त्य का भी है, टि का एक एक जो कि

**प्राचामाचार्याणां मतेन। दे३वदत्त, देवद३त्त। देवदत्त३। य३ज्ञदत्त, यज्ञद३त्त, यज्ञदत्त३।**

**गुरोरिति किम्? वकारात्परस्य मा भूत्। अनृत इति किम्? कृष्णामि३त्र कृष्णामित्र३।**

**एकैकग्रहणं पर्यायार्थम्।**

**प्राचामिति ग्रहणं विकल्पार्थम्। आयुष्मानेधि देवदत्त। तदनेन यदेतदुच्यते–'सर्व एव प्लुतः साहसमनिच्छता विभाषा कर्त्तव्यः' (म.भा.) इति, तदुपपन्नं भवति।।**

**न्यासः**

गुरोः समुच्चयः क्रियते—अनन्त्यस्यापि, गुरोरन्त्यस्यापीति, तदानेन गुरावनन्त्ये प्लुतः। लघुरन्त्यः पूर्वेण प्लुत एव। ततश्च द्वयोः प्लुतयोः श्रवणं युगपत् प्रसज्येत। न च 'अनुदात्तं पदमेकवर्जम्' इति वचनान्न भविष्यतीति शक्यं वक्तुम्; तस्मिन् कर्त्तव्ये प्लुतस्यासिद्धत्वात्। यदा टिसंज्ञकोऽपिशब्देन समुच्चीयते तदानेनैव सूत्रेणान्त्यस्य गुरोरनन्त्यस्य च टेः प्लुतो विधीयते। तत्रैकैकस्येति वचनाद्यथानन्त्यस्य पर्यायो न भवति, तथान्त्यस्यापीति न भवति यौगपद्यप्रसङ्गः।

**एकैकग्रहणमित्यादौ**। यद्येकैकग्रहणं न क्रियते, तदा पक्षे युगपदेव सर्वेषां प्रसज्येत। तस्मात् पर्यायेण यथा स्यादित्येवमर्थमेकैकग्रहणम्। एतच्च 'यथोद्देशं संज्ञापरिभाषम्' इत्याश्रित्य कृतमिति वेदितव्यम्। दर्शनान्तरे 'अनुदात्तं पदमेकवर्जम्' इत्यस्योपस्थाने सति न प्लुतयोर्द्वयोर्यौगपद्यप्रसङ्गः।

अथ प्राचामिति किम्; यावतैकैकग्रहणादेव विभाषा सिध्येत्?, इत्यत आह—**प्राचामिति**। सर्वस्य प्लुतस्येत्यभिप्रायः। अत एवाह—**तदनेनेत्यादि**। अपायहेतुमविमृश्य प्रवृत्तिः = साहसम्।।८६।।

**पदमञ्जरी**

प्राप्नोति। 'अनुदात्तं पदमेकवर्जम्' इति वचनान्नास्ति यौगपद्यसम्भवः। असिद्धः प्लुतः, तस्यासिद्धत्वान्नियमो न न प्राप्नोति? नैतदस्ति; 'कार्यकालं संज्ञापरिभाषम्, यत्र कार्यं तत्रोपतिष्ठते—वाक्यस्य टेः प्लुत उदात्तः, गुरोरनृतः प्लुत उदात्तः; उपस्थितमिदं भवति—'अनुदात्तं पदमेकवर्जम्' इति तस्मान्नास्ति यौगपद्यसम्भवः। यस्तर्ह्यनुदात्तः प्लुतः, तस्यास्य च समावेशः प्राप्नोति अभिपूजिते दूराद्धूते प्लुतो भवन्ननुदात्तं प्रश्नान्ताभिपूजितयोरिति टेरनुदात्तो भवति—शोभनः खल्वसि देवदत्त इति, तत्र तेन गुरोरुदात्तः प्लुतः स्यात्, तस्माट्टिरेव समुच्चेतव्यः। तत्र ह्येकैकस्येति वचनात् यथाऽनन्त्यस्य पर्यायोऽयं भवति, तथाऽन्त्यस्य टेरपीति नास्ति यौगपद्यप्रसङ्गः।

**एकैकग्रहणं पर्यायार्थमिति**। अन्यथाऽनन्तरोक्तेन प्रकारेणोदात्तानुदात्तयोः प्लुतयोः समावेशः स्यात्।

**भावबोधिनी**

सम्बोधन में वर्तमान है, का प्लुत होता है प्राचीन आचार्यों के मत से। [ भाव यह है कि पहले केवल टि का प्लुत बताया गया, अब ऋकार को छोड़ जितने भी गुरु वर्ण हों, अन्त हों या अन्त्यभिन्न, सम्बोधन में हों, तो सभी का क्रमशः एक-एक करके प्लुत होता है। ] उदा० दे३वदत्त, देवद३त्त, देवदत्त३। य३ज्ञदत्त, यज्ञद३त्त, यज्ञदत्त३। [ देवदत्त का वकार (अ) और यज्ञदत्त का ज्ञ (अ) गुरुसंज्ञक नहीं है। अतः उसे छोड़कर शेष तीनों का क्रमशः प्लुत किया जाता है 'द' संयोग से पूर्ववती होने से गुरुसंज्ञक है। ]

गुरुसंज्ञक का—इसका क्या फल है? [ देवदत्त में ] वकार से परे अकार का प्लुत न होने लग जाय। अनृत = ऋकार को छोड़कर—इसका क्या फल है? कृष्णमि३त्र, कृष्णमित्र३। [ इसमें ऋ का प्लुत नहीं होता है। ]

एकैक—एक-एक का ग्रहण पर्याय के लिये है अर्थात् एक-एक करके क्रमशः सभी प्लुत होते हैं।

'प्राचाम्' = प्राचीन आचार्यों के मत से'—इसका ग्रहण विकल्प केलिये है। उदा आयुष्मान् एधि देवदत्त। [ यहाँ प्लुत नहीं भी होता है। ] इस कारण जो यह कहा जाता है—'अनिच्छुक को भी साहसपूर्वक सभी प्लुत विकल्प से करना चाहिए'। यह उपपन्न

**३७७५. ओमभ्यादाने।।८७।। (३७०६)**

**अभ्यादानम्–प्रारम्भः। तत्र य ओम्शब्द तस्य प्लुतो भवति। ओ३म् अ॒ग्निमी॑ळे पु॒रोहि॑तम्। (ऋ. १।१।१)**

**अभ्यादाने इति किम्? ओमित्येतदक्षरमुद्गीथमुपासीत।। (छा.उ.१।१।१)**

**३७७६. ये यज्ञकर्मणि।।८८।। (३६०७)**

**'ये' इत्येतस्य यज्ञकर्मणि प्लुतो भवति। ये३ यजमाहे।**

**न्यासः**

**ओमभ्यादाने।। प्रारम्भ इति।** कस्य प्रारम्भे? स्वाध्यायादेः।।८७।।

**ये यज्ञकर्मणि।। यज्ञकर्मणीति।** कर्मशब्दः क्रियावाची। यज्ञक्रियायामित्यर्थः। **ये३ यजामह इति। अत्रैवायं प्लुत इष्यते**—इत्येतच्च 'प्राचाम्' इत्यस्यानुवृत्तेः, व्यवस्थितविभाषाविज्ञानाच्च लभ्यत इति वेदितव्यम्।।८८।।

**पदमञ्जरी**

क्वचित्पठ्यते—**प्रत्यभिवाद इत्येवमादिना यः प्लुतो विहितस्तस्यैवायं स्थानिविशेष उच्यत इति।** तस्यार्थः—नेदं स्वतन्त्रं प्लुतविधानम्, किं तर्हि? प्रत्यभिवादे दूराद्धूते च यः प्लुतो विहितः स गुरोरनन्त्यस्यापि भवति, अन्त्यस्यापि टेः पर्यायेणेति। तेन प्रत्यभिवाद्यमानार्थस्य हूयमानार्थस्य च शब्दस्येदं प्लुतविधानम्, न यत्र तत्र स्थितस्य गुरोरिति द्रष्टव्यम्।

**प्राचां ग्रहणं विकल्पार्थमिति।** तेन पक्षे न कस्यचिदपि प्लुतो भवति। **तदनेनेत्यादि।** तदिति वाक्योपन्यासे। 'अग्नीत्प्रेषणे परस्य च' इत्यत्र **भाष्यकारेण** यदेतदुच्यते—'सर्व एव प्लुतः' इत्यादि, तदुपपन्नं भवतीत्यर्थः। ननु यत्र प्राचांग्रहणमस्ति स प्लुतो विकल्पताम्, सर्वस्य तु कथं विकल्पः? एवं तर्हि प्राचांग्रहणं सर्वत्रैव प्लुतविधौ सम्बन्धनीयम्, शास्त्रत्यागः साहसम्! तेन शास्त्रमत्यजताप्यभियुक्तस्मरणात्सर्व एव प्लुतो विभाषा विधेय इत्यर्थः।।८६।।

**ओमभ्यादाने।।** प्लुतश्रुत्याऽच्परिभाषोपस्थानादच एव प्लतः, मकारस्त्वर्धमात्र इति समुदायोऽर्धचतुर्थमात्रः सम्पद्यते।।८७।।

**ये यज्ञकर्मणि।। ये यजामह इत्यत्रैवायं प्लुत इष्यते इति।** पित्र्यायां ये स्वधेत्यत्रापि भवति; एतत्स्थानापन्नत्वात्तस्य।।८८।।

**भावबोधिनी**

हो जाता है। [ यहाँ साहस = शास्त्रीय नियम को न छोड़ना। चूँकि यहाँ 'प्राचां ग्रहण' इसीलिये है कि प्लुतमात्र का विकल्प किया जा सके। ]।।८६।।

अभ्यादान = प्रारम्भ में जो ओम् शब्द उसका प्लुत होता है। उदा॰ ओ३म् अग्निमीले पुरोहितम्। [ यहाँ प्रारम्भ में ओ प्लुत होता है। ]

अभ्यादान = प्रारम्भ करने में—इसका क्या फल है? ओमित्येतदक्षरमुद्गीथमुपासीत [ यहाँ प्रारम्भ करना प्रतीत नहीं हो रहा है। अतः प्लुत नहीं होता है ]।।८७।।

यज्ञसम्बन्धी कर्म = क्रिया में 'ये' इस शब्द का प्लुत होता है। उदा॰ ये३ यजामहे। [ श्रौत यज्ञकर्म में जिस मन्त्र से आहुति दी जाती है उसे 'याज्या' कहा जाता है, उसके आरम्भ में 'ये३ यजामहे' ऐसा बोला जाता है। ]

**यज्ञकर्मणीति किम्? 'ये यजामह इति पञ्चाक्षरम्' (तै. १।६।११।१)–इति स्वाध्याकाले मा भूत्। ये यजामहे–इत्यत्रैवायं प्लुत इष्यते। इह हि न भवति–ये देवासो दिव्येकादशस्थ इति (ऋ.१।१३९।११)।।**

**३७७७. प्रणवष्टेः।।८९।।**

**'यज्ञकर्मणि' इति वर्तते। यज्ञकर्मणि टेः प्रणव आदेशो भवति।**

**क एष प्रणवो नाम? पादस्य वा, अर्धर्चस्य वान्त्यमक्षरमुपसंगृह्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रमोकारम्, ओङ्कारं वा विदधति तं प्रणवमित्याचक्षते (म.भा.)। अपां रेतांसि जिन्वतो३म्। (ऋ. ८।४४।१६) देवान् जिगाति सुम्नयो३म्। (ऋ. ३।२७।१)**

**न्यासः**

**प्रणवष्टेः।। क एष प्रणवो नामति।** इह शास्त्रे प्रणवस्यापरिभाषितत्वाल्लोके चाप्रसिद्धत्वात् प्रश्नः। **पादस्य वेत्या**दिना शास्त्रान्तरपरिभाषया प्रणवस्वरूपं दर्शयति। **वान्त्यमक्षरमिति।** स्वरोऽत्राक्षरशब्देन विवक्षितः। अन्त्यत्वं पुनस्तस्येतरस्वरापेक्षया। **उपसंगृह्येति।** गृहीत्वेत्यर्थः। तदन्त्यक्षरमादौ यस्याक्षरशेषस्य तत् तदादि। अक्षरञ्च शेषश्चेति समाहारे द्वन्द्वः। अक्षरम् = स्वरः, तस्य शेषः व्यञ्जनम्, तदादि च तदक्षरशेषञ्च तदक्षरशेषं यत्रान्त्यात् स्वरात् परं व्यञ्जनं नास्ति तत्र स एव। तदादि तस्य बहुव्रीहेरन्यपदार्थः। व्यपदेशिवद्भावेन तत्रापि हि तदादिव्यपदेशो

**पदमञ्जरी**

**प्रणवष्टेः।। क.एष प्रणवो नामेति।** इह शास्त्रेऽपरिभाषितत्वात्प्रश्नः। **पादस्येति।** शास्त्रान्तरप्रसिद्ध आश्रीयते, देवतावत्, आक्षरमच्, अन्त्यमचं गृहीत्वेत्यर्थः। **तदाद्यक्षरशेषस्येति।** अक्षरं च शेषश्च हल् अक्षरशेषम्, तदन्त्यमक्षरमादिर्यस्य तत्तदादि, तदादि च तदक्षरशेषं च तदाद्यक्षरशषं तस्य टेरिति। **त्रिमात्रमिति।** केचिन्मकारेण सह त्रिमात्रमिच्छन्ति, अन्ये भागमेव। तत्र ओंकारविधिः सामिधेन्यादिषु प्रसिद्धः—स्वरादिमृगन्तमोकारं त्रिमात्रं मकारान्तं कृत्वोत्तरस्या अर्धे अवस्येदिति; ओंकारविधिस्तु निनर्दे स्वरादिरन्त ओङ्कारश्चतुर्न्निनर्द इति। आथर्वणिकास्तु सर्वत्र चानयोर्विकल्पमिच्छन्ति, तेषामेव चेदं सूत्रं पठितम्। **जिन्वतो३मिति।** 'जिविः प्रीणानार्थः; लट्, तिप्।

**भावबोधिनी**

यज्ञक्रिया में ही—इसका क्या फल है? 'येयजामहे' इति पञ्चाक्षरम्' इस प्रकार के स्वाध्यायकाल में प्लुत न हो सके। [ जब यज्ञ का अनुष्ठान हो रहा हो तभी 'ये' का प्लुत होता है अन्यत्र नहीं। ]

'येयजामहे' इसीमें 'ये' का प्लुत इष्ट है। क्योंकि इस में नहीं होता है—"ये देवासो दिव्येकादशस्थ।" [ भाव यह है कि इसका लक्ष्य निश्चित है, सार्वत्रिक नहीं। ]।।८८।।

'यज्ञकर्म में' इसकी अनुवृत्ति होती है। यज्ञसम्बन्धी क्रिया में टि के स्थान पर प्रणव (ओम्) आदेश हो जाता है।

यह प्रणव क्या है? पाद के, अथवा अर्धर्च के अन्त्य अक्षर को लेकर, वह आदि है जिसका अक्षर और शेष = व्यंजन के स्थान पर = अर्थात् टि के स्थान पर तीन मात्राओं वालो जिस ओकार अथवा ओंकार को करते है उसे 'प्रणव' ऐसा कहा जाता है। उदा० अपां रेतांसि जिन्वतो३म्। देवान् जिगाति सुम्नयो३म्। [ 'जिवि' से अथवा 'जि' से व्यत्यय से श्न करने पर शतृ प्रत्यय में 'जिन्वति' ऐसा होता है। इसमें टि = इ के स्थान पर तीन मात्राओं का ओ३म् हो जाने पर जिन्वत् ओ३म्। सुम्न शब्द से क्यच् करने के बाद 'क्याच्छन्दसि' सूत्र से 'उ' प्रत्यय—सुम्नयु + सु, रुत्व, विसर्ग के पूर्व ही उस् = टि के स्थान पर ओ३म् होने पर 'सुम्नयो३म्। न्यासकार ने यहाँ 'देवसुम्नयोर्यजुषि काठके' (७।७।३८) से आ का विधान भी लिखा है किन्तु ऐसा करने पर '.....सुम्नायो३म्' यही शुद्ध रूप होगा जैसाकि 'सुम्नायन्तो हवामहे' इस लक्ष्य में देखा जाता है। ]

**टिग्रहणं[1] सर्वादेशार्थम्। ओकारः सर्वादेशो यथा स्यात्, व्यञ्जनान्ते अन्त्यस्य मा भूदिति। 'यज्ञकर्मणि' इत्येव–अपां रेतांसि जिन्वति (ऋ.८।४४।१६)।।**

**३७७८. याज्यान्तः।।९०।। (३६०९)**

**याज्या नाम ये याज्याकाण्डे पठ्यन्ते मन्त्राः, तेषामन्त्यो यष्टिः स प्लवते यज्ञकर्मणि। स्तोमैर्विधेमाग्नये३। (ऋ. ८।४३।११) जिह्वामग्ने चकृषे हव्यवाह३म् (तै. ४।४।४।१)।**

**न्यासः**

भवति। यत्रान्त्यात् स्वरात् परं व्यञ्जनमस्ति तत्र सह स्वरेण व्यञ्जनमन्यपदार्थः; तद्गुणसंविज्ञानस्य बहुव्रीहेरिहाश्रितत्वात्। योऽयमनेन ग्रन्थेन टिसंज्ञक एवोक्तो भवति तद्व्यक्षरशेषस्य स्थाने यत् त्रिमात्रमोकारम्, ओङ्कारं वा विदधाति तत् प्रणवं कथयन्ति। **जिन्वन्तो३मिति**। जयतेः परस्य लट्, तस्य शत्रादेशः, व्यत्ययेन श्नुप्रत्ययः, यणादेशः, जिन्वन्निति स्थितेऽन्शब्दस्यान्त्याक्षरादेः प्रणवः। **सुम्नयो३मिति**। सुम्नशब्दात् क्यच्, 'क्याच्छन्दसि' इति उप्रत्ययः, 'देवसुम्नयोर्यजुषि काठके' इति आभावः, सुम्नआयुस् इति स्थिते उसित्यस्यान्त्याक्षरादेः प्रणवः।

ननु च टिस्थानिकयोरेव त्रिमात्रयोरोकारौकारयोः इति परिभाषा कृता। तन्त्रान्तरेणापि टिग्रहणं टेरेव भविष्यति, तत् किं टिग्रहणेन? इत्यत आह—**टिग्रहणमित्यादि**। असत्यत्र टिग्रहणे व्यञ्जनान्तेष्वलोऽन्त्यपरिभाषयाऽन्त्यस्यैव स्यात्। अतष्टिग्रहणं क्रियते—सर्वस्यैव टेर्यथा स्यादिति। **अन्त्यस्य मा भूदिति**। ओङ्कारस्यानेकाल्त्वात् सर्वादेशो भविष्यतीत्योकारार्थं टिग्रणम्।।८९।।

**याज्यान्तः**।। इहान्तग्रहणं टेरित्यस्य निवर्त्तकं वा स्याद्? विशेषणं वा? पूर्वस्मिन् पक्षेऽचाऽन्ते विशेषितेऽजन्ताया एव याज्यायाः प्लुतः स्यात्। इतरस्मिंत्वन्तग्रहणमनर्थकम्, न ह्यनन्त्यष्टिः सम्भवति;

**पदमञ्जरी**

**टेरिति वर्त्तमान इत्यादि**। असति टिग्रहणे 'अलोऽन्त्यस्य' इति वचनाट्टेर्योऽन्त्याल् तस्योकारः स्यात्। व्यभिचाराभावाद्धि प्रणवः प्लुतत्वेन न विशेष्यते। संज्ञया विधाने चाच्परिभाषा प्रवर्त्तते, न वस्तुतस्त्रिमात्रविधाने। तस्माद्धल एव प्राप्नोति। अथाच्परिभाषोपस्थानार्थमेव प्लुतत्वेन प्रणवो विशेष्यते? तथापि टेर्योऽच् तस्यैव स्यात्, न तु सर्वस्य टेः। ओंकारस्त्वज्झल्समुदायत्वात् प्लुतो न भवतीति सर्वस्य टेः सिध्यति; 'वाक्यस्य टेः' इत्यधिकारात्? सत्यम्; टिस्थानिकस्यैव त्वोङ्कारस्य प्रणवसंज्ञत्वात् कथमन्त्यस्याचो वा प्रसङ्ग इति चिन्त्यम्।।८९।।

**याज्यान्तः**।। **याज्याकाण्ड इति**। याज्यानुवाक्याकाण्डमिति समाख्याने प्रकरणे। **तेषामिति**। मन्त्राणाम्। **तासामिति** पाठे तासां याज्यानामन्तः। **प्लवत इति**। त्रिमात्रतया वर्धत इत्यर्थः। **अग्नये३ इति**। चतुर्थ्येकवचनान्तस्याग्नयेशब्दस्य 'एचोऽप्रगृह्यस्य' इति प्लुतविकारः। इहेदमन्तग्रहणं टेरित्यस्य निवर्त्तकं वा

**भावबोधिनी**

टि का ग्रहण सम्पूर्ण के स्थान पर यह आदेश करने के लिये है। ओकार (या ओंकार) सम्पूर्ण के स्थान पर जैसे हो सके, व्यञ्जनान्त शब्द में केवल अन्त्य व्यंजन के स्थान पर ही न होने लग जाय [ इसके लिये 'टि' है। टि संज्ञा अन्त्य अच् अथवा उसके बाद वाला हल् मिला कर अच् + हल् के समुदाय की होती है। अतः स्वरान्त में अन्त्य स्वर का और व्यञ्जनान्त में स्वर + व्यञ्जन दोनों के समुदाय का प्रणव आदेश होता है। ]

यज्ञसम्बन्धी क्रिया में ही होता है—'अपां रेतांसि जिन्वति'। [ ऐसा अन्यत्र प्रणवरहित ही रहता है। ]।।८९।।

याज्या का अर्थ है—याज्याकाण्ड में जो मन्त्र पढ़े गये हैं, उन याज्याकाण्डपठित मन्त्रों के अन्त में होने वाला 'टि' है, उसका यज्ञकर्म में प्लुत हो जाता है। उदा॰ 'स्तोमैर्विधेमाग्नये३।' 'जिह्वामग्ने चकृषे हव्यवाह३म्। [ यहाँ टि का प्लुत हो जाता है। ]

---

१. अत्र क्वचित् 'टेरिति वर्तमाने' इत्यधिकः पाठः पदमञ्जरीसम्मतः।

**अन्तग्रहणं किम्? याज्या नाम ऋचः काश्चिद्वाक्यसमुदायरूपाः, तत्र यावन्ति वाक्यानि तेषां सर्वेषां टेः प्लुतः प्राप्नोति। सर्वान्त्यस्यैवेष्यते, तदर्थमन्तग्रहणम्।।**

**३७७९. ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः।।९१।। (३६१०)**

**ब्रूहि, प्रेष्य, श्रौषट्, वौषट्, आवह–इत्येतेषामादेः प्लुतो भवति यज्ञकर्मणि। अग्नयेऽनुब्रू३हि (श.ब्रा. २।५।३।१२)। प्रेष्य–अग्नये गोमयान्प्रे३ष्य। श्रौषट्–अस्तु श्रौ३षट् (तै.१।६।११।१)। वौषट्–सोमस्याग्ने वीहि वौ३षट् (ऐ.ब्रा. ४।५।४।६)। आवह–अग्निमा३वह। (तै.ब्रा.३।५।१।२)**

**'आवह देवान्यजमानाय' (तै.ब्रा.३।५।३।२)–इत्येवमादावयं प्लुतो न भवति; 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (पु.प.३५) इति।।**

**न्यासः**

'अचोऽन्त्यादि टि' इत्यस्यैव टिशब्दरूपविशेषसंज्ञाविधानादित्यभिप्रायेणाह—**अन्तग्रहणं किमिति**। इतरोऽपि विदिताभिप्रायोऽन्यदेवान्तग्रहणस्य प्रयोजनं दर्शयितुमाह—**याज्या नामेत्यादि**। गतार्थम्।।९०।।

**ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः**।। श्रौषड्, वौषडिति निपातौ; इतराणि लोण्-मध्यमपुरुषैकवचनानि। केचित्तु आवहशब्दोऽपि निपात इत्याहुः। **प्रेष्येति**। 'ईषु गतौ', दिवादित्वाच्छ्यन्, उपसर्गाकारेण सह 'आद् गुणः'।

अथेह कस्मान्न भवति—आवह देवान् यजमानाय, आवह जातवेदः, सुयजा यज? इत्याह—**आवह देवानित्यादि**।

आदिग्रहणं वाक्यादेर्मा भूदिति।।९१।।

**पदमञ्जरी**

स्याद्, विशेषणं वा; पूर्वस्मिन् कल्पे प्लुतश्रुत्याच्परिभाषोस्थानादचान्ते विशेषितेऽजन्ताया एव याज्यायाः प्लुतः स्यात्। पक्षान्तरे त्वन्तग्रहणमनर्थकम्; टेरन्तत्वाव्यभिरादित्यभिप्रायेणाह—**अन्तग्रहणं किमिति**। इतरोऽपि विदिताभिप्राय आह—**याज्या नामेति**।।९०।।

**ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः**।। पित्र्यायामनुस्वधेति सम्प्रेष्येत्यत्रापि अनुस्व३धेति प्लुतो भवति; ब्रूहिस्थानापन्नत्वात्स्वधाशब्दस्य। तथा अस्तु स्वधेति प्रत्याश्रवणमित्यत्रापि भवति; अस्तु स्वधेति श्रौषट्स्थानापन्नत्वात्। तथा च वषडित्येके समामनन्ति, वौषडित्येके, वाषडित्येके, वौक्षडित्येके, वाक्षडित्येके, वक्षाडित्येके इति षड्विधस्यापि वषट्कारस्य प्लुतो भवति; वषट्कारोपलक्षणत्वाद्वौषट्शब्दस्य।

**आवह देवान् यजमानायेत्येवमादिष्विति**। आदिशब्देन—आवह जातवेदः, सुयजा यजेत्यादेर्ग्रहणम्।।९१।।

**भावबोधिनी**

अन्त का ग्रहण किस लिये है? याज्या नामक ऋचायें कुछ वाक्यसमुदाय रूप हैं, उनमें जितने वाक्य हैं उन सभी की टि का प्लुत प्राप्त होता है, किन्तु सबसे अन्तवाले [ वाक्य की टि ] का ही प्लुत करना इष्ट है, इसी [ को स्पष्ट समझाने ] के लिये 'अन्त' का ग्रहण है।।९०।।

यज्ञ-सम्बन्धी कर्म = क्रिया में ब्रूहि, प्रेष्य, श्रौषट्, वौषट् तथा आवह—इनके आदि का प्लुत हो जाता है। उदा० 'अग्नयेऽनुब्रू३हि।' प्रेष्य—'अग्नये गोमयान् प्रे३ष्य।' श्रौषट्—अस्तु श्रौ३षट्। वौषट्—सोमस्याग्ने वीहि वौ३षट्। आवह—अग्निमा३ वह। [ सभी में सूत्रोक्त शब्दों के आदि अच् का ही प्लुत किया जाता है। कुछ संस्करणों में 'वौषट्—सोमस्याग्ने वीहि३ वौ३षट्' ऐसा वीहि का भी प्लुतयुक्त पाठ देखा जाता है किन्तु यह ठीक नहीं है। ]

## ३७८०. अग्नीत्प्रेषणे परस्य च।।९२।। (३६११)

**अग्नीधः प्रेषणम्–अग्नीत्प्रेषणम्, तस्मादेवादेः प्लुतो भवति परस्य च। आ३ श्रा३वय (तै.१।६।११।२)। ओ३श्रा३वय।**

**अत्रैवायं प्लुत इष्यते। तेनेह न भवति–'अग्नीदग्नीन्विहर बर्हिस्तृणीहीति'। (तै.६।३।१।२) तदर्थं केचिद्वक्ष्यमाणं 'विभाषा' (८।२।९३) इत्यभिसम्बध्नन्ति, सा च व्यवस्थितविभाषेति। अपर आह–'सर्व एव प्लुतः साहसमनिच्छता विभाषा विज्ञेयः' (म. भा.) इति।**

**इह तु–उद्धर३ उद्धर, अभिहर३ अभिहर इति छान्दसः प्लुतव्यत्ययः।**

**'यज्ञकर्मणि' इत्येव–ओ श्रावय।।**

**न्यासः**

**अग्नीत्प्रेषणे परस्य च**।। अग्निमिन्धे इत्यस्मिन्नर्थेऽग्नीद् = ऋत्विग्विशेषः, तस्य प्रेषणं नियोजनमग्नीत्प्रेषणमित्यर्थः। आदेः सन्निहितत्वात् तदपेक्षयैव परोऽपि ज्ञायत इत्याह—**तस्मादेवादेरित्यादि**। **अत्रैवेति**। अनन्तरोक्त उदाहरणद्वय एवकारेण यद् व्यवच्छिन्नं तद् दर्शयितुमाह—**अग्नीदग्नीन् विहर बर्हिस्तृणीहीति**। कथं पुनरेतल्लभ्यते? इत्याह—**तदर्थमित्यादि**। यथा च सर्वत्र प्लुतो विभाषा शक्यो विज्ञातुम्, तथा 'गुरोरनृतोऽनन्त्यस्य' इत्यादौ सूत्रे प्रतिपादितम्। यदि तर्हि सर्वत्र प्लुतो विभाषा विज्ञायते, उत्तरत्र विभाषाग्रहणमनर्थकम्? न; प्रपञ्चार्थत्वात्। अथेह कथं प्लुतः—उद्धर३ उद्धर, अभिहर३ अभिहरेति; स्वाध्यायकाले ह्ययं प्लुतः, नाग्नीत्प्रेषणे, न चायमादेः, नापि 'आदेः परस्य, किं तर्हि? ततोऽन्यस्यैव? इत्यत आह—**इह त्वित्यादि**। विस्पष्टार्थम्।।९२।।

**पदमञ्जरी**

**अग्नीत्प्रेषणे परस्य च**।। **अत्रैवायं प्लुत इष्यत इति**। ओस्वधेत्याश्रवणमित्यत्र तु तत्स्थानापन्नत्वाद्भवति। **आ३ स्वधेति**। तथा चाश्वलायनः—'नित्याः प्लुतयः' इति।

**उद्धर३ उद्धरेति**। चापले द्विर्वचनम्।।९२।।

**भावबोधिनी**

'आवह देवान् यजमानाय' आदि इस प्रकार के लक्ष्यों में यह प्लुत नहीं होता है क्योंकि 'वेद में सभी विधियाँ वैकल्पिक होती हैं'। [ अतः कहीं होना और कहीं न होना—लक्ष्यानुसारी व्यवस्था मानी जाती है। ]।।९१।।

अग्नीध् का प्रेषण = किसी कार्य में लगाना = अग्नीत्प्रेषण है, उसीसे आदि का और परवर्ती का प्लुत होता है। [ यह भी यज्ञकर्म में होता है। ] उदा० आ३ श्रा३वय। ओ३ श्रा३ वय। [ यहां आदि का और उसके बाद वाले का अर्थात् प्रथम दो का ही प्लुत होता है। 'अग्निम् इन्धे' इस अर्थ में 'अग्नी३' बनता है। यह एक ऋत्विग्विशेष की संज्ञा है। इसे किसी यज्ञीयक्रिया में लगाना अग्नीत्प्रेषण है। किसी ऋचा आदि को सुनाने के लिये कहा जाता है, उस में यह प्लुत होता है। ]

इन्हीं (केवल दो उदाहरणों) में प्लुत करना इष्ट है। इसलिये इसमें नहीं होता है—'अग्नीदग्नीन् विहर बर्हिस्तृणीहि।' [ यहाँ अग्नीध् का प्रेषण होने पर भी आदि और उसके बादवाले का प्लुत नहीं होता है। ] इसके लिये कुछ विद्वान् अग्रिम सूत्र में कही जाने वाली विभाषा' का इसमें भी सम्बन्ध करते हैं और वह व्यवस्थित विभाषा है। दूसरे आचार्य यह कहते हैं—'शास्त्र का परित्याग न करते हुए भी सभी प्लुत विकल्प से किये जा सकते हैं'। [ अतः यह प्लुत नहींभी होता है। पूर्व सूत्र में 'विभाषा' का सम्बन्ध मानना अनावश्यक है। ]

'उद्धर३ उद्धर, अभिहर३ अभिहर—यहाँ तो वैदिक प्लुत का व्यत्यय है। [ अतः किसी नियम के न होने पर भी सम्भव है। ]

यज्ञकर्म में ही [ होता है अन्यत्र नहीं ] ओ श्रावय। [ यह प्लुतरहित है ]।।९२।।

## ३७९१. विभाषा पृष्टप्रतिवचने हेः।।९३।। (३६१२)

**पृष्टप्रतिवचने विभाषा हेः प्लुतो भवति। अकार्षीः कटं देवदत्त? अकार्षं हि३, अकार्षं हि। अलावीः केदारं देवदत्त? अलाविषं हि३, अलाविषं हि।**

**पृष्टप्रतिवचने इति किम्? कटं करिष्यति हि। हेरिति किम्? करोमि ननु।।**

## ३७९२, निगृह्यानुयोगे च।।९४।। (३६१३)

**स्वमतात्प्रच्यावनं निग्रहः। अनुयोगः-तस्य मतस्याविष्करणम्। तत्र निगृह्यानुयोगे यद्वाक्यं वर्त्तते तस्य टेः प्लुतो भवति विभाषा। 'अनित्यः शब्द' इति केनचित्प्रतिज्ञातम्, तमुपालिप्सुरुपपत्तिभिर्निगृह्य**

### न्यासः

**विभाषा पृष्टप्रतिवचने हेः**।। **पृष्टप्रतिवचनमिति**। पृष्टस्य प्रतिवचनम् = आख्यानं पृष्ट-प्रतिवचनम्। प्रतिवचनशब्दोऽयं विरुद्धेऽपि वचने प्रवर्त्तते—विरुद्धं वचनं प्रतिवचनमिति, प्रतिशब्दो ह्यत्र विरोधं द्योतयति, यथा—प्रतिमल्लः प्रतिगज इति; वीप्सायामपि वर्त्तते—वचनं वचनं प्रतीति प्रतिवचनम्, 'यथार्थे यदव्ययम्' इति वीप्सायामव्ययीभावः; समाधानेऽपि वर्त्तते—यदनेनाभिहितं तस्य मया प्रतिवचनं विहितमिति, समाधिर्विहित इति गम्यते; तत्र 'प्रतिवचने' इत्युच्यमाने सर्वत्र प्रसज्यते। तस्मात् प्रतिवचनविशेषार्थं पृष्टग्रहणम्। पृष्टस्य यत् प्रतिवचनम् = अर्थाख्यानं तत्रैव यथा स्यात्, अन्यत्र मा भूदिति।।९३।।

**निगृह्यानुयोगे च**।। **निगृह्येति**। ल्यबन्तमेतत्। **स्वमतादिति**। स्वावगमात्। **प्रच्यावनमिति**। अपनयनम्। **आविष्करणमिति**। प्रकाशनम्। **श्राद्धमिति**। कर्मविशेषः। **एवमनुयुज्यत इति**। एवमाविष्कृतस्वमतः क्रियत इत्यर्थः। चकारो विभाषेत्यस्यानुकर्षणार्थः। तेनोत्तरविधिर्नित्यो भवति।।९४।।

### पदमञ्जरी

**विभाषा पृष्टप्रतिवचने हेः**।। प्रतिवचनशब्दोऽयं विरुद्धेऽपि शब्दे वर्त्तते, प्रतिशब्दस्य विरोधे प्रसिद्धेः—प्रतिमल्लः, प्रतिकुञ्जर इति; वचनं वचनं प्रतीति प्रतिवचनमिति वीप्सायामव्ययीभावेऽप्यस्ति; समाधानेऽप्यस्ति—अनेनाभिहितस्य मया प्रतिवचनं विहितमिति; पृष्टप्रतिवचनेऽपि वर्तते; तत्रासति पृष्टग्रहणे विवक्षितं प्रतिवचनं न गम्यते। उदाहरणे हिशब्दोऽवधारणे।।९३।।

**निगृह्यानुयोगे च**।। **निगृह्येति**। ल्यबन्तमेतत्। **स्वमतादिति**। स्वपक्षात्। प्रच्यावनम्—अपनयः। **तस्यैवेति**। यस्मादसौ प्रच्यावितस्तस्यैव स्वपक्षस्याविष्करणम् = शब्देन प्रकाशनम्-एवं किल त्वं निरुपपत्तिकमात्थेति।

### भावबोधिनी

पृष्ट (पूंछे गये प्रश्न) के प्रतिवचन में 'हि' शब्द का विकल्प से प्लुत होता है। उदा० अकार्षीः कटं देवदत्त? (देवदत्त क्या चटाई बना ली?) अकार्षं हि३, अकार्षं हि। (हाँ, बना ली।) अलावीः केदारं देवदत्त? (देवदत्त खेत की क्यारी बना ली, काट ली?) अलाविषं हि३, अलाविषं हि। (बना ली, काट ली।) [ इनमें 'हि' का प्लुत विकल्प से होता है। ]

पूछे गये प्रश्न के प्रत्युत्तर में—इसका क्या फल है? कटं करिष्यति हि। [ यह सामान्य कथन है। प्लुत का विकल्प नहीं होता है। ] 'हि' शब्द का—इसका क्या फल है? [ अकार्षीः कटं देरदत्त? ] करोमि ननु। [ इसमें 'ननु' प्रतिवचन में है। अतः प्लुत नहीं होता है। ]।।९३।।

[ तर्क आदि के द्वारा किसी को ] अपने मत = पक्ष से गिरा देना, हरा देना निग्रह है, अर्थात् खण्डन कर देना निग्रह है। अनुयोग = उसके मत का प्रकाशन है। इसमें निग्रह = परास्त करके अनुयोग = उसके मत के प्रकाशन में जिस वाक्य का प्रयोग है उसकी टि का विकल्प से प्लुत होता है। उदा० 'अनित्यः शब्दः' (शब्द अनित्य है)—ऐसी प्रतिज्ञा किसी ने की है। उसे उपालम्भ

**साभ्यसूयमनुयुङ्क्ते–'अनित्यः शब्द इत्यात्थ३, अनित्यः शब्द इत्यात्थ।' अद्य श्राद्धमित्यात्थ३, अद्य श्राद्धमित्यात्थ। अद्यामावास्येत्यात्थ३, अद्यामावास्येत्यात्थ। अद्य अमावास्येत्येवं वादी युक्त्या प्रच्याव्य स्वमतादेवमनुयुज्यते।।**

## ३७८३. आम्रेडितं भर्त्सने।।९५।। (३६१४)

**'वाक्यदेरामन्त्रितस्य' (८।१।८) इति भर्त्सने द्विर्वचनमुक्तम्, तस्याम्रेडितं प्लवते। चौरचौर३, वृषलवृषल३, दस्योदस्यो३, घातयिष्यामि त्वा बन्धयिष्यामि त्वा।,**

### न्यासः

**आम्रेडितं भर्त्सने।। चौर चौर३ इति।** 'वाक्यादेरामन्त्रितस्य' इत्यादिना भर्त्सने द्विर्वचनम्। यद्यपि वाक्यग्रहणमेतदन्त्यस्य पदस्य प्लुतनिवृत्त्यर्थम्, तथापीह वचनसामर्थ्यादनत्यस्यापि भवति। न हि वाक्यान्ते भर्त्सने आम्रेडितं सम्भवति; वाक्यादेरेव पदस्य भर्त्सने द्विर्वचनविधानात्।

**तदर्थमिति।** पर्यायेण पूर्वोत्तरयोः पदयोर्यथा स्यादित्येवमर्थम्, द्विरुक्तोपलक्षणार्थञ्च। आम्रेडितस्य भर्त्सनग्रहणाद् विज्ञायते—तद्द्विरुक्तस्य हि यत् परं तदाम्रेडितम्। न च तावता भर्त्सने प्रवृत्तिः सम्भवति; भर्त्सनस्य द्विरुक्तिद्योत्यत्वात्। तस्माद् द्विरुक्तोपलक्षणार्थमाम्रेडितग्रहणं विज्ञायते। तद्द्विरुक्तिश्च पूर्वोत्तरविषयेऽपीति

### पदमञ्जरी

सूत्रार्थमुदाहरणे दर्शयन्नेवोदाहरति—**अनित्यः शब्द इति केनचित्प्रतिज्ञातमिति।** तमेवं वादिनमुपालिप्सुः उपालब्धुकामो निगृह्य = स्वमतात्प्रच्याव्य साभ्यसूयं = सामर्षमनुयुङ्क्ते = आविष्कृतस्वमत करोति। क्वचित्त्वयं ग्रन्थो न पठ्यते, अन्ते तु पठ्यते। **अद्यामावास्या** इत्येवंवादी प्रच्याव्य स्वमतादेवमनुयुज्यत इति।।९४।।

**आम्रेडितं भर्त्सने।।** उदाहणेषु 'वाक्यादेरामन्त्रितस्य' इत्यादिना द्विर्वचनम्। 'वाक्यस्य टेः' इत्यधिकारेऽप्यत्रानन्त्यस्य भवति; वाक्यादेरेव पदस्य भर्त्सने द्विर्वचनविधानात्।

**तदर्थमिति।** पर्यायेण पूर्वोत्तरयोर्भागयोः प्लुतो यथा स्यादित्येवमर्थम्। **द्विरुक्तोपलक्षणार्थमिति।** द्विरुक्तसमुदाये भागद्वयोपलक्षणार्थमित्यर्थः। एतच्चाम्रेडितमात्रस्य भर्त्सने वृत्त्यसम्भवाल्लभ्यते, पर्यायस्य तु 'एकैकस्य' इत्यनुवृत्तेर्लाभः।।९५।।

### भावबोधिनी

देने का इच्छुक (परास्त करने की इच्छावाला) व्यक्ति उपपत्तियों (तर्क और प्रमाणादि) के द्वारा [ अपने मत से हटाकर, परास्त कर ] अमर्ष (क्रोध) के साथ अनुयोग करता है (उस मत को प्रकाशित करता है)—'अनित्यः शब्द इत्यात्थ३ अनित्यः शब्द इत्यात्थ? [ 'शब्द अनित्य है, ऐसा कहते हो'। इसमें प्लुत विकल्प से होता है। ] 'अद्य श्राद्धम्—इत्यात्थ३, अद्य श्राद्धमित्यात्थ। [ आज श्राद्ध है, ऐसा कहते हो। ] अद्य अमावस्या इत्यात्थ३, अद्य अमावस्या इत्यात्थ। [ आज अमावस्या है—ऐसा कहते हो। ] 'आज अमावस्या है—ऐसा कहनेवाला (वादी व्यक्ति) युक्ति के द्वारा अपने मत (कथन आदि) से हरा कर इस प्रकार से कहा जाता है—अद्य अमावस्या इत्यात्थ३। [ वादविवाद के उग्र होने पर ऐसी स्थिति बनती है। जब किसी वादी को प्रतिवादी तर्क आदि से परास्त कर क्रोध से उसी के मत को स्वयं कहता है, उसमें वाक्य की टि का विकल्प से प्लुत होता है। ]।।९४।।

'वाक्यादेरामन्त्रितस्य' (८।१।८) इस सूत्र से भर्त्सना की प्रतीति में 'द्वित्व कहा गया है, उसके आम्रेडित (द्वित्व में बाद वाले) का प्लुत होता है। उदा० चोर चोर३, वृषल वृषल३ दस्यो दस्यो३, घातयिष्यामि त्वा, बन्धयिष्यामि त्वा' [ चोर चोर, शूद्र शूद्र, डाकू डाकू। तुझे मरवा डालूँगा, बन्धवा दूँगा। यहाँ भर्त्सना है अतः द्वित्व होता है और इसमें परवर्ती की आम्रेडित संज्ञा होती है; उसी का प्लुत होता है। वाक्य की टि का प्लुत नहीं होता है। ]

**● भर्त्सने पर्यायेणेति वक्तव्यम्। ● चौ̲र३चौर। चौरचौ̲र३। तदर्थमाम्रेडितग्रहणं द्विरुक्तोपलक्षणार्थं वर्णयन्ति।।**

## ३७८४. अङ्गयुक्तं तिङाकाङ्क्षम्।।९६।। (३६१५)

**'अङ्ग' इत्यनेन युक्तं तिङन्तमाकाङ्क्षं भर्त्सने प्लवते। अङ्ग कू̲ज३, अङ्ग व्याहु̲र३, इदानीं ज्ञास्यसि जाल्म।**

**तिङिति किम्? अङ्ग देवदत्त, मिथ्या वदसि। आकाङ्क्षमिति किम? अङ्ग पच। नैतदपरमाकाङ्क्षति।**

**'भर्त्सने' इत्येव–अङ्गाधीष्व, ओदनं ते दास्यामि।।**

### न्यासः

द्वयोरपि प्लुतो भवति। स च पर्यायेण भवति, न यौगपद्येन; भर्त्सनद्योतनफलत्वात् प्लुतेः। अन्यतरप्लुत्यैव च तद्भर्त्सनस्य द्योतित्वात्।।९५।।

**अङ्गयुक्तं तिङाकाङ्क्षम्।। आकाङ्क्षमिति।** आकाङ्क्षति = अपेक्षत इत्याकाङ्क्षम्, पचाद्यच्। **अङ्ग कूज३ इत्यादि।** अङ्ग कूज३, अङ्ग व्याहर३—इत्येतदुभयमपीदानीं ज्ञास्यसि जाल्मेत्येतदपेक्षते। अङ्ग देवदत्तेत्येतदपि **मिथ्या वदसीत्येतत्। अधीष्वेत्ये**तदप्योदनं ते, **दास्यामीत्ये**तत्। **नैतदपरमाकाङ्क्षतीति।** विवक्षितार्थस्य परिसमाप्तत्वात्।

अथ युक्तग्रहणं किमर्थम्, यावता पदविधित्वादेव योगो विज्ञास्यते। एवं तर्हि युक्तग्रहणं कुर्वन्नेतज्ज्ञापयति—'समर्थः पदविधिः' इत्येषा परिभाषाऽनित्या। तेनासूर्यम्पश्यानि मुखानीति नञोऽसत्यपि सूर्यशब्देन सामर्थ्ये समासः सिद्धो भवति।।९६।।

### पदमञ्जरी

**अङ्गयुक्तं तिङाकाङ्क्षम्।** आकाङ्क्षतीत्याकाङ्क्षम्, पचाद्यच्। **इदानीं ज्ञास्यासि जाल्मेत्येष** द्वयोरप्युदाहरणयोः शेषः। कूजनफलं व्याहारफलं वास्मिन्नेव क्षणे ज्ञास्यसीत्यर्थः। अङ्गशब्दोऽमर्षे, प्रत्युदाहरणे त्वनुनये।

**अङ्ग देवदत्तत्येतावदेकं** वाक्यम्। एतच्च वाक्यं मिथ्या वदसीत्येतदपेक्षते।।९६।।

### भावबोधिनी

● भर्त्सन में पर्याय से प्लुत होता है, ऐसा कहना चाहिए। ● उदा॰ चौर३ चौर। चौरचौर३। [ यहाँ प्रथम और द्वितीय दोनों का प्लुत होता है। ] पर्याय से दोनों का प्लुत हो—इसके लिये द्वित्त्व के उपलक्षण के लिये आम्रेडित ग्रहण प्रतिपादित किया जाता है। ]।।९५।।

'अङ्ग' इस शब्द से युक्त तिङन्त जो आकाङ्क्षा रखने वाला (साकांक्ष) होता है वह भर्त्सना में प्लुत हो जाता है। उदा॰ अङ्ग कूज३, अङ्ग व्याहर३, इदानीं ज्ञास्यसि जाल्म। [ अरे चिल्ला ले, बोल ले, नीच! अभी जानेगा। यहाँ 'कूज' और 'व्याहर' इन दोनों के साथ 'इदानीं ज्ञास्यसि जाल्म' का सम्बन्ध होता है अतः साकाक्ष है। ]

तिङन्त—यह किसलिये है? अङ्ग देवदत्त! मिथ्या वदसि। [ यहाँ पहले कोई तिङन्त नहीं है। ] आकाङ्क्षावाला हो—इसका क्या फल है? अङ्ग पच। [ अरे पकाओ। ] यह किसी अन्य तिङन्त की अपेक्षा नहीं रखता है।

भर्त्सना में ही—इसका क्या फल है? अङ्ग अधीष्व ओदनं ते, दास्यामि। [ यहाँ भर्त्सना नहीं है। अतः 'तिङन्त' का प्लुत नहीं होता है। ]।।९६।।

**३७८५. विचार्यमाणानाम्।।९७।। (३६१६)**

**प्रमाणेन वस्तुपरीक्षणम्–विचारः, तस्य विषये विचार्यमाणानां वाक्यानां टेः प्लुतो भवति। होतव्यं दीक्षितस्य गृहा३इ (तै.६।१।४।५)। होतव्यं न होतव्यमिति विचार्यते। तिष्ठेद्यूपा३इ। अनुप्रहरेद्यूपा३इ। यूपे तिष्ठेद्, यूपे अनुप्रहरेदिति विचार्यते।।**

**३७८६. पूर्वं तु भाषायाम्।।९८।। (३६१७)**

**भाषायां विषये विचार्यमाणानां पूर्वमेव प्लवते। अहिर्नु३ रज्जर्नु। लोष्टो नु३ कपोतो नु[1]। प्रयोगापेक्षं पूर्वत्वम्।**

**न्यासः**

**विचार्यमाणानाम्**।। प्रमाणेन वस्तुपरीक्षणम् = विचारः। तेन विषयीक्रियमाणानि विचार्यमाणानि। बहुवचननिर्देशो येषामर्थगत एव विचारो न स्वरूपगतः, तेषामपि यथा स्यादित्येवमर्थः, इतरथा हि येषां स्वरूपगतो विचारस्तेषामेव स्यात्। न हि मुख्ये वाक्ये विचार्यमाणे सत्यर्थद्वारकं गौणं यस्य विचार्यमाणत्वं तस्य ग्रहणं युक्तम्। **गृहा३ इति**। गृह इत्यत्र एकारः, तस्य 'एचोऽप्रगृह्यस्य' इत्यादिना पूर्वार्धस्याकारः, उत्तरार्धस्य त्विकारः। तस्याकारस्यानेन प्लुतो भवति।।९७।।

**पूर्वं तु भाषायाम्**। पूर्वेणैव सिद्धे नियमार्थमेतत्। तुशब्दस्त्विष्टतोऽवधारणार्थः। असति हि तस्मिन् विपरीतोऽपि नियमो विज्ञायेत—भाषायामेव पूर्वमिति। पूर्वत्वं च प्रयोगापेक्षम्। अहिर्नु३ रज्जुर्नु३—इत्येतयोर्वाक्ययोर्यत् पूर्वं प्रयुज्यते तस्यैव टेः प्लुतो भवति। इह तु भाषाग्रहणात् पूर्वयोगश्छन्दसीति विज्ञायते।।९८।।

**पदमञ्जरी**

**विचार्यमाणानाम्**।

कोटिद्वयस्य विज्ञानं विचार इति कथ्यते।
विचार्यमाणस्तज्ज्ञानविषयीभूत उच्यते।।

इह तु विचार्यमाणार्थविषयत्वाद्वाक्यानि विचार्यमाणानि। **गृहा३इ इति**। गृहेशब्दस्य पूर्ववत् प्लुतविकारः। **अनुप्रहरेदिति**। अनुप्रहारः = शायनम्, व्यत्ययेन कर्मणि कर्तृप्रत्ययः, शाययेतेत्यर्थः। अथ वानुप्रहरेदित्यत्र यूपं यजमान इत्यस्याध्याहारः, किं यूपं यजमानः शाययेदिति विचारार्थः।।९७।।

**पूर्वं तु भाषायाम्**।। पूर्वेणैव सिद्धे नियमार्थमेतत्, तुशब्दस्त्विष्टतोऽवधारणार्थः, यथैवं विज्ञायेत—पूर्वमेव भाषायामिति, मैवं विज्ञायि—पूर्वं भाषायामेवेति। पूर्वत्वं च प्रयोगापेक्षम्। उदाहरणे नुशब्दो वितर्के। लोष्टः मृत्पिण्डः।।९८।।

**भावबोधिनी**

प्रमाण से वस्तु की परीक्षा लेना, परखना = विचार है, इस विषय में विचार्यमाण (विचार करने के विषय भूत) वाक्यों की टि का प्लुत होता है। उदा० होतव्यं दीक्षितस्य गृहा३ इ। [ दीक्षा ग्रहण कियेहुए व्यक्ति के घर में ] हवन करना चाहिए या नहीं करना चाहिए? इसका विचार किया जाता है। [ अतः वाक्य की टि का प्लुत होता है और वक्ष्यमाण 'एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' (८।२।१०७) इस सूत्र से प्लुतविषय के आदि भाग का 'आ' होता है और शेष उत्तर भाग का 'इ' तथा 'उ' हो जाता है। अतः 'गृहे' में पूर्वभाग 'आ' होता है वही प्लुत होता है शेष उत्तर में 'ई' होता है—गृहा३इ। ] तिष्ठेद् यूपा३इ। अनुप्रहरेद् यूपा३इयूप = यज्ञीय खूटे पर बैठे या न बैठे, यज्ञीय खूंटे पर प्रहार करे या न करे (लिटाये या न लिटाये) —यह विचार किया जाता है। यहाँ भी प्लुत में आ३इ आदेश पूर्ववत् ही समझना चाहिए। ]।।९७।।

भाषा = लौकिक संस्कृत में विचार्यमाण वाक्यों का केवल पूर्व ही प्लुत होता है। उदा० अहिर्नु३, रज्जुर्नु। लोष्टो नु३ कपोतो नु। [ 'नु' यह वितर्क में प्रयुक्त है। यह साँप है अथवा रस्सी? इसमें पूर्ववर्ती वाक्य की ही टि प्लुत होती है। लोष्टो नु३, कपोतो

१. स्थाणुर्नु३, पुरुषोनु३—इत्यधिकं पुस्तकान्तरे।

**इह भाषाग्रहणात् पूर्वयोगश्छन्दसि विज्ञायते।।**

**३७८७. प्रतिश्रवणे च।।९९।। (३६१८)**

**प्रतिश्रवणम् = अभ्युपगमः, प्रतिज्ञानम्, श्रवणाभिमुख्यं च। तत्राविशेषात् सर्वस्य ग्रहणम्। प्रतिश्रवणे यद्वाक्यं वर्तते तस्य टेः प्लुतो भवति। गां मे देहि भोः, अहं ते ददामि३। नित्यः शब्दो भवितुमर्हति३। देवदत्त भोः किमात्थ३।।**

**न्यासः**

**प्रतिश्रवणे च**।। प्रतिश्रुतिः = प्रतिश्रवणम्। प्रतिपूर्वाच्छ्रणोतेर्भावे ल्युट्, 'कुगति' इत्यादिना तत्पुरुषः। प्रतिपूर्वस्य शृणोतिर्यदा परानुग्रहो विवक्ष्यते, तदाभ्युपगमे वर्त्तते। अथ त्वविवक्षा परानुग्रहस्य, तदा प्रतिज्ञाने। यदा श्रुतिः श्रवणम्—इति भावसाधनेन श्रवणशब्देन प्रतिशब्दस्य 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः क्रियते, तदा श्रवणाभिमुख्ये श्रवणं प्रति प्रवृत्त इत्यर्थः। तदिह विशेषानभिधानात् सर्वस्मिन् प्रतिश्रवणे वाक्यस्य टेः प्लुतो भवति। **देवदत्त भोः किमात्थ३ इति**। एतच्छ्रवणाभिमुख्य उदाहरणम्। **देवदत्त भो** इत्यामन्त्रितम्। तत्र श्रवणार्थमेवमाह—**किमात्थ३ इति**। एकत्र श्रवणमुद्दिश्य प्रवृत्तत्वादभिमुखं भवति। अभ्युपगमे तूदाहरणम्—**मे देहि भोः, अहं ते ददामि३ इति**। प्रतिज्ञाने—**नित्यः शब्दो भवितुमर्हतीति**।

चकारो भाषायामित्यनुकर्षणार्थः।।९९।।

**पदमञ्जरी**

**प्रतिश्रवणे च**।। **प्रतिश्रवणमभ्युपगम इति**। अङ्गीकारः। **प्रतिज्ञानमिति**। प्रार्थितस्य देयत्वेन संवादः। अत्रोभयत्रापि गतिसमासः, अर्थद्वयेऽपि प्रतिपूर्वः शृणोतिः प्रसिद्धः। **श्रवणाभिमुख्यं चेति**। अत्र 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः। उदाहरणानि तु व्यत्क्रमेण दत्तानि। **किमात्थ३ इति**। किं ब्रूषे—इत्येतत्पृच्छति। अत्र च श्रवणाभिमुख्यं गम्यते। **हन्त ते ददामि३ इति**। अत्र प्रार्थितस्य संवादो गम्यते। **देवदत्त भोरित्यामन्त्रितम्**। स यदर्थमामन्त्रितस्तच्छ्रवणार्थं किमात्थ इति। गां मे देहि भोः, नित्यः शब्दो भवितुमर्हति, तस्मिन् तृतीये तूदाहरणे स्वाभ्युपगमो गम्यते।।९९।।

**भावबोधिनी**

नु। [ यहाँ भी पहले वाले वाक्य की टि प्लुत होती है। ] यह पूर्वत्व प्रयोग की अपेक्षा मानकर होता है अर्थात् जिस वाक्य का पहले प्रयोग है उसी की टि प्लुत होता है।

[ कहीं कहीं चारों वाक्यों में टि का प्लुत किया गया प्रकाशित है वह ठीक नहीं है। यहाँ दो-दो वाक्यों का एक समुदाय है। उसमें जो पहले वाला वाक्य है उसकी टि का प्लुत होता है। ]

इस सूत्र में 'भाषायाम्' का ग्रहण होने से इससे पूर्ववर्त्ती सूत्र वेदविषय में समझा जाता है।।९८।।

प्रतिश्रवण = (१) स्वीकृति, (२) प्रतिज्ञा करना और (३) सुनने के लिये अभिमुख = प्रवृत्त होना, इनमें कोई विशेष = भेद न होने से यहाँ इन सभी का ग्रहण होता है। प्रतिश्रवण में जो वाक्य प्रयुक्त है उसकी टि का प्लुत होता है। उदा० (१) गां मे देहि भोः, अहं ते ददामि३। [ श्रीमन् मुझे गाय दे दीजिये, मैं दे दूँगा। यहाँ प्रतिश्रवण = स्वीकार अर्थ हैं। ] (२) नित्यः शब्दः भवितुम् अर्हति३। [ शब्द नित्य हो सकता है, यह प्रतिज्ञान = प्रतिश्रवण है। ] (३) देवदत्त भोः किम् आत्थ३। [ हे देवदत्त? क्या कह रहे हो। यहाँ अपनी बात सुनाने के लिये अभिमुख करना = प्रतिश्रवण है। वाक्य की टि प्लुत होता है। ]

[ बहुत से संस्करणों में यहाँ तीन वाक्य न मानकर दो ही माने गये है और उन्हीं की टि का प्लुत है। किन्तु यह प्रामादिक है। वृत्ति में प्रतिश्रवण के तीन अर्थ लिखे गये हैं—(१) अभ्युपगम, (२) प्रतिज्ञान, (३) श्रवणाभिमुख्य। अतः क्रमशः तीनों उदाहरणों में ये अर्थ होते हैं। ]।।९९।।

**३७८८. अनुदात्तं प्रश्नान्ताभिपूजितयोः।।१००।। (३६१९)**

**अनुदात्तः प्लुतो भवति प्रश्नान्ते, अभिपूजिते च। अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूता३इ, पटा३ उ?**[1]

**अग्निभूते, पटो–इत्येतयोः प्रश्नान्ते वर्त्तमानयोरनुदात्तः प्लुतो भवति।**

**'अगमः' इत्येवमादीनां तु 'अनन्त्यस्यापि प्रश्नाख्यानयोः' (८।२।१०५) इति स्वरितः प्लुतो भवति।**

**अभिपूजिते–शोभनः खल्वसि माणवक३।**

**३७८९. चिदिति चोपमार्थे प्रयुज्यमाने।।१०१।। (३६२०)**

**न्यासः**

**अनुदात्तं प्रश्नान्ताभिपूजितयोः।। अगम३ इति।** गमेर्लुङ्, पुषादिसूत्रेण लृदित्त्वादङ्, सिप्।

**अग्निभूता३ इति, पटा३ उ इति।** सम्बुद्धौ परतः 'ह्रस्वस्य गुणः' इति गुणः, 'एचोऽप्रगृह्यस्य' इत्यादिनाऽकारः, इदुतौ च। उदाहरणवाक्ये पूर्वपदानामेतेनैव प्लुतः कृत इति गृहीत्वा यश्चोदयेत्—अथ कथमिहानन्त्यस्यापि प्लुतो भवति, यावता वाक्यस्य टेरित्यनुवर्तते इति? त प्रत्याह—**अग्निभूते, पटो इत्येतयोरित्यादि**।।१००।।

**चिदिति चोपमार्थे प्रयुज्यमाने।। चिदितीति।** इतिकरणः प्रयुज्यमान इत्येतच्छब्दस्य विशेषणमित्यस्यार्थस्य

**पदमञ्जरी**

**अनुदात्तं प्रश्नान्ताभिपूजितयोः।।** प्रश्नवाक्ये यच्चरमं प्रयुज्यते स प्रश्नान्तः। क्वचित्पठ्यते—**नानेन प्लुतो विधीयते**, किन्तु **दूराद्धूतादिषु विहितस्य 'अनन्त्यस्यापि प्रश्नाख्यानयोः'** इति स्वरितप्लुतस्या**नुदात्तत्वं गुणमात्रं विधीयत इति**। तत्रैषा वचनव्यक्तिः—प्रश्नान्ते अभिपूजिते च यः प्लुतः सोऽनुदात्तो भवतीति। तत्राभिपूजिते 'दूराद्धूते च' इति प्लुत इति। इतरत्र तु 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति। **अगमः पूर्वान् ग्रामानित्येषां** स्वरितः प्लुतः। **अग्निभूते, पटो**—इत्यन्यतरेण वाक्यपरिसमाप्तिर्भवति। तत्र यदा येन वाक्यपरिसमाप्तिस्तदा तस्यानेनानुदात्तः प्लुतः, स च पूर्वभागस्य; उत्तरभागस्य तूदात्ताविदुतौ भवतः।।१००।।

**चिदिति चोपमार्थे प्रयुज्यमाने।। इतिकरणः किमर्थः?** अक्रियमाणे तस्मिन् उपमानार्थे कस्मिंश्चिच्छब्दे प्रयुज्यमाने चिच्छब्दः प्लुत इति विज्ञायेत। इतिकरणे तु सति 'प्रयुज्यमाने' इत्येतच्चिच्छब्दस्य विशेषणम्, प्लुतस्तु

**भावबोधिनी**

प्रश्नान्त में और अभिपूजित में अनुदात्त प्लुत हो जाता है। उदा॰ अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूता३इ पटा३ उ? [इनमें सभीमें प्लुत कैसे होता है?] 'अग्निभूते' 'पटो' इन दोनों प्रश्नान्त में वर्तमानों का अनुदात्त प्लुत (इस सूत्र से) होता है।

'अगमः' आदि (शेष तीनों) का तो वक्ष्यमाण 'अनन्त्यस्यापि प्रश्नाख्यानयोः' (८।२।१०५) से स्वरित प्लुत होता है।

अभिपूजित में—उदा॰ शोभनः खलु असि माणवक३। [इसमें अभिपूजित माणवक है इसका अनुदात्त प्लुत होता है।]

**विमर्श**—यहाँ 'अगमः पूर्वान् ग्रामान् अग्निभूते? और 'अगमः पूर्वान् ग्रामान् पटो'? ये दो वाक्य अलग-अलग हैं। लाघव के कारण एक साथ लिख दिये गये हैं। अतः 'अग्निभूते' जब प्रश्नवाक्यान्तमें है तब उसका अनुदात्त प्लुत होता है। इसीप्रकार जब 'पटो' यह प्रश्नवाक्यान्त में होता है तब इसका अनुदात्त प्लुत होता है। अतः 'अग्निभूते' और 'पटो' को विशेष्य विशेषण नहीं समझना चाहिए। अन्यथा प्लुत करना कठिन होगा। देखें पदमंजरी।।१००।।

'अनुदात्तम्' इसकी अनुवृत्ति होती है। 'चित्' इस निपात के उपमा (आदृश्य) अर्थ में प्रयुक्त किये जाने पर वाक्य की टि का अनुदात्त प्लुत होता है। प्लुत का भी यहाँ विधान किया जाता है केवल गुण का नहीं है। उदा॰ अग्निचद् भाया३त्। राजचिद्

**'अनुदात्तम्' इति वर्त्तते। 'चित्'-इत्येतस्मिन्निपाते उपमार्थे प्रयुज्यमाने वाक्यस्य टेरनुदात्तः प्लुतो भवति। प्लुतोऽप्यत्र विधीयते, न गुणमात्रम्। अग्निचिद्भाया३त्। राजचिद्भाया३त्। अग्निरिव भायात्, राजेव भायादित्यर्थः।**

**उपमार्थे इति किम्? कथञ्चिदाहुः। प्रयुज्यमान इति किम्? अग्निर्माणवको भायात्।।**

## ३७९०. उपरिस्विदासीदिति च।।१०२।। (३६२१)

**'अनुदात्तम्' इति वर्त्तते। 'उपरिस्विदासीत्'-इत्येतस्य टेरनुदात्तः प्लुतो भवति। अधः स्विदासी३त्। उपरिस्विदासी३त्। (तै.ब्रा.२।८।९५)**

### न्यासः

द्योतनाय। असति ह्येतदर्थ इतिकरणे ह्युपमार्थेऽन्यस्मिन् प्रयुज्यमाने चिच्छब्दः प्लवत इति विज्ञायेत। तत्प्रयुज्यमानतयात्र तस्मिन् विशेषिते वाक्यस्य टेः प्लुतः सिद्धो भवति।

**कथञ्चिदाहुरिति**। अत्र कृच्छ्रे चिच्छब्दो वर्त्तते। **अग्निर्माणवको भायादिति**। अग्निरिव माणवको दीप्येतेत्यर्थः। अस्तीहोपमार्थः, तथापि चिच्छब्दस्य प्रयोगो नास्तीति न प्लुतो भवति। असति तु प्रयुज्यमानग्रहणे, **इहोपमानगतौ** सत्यां यदप्यन्येषामपि सर्वेषामुपमानार्थानां प्रयोगो गम्यते, तथापि योऽत्र चिच्छब्दस्य **प्रयोगस्तदाश्रयः** प्लुतः स्यादेव। चकारोऽस्यैव प्लुतस्य समुच्चयार्थः। समुच्चयश्च भेदाधिष्ठान इति प्लुतानन्तरमेवेदमाख्यातं भवति; अन्यथा पूर्वेष्वेव प्लुतनिमित्तेष्वेतस्मिन् विषयेऽनुदात्तत्वमात्रं विधीयत इति विज्ञायेत।।१०१।।

**उपरिस्विदासीदिति च**।। इतिकरणः कार्यिणो निर्देशार्थः। कार्यं हि विधातुमवश्यं षष्ठ्यासौ निर्देष्टव्यः। इतिकरणेन वेति वार्थः प्रत्यवमृश्यते। शब्दप्रधानस्त्विहोपरिस्विदादिशब्दः कार्य इष्यत इतीतिकरणेन निर्दिष्टः

### पदमञ्जरी

'वाक्यस्य टेः' इत्यधिकारात्तस्यैव भवति।

**कथञ्चिदिति**। अत्र कष्टे चिच्छब्दः। **अग्निर्माणवको भायादिति**। अग्निरिव माणवको दीप्येतेत्यर्थः। अत्रोपमार्थस्य गम्यमानत्वादस्ति चिच्छिब्दस्य प्रतीतिः, प्रयोगस्तु नास्ति। यद्यप्यन्येषामप्युपमानार्थानामिवादीनामस्ति प्रतीतिः, तथापि चिच्छब्दस्यापि तावदस्तीति स्यादेव प्लुतः। चकारोऽस्य प्लुतस्य समुच्चयार्थः। समुच्चयश्च भेदाधिष्ठान इति प्लुतान्तरमेवेदमाख्यातं भवति; अन्यथा पूर्वसूत्रवत् पूर्वेष्वेव प्लुतनिमित्तेष्वनुदात्तत्वगुणमात्रं विधीयत इति विज्ञायेत। एतदेव च ज्ञापकम्—पूर्वसूत्रे गुणमात्रं विधीयत इति।।१०१।।

**उपरिस्विदासीदिति च**।। अत्रापि 'विचार्यमाणानाम्' इति विहितस्य प्लुतस्य गुणमात्रं विधीयते।।१०२।।

### भावबोधिनी

भाया३त्। अग्नि के समान कान्तिमान् हो जाय। राजा के समान कान्तिमान् हो जाय—यह अर्थ है। [ इसमें 'चित्' यह उपमा अर्थ में है। कश्चित् आदि में स्वार्थमें ही होता है। ]

उपमा अर्थ में—इसका क्या फल है? कथञ्चिदाहुः। [ यहाँ उपमा अर्थ नहीं है अपितु कष्ट अर्थ है। ] प्रयुज्यमान हो—इसका क्या फल है? अग्निर्माणवको भायात्। माणवक अग्नितुल्य कान्तिमान् हो जाय। यहाँ उपमार्थ है किन्तु चिद्' का प्रयोग नहीं है। अतः अनुदात्त प्लुत नहीं होता है। ]।।१०१।।

'अनुदात्तम्' इसकी अनुवृत्ति होती है। 'उपरिस्विदासीत्' इसके टि का अनुदात्त प्लुत होता है। उदा० अधः स्विदासी३त्। उपरिस्विदासी३त्।

**अधः स्विदासीत्–इत्यत्र 'विचार्यमाणानाम्' (८।२।९७) इत्युदात्तः प्लुतः। उपरिस्विदासीत्–इत्यत्र तु अनेनानुदात्तः।।**

## ३७९१. स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु ।।१०३।। (३६२२)

**स्वरितः प्लुतो भवति आम्रेडिते परतः असूयायाम्, सम्मतौ, कोपे, कुत्सने च गम्यमाने। 'वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु' (८।१।८) इति द्विर्वचनमुक्तम्, तत्रायं प्लुतविधिः।**

**असूयायां तावत्–माणवक३ माणवक अभिरूपक३ अभिरूपक, रिक्तं त आभिरूप्यम्।**

**सम्मतौ–माणवक३ माणवक अभिरूपक३ अभिरूपक, शोभनः खल्वसि।**

**न्यासः**

प्लुतो यथा विज्ञायते। **अधःस्विदासीदित्यत्रेत्यादि**। अत्राधःस्विदासीद्, उतोपरिस्विदासीदित्येतद् विचार्यते; तत्र पूर्वस्मिन् वाक्ये 'विचार्यमाणानाम्' इत्यादिनोदात्तः प्लुतः, इतरस्मिंस्त्वनेनानुदात्तः, तस्यैवापवादः।

चकारस्य पूर्ववदेव प्रयोजनम्।।१०२।।

**स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु**।। असूयादिशब्दानाम् 'वाक्यादेरामन्त्रित' इत्यादौ सूत्रेऽर्थ आख्यातः। **माणवक३ माणवकेत्यादौ** द्विर्वचनं तेनैव सूत्रेण वेदितव्यम्।

**वावचनं कर्त्तव्यमिति**। वेत्येतद् विकल्पोपलक्षणम्। वचनं व्याख्यानमित्यर्थः। अत्रैतदुक्तं भवति—विकल्पव्याख्यानं कर्त्तव्यमिति। तत्रेदं व्याख्यानम्—'विभाषा पृष्टप्रतिवचने हेः' इत्यतो मण्डूकप्लुतिन्यायेन विभाषाग्रहणमनुवर्त्तते, तेन विकल्पो भविष्यतीति।।१०३।।

**पदमञ्जरी**

**स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु**।। **वावचनं कर्त्तव्यमिति**। 'सर्व एव प्लुतः' इवि वचनमन्यदीयमिति **वार्त्तिककारेण** तावदिदं पठितं **वृत्तिकारोऽपि** तदेवापठत्।।१०३।।

**भावबोधिनी**

[ अधःस्विदासी३त्—इसमें इस सूत्र से कैसे प्लुत होगा? ] 'अधः स्विदासी३त्' इसमें तो 'विचार्यमाणानाम्' (८।२।९७) इस सूत्र से ही वाक्य की टि का उदात्त प्लुत होता है। 'उपरि स्विदासी३त्' इसमें इस प्रस्तुत सूत्र से अनुदात्त प्लुत होता है। [ 'स्वित्' यह अव्यय वितर्क अर्थ में है। अतः 'सृष्टिनिर्माण के पहले तमस् = प्रकृति स्रष्टा से नीचे था अथवा ऊपर था? इसमें विचार्यमाण विषयवाले वाक्यों का उदात्त प्लुत इस सूत्र से होता है। किन्तु 'उपरि स्विदासी३त्' में अपवादभूत प्रस्तुत सूत्र से अनुदात्त प्लुत हो जाता है [ 'अधः स्विदासी३त्' इसमें प्लुत यथावत् उदात्त ही रहता है यहाँ भेद दिखलाने के लिये दो उदाहरण दिये गये हैं। ]।।१०२।।

आम्रेडित परे रहते स्वरित प्लुत होता है—(१) असूया, (२) सम्मति, (३) कोप और (४) कुत्सन अर्थ की प्रतीति होने पर। 'वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु' (८।१।८) इस सूत्र से असूया आदि अर्थों में द्वित्व कहा गया है, उसी में आम्रेडित (= बाद वाले) के परे रहते पूर्ववाले में यह प्लुतविधि होती है।

क्रमशः उदा० (१) पहले असूयामें—माणवक३ माणवक अभिरूपक३ अभिरूपक रिक्तं ते आभिरूप्यम्। [ माणवक माणवक सुन्दर सुन्दर तेरी सुन्दरता रिक्त = शून्य है। यहाँ असूया की प्रतीति में आम्रेडित परे पूर्व वाले का प्लुत होता है। इसीप्रकार आगे भी समझना चाहिए। ]

(२) सम्मति में—माणवक३ माणवक अभिरूपक३ अभिरूपक शोभनः खलु असि। (....निश्चित रूप से सुन्दर हो। यहाँ सम्मति है।

कोपे–माणवक३ माणवक अविनीतक३ अविनीतक, इदानीं ज्ञास्यसि जाल्म।

कुत्सने–शाक्तीक३ शाक्तीक याष्टीक३ याष्टीक, रिक्ता ते शक्तिः।

❀ असूयादिषु वावचनं कर्त्तव्यम् ❀ (म.भा.)। माणवक माणवक–इत्येवमाद्यपि यथा स्यात्।।

**३७९२. क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्।।१०४।। (३६३२)**

'स्वरित' इति वर्तते। क्षिया–आचारभेदः, आशीः–प्रार्थनाविशेषः, शब्देन व्यापारणम्–प्रैषः–एतेषु गम्यमानेषु तिङन्तमाकाङ्क्षं यत्तस्य स्वरितः प्लुतो भवति। आकाङ्क्षतीत्याकाङ्क्षम्, तिङन्तमुत्तरपदमाकाङ्क्षतीत्यर्थः।

क्षियायां तावत्–स्वयं रथेन याति३ उपाध्यायं पदातिं गमयतीति। स्वयं ओदनं ह भुङ्क्ते ३ उपाध्यायं सक्तून्पाययति। पूर्वमत्र तिङन्तमुत्तरपदमाकाङ्क्षतीति साकाङ्क्षं भवति।

आशिषि–सुतांश्च लप्सीष्ट३ धनं च तात। छन्दोऽध्येषीष्ट३ व्याकरणं च भद्र।

**न्यासः**

**क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्**।। क्षिया = आचारभेदः। इष्टाशंसनम् = आशीः। नियोगः = प्रैषः। आकाङ्क्षत्यपरं तिङन्तमेव। कुत एतत्? आकाङ्क्षाग्रहणादेव। सुबन्ते हि साधनादायिनी तिङन्तस्यावश्यम्भाविनी अपेक्षेति।।

**धनञ्च तातेति**। अत्र लप्सीष्टेत्येतदपेक्षते। **व्याकरणं चेति**। अत्राप्यध्येषीष्टेत्येतत्।

**पदमञ्जरी**

**क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्**।। **क्षिया** = आचारभेदः, आचारोल्लङ्घनम्। इष्टाशंसनम् = **आशीः**। शब्देन व्यापारणम् = **प्रैषः**। क्वचिद् **वृत्तावप्ययं** ग्रन्थः पठ्यते।

**भावबोधिनी**

(३) कोप में—माणवक३ माणवक अविनीतक३ अविनीतक इदानीं ज्ञास्यसि जाल्म। [ माणवक माणवक धृष्ट धृष्ट नीच अभी जान जाओगे। यहाँ कोप अर्थ हैं। ]

(४) कुत्सन अर्थ में—शाक्तीक३ शाक्तीक याष्टीक३ याष्टीक रिक्ता ते शक्तिः। [ शाक्तीक (शक्ति नामक आयुधवाले) शाक्तीक, याष्टीक (यष्टि रूप आयुध वाले) याष्टीक तुम्हारी शक्ति शून्य = हीन हो गयी है। यहाँ कुत्सा करना अर्थ है। सभी में प्रथम शब्द रूप प्लुत होता है। ]

❀ असूया आदि में विकल्पवचन करना चाहिए अर्थात् प्लुतयुक्त और प्लुतरहित दोनों रूप करने चाहिए। ❀ जिससे कि 'माणवक माणवक.....' इत्यादि [ प्लुतरहित ] भी प्रयोग हो सके।।१०३।।

'स्वरित' इसकी अनुवृत्ति होती है। (१) क्षिया = आचार की भिन्नता, आचार का उल्लंघन। (२) आशीः = प्रार्थनाविशेष, (३) शब्द के उच्चारण द्वारा किसी कार्यमें लगाना = प्रैष है—इन अर्थों की प्रतीति रहने पर जो तिङन्त आकांक्ष (आकांक्षा रखने वाला) होता है उसका स्वरित प्लुत होता है। आकाङ्क्षा करता है = आकांक्ष है, पूर्ववर्ती तिङन्त उत्तरपद की आकाङ्क्षा करता है, यह अर्थ है।

(१) क्षिया अर्थ में पहले उदा० स्वयं रथेन याति३, उपाध्यायं पदातिं गमयति। [ स्वयं तो रथ से जाता है और उपाध्याय = गुरु को पैदल चलवाता है। ] स्वयं ह ओदनं भुङ्क्ते३, उपाध्यायं सक्तून् पाययति। [ स्वयं तो भात खाता है और उपाध्याय

**प्रैषे–कटं कुरु३ ग्रामं च गच्छ। यवान् लुनीहि३ सक्तूंश्च पिब।**

**आकाङ्क्षमिति किम्? दीर्घं ते आयुरस्तु। अग्नीन्विहर।।**

**३७९३. अनन्त्यस्यापि प्रश्नाख्यानयोः।।१०५।। (३६२४)**

**पदस्येति वर्तते, स्वरितमिति च। अनन्त्यस्यापि अन्त्यस्यापि पदस्य टेः प्लुतो भवति प्रश्ने, आख्याने च। अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूता३इ। पटा३उ। सर्वेषामेव पदानामेष स्वरितः प्लुतः। अन्त्यस्य**

**न्यासः**

**लुनीहि३ इति**। 'ई हल्यघोः' इतीत्वम्। **पिबेति**। पाघ्रादिसूत्रेण पिबादेशः।

**अस्त्विति**। अस्तेर्लोट्, एरुः' इत्युत्वम्, अदादित्वाच्छपो लुक्। एतच्चापरं तिङन्तं नापेक्षते। एवं विहरेत्येतदपि।।१०४।।

**अनन्त्यस्यापि प्रश्नाख्यानयोः।। अन्त्यस्य त्वित्यादि**। तुशब्दः पदान्तरेभ्यो विशेषं दर्शयति। अन्त्यस्यानेनापि स्वरितः, 'अनुदात्तं प्रश्नान्ताभिपूजितयोः' इत्यनेनाप्यनुदात्तः, तयोश्चैकत्र यौगपद्यं न सम्भवति। तत्र वचनप्रामाण्यादनुदात्तोऽपि पक्षे न भवति, स्वरितोऽपि।।१०५।।

**पदमञ्जरी**

**दीर्घं ते आयुरस्तु, अग्नीन्विहरेति**। क्षियायां तु न प्रत्युदाहृतम्; नित्यसाकाङ्क्षत्वात्। न हि 'स्वयं ह रथेन याति' इत्येतावत्युक्ते आचारभेदो गम्यते, किं तर्हि? उपाध्यायं पदातिं गमयति' इत्युक्ते।

इह 'उपरिस्विदासीदिति च' इत्यस्यानन्तरम् 'अङ्गयुक्तं तिङाकाङ्क्षम्' इति वक्तव्यम्, ततः 'क्षियाशीःप्रैषेषु स्वरितः' इति , ततः 'आम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु' इति , एवं हि तिङाकाङ्क्षग्रहणं द्विर्न कर्त्तव्यं भवति? तथा तु न कृतमित्येव।।१०४।।

**अनन्त्यास्यपि प्रश्नाख्यानयोः।। सर्वेषामेव पदानामिति**। नन्वन्त्यस्यानुदात्तम्, 'प्रश्नान्ताभिपूजितयोः' इत्यनुदात्तप्लुतेन भवितव्यम्, तत्कथमेष स्वरितः प्लुतो भवति? अत आह—**अनन्त्यस्येति**। यद्यप्यत्र विकल्पो न श्रुतः, तथाप्यनेनापिशब्देनान्त्यस्याप्ययं स्वरितः प्लुतो भवति, ततश्चानुदात्तप्लुतः पाक्षिकः सम्पद्यते इति भावः।

**भावबोधिनी**

को सत्तू खिलवाता = पिलवाता है। ] इनमें पहले वाला तिङन्त उत्तरपद की आकाङ्क्षा रखता है [ क्योंकि उसका अर्थ पूरा नहीं प्रतीत होता है। ] इसलिये वह साकाङ्क्ष होता है। [ स्वयं तो रथ से जाता है—ऐसा कहने पर आगे की जिज्ञासा बनी रहती है। अतः साकांक्ष है। ]

(२) आशीर्वाद में—सुतान् च लप्सीष्ट३ धनं च तात। [ बेटा! पुत्रों को प्राप्त करों और धन को भी। ] छन्दोऽध्येषीष्ट३ व्याकरणं च भद्र। [ आयुष्मन् छन्दों की पढ़ो और व्याकरण को पढ़ो। इनमें 'च' के कारण आकाङ्क्षा बनी रहती है। अतः पूर्ववर्ती साकांक्ष तिङन्त स्वरित प्लुत होता है। ]

(३) प्रैष में—कटं कुरु ३ ग्रामं च गच्छ (चटाई बनाओ और गाँव भी जाओ।) यवान् लुनीहि३ सक्तून् च पिब। [ जौ काटो और सत्तू पिओ। यहाँ भी आंकाक्षा है। तथा शब्द बोल कर काम में लगाया जाने से प्रैष है। ]

आकाङ्क्ष = साकांक्ष हो—इसका क्या फल है? दीर्घं ते आयुरस्तु। अग्नीन् विहर। [ यहाँ वाक्य निराकांक्ष हैं। अतः इस सूत्र से पूर्ववाक्य का प्लुत स्वरित नहीं होता है। ]।।१०४।।

'पदस्य' और 'स्वरितम्' इनकी अनुवृत्ति होती है। [ वाक्य के ] अनन्त्य भी तथा अन्त्य भी पद की टि का प्लुत होता है प्रश्न में और आख्यान में। उदा० अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूता३इ? [ अगम३ः पूर्वा३न्, ग्रामा३न् ]पटा३ उ? [ दोनों वाक्यों में ] सभी पदों की टि का यह स्वरित प्लुत होता है। अन्तिम पद का भी 'अनुदात्तं प्रश्नान्ताभिपूजितयोः' (८।२।१००) से प्लुत होता है। इस पक्ष में अनुदात्त भी होता है।

**'अनुदात्तं प्रश्नान्ताभिपूजितयोः' (८।२।१००) इति अनुदात्तोऽपि पक्षे भवति।**

**आख्याने–अगम३ः पूर्वा३न् ग्रामा३न् भोः३।।**

## ३७९४. प्लुतावैच इदुतौ ।।१०६।। (३६२५)

**दूराद्धूतादिषु प्लुतो विहितः, तत्र ऐचः प्लुतप्रसङ्गे तदवयवभूताविदुतौ प्लुतौ। ऐ३तिकायन। औ३पमन्यव। अत्र यदेवर्णोवर्णयोः अवर्णस्य च समविभागः, तदा इदुतौ द्विमात्रावनेन प्लुतौ क्रियेते।**

**'प्लुतौ' इति हि क्रियानिमित्तोऽयं व्यपदेशः–इदुतौ प्लवेते, वृद्धिं गच्छत इत्यर्थः। तावती च सा प्लुतिर्भवति, यया तावेचौ त्रिमात्रौ सम्पद्येते।**

**न्यासः**

**प्लुतावैच इदुतौ**।। 'दूराद्धूते च' इत्येवमादिभिर्लक्षणैःप्लुतो विधीयमानः 'अचश्च' इत्यस्योपस्थाने सति यत्रैव प्लुत उक्तः, तत्र तस्यैवैचः समुदायात्मनः स्यात्, तदवयवयोरेवेष्यते। स च वचनमन्तरेण न सिध्यतीतीदमारभ्यते। तस्य तु प्लुतस्य निमित्तं दूराद्धूतादेवैचः प्रसङ्ग इति पूर्वेण प्रकरणेन प्लुतस्य प्राप्तौ सत्यामित्यर्थः। **ऐ३तिकालयन, औ३पमन्यवेति**। अत्र 'गुरोरनृतोः' इत्यादिना ऐचः प्लुते प्राप्तेऽनेन तदवयवयोरिदुतोः प्लुतः क्रियते। ऐ३तिकायन, औ३पमन्यवेत्यत्र यद्यैचोरवयवयोरिदुतोःप्लुतः क्रियते, तत्रैकारौकारौ चतुर्मात्रौ सार्द्धत्रिमात्रौ वा प्राप्नुतः। इह ह्यैचो समाहारवर्णौ; मात्राऽवर्णस्य, मात्रेवर्णोवर्णयोः। अपरे त्वाहुः—अर्धमात्राऽवर्णस्य,

**पदमञ्जरी**

ननु चापिशब्द आख्यानेऽन्त्यसमुच्चयेन चरितार्थः, ततः किम्? प्रश्नेऽन्त्यस्यानुदात्तस्य नित्यं प्लुतः प्राप्नोति, तत्र विकल्पाभावान्नैष दोषः। प्रश्नेऽप्यपिशब्दस्य तात्पर्यं गम्यते; सहनिर्दिष्टत्वात्, ततश्च प्रश्नान्ते स्वरितानुदात्तयोः प्लुतयोर्विकल्पो भविष्यति।।१०५।।

**प्लुतावैच इदुतौ**।। लक्षणान्तरेणैवैचोः प्लुतप्रसङ्गे तदवयवयोरिदुतोः प्लुतार्थं वचनम्। वचनसामर्थ्याद्वर्णैकदेशयोरपीदुद्ग्रहणेन ग्रहणम्। **ऐचः प्लुतप्रसङ्गे इति**। केचिदाहुः—'सूत्रे प्लुताविति प्लुतिशब्दात्सप्तमी, ऐचः प्लुतौ प्राप्तायामिति तदनेन दर्शितम्' इति, तदयुक्तम्; 'प्लुतौ' इति हि क्रियानिमित्तोऽयं व्यपदेशः—इति प्रथमाद्विवचनान्तत्वेन व्याख्यास्यमानत्वात्। तस्मात् प्रकरणप्राप्तये तदुक्तम्। उदाहरणे दूराद्धूते 'गुरोरनृतः' इत्येव प्लुतः। यदि ऐकारौकारयोरवयवयोरिदुतोः प्लुतः क्रियते, समुदायस्य चतुर्मात्रताऽर्धचतुर्थमात्रता

**भावबोधिनी**

आख्यान (= प्रश्न के उत्तर) में उदा॰ अगम३ः पूर्वा३न् ग्रामा३न् भो३ः। [ पहले प्रश्न—अग्निभूति क्या पूर्व के गावों में गये थे? उत्तर = आख्यान है—हाँ, पूर्व के गाँवों में गया था। सभी का स्वरित प्लुत होता है। ]।।१०५।।

दूर से बुलाने आदि अर्थों में प्लुत का विधान किया गया है, इसमें ऐच् = ए ओ ऐ औ के प्लुत के प्रसंग में उनके अवयवभूत इ तथा उ प्लुत होते हैं। उदा॰ ऐ३ तिकायन। औ३पगव। इनमें जब इवर्ण तथा अवर्ण का और उवर्ण तथा अवर्ण का समान रूप से विभाग किया जाता है तब दो मात्रा वाले इ तथा उ इसके द्वारा प्लुत किये जाते हैं। [ इसके फलस्वरूप अवर्ण प्लुत नहीं हो पाता है। ]

प्लुतौ—यह क्रियानिमित्तक प्रयोग = व्यवहार है— इ और उ प्लुत होते हैं, वृद्धि को प्राप्त करते हैं अर्थात् दो दो मात्रावाले हो जाते हैं। और वह प्लुति उतनी ही होती है जिससे वे एच् तीन मात्राओं वाले हो जाते हैं। [ अवर्ण की एक मात्रा और इ तथा उ की दो मात्रायें मिलकर तीन होती हैं। ]

किन्तु जब आधी मात्रा अवर्ण की और अध्यर्ध (डेढ़) मात्रा इवर्ण और उवर्ण की होती है तब वे अर्धतृतीय मात्रा वाले किये जाते हैं। [ भाव यह है कि ऐच् दो मात्राओं वाले होते हैं। अतः आधी मात्रा का अर्थ है एक मात्रा। यह एक मात्रा अवर्ण की है।

**यदा त्वर्धमात्रावर्णस्याध्यर्धमात्रा इवर्णोवर्णयोः, तदा तावर्धतृतीयमात्रौ क्रियेते इति।**

**भाष्ये तूक्तम्-'इष्यते एव चतुर्मात्रः प्लुतः' (म.भा.) इति। तत्कथम्? समप्रविभागपक्षे इदुतोरनेन त्रिमात्रः प्लुतो विधीयते।।**

**न्यासः**

अध्यर्धमात्रेवर्णोवर्णयोरिति। अत्र पूर्वस्मिन् दर्शनेऽने प्लुते कृते सति इदुतोस्तिस्रो मात्राः, अवर्णस्य चैकमात्रेति चतुर्मात्रः प्राप्नोति; इतरत्र तु दर्शनेऽवर्णस्यार्धमात्रा, इदुतोस्तु ता एव तिस्र इति सार्धत्रिमात्रः प्राप्नोतीत्यत आह— **अत्र यदेत्यादि**।

ननु च त्रिमात्रस्य प्लुत इति संज्ञा कृता, तत् कथं द्विमात्रावपि प्लुतौ शक्यावनेन कर्तुम्? इत्यत आह— **प्लुताविति हीत्यादिना**। एतेन लौकिकस्यात्र प्लुतस्य ग्रहणम्, न पारिभाषिकस्येति दर्शयति। कुतः पुनरेतल्लभ्यते? पुनः प्लुतग्रहणात्। शास्त्रीये हि प्लुते गृह्यमाणे प्लुतग्रहणे प्रकृते पुनः प्लुतग्रहणमनर्थकं स्यात्, लोके हि च प्लुतो वृद्धिमानुच्यते। अत एवाह—**इदुतौ वृद्धिं गच्छत इत्यर्थ इति**। अनेकार्थत्वाद्धातूनां प्लवतिर्वृद्धावपि वर्त्तते। नन्वेवमप्यनियमेन वृद्धिः प्रसज्यते; इयत्तानभिधानात्, ततश्च यावती वृद्धिः स्याद्, यावत्या चतुर्मात्रावैचौ सम्पद्येयातामिति? अत्राह—**तावती चेत्यादि**। प्लुतिर्वृद्धिरित्यर्थः। कथं पुनरयं नियमो लभ्यते? एवं मन्यते—ऐच इति प्लुतापेक्षया षष्ठी। इदुतौ तथा प्लवेते यथा स प्लुत एङोर्भवति; एवञ्चैचोर्भवति यदि तावती वृद्धिर्भवति यावत्या तावैचौ त्रिमात्रौ सम्पद्येते। अकृतायां हि वृद्धौ ऐच्त्वमेव स्यात्; युक्तपरिमाणत्वादैचाम्, ततश्चैच्सम्बन्धी प्लुतौ न स्यादिति।

**अर्धतृतीयमात्राविति**। अर्धतृतीयं ययोर्मात्रयोस्तेऽर्धतृतीयमात्रे, ते ययोस्तावर्धतृतीयमात्रौ। इदं तावद् वार्त्तिककारमतमश्रित्य समाधानमुक्तम्।

**पदमञ्जरी**

वा प्राप्नोति, कथम्? इमावैचौ समाहारवर्णौ; मात्राऽवर्णस्य, मात्रेवर्णोवर्णयोः। अपरे त्वाहुः—अर्धमात्राऽवर्णस्य, अध्यर्धमात्रेवर्णोर्णयोरिति। तत्र पूर्वस्मिन्कल्पे इदुतोरनेन प्लुते कृते तयोस्तिस्रो मात्राः, अवर्णस्य चैका मात्रेति समुदायश्चतुर्मात्रः प्राप्नोति, पक्षान्तरे त्वर्द्धचतुर्थमात्रः प्राप्नोत्यत आह—**अत्रेति**।

ननु च त्रिमात्रस्याचः प्लुतसंज्ञा कृता, तत्कथं द्विमात्राविदुतावनेन शक्येते कर्तुम्? अत आह—**प्लुताविति हीति**। अनेन प्लुताविति कर्त्तरि निष्ठा, न संज्ञाशब्द इति दर्शयति। **वृद्धिं गच्छत इत्यर्थ इति**। अनेकार्थत्वाद्धातूनां प्लवतिर्वधनेऽपि वर्त्तते। नन्वेवमपि न ज्ञायते—कियती सा वृद्धिरिति? अत आह—**तावती चेति**। एवं मन्यते—प्रकृतिमपि प्लुतग्रहणमत्र सम्बध्यते, ततश्चायमर्थो भवति—ऐचोऽवयवाविदुतौ तथा वर्धेते यथा ऐचौ प्लुतौ सम्पद्येते इति। तस्मादनभिमताया वृद्धेरप्रसङ्ग, इति।

**भावबोधिनी**

आगे जो इवर्ण या उवर्ण है उसकी भी एक मात्रा है उसे अध्यर्ध = आधा है अधिक जिसमें ऐसा अर्थात् देढ़ मात्रा के कर दिये जाते हैं। अतः $१ + १\frac{१}{२} = २\frac{१}{२}$ = अर्धतृतीयमात्रा वाले (आधी है तीसरी मात्रा जिसमें ऐसे) कर दिये जाते हैं। यह वार्त्तिककार का मत है। ]

भाष्य में तो यह कहा गया है—"यहाँ प्लुत चार मात्राओं वाला इष्ट ही है। कैसे? ऐच् के अ + उ के समान समान विभाग करने के पक्ष में प्रस्तुत सूत्र द्वारा इवर्ण, उवर्ण का तीन मात्राओं वाला प्लुत किया जाता है। [ इस प्रकार अवर्ण की एक मात्रा + इवर्ण तथा उवर्ण की तीन तीन मात्रायें मिला कर चतुर्मात्रावाला हो जाता है। किन्तु चतुर्मात्रावाला होने पर भी अच्त्व रहता ही है। फलतः ङमुडादि आगम करने में बाधा नहीं है। ]॥१०६॥

## ३७९५. एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ ।।१०७।। (३६२६)

**एचोऽप्रगृह्यस्यादूराद्धूते प्लुतविषयस्यार्धस्याकार आदेशो भवति, च स प्लुतः, उत्तरस्येकारो-कारावादेशौ भवतः।**

**विषयपरिगणनं कर्तव्यम्- * प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेतिष्वति वक्तव्यम् * (म.भा.)। प्रश्नान्ते–अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूता३इ। पटा३उ। अभिपूजिते–भद्रं करोषि**

### न्यासः

**भाष्यकारस्य** त्विष्टैव चतुर्मात्रता प्लुतस्येति दर्शयन्नाह—**भाष्ये तूक्तमित्यादि। तत् कथमिति।** यदि तत् **भाष्यकारस्य** मतं तत् केन प्रकारेण सम्पद्येत? इत्येतत् पृच्छति। **समप्रविभागपक्ष** इत्यादिना यथा तत् सम्पद्यते तथा दर्शयति। समप्रविभागपक्षे ह्यनेन सूत्रेणेदुतोस्त्रिमात्रः प्लुतः क्रियते, ततश्च तत्सम्बन्धिन्यो यास्तिस्रो मात्रा या च पूर्वाकारमात्रा ताः सर्वाः समाहृताश्चतस्रो मात्रा भवन्ति। एतच्च चतुर्मात्रः प्लुतो भवति। अत्र भाष्यकारदर्शने पुनः प्लुतग्रहणं सर्वत्र प्लुतोपसंग्रहार्थम्; अन्यथा स्वरितप्रकरणात् तस्यैव प्रसङ्गे सत्येवेदुतोरियं प्लुतिः स्यात्। पुनः प्लुतग्रहणे तूदात्तानुदात्तयोरपि भवति।

तपरकरणं मुखसुखार्थम्।।१०६।।

**एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ।।** एचः समाहारवर्णाः। तत्र एकारस्य ओकारस्य च पूर्वेण प्रकरणेन समुदायस्यैष प्लुतः, एचोः पुनरवयवयोरिदुतोः। अनन्तरसूत्रेणेदमारभ्यते **विषयपरिगणनं कर्त्तव्यमिति।** एतद् ग्रहणवाक्यम्। अस्य **प्रश्नान्ताभिपूजितेत्यादिना** विवरणं करोति। **कर्त्तव्यमिति।** व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'अनुदात्तं प्रश्नान्ताभिपूजितयोः' इत्यादयो योगा इहानुवर्त्तन्ते, तेनान्यत्र न भवति। **यथाविषयमिति।** यो यस्य विषयो यथाविषयम्—'यथाऽसादृश्ये' इत्यव्ययीभावः, 'प्रश्नान्ताभिपूजितयोः'

### पदमञ्जरी

**अर्धतृतीयमात्राविति।** अर्धरूपा तृतीयमात्रा ययोस्तौ तथोक्तौ। **इष्यते चतुर्मात्रः प्लुत इति।** चतुर्मात्रतया वृद्धिरिष्यत इत्यर्थः। अस्मिन्पक्षे चतुर्मात्रस्याच्त्वमपि भवति। तेन प्रत्यङ्ङैतिकायन इति ङमुड् भवति; ग्लौ त्रातेति 'अनचि च' इति तकारद्विर्वचनं भवति।।१०६।।

**एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ।। विषयपरिगणनं कर्तव्यमिति।** एतद्विवृणोति—**प्रश्नान्तेति। यथाविषयमिति।** प्रश्नान्तेऽनुदात्तः स्वरितो वा, शेषे तूदात्तः। **इदुतौ पुनरुदात्तावेवेति।** अनुवृत्तस्य उदात्तग्रहणस्याभिसम्बन्धात्।

### भावबोधिनी

अप्रगृह्यसंज्ञक जो एच् दूर से बुलाने के विषय में नहीं है तो प्लुत करने के प्रसंग में उस एच् के आधे का आकार आदेश होता है और वह प्लुत होता है, उत्तरवर्त्ती आधे भाग के इकार और उकार आदेश होते हैं। [ यहाँ यह देखना चाहिए कि एच् की प्रगृह्यसंज्ञा न हुई हो तथा दूर से बुलाने के प्रसङ्ग में प्लुत भी न किया गया हो तो एच् के दो भाग करके पूर्वार्ध का आकार आदेश तथा उत्तरार्ध का इकार और उकार आदेश होता है। ]

इसके विषय का परिगणन करना चाहिए— * प्रश्नान्त, अभिपूजित, विचार्यमाण, प्रत्यभिवाद तथा याज्यान्त में ही यह सूत्र लगता है। ऐसा कहना चाहिये। * क्रमशः उदा० प्रश्नान्तमें—अगम३ः पूर्वा३न् ग्रामा३न्, अग्निभूता३ इ? (अग्निभूति, क्या पूर्व के गाँवों में गये थे? यहां प्रश्नवाक्य के अन्तमें एच् है। आधे का आ प्लुत और आधे का इकार आदेश हुआ है अग्निभूता३इ। इसी प्रकार—अगम३ः पूर्वा३न् ग्रामा३न् पटा३ उ? [ पटो में भी आधे का आ३ और शेष उ आदेश होते हैं। ] अभिपूजित में—

**माणवक३ अग्निभूता३इ। पटा३उ। विचार्यमाणे–होतव्यं दीक्षितस्य गृहा३इ। (तै. ६।१।४।५) प्रत्यभिवादे–आयुष्मानेधि अग्निभूता३इ। पटा३उ। याज्यान्ते–उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे। स्तोमैर्विधेमाग्नया३इ। (ऋ. ८।४३।११)।**

**सोऽयमाकारः प्लुतो यथाविषयमुदात्तः, अनुदात्तः, स्वरितो वेदितव्यः। इदुतौ पुनरुदात्तावेव भवतः।**

**परिगणनं किम्? विष्णुभूते विष्णुभूते३ घातयिष्यामि त्वा। आगच्छ भो माणक विष्णुभूते३।**

**न्यासः**

अनुदात्तः प्लुतः। प्रश्ने तु 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति स्वरितः, शेषेषूदात्तः। **इदुतौ पुनरुदात्तावेताविति**। 'टेरुदात्तः' इति चाधिकारात्। **विष्णुभूते विष्णुभूते३ इति**। अत्र 'आम्रेडितं भर्त्सने' इति प्लुतः।

**आगच्छ भो माणवक विष्णुभूते इति**। अत्र 'दूराद्धूते च' इति। ननु चासत्यपि परिगणने नैव प्लुतः प्राप्नोति; 'अदूराद्धूते' इति वचनात्, तत् किमर्थमिदं परिगणनस्य प्रत्युदाहरणमित्याह—**परिगणने चेत्यादि**। असति परिगणने, अदूराद्धूतेन भविष्यतीति। **कर्त्तव्यमिति**। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'याज्यान्त' इत्यतोऽन्तग्रहणनुवर्तते, तेनान्तस्यैव भविष्यतीति।

**भद्रं करोषि गौरिति**। 'अभिपूजिते' इति प्लुतः। अन्तग्रहणानुवृत्तेरत्रायं विधिर्न भवति। न ह्यत्रैच्छब्दोऽन्ते, किं तर्हि? व्यञ्जनम्।

**पदमञ्जरी**

**विष्णुभूते इति**। कथं पुनरिदं परिगणनस्योदाहरणम्, यावता सूत्रे तु 'अदूराद्धूते' इत्युच्यते? अत आह—**परिगणनं चेति**। अन्यार्थेऽवश्यकर्त्तव्ये परिगणने तेनैव सिद्धत्वाद् 'अदूराद्धूते' इति न वक्तव्यम्, ततश्चेदमपि परिगणनस्य प्रत्युदाहरणमुपद्यत इति । **गौरिति**। 'असर्वनामस्थाने' इति प्रतिषेधात् सौ परतः पूर्वं पदं न भवति। अथ यदा सावपि पद भवतीति पक्षः, तदा कस्मान्न भवति? उक्तमेतद् 'वाक्यपदयोरन्त्यस्य' इति, विसर्जनीयशब्दश्चात्र वाक्यान्तः। नन्वेवं पदान्तग्रहणमित्यत्र पदशब्देन वाक्यमुच्यतेऽन्वर्थग्रहणात्—पद्यते प्रतीयतेऽनेन हेतुनार्थ इति? एतच्च 'याज्यान्तः' इत्यतोऽन्तग्रहणानुवृत्त्या लभ्यते। **अग्निभूता३इति**। अग्निभूतिशब्दस्य सम्बुद्धौ रूपम्।

**भावबोधिनी**

भद्रं करोषि माणवक३ अग्निभूता३ इ। [ भद्रं करोषि माणवक३ ] पटा३ इ। विचार्यमाण में—होतव्यं दीक्षितस्य गृहा३इ? [ क्या दीक्षा प्राप्त किये हुए के घर में हवन करना चाहिए? प्रत्यभिवाद में—आयुष्मान् एधि अग्निभूता३ इ। आयुष्मान् एधि पटा३ इ। याज्यान्त में—'उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे स्तोमैर्विधेमाग्नया३इ। [ यहाँ 'अग्नये' के एकार का आकार प्लुत और उत्तरार्ध का इवर्ण आदेश होता है। ]

यह आकार जो प्लुत किया जाता है उसे विषय के अनुसार उदात्तः, अनुदात्त और स्वरित समझना चाहिए। किन्तु इवर्ण तथा उवर्ण तो उदात्त ही होते हैं। [ यहाँ के उदा० में प्रश्नान्त में 'अनुदात्तं प्रश्नान्तभिपूजितयोः' (८।२।१००) से अनुदात्त है। अभिपूजित में भी उक्त सूत्र से ही अनुदात्त है। विचार्यमाण में 'विचार्यमाणानाम्' (८।२।९७) सूत्र से प्लुत उदात्त है। प्रत्यभिवाद में "प्रत्यभिवादेऽशूद्रे' (८।२।८३) से प्लुत उदात्त है। याज्यान्त में 'याज्यान्तः' (८।२।९०) से प्लुत उदात्त है। इस प्रकार इससे विधीयमान प्लुत लक्ष्यानुसार कही उदात्त और कहीं अनुदात्त हो जाता है। स्वरित की सम्भावना नहीं दिखाई देती है। यह संहितापाठ में सम्भव है। ]

परिगणन किसलिये है? विष्णुभूते विष्णुभूते३ घातयिष्यामि त्वाम्। आगच्छ भो माणवक विष्णुभूते३। [ यहाँ परिगणितों में कोई भी नहीं है। प्रथम उदा० में 'आम्रेडितं भर्त्सने' से आम्रेडितसंज्ञक बादवाला प्लुत होता है। द्वितीय वाक्य में 'दूराद्धूते च' से प्लुत होता है। ]

**परिगणने च सति 'अदूराद्धते' इति न वक्तव्यम्।**

**पदान्तग्रहणं तु कर्त्तव्यम्। इह मा भूत्–भद्रं करोषि गौरिति।**

**अप्रगृह्यस्येति किम्? शोभने खलु स्तः खट्वे३।**

**❁ आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः ❁ (म.भा.)। अग्ना३इ पत्नी व३ः। (वा.सं.८।१०)।**

## ३७९६. तयोर्य्वावचि संहितायाम्।।१०८।। (३६२७)

**तयोरिदुतोर्यकारवकारादेशौ भवतोऽचि संहितायां विषये।**

**'संहितायाम्' इत्येतच्चाधिकृतम्। इत उत्तरमाध्यायपरिसमाप्तेर्यद्वक्ष्यामः 'संहितायामि'त्येवं तद्वेदितव्यम्। अग्ना३याशा। पटा३वाशा। अग्ना३यिन्द्रम्। पटा३वुदकम्।**

**न्यासः**

**शोभने खलु स्तः खट्वे इति।** अत्रापि 'अभिपूजिते' इत्येव प्लुतः।

**आमन्त्रिते चेत्यादि।** प्लुतश्चासौ विकारश्चेति प्लुतविकारः। प्लुतव्यपदेशस्त्विदुतोः प्लुतसाहचर्याद् वेदितव्यः। इदुतोर्ग्रहणमैचः पूर्वस्योत्तरस्य चैत आदेशा मा भूवन्नित्येवमर्थम्। तपरकरणमिहपि मुख-सुखार्थम्।।१०७।।

**तयोर्य्वावचि संहितायाम्।। तयोरिति।** अनन्तरविहिताविदुतौ प्रत्यवमृश्येते।

**अग्ना३याशा, पटा३वाशा इति।** अग्ने + आशा, पटो + आशा इति स्थिते 'प्रश्नान्ताभिपूजित-विचार्यमाणप्रत्यभिवादयाज्यान्तेषु' इत्येतेषामन्यतमस्मिन् विवक्षिते, एचः पूर्वस्यार्धस्याकारः प्लुतः, उत्तरस्यार्धस्येदुतौ, तयोरनेन य्वौ।

**पदमञ्जरी**

**आमन्त्रित इति।** अप्राप्त एव प्लुते वचन्।।१०७।।

**तयोर्य्वावचि संहितायाम्।।** किमर्थमिदमुच्यते, न 'इको यणचि' इत्येव सिद्धम्? अत आह— **इदुतोरसिद्धत्वादिति।** ननु सिद्धः प्लुतस्स्वरसन्धिषु, कथं ज्ञायते? 'प्लुतप्रगृह्या अचि' इति प्लुतस्य प्रकृतिभावविधानात्। यस्य हि विकारः प्राप्तः, तस्य प्रकृतिभावो विधेयः; प्लुतस्य चासिद्धत्वे न तस्य स्वरसन्ध्याख्यो विकारः प्राप्नोति। अस्तु प्लुतः सिद्धः, किमायातमिदुतोः? उच्यते, प्लुतप्रकरणे यत्कार्यं

**भावबोधिनी**

परन्तु परिगणन कर देने पर [ सूत्र में ] 'अदूराद्धते' इसको नहीं कहना चाहिए।

पदान्त का ग्रहण तो करना ही चाहिए। जिससे यहाँ न होने लग जाय—भद्रं करोषि गौः। [ यहाँ ऐच् शब्द अन्त में नहीं है। ]

अप्रगृह्यसंज्ञक का—इसका क्या फल है? शोभने खलु स्तः खट्वे३। [ यहाँ द्विचनान्त एकारान्त की प्रगृह्यसंज्ञा 'ईदूदेद् द्विवचनं प्रगृह्यम्' सूत्र से होती है। अतः यह सूत्र न लग कर 'अभिपूजित' (८।२।१००) से अनुदात्त प्लुत होता है। ]

❁ वेदविषय में आमन्त्रितसंज्ञक में यह प्लुत विकार = आदेश कहना चाहिए। ❁ उदा॰ अग्ना३इ, पत्नीव३ः। [ यहाँ आमन्त्रित = सम्बोधनान्त 'अग्ने' का ही आ३ तथा इ आदेश होता है। ]।।१०७।।

उन (अर्थात् पूर्ववर्ती सूत्र द्वारा विहित) इकार और उकार के स्थान पर यकार और वकार आदेश हो जाते हैं संहिताविषय में।

'संहितायाम्' इसका अधिकार है। इस सूत्र के आगे [ इस अष्टम ] अध्याय की समाप्ति तक जिन्हें कहा जायगा उन्हें 'संहितायाम्' = अर्थात् संहिताविषय में ही समझना चाहिए।

**अचीति किम्? अग्ना३ इ। पटा ३उ।**

**संहितायामिति किम्? अग्ना३इ इन्द्रम्। पटा३उ उदकम्।**

**इदुतोरसिद्धत्वात् 'इको यणचि' (६।१।७७) इति न प्राप्नोतीत्ययमारम्भः। अथापि कथञ्चित्तयोः सिद्धत्वं स्याद्?, एवमपि सवर्णदीर्घत्वनिवृत्त्यर्थम् (८।१।१०१), शाकलनिवृत्त्यर्थं (६।१।१२७) च वक्तव्यमेतत्।**

**न्यासः**

किमर्थ पुनरेतदारभ्यते? एतौ 'इकौ यणचि' इत्येव सिध्यतः? इत्यत आह—**इदुतोरसिद्धत्वादित्यादि**। ननु च सिद्धः प्लुतः स्वरसन्धिषु यणादेशादिषु, यदयम् 'प्लुतप्रगृह्या अचि' इति प्लुतस्य प्रकृतिभावमाह; सतो हि कार्येण भवितव्यम्, नासतः; प्लुतस्य चेकः, अतस्तावपि स्वरसन्धिषु सिद्धावेव? इत्यत आह—**अथापीत्यादि**। यदीदं नोच्येत, तदाग्ना३ इ इन्द्रम्, पटा३ उ उदकमिति स्थिते षाष्ठिकं यणादेशं बाधित्वाऽकः सवर्णे दीर्घत्वं स्यात्। इह चाग्ना३ इति आशा३ इति स्थिते 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' इति प्रकृतिभावः स्यात्। तस्माद् यथानयोः सिद्धत्वं स्यात्, तथापि दीर्घत्वं शाकलविधिश्च मा भूदित्येवमर्थमिदं वक्तव्यमेव। ननु चान्यदेव तन्निवृत्त्यर्थं यत्नान्तरमस्ति, कि पुनस्तदिति चेत्? उच्यते; 'इको यणचि' इत्यत्रोपसंख्यायते—'इकः प्लुतपूर्वस्य यणादेशो वक्तव्यः शाकलदीर्घनिवृत्त्यर्थम्' इति। तस्योपसंख्यानमवश्यं कर्त्तव्यम्। य इक् प्लुतपूर्वो न च प्लुतविकारस्तदर्थम्— भो३ इ इन्द्रं भो३ यिन्द्रमिति। 'दूराद्धूते च' इति भोःशब्दस्य प्लुतः। अत्र भोःशब्दात् पर इकारो निपातः, न प्लुतविकारः। तस्य यणादेश इष्यते, सोऽसति तस्मिन्नुपसंख्याने न स्यात्। तस्मादवश्यं तत्

**पदमञ्जरी**

तत्स्वरसन्धिषु सिद्धमिति सामान्येन ज्ञापकमाश्रयिष्यते, ततश्चेदुतोरपि सिद्धत्वात्सिद्ध एव यणादेशः, अत आह— **अथापि कथञ्चिदिति**। सामान्यपेक्षं ज्ञापकमित्यस्यार्थस्य दुर्ज्ञातत्वात् कथञ्चिदित्याह; यदीदं नोच्येत, अग्ना३इ इन्द्रम्, पटा३उ उदकमित्यत्र षाष्ठिकं यणादेशं बाधित्वा सवर्णदीर्घत्वं स्यात्, अग्ना३याशेत्यादौ च 'इकोऽसवर्णे शाकल्यस्य' इति प्रकृतिभावः स्यात्, अतस्तद्बाधनार्थमिदं वक्तव्यमेव। ननु च तन्निवृत्तये यत्नान्तरमस्ति, किं पुनस्तत्? 'इको यणचि' इत्यत्रोक्तम्—'इकः प्लुतपूर्वस्य यणादेशो वक्तव्यम्', य इक् प्लुतपूर्वः न च

**भावबोधिनी**

उदा॰ | अग्ने + आशा में पूर्व सूत्र से ए का आ३ और इकार आदेश करने पर इस सूत्र से इ का यकार हो जाता है। | अग्ना३ याशा। पटा३ वाशा | पटो + आशा, पटा३ उ + आशा, उकार का वकार आदेश | अग्ना३ यिन्द्रम्। पटा३ वुदकम्। | अग्ने + इन्द्रम्, ए का आ३ + इ आदेश, इ का य्। पटो + उदकम्, ओ का आ३ + उ आदेश, उकार का वकार आदेश पटा३ वुदकम्। |

अच् परे रहते—इसका क्या फल है? अग्ना३इ। पटा३ उ। [ यहाँ अच् परे नहीं है। अतः केवल पूर्ववर्ती सूत्र से ए का आ३ और इ, ओ का आ३ उ होता है, इ का य् और उ का व् नहीं होता है। ]

संहिता में—इसका क्या फल है? अग्ना३इ इन्द्रम्। पटा३ उ उदकम्। [ यहाँ पारिभाषिक संहिता नहीं है क्योंकि दोनों के उच्चारण में अपेक्षित काल से अधिक काल लगा है। अतः इ का यकार और उ का वकार नहीं होता है। ]

| यहाँ शंका होती है कि इक् के बाद अच् परे रहने पर 'इको यणचि' इस सामान्य सूत्र से ही य् व् आदेश सम्भव थे तब इस सूत्र का क्या फल है? | [ पूर्ववर्ती त्रिपादी केसूत्र से किये गये इन | इत् उत् आदेशों के असिद्ध हो जाने के कारण 'इको यणाचि' (६।१।७४) इस सूत्र की प्राप्ति ही नहीं होती है, अतः यह सूत्र बनाया गया है। यदि किसी प्रकार इत् उत् को सिद्ध भी मान लिया जाय तब भी सवर्णदीर्घ आदेश की निवृत्ति के लिये और [ इ उ कर देने पर | 'इकोऽसवर्णे शाकल्यस्य' से प्रकृतिभान की निवृत्ति के लिये इस सूत्र को कहना ही होगा।

**अथापि तन्निवृत्त्यर्थं यत्नान्तरमस्ति? तथापि यण्स्वरनिवृत्त्यर्थमिदमारभ्यते। यणादेशस्यासिद्धत्वात् 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८।२।४) इत्येष स्वरो न भवति।।**

**"किन्तु यणा भवतीह न सिद्धं य्वाविदुतोर्यदयं विदधाति।**
**तौ च मम स्वरसन्धिषु सिद्धौ शाकलदीर्घविधी तु निवर्त्यौ।।१।।**

**न्यासः**

कर्त्तव्यम्। यस्मिंश्च क्रियमाणे प्लुतविकारयोरपीदुतोस्तेनैव भवितव्यम्, ततो नेदं वक्तव्यमित्यत आह—**तथापीत्यादि**। अग्ना३ इति आशा इति स्थिते यदि तेन षाष्ठिकेनोपसंख्यानेन यणादेश इहोदात्तस्येकारस्य स्थाने क्रियेत, तस्योदात्तयण्स्वरे कर्त्तव्ये सिद्धत्वादाशाशब्दाकारस्यानुदात्तस्य 'उदात्तस्वरितोयोर्यणः स्वरितोऽनुदात्तस्य' इति स्वरितः प्रसज्येत। आशाशब्दः 'आशाया अदिगाख्या चेत्' इत्यन्तोदात्तः। शेषमप्यनुदात्तमित्याकारोऽनुदात्तः। तस्मादस्ति स्वरितत्वप्रसङ्ग इति तन्निवृत्त्यर्थमिदमुच्यते।

**किन्तु यणेत्यादिः**। संग्रश्लोकद्वयम्। किमित प्रश्ने। तु इति वितर्के। 'इको यणचि' इति यणादेशेन किं न सिद्धं भवतीहाग्ना३ याशेत्येवमादावुदाहरणे यदाचार्य इदुतोर्य्वौ विदधाति! सर्वमेव सिद्धमित्यभिप्रायः। स्यादेतत्—यणादेशो न प्राप्नोति, तस्मिन् कर्त्तव्ये इदुतोरसिद्धत्वादित्यत आह—**तौ चेत्यादि**। तुशब्दो हेतौ। यदा इक् प्लुतपूर्वो भवति तदा तस्य स्यात्। यस्मात् 'इकः प्लुतपूर्वस्य यणादेशो वक्तव्यःशाकलदीर्घनिवृत्त्यर्थम्' इत्युपसंख्याने यणादेशमपवादं करोति शाकलदीर्घविध्योः। तेन हेतुना तयोरिदुतोः शाकलदीर्घविधी न भविष्यतः। चशब्दः समुच्चये, भिन्नक्रमश्च प्रतिषेधानन्तरं द्रष्टव्यः। **तौ च मम स्वरसन्धिषु सिद्धौ**। न च शाकलदीर्घविधी प्रयोजयतः। एवमपवादः। तेषां शाकलदीर्घनिवृत्तेः प्रयोजनत्वे प्रयोजनान्तरमाह—**यण्स्वरबाधनमेव तु हेतुरिति**।

**पदमञ्जरी**

प्लुतविकारः, भो३यिन्द्रं गायतीति भोःशब्दस्य छान्दसः प्लुतः, ततः परस्येकारस्य निपातित्वात्प्रकृतिभावे प्राप्ते तं बाधित्वा यणादेशः, तदेवं तस्यावश्यकर्त्तव्यत्वात्तेनैव यण् सिद्धः? अत आह—**अथापीति**। **यण्स्वर-निवृत्त्यर्थमिति**। यणाश्रयः स्वरो यण्स्वरः, एतदेव विवृणोति—**यणादेशस्येति**।

उक्तमेवार्थं श्लोकाभ्यां संगृह्णाति—**किन्त्विति**। इको यणादेशेन किं न सिद्धं रूपम्, यतोऽयमाचार्यः इदुतोर्य्वौ विदधाति, तौ चेदुतौ स्वरसन्धिषु सिद्धौ। **ममेति सूत्रकारेणैकी**भूतस्य वचनम्। एवं चोदिते परिहरति—**शाकलदीर्घविधी तु निवर्त्याविति**। शाकल्यस्येदं शाकलम्, 'कण्वादिभ्यो गोत्रे' इत्यण्। पुनश्चोदयति—**इक् च**

**भावबोधिनी**

यदि यह कहा जाय कि इनकी निवृत्ति के लिये कोई दूसरा उपाय है? तो भी यण्स्वर की निवृत्ति के लिये यह सूत्र बनाया गया है। क्योंकि यण् आदेश के असिद्ध हो जाने से 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८।२।४) यह स्वर नहीं होता है।

क्या 'इको यणचि' से यणादेश द्वारा इनमें सिद्ध नहीं होता है जो कि यह सूत्र इत् उत् = इ उ का य् व् आदेश करता है? [ भाव यह है कि अच् परे इ, उ का यण् य् व् हो जाता है तब इस सूत्र की क्या आवश्यकता है? ]

[ यदि यह कहा जाय कि ये इत् उत् त्रिपादी के हैं और 'इको यणचि' सपादसप्ताध्यायी का है अतः इसकी दृष्टि में इत् उत् के असिद्ध हो जाने से यण् सम्भव नहीं है? इसका उत्तर दे रहे हैं? ] ये इत् उत् आदेश स्वरसन्धियों में सिद्ध ही माने जाते हैं। [ क्योंकि 'प्लुतप्रगृह्या अचि नित्यम्' (६।१।१२५) इस सूत्र की सार्थकता उपपादित करने के लिये इन्हें सिद्ध मानना आवश्यक है। अतः यण् आदेश से ही कार्य सम्भव है। यह सूत्र व्यर्थ है? ] 'इकोऽसवर्णे शाकल्यस्य' (६।१।१४७) इस सूत्र की विधि और पक्ष में सवर्ण दीर्घविधि की निवृत्ति करानी है। [ इसके लिये यह सूत्र आवश्यक है। ]

**इक् तु यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम्।**
**तेन तयोश्च न शाकलदीर्घौ यण्स्वरबाधनमेव तु हेतुः[1]।।२।। (म.भा.)**

**।।इति श्रीवामनाचार्यविरचितायां काशिकावृत्तौ अष्टमाध्यायस्य द्वितीयः पादः।।**

**न्यासः**

यणादेशाश्रयः स्वरो यण्स्वरः, तस्य बाधनं कारणम्। कस्य? प्रकरणात् सूत्रारम्भस्येति गम्यते। तुशब्दोऽवधारणे। यण्स्वरबाधनमेव तु सूत्राम्भस्य हेतुरित्यर्थः।।१०८।।

**।। इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरण-पञ्चिकायामष्टमाध्यायस्य द्वितीयः पादः ।।**

**पदमञ्जरी**

**परेति**। **वार्त्तिककारोऽपि** इकः प्लुतपूर्वस्य यणं विदधाति, स च प्रकृतिभावस्येव शाकलदीर्घविध्योरप्यवादः, ततश्च तेनैव यणा एतयोरपीदुतोः शाकलदीर्घौ न भविष्यतः, नार्थ एतेन? परिहरति—**यण्स्वरेति**। यण्स्वरबाधनमेव हेतुः सूत्रारम्भस्येति।।१०८।।

**।। इति श्रीहरिदत्तमिश्रविरचितायां पदमञ्जर्यामष्टमाध्यायस्य द्वितीयश्चरणः ।।**

**भावबोधिनी**

जब इक् प्लुतपूर्व (प्लूत है पूर्व में जिससे ऐसा) होता है तब उसके अपवाद यण् का विधान किया जाता है। इसलिये इन इत् उत् का शाकल = प्रकृतिभाव और सवर्णदीर्घ नहीं होता है। [ अतः सामान्य सूत्र से ही यण् सम्भव है? ] यण्स्वर का बाध करना ही [ इस सूत्र के बनाने में ] मुख्य हेतु है।

**विमर्श**—भाव यह है कि 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८।२।४) सूत्र उदात्तस्थानिक यण् से और स्वरितस्थानिक यण् से परे अनुदात्त का स्वरित करता है। यदि 'इको यणचि' (६।१।१८) से यण् किया जाता है तो इसकी दृष्टि में त्रिपादीस्थ यण् स्वर असिद्ध हो जाता है। किन्तु जब प्रस्तुत सूत्र से य् व् किया जाता है तब य् व् परवर्ती होने से 'यण् स्वरविधायक' (८।२।४) की दृष्टि में असिद्ध रहता है, अतः यण्स्वर नहीं हो पाता है। यही यण्स्वर का बाध करना मुख्य फल इस सूत्र को बनाने का है। इस कारण यह जहाँ प्रवृत्त होता है वहाँ उदात्त और स्वरित के स्थान पर होने वाले यण् से परे अनुदात्त का स्वरित नहीं होता है, अनुदात्त ही रहता है।

सिद्धान्तकौमुदीकार का वचन अधिक स्पष्ट है—"इदुतोरसिद्धत्वादयमारम्भः पूर्वसवर्णदीर्घत्वस्य शाकल्यस्य च निवृत्त्यर्थम्"। यवयोरसिद्धत्वाद् "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" (८।२।४) इत्यस्य बाधनार्थो वा"।

।। इस प्रकार श्री वामनाचार्यविरचित काशिकावृत्ति में अष्टम अध्याय का द्वितीय पाद सम्पूर्ण हुआ ।।

**।। इस प्रकार जयशङ्करलाल त्रिपाठी द्वारा विरचित 'भावबोधिनी' हिन्दी-व्याख्या में काशिकावृत्ति के अष्टम-अध्याय का द्वितीय-पाद समाप्त हुआ ।।**

**कृपया विश्वनाथस्य गुरु-पितृ-प्रसादतः ।**
**द्वितीयमष्टमे पादं व्याचष्ट जयशङ्करः ।।**

---

१. दोधकवृत्तमिदम्, तल्लक्षणं यथा—'भौ भ्गौ ग्' (छ.शा. ३।१८)

# अथाष्टमाध्याये तृतीयः पादः

**३७९७. मतुवसो रु सम्बुद्धौ छन्दसि।।१।। (३६२८)**

**'संहितायाम्' इति वर्त्तते। मत्वन्तस्य वस्वन्तस्य च पदस्य 'रुः' इत्ययमादेशो भवति सम्बुद्धौ परतः छन्दसि विषये।**

**मत्वन्तस्य तावत्–इन्द्र मरुत्व इह पाहि सोमम् (तै.१।४।१८।१)। हरिवो मेदिनं त्वा (तै. ४।७।१४।४)। मरुतोऽस्य सन्ति, हरयोऽस्य सन्ति–इति मतुप्, सुप्तकारयोर्हल्ङ्यादिलोपे (६।१।६८) संयोगान्तस्य लोपे (८।२।२३) च कृते नकारस्य रुर्भवति।**

**वस्वन्तस्य खल्वपि–मीढ्वस्तोकाय तनयाय मृळ (ऋ.२।३३।१४) इन्द्र साह्वः। क्वसोर्निपातनम् 'दाश्वान् साह्वान् मीढ्वांश्च' (६।१।१२) इति।**

**न्यासः**

**मतुवसो रु सम्बुद्धौ छन्दसि**।। 'युवोः' इत्यत्र यत् द्वेष्यपरीहारोयोक्तं तत् 'मतुवसोः' इत्यत्रापि द्रष्टव्यम्। **इन्द्रमरुत्व इति**। मरुच्छब्दान्मतुप्, 'झयः' इति वत्वम्, 'उगिदचाम्' इति नुम्, हल्ङ्यादि-संयोगान्तलोपौ, नकारस्य रुत्वम्, तस्य 'भोभगो' इत्यादिना यकारः, तस्यापि 'लोपः शाकल्यस्य' इति लोपः। **हरिवो मेदिनं त्वेति**। हरिशब्दान्मतुप्, 'छन्दसीरः' इति वत्वम्, पूर्ववन्नुमादि। अयं त्वत्र विशेषः—'हशि च' इति रोरुत्वम्, पूर्वेण सह 'आद् गुणः'।

**मीढ्वस्तोकायेति**। 'मिह सेचने', लिटः क्सुः, 'दाश्वान् साह्वान् मीढ्वांश्च' इत्यद्वित्वम्, अनिट्त्वम्, उपधादीर्घत्वञ्च निपात्यते, 'हो ढः' इति ढत्वम्, रोर्विसर्जनीये कृते तस्य 'विसर्जनीयस्य सः' इति सकारः।

**पदमञ्जरी**

**मतुवसो रु सम्बुद्धौ छन्दसि**।। 'युवोरनाकौ' इतिवन्मतुवसोरिति निर्देशोऽनुबन्धपरित्यागेन वा सकारान्तस्य वसोर्ग्रहणम्, निपातनाच्चाल्पाच्तरस्य परनिपातः। रु—इत्यविभक्तिको निर्देशः। **मरुत्व इति**। 'झयः' इति वत्वम् 'तसौ मत्वर्थे' इति भसंज्ञा। **हरिवो मेदिनमिति**। 'छन्दसीरः' इति वत्वम्, 'संयोगान्तलोपो रो रुत्वे सिद्धो वक्तव्यः' इति वचनान् 'हशि च' इत्युत्वम्।

**भावबोधिनी**

**नत्वा गणेशं काशीशं शारदां पितरौ गुरून्।**
**तृतीयमष्टमे पादं व्याचष्टे 'जयशङ्करः'।।**

अब अष्टम अध्याय में तृतीय पाद प्रारम्भ होता है—

'संहितायाम्' (संहिताविषय में)—इसकी अनुवृत्ति होती है। मतुबन्त तथा वस्वन्त पद [ के अन्त्य वर्ण ] का 'रु' यह आदेश 'सम्बुद्धि (सम्बोधन एकवचन) परे रहते वेदविषय में होता है। उदा० पहले मतुबन्त का—'इन्द्र मरुत्व इह पाहि सोमम्। हरिवो मेदिनं त्वा!' इनमें मरुतः सन्ति अस्य, हरयः सन्ति अस्य—इस अर्थ में मतुप् प्रत्यय [ मरुत् मत्, में 'झयः' सूत्र से म् का व् मरुत्वत्, हरि मत् में 'छन्दसीरः सूत्र से म् का व् हरिवत्, सु प्रत्यय 'उगिदचां सर्वनामस्थाने' सूत्र से नुम् ] सुप् और त् का क्रमशः हल्ङ्यादि और संयोगान्तलोप कर देने पर [ मरुत्वन्, हरिवन् में ] नकार के स्थान पर [ इस सूत्र से रु आदेश होता है। ] [ मरुत्वः में रु का विसर्ग होता है। हरिवः में रु के विसर्ग को न कर के उस का उत्व और गुण हो कर 'हरिवो' बनता है। ]

वसु-प्रत्ययान्त का भी उदा० 'मीढ्वस्तोकाय तनयाय मृळ इन्द्र साह्वः।' इसमें 'दाश्वान् साह्वान् मीढ्वान्' (२।१।१२) सूत्र से क्वसु का निपातन होता है। [ मिह् + क्वसु = वस् निपातन के बल से द्वित्व का अभाव, इट् का अभाव तथा उपधा का दीर्व होता है। मीह् वस् 'हो ढः' से ह् का ढत्व—मीढ्वस् स् का रुत्व, विसर्ग, सत्व, होता है। ]

**मतुवसोरिति किम्? ब्रह्मन्स्तोष्यामः। सम्बुद्धाविति किम्? यं एवं विद्वानग्निमुपतिष्ठते (मै. १।५।७)।**

**छन्दसीति किम्? हे गोमन्। हे पपिवन्।**

**❀ वन उपसंख्यानं कर्त्तव्यम्। ❀ 'यस्त्वायन्तं वसुना प्रातरित्वः'। (ऋ. १।११५।२) इणः प्रातःपूर्वस्य छन्दसि क्वनिप्।**

**न्यासः**

शत्रादेशस्य वसोः सम्बुद्धौ छन्दसि विषये प्रयोगो नास्तीति तस्यानुदाहरणम्। अत एव 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य'—इत्येषा परिभाषा नोपतिष्ठते; एकानुबन्धकस्य सम्बुद्धिपरस्य च्छन्दसि वसोः प्रयोगादर्शनात्।

**विद्वानिति**। 'विदेः शतुर्वसुः'। **हे पपिवन्निति**। पातेः, पिबतेर्वा परस्य क्वसोः 'वस्वेकाजाद्धसाम्' इतीट्, 'आतो लोप इटि च' इत्याकारलोपः, स्थानिवद्भावाद् द्विर्वचनम्।

**वन उपसंख्यानमिति**। अननुबन्धकस्य वनोऽसम्भवात्सामान्येन क्वनिब्वनिपोर्ग्रहणम्। यश्च मत्वर्थे 'क्वनिब्वनिपौ च्छन्दसि वक्तव्यौ' इत्यौपसंख्यानिकः, तस्यापि ग्रहणम्। **प्रातरित्व इति**। 'इण् गतौ' प्रातःपूर्वः, 'आतो मनिन्क्वनिंब्वनिपश्च' इत्यनुवर्त्तमाने 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप्, 'ह्रस्वस्य पिति कृति तुक्'। इदं तु सम्पदादित्वादिनः क्विपि तुकि तदन्तान्मतुपि 'झयः' इति वत्वे मत्वन्तादेव सिध्यतीति नोपसंख्यानं प्रयोजयति।

**विभाषेत्यादि**। भवच्छब्दः 'भातेर्डवतुः' इति डवतुप्रत्ययान्तो व्युत्पादितः। अव्युत्पन्नं वोकारानुबन्धं प्रातिपदिकम्, इतरौ तु मत्वन्तौ। **हे भो इति**। नुमो रुत्वे कृतेऽवशब्दस्य सर्वस्यैव स्थान ओकारः क्रियते, नालोऽन्त्यस्य, 'नानर्थकेऽलोऽन्त्यविधिः' इति कृत्वा।

**निपातविज्ञानात् सिद्धमिति**। एतद् ग्रहणकवाक्यम्। **अथ वेति**। अस्यैव विवरणम्। **असम्बुद्धावपीत्यादि**। एतेन निपातत्वे हेतुं दर्शयति। यद्युपसंख्यानादेव भो इत्येवमादिकं स्याद्, द्विवचनबहुवचनयोर्न स्यात्;

**पदमञ्जरी**

**वन इति**। क्वनिव्वनिपोः सामान्येन ग्रहणम्। अनुबन्धानिर्देशादत्र तदनुबन्धकपरिभाषाया अनुपस्थानात् क्वनिपोऽपि ग्रहणम्। **प्रातरित्व इति**। प्रातरेतीति 'अन्यभ्योऽपि दृश्यन्ते' इति क्वनिपि ह्रस्वस्य तुक्। **अवशब्दस्य चेति**। सर्वस्येति द्रष्टव्यम्; अनर्थकेऽलोन्त्यपरिभाषाया अभावात्। उपसंख्यानं प्रत्याचष्टे—**निपातविज्ञानाद्वेति**। एतदेव विवृणोति—**अथ वेति**। अवश्यं चैतन्निपातत्वमेव विज्ञेयमित्याह—**असम्बुदावपि हीति!**

**स्त्रियामिति**। **भो ब्राह्मणीति**। विभक्तिनिमित्तेषु कार्येषु लिङ्गविशिष्टपरिभाषा नोपतिष्ठत इत्युक्तम्—'न वा विभक्तौ लिङ्गविशिष्टाग्रहणात्' इति, तेन भवतीशब्दस्य रुत्वौत्वे न स्याताम्। अथापि स्याताम्? एवमीकारस्य रुत्वे अवशब्दस्य चौकारे रूपं न सिध्यति। तस्मादसम्बुद्धौ स्त्रियां च दर्शनान्निपाता एवेति विज्ञेयम्। निपातत्वं च

**भावबोधिनी**

मत्वन्त और वस्वन्त का—इसका क्या फल है? ब्रह्मन् स्तोष्यामः [ यहाँ नहीं होता है। ] सम्बुद्धि परे रहते—इसका क्या फल है? य एवं विद्वानग्निमुपासते। [ यहाँ वस्वन्त विद्वान् है किन्तु सम्बुद्धि परे नहीं है। अतः यहाँ रु नहीं करता है। ]

वेदविषय में इसका क्या फल है? हे गोमन्। हे पपिवन्। [ ये सामान्य भाषा के प्रयोग हैं, वेद के नहीं है। अतः रु आदेश नहीं होता है। ]

❀ वन् प्रत्यय के न् का रु कहना चाहिये। ❀ उदा० यस्त्वायन्तं वसुना प्रातरित्वः। यहाँ 'प्रातः' शब्दपूर्वक इण् धातु से वेद में क्वनिप् = वन् प्रत्यय होता है। [ यहाँ वन् से क्वनिप् और वनिप् दोनों प्रत्यय लेने चाहिये। प्रातर् इण् + क्वनिप् = वन्, 'ह्रस्वस्य पिति कृति तुक्' सूत्र से तुक् = त् आगम, प्रातरित्वन् बनने पर इस वार्तिक से न् का रु और रेफ का विसर्ग होता है। ]

**❀ विभाषा भवद्भगवदघवतामोच्चावस्य। ❀ छन्दसि भाषायां च भवद्, भगवद्, अघवद्–इत्येतेषां विभाषा रुर्वक्तव्यः, अवशब्दस्य च ओकारादेशः। सामान्येन छन्दसि भाषायां चेदं वचनम्। भवत्–हे भोः, हे भवन्। भगवद्–हे भगोः, हे भगवन्। अघवत्–हे अघोः, हे अघवन्।**

**निपातनविज्ञानाद्वा सिद्धम्। अथ वा–भो इत्येवमादयो निपाता द्रष्टव्याः। असम्बुद्धावपि द्विवचनबहुवचनयोरपि दृश्यन्ते। भो देवदत्तयज्ञदत्तौ। भो देवदत्तयज्ञदत्तविष्णुमित्राः।**

**तथा स्त्रियामपि च दृश्यन्ते–भो ब्राह्मणि इत्यादि।**

**न्यासः**

सम्बुद्ध्यभावात्। स्त्रियाञ्च सम्बुद्धावपि न स्याद्—भो ब्राह्मणीति; अत्र स्त्रीलिङ्गविशिष्टानामनुपादानात्। 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति चेत्? न; विभक्तौ तत्प्रतिषेधात्—विभक्तौ यत् कार्यं विधीयते तत्रेयं परिभाषा प्रतिषिध्यते; 'विभक्तौ लिङ्गविशिष्टस्याग्रहणम्' इति वचनात्। अथापि न प्रतिषिध्यते? एवमपि भवतीति स्थिते, इकारस्य रुत्वे कृतेऽवशब्दस्य चौकारे कृते रुत्वस्यासिद्धत्वात् संयोगान्तलोपाभावे सति विसजनीये कृतेऽनिष्टं रूपं स्यात्। तस्मादसम्बुद्धौ, स्त्रियाञ्च दर्शनान्निपाता एवैते वेदितव्याः।

निपातत्वं पुनरेषां विभक्तिप्रतिरूपकत्वात्, 'विभक्तिस्वरप्रतिरूपकाश्च' इति चादिषु पाठात्। एवञ्च भोःशब्दस्य निपातत्वं स्यात्; भवतेर्विचि कृते गुणे च विभक्त्यन्ते भोःशब्दस्यैव विद्यमानत्वात्, इतरयोस्तु न स्यात्। न ह्यसत्यस्मिन्नुपसंख्याने भगोःशब्दः, अधोःशब्दश्च विभक्त्यन्तोऽस्ति, यत्प्रतिरूपकौ निपातौ स्याताम्। तस्मात् सौत्रा एवैते निपाता वेदितव्याः, 'भोभगोअघोअपूर्वस्य' इत्यत्र सूत्रे एषां पाठात्। अथ वा—उपसर्गविभक्तिस्वरप्रतिरूपकाश्चेति चकारस्यानुक्तसमुच्चयार्थत्वान्निपातत्वमेषां वेदितव्यम्। यदि तर्हि

**पदमञ्जरी**

विभक्तिस्वरप्रतिरूपकत्वेनेति। नन्वसत्यस्मिन्नुपसंख्याने भोइत्यादिकः शब्दो विभक्त्यन्तो नास्ति, यत्प्रतिरूपका एते स्युः? तस्मात्सौत्रा एते निपाताः, 'भोभगोअघो' इत्यत्र सूत्रे निर्दिष्टाः, चादिषु वा पठितव्याः। तदेवं प्रत्याख्यातमुपसंख्यानम्।

अन्ये त्वाहुः—'इतराभ्योऽपि दृश्यन्ते' इति भवदादियोगे विधीयमानास्तसिलादयः, ततः 'भो' इत्यादावपि यथा स्युरिति वार्तिकारम्भ इति।

अन्ये तु—भवदादेरपरिगणितत्वाद् निपाता भोइत्यादयो भविष्यन्तीति मन्यन्ते।।१।।

**भावबोधिनी**

❀ भवद्, भगवद्, अघवद्—इनके अन्त्य का स् आदेश और 'अव' इस के स्थान पर 'ओ' आदेश विकल्प से होते हैं। ❀ वेद में तथा भाषा में भवद् भगवद् और अघवद्—इनका विकल्प से रु आदेश कहना चाहिये और 'अव' इसका ओकार आदेश कहना चाहिये। यहाँ सामान्यरूप से वेद तथा लोक = भाषा इन दोनों का ग्रहण है। उदा॰ हे भोः, हे भवन्। हे भगोः, हे भगवन्। हे अघोः, हे अघवन्। [ तीनों शब्दों के रूपों में भवत् शब्द डवतु प्रत्ययान्त है शेष दोनों मतुबन्त। इनमें नुम् आगम होने पर भवन्त् भगवन्त् अघवन्त् में संयोगान्त त् का लोप करने के बाद 'न्' का रु होता है—भवरु। अव् का ओ करने पर भ् ओ रु = भोर् बनने पर रेफ का विसर्ग होता है। पक्ष में दोनों कार्य न होने पर 'हे भवन्' ऐसा भी रहता है। ]

अथवा ये तीनों रूप निपातन से ही सिद्ध हो जाते हैं। अथवा 'भो' आदि तीनों को निपात ही समझना चाहिये। ये असम्बुद्धि = द्विवचन तथा बहुवचन में भी बनते हैं। जैसे—भो देवदत्तयज्ञदत्तौ। भो देवदत्तयज्ञदत्तविष्णुमित्राः। इसी प्रकार स्त्रीलिङ्ग में भी होता है—भो ब्राह्मणि।

**संहिताधिकारः[१] उत्तरत्रोपयुज्यते, यत्र भिन्नपदस्थौ निमित्तनिमित्तिनौ–'नश्छव्यप्रशान्' (८।३।७) इति[१]।।१।।**

### ३७९८. अत्रानुनासिकः पूर्वस्य तु वा।।२।। (१३६)

**अधिकारोऽयम्। इत उत्तरं यस्य स्थाने रुर्विधीयते ततः 'पूर्वस्य तु वर्णस्य वाऽनुनासिको भवति'– इत्येतदधिकृतं वेदितव्यम्, यदित उर्ध्वमनुक्रमिष्यामस्तत्र। वक्ष्यति–''समः सुटि (८।३।५)। सँस्कर्ता, सँस्कर्तुम्, सँस्कर्तव्यम्।''**

**न्यासः**

निपातत्वमेषामाश्रित्योपसंख्यानं प्रत्याख्यायते, तदा भोःशब्दप्रयोगे सभोस्ततोभोस्तत्रभो इत्यत्र 'इतराभ्योऽपि दृश्यन्ते' इति भवदादियोगे विधीयमानास्तसिलादयो न सिध्यन्ति? अनिष्टत्वाददोषः। यो हि निपातत्वादुपसंख्यानं प्रत्याचष्टे स भोःशब्दप्रयोगे तसिलादीन्नेच्छत्येव।।१।।

**अत्रानुनासिकः पूर्वस्य तु वा**।। पूर्वत्वमिदमापेक्षिकम्, रुश्चेहानुवर्त्तते। न च तदपेक्षं पूर्वत्वमस्य विज्ञातुं शक्यते इत उत्तरं ह्यनुनासिको रुश्च समनुवृत्तेरेककालं विधीयत इत्यनुनासिकविधानकाले रोरनिष्पन्नत्वम्। अतस्तदपेक्षया पूर्वत्वमिदमशक्यं विज्ञातुम्। तस्माद् यस्य स्थाने रुत्वं विधीयते तदपेक्षया पूर्वत्वं विज्ञायते, इत्याह—**यस्य स्थाने रुर्विधीयते ततः पूर्वस्येति**। तुशब्दः परस्मात् कार्यिणः पूर्वस्य विशेषं दर्शयति। परस्य रुत्वकार्यम्, पूर्वस्य त्वनुनासिक इति। अथ वा—रुत्वादनुनासिकस्य विशेषं दर्शयति। रुत्वं नित्यम्, अनुनासिकस्तु विभाषेति।

अथात्रग्रहणं किमर्थम्? अत्र रुप्रकरणे यथा स्यादिति चेत्, न; अधिकारादेवैतत् सिद्धम्। यथा हि 'अनुनासिकः पूर्वस्य' इत्यधिकृतमुत्तरत्रानुवर्तते, तथा रुरित्येतदपि। तत्रान्तरेणाप्यत्रेति वचनं रुप्रकरणे भविष्यतीत्यत आह—**अत्रेत्यादि**। सन्नियोगः = यौगपद्यम्। रुणा सह कथं नाम स प्रतीयेतेत्येवमर्थमत्रग्रहणम्।

**पदमञ्जरी**

**अत्रानुनासिकः पूर्वस्य तु वा**।। पूर्वत्वमिदमापेक्षिकम्, रुत्वं च सन्निहितम्। न च तदपेक्षं पूर्वत्वं सम्भवति; रोरनुनासिकस्य च सहविधानात्। तस्माद्यस्य रुर्विधीयते तदपेक्षमेव पूर्वत्वं विज्ञायत इत्याह—**यस्य स्थान इति**।

अथात्रग्रहणं किमर्थम्? अत्र रुप्रकरणे यथा स्यात्। अधिकारादप्येतत् सिद्धम्, अधिकारे हि सति रुत्वानुनासिकयोः सह विधानान्नान्यत्र प्रसङ्गः? अत आह—**अत्रग्रहणमिति**। अवधारणमत्र द्रष्टव्यम्—**रुणैव सहेति**। नन्वधिकारादप्येतत्सिद्धमित्युक्तम्? अत आह—**अधिकारेति**। असत्यत्रग्रहणे अनुनासिकाधिकारस्य

**भावबोधिनी**

'संहितायाम्' (८।२।१०८) इस अधिकार का उपयोग आगे के सूत्रों में होता है जहाँ निमित्त और निमित्ती (कार्य) अलग अलग पदों में रहते हैं। जैसे—'नश्छव्यप्रशान्' (८।३।०७) [ छव् प्रत्याहार का कोई वर्ण परे रहते पूर्ववर्ती न् का रु आदेश होता है। यहाँ निमित्त बाद में है और निमित्ती पहले है। दोनों की संहिता में ही न् का रु होता है ]।।१।।

यह अधिकार (सूत्र) है। इस सूत्र के आगे जिस जिस के स्थान पर 'रु' का विधान किया जाता है या किया जायगा उससे 'पूर्ववर्ती वर्ण का विकल्प से अनुनासिक होता है'—इस को अधिकृत समझना चाहिये, अर्थात् इतना वाक्यांश अधिकार के रूप में सम्बद्ध समझना चाहिये, यहाँ से आगे जो जो कहेंगे उन उनमें यह अधिकार = अनुवृत्त होता है। आगे कहा जायगा 'समः सुटि' (८।३।५) [ सुट् परे रहते सम् के मकार का रु होता है। और उस रु से पूर्ववर्ती अकार का विकल्प से अनुनासिक इस सूत्र से होता है। ] उदा॰ सँस्कर्ता, सँस्कर्तुम्, सँस्कर्तव्यम्। [ सम् पूर्वक कृ धातु से तृच्, तुमुन्, तव्यत् प्रत्यय करने पर 'सम्पर्युपेभ्यः करोतौ भूषणे' सूत्र से सुट् आगम होता है सम् + स्कृ + तृच्, सम् के मकार का रु और उससे पूर्व अकार का विकल्प से अनुनासिक, रेफ का विसर्ग और सत्त्व करने पर सँस्कर्ता आदि में स् का वैकल्पिक लोप होता है। इस विषय में 'समः सुटि' (८।३।५) पर विशेष व्याख्या आगे देखें। ]

---

१.१. पाठः पुस्तकान्तरे नास्ति।

**'अत्र' ग्रहणं रुणा[1] सह सन्नियोगप्रतिपत्त्यर्थम्। अधिकारपरिमाणापरिग्रहे हि सति 'ढो ढे लोपः' (८।३।१३) इत्यत्रापि पूर्वस्यानुनासिक आशङ्क्येत।।**

## ३७९९. आतोऽटि नित्यम्।।३।। (३६३२)

**अटि परतो रोः पूर्वस्याकारस्य स्थाने नित्यमनुनासिकादेशो भवति। 'दीर्घादटि समानपादे' (८।३।९) इति रुत्वं वक्ष्यति, ततः पूर्वस्यातोऽनुनासिकविकल्पे प्राप्ते, नित्यार्थं वचनम्। महाँ असि। (ऋ. ३।४६।२) महाँ इन्द्रो य ओजसा। (ऋ. ८।६।१) देवाँ अच्छा दीद्यत्। (ऋ. ३।१।१)**

**न्यासः**

अवधारणञ्चात्र द्रष्टव्यम्—रुणेवेति। सन्नियोगमात्रं हि रुत्वानुनासिकयोः, उत्तरत्र द्वयोरप्यनुवृत्तेः। स्थानिभेदेन विरोधाभावाद् विनाप्यत्रग्रहणेन लभ्यत एव। ननु रुप्रकरणादूर्ध्वमनुनासिकस्यास्वरितत्वादेव सन्नियोगो न विज्ञास्यते, तत् किं तदर्थेनात्र ग्रहणेन? इत्यत आह—**अधिकारपरिमाणापरिग्रहे हीत्यादि**। अधिकारस्य परिमाणम् इयत्ता, तस्य परिग्रहः = परिज्ञानम्, निश्चयः। तस्मिन्नसति मन्दधीभिः प्रतिपत्तृभिः किमुत्तरत्रानुनासिकस्य स्वरितत्वमिस्त? आहोस्विन्नास्ति? इति जातसन्देहैः 'ढो ढे लोपः' इत्यादावपि यस्य स्थाने ढलोपादिकार्यं विधीयते तस्मात् पूर्वस्यानुनासिक आशङ्क्येत।

अथ वाग्रहणं किमर्थम्, यावतोत्तरसूत्रे नित्यग्रहणादेव विकल्पोऽस्य विज्ञास्यते? नैतदस्ति, एवं हि पूर्वसूत्रे विकल्पो विज्ञायेत। तस्माद्वेति वक्तव्यम्? न वक्तव्यम्; आचार्यप्रवृत्तिर्ज्ञापयति—विकल्पेनायं विधिर्भवतीति, यदयमुत्तरसूत्रे यस्यानुनासिको न कृतस्तस्माद्रोः पूर्वस्मात् परमनुस्वारागमं शास्ति। न हि नित्येऽस्मिन् विधौ तत् सम्भवति, रोः पूर्वस्य यस्यानुनासिको न कृत इति। एवं तर्हि विस्पष्टार्थं वाग्रहणम्।।२।।

**आतोऽटि नित्यम्।। देवाँ अच्छा दीद्यदिति**। अत्र योऽकारस्तस्मिन्नटि परतो 'दीर्घादटि समानपादे' इति नकारस्य रुत्वे कृते तस्मात् पूर्वस्याकारस्यानेनानुनासिकत्वम्, पूर्ववद्रोर्यकारः, तस्य पूर्ववदेव लोपः।

**पदमञ्जरी**

परिमाणं न ज्ञायते—एतावत्सु योगेष्वस्य व्यापार इति, ततश्च रुप्रकरणात्परत्राप्यस्याधिकारः सम्भाव्येतेत्यर्थः। तुशब्दः परस्मात्कार्यिणः पूर्वस्य विशेषद्योतनार्थः—परस्य नित्यं रुत्वम्, पूर्वस्य वानुनासिक इति।

वावचनमनर्थकम्, ज्ञापकात्सिद्धम्, यदयमुत्तरत्र सूत्रे यस्यानुनासिको न विहितस्तस्माद्रोः पूर्वस्मात्परमनुस्वारं शास्ति; ततो ज्ञायते—विकल्पेनायं भवतीति। न हि नित्येऽस्मिन्विधौ स रोः पूर्वः सम्भवति, यस्यानुनासिको विहितः।।२।।

**भावबोधिनी**

सूत्र में 'अत्र' (यहाँ पर) इसका ग्रहण 'रु' के साथ ही [ अनुनासिक का ] संनियोग (= साथ साथ होना) के ज्ञान = प्रदर्शन के लिये है। [ जहाँ 'रु' होता है वहीं पूर्व का अनुनासिक होता है—इसका ज्ञान कराने के लिये ही सूत्र में 'अत्र' का ग्रहण है। ] क्योंकि अधिकार के परिमाण = इयत्ता का परिग्रह = परिज्ञान या निश्चय न लेने पर तो 'ढो ढे लोपः' (८।३।१३) इस [ सूत्र से होने वाले लोप ] में भी पूर्ववर्ती के अनुनासिक की आशंका होने लगती। [ अतः जहाँ तक 'रु' का विधान है वहीं तक उससे पूर्व के अनुनासिक का भी विधान समझना चाहिए, उससे भिन्न में नहीं। ]।।२।।

अट् प्रत्याहार का कोई वर्ण परे रहते रु से पूर्ववर्ती आकार के स्थान में नित्य अनुनासिक आदेश होता है। 'दीर्घादटि समान-पादे (८।३।९) इस सूत्र से न् का विकल्प से रु का विधान कहा जायगा, उस 'रु' से पूर्ववर्ती आकार का वैकल्पिक अनुनासिक प्राप्त रहते नित्य अनुनासिक का विधान करने के लिये यह सूत्र है। उदा० महाँ असि। महाँ इन्द्रो य ओजसा। [ इन में 'महान्' के

१. रुणैव—इति पाठान्तरम्।

**केचिदनुस्वारमधीयते, स च्छान्दसो व्यत्ययो द्रष्टव्यः।**
**आत इति किम्? 'ये वा वनस्पतींरनु' (वा.सं. १३।७)।**
**अटीति किम्? भवांश्चरति, भवांश्लाघयति[१]।**
**नित्यग्रहणं विस्पष्टार्थम्[१]।।**

**न्यासः**

यदि 'मंहाँ इन्द्रो य ओजसेति' केचिदनुस्वारमधीयत इति वक्तव्यम्, तर्हि तद् यथासौ सिध्यतीत्यत आह— **स इत्यादि**। व्यत्ययस्तु 'व्यत्ययो बहुलम्' इत्यनेन बोद्धव्यः।

**ये वा वनस्पतीं रन्विति**। वनस्पतीन् अन्विति स्थिते 'दीर्घादटि समानपादे' इति नकारस्य रुत्वे कृते 'अनुनासिकात् परोऽनुस्वारः' इतीकारात् परोऽनुस्वारः। **भवांश्चरतीति**। 'नश्छव्यप्रशान्' इति नकारस्य रुत्वम्, तस्य विसर्जनीयस्य सकारः, तस्य 'स्तोः श्चुना श्चुः' इति श्चुत्वम्।

नित्यग्रहणं विस्पष्टार्थम्। पूर्वेणैव विकल्पे सिद्धे सत्यारम्भसामर्थ्यादेव नित्योऽयं विधिर्विज्ञास्यते। ननु चात एवाटि, अथ वाऽट्येवातः—इत्येष नियमो यथा स्यादित्येवमर्थःसिद्धे सत्यारम्भःस्यात्? नैतदस्ति; असति हि विधेये नियमो भवति। इह त्वस्ति विधेयम्, किं तत्? नित्योऽनुनासिकः। तस्माद्विधिरेव युक्तः, न नियमः। तथा चोक्तम्—विधिनियमसम्भवे विधिरेव ज्यायानिति।

'आत' इति तकारोऽसन्देहार्थः। 'आ' इत्युच्यमाने सन्देहः स्यात्—किमयं षष्ठ्यन्तस्याकारस्य कार्यिणो निर्देशः? उतादेशान्तरस्य प्रथमान्तस्येति?।।३।।

**पदमञ्जरी**

**आतोऽटि नित्यम्।। केचिदिति।** तैत्तिरीयाः। **अनुस्वारमधीयत इति**। शुद्धादाकारात्परम्। नित्यग्रहणमनर्थकम्, आरम्भसामर्थ्यादेव नित्यो विधिः सिद्धः? अस्त्यारम्भे प्रयोजनं नियमो यथा स्यात्–आत एवाटि, अन्येषां तु नेति। कैमर्थ्यान्नियमो भवति विधेयं नास्तीति कृत्वा, इह चास्ति विधेयम्, किम्? नित्योऽनुनासिकः।।३।।

**भावबोधिनी**

न् का 'दीर्घादटि समानपादे' सूत्र से रु करने पर प्रस्तुत सूत्र से पूर्ववर्ती आ का अनुनासिक आदेश करता है। ] देवाँ अच्छा दीव्यत्। [ इसमें भी देवान् के न् का रु करने पर पूर्व आ अनुनासिक होता है किन्तु जब 'न' का रु नहीं होता है तब अनुनासिक भी नहीं होता है। 'दीव्यत्'—यह भी पाठ है। ]

कुछ विद्वान् (तैत्तिरीय शाखा वाले) यहाँ अनुस्वार ही पढ़ते हैं। यह तो छान्दस व्यत्यय समझना चाहिये अर्थात् वैदिक प्रयोग में अनुनासिक के बदले अनुस्वार समझना चाहिए।

दीर्घआकार से परवर्त्ती का—इस का क्या फल है? 'ये वा वनस्पतींरनु।' [ यहाँ 'वनस्पतीन् अनु' है। आ से न् = रु परे नहीं है अतः अनुनासिक नहीं होता है अपि तु पक्ष में 'अनुनासिकात् परोऽनुस्वारः' सूत्र से ईकार से परे अनुस्वार का आगम होता है। ]

अट् परे रहने पर—इसका क्या फल है? भवांश्चरति। भवांश्लाघयति। [ यहाँ न् के बाद अट् परे नहीं है। अतः 'नश्छव्यप्रशान्' (८।३।७) सूत्र से न् का रु होने पर भी अनुनासिक न होकर केवल अनुस्वार ही होता है। रेफ का विसर्ग तथा उसका सत्व होता है। ]

इसमें 'नित्यम्' का ग्रहण केवल स्पष्टता के लिये ही है [ क्योंकि यह सूत्र विकल्पविधान के बाद पठित होने से इसकी नित्यविधायकता स्पष्ट है। ]।।३।।

---

१.१. भवांश्छादयति। 'नित्यग्रहणं नियमाशङ्कापरिहारार्थम्'—इति पाठः पुस्तकान्तरे।

## ३८००. अनुनासिकात् परोऽनुस्वारः।।४।। (१३७)

**अन्यशब्दोऽत्राध्याहर्त्तव्यः। तदपेक्षया चेयम् 'अनुनासिकात्' इति पञ्चमी। अनुनासिकादन्यो यो वर्णः रोः पूर्वः, यस्यानुनासिको न कृतः, ततः परोऽनुस्वार आगमो भवति। वक्ष्यति-''समः सुटि'। (८।३।५) संस्कर्ता, संस्कर्तुम्, संस्कर्तव्यम्;। 'पुमः खय्यम्परे' (८।३।६)-पुंस्कामा। 'नश्छव्यप्रशान्'-(८।३।७) भवांश्चरति''।**

**केचित्तु परशब्दमेवान्यार्थं वर्णयन्ति। अनुनासिकात्परः = अनुनासिकादन्योऽनुस्वारो भवति। यस्मिन्पक्षेऽनुनासिको नास्ति तत्रानुस्वारागमो भवति। स तु कस्यागमो भवति? रोः पूर्वस्यैवेति वर्तते, व्याख्यानादादेशो न भवति।।**

### न्यासः

**अनुनासिकात् परोऽनुस्वारः।। अन्यशब्दोऽत्राध्याहार्य इति।** असति ह्यन्यशब्दस्याध्याहारे परशब्दस्य श्रुतत्वात् तदपक्षयैवानुनासिकादित्येषा पञ्चमी स्यात्; अन्यस्येह पञ्चमीहेतोरसम्भवात्। ननु 'तस्मादित्युत्तरस्य' उपस्थाने उत्तरशब्दापेक्षयैव पञ्चमी स्यात्? नैतदस्ति; यदि ह्यस्याः परिभाषाया इहोपस्थानं स्यात् परग्रहणमनर्थकं स्यात्। तस्मात् परशब्दापेक्षयैव पञ्चम्या भवितव्यम्। सा भवन्ती च 'अन्यारादितरर्त्ते' इत्यादिना सूत्रेण परशब्दयोगे दिग्वृत्तिना वा स्याद्, अन्यार्थवृत्तिना वा। तत्र पूर्वस्मिन् पक्षे रोः पूर्वस्मादनुनासिकादेव परोऽनुस्वारो विज्ञायेत, न च तस्मात् पर इष्यते। इतरस्मिंस्त्वयमर्थ आपद्येत—अनुनासिकात् परो भवति, अनुनासिकादन्योऽनुस्वारो भवतीत्यर्थः। एवञ्च परग्रहणमनर्थकं स्यात्; न ह्यनुनासिकापेक्षयानुस्वारोऽन्यत्वं व्यभिचरति। किञ्च—श्रुतत्वात् तस्यैवानुनासिकस्यानुस्वारो विज्ञायेत, प्रकृतत्वाद्रोर्वा; अनिष्टश्चैतत्। अन्यशब्दाध्याहारे तु यस्यानुनासिको न कृतस्तस्मादेव पर इति विज्ञायते। तस्मादन्यशब्दोऽत्राध्याहार्यः। सत्यप्यन्यशब्दाध्याहारे यदि परशब्दापेक्षयैवं 'अनुनासिकात्' इत्येषा पञ्चमी स्यात्, स दोषस्तदवस्थ एव स्यादिति मत्वाऽऽह—**तदपेक्षया चेयमित्यादि**। चशब्दोऽवधारणे। अन्यशब्दापेक्षयैव, न परशब्दापेक्षयेत्यर्थः। **अनुनासिकादन्यो य** इत्यनेन तदेवान्यशब्दापेक्षत्वं

### पदमञ्जरी

**अनुनासिकात् परोऽनुस्वारः।। अन्यशब्दोऽत्राध्याहर्त्तव्य इति।** असत्यध्याहारे परशब्दस्य श्रुतत्वात्तद-पेक्षयैव 'अनुनासिकात्' इत्येषा पञ्चमी स्यात्—परशब्दस्य दिग्वृत्तिः, अन्यार्थवृत्तिर्वा, पूर्ववृत्तिर्वा। पूर्वस्मिन्कल्पे रोः पूर्वस्मादनुनासिकादेव परोऽनुस्वारो विज्ञायते, न च तस्मात्पर इच्यते। इतरस्मिंस्त्वनुनासिकादन्योऽनुस्वारो भवतीत्यर्थो भवति, तत्र चानर्थकं परग्रहणम्, न ह्यनुस्वारोऽनुनासिकापेक्षयाऽन्यत्वं व्यभिचरति। तस्मादन्य-

### भावबोधिनी

इस सूत्र में 'अन्य' इसका अध्याहार करना चाहिये। उसी (अध्याहृत 'अन्य') को मान कर ही 'अनुनासिकात्' इस पद में [ 'अन्यारादितर॰' सूत्र से ] पञ्चमी समझनी चाहिये। अनुनासिक से अन्य = भिन्न जो वर्ण 'रु' से पूर्ववर्ती होता है, जिसका अनुनासिक नहीं किया गया है, उस वर्ण के बाद में अनुस्वार का आगम होता है। उदा॰ आगे कहेंगे—'समः सुटि' (८।३।५) संस्कर्ता, संस्कर्तुम्, संस्कर्तव्यम्। 'पुमः खय्यम्परे' (८।३।६) पुंस्कामा। 'नश्छव्यप्रशान्' (८।३।७) भवांश्चरति। [ इन उदाहरणों की उपपत्ति सम्बद्ध सूत्रों में आगे लिखी जायगी। ]

कुछ विद्वान् (सूत्रस्थ) 'पर' शब्द को ही 'अन्य' अर्थ वाला बतलाते हैं। अनुनासिक से पर = अनुनासिक से भिन्न अनुस्वार होता है। जिस पक्ष में अनुनासिक (आदेश) नहीं होता है उस पक्ष में यह अनुस्वार का आगम होता है। यह किसका आगम होता है [ क्योंकि आगम के आगमी का सूचक कोई अनुबन्ध नहीं है ]? रु से पूर्ववर्ती वर्ण का ही—इसकी अनुवृत्ति (पूर्वसूत्र से) होती है, और व्याख्यान के आधार पर यह अनुस्वार आदेश नहीं होता है। [ आगम ही होता है। ]

**३८०१. समः सुटि।।५।। (१३५)**

**रुर्वर्तते। 'सम्'-इत्येतस्य रुर्भवति सुटि परतः संहितायां विषये। सँस्कर्ता, सँस्कर्तुम्, सँस्कर्तव्यम्, संस्स्कर्त्ता, संस्स्कर्तुम्, संस्स्कर्तव्यम्।**

**अत्र रोर्विसर्जनीये कृते 'वा शरि' (८।३।६६) इति पक्षे विसर्जनीय एव प्राप्नोति।**

**न्यासः**

पञ्चम्या दर्शयति। **रोः पूर्व** इत्यनेनापि पूर्वग्रहणानुवृत्तिम्। पूर्वत्वञ्च रुत्वापेक्षम्। **यस्यानुनासिको न कृत** इत्यनेनाप्यन्यशब्दाभिधेयमर्थं दर्शयति। **तत** इत्यनेनापि पूर्वग्रहणस्यार्थादिह पञ्चम्यन्ततया विपरिणामम्। अन्यशब्दस्य चाध्याहृतस्य पञ्चम्यन्ततां पर इत्यनेनापि। तस्या अन्यशब्दस्य सम्बन्धिन्याः पञ्चम्याः परशब्दापेक्षताम्। **आगम** इत्यनेनाप्यादेशाभावम्।

परग्रहणं शक्यमकर्त्तुम्। अन्यशब्दस्य पञ्चम्यन्तस्याध्याहारे सति पूर्वग्रहणस्य चार्थात् प्रथमान्ततया विपरिणामे सत्येवं विज्ञास्यते—अनुनासिकाद् योऽन्यस्तस्मादुत्तरो यो रुस्ततः पूर्वोऽनुस्वारागमो भवति। एवञ्च विज्ञायमानेऽसत्यपि परग्रहणे संस्कर्तेत्यादि सिध्यत्येव, किं परग्रहणेन? एतत् क्रियते विस्पष्टार्थम्।।४।।

**समः सुटि**।। 'मोऽनुस्वारः' इत्यनुस्वारे प्राप्ते वचनम्। **संस्कर्तेत्यादि**। करोतेः सम्पूर्वात् तृजादयः, 'सम्पर्युपेभ्यः करोतौ भूषणे' सुट्, समो मकारस्यालोऽन्त्यस्येत्यनेन रुत्वे ततः पूर्वस्यानुनासिकः, रोर्विसर्जनीयः। तस्य 'वा शरि' इति विकल्पेन सकारे प्राप्ते विसर्जनीये च यथा नित्यं सकारो भवति, तथा वृत्तौ दर्शितम्।

**पदमञ्जरी**

शब्दोऽध्याहार्यः। स च परशब्दापेक्षया पञ्चम्यन्तोऽध्यहार्यः। पूर्वस्येत्येतदप्यत्रानुवृत्तं पर इत्यनेन योगात्पञ्चम्यन्तं विपरिणम्यते। एवं स्थिते योऽर्थः सम्पद्यते तं दर्शयति—**अनुनासिकादन्य इति**। कः पुनरसौ? इत्याँह—**यस्यानुनासिको न कृत इति। अनुस्वार आगमो भवतीति**। टित्त्वाद्यागमलिङ्गाभावेऽपि परशब्देनानुस्वारस्य देशविशेषसम्पादनादागमत्वम्, यथा—'न य्वाभ्यां पूर्वौ वैच्' इति ।।४।।

**समः सुटि** ।। 'मोऽनुस्वारः' इत्यनुस्वारे प्राप्ते वचनम्। **संस्कर्त्तेति**। 'सम्पर्युपेभ्यः करोतौ भूषणे' इति सुट्, समो मकारस्य रुत्वम्, तस्य विसर्जनीयः, तस्य 'वा शरि' इति विकल्पे प्राप्ते यथा नित्यं सकारो भवति तथा दर्शितम्।

**भावबोधिनी**

**विमर्श**—"अत्रानुनासिकः पूर्वस्य तु वा यह सूत्र वहाँ विकल्प से अनुनासिक करता है जहाँ रु का विधान किया गया है। यह अनुनासिक 'रु' से पूर्ववर्ती वर्ण का ही होता है। इस अनुनासिक के न होने पर प्रकृत सूत्र 'अनुनासिकात् परोऽनुस्वारः' अनुस्वार का आगम करता है। अतएव 'सँस्स्कर्ता और 'संस्स्कर्ता' आदि दो-दो रूप अनुनासिक तथा अनुस्वार के भेद से होते हैं।।४।।

'रु' की अनुवृत्ति होती है। संहिताविषय में 'सम्' इसका [ म् का ] 'रु' आदेश सुट् परे रहते होता है। [ 'मोऽनुस्वारः' सूत्र से अनुस्वार-प्राप्ति की स्थिति में यह 'रु' आदेश किया गया है। यह अन्त्य 'म्' का ही होता है। ] उदा॰ सँस्कर्ता, सँस्कर्तुम्, सँस्कर्तव्यम्। संस्कर्ता, संस्कर्तुम्, संस्कर्तव्यम्। [ सम् + कृ + तृच्, 'सम्पर्युपेभ्यः करोतौ भूषणे' इस सूत्र से 'कृ' को सुट् = स् आगम—सम् स् कृ + तृ, सम् के म् का रु आदेश प्रस्तुत सूत्र से करने पर-सरु + स्कर्ता, 'अत्रानुनासिकः पूर्वस्य तु वा' सूत्र से रु से पूर्व का अनुनासिक विकल्प से— सँरु + स्कर्ता, रु के रेफ का विसर्ग और सत्व करने पर सँस्स्कर्ता। इसी प्रकार सम् + स्कृ + तुमुन्, सम् + स्कृ + तव्यत् आदि में भी समझना चाहिये। जब अनुनासिक आदेश नहीं होता है तब 'अनुनासिकात् परोऽनुस्वारः' इस सूत्र से अनुस्वार का आगम होने पर—संस्स्कर्ता, संस्स्कर्तुम्, संस्स्कर्तव्यम्। इनमें लोपादि के वैकल्पिक होने से अनेक रूप संभव हैं। ]

**व्यवस्थितविभाषा द्रष्टव्या। तेनात्र नित्यं सकार एव भवति।**

**अस्मिन्नेव सूत्रे सकारादेशो वा निर्दिश्यते-'समः स्सुटि' इति द्विसकारको निर्देशः।**

**सम इति किम्? उपस्कर्ता। सुटिति किम्? संकृतिः।**

**कश्चिदाह- ❁ संपुंकानां सो वक्तव्यः। ❁ रुविधौ ह्यनिष्टप्रसङ्गः। संस्स्कर्ता। पुंस्स्कामा, कांस्स्कानिति।।**

**न्यासः**

कथं पुनरस्मिन् सूत्रे सकारो निर्दिश्यते? इत्याह—**समः स्सुटीत्यादि**। यस्मिन् पक्षे विभक्तिसकारस्य विसर्जनीये कृते 'वा शरि' इति सकारो न क्रियते, तं पक्षमाश्रित्येदमुक्तम्; अन्यथा हि त्रिसकारकोऽयं निर्देश इति वक्तव्यं स्यात्; त्रयाणां सकाराणां सन्निपातात्। एको हि विभक्तिसम्बन्धी सकारः, द्वितीयस्त्वादेशसम्बन्धी, तृतीयः सुट्सम्बन्धी। यदा तु त्रिसकारं कृत्वा सूत्रं पठ्यते, तदा द्विशब्दोऽधिकसकारोपलक्षणार्थो द्रष्टव्यः। यदि तर्हि सकार आदेशो विधीयते, संस्कर्तेत्यत्रानुनासिको न प्राप्नोति; यस्मादत्रात्रग्रहणं रुणैव सह

**पदमञ्जरी**

कथं पुनरस्मिन्सूत्रे सकारो निर्दिश्यते? इत्याह—**समः स्सुटीति द्विसकारको निर्देश इति**। स च सुटः सकारे सन्देहाभावात्तव्द्यतिरेकेण द्विसकारकत्वम्। वस्तुतस्तु त्रयः सकाराः—एको विभक्तिसम्बन्धी, द्वितीय आदेशः, तृतीयस्तु रुसम्बन्धी। यदि तर्हि सकारे आदेशो विधीयते, अनुनासिको न प्राप्नोति; यस्मादत्रग्रहणं रुणा सह सन्नियोगप्रतिपत्त्यर्थमित्युक्तम्? नैष दोषः; अत्र रुप्रकरणे यद्विधीयते तदुपलक्षणार्थं तत्र रुग्रहणम्। एतेन पूर्वसूत्रे रोः पूर्व इति व्याख्यातम्। तदत्र सत्वे कृते यदा पूर्वस्यानुनासिकः, तदा सत्वस्यासिद्धत्वाद्रुत्वाभावात् 'अनचि च' इति द्विर्वचने 'झरो झरि' इति पाक्षिके लोपे द्विसकारकः, त्रिसकारको वा प्रयोगः। यदा त्वनुस्वारः, तदाऽयोगवाहानां अट्प्रत्याहार उपदेशचोदनात्तस्य च हल्त्वात् 'झरो झरि' इति वा लोपे द्विसकारकः' एकसकारको वा प्रयोगः। यदा त्वनुस्वारस्य हल्त्ववदच्त्वमपीष्यते, तदा ततः परस्य द्विर्वचनपक्षे सकारत्रयमपि भवति। तदेवं पञ्च रुपाणि भवन्ति—अनुनासिकपक्षे द्वौ सकारौ, त्रयो वा, अनुस्वारपक्षे द्वावेकस्त्रयो वा। पञ्चस्वपि पक्षेषु 'शरः

**भावबोधिनी**

इस (संस्स्कर्ता में) रु का विसर्ग करने पर 'वा शरि' (८।३।६६) सूत्र से पक्ष में विसर्ग ही प्राप्त होता है, अर्थात् एकबार विसर्ग का स् होता है और एक बार विसर्ग ही रहता है। [ तब विसर्गवाला रूप भी प्राप्त होता है अतः ] यहाँ व्यवस्थित विभाषा समझनी चाहिये, अर्थात् लक्ष्यानुसार ही विकल्प होना चाहिये। इस कारण इस संस्स्कर्ता' आदि में नित्य ही स् होता है [ विसर्ग कभी नहीं होता है। ]

अथवा इसी सूत्र में सकार आदेश का विधान किया जाता है—'समः स्सुटि' यह दो सकारों वाला निर्देश है। [ भाव यह है कि सम् का सकार आदेश ही सुट् परे रहते होता है। अतः 'वा शरि' सूत्र के विकल्प की सम्भावना नहीं रहती है। यदि 'समःस्सुटि' में विसर्ग का भी स् कर दें तो तीन सकारों का निर्देश हो जायगा। ]

सम् के सकार का ही रु (स) होता है इसका क्या फल है? उपस्कर्ता। [ उप + कर्ता, सुट् होने पर भी रु नहीं होता है क्योंकि यहाँ 'सम्' न होकर 'उप' है। ]

सुट् परे रहते ही होता है—इसका क्या फल हैं? संकृतिः। [ सम् + कृ + ति यहाँ भूषणादि अर्थ न होने से सुट् आगम नहीं होता है। अतः म् का सत्व आदि भी नहीं होता है। सुट्विधायक सूत्रों में प्रदर्शित अर्थ में—'संस्कृतिः' रूप होता है। ]

कोई आचार्य यह कहता है— ❁ सम्, पुम् और कान् के अन्त्य का स् आदेश होता है। ❁ क्योंकि रुत्व मानने पर अनिष्ट का प्रसङ्ग होगा अर्थात् 'वा शरि' से विकल्प से विसर्ग वाला रूप भी होने लगेगा। संस्स्कर्ता, पुंस्स्कामा। कांस्स्कान्। [ सम् +

**३८०२. पुमः खय्यम्परे।।६।। (१३९)**

**पुमित्येतस्य रुर्भवति अम्परे खयि परतः। पुँस्कामा, पुंस्कामा। पुँस्पुत्रः, पुंस्पुत्रः। पुँस्फलम्, पुंस्फलम्। पुँश्चली, पुंश्चली।**

**न्यासः**

सन्नियोगप्रतिपत्त्यर्थमुक्तम्। रुग्रहणस्यास्मिन् प्रकरणे यद्विधीयते तदुपलक्षणार्थत्वाददोषः। **रुणा सहेति**। रुप्रकरणे यद्विधीयते तेन सहेत्यर्थः। यदपि पूर्वस्मिन् सूत्रे वृत्तौ 'रोः पूर्वः' इत्युक्तम्, तत्रापि रुग्रहणस्यास्मिन् प्रकरणे यद् विधीयते तदुपलक्षणार्थं वेदितव्यम्; अन्यथा हि संस्कर्तेति पक्षेऽनुस्वारो न स्यात्।।५।।

**पुमः खय्यम्परे**।। **पुम इति**। पुंसः सकारादवशिष्टो यो भागस्तस्यायं निर्देशः; सकारस्य संयोगान्तलोपे कृते तस्यैव कार्यित्वात्। **अम्पर इति**। अम् परो यस्मात् स तथोक्तः। अमिति प्रत्याहारस्य ग्रहणम्, न द्वितीयैकवचनस्य! कुत एतत्? व्याप्तिन्यायात्, 'खयि' इति प्रत्याहारेण साहचर्याच्च। **पुंश्चलीति**। चलडिति पचादौ पठ्यते, तेन

**पदमञ्जरी**

खयः' इति वा ककारस्य द्विर्वचने कृते दश रुपाणि भवन्ति। **समो वा लोपमेके**। एके आचार्याः समो विकल्पेन लोपमिच्छन्ति, अत्राप्यनुनासिकानुस्वारौ भवतः। तस्यापि रुप्रकरणे विधानात्तत्रानुनासिकपक्षे सकारस्य 'अनचि च' इति द्विर्वचने पाक्षिके च लोपे एकसकारकत्वमपि कदाचिद्भवति। तत्रापि ककारस्य पक्षे द्विर्वचनमिति द्वादश रूपाणि भवन्ति।।५।।

**पुमः खय्यम्परे**।। पुंसः सकारादवशिष्टो यो भागस्तस्यायं निर्देशः; सकारस्य संयोगान्तलोपे कृते तस्यैव कार्यित्वात्। अमिति प्रत्याहारस्य ग्रहणम्, न द्वितीयैकवचनस्यः, खया प्रत्याहारेण साहचर्यात्। **पुंश्चलीति**। प्रचादौ

**भावबोधिनी**

स्कर्ता, पुम् + कामा, कान् + कान्—इनमें अन्त्य का स् करने पर रूप बनते हैं। ] [ भाष्योक्त इन दोनों वचनों पर न्यास या पदमञ्जरी की कोई व्याख्या न होने से यह अंश प्रक्षिप्त सा प्रतीत होता है। ]

**विमर्श**—सम् + कृ + तृच् = सम् + कर्तृ में सुट् आगम करने पर 'समः सुटि' सूत्र से म् का रु होता है। रु से पूर्व वर्ण का विकल्प से अनुनासिक और पक्ष में अनुस्वार का आगम होता है, रु का विसर्ग और सत्वादि करने पर—सँस्स्कर्ता, संस्स्कर्ता ये दो रूप होते हैं 'समो वा लोपमेके' इस भाष्यवचन से सम् के म् का लोप हो जाने से एक सकार वाले दो रूप होते हैं—(१) सँस्कर्ता, (२) संस्कर्ता। लोप न मानने पर दो दो सकारों वाले दो रूप होते हैं—(३) सँस्स्कर्ता, (४) संस्स्कर्ता। अब 'अनचि च' इस सूत्र से स् का वैकल्पिक द्वित्व होने से तीन सकारों वाले भी दो रूप होते हैं—(५) सँस्स्स्कर्ता, (६) संस्स्स्कर्ता। चूँकि अनुस्वार भी अचों में माना गया है अतः अच् से परे यर् स् का द्वित्व होता है। जिनमें अनुनासिक होता है उन तीनों में 'शरः खयः' (शर् प्रत्याहार के किसी वर्ण के बाद खय् प्रत्याहार के रहने पर उसका द्वित्व होता है। इस वार्तिक से 'क' के द्वित्व में छह रूप होते हैं। अनुस्वार वाले तीन रूपों में अनुस्वार के भी शर् में पाठ होने से उसका विकल्प से द्वित्व होता है। अतः तीन रूप अनुस्वार के द्वित्व वाले और तीन रूप द्वित्वाभाव वाले अर्थात् छह रूप होते हैं। अब इन छहों के पुनः 'शरः खयः' से क् का वैकल्पिक द्वित्व करने पर १२ रूप होते हैं। इस प्रकार अनुनासिकपक्ष में ६ और अनुस्वार पक्ष में १२ कुल मिलाकर १८ रूप होते हैं। इनमें 'अचो रहाभ्यां द्वे' सूत्र से तकार का विकल्प से द्वित्व करने पर प्रथम तकार का 'यणो मयः' इस वचन से यण् र् से परे मानकर पुनः द्वित्व होता है। इस प्रकार एक त वाले-१८, दो त वाले-१८ और तीन त वाले-१८ कुल मिलाकर ५४ रूप हो जाते हैं। अब 'अणोऽप्रगृह्यस्यानुनासिकः' इस सूत्र से तकारोत्तरवर्ती 'आ' का विकल्प से अनुनासिक करने पर ५४ और अनुनासिकत्व के अभाव में ५४ कुल मिलाकर १०८ रूप हो सकते हैं।।५।।

'पुम्' इसके मकार का रु आदेश अम्परक खय् परे रहते होता है अर्थात् पुम् के बाद खय् प्रत्याहार का कोई वर्ण और खय् के बाद अम् प्रत्याहार का कोई वर्ण होना आवश्यक है। उदा० पुँश्चली, पुंश्चली। [ पुम् + चली, चलट् ऐसा पचादिगण में टित् पाठ

**पुंस्कामेत्यत्र विसर्जनीयस्य 'कुप्वोः ᳲक ᳲपौ च' (८।३।३७) इति प्राप्नोति। तस्मादत्र सकार एवादेशो वक्तव्यः।**

**द्विसकारकनिर्देशपक्षे तु पूर्वस्मादेव सूत्रात् 'स' इत्यनुवर्तते।**

**रुत्वं त्वनुवर्तमानमपि नात्राभिसम्बध्यते, सम्बन्धानुवृत्तिस्तस्येति।**

**न्यासः**

'चल कम्पने' इत्यस्मात् पचाद्यच् टिद्, भवति 'टिड्ढाणञ्' इति ङीप्। पुंश्चलीति षष्ठीसमासः। **पुंस्कामेति**। पुंसि कामोऽस्या इति बहुव्रीहिः। अथ वा—पुंमासं कामयत इति 'शीलिकामिभिक्षाचरिभ्यो णो वक्तव्यः' इति णः, ततष्टाप्। **अत्र** पुंस्कामेत्यत्रोदाहरणे। **सकार एवादेश इति**। विसर्जनीयस्येत्यपेक्षते। **वक्तव्य इति** व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—कुप्वोः ᳲक ᳲपौ च, इत्यत्र 'वा शरि' इत्यतो वाग्रहणमनुवर्तते, सा च व्यवस्थितविभाषा। तेनात्रापि विसर्जनीयस्य सकार एव भविष्यति, न विसर्जनीयजिह्वामूलीयाविति। इदं तावत् पूर्वसूत्रे यदा द्विसकारपक्षो नाश्रीयते, तदा प्रतिविधानमुक्तम्।

यदा तु तत्र 'द्विसकारको निर्देशः' इत्येष पक्ष आश्रीयते, तदा प्रतिविधातुमाह—**द्विसकारकनिर्देशपक्षे त्वित्यादि**।

ननु च रुरप्यनुवर्त्तत एव, तत्र यथा सकारोऽनुवर्त्तमानो भवति तथा रुरपि पक्षे स्यात्, ततश्च रुत्वपक्षे विसर्जनीये कृते जिह्वामूलीयः स्यादेव? इत्यत आह—**रुत्वं त्वनुवर्त्तमानमित्यादि**। तत्रैव कारणमाह—

**पदमञ्जरी**

चलडिति पाठान्ङीप्, पुंश्चलीति षष्ठीसमासः। **पुंस्कामेति**। पुमांसं कामयत इति 'शीलिकामिभिक्षाचरिभ्यो णः' इति णः। तस्मादत्र सकार एवादेशो वक्तव्य इति। 'कुप्वोः ᳲक ᳲपौ च' इत्यत्रैतद्वक्तव्यम्।

**द्विसकारकनिर्देशपक्षे त्विति**। यदा पूर्वसूत्रे 'द्विसकारको निर्देशः' इति पक्षः, तदेत्यर्थः। **स इत्यनुवर्तते इति**।

ननु च रुरपि प्रकृतः, सोऽपि प्राप्नोतीत्यत आह—**रुत्वं त्विति**। असम्बन्धे कारणमाह—**सम्बन्धानुवृत्तिस्तस्येति**। इतिकरणो हेतौ, यस्मादसौ स्वसम्बन्धिना यः सम्बन्धस्तमनुवर्त्तते तं न जहाति

**भावबोधिनी**

होने से 'टिड्ढाणञ्' सूत्र से ङीप् होने पर 'चली' बनता है। षष्ठीसमास है म् का रु, पूर्व का विकल्प से अनुनासिक, रु का विसर्ग और सत्व करने पर—पुँश्चली। अनुनासिकत्व के अभाव में अनुस्वार आगम होता है—पुंश्चली। इसी प्रकार आगे सभी में दो-दो रूप होते हैं— ] पुँस्कामा, पुंस्कामा। पुँस्पुत्रः, पुंस्पुत्रः। पुँस्फलम्, पुंस्फलम्। [ 'पुंस्' इस के स् का लोप 'संयोगान्तस्य' लोपः' सूत्र से कर देने पर 'पुम्' यही शेष बचता है। उसी के म् का रु, विसर्ग, स् आदेश किया जाता है। ]

पुंस्कामा—इसमें (विसर्ग का सत्व करने के पूर्व) विसर्ग का 'कुप्वोः ᳲक ᳲपौ च' सूत्र से जिह्वामूलीय (और पुंस्पुत्रः में उपध्मानीय आदेश) प्राप्त होता है। अतः इस सूत्र में म् का सकार आदेश ही कहना चाहिये (रुत्व नहीं)।

यदि [ 'समःस्सुटि' ऐसा पूर्वसूत्र में ] दो सकारों वाला निर्देश मान लेते हैं तो पूर्ववर्ती सूत्र से ही स् की अनुवृत्ति हो जाती है। [ रु की नहीं होती है। ]

रुत्व यद्यपि अनुवृत्त होता है तथापि उसका इस सूत्र में सम्बन्ध नहीं होता है क्योंकि उसकी अपने सम्बन्धी [ मतुप् और वसु के साथ ही अनुवृत्ति होती है—मतुप् और वसु का रु होता है। अतः 'पुम्' के साथ रु का सम्बन्ध नहीं हो सकता। ]

**खयीति किम्? पुंदासः। पुंगवः। अम्पर इति किम्? पुंक्षीरम्। पुंक्षुरम्। परग्रहणं किम्? पुमाख्यः। पुमाचारः।।**

**३८०३. नश्छव्यप्रशान्।।७।। (१४०)**

**'अम्परे' इति वर्तते। नकारान्तस्य पदस्य प्रशान्वर्जितस्य रुर्भवति अम्परे छवि परतः। भवाँश्छादयति, भवांश्छादयति। भवाँश्चिनोति, भवांश्चिनोति। भवाँष्टीकते, भवांष्टीकते। भवाँस्तरति, भवांस्तरति।**

**न्यासः**

**सम्बन्धानुवृत्तिस्तस्येत्यादि।** इतिकरणो हेतौ, स हि 'मतुवसो रु सम्बुद्धौ' इत्यतः स्वेन सम्बन्धिना मतुपा वसुना च सम्बद्ध इहानुवर्तते। तस्मान्नोत्सहते सम्बन्ध्यन्तरेण सम्बन्धमनुभवितुम्।

**पुदांस इति।** षष्ठीसमासः—पुंसो दास इति। कर्मधारयो वा। एवं **पुंगव इति।** अत्र तु 'गोरतद्धितलुकि' इति टच् समासान्तः। **पुंक्षीरम्, पुंक्षुरमिति।** षष्ठीसमासः।

'खय्यमि' इति वक्तव्ये परग्रहणं विपरीतकल्पनानिरासार्थम्। असति परग्रहणे अमि खयि पर इति विज्ञायेत, ततश्च **पुमाख्यः, पुमाचार** इत्यत्रापि स्यात्। अतः परग्रहणम्।।६।।

**नश्छव्यप्रशान्।।** 'स' इति निवृत्तम्, रुरेवानुवर्तते; सोऽपि मतुवसुभ्यामसम्बद्ध एव; तयोरपि निवृत्तत्वात्। 'न' इति वर्णग्रहणम्, तच्च प्रकृतस्य पदस्य विशेषणम्, विशेषणेन च तदन्तविधिर्भवतीत्याह—**नकारान्तस्य पदस्येत्यादि। भवांश्छादयतीति।** 'छद अपवारणे', चुरादिणिच्। **भवांष्टीकत इति।** 'टिकृ टीकृ रघि लघि

**पदमञ्जरी**

तस्मादित्यर्थः। यद्वा—सम्बध्यत इति सम्बन्धः। यस्मादिह स्वसम्बद्धमेव तदनुवर्तते तस्मादित्यर्थः। रुत्वं खल्विहानुवर्त्तमानमपि 'मतुवसो रु सम्बुद्धौ' इति स्वेन सम्बन्धिना सम्बद्धमेवानुवर्तते, तस्य प्रयोजनम्—सम्बन्ध्यन्तरेण रोः सम्बन्धो मा भूदिति।

पुंदासादयः षष्ठीसमासाः। **पुंगव इति।** 'गोरतद्धितलुकि' इति टच्समासान्तः। परग्रहणे क्रियमाणे खयि परतो योऽम् तत्रेत्यपि विज्ञायेत, ततश्च पुमक्षः पुमाचारः—इत्यत्रैव स्यात्; तस्मात्परग्रहणम्।।६।।

**भावबोधिनी**

खय् प्रत्याहार का ही वर्ण परे रहते—इसका क्या फल है? पुंदासः, पुंगवः। यहाँ खय् परे नहीं है। ] अम्परक खय् परे—इसका क्या फल है? पुंक्षीरम्। पुंक्षुरम्। [ क् + ष् = क्ष् होता है। अतः खय् = क् के बाद अम् नहीं है। ] परे—इसके ग्रहण का क्या फल है। पुमाख्या, पुमाचारः। [ भाव यह है कि 'पुमः खयि अमि' ऐसा न लिख कर 'अम्परे' यह लिखना सोद्देश्य है। यदि 'पर' ग्रहण न होता तो 'खयि अमि' में विपरीत कल्पना करके 'खय्परक अम् परे' मानकर भी पुम् का रु होने लगता—पुम् + आख्या, पुम् + आचारः। यहाँ खय्परक अम् = आ है। इसमें रोकने के लिये 'अम्परे खयि' ऐसा स्पष्ट निर्देश किया गया है। ]।।६।।

'अम्परे' (अम् है पर में जिसके) इसकी अनुवृत्ति होती है। 'प्रशान्' शब्द को छोड़ कर नकारान्त पद का रु आदेश अम्परक छव् परे रहने पर होता है अर्थात् जहाँ नकारान्त पद के बाद छव् प्रत्याहार का कोई वर्ण है और उसके बाद अम् प्रत्याहार का कोई वर्ण है वहाँ नकार का रु आदेश होता है। उदा॰ भवाँश्छादयति, भवांश्छादयति। [ भवान् + छादयति— में छ् के बाद आ = अम् है अतः न् का रु, विकल्प से रु से पूर्व का अनुनासिक, रेफ का विसर्ग, सत्व और श्चुत्व होने पर—भवाँश्छादयति। अनुनासिकत्व के अभाव में अनुस्वार का आगम होता है—भवांश्छादयति। ] भवाँश्चिनोति, भवांश्चिनोति। [ भवान् + चिनोति, न् का रुत्व आदि सभी कार्य होते हैं। ] भवाँष्टीकते, भवांष्टीकते [ भवान् + टीकते, न् का रुत्व, अनुनासिकत्वविकल्प, अनुस्वार आगम, रु का विसर्ग, सत्व और ष्टुत्व होता है। ] भवाँस्तरति, भवांस्तरति। [ भवान् + तरति, पूर्वोक्त सारी प्रक्रिया होती है। ]

**छवीति किम्? भवान्करोति। अप्रशानिति किम्? प्रशाञ्छदयति। प्रशाञ् चिनोति।**

**'अम्परे' इत्येव–भवान् त्सरुकः।।**

## ३८०४. उभयथर्क्षु।।८।। (३६३०)

**पूर्वेण नित्ये प्राप्ते विकल्पः क्रियते। नकारान्तस्य पदस्य छवि परतः अम्परे उभयथा ऋक्षु भवति– रुर्वा, मकारो वा। तस्मिंस्त्वा दधाति। तस्मिन्त्वा दधाति।**

**ऋक्ष्विति किम्? ताँस्त्वं खाद सुखादितान्।। (वा.सं. ११।७८)**

## ३८०५. दीर्घादटि समानपादे।।९।। (३६३१)

**'नः' इत्यनुवर्तते। दीर्घादुत्तरस्य पदान्तस्य नकारस्य रुर्भवत्यटि परतस्तौ चेन्निमितनिमित्तिनौ**

**न्यासः**

गत्यर्थाः'। अनुदात्तेत्त्वादात्मनेपदम्। **प्रशानिति**। प्रपूर्वाच्छमेः क्विप्, 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः' 'मो नो धातोः' इति मकारस्य नकारः, तस्यासिद्धत्वान्नलोपाभावः। **भवान् त्सरुक इति**। त्सरौ कुशलः, 'आकर्षादिभ्यः कन्' इति कन् प्रत्ययः।।७।।

**उभयथर्क्षु**।। पूर्वेण प्राप्ते विकल्पार्थं वचनम्।।८।।

**दीर्घादटि समानपादे**।। **समानपाद इति** कर्मधारयात् सप्तमी। समानशब्दश्चायमेकार्थे वर्त्तमान इह गृह्यते। समाने = एकस्मिन् पादे निमित्तनिमित्तिनोराधारभूत इत्यर्थः। तत्रैकग्रहणे कर्तव्ये क्वचिदसमानपादेऽपि यथा स्यादिति समानग्रहणं कृतम्। तेनेहापि रुर्भवति—यजामहै यज्ञिया इन्द्रदेवां इलामहै ईक्षां अनाज्यैति। अत्र भिन्नयोः

**पदमञ्जरी**

**नश्छव्यप्रशान्**।। **प्रशान्वर्जितस्येति**। सूत्रे तु 'अप्रशान्' इति षष्ठ्यर्थे प्रथमा। टीकतिर्गत्यर्थोऽनुदात्तेत्। त्सरुः = खड्गग्रहणप्रदेशः, तत्र कुशलः त्सरुकः, आकर्षादिभ्यः कन्।।७-८।।

**दीर्घादटि समानपादे**।। एकपर्यायः समानशब्दः = समानपाद इत्युच्यते, तत्रेदं न सिध्यति—यजामहे यज्ञियान्हन्त देवान् इलामहमिति? छान्दसत्वाद् भविष्यति।।९।।

**भावबोधिनी**

छव् प्रत्याहार का वर्ण परे रहते—इसका क्या फल है? भवान् करोति। [ क छव् में नहीं आता है। ] प्रशान् को छोड़ कर—इसका क्या फल है? प्रशाञ्छादयति। [ यहाँ न् का रु न होकर श्चुत्व से ञ् होता है। प्रशाञ्छादयति, प्रशाञ्चिनोति। [ यहाँ भी रु न होकर श्चुत्व ही होता है। ]

अम् प्रत्याहार का वर्ण है पर = बाद में जिसके ऐसा (छव्) परे रहते—इसका क्या फल है? भवान् त्सरुकः। [ यहाँ छव् = त् है किन्तु इसके बाद अम् नहीं है स् है। अतः रुत्व नहीं होता है। ]।।७।।

पूर्ववर्ती सूत्र से नित्य रुत्व के प्राप्त रहते यह विकल्प किया जा रहा है। नकारान्त पद के, अम्परक छव् परे रहते, ऋचाओं में दोनों प्रकार होते हैं—रु भी होता है और नकार भी रहता है। उदा॰ तस्मिंस्त्वा दधाति। तस्मिन् त्वा दधाति। [ जब न् का रु होता है तब अनुनासिक आदि भी होते हैं। ]

ऋचाओं में—इसका क्या फल है? ताँस्त्वं खाद सुखादितान्। (वा.सं. ११।७८) [ यहाँ केवल रु होने से अनुनासिकत्व आदि होते हैं। ]।।८।।

'नः' इसकी अनुवृत्ति होती है। दीर्घ से उत्तरवर्ती पदान्त नकार का, अट् परे रहते, रु होता है यदि वे दोनों (न् और अट्) निमित्त और निमित्त (हेतु और कार्यी) समानपाद में ही हों। 'ऋक्षु' (ऋचाओं में) यह प्रस्तुत है अतः ऋक् का पाद ही लिया जाता

**समानपादे भवतः। 'ऋक्षु' इति प्रकृतत्वाद् ऋक्पाद इह गृह्यते। परिधींरति (ऋ.९।१०७।१९)। देवाँ अच्छा दीद्यत् (ऋ. ३।१।१)। महाँ इन्द्रो य ओजसा। (८।६।१)**

**दीर्घादिति किम्? अहन्नहिम्। (ऋ. १।३२।१) अटीति किम्? इभ्यान्क्षत्रियान्। समानपाद इति किम्? यातुधानानुपस्पृशः।**

**'उभयथा' इत्येव—आदित्यान् हवामहे (८।६७।१)।।**

**३८०६. नॄन्पे।।१०।। (१४१)**

**'नॄन्' इत्येतस्य नकारस्य रुर्भवति पशब्दे परतः। अकार उच्चारणार्थः। नॄँः पाहि। नॄंःपाहि। नॄँःप्रीणीहि। नॄंःप्रीणीहि।**

**न्यासः**

पादयोर्निमित्तनिमित्तिनौ वर्त्तेते। अथ वा—सादृश्ये वर्त्तमानः समानशब्दो गृह्यते, अन्यथा ह्येकग्रहणं कुर्यात्। इह च सादृश्यमुभयोरस्ति पादयोः, क्रियापदयोस्तुल्यार्थत्वात्। यथा यजामहायित्येतत् क्रियापदं पूजायां वर्तते, तथेलामहायित्येतदपि। 'ईड स्तुतौ', लोट्, टेरेत्वम्, 'वैतोऽन्यत्र' इतीकारस्येकारः। धातोर्वर्णव्यत्ययेन डकारस्य लकारः। छान्दसत्वाद् ह्रस्वत्वम्।।९।।

**नॄन् पे।। नॄनिति।** 'सुपां सुलुक्' इत्यादिना षष्ठ्या लुकं कृत्वा निर्देशः। अथ वा—विभक्तिरेवात्र नोत्पद्यते, अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वात्। यथा—गवित्ययमाहेत्यादि। 'पे' इति पकारमात्रमेव निमित्तत्वेनोपात्तम्, न समुदायः। अकारस्तूच्चारणार्थः, अन्यथा हि यद्यकारसमुदायो निमित्तत्वेनाश्रीयते, तदा नॄँः पचतीत्येवमादावेव

**पदमञ्जरी**

**नॄन्पे।।** नॄनिति षष्ठ्यर्थे प्रथमा। एवमुत्तरत्रापि 'पे' इत्यकार उच्चारणार्थः, पकारमात्रं निमित्तम्।।१०।।

**भावबोधिनी**

है। उदा॰ परिधीं रति। [ परिधीन् + रति, न् का रुत्व, अनुनासिकत्व, अनुस्वार आदि करने पर—परिधींर् रति, रेफ का लोप होता है। देवाँ अच्छा दीव्यत् (ऋ. ३।१।१) महाँ इन्द्रो य ओजसा। (ऋ. ८।६।१) [ यहाँ देवान् और महान् के न् का रु, अनुनासिकत्व, रु का यत्व और लोप आदि होता है। ]

दीर्घ से परे न् का—इसका क्या फल है? अहन्नहिम्। [ अहन् + अहिम्, यहाँ रुत्व न होकर नुट् का आगम होता है। ] अट् परे रहते—इसका क्या फल है? इभ्यान् क्षत्रियान् [ क् + ष् = क्ष् परे है। क् अट् में नहीं है। ] समानपाद = एक ही पाद में रहने पर—इसका क्या फल है? यातुधानानुपस्पृशः। [ यहाँ 'यातुधानान्' और 'उपस्पृशः' भिन्न भिन्न पादों में है। ]

इसमें 'उभयथा' की अनुवृत्ति होती है अतः दोनों प्रकार = न् का रुत्व और न् होते हैं—आदित्यान् हवामहे। [ यहाँ रुत्व नहीं भी होता है। ]।।९।।

'नॄन्' इस शब्द रूप के न् का रु आदेश पकार परे रहते होता है। प में अकार केवल उच्चारण के लिये है, [ ग्रहण नहीं होता है। ] उदा॰ नॄँः पाहि, नॄंः पाहि। नॄँः प्रीणीहि, नॄंः प्रीणीहि। [ नॄन् + पाहि, नॄन् + प्रीणीहि में न् का रुत्व अनुनासिकत्व विकल्प, पक्ष में अनुनासिक, र् का विसर्ग होने पर दो रूप होते हैं। ] यदि 'कुप्वोः ≍क ≍पौ च' सूत्र से उपध्मानीय कर दिया जाय तो दो रूप और होते हैं—नॄँ≍पाहि नॄं≍पाहि। यदि 'उभयथा' की भी अनुवृत्ति मान लें तो न् भी रहता है—नॄन् पाहि—ये पाँच रूप होते हैं। काशिकाकार ने केवल दो ही रूप लिखें हैं। ]

पे इति किम्? नॄन् भोजयति। उभयथेत्यपि केचिदनुवर्तयन्ति, नॄन्पाहीत्यपि यथा स्यात्।।

**३८०७. स्वतवान् पायौ।।११।। (३६३३)**

**'स्वतवान्' इत्येतस्य नकारस्य रुर्भवति पायुशब्दे परतः। 'स्वतवाँः पायुरग्ने;।। (ऋ.४।२।६)**

**३८०८. कानाम्रेडिते।।१२।। (१४३)**

**कानित्येतस्य नकारस्य रुर्भवति आम्रेडिते परतः। कांस्कानामन्त्रयते। कांस्कान्भोजयति।**

**अस्य कस्कादिषु पाठो द्रष्टव्यः। तेन 'कुप्वोः ≍क ≍पौ च' (८।३।३७) इति न भवति।**

**न्यासः**

स्यात्, न तु नॄन् प्रीणीहीत्यादौ। 'अटि' इति चेह निवृत्तम्; निमित्तान्तरोपादानात्।

अथ तस्यैव निमित्तस्यैतद् विशेषणं कस्मान्न विज्ञायते—अटि परतो यः पकार इति? अशक्यमेवं विज्ञातुम्; इह न स्यात्—नॄँः प्साति, नॄँः प्लावयतीति। तस्मादस्य निवृत्तिरड्ग्रहणस्य युक्ता।।१०।।

**स्वतवान् पायौ**।। स्वतवानिति पूर्ववन्निर्देशो वेदितव्यः। तथा 'कान्' इति परसूत्रेऽपि। **स्वतवाँः पायुरग्न इति**। 'दृक्स्ववःस्वतवसाञ्छन्दसि' इति नुम्, हल्ङ्यादिसंयोगान्तलोपौ।।११।।

**कानाम्रेडिते**।। **कांस्कानिति**। किमः शसि 'किमः कः' इति कत्वम्, 'प्रथमयोः पूर्वसवर्णः' इति दीर्घः, 'तस्माच्छसो नः पुंसि' इति सकारस्य नकारः, वीप्सायां द्विर्वचनम्, रुत्वम्, विसर्जनीयः, तस्य 'विसर्जनीयस्य सः' इति सः।

कथं पुनरत्र सकारः, यावता 'कुप्वोः ≍क ≍पौ च' इति विसर्जनीयजिह्वामूलीयाभ्यां भवितव्यम्? अत

**पदमञ्जरी**

**स्वतवान्पायौ**।। 'तु वृद्धौ' सौत्रो धातुः, ततोऽसुन्—स्वं तवो यस्याऽसौ स्वतवान्, 'दृक्स्ववःस्वतसां छन्दसि' इति नुम्।।११।।

**कानाम्रेडिते**।। 'कान्कान्' इति वक्तव्ये आम्रेडितग्रहणं यत्र द्विर्वचनं तत्रैव यथा स्यात्, इह मा भूत्—कान्कान् पश्यतीति, एकोऽत्र किं शब्दः प्रश्ने, द्वितीयः क्षेपे।

**भावबोधिनी**

प् परे रहते—इसका क्या फल है? नॄन् भोजयति। [ यहाँ न् का रु नहीं होता है। ] कुछ विद्वान् 'उभयथा' इसकी भी अनुवृत्ति करते हैं जिससे—'नॄन् पाहि' यह नकारवाला रूप भी रह सके।।१०।।

'स्वतवान्' इस शब्द के नकार का 'रु' आदेश 'पायु' शब्द के परे रहते होता है। उदा० स्वतवाँः पायुरग्ने। (ऋ. ४।२।६) [ 'तु वृद्धौ' धातु से असुन् प्रत्यय करने पर तवस्, स्वं तवो यस्य असौ—इस अर्थ में स्वतवस् + सु में नुम् आगम सुलोप, संयोगान्तलोप करने पर स्वतवान् + पायुः में 'न्' का रु, अनुनासिकत्व आदि होते हैं। ]।।११।।

'कान्' इसके न् का रु आदेश आम्रेडित परे रहते होता है। [ 'तस्य परमाम्रेडितम्' सूत्र से द्वित्व में परवर्ती की आम्रेडित संज्ञा होती है। अतः जहाँ एक अर्थ वाले 'कान्' का दो बार प्रयोग हो वहीं पर 'न्' का 'रु' होता है। ] उदा० काँस्कान् आमन्त्रयते, कांस्कान् आमन्त्रयते। काँस्कान् भोजयति, कांस्कान् भोजयति। [ किम् शब्द द्वितीया बहुवचन में 'कान्' का वीप्सा अर्थ में द्वित्व करने पर कान् + कान् में 'न्' का रुत्व अनुनासिकविकल्प तथा अनुस्वार आदि सभी पूर्वोक्त प्रक्रिया होती है। ]

**'समः सुटि' (८।३।५) इत्यतो वा सकारोऽनुवर्तते, स एवात्र विधीयते।**
**पूर्वेषु योगेषु सम्बन्धानुवृत्त्या गतस्य रोरत्रानभिसम्बन्धः।**
**आम्रेडित इति किम्? कान् कान्पश्यति। एकोऽत्र कुत्सायाम्।।**

## ३८०९. ढो ढे लोपः।।१३।। (२३३५)

**ढकारस्य ढकारे लोपो भवति। सत्यपि पदाधिकारे तस्यासम्भवादपदान्तस्य ढकारस्यायं लोपो विज्ञायते। लीढम्। उपगूढम्।**

**न्यासः**

आह—**अस्येत्यादि**। तत्र यद्यपि न पठ्यते, तथापि न भवत्येवानिष्टप्रसङ्ग इति दर्शयितुमाह—**समः सुटीत्यादि**। यदि सकारोऽत्रानुवर्त्तिष्यते, पूर्वयोगेऽपि सर्वत्रैतस्मादनुवर्त्तमानात् सकारः प्रसज्येत? इत्याह—**पूर्वयोगेष्वित्यादि**। पूर्वयोगेषु हि 'समः सुटि' इति स्वेन सम्बन्धिना समा सुटा च सम्बद्धस्यैव तस्यानुवृत्तिः, ततो न तस्य सम्बन्ध्यन्तरेण सम्बन्धो भवति।

कान् कानिनि वक्तव्ये, आम्रेडितग्रहणम्—यत्र द्विर्वचनं तत्र यथा स्यात्। तेनेह न भवति—कान् कान् पश्यतीति। एकोऽत्र किं शब्दः प्रश्ने, द्वितीयस्तु कुत्सायाम्। कान् कुत्सितान् पश्यतीत्यर्थः।।१२।।

**ढो ढे लोपः**।। 'ढे' इति वर्णमात्रं निमित्तत्वेनाश्रीयते, न वर्णसमुदायः। कुत एतत्? व्याप्त्या। अकार उच्चारणार्थः। वर्णग्रहणे तु सति लीढ्वा, मीढ्वेत्यादावपि भवति; अन्यथा हि यदि वर्णसमुदायो निमित्तत्वेनाश्रीयते

**पदमञ्जरी**

**समःसुटीत्यतो वा सकारोऽनुवर्तत इति**। यद्येवम्, पूर्वेष्वपि योगेषु स एव प्राप्नोति? इत्यत आह—**पूर्वेषु योगेष्विति**।।१२।।

**ढो ढे लोपः**।। अकार उच्चारणार्थः, ढकारमात्रं निमित्तम् : तेन लेढा, लेढीत्यादावपि भवति। लीढमित्यादौ 'हो ढः', 'झषस्तथोर्धोऽधः', ष्टुत्वम्, ततोऽनेन ढलोपः। ननु चासिद्धं ष्टुत्वं तत्कथमत्र लोपः? तत्राह—**ष्टुत्वस्येति**। उच्यते चेदम्—ढे परतो ढस्य लोपो भवतीति, तत्र ष्टुत्वस्यासिद्धत्वे निर्विषयमेतत्स्यात्।

**भावबोधिनी**

[ यहाँ विसर्ग का सकार कैसे होगा क्योंकि 'कुप्वोः ≍क≍पौ च' यह अपवाद उपस्थित है? ] इस 'काँस्कान्' का पाठ 'कस्कादि गण' में समझना चाहिये। इसलिये कुप्वोः ≍क≍पौ च' इसकी प्रवृत्ति नहीं होती है। [ अपि तु 'कस्कादिषु च' सूत्र से सत्व ही होता है। ]

अथवा [ द्विसकारक निर्देश मानकर ] 'समः स्सुटिः' इस सूत्र से [ न् का ] 'स्' होने की अनुवृत्ति होती है वही 'स्' यहाँ होता है। [ न कि रेफ का विसर्ग और विसर्ग का स्। ]

पूर्ववर्ती सूत्रों में सम्बन्धी के साथ अनुवृत्ति होने से आ गत 'रु' का इस सूत्र में सम्बन्ध नहीं होता है। [ भाव यह है कि 'मतुवसोः रुः संम्बुद्धौ छन्दसि' सूत्र में मतुप् तथा वस् के साथ सम्बद्ध रु है। वह उन्हीं से सम्बद्ध रहता हुआ ही आगे अनुवृत्त होता है। अतः अन्य के साथ 'रु' का सम्बन्ध नहीं होता है। अतः यहाँ भी 'समः स्सुटि' के समान न् का स् ही करना चाहिये रु नहीं। ]

आम्रेडित परे रहते—इसका क्या फल है? कान् कान् पश्यति?। इन में एक 'कान्' शब्द कुत्सित अर्थ में है।

[ अतः 'किन कुत्सितों को देखते हो' यह अर्थ है। दोनों के अलग-अलग अर्थ होने से आम्रेडित परे नहीं है। अतः न् का रु नहीं होता है। ]।।१२।।

ढकार परे रहते ढकार का लोप होता है। यद्यपि इसमें 'पदस्य' इसका अधिकार है किन्तु (उदाहरणों में) सम्भव न होने से अपदान्त ढकार का यह लोप माना जाता है। उदा० लीढम्। उपगूढम्। [ लिह् + क्त, उपगुह् + क्त में 'हो ढः' सूत्र से ह् का ढ्—

**ष्टुत्वस्यात्र सिद्धत्वमाश्रयाद् द्रष्टव्यम्।**

**श्वलिड्ढौकते–इत्यत्र तु जश्त्वे कृते कार्यं नास्तीति लोपाभावः। न च ढलोपो जश्त्वापवादो विज्ञातुं शक्यते; तस्य हि लीढादिर्विषयः सम्भवति।**

**न्यासः**

तदा लीढम्, मीढमित्यादावेव स्यात्, न तु लोढ्वेत्यादौ। **लीढमित्यादि**। 'लिह अस्वादने' 'मिह सेचने' 'गुहू संवरणे'—एभ्यः 'ष्टुना ष्टुः' इति ष्टुत्वम्, ढलोपः, 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घः।

कथं पुनर्लीढमित्याद्युदाहरणुपपद्येत, यावता ढकारोऽत्र परनिमित्तं नास्त्येव, ढलोपे कर्त्तव्ये ष्टुत्वस्यासिद्धत्वात्? इत्यत आह—**ष्टुत्वस्येत्यादि**। ढकारोऽत्र ढलोपनिमित्तेनाश्रीयते, न चासौ क्वचित् सिद्धः सम्भवति यत्रानेन ढलोपः कर्त्तव्यः। तस्माद् ढकारस्य निमित्तत्वेनाश्रयणादेव ष्टुत्वस्य सिद्धत्वं वेदितव्यम्; अन्यथा ह्यस्य वचनस्य वैयर्थ्यं स्यात्; अनवकाशत्वात्।

स्यादेतत्—श्वलिड् ढौकत इति अनेन ढलोपो भविष्यति, सिद्धो ह्यत्र ढकारः, तत् कुतो वचनस्य वैयर्थ्यम्? इत्याह—**श्वलिड् ढौकत इत्यादि**। यद्यप्यत्र निमित्तं ढकारः सिद्धः, तथापि नैव ढलोप उपपद्यते; जश्त्वे कृते कार्यिणो ढकारस्याभावात्। ननु च निर्विषयत्वाड् ढलोपो जश्त्वापवादो भविष्यति? इत्याह—**न चेत्यादि**। कुत एतत्? इत्याह—**तस्य हीत्यादि**। यदि हि तस्य विषयो न सम्भाव्येत, ततो जश्त्वापवादः शक्यते विज्ञातुम्। सम्भवति चास्य विषयो लीढादिः, तस्मान्न शक्योऽसौ जश्त्वापवाद इति विज्ञातुम्।

कथं पुनर्लीढादिरस्य विषयः, यावता यथा श्वलिड् ढौकत इत्यत्र जश्त्वे कृते कार्यिणोऽसम्भवाड् ढलोपस्याविषयः, तथालीढादावपि ष्टुत्वस्यासिद्धत्वे सति निमित्तस्याभावात्। अथात्र वचनसामर्थ्याड् ढलोपेन ष्टुत्वस्यासिद्धत्वं बाध्यते? इतरत्रापि जश्त्वं कस्मान्न बाध्यते; तस्माद् यदि पुनर्लीढादिर्ढलोपस्य विषय इतरेणापि

**पदमञ्जरी**

ननु च यत्रौत्पत्तिको ढकारः—श्वलिड्ढौकत इत्यादौ, तत्र सावकाशः स्यादत आह—**श्वलिड्ढौकत इत्यत्रेति। जश्त्वे कृत इति**। एकपदाश्रयत्वादन्तरङ्गत्वात् 'पूर्वत्रासिद्धम्' इति लोपस्यासिद्धत्वाद्वा पूर्वं जश्त्वम्। ननु च निर्विषयत्वाद् ढलोपो जश्त्वं बाधेत? नेत्याह—**न चेति**। कुतः? इत्याह—**तस्य हीति**।

कथं पुनर्लीढादिरवकाशः, यावता यथा श्वलिड्ढौकते इत्यत्र जश्त्वे कृते कार्यिणोऽभावः, तथा लीढादावपि ष्टुत्वस्यासिद्धत्वान्निमित्तस्याभावः; अथ तत्र वचनसामर्थ्यात् ष्टुत्वस्यासिद्धत्वं बाध्यते, तदेतरत्रापि जश्त्वं

**भावबोधिनी**

लिढ् + त, उपगूढ् + त, 'झषस्तथोर्धोऽधः' सूत्र से 'त' का 'ध' लिढ् + ध, ष्टुत्व से ध् का ढ करने पर प्रस्तुत सूत्र से पूर्ववर्ती ढकार का लोप होता है। 'ढ्रलोपे पूर्वस्य दीर्घोऽणः सूत्र से इ और उ का दीर्घ होता है। ]

[ यह उदाहरण सम्भव नहीं है क्योंकि ढलोप की कर्तव्यता में परवर्ती ष्टुत्व (८।४।४१) असिद्ध हो जाता है? ] इस सूत्र में आश्रय रूप से ष्टुत्व को लिया जाने के कारण ष्टुत्व को सिद्ध ही समझना चाहिये। [ भाव यह है कि जहाँ भी परवर्ती ढ् मिलता है वह ष्टुत्व से ही बना होता है। यदि इस पूर्ववर्ती की दृष्टि में 'ष्टुना ष्टुः' को असिद्ध माना जायगा तो कहीं भी लोप करना सम्भव नहीं होगा, प्रस्तुत सूत्र व्यर्थ होने लगेगा, अतः सूत्र की सार्थकता के लिये यहाँ ष्टुत्व को सिद्ध ही मानना चाहिये। ]

श्वलिड् ढौकते [ श्वलिह् + ढौकते में ह् का ढ् और ] जश्त्व से ढ् का ड् करने पर लोप रूपी कार्य सम्भव नहीं है अतः लोप नहीं होगा। और ढ का लोप जश्त्व का अपवाद नहीं माना जा सकता, क्योंकि इस लोप का विषय तो 'लीढ' आदि सम्भव है। [ असम्भव होने पर ही निवकाश होकर बाधक बनाया जाता है। ]

**तत्र हि श्रुतिकृतमानन्तर्यमस्ति। शास्त्रकृतं तु यदा नानन्तर्यं ष्टुत्वस्यासिद्धत्वेन प्राप्तम्, तत्तु सूत्रकरणसामर्थ्याद्बाध्यते। श्वलिड्ढौकते–इत्यत्र तु न श्रुतिकृतमानन्तर्यम्, न शास्त्रकृतमिति अविषयोऽयं ढलोपस्य।।**

## ३८१०. रो रि।।१४।। (१७३)

**रेफस्य रेफे परतो लोपो भवति। नीरक्तम्। दूरक्तम्। अग्नी रथः। इन्दू रथः। पुना रक्तं वासः। प्राता राजक्रयः।**

**न्यासः**

तद्विषयेण भवितव्यम्, न तु लीढादिनैवेतरत्रापीत्यत आह—**तत्र हीत्यादि**। इह 'ढ' इति सप्तमीनिर्देशादानन्तर्यमाश्रितम्; निर्दिष्टग्रहणस्यानन्तर्यार्थत्वात्। ततश्चानन्तर्ये सति ढलोपेन भवितव्यम्। अस्ति च लीढादौ श्रुतिकृतमानन्तर्यम्, उभयोर्निमित्तकार्यिणोर्ढकारयोः श्रूयमाणत्वात्, तस्मादेष एव ढलोपस्य विषयः? सत्यमिहास्त्यानन्तर्यं श्रुतिकृतम्; अनानन्तर्यमप्यस्ति शास्त्रकृतम्, शास्त्रेण ष्टुत्वस्यासिद्धत्वोपादानात्। सति च तस्मिन् सोऽपि न ढलोपस्य विषय इत्यत आह—**शास्त्रकृतमित्यादि**। विद्यमानमपि शास्त्रकृतमनान्तर्यं ढलोपेन बाध्यते; अन्यथा हि वचनवैयर्थ्यं स्यात्। यथा शास्त्रकृतमनानन्तर्यं वचनसामर्थ्याद् बाधित्वा ढलोपो भवति, तथा श्वलिड् ढौकत इत्यत्रापि श्रुतिकृतमनान्तर्यं बाधित्वा ढलोपः स्यादित्याह—**श्वलिड् ढौकत इत्यत्र त्वित्यादि**। तुशब्दो लीढादेरस्य विशेषं दर्शयति। अत्र लीढादौ हि यद्यपि शास्त्रकृतमानन्तर्यं नास्ति, श्रुतिकृतं त्वस्ति। इह तु नापि श्रुतिकृतमानन्तर्यं द्वयोर्ढकारयोरश्रूयमाणत्वात्, नापि शास्त्रकृतम्, शास्त्रेण जश्त्वस्यासिद्धत्वानुपादानात्। तस्मान्नैष ढलोपस्य विषयः।।१३।।

**रो रि**।। किं पुनरिदं सानुबन्धकस्य रेफस्य ग्रहणम्? उत निरनुबन्धकस्य? किञ्चात्र यदि सानुबन्धकस्य ग्रहणम्? सिद्धम्—अग्नीरथः, इन्दूरथ इति; नीरक्तं दूरक्तमिति तु न सिध्यति। अथ निरनुबन्धकस्य ग्रहणम्? तदा

**पदमञ्जरी**

बाधनीयम्, वक्तव्यो वा विशेषः? अत आह—**तत्र हीति**। अयमभिप्रायः—लोपेन तावदसिद्धत्वमवश्यं बाध्यम्, तत्र लीढमित्यादावेकमेव 'पूर्वत्रासिद्धम्' इत्यसिद्धत्वम्, अतस्तदेव बाध्यते; श्वलिड्ढौकते इत्यत्र तु ढलोपस्य जश्त्वापेक्षया बहिरङ्गत्वात् परत्वाच्च द्विविधमसिद्धत्वमिति न तद्बाध्यते। ततो जश्त्वे कृते न श्रुतिकृतमानन्तर्यम्, नापि शास्त्रकृतम्; जश्त्वस्यासिद्धत्वाभावादिति ढलोपस्यायमविषय इति।।१३।।

**रो रि**।। किमिदं सानुबन्धकस्य रोर्ग्रहणम्? आहोस्विद्रेफस्य? कुतः संशयः? तुल्यात्र संहिता—रोः रि, रःरीति। किं चातः? यदि सानुबन्धकस्य ग्रहणम्, सिद्धमिन्दूरथः अग्नीरथः; इदं तु न सिध्यति—नीरक्तम्,

**भावबोधिनी**

इस 'लीढम्' आदि में (दोनों ढकारों का) श्रुतिकृत अव्यवधान है अर्थात् दोनों समीप में एक साथ सुनाई देते हैं। जब ष्टुत्व के असिद्ध हो जाने के कारण शास्त्रकृत आनन्तर्य (दोनों ढकारों का अव्यवधान) नहीं प्राप्त होता है, यह प्रस्तुत सूत्र बनाने से बाधित कर दिया जाता है। [ अतः ष्टुत्व असिद्ध नहीं होता है। ] किन्तु श्वलिड् + ढौकते—यहाँ पर न तो (दो ढकारों का) श्रुतिकृत आनन्तर्य है और न किसी शास्त्र वचन द्वारा किया गया आनन्तर्य ही है, इस कारण यह ढलोप का विषय नहीं बन सकता। [ अतः 'लीढम्' तथा 'श्वलिड् ढौकते में अन्तर है। यह ढलोप जश्त्व का अपवाद नहीं माना जा सकता। जश्त्व होने पर दो ढकारों का आनन्तर्य सम्भव नहीं है। ]।।१३।।

रेफ परे रहते रेफ का लोप होता है। उदा० नीरक्तम्। दूरक्तम्। [ निर् + रक्तम् दुर् + रक्तम्—में पूर्ववर्ती रेफ का लोप कर देने के बाद 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' सूत्र से अण् = अ, इ, उ का दीर्घ होता है। ] अग्नी रथः। इन्दू रथः। [ अग्निर् + रथः, इन्दुर् + रथः—इनमें भी रेफलोप, अण् का दीर्घ ] पुनारक्तं वासः। प्राता राजक्रयः। [ पुनर् + रक्तम्, प्रातर् + राजक्रयः—इनमें भी रेफ के लोप के बाद अण् का दीर्घ होता है। ]

**'पदस्य' इत्यत्र विशेषणे षष्ठी, तेन अपदान्तस्यापि रेफस्य लोपो भवति। जर्गृधेः—अजर्घाः। पास्पर्धेः—अपास्पा इति।।**

**न्यासः**

सिध्यति—नीरक्तम्, दूरक्तमिति; अग्नीरथः, इन्दूरथ इति न सिध्यति? नैष दोषः; इह तन्त्रेणाचार्यः 'रो रि' इति द्वे सूत्रे उच्चारितवान्, तत्रैकत्र सानुबन्धकस्य ग्रहणम्, अपरत्र निरनुबन्धकस्येति। नीरक्तमित्यादौ 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घत्वम्।

इह यदि पदस्येति स्थानषष्ठी स्यात्, ततः 'अलोऽन्त्यस्य' इति पदान्तस्य न स्यात्; विशेषणषष्ठ्यां त्वस्यामिहापि भवतीत्येतच्चेतसि कृत्वाह—**पदस्येत्यादि**। विशेषणषष्ठ्यां हि पदस्येत्यस्यैवमभिसम्बन्धः क्रियते—पदस्यावयवो यो रेफस्तस्य रेफे परतो लोपो भवतीति। तेनापदान्तस्यापि भवति। **अजर्घा इति**। 'एकाचो बशो भष्' इत्यादौ सूत्रे इदं व्युत्पादितम्। **अपास्पा इति**। 'स्पर्द्ध सङ्घर्षे', अस्माद् यङ्, द्विर्वचनम्, 'शर्पूर्वाः खयः' इति खयः शेषः, 'दीर्घोऽकितः' इति दीर्घत्वम्, 'यङोऽचि च' इति यङो लुक्; पास्पर्द्ध इति स्थिते लङ्, अडागमः, सिप्, 'चर्करीतञ्च' इत्यदादिषु पाठाच्छपो लुक्, सिपो हल्ङ्यादिना लोपः, जश्त्वेन धकारस्य दकारः, 'दश्च' इति तस्यैव दकारस्य रुत्वम्, तत्रानेन रेफस्य लोपः, पूर्ववद्दीर्घत्वम्।

योगविभागकरणमुत्तरार्थम्, उत्तरसूत्रे रेफस्यानुवृत्तिर्यथा स्यादित्येवमर्थम्; इतरथा हि ढकारस्यापि तत्रानुवृत्तिः स्यात्, ततश्च तस्यापि विसर्जनीयः प्रसज्येत।।१४।।

**पदमञ्जरी**

दूरक्तमिति। अथ रेफस्य ग्रहणम्, सिद्धं नीरक्तं दूरक्तमिति; इदं तु न सिध्यति—अग्नीरथः, इन्दूरथ इति, 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति? नैष दोषः, वर्णग्रहणेषु नैषा परिभाषा प्रवर्त्तते।

**पदस्येत्यत्र विशेषणे षष्ठीति**। एतच्च 'पदस्य' पदात् इत्यत्रैव व्याख्यातम्। तेन किं सिद्धं भवति? इत्याह—**तेनेति**। स्थानषष्ठ्यां तु रेफेण पदस्य विशेषणाद्रेफान्तस्य पदस्य लोपेन भवितव्यम्। **अजर्घा इति**। 'एकाचो बशो भष्' इत्यत्रैतद् व्युत्पादितम्। **अपास्पा इति**। 'स्पर्द्ध सङ्घर्षे', यङ्लुकि 'दीर्घोऽकितः' इति दीर्घः, लङि सिपि शपो लुक्, सिपो हल्ङ्यादिलोपः; जश्त्वम्, 'दश्च' इति रुत्वम्।।१४।।

**भावबोधिनी**

'पदस्य' (८।१।१६) यहाँ विशेषण में षष्ठी है। [ अतः पद का अवयव जो रेफ उसका रेफ परे लोप होता है—यह अर्थ हो जाने से ] अपदान्त भी रेफ का लोप हो जाता है। उदा० जर्गृध् का—अजर्घाः, पास्पर्ध् का—अपास्पाः।

**विमर्श**—भाव यह है कि अभी तक सभी उदाहरणों में पदान्त के स्थान पर ही रुत्वादि कार्य कह गये हैं। परन्तु प्रस्तुत सूत्र में कुछ अलग माना जाता है। 'पदस्य' (८।१।१६) यह विशेषण में षष्ठी है—पद का अवयव जो रेफ उसका रेफ परे रहते लोप होता है। अतः पदान्त और अपदान्त दोनों प्रकार के रेफों का रेफ परे रहते लोप होता है। उदा० 'गृधू अभिकाङ्क्षायाम्' तथा 'स्पर्ध संघर्षे' इन धातुओं के यङ्लुक् मध्यमपुरुष एकवचन लङ्लकार के रूप हैं। गृध् से यङ्, लुक्, प्रत्ययलक्षण से द्वित्व, हलादिशेष, 'उरत्' ऋ का अ, रपर, 'कुहोश्चुः' से चुत्व ग का ज, 'रुग्रिकौ च लुकि' सूत्र से रुक् = र् आगम—जर्गृध् + लङ् = सिप् = स् अट्, सिप् का हल्ङ्यादिलोप, लघूपधगुण—अजर्गर्ध् 'एकाचो वशो भष झषन्तस्य स्ध्वोः' (८।२।३७) से भष्भाव द्वारा ग का घ अजर्घर्ध्, धकार का जश्त्व—अजर्घर्द्, 'दश्च' (८।२।७५) सूत्र से द् का रु—अजर्घर्र् अब 'रो रि' से प्रथम रेफ का लोप और 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' सूत्र से अ का दीर्घ—अजर्घार्, रेफ का विसर्ग—अजर्घाः। इसी प्रकार 'स्पर्ध' यङ् लुक्, द्वित्व, 'शर्पूर्वाः खयः' सूत्र से खय् = प शेष, स् लोप प स्पर्ध, दीर्घोऽकितः' से अभ्यास का दीर्घ—पास्पर्ध् + लङ्, अट् सिप्, हल्ङ्यादिलोप—अपास्पर्ध्, जश्त्व से ध् का द्, 'दश्च' सूत्र से द् का रु—अपास्परर्, पूर्ववर्ती रेफ का लोप, 'ढ्रलोपे' सूत्र से अ का दीर्घ, र् का विसर्ग—अपास्पाः। दोनों में अपदान्त किन्तु पदसम्बन्धी रेफ का लोप होता है। ]।।१४।।

## ३८११. खरवसानयोर्विसर्जनीयः ।।१५।। (७६)

**'र' इति वर्तते। रेफान्तस्य पदस्य खरि परतोऽवसाने च विसर्जनीयादेशो भवति। वृक्षश्छादयति। प्लक्षश्छादयति। वृक्षस्तरति। प्लक्षस्तरति[1]। अवसाने–वृक्षः। प्लक्षः।**

**खरवसानयोरिति किम्? अग्निर्नयति। वायुर्नयति।**

**न्यासः**

**खरवसानयोर्विसर्जनीयः**।। यद्यत्र पदस्येति विशेषणषष्ठी स्यात्—पदस्यावयवो यो रेफ इति, तदा 'अर्कः' इत्यादावप्यपदान्तस्य रेफस्यापि विसर्जनीयः स्यात्। स्थानषष्ठ्या न दोषः; अत्र हि पदं रेफेण विशेष्यते, विशेषणेन च तदन्तविधिर्भवति, तेन रेफान्तस्य कार्यमुच्यमानमलोऽन्त्यस्यैव भवतीत्येतदालोच्य पदस्येत्येषा स्थाने षष्ठी। तच्च पदं रेफेण विशेष्यत इत्येतद् दर्शयन्नाह—**रेफान्तस्य पदस्येति। खरि परतोऽवसाने चेति**। 'परतः' इत्येतत् पूर्वेणैव सम्बध्यते, न परेण, अवसाने तस्य पौर्वापर्याभावात्। तथा हि येन वर्णेन विरम्यते सोऽवसानं स्यात्। विरतिर्वा विरामः = वर्णस्यानुच्चारणम्, तेन रेफान्तात् पदाद् येन वर्णेन विरम्यते स तावदवसानसंज्ञकः परो न सम्भवति; तन्मात्रस्याप्रयोगात्। अप्रयोगस्तु निरर्थकत्वात्। इतरत्र तु पुनरवसानमभावरूपम्। अभावे च पौर्वापर्यं न सम्भवति; तस्य वर्णधर्मत्वात्। तस्मात् तदपि नैव रेफान्तात् पदात् परमुपपद्यते।

केचित्तु बुद्धिकल्पितं पौवापर्यमाश्रित्य 'अवसाने च' इत्यनेनापि सह 'परतः' इत्येतत् सम्बध्नन्ति। तत्र यदि बुद्धिकल्पितं पौर्वापर्यं नाश्रीयते, तदाः 'खरवसानयोः' इति एकाप्येषा सप्तम्यधिकरणभेदाद् भिद्यते; खर्यौपश्लेषिकेऽधिकरणे सप्तमी भवति—खरि परत इति, अवसाने तु वैषयिकेऽधिकरणे सप्तमी भवति—

**पदमञ्जरी**

**खरवसानयोर्विसर्जनीयः**।। यद्यत्रापि पदस्येति विशेषणषष्ठी स्यात्, तदा चकर्ष, कर्कश इत्यादावपदान्तस्यापि रेफस्य विसर्जनीयः स्यात्। स्थानषष्ठ्यां तु रेफेण पदे विशेषिते रेफान्तस्य पदस्यालोन्त्यस्य विसर्जनीयविधानान्न कश्चिद्दोष इति मन्यमान आह—**रेफान्तस्य पदस्येति। खरि परतोऽवसाने चेति**। 'परतः' इत्येतत्खरैव सम्बन्ध्यते, नावसानेन; असम्भवात्। येन वर्णेन विरम्यते स एवावसानं स्यात्। विरतिः = वर्णस्यानुच्चारणम्। तत्र पदान्तस्य रेफस्य येन वर्णेन विरम्यते स तावत्परो न सम्भवति। इतरत्पुनरवसानमभावरूपम्, न चाभावेन पौर्वापर्यं सम्भवति। तस्मात् 'खरवसानयोः' इत्येकापि सप्तमी विषयभेदाद्भिद्यते—खरि परसप्तमी अवसाने विषयसप्तमीति।

अपर आह—वर्णेष्वप्युच्चरितप्रध्वंसिषु बुद्धिविरचितं पौर्वापर्यमस्ति, तत्त्वभावेनापि सम्भवति; तस्मादुभयत्रापि परसप्तमीति। उदाहरणेषु खरि विसर्जनीयस्य सत्वम्, चवर्गे श्चुत्वम्, टवर्गे ष्टुत्वम्।

**भावबोधिनी**

'रः' इसकी अनुवृत्ति होती है। रेफान्त पद का खर् तथा अवसान (वर्णों का अभाव) परे रहते विसर्ग आदेश होता है। उदा० वृक्षश्छादयति। प्लक्षश्छादयति। वृक्षस्तरति। प्लक्षस्तरति। [ वृक्ष + सु + छादयति आदि में 'ससजुषोः रुः' सूत्र से स् का रु आदेश र् का विसर्ग करने पर पुनः सत्व और श्चुत्व आदि होते हैं। ] अवसान में—उदा० वृक्षः, प्लक्षः। [ वृक्ष + सु, प्लक्ष + सु, स् का रु, रेफ का विसर्ग। ] [ 'विरामोऽवसानम्' सूत्र से वर्णों का अभाव रहने पर अवसान माना जाता है। ]

खर् परे रहते और अवसान में—इसका क्या फल है? अग्निर्नयति। वायुर्नयति। [ अग्नि + सु + नयति में सु का रु होता है। खर् या अवसान न होने से विसर्ग नहीं होता है, रेफ ही रहता है। ]

---

१. वृक्षश्चिनोति, प्लक्षश्चिनोति, वृक्षष्टीकते, प्लक्षष्टीकते—इत्यधिकं क्वचित्।

**इह नृकुट्यां भवः नार्कुटः, नृपतेरपत्यं नार्पत्यः–इति वृद्धेर्बहिरङ्गलक्षणत्वात्तदाश्रयस्य रेफस्य 'असिद्धं बहिरङ्गम्' (व्या.प.४२) इत्यसिद्धत्वाद् विसर्जनीयो न भवति।।**

**न्यासः**

अवसाने विषय इति। यदा तु बुद्धिकल्पितमभावेऽपि पौर्वापर्यमवसानेऽप्याश्रीयते, तदोभयत्रापि परसप्तम्येव।

उदाहरणेषु खरि विसर्जनीये कृते 'विसर्जनीयस्य सः' इति सकारः, चवर्गे परतः श्चुत्वम्।

अथेह नृकुट्यां भवः 'तत्र भवः' इत्यणि—नार्कुटः, नृपतेरपत्यम् 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति नार्पत्य इत्यत्र विसर्जनीयः कस्मान्न भवति? इत्याह—**इहेत्यादि**। वृद्धिर्हि भवादावर्थे विहितं तद्धितमाश्रित्य भवन्ती बहिरङ्गा, तस्याश्च बहिरङ्गत्वात् तदाश्रयस्यापि रेफस्य बहिरङ्गत्वम्; वृद्ध्याश्रितत्वात्, पुना रेफस्य तद्भक्तत्वात् तन्निमित्ताच्च। विसर्जनीयस्तु खर्मात्रमाश्रित्य भवतीत्यन्तरङ्गः। 'असिद्धं बहिरङ्गमन्तरङ्गे' इति विसर्जनीये कर्त्तव्ये रेफोऽसिद्धः, अत इह विसर्जनीयो न भवति। ननु च वृद्धौ कर्त्तव्यायां विसर्जनीयोऽभिमतोऽन्तरङ्गोऽसिद्धः, तदसति तस्मिन् वृद्धेर्बहिरङ्गव्यपदेशो नोपपद्यते, तस्यान्तरङ्गापेक्षकत्वात्; असति तस्मिन् वृद्धेर्बहिरङ्गव्यपदेशे रेफस्यापि स न स्यात्। वृद्धेर्बहिरङ्गद्वारकं हि रेफस्य बहिरङ्गत्वम्; ततश्चोभयाङ्गविकलत्वात् बहिरङ्गपरिभाषा नोपतिष्ठत इति यदुक्तम्—**वृद्धेर्बहिरङ्गलक्षणत्वादिति**, तन्नोपपद्यते? नैतत्; 'न मुने' इति कार्यान्तरार्थम् 'न' इति योगविभागः कृतः। तेन वृद्धौ कर्त्तव्यायां विसर्जनीयस्यासिद्धत्वं न भविष्यति। अत एव बहिरङ्गपरिभाषायामपि विसर्जनीयस्यासिद्धत्वं न भविष्यतीति वेदितव्यम्। 'कार्यकालं संज्ञापरिभाषम्' इत्यस्य दर्शनस्येहाश्रितत्वाच्च। युक्तश्चैतत्, कार्यप्रयुक्तत्वाद् हि संज्ञापरिभाषस्य तद्देशतैव न्याय्या। यत्र ह्यनयाऽसिद्धत्वं क्रियते सोऽस्याः कार्यदेशः। क्व चानयाऽसिद्धत्वम्? विसर्जनीयविधौ। तस्मात् तद्देशैवेयम्, न तु यत्रोपसंख्याता—'विप्रतिषेधे परं कार्यम्' इति, तद्देशा; नापि यत्र ज्ञापिता—'वाह ऊठ्' इत्यत्र, तद्देशा।।१५।।

**पदमञ्जरी**

**नार्पत्य इति**। पत्युत्तरपदाण्ण्यः। **वृद्धेर्बहिरङ्गलक्षणत्वादिति**। बहिर्भूततद्धितापेक्षत्वाद् वृद्धेर्बहिरङ्गत्वम्। **तदाश्रयस्य रेफस्येति**। तदाश्रयत्वं तु तया सह विधानात्। 'उरण् रपरः' इत्येतद्धि गुणवृद्धिविधिभिरेकतामापाद्य रपरत्वं विधत्ते, तेन वृद्धेर्यन्निमित्तं तदेव रेफस्यापि, ततस्तस्यापि बहिरङ्गत्वम्। विसर्जनीयस्तु खर्मात्रमाश्रित्य भवन्नन्तरङ्गः। ननु बहिरङ्गपरिभाषा 'वाह ऊठ्' इत्यत्र ज्ञापितत्वात्तद्देशा, ततः किम्? तस्यां कर्त्तव्यायां विसर्जनीयः 'पूर्वत्रासिद्धम्' इत्यसिद्धः, सा कथमन्तरङ्गमपश्यन्ती बहिरङ्गस्यासिद्धत्वमापादयति? नैष दोषः; 'कार्यकालं संज्ञापरिभाषम्', ततश्च परिभाषान्तरवद् बहिरङ्गपरिभाषाया अप्यत्र प्रकरणे प्रवृत्तिरविरुद्धा।।१५।।

**भावबोधिनी**

नृकुट्यां भवः—इस अर्थ में—'नार्कुटः', नृपतेः अपत्यम्—इस अर्थ में 'नार्पत्यः' आदि में [ तद्धित प्रत्ययों को मानकर होने वाली ] वृद्धि के बहिरङ्गलक्षण होने से उस वृद्धि को मानकर किया गया रेफ भी 'असिद्धं बहिरङ्गमन्तरङ्गे' परिभाषा से असिद्ध हो जाता है। [ अतः ऋ ही मिलता है। ] अतः विसर्ग नहीं होता है। [ नृकुटी + अण्, नृपति + ण्य में 'तद्धितेष्वचामादेः' सूत्र से तद्धित प्रत्ययों को मानकर होनेवाली वृद्धि बहिरङ्ग हैं, उससे बननेवाला रेफ (रपर) भी बहिरङ्ग है। जबकि विसर्ग तो केवल खर् मानकर होता है, अन्तरङ्ग है। अतः विसर्ग की कर्तव्यता में वृद्धि और उस पर आश्रित रेफ दोनों ही असिद्ध हो जाते हैं। रेफ न रहने से विसर्ग नहीं होता है। ]।।१५।।

**३८१२. रोः सुपि।।१६।। (३३९)**

**'रु'-इत्येतस्य रेफस्य सुपि परतो विसर्जनीयादेशो भवति। पयःसु। यशःसु। सर्पिःषु।**

**'सुपि'-इति सप्तमीबहुवचनं गृह्यते। 'सिद्धे सत्यारम्भो नियमार्थः' (कात्या.परि.)-रोरेव सुपि विसर्जनीयादेशः, नान्यस्य। गीर्षु। धूर्षु।।**

**३८१३. भोभगोअघोअपूर्वस्य योऽशि।।१७।। (१६७)**

**भोर्, भगोर्, अघोर्-इत्येवम्पूर्वस्य अवर्णपूर्वस्य च रोः रेफस्य यकारादेशो भवति अशि परतः। भो**

**न्यासः**

**रोः सुपिः।। पयःसु, यशःस्विति।** क्वचित् सकारद्वयं पठ्यते। तत्र 'वा शरि' इति विसर्जनीयस्य सकारः। **सर्पिःष्विति।** यत्र विसर्जनीयः पठ्यते तत्र 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति प्रत्ययसकारस्य षत्वम्। यत्र सर्पिष्ष्विति षकारद्वयं पठ्यते, तत्र पूर्ववदेव विसर्जनीयस्य सकारे कृते पूर्ववदेव प्रत्ययसकारस्य षत्वम्, पूर्वस्य ष्टुत्वम्।

सुपीति प्रत्याहारग्रहणशङ्कानिरासायाह—**सुपीत्यादि।** एतच्च 'खरि' इत्यनुवर्त्तनाल्लभ्यते, न हि सप्तमीबहुवचनादन्यः सुप् खरादिरस्ति। तस्मिन् मा भूत्; खरीत्यनुवृत्तेः। सप्तम्याः पकारेण प्रत्याहारग्रहणम्। कपस्तु पकारेण प्रत्याहारग्रहणं कस्मान्न भवतीति? न सम्भवति तत्र खरादिः सुप्। यदि स्यात् किञ्च स्यात्? अगीःकः अधःक इत्यत्र नियमाद् विसर्जनीयो न स्यात्। तस्माद् व्याख्यानमेव शरणम्। किमर्थं पुनरिदम्, यावता ननु सिद्धः पूर्वेणैव विसर्जनीयः? इत्याह—**सिद्धे सतीत्यादि।** विपरीतनियमो नाशङ्कनीयः, 'किमः क्षेपे' इत्यादौ विसर्जनीयनिर्देशात्। **गीर्षु, धूर्ष्विति।** 'र्वोरुपधायाः' इत्यादिना दीर्घः।।१६।।

**भोभगोअघोअपूर्वस्य योऽशि।। भो अत्रेत्यादौ** 'ओतो गार्ग्यस्य' इति नित्यो यलोपः। गार्ग्यग्रहणं तत्र पूजार्थम्। **भो ददातीत्यादावपि** 'हलि सर्वेषाम्' इति नित्य एव यलोपः।

**पदमञ्जरी**

**रोः सुपि।। पयःस्विति।** यत्र सकारद्वयं पठ्यते तत्र 'वा शरि' इति विसर्जनीयस्य वा सकारः। **सर्पिःष्विति।** यत्र विसर्जनीयः पठ्यते तत्र 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति प्रत्ययसकारस्य षत्वम्। षकारद्वयपाठे तु पूर्ववद्विसर्जनीयस्य सत्त्वम्, परस्य पूर्ववदेव षत्वम्, पूर्वस्य ष्टुत्वम्। **सप्तमीबहुवचनं गृह्यत इति।** न प्रत्याहारः; 'खरि' इत्यनुवृत्तेः, न हि सप्तमीबहुवचनादन्यः सुप् खरादिरस्ति। तेन पयोभ्यामित्यादौ विध्यर्थं न भवति, किं तर्हि? नियमार्थम्, यदाह—**सिद्धं सत्यारम्भो नियमार्थ इति। रोरेव सुपीति।** विपरीतस्तु नियमो न भवति—रोःसुप्येवेति; 'हलोऽनन्तराः संयोगः' इत्यादिनिर्देशात्।।१६।।

**भोभगोअघोअपूर्वस्य योऽशि।।** उदाहरणेषु 'ओतो गार्ग्यस्य', हलि सर्वेषाम्' इति च यलोपः।

**भावबोधिनी**

'रु' इसके रेफ का सुप् = सप्तमी बहुवचन परे रहते विसर्ग आदेश होता है। उदा० पयःसु। यशःसु। सर्पिःषु। [ यशस् + सुप्, पयस् + सुप्। सर्पिष् + सुप्—इनमें स् का रुत्व और रेफ का विसर्ग होता है। 'नुम् विसर्जनीयशर्व्यवायेऽपि' इस वचन से प्रत्यय सकार का मूर्धन्यादेश भी हो जाता है—सर्पिष्षु ]

'सुपि' यह सप्तमीबहुवचन ही लिया जाता है। [ क्योंकि पूर्वसूत्र 'खरवसानयोर्विसर्जनीयः' से रेफ का ] विसर्ग सिद्ध ही रहते यह विधिसूत्र बनाना नियमार्थ हो जाता है—रु के रेफ का ही सुप् परे विसर्ग होता है अन्य किसी रेफ का नहीं। इसलिये—गीर्षु। धुर्षु। [ इनमें सुप् परे रहते भी रेफ का विसर्ग न होकर रेफ ही रहता है। ]।।१६।।

भोर्, भगोर् अघोर्—ये जिसके पूर्व में हों तथा अवर्ण जिसके पूर्व में हो उस रु के रेफ का यकार आदेश अश् प्रत्याहार के वर्ण परे रहते होता है। उदा० भो अत्र। भगो अत्र। अघो अत्र। [ भोस् + अत्र, भगोस् + अत्र, अघोस् + अत्र—इनमें स् का रु,

**अत्र। भगो अत्र। अघो अत्र। भो ददाति। भगो ददाति। अघो ददाति। अवर्णपूर्वस्य–क आस्ते, कय् आस्ते। ब्राह्मणा ददति। पुरुषा ददति।**

**भोभगोअघोअपूर्वस्येति किम्? अग्निरत्र। वायुरत्र।**

**अश्ग्रहणं किम्? वृक्षः। प्लक्षः। नैतदस्ति; 'संहितायाम्' (८।२।१०८) इत्यनुवर्तते? तर्हि अश्ग्रहणमुत्तरार्थम्। 'हलि सर्वेषाम्' (८।३।२२) इत्ययं लोपः अशि हलि यथा स्यात्, इह मा भूत्–वृक्षं**

**न्यासः**

अथाश्ग्रहणं किमर्थम्, यावताऽशोऽन्यः खर्यो भवति तत्र खरवसानयोर्विसर्गेण भवितव्यम्, कृते विसर्जनीये तस्य स्थानिवद्भावाद् रुग्रहणेन ग्रहणे सति स्यादिति चेत्? न; ज्ञापकात्। यदयम् 'अत्रानुनासिकः पूर्वस्य तु वा' इत्यत्र विसर्जनीययकारमकृत्वा निर्देशं करोति तज्ज्ञापयति—विसर्जनीयस्य खरि यकारो न भवति। अवसाने तर्हि स्यादिति चेत्? नः 'संहितायाम्' इत्यधिकारात्। तस्मादन्तरेणाप्यश्वचनमश्येव भवतीति, इत्यत आह—**अश्ग्रहणमुत्तरार्थमिति**। **'हलि सर्वेषाम्' इत्यादिना** तामेवोत्तरार्थतां दर्शयति। **वृक्षवृडिति**। 'ओव्रश्चू छेदने', क्विप्, ग्रह्यादिना सम्प्रसारणम्, 'स्कोः संयोगाद्योरन्ते च' इति सकारलोपः, चकारस्य व्रश्चादिना षकारः, तस्य जश्त्वेन डकारः, तस्यापि चर्त्वम्-टकारः-वृक्षवृट्, तमाचष्ट इति णिच्, 'णाविष्ठवत् प्रातिपदिकस्य' इतीष्ठवद्भाव, 'टेः' इति टिलोपः वृक्षवयतेर्ण्यन्तात्क्विप्, 'णेरनिटि' इति णिलोपः। **वृक्षव् करोतीति**। अत्राश्ग्रहणाद्वकारस्य ककारे परतो लोपो न भवति। अत एवाश्ग्रहणात् 'लोपो व्योर्वलि' इति लोपो न भवत्येव; अन्यथाश्ग्रहणमनर्थकं स्यात्।

**पदमञ्जरी**

अश्ग्रहणमनर्थकमन्यत्राभावात्, अशोन्यः खर्भवति, तत्र च 'पूर्वत्रासिद्धम्' इति यत्वस्यासिद्धत्वाद्विसर्जनीयेन भाव्यम्, कृते विसर्जनीये स्थानिवद्भावाद् रुग्रहणेन ग्रहणात् स्यात्प्रसङ्ग इति चेत्? न; अल्स्थानिकत्वात्। अत्र हि रोर्यो रेफस्य विसर्जनीयस्य स्थानी, न पुना रुरेव। किञ्च—यत्वस्याप्यस्य रोर्यो रेफः स एवं स्थानी, न पुना रुरेव। तस्मादल्विधित्वादपि नास्ति स्थानिवद्भावः। संहिताधिकाराच्चावसाने यत्वं न भविष्यति, तस्मादश्ग्रहणमनर्थकम्? इत्यत आह—**अश्ग्रहणमुत्तरार्थमिति**। एतदेव व्यनक्ति—**हलि सर्वेषामिति**। **वृक्षवयतेरप्रत्यय इति**। स पुनर्विच्, न क्विप्। क्विपि हि एकदेशविकृतस्यानन्यत्वाद्वयति-ग्रहणेन ग्रहणाद्वकारस्य

**भावबोधिनी**

उ का लोप करने पर भोर् + अत्र आदि में 'ओतो गार्ग्यस्य' सूत्र से य् का नित्य लोप होने पर उक्त रूप बनते हैं। ] भो ददाति। भगो ददाति। अघोददाति। [ यहाँ भी सकारान्त इनके स् का रुत्व, र् का य्, 'हलि सर्वेषाम्' सूत्र से नित्य य् लोप होता है। ] अवर्णपूर्णवाले रेफ के यकार आदेश के उदा० क आस्ते, कय् आस्ते। ब्राह्मणा ददति। पुरुषा ददति। [ कस् + आस्ते, स् का रुत्व, र् का य्, 'लोपः शाकल्यस्य' सूत्र से य् का विकल्प से लोप होने से क आस्ते, लोप न होने पर—कय् आस्ते—ये दो रूप होते हैं। ब्राह्मणास् + ददति, पुरुषास् + ददति, प्रथमा बहुवचनान्त में स् का रुत्व, यत्व, यलोप करने पर उक्त रूप बनते हैं। ]

भो, भगो, अघो—ये पूर्व में हैं अथवा अ पूर्व में है, ऐसे रेफ का—इसका क्या फल है? अग्निरत्र। वायुरत्र। [ अग्निस् + अत्र, वायुस् + अत्र इनमें स् का रुत्व होता है य् नहीं होता है। क्योंकि उक्त चार में से कोई भी पूर्व में नहीं है। ]

अश् परे—इसके ग्रहण का क्या फल है? वृक्षः। प्लक्षः। [ वृक्षस्, प्लक्षस् में अश् परे नहीं है ] परन्तु ऐसी स्थिति नहीं है क्योंकि 'संहितायाम्' इसकी अनुवृत्ति होती है [ अतः सभी कार्य संहिता में ही किये जाते हैं। तब कोई न कोई बाद में रहना ही चाहिये। चूँकि खर् परे विसर्ग होता है अतः परिशेषात् 'अश्' परेही यह यकार आदेश होगा। तब 'अश्' का ग्रहण व्यर्थ है? ] तब

**वृश्चतीति वृक्षवृट्, तमाचष्टे यः स वृक्षवयति, वृक्षवयतेरप्रत्ययः—वृक्षव् करोति।**

**अथ तत्रैव अश्ग्रहणं कस्मान्न कृतम्? उत्तरार्थम्, 'मोऽनुस्वारः' (८।३।२३) इति हल्मात्रे यथा स्यात्। 'व्योर्लघुप्रयत्नतरः शाकटायनस्य', (८।३।१८) 'लोपः शाकल्यस्य' (८।३।१९) इत्येतच्च वृक्षव् करोतीत्यत्र मा भूदित्यश्ग्रहणम्।**

**'रोः' इत्येव—प्रातरत्र। पुनरत्र।।**

**न्यासः**

यद्युत्तरार्थमश्ग्रहणं स्यात् तर्हि कर्तव्यम्, एवं ह्यनुवृत्त्यर्थं रत्तरितत्वं न कर्तव्यं भवतीत्यभिप्रायेणाह—**अथेत्यादि। उत्तरार्थमिति।** 'हलि सर्वेषाम्' इत्यस्मात् सूत्रादुत्तरसूत्रेऽर्थः प्रयोजनं यस्य तत् तथोक्तम्। 'मोऽनुस्वारः' इत्यादिना तदेवोत्तरार्थत्वं स्पष्टीकरोति। यदि हि 'हलि सर्वेषाम्' इत्यत्राश्ग्रहणं क्रियेत, ततः 'मोऽनुस्वारः' इत्यत्र यथा हल्ग्रहणस्यानुवृत्तिः, तथाश्ग्रहणस्यापि स्यात्। ततश्चाश्येव हलि मोऽनुस्वारः स्यात्, न हल्मात्रे। यदा तु तत्राश्ग्रहणं न क्रियते, तदोत्तरत्र हल्मात्रेऽनुस्वारः सिध्यति। पुनरुत्तरार्थतामश्ग्रहणस्य दर्शयति—**व्योर्लघुप्रयत्नतर इत्यादि**। गतार्थम्।।१७।।

**पदमञ्जरी**

सम्प्रसारणं स्यात्। 'लोपो व्योर्वलि' इति वलोपः। स्थानिवत्त्वं च णेरत्र क्वौ लुप्तत्वान्न विद्यते। विचि तु णिलोपस्य स्थानिवद्भावाद्वलोपो नास्ति। सम्प्रसारणस्य त्वप्रसङ्ग एव। 'हलि सर्वेषाम्' इत्यनेन तु लोपे कर्तव्ये 'पूर्वत्रासिद्धे न स्थानिवत्' इति स्थानिवत्त्वनिषेधाद् वलोपः स्यादिति विशेष्यते। अथ ककारे परतः 'लोपो व्योः' इति वलोपः कस्मान्न भवति, णिलोपस्य स्थानिवद्भावो नास्ति, पदान्तविधौ प्रतिषेधात्, वकारस्य पदान्तत्वात्? नैष दोषः; भावसाधनस्त्वत्र विधिशब्दः, ततश्च पदान्ते विधीयमाने स्थानिवत्त्वनिषेधः। न च लोपः पदान्तः; तस्याभावरूपत्वात्।

**अथेति।** यदि 'हलि सर्वेषाम्' इत्यत्राश्ग्रहणस्य प्रयोजनम्, तत्रैवं वक्तव्यम् 'हशि' इति, तत्किं हल्ग्रहणं कृत्वाऽश्ग्रहणेन तद्विशेष्यत इति प्रश्नार्थः। एवकारो भिन्नक्रमः, तत्र हश्ग्रहणमेव कस्मान्न कृतमिति। **उत्तरार्थमिति।** यदि तत्र हश्ग्रहणं क्रियेत, 'मोऽनुस्वारः' इत्यत्र पुनर्हल्ग्रहणं कर्तव्यम्। **हल्मात्रे यथा स्यादिति।** सर्वथोभाभ्यां ग्रहणाभ्यां न मुच्यामहे इति भावः। तथाप्यत्राश्ग्रहणानुरोधे प्रयोजनं वक्तव्यम्? तदाह—**व्योर्लघुप्रयत्नतर इति**।।१७।।

**भावबोधिनी**

तो अश् ग्रहण उत्तरसूत्र में अनुवृत्ति के लिये है—'हलि सर्वेषाम्' इससे होनेवाला य् लोप अश् परे तथा हल् परे दोनों में जिस प्रकार से हो सके, यहाँ न हो सके—वृक्षं वृश्चति—इस अर्थ में वृक्षवृट्। तम् आचष्टे यः सः—वृक्षवयति। [ णिच्, टिलोप करके लट् प्रकार प्रथमपुरुष एकवचन का रूप है। इस ] वृक्षवयति से अप्रत्यय = पूरा लुप्त होनेवाला विच् प्रत्यय, [ णिलोप करने पर पुनः ] वृक्षव् + करोति यह रूप होता है। [ यहाँ व् का लोप नहीं होता है क्योंकि 'करोति' का ककार अश् प्रत्याहार में नहीं आता है। यदि यहाँ के अश् की अनुवृत्ति आगे नहीं होती तो उक्त लक्ष्य में भी व् का लोप होने लगता। ]

यदि उस 'हलि सर्वेषाम्' सूत्र में ही अश्ग्रहण का प्रयोजन है तो वहीं पर इसका उल्लेख क्यों नहीं किया गया? उत्तरवर्ती सूत्र में प्रयोजन होने से यहाँ ग्रहण किया गया है। [ इस सूत्र से उत्तरवर्ती सूत्र में है अर्थ = प्रयोजन जिसका ऐसा। ] इससे 'मोऽनुस्वारः' यह केवल हल् परे रहते ही म् का अनुस्वार कर सके। 'व्योर्लघुप्रयत्नतरः शाकटायनस्य' 'लोपः शाकल्यस्य' इन दोनों ही सूत्रों की पवृत्ति 'वृक्षव् करोति' इस में न हो सके—इसके लिये अश् का ग्रहण है। [ वृक्षव् करोति आदि के व् का लोप रोकने के लिये इसी सूत्र में अश् ग्रहण आवश्यक हैं। ]

रु के रेफ का ही य् होता है अतः—प्रातरत्र, पुनरत्र। [ इनमें र् का य् नहीं होता है। क्योंकि रु का 'र्' नहीं है। ]

## ३८१४. व्योर्लघुप्रयत्नतरः शाकटायनस्य।।१८।। (१६८)

**वकारयकारयोर्भोभगोअघोअवर्णपूर्वयोः पदान्तयोर्लघुप्रयत्नतर आदेशो भवति अशि परतः शाकटायनस्याचार्यस्य मतेन। भोयत्र, भो अत्र। भगोयत्र, भगो अत्र। अघोयत्र, अघो अत्र। क आस्ते, कयास्ते। अस्मायुद्धर, अस्मा उद्धर। असावादित्यः, असा आदित्यः। द्वावत्र, द्वा अत्र। द्वावानय, द्वा आनय।**

**लघुप्रयत्नतरत्वम् = उच्चारणे स्थान-करणशैथिल्यम्। स्थानम् = ताल्वादि। करणम् = जिह्वामूलादि। तयोरुच्चारणे शैथिल्यम् = मन्दप्रयत्नता।।**

**न्यासः**

**व्योर्लघुप्रयत्नतरः शाकटायनस्य।। लघुप्रयत्नतर** इति। प्रयत्नः = 'यजयाच' इत्यादिना नङ्। लघुः प्रयत्नो यस्य स लघुप्रयत्नः, अतिशयेन लघुप्रयत्नो लघुप्रयत्नतरः। किं पुनरिदं लघुप्रयत्नतरत्वम्, यद्योगाल्लघुप्रयत्नतरो भवतीत्याह—**लघुप्रयत्नतरत्वमित्यादि**। स्थानम् = ताल्वादि, करणम् = जिह्वामूलादि, तयोरुच्चारणे शैथिल्यं = लघुप्रयत्नतरत्वम्। उदाहरणेष्वान्तरतम्याद्वकारस्य वकार एव भवति, यकारस्य यकार एव।

**पदमञ्जरी**

**व्योर्लघुप्रयत्नतरः शाकटायनस्य।।** अतिशयेन लघुप्रयत्नः = लघुप्रयत्नतरः। वर्णोच्चारण-हेतुरात्मधर्मः = प्रयत्नः। उदाहरणेष्वान्तर्यतो वकारस्य वकारः, यकारस्य यकारः। किं पुनरिदं लघुप्रयत्नतरत्वम्? इत्याह—**लघुप्रयत्नतरत्वमिति। स्थानम्** = ताल्वादि, जिह्वाया अग्रोपाग्रमध्यमूलानि = **करणानि**, प्रयत्नस्य लघुत्वे तानि **शिथिलानि** = लघूनि भवन्ति।।१८।।

**भावबोधिनी**

**विमर्श**—यह सूत्र भी 'संहितायाम्' (८।२।१०८) इस अधिकार के अन्तर्गत पठित है। अतः रेफ का य् भी संहिता में ही होगा। चूँकि 'खरवसानयोर्विसर्जनीयः' सूत्र खर् परे तथा अवसान में ही विसर्ग करता है अतः परिशेषात् 'अश्' परे ही रेफ का यत्व होगा। तब 'अशि' इसके उल्लेख की क्या आवश्यकता? यह 'अश्' ग्रहण उत्तरवर्ती सूत्र में प्रयोजन वाला है। 'हलि सर्वेषाम्' इससे होनेवाला लोप अश् और हल् परे ही हो—वृक्षव् + करोति में न हो। वास्तव में 'हलि सर्वेषाम्' यह सूत्र व् का लोप नहीं करता है केवल य् का ही लोप करता है। जो उदाहरण दिया गया है उसका भाष्यादि में अनभिधान है। किन्तु काशिकाकार ने उन्हें भी मानकर चर्चा की है। यदि 'हलि सर्वेषाम्' में अश् ग्रहण की उपयोगिता है तब वहीं लिखना उचित था यहाँ नहीं? समाधान यह है यदि 'हलि सर्वेषाम्' इसमें 'अशि' का भी ग्रहण होगा तो उत्तरवर्ती 'मोऽनुस्वारः' सूत्र में 'हलि' के साथ साथ 'अशि' की भी अनुवृत्ति होने लगेगी। फलतः अश् रूप हल् परे ही म् का अनुस्वार होगा, हल् मात्र परे नहीं होगा। अतः वहाँ 'अशि' का ग्रहण न करके यहीं प्रकृत सूत्र में किया गया है। अतः इसके उत्तरवर्ती तीन सूत्रों में ही 'अशि' का सम्बन्ध होता है।।१७।।

भो, भगो, अघो तथा अकार जिनके पूर्व में है, जो पद के अन्त में हैं ऐसे वकार और यकार का लघुप्रयत्नतर आदेश अश् प्रत्याहार के वर्ण परे रहते शाकटायन आचार्य के मत में होता है। उदा॰ भोयत्र, भो अत्र। भगोयत्र, भगो अत्र। अघोयत्र, अघो अत्र। [ भोस्, भगोस्, अघोस् के बाद 'अत्र' परे रहते स् का रुत्व, रेफ का य् करने के बाद शाकटायनाचार्य के मतानुसार यह य् व् लघुप्रयत्नतर होता है। तब लोप नहीं होता है। पक्ष में लोप भी होता है। ] कयास्ते, क आस्ते। अस्मायुद्धर अस्मा उद्धर। [ कस् + आस्ते आदि में पूर्ववत् रुत्व, यत्व लघुप्रयत्नतर आदेश, लोप। अस्मै + उद्धर, ऐ का आय् करने पर प्रस्तुत सूत्र से य् का लघुप्रयत्नतर आदेश। ] असावादित्यः, असा आदित्यः। द्वावत्र, द्वा अत्र। द्वावानय, द्वा आनय। [ असौ + आदित्यः द्वौ + आनय, औ का आव्, व् का लघुप्रयत्नतर, विकल्प से व् लोप। ]

लघुप्रयत्नतर का अर्थ है—उच्चारण में स्थान तथा करण की शिथिलता = ढीला कर देना। स्थान = ताल्वादि। करण = जिह्वामूलादि। उच्चारण में इनकी शिथिलता का तात्पर्य है—मन्दप्रयत्न वाला होना, अर्थात् सामान्य से कुछ कम प्रयत्न करना लघुप्रयत्नतरत्व है, बहुत हल्के रूप में य् व् का उच्चारण किया जाना चाहिये।।१८।।

## ३८१५. लोपः शाकल्यस्य।।१९।। (६७)

**वकारयकारयोः पदान्तयोरवर्णपूर्वयोर्लोपो भवति शाकल्यस्याचार्यस्य मतेनाशि परतः। क आस्ते, कयास्ते। काक आस्ते, काकयास्ते। अस्मा उद्धर, अस्मायुद्धर। द्वावत्र, द्वा अत्र। असावादित्यः, असा आदित्यः।**

**शाकल्यग्रहणं विभाषार्थम्। तेन यदापि लघुप्रयत्नतरो न भवत्यादेशः, तदापि व्योः पक्षे श्रवणं भवति।।**

### न्यासः

**शाकटायनग्रहणं पूजार्थम्।** अनेन हि व्योर्लघुप्रयत्नतरत्वं विधीयते, उत्तरसूत्रेणापि लोपः, तत्रोभयोर्विधानसामर्थ्यादेव पक्षे विधिर्विज्ञास्यते।।१८।।

**लोपः शाकल्यस्य।।** ओतः परयोर्व्योर्लोपो नित्यं वक्ष्यति। तस्मादवर्णपूर्वयोरयं विधिर्विज्ञायत इत्याह— **अवर्णपूर्वयोरित्यादि।।**

**शाकल्यग्रहणं विभाषार्थम्।** ननु च शाकटायनस्य मतेन लघुप्रयत्नतरो विहितः। तत्रान्तरेणापि शाकल्यग्रहणं पाक्षिक एव विधिर्विज्ञास्यते; अन्यथा लघुप्रयत्न-विधानमनर्थकं स्यात्, तत् किं शाकल्यग्रहणेन? इत्यत आह—**तेनेत्यादि।** असति हि शाकल्यग्रहणे विभाषार्थे लघुप्रयत्नतरेण मुक्ते नित्यो लोपः स्यात्, ततश्चालघुप्रयत्नतरयोर्व्योः पक्षे श्रवणं न स्यात्। शाकल्यग्रहणे तु सति लोपो विकल्प्यते। तेन तयोरपि पक्षे श्रवणं सिद्धं भवति। एवञ्च त्रीणि रूपाणि भवन्ति—एकं लघुप्रयत्नतरपक्षे, द्वितीयं लोपपक्षे, तृतीयं तूभयोरभावपक्षे।।१९।।

### पदमञ्जरी

**लोपः शाकल्यस्य।। अवर्णपूर्वयोरिति।** ओकारपूर्वस्य तूत्तरसूत्रेण नित्यं लोपो विधास्यते।

**शाकल्यग्रहणं विकल्पार्थमिति।** ननु लोपोऽप्युच्यते, लघुप्रयत्नतरोऽपि, तावुभौ वचनाद्भविष्यतः; तत्किं विकल्पार्थेन शाकल्यग्रहणेन? अत आह—**तेनेति।।**१९।।

### भावबोधिनी

जिनके पूर्व में अवर्ण है ऐसे पदान्त यकार और वकार का लोप होता है अश् परे रहते शाकल्य आचार्य के मत से। [ अतः विकल्प से होता है। ] उदा० क आस्ते, कयास्ते। काक आस्ते, काकयास्ते। अस्मा उद्धर, अस्मायुद्धर। द्वा अत्र, द्वावत्र। असौ आदित्यः, असावादित्यः। [ कस् + आस्ते, स् का रुत्व, यत्व और विकल्प से य् का लोप। काकस् + आस्ते में भी यही होता है। अस्मै + उद्धर, ऐ का आय् आदेश य् का विकल्प से लोप। द्वौ + अत्र, असौ + आदित्यः में औ का आव्, व् का वैकल्पिक लोप। ]

शाकल्य का ग्रहण विकल्प के लिये है। इसलिये जिस पक्ष में लघुप्रयत्नतर आदेश नहीं भी होता है उसमें भी व् और य् का पक्ष में श्रवण होता है। [ भाव यह है कि प्रस्तुत सूत्र में 'शाकल्यस्य' इसका ग्रहण न रहने पर जब लघुप्रयत्नतर आदेश नहीं होता उस पक्ष में लोप नित्य होने लगता। इस कारण अलघुतर प्रयत्न वाले व् और य् का पक्ष में श्रवण नहीं होता। किन्तु शाकल्य का ग्रहण रहने पर लोप विकल्प से ही होता है। इस कारण लोपाभाव में य् व् का श्रवण भी होता है। इस प्रकार तीन रूप होते हैं—(१) लघुप्रयत्नतर आदेश वाला, (२) लोपवाला, (३) दोनों के अभाव वाला अर्थात् अलघुप्रयत्नतर लोपाभाव वाला। चूँकि लघुप्रयत्नतर और अलघुप्रयत्नतर का भेद उच्चारण में ही सम्भव है लेख में नहीं, अतः ग्रन्थों में दो ही रूप लिखे जाते हैं। ]।।१९।।

## ३८१६. ओतो गार्ग्यस्य ।।२०।। (१६९)

**ओकारादुत्तरस्य यकारस्य लोपो भवति गार्ग्यस्याचार्यस्य मतेन अशि परतः। भो अत्र। भगो अत्र। भो इदम्। भगो इदम्।**

**नित्यार्थोऽयमारम्भः।**

**गार्ग्यग्रहणं पूजार्थम्। योऽयमलघुप्रयत्नस्य विकल्पेन लोपः क्रियते सोऽनेन निवर्त्यते। लघुप्रयत्नतरस्तु भवत्येव यकारः। भो अत्र, भोयत्र। भगो अत्र, भगोयत्र। अघो अत्र, अघोयत्र।**

**न्यासः**

**ओतो गार्ग्यस्य**।। ओकारादुत्तरो वकारो नास्ति, पदान्त इति यकारस्यैवायं विधिर्विज्ञास्यत इत्याह—**ओकारादुत्तस्य यकारस्येति**। ननु च पूर्वसूत्रेणैवोकारादुत्तरस्य यकारलोपः सिद्धः, तत् किमर्थमिदमारभ्यते? इत्याह—**नित्यार्थोऽयमारम्भ इति**।

गार्ग्यग्रहणं तर्हि किमर्थम्? इत्याह—**गार्ग्यग्रहणमित्यादि**। व्योरिह प्रकरणे लघुप्रयत्नतरपक्षे विहितो लोपोऽपि, तत् कस्यायं नित्यो लोपो बाधकः इत्याह—**योऽयमित्यादि**। अथ वा—यदि नित्यार्थोऽयमारम्भः, पक्षे लघुप्रयत्नतरो न स्यादित्यत आह—**योऽयमित्यादि**। लोपविकल्पस्यानन्तरत्वात् तस्यैव निवृत्तिर्युक्ता कर्तुमिति भावः।

**केचित्वित्यादि**। कथं पुनरिष्यमाणमपि लघुप्रयत्नतरस्य बाधनं भवति, यावतानन्तरत्वाल्लोपविकल्पस्यानेन बाधा युक्ता? व्योः कार्यसमुदायस्यापेक्षितत्वाददोषः। यदि लोपविकल्पमात्रमपेक्षते, ततः स एव बाध्यते, न लघुप्रयत्नतरः; लोपेन व्यवहितत्वात्। यदा तु व्योर्यदस्मिन् प्रकरणे कार्यं विहितं तत्समुदायोऽपेक्ष्यते, तदा तस्यानन्तर्यात् स एव निवर्त्यते।

**पदमञ्जरी**

**ओतो गार्ग्यस्य**।। **ओकारादुत्तरस्य यकारस्येति**। वकारस्त्वस्मिन्विषये न सम्भवति। **नित्यार्थोऽयमारम्भ इति**। विकल्पस्य पूर्वेणैव सिद्धत्वात्।

किमर्थं तहि गार्ग्यग्रहणम्? इत्याह—**गार्ग्यग्रहणं पूजार्थमिति**। व्योरिह प्रकरणे लघुप्रयत्नतरोऽपि विहितः, लोपोऽपि, तत्कस्यायं नित्यो लोपो बाधकः, आनन्तर्याल्लोपविकल्पस्य? इत्याह—**योऽयमिति**।

**केचित्त्विति**। यदस्मिन्प्रकरणे व्योः कार्यं तत्समुदायोऽपेक्ष्यते, न त्वनन्तरो लोपविकल्प इति तेषामभिप्रायः।।२०।।

**भावबोधिनी**

गार्ग्य आचार्य के मत में ओकार से उत्तरवर्ती यकार का लोप अश् परे रहते होता है। उदा० भो अत्र, भगो अत्र। भो इदम् भगो इदम्। [ ओस्, भगोस् के स् का रुत्व और र् का यत्व करने पर लोप होता है। ]

[ यह य् लोप तो पूर्ववर्त्ती सूत्र 'लोपः शाकल्यस्य' से ही सम्भव है? ] नित्य लोप करने के लिये यह सूत्र बनाया गया है। [ शाकल्यग्रहण से वह लोप विकल्प से होता है। इससूत्र में गार्ग्यग्रहण से विकल्प की संभावना नहीं करनी चाहिये। तब गार्ग्यग्रहण किसलिये है? ] गार्ग्य का ग्रहण उनकी पूजा अर्थात् उनके प्रति सम्मान प्रकट करने के लिये है। जब लघुप्रयत्नतर आदेश नहीं होता है तब उस य् का लोप विकल्प से किया जाता है, यह सूत्र उस विकल्प को रोकता है। [ और नित्य लोप करता है। ] परन्तु लघुप्रयत्नतर यकार तो रहता ही है। [ उसका लोप नहीं होता अन्यथा वह विधान ही व्यर्थ हो जायगा। ] उदा० भो अत्र, भोयत्र। भगो अत्र, भगोयत्र। अघो अत्र, अघोयत्र। [ जब लघुप्रयत्नतर य् आदेश नहीं होता है तब यह नित्य लोप होने से दो रूप बनते हैं। ]

**केचित्तु सर्वमेव यकारमत्र नेच्छन्ति।**

## ३८१७. उञि च पदे।।२१।। (१७०)

**अवर्णपूर्वयोः व्योः पदान्तयोर्लोपो भवति उञि च पदे परतः। 'स उ एकविंशवर्तनिः'। (मै. २।७।२०) स उ एकाग्निः।**

**पद इति किम्? तन्त्र उतम्, तन्त्रयुतम्। वेञः सम्प्रसारणे कृते उञिति भूतपूर्वेण ञकारेण शक्यते प्रतिपत्तुमिति।**

**न्यासः**

तपकरणमसन्देहार्थम्। यतो हि 'ओः' इत्युक्ते सन्देहः स्यात्—किमयमोकारस्य निर्देशः? आहोस्विदुकारस्येति? मैवम्; 'भोभगोअघोअपूर्वस्य' इत्यनुवर्तते, न भोःप्रभृतीनामुकारोऽस्ति, तत् कुतः सन्देहः? एवं तर्हि मुखसुखार्थम्।।२०।।

**उञि च पदे**।। 'लोपः शाकल्यस्य' इति सिद्धे नियमार्थम्—उञि पद एव, नान्यत्रेति। **अवर्णपूर्वयोरिति**। ओकारपूर्वस्य वकारस्यासम्भवाद् यकारस्य पूर्वेणैव सिद्धत्वादवर्णपूर्वयोरेवायं लोपो विज्ञायत इत्यवर्णपूर्वयोरित्युक्तम्। **स उ इति**। तच्छब्दात् सुः, त्यदाद्यत्वम्, 'तदोः सः सावनन्त्ययोः' इति सः, रुत्वम्, तस्य यकारः, तस्यानेन लोपः।

**तन्त्रयुतमिति**। 'तन्त्रे' इत्येतस्य सप्तम्यन्तस्य उतशब्दे निष्ठान्ते परतोऽयादेशः। ननु च 'उञ्' इत्युच्यते, नचायमुञ्, ञकाराभावात्, तत् किमेतन्निवृत्त्यर्थेन पदग्रहणेन? इत्यत आह—**वेञः सम्प्रसारण** इत्यादि। सम्प्रसारणं तु 'वचिस्वपि' इत्यादिना। एवं तावदुञो निपातस्य प्रतिपदोक्तस्यास्तित्वमनपेक्ष्य पदग्रहणप्रयोजनं दर्शितम्।

यदा तु तस्यास्तित्वमपेक्ष्यते, तदा प्रयोजनान्तरं दर्शयितुमाह—**उत्तरार्थमिति**। 'ङमो ह्रस्वादचि ङमुण् नित्यम्' इत्येष विधिरजादौ पदे यथा स्यात्, इह माभूत्—परमदण्डिनेति। यद्युत्तरार्थम्, तत्रैव कस्मान्न कृतम्, कः पुनरेवं सति लाभः? स्वरितत्वं न प्रतिज्ञायत इत्येष लाभः। इहापि क्रियमाणे लक्षणप्रतिपदोक्तपरिभाषा नाश्रयणीया भवतीति समानम्।

**पदमञ्जरी**

**उञि च पदे**।। **भूतपूर्वेण ञकारेणेति**। मूलोदाहरणेऽपि भूतपूर्वेणैव ञकारेणोञिति प्रतिपत्तिः; अनुबन्धस्य प्रयोगेऽसमवायात्। **उत्तरार्थमिति**। 'ङमो ह्रस्वादचि ङमुण्नित्यम्' इत्येष विधिरजादौ पदे यथा स्यात्, इह मा

**भावबोधिनी**

कुछ आचार्य यहाँ सभी प्रकार के यकारों को नहीं चाहते हैं अर्थात् उनका लोप ही करते हैं। [ इस वचन का प्रस्तुत सूत्र भाष्य में उल्लेख नहीं है। कहीं अन्यत्र चर्चा के आधार पर लिखा गया प्रतीत होता है आजकल य् लोप वाले रूप ही प्रयुक्त किये जाते हैं। ओत् का तपरकरण केवल मुखसुखार्थ = उच्चारण की सुविधा के लिये है। ]।।२०।।

अवर्ण जिनके पूर्व में है, जो पद के अन्त में है ऐसे य् व् का लोप उञ् पद के परे रहते होता है। उदा॰ स उ एकविंशतिः (मै॰ ७।२।२०) स उ एकाग्निः [ तत् + सु = सस् + उ—स् का रुत्व, यत्व करने पर इस सूत्र से य् का लोप होता है। ]

उ पद परे—इसका क्या फल है? तन्त्र उतम्, तन्त्रयुतम्। [ वेञ् + क्त में व् का सम्प्रसारण उ, ए का पूर्वरूप करने पर 'उतम्, बनता है। ] वेञ् का सम्प्रसारण करने पर भूतपूर्व ञ् को मानकर उञ् ऐसा समझा जा सकता है। [ अतः उञ् मिल जाता है। किन्तु स्वतन्त्र पद न होकर पदावयव है। अतः नित्य लोप न होकर विकल्प से होता है। ]

**अथ 'उञ्' इत्येवंरूपो निपातः प्रतिपदोक्तोऽस्ति? तदा लाक्षणिकत्वाद् वेञादेशस्य ग्रहणमिह नास्ति, उत्तरार्थं पदग्रहणं क्रियते।।**

## ३८१८. हलि सर्वेषाम्।।२२।। (१७१)

**न्यासः**

चकारोऽवर्णपूर्वस्यानुकर्षणार्थः; अन्यथा ह्योतोऽनन्तरत्वात् ततः परस्य यकारस्य लोपो विज्ञायेत? नैतदस्ति; एवं हि विज्ञायमाने निरर्थकमेवेदं सूत्रं स्यात्, पूर्वेणैव सिद्धत्वात्। नानर्थकम्, नियमार्थत्वात्—उञि पद एव यथा स्याद्—भो उ पश्यतीति। असति ह्यस्मिन्नियमार्थे भो युतम्, भगो युतमित्यत्रापि नित्यो लोपः स्यात्। यदि तु निपातस्येदमुञो ग्रहणम्, तदा नियमार्थस्य व्यावर्त्यत्वं नास्तीति पूर्वापेक्षया चकारः समुच्चयार्थो द्रष्टव्यः।

उञीति ञकारोऽसन्देहार्थः। [१]असति हि तस्मिन् सप्तम्या औ इति निर्देशः स्यात्[१]। ततश्च किमयमुकारस्य निर्देशः उतेकारस्य?—इति सन्देहः स्यात्। ननु च क्रियमाणेऽपि तस्मिन् किमुञिति निपातस्य ग्रहणम्? आहोस्विदुकारादारभ्य 'झभञ्' इति ञकारस्येति सन्देहः स्यादेव? नैवम्; इदं तावद् भवान् प्रष्टव्यः—किमुञिति प्रत्याहारे येऽन्तर्गता हलस्तेष्वेव नित्यो लोपः? उतान्येष्वपीति? किमत्र वक्तव्यम्—'अन्येष्वपि' इति? तथा हि वक्ष्यति—'हलि सर्वेषाम्' इति। एवं तर्हि यद्यत्र प्रत्याहारग्रहणममतं स्याद् 'ऐऔच्' इति चकारेण प्रत्याहारं गृह्णीयात्—उचि च पद इति। हल्यपि 'हलि सर्वेषाम्' इत्यनेन भविष्यतीति। तत्राप्ययमर्थः—सन्देहः परिहृतो भवति। अथ वा यद्यत्रोकारादीनामुञा प्रत्याहारग्रहणमभिमतं स्याद् हलीति लकारेण प्रत्याहारं गृहीत्वैकमेवेमं योगं कुर्याद्—'उञि च पदे सर्वेषाम्' इति। न हि योगविभागस्य किञ्चित् प्रयोजनं पश्यामः। तस्मान्नात्रोकारादीनां प्रत्याहारग्रहणमिष्टम्। ततश्चोञो निपातस्यैव ग्रहणमित्यसन्दिग्धमेतत्।।२१।।

**हलि सर्वेषाम्।। भोभगोअगोअपूर्वस्येति।** भोभगोअघोपूर्वस्य वकारस्यासम्भवात्। अवर्णपूर्वस्तु वकारः सम्भवति। तस्य तु पूर्वमेव 'हलि सर्वेषाम्' इत्यनेन लोपो न भवतीति दर्शितम्। तेनेह यकारस्यैव ग्रहणं, न वकारस्य, तस्य लोपो न भवतीति दर्शितम्— 'भोभगोअघोअपूर्वस्य' इत्यादौ सूत्रे। तत्राश्ग्रहणं किमर्थम्? हलि

**पदमञ्जरी**

भूत्—**दण्डिनेति।** नैतदस्ति प्रयोजनम्; 'पदस्य' इति वर्त्तते। इह तर्हि परमदण्डिना, अत्र हि सुबन्तस्य समास इति पदत्वमस्ति? नास्ति; उक्तं हि 'उत्तरपदत्वे चापदादिविधौ' इति। तदेतत्पदग्रहणं तिष्ठतु तावत्। अयमपि नित्यार्थो योगः।।२१।।

**हलि सर्वेषाम्। यकारस्य पदान्तस्येति।** वकारस्तु भोभगोअघोपूर्वो न सम्भवति। अवर्णपूर्वस्तु सम्भवति—वृक्षव् करोतीति। तस्य तु लोपो न भवति, अशि हलीति विशेषणादित्युक्तम्। तस्माद्यकारस्येत्युक्तम्। ननु वृक्षव्

**भावबोधिनी**

क्या 'उञ्' इस प्रकार का प्रतिपदोक्त निपात है? तब तो लाक्षणिक होने से [ 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इस वचन से) ] लाक्षणिक होने के कारण वेञ् के आदेश भूत (उञ्) का ग्रहण नहीं होता है, [ तब 'पदे' की क्या उपयोगिता? ] 'पदे' का ग्रहण उत्तरवर्ती सूत्र के लिये है। [ अतः 'ङमो ह्रस्वादचि ङमुण् नित्यम्' यह सूत्र अजादि पद परे रहते ही आगम करता है जिससे 'परमदण्डिनौ' आदि में नुट् नहीं होता है। ]।।२१।।

हल् प्रत्याहार का कोई वर्ण परे रहते भो-भगो-अघो-अकारपूर्वक पदान्त यकार का लोप सभी आचार्यों के मत से होता है। उदा० भो हसति। भगो हसति। अघो हसति। भो याति। भगो याति। अघो याति। [ भोस् + हसति, भोस् + याति आदि रूपों में स्

---

१.१. "असति हि तस्मिन् 'इदुद्भ्याम्' 'अच्च घे' रित्युकारस्यात्वम्, 'वृद्धिरेचि' इति वृद्धौ कृतायामौ इति निर्देशः स्यात्"। इति पाठान्तरम्।

**हलि परतो भोभगोअघोअपूर्वस्य यकारस्य पदान्तस्य लोपो भवति सर्वेषामाचार्याणां मतेन। भो हसति। भगो हसति। अघो हसति। भो याति। भगो याति। अघो याति। वृक्षा हसन्ति।**

**सर्वेषांग्रहणं शाकटायनस्यापि लोपो यथा स्यात्, लघुप्रयत्नतरो मा भूदिति।।**

## ३८१९. मोऽनुस्वारः।।२३।। (१२२)

**मकारस्य पदान्तस्यानुस्वार आदेशो भवति हलि परतः। कुण्डं हसति। वनं हसति। कुण्डं याति। वनं याति।**

**हलीत्येव–त्वमत्र, किमत्र। पदान्तस्येत्येव–गम्यते, रम्यते।।**

### न्यासः

सर्वेषामित्ययं लोपोऽशि हलि यथा स्यात्, इह मा भूत् वृक्षं वृश्चतीति वृक्षवृट्, तमाचष्ट इति णिच्, वृक्षवयति, वृक्षवयतेरप्रत्ययः—**वृक्षव् करोतीति**। एवमश्ग्रहणस्य प्रयोजनं दर्शयताऽनेन सूत्रेणाशि हलि वकारस्यावर्णपूर्वस्य लोपो न भवतीत्युक्तं भवति। ननु चावर्णपूर्वस्येत्यस्यानुवृत्तिरयुक्ता; पूर्वसूत्रे चानुकृष्टत्वात्, तत् कथमवर्णपूर्वस्य लोपो भवतीति? नैतदस्ति; 'चानुकृष्टमुत्तरत्र नानुवर्तते' इति प्रायिकमेतत्। कथं ज्ञायते? 'एकाजुत्तरपदे णः' इत्यत्र 'ण' इति प्रकृते पुनर्णग्रहणम् 'वा भावकरणयोः' इत्यत्र 'वा' इति यदनुवृत्तं तन्निवृत्त्यर्थं कृतम्। यदि चेदं प्रायिकं न स्यात्, पुनर्णग्रहणमनर्थकम्; पूर्वसूत्रे चानुकृष्टत्वादेव हि वाग्रहणस्यानुवृत्तिर्न भविष्यतीति किं पुनर्णग्रहणेन? कृतञ्च, ततोऽवसीयते—चानुकृष्टपरिभाषाऽनित्येति।

**शाकटायनस्यापि लोपो यथा स्यादिति**। अपिशब्दाच्छाकल्यस्यापि। असति तु सर्वग्रहणे प्रत्यासन्नस्य गार्ग्यस्य मतेन लोप एव विज्ञायेत।।२२।।

**मोऽनुस्वारः**।। पदस्येति स्थानषष्ठी, तच्च पदं मकारेण विशेष्यते, विशेषणेन च तदन्तविधिर्भवतीति मकारान्तपदस्यानुस्वारो विधीयमानोऽलोऽन्त्यपरिभाषया मकारस्यैव विज्ञायते, इत्याह—**मकारान्तस्य पदस्येति**।।२३।।

### पदमञ्जरी

हसतीत्यादौ सम्भवति? न सम्भवति; अनभिधानात् नह्येवंविधमभिधानमस्ति। तथा च 'लण्' इत्यत्र भाष्यकार आह—'न पदान्ता हलोऽणः सन्ति' इति। एवं च वृक्षव् करोतीत्ययमपि प्रयोगश्चिन्त्यः।।२२।।

**मोऽनुस्वारः**।। अत्र पदस्येति स्थानषष्ठी, मकारेण पदस्य विशेषणान्मकारान्तस्य पदस्यालोन्त्यस्यानुस्वारो विज्ञायते। तदाह—**मकारस्य पदान्तस्येति**।।२३।।

### भावबोधिनी

का रुत्व, यत्व और लोप करने पर रूप बनते हैं। हल् में केवल 'ह' न लिया जाय अतः 'भो याति' आदि भी उदा॰ दिये गये हैं। ] वृक्षा हसन्ति। [ वृक्षास् + हसन्ति। ] [ स् का रुत्व, यत्व, लोप होता है। ]

सर्वेषाम् (= सब के मत में)—इसका ग्रहण इसलिये है कि शाकटायन के मत से भी लोप हो, लघुप्रयत्नतर य् व् आदेश न हो।।२२।।

पदान्त मकार का अनुस्वार आदेश हल् परे रहते होता है। उदा॰ कुण्डं हसति। वनं हसति। कुण्डं याति। वनं याति। [ कुण्डम् + हसति आदि में म् का अनुस्वार आदेश हल् परे रहते होता है। ]

हल् परे रहते ही होता है—त्वमत्र, किमत्र। [ त्वम् अत्र, किम् अत्र—में हल् नहीं अच् परे है। अतः अनुस्वार नहीं होता है। ] पदान्त म् का ही होता है—गम्यते, रम्यते। [ यहाँ म् के बाद हल् परे है किन्तु म् पदान्त नहीं हैं पदमध्य में है। अतः अनुस्वार नहीं होता है। ]।।२३।।

**३८२०. नश्चापदान्तस्य झलि।।२४।। (१२३)**

**नकारस्य मकारस्य चापदान्तस्यानुस्वारादेशो भवति झलि परतः। पयांसि। सर्पींषि। धनूंषि। मकारस्य–आक्रंस्यते। आचिक्रंस्यते। अधिजिगांसते।**

**अपदान्तस्येति किम्? राजन्भुङ्क्ष्व। झलीति किम्? रम्यते। गम्यते।।**

**३८२१. मो राजि समः क्वौ।।२५।। (१२६)**

**समो मकारस्य मकार आदेशो भवति राजतौ क्विप्प्रत्ययान्ते परतः। सम्राट्। साम्राज्यम्।**

**मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थम्।**

**न्यासः**

**नश्चापदान्तस्य झलि**।। 'हलि' इति निवृत्तम्; झल्ग्रहणात्। चकारो—मकारानुकर्षणार्थः। असति हि तस्मिन्नकारस्यापदान्तस्य कार्यिण इह ग्रहणान् मकारो निवृत्त इत्याशङ्का स्यात्। **पयांसीति**। 'जश्शसोः शि', 'नपुंसकस्य झलचः' इति नुम्, 'सान्तमहतः संयोगस्य' इति दीर्घः। **आक्रंस्यत इति**। आङ्पूर्वात् क्रमेर्लृट्, 'आङ् उद्गमने' इत्यात्मनेपदम्। **आचिक्रंसत इति**। 'पूर्ववत् सनः' इत्यात्मनेपदम्। **एवमधिजिगांसत इत्यत्रापि**। इङः सनि 'इङश्च' इति गमिरादेशः, 'अज्झनगमां सनि' इति दीर्घः, द्विर्वचनम्, अभ्यासकार्यम्।

**राजन्निति**। राजतेः शत्रन्तात् सम्बुद्धिः, तस्या हल्ङ्यादिना लोपः।।२४।।

**मो राजि समः क्वौ**।। **सम्राडिति**। सम्पूर्वाद्राजतेः 'सत्सूद्विष' इत्यादिना क्विप्, व्रश्चादिना षत्वम्, षकारस्य जश्त्वम्—डकारः, तस्य चर्त्वम्—टकारः। **साम्राज्यमिति**। ब्राह्मणादित्वात् ष्यञ्।

किमर्थं पुनर्मकार उच्चार्यते? इत्याह—**मकारस्य मकारवचनमित्यादि**। 'मोऽनुस्वारः' इत्यनुस्वारः प्राप्नोति, स मा भूदित्येवमर्थं मकारस्य मकारो विधीयते। यद्येवम्, नेति प्रतिषेधः कर्त्तव्यः, एवं हि लघु सूत्रं

**पदमञ्जरी**

**नश्चापदान्तस्य झलि**।। **आक्रंस्यत इति**। क्रमेर्लृट्, 'आङ् उद्गमने' इत्यात्मनेपदम्।।२४।।

**मो राजि समः क्वौ**। **सम्राडिति**। 'सत्सूद्विष' इत्यादिना क्विप्, व्रश्चादिना षत्वम्। **साम्राज्यमिति**। क्विबन्ताद् ब्राह्मणादित्वात् ष्यञ्। अधिकसद्भावेऽपि क्विबन्तो राजतिस्तावदस्तीत्यत्रापि भवति, क्विबन्तावस्थायामेव वा प्रागेव ष्यञ उत्पत्तेर्मत्वम्।

**भावबोधिनी**

अपदान्त नकार और मकार का भी अनुस्वार झल् परे रहते होता है। उदा॰ पयांसि। यशांसि। सर्पींषि। धनूंषि। [ पयान् सि, यशान् सि, सर्पीन् षि, धनून् षि—यहाँ पद के मध्य में न् है, उसके बाद झल् है अतः न् का अनस्वार हो जाता है। ] मकार के (अनुस्वार आदेश के) उदा॰ आक्रंस्यते। आचिक्रंस्यते। अधिजिगांसते [ आक्रम्स्यते, आचिक्रम् स्यते, अधि जिगाम् सते—इनमें झल् परे रहते म् का अनुस्वार होता है। ]

अपदान्त न् का अनुस्वार—इसका क्या फल है? राजन् भुङ्क्ष्व। [ यह पदान्त न् है, अनुस्वार नहीं होता है। ] झल् परे रहते—इसका क्या फल है? रम्यते, गम्यते। [ यहाँ य् परे है वह झल् नहीं है, अनुस्वार नहीं होता है। ]।।२४।।

सम् के मकार का मकार ही आदेश क्विप् प्रत्यायान्त राजधातु के परे रहते होता है उदा॰ सम्राट्। साम्राज्यम्। [ सम् पूर्वक राज् से क्विप्, सर्वाहारीलोप के बाद, ज् का ष् और जश्त्व चर्त्व—सम् + राट्। म् का अनुस्वार प्राप्त होता है किन्तु म् ही आदेश होता है। सम्राज् + ष्यञ् = साम्राज्यम् में भी म् हीं रहता है। ]

मकार का मकार आदेश करना अनुस्वार को रोकने के लिये है।

**राजीति किम्? संयत्। सम इति किम्? किंराट्। क्वाविति किम्? संराजिता। संराजितुम्। संराजितव्यम्।।**

**३८२२. हे मपरे वा।।२६।। (१२७)**

**हकारे मकारपरे परतो मकारस्य वा मकार आदेशो भवति। किम् ह्मलयति,किं ह्मलयति। कथम् ह्मलयति, कथं ह्मलयति।**

**❀ यवलपरे यवला वा। ❀ यवलपरे हकारे मकारस्य यवला यथासंख्यं वा भवन्तीति वक्तव्यम्। कियँ ह्यः, किं ह्यः। किवँ ह्वलयति, किं ह्वलयति। किलँ ह्लादयति, किं ह्लादयति।।**

**न्यासः**

भवति; विभक्त्यनुच्चारणात्? एवं तर्हि निर्देशाधिक्येन तु मकारविधानेनैतत् सूचयति—अत्र प्रकरणेऽधिको हि विधिर्भवतीति यवलपरे यवला वा भवन्तीत्युपपन्नं भवति। **संयदिति**। यमेः संपूर्वात् क्विप्, 'अनुदात्तोपदेश' इत्यादिना मकारलोपः, अकारस्य 'ह्रस्वस्य पिति कृति' इति तुक्।।२५।।

**हे मपरे वा**।। मः परो यस्मादिति बहुव्रीहिः। **किम् ह्मलयतीति**। 'ह्वल ह्मल चलने', 'ज्वलहलह्मलनमामनुपसर्गाद्वा' इति वा मित्संज्ञा, 'मितां ह्रस्वः' इति ह्रस्वः।

**यवलपर इत्यादि**। यवलाः परे यतः स यवलपरस्तस्मिन् हे मकारस्य वा यवला भवन्तीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु पूर्वं विहितमेव। यवलाश्चैते भवन्त आन्तरतम्यात् सानुनासिका एव भवन्ति। वा-वचनात् पक्षेऽनुस्वारो भवत्येव। अथ 'हे मः' इत्येवं कस्मान्नोक्तम्, एवं हि परग्रहणं न कर्तव्यं भवति, सप्तम्येव

**पदमञ्जरी**

**संयदिति**। 'गमः क्वौ' इत्यत्र गमादीनामिति वचनाल्लोपः, ह्रस्वस्य तुक्। **किंराडिति**। 'किं क्षेपे' इति समासः।।२५।।

**हे मपरे वा**।। **ह्मलयतीति**। 'ह्मल चलने', णिच्, 'ज्वलह्वलह्मलनमामनुपसर्गाद्वा।' इति पक्षे मित्संज्ञा, 'मितां ह्रस्वः' इति ह्रस्वत्वम्।

**भावबोधिनी**

राज् धातु परे रहते—इसका क्या फल है? संयत्। [ यम् धातु परे है। मकार नहीं होता है, अनुस्वार हो जाता है। ] सम् के मकार का—इसका क्या फल है? किंराट्। [ यहाँ किम् है। अतः म् न होकर अनुस्वार हो जाता है। ] क्विप् प्रत्ययान्त परे रहते—इसका क्या फल है? संराजिता। संराजितुम्। संराजितव्यम्। [ सम् राज् + तृच्, तुमुन्, तव्यत् परे है। अतः क्विप् न होने से मकार न रहकर अनुस्वार हो जाता है। ]।।२५।।

मकारपरक हकार परे रहते मकार का मकार आदेश विकल्प से होता है। उदा॰ किम् ह्मलयति, किं ह्मलयति [ किम् + ह्मलयति में मकारपरक हकार—ह्म परे है अतः, म् का विकल्प से म्, पक्ष में अनुस्वार होता है। ] कथम् ह्मलयति, कथं ह्मलयति।

❀ यपरक, वपरक, लपरक हकार परे रहने पर मकार के विकल्प से क्रमशः य् व् ल् आदेश होते हैं। ❀ य-व-ल-परक हकार के परे रहते मकार के क्रमशः य् व् ल् आदेश होते हैं—ऐसा कहना चाहिये। उदा॰ कियँ ह्यः किं ह्यः। किवँ ह्वलयति, किं ह्वलयति।

**३८२३. नपरे नः।।२७।। (१२९)**

**नकारपरे हे परतः मकारस्य वा नकारादेशो भवति। किन् ह्नुते, किं ह्नुते। कथन् ह्नुते, कथं ह्नुते।।**

**३८२४. ङ्णोः कुक्टुक् शरि।।२८।। (१३०)**

**ङकारणकारयोः पदान्तयोः कुक्, टुक्–इत्येतावागमौ वा भवतः शरि परतः। प्राङ्क् शेते, प्राङ् शेते। प्राङ्क् षष्ठः, प्राङ् षष्ठः। प्राङ्क् साये, प्राङ् साये। णकारस्य–वण्ट् शेते, वण् शेते।**

**न्यासः**

हि तदर्थं प्रतिपादयिष्यते—मकारे परतो योऽकार इति? नैतदस्ति; हे म इत्युच्यमाने विपर्ययोऽपि विज्ञायेत—हकारपरे मकार इति, ततश्च किमह्न इत्यादावेव स्यात्। अकारेण व्यवधानान्न भविष्यतीति चेत्? न; 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' इत्येकेन वर्णेन व्यवधानमाश्रीयते, न पुनरनेकेनेति। आद्यपक्षे किम् ह्मलयतीत्यादिषु कृतार्थं वचनम्, अतो न शक्यं व्यवधानमाश्रयितुमिति चेत्? न; येन हकारपरे मकार इत्येष सूत्रार्थो गृहीतः, तं प्रति पक्षान्तरस्यासम्भवात्। तस्मात् परग्रहणमेव कर्त्तव्यं विपर्ययप्रतीतिर्मा भूदित्येवमर्थम्।।२६।।

**नपरेः नः**।। नः परो यस्मादिति बहुव्रीहिः। परग्रहणं नकारपरे यथा स्यादित्येवमर्थम्; अन्यथा हि 'ने नः' इत्युच्यमाने नकार एव केवले परतो विज्ञायेत, न इति निमित्तान्तरोपादानाद् हे इत्यस्य निवृत्तिः? नैतदस्ति; एवं हि वचनमिदमनर्थकं स्यात्। कृते ह्यनुस्वारे नकारे परतः 'अनुस्वारस्य ययि परसवर्णः' इत्यनेन नकारः सिध्यति? सत्यम्; विकल्पार्थमेतत्। अत्र हि यदानेन नकारो न क्रियते, तदा वचनसामर्थ्यात् परसवर्णो न भवतीति विकल्पः सिध्यति। तस्मात् परग्रहणं कर्त्तव्यम्—नपरे हकारे यथा स्यात्, केवले मा भूदिति। **किन् ह्नुत इति**। ह्नुङ् अपनयने', अदादित्वाच्छपो लुक्।

इह केचिच्चोदयन्ति—न इति प्रतिषेधः कस्मान्न विज्ञायत इति? एतच्चायुक्तम्; सविसर्गस्य पाठात् प्रतिषेधवाचिनश्च नकारस्य विसर्गानुपपत्तेः।. अथाप्यविसर्गः पठ्यते? एवमप्ययुक्ता प्रतिषेधाशङ्का; प्राप्त्यभावात्।।२७।।

**ङ्णोः कुक् टुक् शरि**।। ङश्च णश्च तौ ङ्णौ, कश्च टश्च कटौ, तयोरुकारककाराभ्यां प्रत्येकमभिसम्बद्धः—कुक् टुगिति। उकार उच्चारणार्थः, ककारो देशविध्यर्थः। **प्राङ्क्छेत इति**। प्राङिति 'क्विन्प्रत्ययस्य कुः' इत्यत्र

**पदमञ्जरी**

**यवलपर इति**। यवलाः परे यस्माद्धकारात्स तथोक्तः, यवलाश्चैते भवन्त आन्तरतम्यादनुनासिका भवन्ति, वावचनात्पक्षेऽनुस्वारोऽपि भवति।

परग्रहणं शक्यमकर्तुम्; सप्तम्यैव तदर्थलाभात्—मकारे परतो यो हकास्तत्रेति। विपर्यस्तु न भवति; असम्भवात्। न हि मकारात्परो हकारः क्वचित् सम्भवति।।२६।। २७।।

**ङ्णोः कुक्टुक् शरि**।। उदाहरणेषु 'खयो द्वितीयाः शरि पौष्करसादेः' इति पक्षे ककारस्य खकारः, टकारस्य ठकारः।

**भावबोधिनी**

किलँ ह्लादयति, किं ह्लादयति। [ इनमें हकार के बाद क्रमशः य् व् ल् परे हैं अतः हकार से पूर्ववर्ती म् के स्थान पर विकल्प से य् व् ल् होते हैं। चूँकि म् अनुनासिक है अतः यँ वँ लँ भी अनुनासिक ही होते हैं। ]।।२६।।

नकारपरक हकार पर में रहते मकार का नकार आदेश विकल्प से होता है। उदा॰ किन् ह्नुते, किं ह्नुते। कथन् ह्नुते, कथं ह्नुते। [ किम् + ह्नुते, कथम् + ह्नुते में मकार का नकार आदेश विकल्प से होता है। पक्ष में म् का अनुस्वार होता है। ]।।२७।।

पदान्त ङकार और णकार को शर् परे रहते विकल्प से क्रमशः कुक् और टुक् ये आगम होते हैं। उदा॰ प्राङ्क् शेते, प्राङ् शेते। प्राङ्क् षष्ठः, प्राङ् षष्ठः। प्राङ्क् साये, प्राङ् साये। [ प्राङ् के बाद शर् = श ष स रहने पर कुक् = क् आगम होता है। ]

**पूर्वान्तकरणम्—प्राङ्क् छेते इत्यत्र छत्वार्थम्। 'शश्छोऽटि' (८।४।६३) इति हि पदान्ताज्झय इति तद्विज्ञायते। इह मा भूत्—'पुरा क्रूरस्य विसृपो विरप्शिन्'। (वा. सं. १।२८)**

**प्राङ्क् साय इत्यत्रापि 'सात्पदाद्योः' (८।३।१११) इति षत्वप्रतिषेधार्थं च।**

**वण्ट् साय इत्यत्र च 'न पदान्ताट्टोरनाम्' (८।४।४२) इति ष्टुत्वप्रतिषेधार्थम्।**

**न्यासः**

व्युत्पादितम्। **वण्ट् छेत इति**। वणतेर्विच्।

किमर्थं पुनः पूर्वान्तावेतौ क्रियेते? इत्याह—**पूर्वान्तकरणमित्यादि**। किं पुनःकारणं पूर्वान्तत्वे च्छत्वं भवति, न पुनः परादित्वे? इत्यत आह—**शश्छोऽटीत्यादि**। किमर्थं पुनरेतद्धि विज्ञायेत? इत्यत आह—**इहेत्यादि**। यदि पदान्ताज्झय इत्येवं तत्र न क्रियेत, तदा विरप्शिन्नित्यत्र च्छत्वं विज्ञायेत, एवञ्च विज्ञायमाने न भवति, न ह्यत्र पदान्ते झय्। **विरप्शिनिति**। विपूर्वाद्रपेः 'लृटः सद्वा' इति शत्रादेशः, 'व्यत्ययो बहुलम्' इति स्यप्रत्ययस्य सकारस्य शकारः, यकारस्य चेकारः। **प्राङ्क् साय इति**। अत्र परादित्वे सति 'इण्कोः', 'आदेशप्रत्यययोः' इति प्राप्तस्य षत्वस्य 'सात्पदाद्योः' इति प्रतिषेधो न स्यात्; अपदादित्वात्। **वण्ट् साय इति**। अत्रापि 'ष्टुना ष्टुः' इति प्राप्तस्य ष्टुत्वस्य 'न पदान्ताट्टोरनाम्' इति प्रतिषेधो न स्यात्; अपदान्तत्वात्। तस्मात् प्राङ्क्च्छेत इत्यादौ छत्वादिसिद्ध्यर्थं पूर्वान्तकरणम्॥२८॥

**पदमञ्जरी**

**पूर्वान्तकरणमित्यादि**। किं पुनः कारणं पदादौ छत्वं न सिध्यतीत्यत् आह—**शश्छोऽटीति**। **विरप्शिन्निति**। महन्नामैतत्, विपूर्वाद्रपेरौणादिकः कर्मणि शिनिप्रत्ययः। यदि वा विरपणं विरप्, सोऽस्यास्तीति विरप्शः = शब्दितः, सङ्कीर्तत इत्यर्थः।

**षत्वप्रतिषेधार्थमिति**। परादौ तु सकारः पदादिर्न स्यात्।

**ष्टुत्वप्रतिषेधार्थमिति**। परादौ तु टकारः पदान्तो न स्यात्॥२८॥

**भावबोधिनी**

णकारान्त के उदा॰ वण्ट् शेते, वण् शेते। [ वण् + शेते, टुक् = ट् आगम होता है। ]

[ दोनों आगम कित् करके ] पूर्व के अन्त को आगम करने का क्या फल है? प्राङ्क् छेते—इसमें छत्व करना। 'शश्छोटि' इसमें पदान्त झय् से परवर्ती श् का छत्व ज्ञापित होता है। [ जब कुक् और टुक् कित् होने से पूर्व के अन्त अवयव बनते हैं तभी पदान्त झय् मान कर छत्व सम्भव होता है। यह इसलिये है कि— ] पुरा क्रूरस्य विसृपो विरप्शिन्—इसमें छत्व न होने लगे। [ विपूर्वक 'रप्' धातु से 'लृटः सद्वा' सूत्र से लृट् का शतृ आदेश, 'व्यत्ययो बहुलम्' से 'स्य' इसके दन्त्य स का तालव्य और यकार का इकार होता है—विरप्शिन्। यदि पदान्त झय् से परे नहीं मानेंगे तो यहाँ भी छत्व अतिप्रसक्त होगा। ]

प्राङ्क् साये—इसमें भी 'सात्पदाद्योः' इस सूत्र से षत्व का प्रतिषेध करने के लिये भी पूर्वान्त किया जाता है। [ यदि परवर्ती का अवयव होगा तो 'आदेशप्रत्यययोः' सूत्र से कवर्ग से परे षत्व होने लगेगा। क्योंकि कुक् पर का आदि अवयव होने पर 'स' पदादि न मिलने से षत्व होने लगेगा। ]

और 'वण्ट् साये' इसमें 'न पदान्ताट्टोरनाम्' सूत्र से ष्टुत्व के प्रतिषेध के लिये भी [ पूर्वान्त किया गया है। यदि परवर्ती का अवयव होता तो पदान्त टवर्ग न मिलने से ष्टुत्व का प्रतिषेध नहीं हो सकता है। ]॥२८॥

## ३८२५. डः सि धुट्।।२९।। (१३१)

**डकारान्तात् पदादुत्तरस्य सकारादेः पदस्य वा धुडागमो भवति। श्वलिट्त्साये, श्वलिट् साये, मधुलिट्त्साये, मधुलिट् साये।**

**परादिकरणम् 'न पदान्ताट्टोरनाम्' (८।४।४२) इति ष्टुत्वप्रतिषेधार्थम्।।**

### न्यासः

**डः सि धुट्**।। 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति 'ड' इति पञ्चम्या 'सि' इत्यस्याः सप्तम्याः षष्ठ्यां परिकल्पितायां सकारस्यैव धुड् विधीयते, इत्याह—**डकारान्तादित्यादि**। यद्येवम्, सप्तमीनिर्देशः किमर्थः? लाघवार्थः। 'डः सो धुट्' इत्युत्यमाने मात्राधिक्याद् गौरवं स्यात्। अथ 'यस्मिन् विधिस्तदादावल्ग्रहणे' इत्येवमर्थः सप्तमीनिर्देशः कस्मान्न विज्ञायते? केवलस्य सकारस्याभावादेव तत्सिद्धेः, 'पद' इत्यधिकाराच्च। श्वलिट्त्साय इत्यत्र धुटि कृते धकारस्य चर्त्वम्—तकारः।

प्रक्रियालाघवार्थं तु तुटि वक्तव्ये धुड्वचनमुत्तरार्थम्—'नश्च' इत्यत्र धुड् यथा स्यात्, तुण् मा भूदिति। यदि हि स्यात्, तर्हि किम्? भवान्त्साय इत्यत्र 'नश्छव्यप्रशान्' इति रुः प्रसज्येत? नैतदस्ति; अम्पर इत्यत्रानुवर्तते, न चेहाम्परस्तकारोऽस्ति। अथेहापि भूतपूर्वेणोकारेणाम्परः स्यात्? एवमप्यसिद्धत्वात् तुटो रुत्वं न भविष्यति। तस्मात् तुडेव वक्तव्यः। एवं तर्हि वैचित्र्यार्थं धुड्वचनम्।

अथ किमर्थं धुट् परादिः क्रियते, न धुगेव पूर्वान्तः क्रियेत, एवं हि 'शि तुक्' इत्यत्र तुग्ग्रहणं न कर्तव्यं भवति, धुगेव हि तत्रानुवर्त्तिष्यते? इत्यत आह—**परादिकरणमित्यादि**। यदि पूर्वान्तः क्रियेत, श्वलिट्साय इत्यत्र धुकः ष्टुत्वं स्यात्। परादिकरणे तु टकारस्य पदान्तत्वं न विहतमिति 'न पदान्ताट्टोरनाम्' इति प्रतिषेधः सिध्यति। तदर्थं परादिकरणम्।।२९।।

### पदमञ्जरी

**डः सि धुट्**।। 'उभयनिर्देश पञ्चमीनिर्देशो बलीयान्' इति 'डः' इति पञ्चम्या सीति सप्तम्याः षष्ठी प्रकल्प्यत इति मत्वाऽऽह—**डकारान्तादिति**। सप्तमीनिर्देशस्तु लाघवार्थः। उदाहरणेषु धुटि कृते चर्त्वम्—तकारः, तस्य पूर्ववत्पक्षे थकारः।

अथ किमर्थं धुट् परादिः क्रियते—न धुगेव पूर्वान्तः क्रियेत, एवं हि 'शि तुक्' इत्यत्र तुग्ग्रहणं न कर्त्तव्यं भवति, एष धुक् तत्रानुवर्तिप्यते? अत आह—**परादिकरणमिति**। प्रक्रियालाघवार्थं तुडिति वक्तव्ये धुड्ग्रहणमुत्तरार्थम्—"नश्च' इति धुड्यथा स्यात्, तुण्मा भूत्। किञ्च स्यात्, भवान्त्साय इत्यत्र 'नश्छव्यप्रशान्' इति रुत्वं प्रसज्येत? नैतदस्ति; अम्पर इति तत्रानुवर्तते। किञ्च—तुटोऽसिद्धत्वादपि रोरप्रसङ्गः। तस्मात्तुडेव वक्तव्यः।।२९।।

### भावबोधिनी

डकारान्त पद से उत्तरवर्त्ती सकारादि पद को धुट् का आगम विकल्प से होता है। उदा० श्वलिट्त्साये, श्वलिट्साये, मधुलिट्त्साये, मधुलिट्साये। [ श्वलिड् + साये, विकल्प से धुट् = ध् आगम, चर्त्व से ध् का त्, इसी प्रकार ड् का भी चर्त्व से ट् होता है। ]

यह धुट् परवर्ती का आदि अवयव "न पदान्ताट्टोरनाम्' सूत्र से ष्टुत्व का प्रतिषेध करने के लिये है। [ मधुलिट् + साये में पदान्त टवर्ग से परे तवर्ग का ष्टुत्व रोकने के लिये धुट् को परवर्ती का आगम बनाया गया है। यदि पूर्ववर्ती का आगम होता तो ष्टुत्व रोकना सम्भव नहीं था क्योंकि—मधुलिट्त् + साये में ष्टुत्व अनिवार्य है।]।।२९।।

## ३८२६. नश्च।।३०।। (१३२)

**नकारान्तात्पदादुत्तरस्य सकारस्य वा धुडागमो भवति। भवान्त्साये, भवान्साये, महान्त्साये; महान्साये।**

**धुटश्चर्त्वस्य चासिद्धत्वात् 'नश्छव्यप्रशान्' (८।३।७) इति रुत्वं न भवति।।**

## ३८२७. शि तुक्।।३१।। (१३३)

**न्यासः**

**नश्च**।। चकारो धुडित्यनुकर्षणार्थः। ननु च स्वरितत्वादेवानुवर्तिष्यते, न चोत्तरत्रानुवर्तिष्यते, आगमान्तरस्योपादानाद्, अस्वरितत्वाद्वा? सत्यमेतत् प्रतिपत्तिगौरवं तु मन्दधियां स्यात्। अथ भवान्त्साय इत्यत्र घुटश्चत्वें कृते 'नश्छव्यप्रशान्' इति रुः कस्मान्न भवति? इत्याह—**घुटश्चर्त्वस्य चासिद्धत्वादित्यादि**। यदि केवलस्य चर्त्वस्य धुटो वासिद्धत्वं स्यात्, तथापि रुत्वप्राप्तेरसम्भव एव, किं पुनरुभयोरसिद्धत्वे सतीति रुत्वप्राप्तेरत्यन्तासम्भवं दर्शयितुमुभयोर्ग्रहणम्। क्वचिद् **धुटश्चर्त्वस्यासिद्धत्वादिति पाठः**। तत्राप्ययमर्थो वेदितव्यः—विनापि हि चकारेण तदर्थो गम्यते, यथा 'हरहर्नयमानो वैवस्वतो गामश्वं पुरुषं पशुमि'त्यादौ वाक्ये। अथ वा—अस्मिन्पाठे धुटो यच्चर्त्वं तस्यासिद्धत्वादित्यर्थः। ननु धुडप्यसिद्ध एव, तत् कुतश्चर्त्वस्यासिद्धत्वमुच्यते? पुनर्धुटोऽपि? नैतत्; सत्यपि धुटि विना चर्त्वेन रुत्वप्राप्तिरेव नास्ति। ततो यस्मिन् सति रुत्वमाशङ्क्यते, तस्यासिद्धत्वं युक्तमुक्तमिति भावः। कथं पुनः सत्यपि चर्त्वस्यासिद्धत्वे रुत्वमाशङ्कितम्, यावताऽम्परे छवि तदुच्यते, न चेहाम्परत्वमस्ति? भूतपूर्वणोकारेणाम्परत्वमस्तीति युक्तमाशङ्कितम्। ननु च साम्प्रतिकाभावे भूतपूर्वगतिर्भवति, अस्ति साम्प्रतिकत्वमन्यत्राम्परत्वं रुत्वस्य? सत्यमेतत्; अध्यारोप्यैवमुक्तम्; एवं मन्यते— भवतु नाम, भूतपूर्वेणोकारेणाम्परत्वं प्रसज्यते इत्याह—**घुटश्चर्त्वस्यासिद्धत्वादिति**।।३०।।

**शि तुक्**।। 'शि' इति सप्तम्यकृतार्था 'नः' इति पूर्वसूत्रे कृतार्थायाः पञ्चम्याः षष्ठीत्वं प्रकल्पयति; 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति वचनात्, तेन नकार एवागमो विज्ञायत इत्याह—**नकारान्तस्येत्यादि**।

**पदमञ्जरी**

**नश्च**।। अत्रापि परादित्वात् कुर्वन् सीदतीत्यादौ 'पदान्तस्य' इति णत्वप्रतिषेधो भवति।

**धुटश्चर्त्वस्यासिद्धत्वादिति**। धुटो यच्चर्त्वं तस्यासिद्धत्वादित्यर्थः। यद्यपि धुडप्यसिद्धः, तथापि न तदुच्यते; सिद्धेऽपि तस्मिन्विना चर्त्वेन रुत्वस्याप्राप्तेः। नन्वस्तु चर्त्वमसिद्धम्, तथापि नैव रुः प्राप्नोति अनम्परत्वात्? सत्यम्; यस्त्वसौ धुट उकारः, तेन भूतपूर्वेणाम्परत्वमभ्युपेत्यैतदुक्तम्। अन्ये तु ग्रन्थमिमं न पठन्ति।।३०।।

**शि तुक्**।। 'शि' इत्येषा सप्तम्यकृतार्था पूर्वसूत्रे कृतार्थायाः पञ्चम्याः षष्ठीं प्रकल्पयति, तदाह—**नकारस्येति**।

**भावबोधिनी**

नकारान्त पद से उत्तरवर्ती सकार को विकल्प से धुट् आगम होता है। उदा॰ भवान्त्साये, भवान् साये, महान् त्साये, महान् साये। [ भवान् + साये, धुट् = ध् आगम, चर्त्व से ध् का त् आदेश—भवान् त्साये। ]

[ भवान्त्साये—इसमें अम्परक छव् = त्स है 'नश्छव्यप्रशान्', सूत्र से न् का रुत्व होना चाहिये? ] धुट् और चर्त्व (त्) के असिद्ध हो जाने से 'नश्छव्यप्रशान्' से न् का रुत्व नहीं होता है। [ क्योंकि महान् धसाये में ध् छव् नहीं है। ]।।३०।।

शकार परे रहते नकारान्त पद को विकल्प से तुक् आगम होता है। उदा॰ भवाञ्छेते। [ भवान् + शेते, तुक् आगम, भवान् त् शेते, 'शश्छोऽटि' सूत्र से श् का छत्व, श्चुत्व से त् का च्, पुनः श्चुत्व से न् का ञ्—भवाञ्च्छेते। यहाँ छत्व और तुक् ये

**नकारस्य पदान्तस्य शकारे परतो वा तुगागमो भवति। भवाञ्च्छेते।**

**पूर्वान्तकरणं छत्वार्थम्। यद्येवम्, कुर्वञ्च्छेते इत्यत्र नकारस्यापदान्तत्वाण्णत्वं प्राप्नोति? तत्र समाधिमाहुः–'स्तोः श्चुना श्चुः' (८।४।४०) इत्यत्र योगविभागः क्रियते–णत्वप्रतिषेधार्थम्, 'स्तोः श्चुना' णकारो न भवतीति, ततः 'श्चुः' इति।।**

**न्यासः**

अथ किमर्थं तुक् पूर्वान्तः क्रियते, न प्रकृतो धुडेव परादिः क्रियेत; तथापि चर्त्वेन सिध्यति? इत्यत आह— **पूर्वान्तकरणमित्यादि**। पूर्वान्तः = पूर्वस्यान्तः, स पुनः प्रकरणात् तुग् विज्ञायते, तस्य करणम् = विधानम्, छत्वं यथा स्यादित्येवमर्थम्। यदि प्रकृतो धुडेव विधीयेत, 'शश्छोऽटि' इति च्छत्वं न स्यात्। तत्र च कारणं पूर्वमेवोक्तम्। **यद्येवमित्यादि**। यदि पूर्वान्तस्तुक् क्रियते, कुर्वञ्छेते—इत्यत्र तुका पदान्तताया रहितत्वात् नकारस्य 'अट्कुप्वाङ्' इत्यनेन णत्वं प्राप्नोति, परादित्वे त्वेष दोषो न भवति; 'पदान्तस्य' इति णत्वप्रतिषेधादिति भावः। **तत्रेत्यादिना** 'न भाभूपूकमिगमि' इत्यादेः सूत्रान्नेति वर्त्तमाने 'स्तोः श्चुना श्चुः' इति योगविभागः क्रियते, तेन चवर्गयोगे कुर्वञ्छेते— इत्यत्र णत्वं न भवत्येव। ननु च क्रियमाणेऽपि योगविभागे णत्वं प्राप्नोत्येव, यस्मादिह चवर्गयोगो नास्त्येव, तुकः श्चुत्वस्यासिद्धत्वात्? योगविभागकरणसामर्थ्यात् श्चुत्वस्यासिद्धत्वेऽपि णत्वप्रतिषेधो भविष्यतीत्यदोषः।।३१।।

**पदमञ्जरी**

अथ किमर्थमपूर्वः पूर्वान्तस्तुक् क्रियते, न प्रकृतः परादिर्धुडेव विधीयेत, तत्रापि चर्त्वेन सिध्यत्येव? अत आह—**पूर्वान्तकरणमिति**। पूर्वान्तस्यापूर्वस्य तुकः करणमित्यर्थः। **नकारस्यापदान्तत्वादिति**। तुका पदान्तताया विहतत्वात्। परादौ तु 'पदान्तस्य' इति प्रतिषेधाददोषः। **तत्रेत्यादि**। तत्र तुको यच्चुत्वं तदाश्रयात्सिद्धं भवति।।३१।।

**भावबोधिनी**

दोनों विकल्प से होते हैं। इनके अतिरिक्त 'झरो झरि सवर्णे' सूत्र से च् का लोप भी विकल्प से होता है। अतः तीन विकल्प होने के कारण चार रूप होते हैं—(१) सभी कार्य तुक्, छत्व, श्चुत्व, चलोप—होने पर—भवाञ्छेते। (२) चलोप न होने पर—भवाञ्च्छेते। (३) छत्व न होने पर—भवाञ्श्शेते। (४) तुक् न होने पर—भवाञ् शेते। इस विषय में एक कारिका प्रसिद्ध है—

"ञछौ ञचछा ञचशा ञशाविति रूपचतुष्टयम्।
रूपाणामिह तुक्–छत्व-चलोपानां विकल्पनात्।।"

किन्तु काशिकाकार ने एक ही रूप लिखा है। इसका कोई स्पष्ट कारण नहीं दिखाई देता है। ]

तुक् को पूर्व का अन्तावयव करना छत्व [ की सिद्धि ] के लिये है [ अन्यथा पदान्त झय् से परे न मिलने से छत्व नहीं हो पाता। ] यदि ऐसा है तब तो 'कुर्वञ्छेते' (कुर्वन्त् + शेते) इसमें नकार के अपदान्त होने के कारण (रेफोत्तरवर्ती होने से) णत्व प्राप्त होता है? इस का समाधान कहते हैं—'स्तोः श्चुना श्चुः' इसमें योगविभाग किया जाता है, दो सूत्र बनाये जाते हैं—(१) णत्व का प्रतिषेध करने के लिये 'स्तोः श्चुना' अर्थात् शकार चवर्ग का योग रहने पर सकार तवर्ग का श्चुत्व ही होता है ष्टुत्व नहीं। इसके बाद (२) 'श्चुः' यह सूत्र बनाया जाता है।

**विमर्श**—भाव यह है कि—'न भाभूपूकमिगमि' (८।४।३४) सूत्र से इस कल्पित योग-विभाग वाले 'स्तोः श्चुना' (८।४।४०) में 'न' की अनुवृत्ति होती है। इस कारण 'कुर्वञ्छेते' इसमें चवर्ग के योग में णत्व नहीं होता है। यद्यपि श्चुत्व का असिद्धत्व सम्भावित है तथापि इस योगविभाग के करने के कारण या तो श्चुत्व का असिद्धत्व नहीं होता है अथवा णत्व का प्रतिषेध हो जाता है—ऐसा मान लेना चाहिये।।३१।।

## ३८२८. ङमो ह्रस्वादचि ङमुण्नित्यम्।।३२।। (१३४)

**ह्रस्वात्परो यो ङम् तदन्तात्पदादुत्तरस्याचो ङमुडागमो भवति नित्यम्। ङणनेभ्यो यथासंख्यं ङणना भवन्ति। ङकारान्तान् ङुट्–प्रत्यङ्ङास्ते। णकारान्ताण्णुट्–वण्णास्ते। वण्णवोचते। नकारान्तान्नुट्–कुर्वन्नास्ते, कुर्वन्नवोचत्। कृषन्नास्ते, कृषन्नवोचत्।**

**ङम इति किम्? त्वमास्से। ह्रस्वादिति किम्? प्राङास्ते। भवानास्ते। अचीति किम्? प्रत्यङ्करोति।**

### न्यासः

**ङमो ह्रस्वादचि ङमुण् नित्यम्**।। 'ङमः' इति, 'ङमुट्' इति—उभयमपि प्रत्याहारग्रहणम्। उडिति प्रत्येकं ङकारादिभिः सम्बध्यते। 'ह्रस्वात्' इत्येतत् ङमो विशेषणम्, ह्रस्वविशेषितोऽपि ङम् पदस्य विशेषणम्, विशेषणेन च चदन्तविधिर्भवतीति तदन्तात् पदादिति विज्ञायते। यद्यपि पदस्येति षष्ठ्यन्तं प्रकृतम्, तथापि तदिहार्थात् पञ्चम्यन्ततया विपरिणम्यते—'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति। 'ङमः' इति पञ्चम्या 'अचि' इत्यस्याः सप्तम्याः षष्ठ्यां परिकल्पितायामच एवागमित्वं प्रतिपाद्यते। सप्तमीनिर्देशस्तु लाघवार्थः, उत्तरार्थश्चेत्यतत् सर्वं चेतसि कृत्वाह—**ह्रस्वात् परो य ङम् तदन्तादित्यादि**। संख्यातानुदेशो हीह वेदितव्यः; आगमिनामागमानाञ्च समानत्वात्। **प्रत्यङ्ङास्त इति**। 'आस उपवेशने', अदादित्वाच्छपो लुक्। **कृषन्नास्त इति**। 'कृष विलेखने' तौदादिकः, शतृ।

अथ परमदण्डिनोत्तमदण्डिनेति 'सन्महत्' इत्यादिना समासे कृते ङमन्तात् तृतीयैकवचने तस्य नुट् कस्मान्न भवति; अत्र हि 'यचि भम्' इति भत्वेऽपि समासस्य ह्रस्वादिकारात् परो ङम् नकारः, तदन्ताद् दण्डिनेत्यस्माद् या

### पदमञ्जरी

**ङमो ह्रस्वादचि ङमुण् नित्यम्**।। ङमः, ङमुट्—इत्युभयत्रापि प्रत्याहारग्रहणम्। उडिति प्रत्येकं ङकारादिभिः सम्बध्यते। संज्ञायां हि कृतमागमलिङ्गं संज्ञिनां भवति। ह्रस्वादित्येतन्ङमो विशेषणम्, सोऽपि ङम् पदस्य विशेषणम्, विशेषणेन च तदन्तविधिर्भवति। पदस्येति प्रकृतं यद्यपि षष्ठ्यन्तम्, तथापि 'ङमः' इत्यनेन सम्बन्धात् पञ्चम्यन्तं विपरिणम्यते। 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति 'ङमः' इति पञ्चम्या 'अचि' इति सप्तम्याः षष्ठी प्रकल्प्यते। सप्तमीनिर्देशस्तु लाघवार्थः, उत्तरार्थश्च। तदेतत्सर्वं मनसि कृत्वाह—**ह्रस्वात्पर इति**। संख्यातानुदेशश्च वेदितव्यः; आगमानाम्, आगमिनां च समत्वात्।

### भावबोधिनी

ह्रस्व से परे जो ङम् = ङ ण न, तदन्त जो पद उससे उत्तरवर्ती अच् के लिये नित्य ङमुट् [= ङुट्, णुट्, नुट्] आगम होता है। ङ ण न से परे क्रमशः ङ ण न आगम हो जाते हैं। उदा० ङकारान्त से परे अच् के ङुट् आगम का—प्रत्यङ्ङास्ते। [ प्रत्यङ् + आस्ते, आ को ङुट् = ङ् का आगम होने से दो ङकार सुनाई देते हैं। ] णकारान्त से परे अच् को णुट् आगम का उदा० वण्णास्ते। [ वण् + आस्ते, णुट् = आगम होता है। ] वण्णवोचत्। [ वण् + अवोचत्। ] नकारान्त से परे अच् को नुट् = न् आगम का उदा० कुर्वन्नास्ते, कुर्वन्नवोचत्। कृषन्नास्ते, कृषन्नवोचत्। [ कुर्वन् + आस्ते, कुर्वन् + अवोचत्। कृषन् + आस्ते, कृषन् + अवोचत्। नुट् = न् का आगम होता है। ]

ङम् = ङ ण न—से परे—इसका क्या फल है? त्वमास्से। [ त्वम् आस्से—म् से परे है। ] ह्रस्व से परे जो ङम्—इसका क्या फल है? प्राङास्ते। भवानास्ते। [ प्राङ् + आस्ते—यहाँ ह्रस्व से नहीं, दीर्घ से परे ङ् है। ] अजादि परे—इसका क्या फल है? प्रत्यङ्करोति। [ अजादि परे न होने से ङुट् नहीं होता है। ]

**इह परमदण्डिनौ, परमदण्डिनेति 'उत्तरपदत्वे चापदादिविधौ' (परि.) इति प्रत्ययलक्षण-प्रतिषेधादुत्तरपदस्य पदत्वं नास्तीति ङमुण्न भवति।**

**अथ वा–'उञि च पदे' (८।३।२१) इत्यतः सप्तम्यन्तम् 'पदे' इत्यनुवर्त्तते, तेन अजादौ पदे ङमुड् भवति।।**

### न्यासः

विभक्तिस्तस्यां लुप्तायामपि प्रत्ययलक्षणेन लब्धपदसंज्ञत्वात् तृतीयैकवचनमच्परं भवतीत्यस्ति ङमुट्प्राप्तिः? इत्याह—**परमदण्डिनेत्यादि। उत्तरपदत्वे** उत्तरपदव्यपदेशे कर्त्तव्ये **सत्यपदादिविधौ** = पदादिविधेरन्यत्र प्रत्ययलक्षणं न भवतीति वाक्यार्थः। असति प्रत्ययलक्षणे दण्डिनेत्यस्य पदसंज्ञा न भवति। ततश्च पदान्तादुत्तरस्योच्यमानो ङमुडागमो न भवति।

एवं तावत् **कात्यायनमतेन** परीहार उक्तः। यस्तु **सूत्रकारमतेन**, तं दर्शयितुमाह—**अथ वेत्यादि**। पद इत्यनुवृत्तौ सत्यामचा पदे विशेष्यमाणे 'यस्मिन् विधिस्तदादावल्ग्रहणे' इत्यनेनाजादौ पदे कार्येण भवितव्यम्, न चात्राजादि पदमस्ति, तत्कुतो नुट्प्रसङ्गः?

अथ नित्यग्रहणं किमर्थम्, यावतोत्तरसूत्रे वाग्रहणादेव नित्यो विधिर्विज्ञास्यते? सत्यमेतत्; पूर्वसूत्रेऽपि नित्यत्वं विज्ञायेत। तस्मात् पूर्वसूत्रेषु 'हे मपरे वा' इत्यतो 'वा' इत्यनुवर्त्तत इति ज्ञापनार्थं नित्यग्रहणम्।।३२।।

### पदमञ्जरी

परमदण्डिनेत्यादौ सुबन्तयोः समासः, तत्र समासार्थायां विभक्तौ लुप्तायामपि प्रत्ययलक्षणेन दण्डिन्नित्यस्य पदत्वमस्तीति ङमुट् प्राप्नोतित्याशङ्क्याह-**इहेति**। समासे य उत्तरो भागस्तस्य पदत्वे कर्त्तव्ये प्रत्ययलक्षणं न भवति, अपदादिविधौ = पदादिविधिं वर्जयित्वा। 'सात्पदाद्योः' इत्यत्र पदादिविधौ प्रत्ययलक्षणं भवत्येवेत्यर्थः। **एतद्वार्त्तिकारमतेनोक्तम्**।

**सूत्रकारमतेनाप्याह—अथ वेति**।।३२।।

### भावबोधिनी

परमदण्डिनौ, परमदण्डिना [ परमदण्डिन् + औ, परमदण्डिन् + टा = आ ]—इनमें 'उत्तरपदत्वे चापदादिविधौ' इस वचन से प्रत्ययलक्षण का प्रतिषेध हो जाने से उत्तरपद का पदत्व नहीं रह पाता है इस लिये ङमुट् का आगम नहीं होता है।

अथवा 'उञि च पदे' इस सूत्र से सप्तम्यन्त 'पदे' की अनुवृत्ति होती है (प्रस्तुत सूत्र में)। इसलिये अजादि पद के परे रहते ही ङमुट् का आगम होता है।

**विमर्श**—परमश्चासौ दण्डी च—यह कर्मधाय समास होने पर विभक्तिलोप के बाद परमदण्डिन् + औ, परमदण्डिन् + आ में ङमन्त मानकर ङमुट् का आगम होना चाहिये क्योंकि प्रत्ययलक्षण से समास से पूर्व का दण्डिन् का भी पदत्व सम्भव है। अतः ङमुट् होना चाहिये? इस शंका के दो समाधान हैं—(१) 'उत्तरपदत्वे चापदादिविधौ' (समास में उत्तरवर्ती जो भाग उसका पदत्व का व्यवहार करने में प्रत्ययलक्षण नहीं होता है पदादिसम्बन्धी विधि को छोड़ कर)—इस वार्तिक के अनुसार अकेला दण्डिन् पद नहीं माना जा सकता और विभक्तिरहित समूह भी पद नहीं हो सकता। अतः नुट् नहीं होता है। यह वार्तिककार के मतानुसार है।

सूत्रकार के अनुसार 'उञि च पदे' सूत्र से 'पदे' की अनुवृत्ति करके अजादि = अचि के साथ विशेष्य बना कर अजादि पद परे रहते नुट् होता है—ऐसा व्याख्यान करने से उक्त लक्ष्यों में ङमुट् आगम रोका जा सकता है क्योंकि 'औ' 'आ' आदि प्रत्यय हैं पद नहीं है।।३२।।

## ३८२९. मय उञो वो वा।।३३।। (१०८)

मय उत्तरस्य उञो वा वकारादेशो भवति अचि परतः। शमु अस्तु वेदिः, शम्वस्तु वेदिः (वा. सं.२३।४४)। तद्वस्य परेतः। किम्वावपनम् तदु अस्य परेतः, किमु आवपनम्।

प्रगृह्यत्वादुञः प्रकृतिभावे प्राप्ते वकारो विधीयते। तस्यासिद्धत्वाद्धलीति 'मोऽनुस्वारः' (८।३।२३) न भवति।।

## ३८३०. विसर्जनीयस्य सः।।३४।। (१३८)

**न्यासः**

**मय उञो वो वा**।। 'मयः' इति प्रत्याहारस्य ग्रहणम्, न तु 'अय वय मय' इति धातोः। कुत एतत्? व्याप्तिन्यायात्। किमर्थमिदमुच्यते, यावता 'इको यणचि' इत्युञो वकारः सिद्ध एव, विकल्पार्थमिति चेत्? स्यादेतत्—यदि 'इको यणचि' इति नित्यं स्यात्, तस्माद्विकल्पार्थं वचनमिति? एतच्च न; 'पदान्ताद्वा' इत्यतो वेत्यनुवर्त्तिष्यते, सा च व्यवस्थितविभाषा विज्ञायते। तेनोञो विकल्पेन यण् भवतीत्याह—**प्रगृह्यत्वादित्यादि**। प्रगृह्यत्वं पुनः 'उञः' इति प्रगृह्यसंज्ञाविधानात्। तस्मिन् सति 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावः प्राप्नोति, तस्मिन् प्राप्ते वकारो विधीयते। एवमपि 'इको यणचि' इत्यस्यानन्तरमुञो यण् वकारो विधेयः? एवं हि व इति न कर्त्तव्यं भवति; यणः प्रकृतत्वात्। वेति वचनं न कर्त्तव्यं भवति; 'पदान्ताद्वा' इत्यतो वाग्रहणं मण्डूकप्लुत्यानुवर्तते? इत्याह—**असिद्धत्वादित्यादि**। तत्र ह्युच्यमाने सिद्धत्वाद् हलि विधीयमानोऽनुस्वारः स्यात्, न चेष्यते, तस्मादिहैव क्रियते। इह क्रियमाणे मोऽनुस्वारो न भवति, वत्वस्यासिद्धत्वात्।।३३।।

**पदमञ्जरी**

**मय उञो वो वा**।। 'इको यणचि' इत्यनेनैव सिद्धत्वान्नार्थोऽनेन?—इत्याशङ्क्याह-**प्रगृह्यत्वादिति**। प्रगृह्यत्वं च 'निपात एकाजनाङ्' इति। एवमपि 'इको यणचि' इत्यस्यानन्तरम् 'मय उञो वा' इति वक्तव्यम्, एवं हि वग्रहण न कर्त्तव्यं भवति? तत्राह—**तस्यासिद्धत्वादिति**। यदा त्वितिपर उञ् भवति। मयश्च परः, तदा 'उञः' इति प्रगृह्यसंज्ञाया विकल्पः, ऊँआदेशश्च; तत्र यदा प्रगृह्यसंज्ञा न भवति तदानेन वत्वं च प्राप्नोति यणादेशश्च, तत्रास्य वत्वस्यासिद्धत्वाद्यणादेशे सत्यनुस्वारोऽपि भवति—किंविति। प्रगृह्यसंज्ञापक्षे त्वनेन वा वत्वम्—किंव्विति, किमु इति। ऊँआदेशस्यापि स्थानिवद्भावादनेन पक्षे वकारो भवति, स चान्तरतमत्वादनुनासिकः, तच्चतुर्थं रूपम्। ऊँआदेशस्यैव वत्वाभावपक्षे श्रवणम्, तत्पञ्चमं रूपम्।।३३।।

**विसर्जनीयस्य सः**।। इह खरवसानयोर्द्वयोरपि रेफस्य विसर्जनीय उक्तः, तत्रेह निमित्तविशेषानुपादानात्खरि वावसानेऽपि सत्वं प्राप्नोति—वृक्षः, प्लक्ष इति? सहितायामिति वर्तते, न चावसाने संहितास्ति; परस्याभावात्।

**भावबोधिनी**

मय् से उत्तरवर्ती उञ् का वकार आदेश विकल्प से होता है अच् परे रहते। उदा० शम्वस्तु वेदिः, शमु अस्तु वेदिः। तद्वस्य परेतः, तदु अस्य परेतः। किम्वावपनम्, किमु आवपनम्। [ शम् उ + अस्तु, किम् उ + आवपनम्—इनमें मय् से परे उञ् के उ का व् आदेश विकल्प से होता है। पक्ष में उकार रहता है। पदमञ्जरी में पाँच रूप दिखलाये गये हैं। ]

[ 'उञः' १।१।१७ सूत्र से ] प्रगृह्य संज्ञा होने से उञ् का प्रकृतिभाव प्राप्त रहते यह वकार आदेश किया जा रहा है। इस वकारादेश के असिद्ध हो जाने के कारण—हल् परे मानकर 'मोनुस्वारः' सूत्र से म् का अनुस्वार नहीं होता है। ]।।३३।।

'खरि' इसकी अनुवृत्ति होती है। विसर्ग का सकार आदेश खर् परे रहते होता है। उदा० वृक्षश्छादयति। प्लक्षश्छादयति। [ वृक्षः + छादयति, प्लक्षः + छादयति, विसर्ग का सकार करने पर श्चुत्व से शकार होता है ] वृक्षष्ठकारः। प्लक्षष्ठकारः। [ वृक्षः

**'खरि' इत्यनुवर्त्तते। विसर्जनीयस्य सकार आदेशो भवति खरि परतः। वृक्षश्छादयति। प्लक्षश्छादयति। वृक्षष्ठकारः। प्लक्षष्ठकारः। वृक्षस्थकारः। प्लक्षस्थकारः। वृक्षश्चिनोति। प्लक्षश्चिनोति। वृक्षष्टीकते। प्लक्षष्टीकते। वृक्षस्तरति। प्लक्षस्तरति।।**

**न्यासः**

**विसर्जनीयस्य सः।। खरीत्यनुवर्तते इति।** 'खरवसानयोर्विसर्जनीयः' इत्यत अनुवृत्तिश्च मण्डूकलुतिन्यायेन, स्वसम्बधानुवृत्त्या वा वेदितव्या; अन्यथा पूर्वसूत्रेऽपि खरि कार्यं विज्ञायेत।।३४।।

**पदमञ्जरी**

मा भूत्परः, पूर्वेण या संहिता तदाश्रय सत्वं प्राप्नोति, 'इको यणचि' इत्यादौ तु कार्यिनिमित्तयोर्द्वयोरप्युपात्तत्वात्तयोरेव परस्परं संहिताश्रीयत इति दधि + अत्रेति पूर्वपराभ्यामिगचोः संहितायां सत्यामपि कार्यं न भवति; परस्परमसंहितत्वात्। स्यादेतत्। सामान्यविहिता संहितासंज्ञा, विशेषविहितावसानसंज्ञा; कार्ययोरेकवर्णविषयत्वात्कार्यार्थत्वाच्च संज्ञानां संज्ञयोरप्यैकविषयत्वाद्बाध्यबाधकभावः। यद्वा—'सन्निकर्षः संहिता' इतीयता सिद्धे परग्रहणमतिशयप्रतिपत्त्यर्थम्—प्रकृष्टो यः सन्निकर्षः। कश्च प्रकृष्टः? यः पूर्वपराभ्यामुभाभ्यामपि। तदभावादवसानस्य संहितासंज्ञाया अभावः। यद्येवम्, अणोऽप्रगृह्यस्यानुनासिके दोषः, तत्र हि 'वावसाने' इति वर्तते; संहिताधिकारश्चोत्तरार्थोऽवश्यमनुवर्त्यः—'तोर्लि' इति परसवर्णोऽसंहितायां मा भूत्—अग्निचित् लुनातीति, ततश्च संहितावसानोभयाश्रयोऽनुनासिको दधि इत्यादौ न स्यादिति संहितावसानसंज्ञयोः समावेश एषितव्यः, ततश्चावसानेऽपि सत्वप्रसङ्गः? अत आह—**खरीत्यनुवर्तते इति**। तदनुवृत्तिश्च मण्डूकप्लुतिन्यायेन, सम्बन्धानुवृत्त्या वा वेदितव्या; अन्यथा हि पूर्वत्रापि खरि कार्यं विज्ञायेत।

किं पुनरत्र प्रमाणं खरीत्यनुवर्त्तते इति? उत्तरत्र शर्परे इति वचनम्, स हि बहुव्रीहिः तस्यान्यपदार्थापेक्षाया यो विसर्जनीयात्परः सम्भवति स एवान्यपदार्थः, स च खरेव; अवसानस्य शर्परत्वासम्भवात्। यद्वा—यदि खरवसानयोर्द्वयोरपि सत्वं स्यात् विसर्जनीयविधानमनर्थकं स्यात् 'खरवसानयोस्सः' इत्येव वाच्यं स्यात्। एवं हि 'विसर्जनीयस्य' इति न वक्तव्यं भवति। अवश्यम् 'शर्परे—विसर्जनीयः' इत्यस्य स्थानिनिर्देशार्थं विसर्जनीयस्येति वक्तव्यम्? न वक्तव्यम्; पुरस्तादपकर्षेणाप्येतत्सिद्धम्, एवं वक्ष्यामि—'रो रि खरवसानयोः सः, रोःसुपि, शर्परे विसर्जनीयः' इति शर्परे इत्यत्र 'र' इति वर्त्तते, न तु 'रोः' इति, तेन सुगीःत्सरुकः, पुरुषःत्सरुकः इत्यादौ सर्वत्र भवति। अथ 'भोभगोअघो' इत्यादिसूत्रं कुत्र करिष्यसि? 'शर्परे विसर्जनीयः' इत्यस्यानन्तरम्। यद्येवम्, स्वरत्र, स्वर्नयतीत्यादावपि यत्वप्रसङ्ग इति पुना रुग्रहणं कर्तव्यम्? एवं तर्हि 'रोः सुपि' इत्यस्यानन्तरम् 'भोभगो' इत्यदि रुस्थानिकादेशविधानार्थं पठित्वा 'शर्परे विसर्जनीयः' इत्यादिकं पठिष्यते। एवमपि पुनारुग्रहणं कर्त्तव्यम्; रुणा विच्छिन्नत्वात्? एवमपि यथान्यासे सति त्राणि ग्रहणानि—द्वे विसर्जनीयग्रहणे, तृतीयं सग्रहणम्; अन्यथान्यासे तु द्वे सग्रहणे रुग्रहणं च। तदेवं लघीयसा न्यासेन सिद्धे विसर्जनीयविधानसामर्थ्यान्न सर्वत्र सत्वं भविष्यति।

एवमपि कुत एतत्—खरि भवति, न पुनरवसान इति? ज्ञापकात्, यदयं शर्परे खरि विसर्जनीयं विधत्ते, तंज्ज्ञापयति—खरि तावदस्ति सत्वमिति। विपर्यये हि पुरुषःत्सरुक इत्यादौ सत्वाभावादस्त्येव विसर्जनीय इति

**भावबोधिनी**

+ ठकारः प्लक्षः + ठकारः, विसर्ग का सत्व और स् का ष्टुत्व होता है। ] वृक्षस्थकारः। प्लक्षस्थकारः। वृक्षश्चिनोति। प्लक्षश्चिनोति। वृक्षष्टीकते। प्लक्षष्टीकते। वृक्षस्तरति। प्लक्षस्तरति। [ इनमें विसर्ग का सकार आदेश करने के बाद जो श्चुत्व या ष्टुत्व संभव है वे भी होते हैं, उनकी दृष्टि में यह सत्व असिद्ध नहीं है। ]।।३४।।

## ३८३१. शर्परे विसर्जनीयः।।३५।। (१५०)

**शर्परे खरि परतो विसर्जनीयस्य विसर्जनीयादेशो भवति। शशः क्षुरम्। पुरुषःक्षुरम्। अद्भिः प्सातम्। वासः क्षौमम्। पुरुषः त्सरुः। 'घनाघनः क्षोभणश्चर्षणीनाम्'। (ऋ. १०।१०।३।१)**

**'न' इति वक्तव्ये विसर्जनीयस्य विसर्जनीयादेशविधानं विकारनिवृत्त्यर्थम्: तेन जिह्वामूलीयोपध्मानीयौ न भवतः।।**

**न्यासः**

**शर्परे विसर्जनीयः**।। शर् परो यस्मादिति बहुव्रीहिः। अथ परग्रहणं किमर्थम्, न शरीत्येवोच्येत? अशक्यमेवं वक्तुम्; एवं ह्युच्यमाने शर एव केवलं निमित्तभावो विज्ञायेत्, न खरीत्यनुवृत्तेः, 'वा शरि' इति विधानाच्च। विपर्ययस्तर्हि विज्ञायेत—शरीति, तथा च नित्यः स्फोटः पुरुषः स्थूल इत्यादावेव स्यात्, वासः क्षौममित्यादौ तु न स्यात्? तस्माद् विपर्ययो मा विज्ञायीत्येवमर्थं परग्रहणम्।

अथ किमर्थं विसर्जनीय इत्युच्यते, नेत्येवोच्येत, सकारस्य हि प्रतिषेधे कृते विसर्जनीयः स्वेनैव रूपेणावस्थास्यते? इत्याह—**विसर्जनीयस्येत्यादि**। तस्य विसर्जनीयस्य विकारो जिह्वामूलीयादिः, तन्निवृत्त्यर्थं विसर्जनीयग्रहणम्; अन्यथा यदि नेत्येवोच्येत, ततः 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति सकारस्यैव विज्ञायेत। ततश्च जिह्वामूलीयादिर्विसर्जनीयस्य विकारः स्यादेव। विसर्जनीयग्रहणे तु तत्सामर्थ्यादेव न भवति।।३५।।

**पदमञ्जरी**

तद्विधानमनर्थकं स्यात्। नैतदस्ति ज्ञापकम्; अस्त्येतस्य वचने प्रयोजनम्, किम्? वासः क्षौमम्, अद्भिः प्सातमित्यादौ जिह्वामूलीयोपध्मानीयौ मा भूतामिति? नैतदस्ति; यद्येतावत्प्रयोजनं स्यात् 'कुप्वोः ᳲक ᳲपौ वा शरि' इत्येव ब्रूयात्। तदेवं विधानसामर्थ्यात्खर्येवायं विधिः। अनेन चैवाभिप्रायेण 'खरीत्यनुवर्त्तते' इत्युक्तम्।।३४।।

**शर्परे विसर्जनीयः**।। शर्परो यस्मादिति बहुव्रीहिः, परग्रहणेऽक्रियमाणे शर एव केवलस्य निमित्तता विज्ञायेत, न खरीत्यनुवृत्तेः, 'वा शरि' इत्यभिधानाच्च। विपर्ययस्तर्हि विज्ञायेत—खर्परे शरीति, नित्यः स्फोटः, पुरुषः स्थातेति। तस्मात्परग्रहणम्।

अथ किमर्थम्, 'विसर्जनीयः' इत्युच्येत, न 'न इत्येवोच्यते, सत्वे हि प्रतिषिद्धे विसर्जनीयः स्वेनैव रूपेणावस्थास्यते? अत आह—**विसर्जनीयस्येति**। सत्यम्; पुरुषःत्सरुक इत्यादौ सत्वनिषेधेनापि सिद्धम्, यत्र तु कुपू शर्परौ—वासः क्षौमम्, अद्भिः प्सातमिति, तस्य विसर्जनीयस्य यो विकारो जिह्वामूलीयादिः स एव स्यात्। विसर्जनीयग्रहणे तु सति विसर्जनीय एव भवति। **जिह्वामूलीयोपध्मानीयावपि न भवत इति**। न केवलं सकार एवेत्यपि शब्दार्थः।।३५।।

**भावबोधिनी**

शर्परक खर् परे रहते विसर्ग का विसर्ग आदेश होताहै। उदा० शशः क्षुरम्। पुरुषः क्षुरम्। अद्भिः प्सातम्। वासः क्षौमम्। पुरुषः त्सरुः। घनाघनः क्षोभणश्चर्षणीनाम्। [ क् + ष् = क्ष् होता है। अतः शर्परक खय् क् है, विसर्ग का विसर्ग ही होता है। त्स में भी त् खय् के बाद स शर् है अतः शर्परक खय् होने से विसर्ग ही रहता है। ]

'न' यही कहना चाहिये था अर्थात् शर्परक खर् परे रहते विसर्ग का सत्व नहीं होता है—ऐसा कहना चाहिये था किन्तु विसर्ग का विसर्गादेश करना अन्य विकार = आदेश की निवृत्ति के लिये है, इस कारण (क् + ष् = क्ष् आदि में भी) जिह्वामूलीय और उपध्मानीय आदेश (विसर्ग के स्थान पर) नहीं होते हैं, अर्थात् विसर्ग ही रहता है। [ इसीलिये काशिकाकार ने जिह्वामूलीय और उपध्मानीय के सम्भावित स्थल ही उदाहरण के रूप में दिये हैं, वहाँ विसर्ग ही किया है। ]।।३५।।

## ३८३२. वा शरि।।३६।। (१५१)

**विसर्जनीयस्य विसर्जनीयादेशो वा भवति शरि परे। वृक्षः शेते, वृक्षश्शेते। प्लक्षःशेते, प्लक्षश्शेते। वृक्षः षण्डे, वृक्षष्षण्डे। वृक्षः साये, वृक्षस्साये।।**

**❀ खर्परे शरि वा लोपो वक्तव्यः। ❀ वृक्षा स्थातारः, वृक्षाः स्थातारः, वृक्षास्स्थातारः।।**

## ३८३३. कुप्वोः ᳲक ᳲपौ च।।३७।। (१४२)

**कवर्गपवर्गयो परतो विसर्जनीयस्य यथासंख्यं ᳲक ᳲप इत्येतावादेशौ भवतः, चकाराद्विसर्जनीयश्च। वृक्ष ᳲकरोति, वृक्षः करोति। वृक्ष ᳲखनति, वृक्षः खनति। वृक्ष ᳲपचति, वृक्षः पचति, वृक्ष ᳲफलति, वृक्षः फलति।**

### न्यासः

**वा शरि**।।३६।।

**कुप्वोः ᳲकᳲपौ च। 'विसर्जनीयश्च'** इति। अनेन विसर्जनीयानुकर्षणार्थश्चकार इति दर्शयति। अथ वाग्रहणमनुवर्त्य जिह्वामूलीयोपाध्यानीयौ कस्मान्न विकल्प्येते, एवञ्च विसर्जनीयानुकर्षणार्थश्चकारो न कर्त्तव्यो भवति, आभ्यां हि मुक्ते पक्षे विसर्जनीय एव भविष्यति? नैवम्; शर्परयोरेव हि कुप्वोरेवं स्यात्। अशर्परयोस्तु पक्षे 'विसर्जनीयस्य सः' इति सकारः प्रसज्येत। तस्माच्चकारः कर्त्तव्यः। इह ककारपकारयोर्जिह्वामूलीयोपध्मानीययोः सूत्र उच्चारणात् तथाभूतावादेशौ विसर्जनीयस्य विज्ञायेते? इति कस्यचिदाशङ्का स्यात्, अतस्तां निराकर्त्तुमाह— **ककारपकारावुच्चारणार्थाविति**। आभ्यां विना तयोरुच्चारयितुमशक्यत्वादिति भावः। कीदृशौ? इत्यत आह— **जिह्वामूलीयोपध्मानीयावेव त्वादेशाविति**। तुशब्द आशङ्किताभ्यां समुदायरूपाभ्यामादेशाभ्यां विशेषं द्योतयति। एवकारोऽवधारणार्थः। जिह्वामूलीयोपध्मानीयावेव केवलौ। न तु समुदायरूपावित्यर्थः।

### पदमञ्जरी

**वा शरि**।। **वृक्षा स्थातार इति**। लोपाभावपक्षे विसर्जनीयः, सत्वं वा।।३६।।

**कुप्वोः ᳲकᳲपौ च**।। **विसर्जनीयश्चेति**। अनेन चकारो विसर्जनीयानुकर्षणार्थ इति दर्शयति। अथ वाग्रहणमेवानुवर्त्य जिह्वामूलीयोपध्मानीयौ कस्मान्न विल्प्येते, एवं हि चकारो न कर्त्तव्यो भवति? नैवं शक्यम्: एवं ह्याभ्यामुक्ते 'विसर्जनीयस्य सः' इति सत्वमेव स्यात्। तस्माच्चकारेणैवानुकृष्य विसर्जनीयो विधातव्यः, वाग्रहणं च नानुवर्त्यम्। तदनुवृत्तौ हि त्रिभिरपि मुख्ये पक्षे सत्वं प्रसज्येत।

### भावबोधिनी

शर् परे रहते विसर्ग का विकल्प से विसर्ग आदेश होता है। उदा॰ वृक्षः शेते, वृक्षश्शेते। प्लक्षः शेते, प्लक्षश्शेते। वृक्षः षण्डे, वृक्षष्षण्डे। वृक्षःसाये, वृक्षस्साये। [ वृक्षः + शेते आदि में विसर्ग का विसर्ग आदेश विकल्प से होता है। पक्ष में सत्व करने पर श्चुत्व और ष्टुत्व भी होते हैं। ] ❀ खर्परक शर् परे रहते विसर्ग का विकल्प से लोप कहना चाहिये। ❀ वृक्षा स्थातारः, वृक्षाः स्थातारः, वृक्षास्स्थातारः [ वृक्षाः स्थातारः में विसर्ग का लोप विकल्प से, लोपाभावपक्ष में विकल्प से विसर्ग आदेश, विसर्गादेश लोप दोनों के न होने पर विसर्ग का सत्व भी होता है। अतः तीन प्रकार के रूप होते हैं। ]।।३६।।

कवर्ग और पवर्ग परे रहते विसर्ग के स्थान पर क्रमशः ᳲक और ᳲप (जिह्वामूलीय और उपध्मानीय) ये आदेश होते हैं और सूत्रस्थ चकार के बल से विसर्ग भी रहता है। उदा॰ वृक्ष ᳲकरोति, वृक्षः करोति। वृक्ष ᳲखनति, वृक्षः खनति। [ यहाँ कवर्ग = क,

**कपावुच्चारणार्थौ। जिह्वमूलीयोपध्मानीयावेतावादेशौ।**

**'विसर्जनीयस्य सः' (८।३।३४) इत्येतस्मिन्नप्राप्ते इदमारभ्यते इत्येतस्य बाधकम्। 'शर्परे विसर्जनीयः' (८।३।३५) इत्येतत्तु न बाध्यते–वासः क्षौमम्, अद्भिः प्सातम्। 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इति 'शर्परे विसर्जनीयः' (८।३।३५) इत्येतदेव भवति।**

**न्यासः**

इह सर्वस्य विषयस्य विध्यन्तरेणावष्टब्धत्वात् 'कुप्वोः ≍क ≍पौ च' इत्यस्यानवकाशत्वम्, अतो यथा वृक्षः करोतीत्यादौ 'विसर्जनीयस्य सः' इतीमं विधिं बाधित्वा 'कुप्वोः ≍क ≍पौ च' इति प्रवर्त्तते, तथा वासः क्षौमम्, अद्भिः प्सातमित्यादौ 'शर्परि' इतीमममपि विधिं कस्मान्न बाधते?—इति यो देशयेत्, तं प्रत्याह—**विसर्जनीयस्येत्यादि**। 'शर्परि विसर्जनीयः' इत्येतस्मिन् प्राप्ते चेदमारभ्यते—वासः क्षौमम्, अद्भिः प्सातमित्यादौ प्राप्ते; वृक्ष ≍ करोति वृक्ष ≍ पचतीत्यत्राप्राप्ते। 'विसर्जनीयस्य सः' इत्येतस्मिंस्तु सर्वत्र प्राप्ते। एवं तस्य विशेषणं खर्मात्रे विधानात् स्यात् तस्यैवेदं बाधकम्, नेतरस्य विधेः; तं प्रति बाधकलक्षणस्यायोगात्। स्यादेतत्—शर्परि विसर्जनीयस्य कवर्गपवर्गाभ्यामन्यः शर्परः खरवकाशः, 'कुप्वोः ≍क ≍पौ च' इत्यस्याशर्परौ कवर्गपवर्गौ-वासः क्षौमम्, अद्भिः प्सातमित्यत्रोभयं प्राप्नोति, तत्र 'विप्रतिषेधे परं कार्यम्' इति विसर्जनीयं बाधित्वा जिह्वामूलीयोपध्यमानीयाभ्यां भवितुं युक्तम्? इत्याह—**पूर्वत्रासिद्ध इत्यादि**। अत्रैवोपपत्तिमाह—**अभावादुत्तरस्येति**। द्वयोस्तुल्यबलयोर्युगपदेकत्र प्राप्तौ विरोधो भवति, न चात्र युगपत् प्राप्तिरस्ति, पूर्वस्मिन्

**पदमञ्जरी**

सूत्रे ककारपकारसहितयोर्जिह्वामूलीयोपध्मानीययोरुच्चारणात्तथाभूतावेव विसर्जनीयस्यादेशाविति शङ्कमानं प्रत्याह—**कपावुच्चारणार्थाविति**। ताभ्यां विना तयोरुच्चारयितुमशक्यत्वादिति भावः। कीदृशौ तर्ह्यादेशौ? इत्याह—**जिह्वामूलीयेति**। इह विसर्जनीयस्य स्थाने आदेशत्रयं विधीयते, ततश्च शर्परयोरेव कुप्वोः प्राप्नोति—वासःक्षौमम् अद्भिःप्सामिति, अत्र हि 'शर्परे विसर्जनीयः' इति विसर्जनीयोऽस्ति, न च तस्य वैयर्थ्यम्; यत्र कुपुभ्यामन्यः शर्परः खरस्ति—पुरुषःत्सरुक इत्यादौ, तत्र सावकाशत्वात्। अशर्परयोस्तु कुप्वोर्न स्यात्, न ह्रि तस्य विसर्जनीयोऽस्ति, 'विसर्जनीयस्य सः' इति सत्वेन निवर्तितत्वात्। किं पुनः कारणं सत्वमेव तावद्भवति? तत्र कर्त्तव्ये तस्य विधेरसिद्धत्वात्। तस्मादत्र सकारः स्थानी निर्देष्टव्यः—यः 'विसर्जनीयस्य सः' इति सः, तस्य स्थाने कुप्वोरादेशत्रयं भवतीति।

**भावबोधिनी**

ख परे हैं। अतः विसर्ग का जिह्वामूलीय आदेश तथा पक्ष में विसर्ग रहता है, अर्थात् लोपादि नहीं होते हैं। ] वृक्ष ≍पचति, वृक्षः पचति। वृक्ष ≍फलति, वृक्षः फलति। [ इनमें विसर्ग का उपध्मानीय आदेश और पक्ष में विसर्ग होता है। ]

क और प में अकार केवल उच्चारण के लिये है। ये जिह्वामूलीय और उपध्मानीय ही आदेश होते हैं।

'विसर्जनीयस्य सः' इस सूत्र की अवश्यकर्तृक प्राप्ति रहते ही इस सूत्र का आरम्भ (निर्माण) किया जाता है अतः [ जहाँ जहाँ प्रस्तुत सूत्र प्राप्त है वहाँ वहाँ 'विसर्जनीयस्य सः' यह भी प्राप्त है। अतः प्रस्तुत सूत्र व्यर्थ होकर सत्वविधायक का बाधक होता है। परन्तु 'शर्परे खरि विसर्जनीयः' इसका तो बाधक नहीं होता है—वासःक्षौमम् अद्भिः प्सातम्, 'पूर्व के प्रति परवर्ती के असिद्ध

**केचित्तु एतदर्थं योगविभागं कुर्वन्ति–'कुप्वोः', शर्परयोः विसर्जनीयस्य विसर्जनीय आदेशो भवति। किमर्थमिदम्? 'ᳵक ᳶपौ च' इति वक्ष्यति–तद्बाधनार्थमिति।।**

**न्यासः**

कर्त्तव्ये सत्यसिद्धत्वादुत्तरस्याविद्यमानत्वात्। इतिकरणो हेतौ। यस्मात् पूर्वत्रासिद्धीये नास्ति विप्रतिषेधः, तस्माद्वासः क्षौमम्, अद्भिः प्सातमित्यत्र 'शर्परे विसर्जनीयः' इत्येतदेव भवति, न जिह्वामूलीयोपध्मानीयाविति।

**केचिदित्यादि**। वासः क्षौमम्, अद्भिः प्सातमित्यत्र विसर्जनीयो यथा स्यादित्येवमर्थम् 'कुप्वोः ᳵ क ᳶ पौ च' इत्यत्र योगविभागं—'कुप्वोः' इत्येको योगः, 'ᳵ क ᳶ पौ' इति द्वितीयः। तत्र पूर्वस्मिन् योगे 'शर्परे विसर्जनीयः' इत्येतदनुवर्तते। तेन शर्परयोः कुप्वोर्विसर्जनीय एव भवति, न जिह्वामूलीयोपध्मानीयाविति।।३७।।

**पदमञ्जरी**

एवं हि शर्परयोः कुप्वोः सकारापवादो विसर्जनीयो विधीयते इति सकाराभावादादेशाप्रसङ्गः, केवलयोस्त्वादेशप्रसङ्गः, तस्मात्सस्येति वक्तव्यम्, यदाह **वार्त्तिककारः**—'सकारस्य कुप्वोर्विसर्जनीय-जिह्वामूलीयोपमध्मानीयाः, विसर्जनीयादेशे हि शर्परयोरेवादेशप्रसङ्गः' इति? अत्र परिहारमाह—**विसर्जनीयस्य स इत्येतस्मिन्निति**। अयमभिप्रायः—'विसर्जनीयस्य सः' इति सकारस्य स्थानी विसर्जनीय उपात्तः, स च द्विविधः सम्भवति—शर्परलक्षणः, खरवसानलक्षणश्च। तत्र शर्परलक्षणस्यासिद्धत्वादितरः सकारस्य स्थानी, स एव चेहानुवर्तते; ततश्च नाप्राप्ते सत्वे इदमारभ्यते: सर्वस्य विषयस्य तेन व्याप्तत्वात्। 'शर्परे विसर्जनीयः' इत्येतत्तु शर्परयोः कुप्वोः प्राप्तम्, केवलयोस्त्वप्राप्तमिति न तं प्रत्यस्य बाधकलक्षणयोग इति। स्यादेतत्,—मा भूदपवादत्वम्, परत्वात्तु शर्परयोरपि कुप्वोरयमेव विधिः प्राप्नोति? तत्राह—**पूर्वत्रासिद्धे इति**।

परिहारान्तरमाह—**केचित्त्विति**। 'कुप्वोः' इत्येको योगः, अत्र 'शर्परे विसर्जनीयः' इति वर्तते, शर्परयोः कुप्वोः विसर्जनीय एव भवति, न ᳵकᳶ पाविति। किञ्च—पूर्वसूत्रे 'नेति वक्तव्ये विसर्जनीयविधानं तद्विकारनिवृत्त्यर्थम्' इत्युक्तम्। तेन शर्परयोः कुप्वोरस्य विधेरप्रसङ्ग एव।।३७।।

**भावबोधिनी**

हो जाने पर परवर्ती का अभाव हो जाने के कारण (उनमें) विप्रतिषेध नहीं होता है। इस वचन से 'शर्परे विसर्जनीयः' इसी की प्रवृत्ति होती है।

**विमर्श**—'कुप्वोः ᳵकᳶपौ च' यह सूत्र क्, ख् परे विसर्ग का जिह्वामूलीय और प्, फ् परे उपध्मानीय आदेश करता है। परन्तु इन सभी के परे रहते 'विसर्जनीयस्य सः' इस सूत्र से सत्व भी प्राप्त है। फलतः प्रस्तुत सूत्र निरवकाश होकर 'विसर्जनीयस्य सः' इस का बाधक होता है और जिह्वामूलीय तथा उपध्मानीय ही होते हैं और पक्ष में विसर्ग भी होता है। परन्तु 'वासः क्षौमम्' 'अद्भिःप्सातम्' आदि में शर्परक खर् है और कवर्ग तथा पवर्ग परे है। अतः 'शर्परे विसर्जनीयः' और 'कुप्वोः' दोनों की प्राप्ति में किसे किया जाय। यह प्रस्तुत सूत्र 'शर्परे विसर्जनीयः' का अपवादनहीं बन सकता क्योंकि इसके प्राप्त रहते और अप्राप्त रहते 'कुप्वोः' की प्रवृत्ति होती है। किन्तु एक स्थिति यह भी है कि किसी लक्ष्य में जैसे कि 'वासः' क्षौमम्, अद्भिःप्सातम्' में दोनों की प्राप्ति होने पर 'विप्रतिषेधे परम्' के अनुसार 'कुप्वोः' की प्रवृत्ति होनी चाहिये? इसका समाधान यह है कि जहाँ तुल्यवाले दो शास्त्र एक साथ प्राप्त हों वहीं विप्रतिषेध होता है। परन्तु यहाँ तो 'पूर्वत्रासिद्धम्' सूत्र से पूर्ववर्ती के प्रति परवर्ती शास्त्र असिद्ध हो जाता है, रहता ही नहीं है, तब बाधक कैसे होगा। अतः 'शर्परे विसर्जनीयः' की ही प्रवृत्ति होकर विसर्ग ही रहता है, जिह्वामूलीय और उपध्मानीय नहीं होते हैं।

(अनु०) कुछ विद्वान् इसी कारण योगविभाग करते हैं—'कुप्वोः' [ इसमें 'शर्परे विसर्जनीयः' की अनुवृत्ति होने से ] शर्परक कवर्ग तथा पवर्ग परे रहने पर विसर्ग का विसर्ग ही आदेश होता है। [ अतः उक्त लक्ष्यों में विसर्ग हीहोता है। ] यह योग विभाग किसलिये है? 'ᳵकᳶपौ' यह दूसरा योग कहा जायगा, उसका बाध करने के लिये यह प्रथम योग होगा [ अतः इनमें विसर्ग ही रहता है ᳵक ᳶप आदेश नहीं होते हैं।।३७।।

## ३८३४. सोऽपदादौ।।३८।। (१५२)

**सकार आदेशो भवति विसर्जनीयस्य कुप्वोरपदाद्योः परतः, पाशकल्पककाम्येषु। 'याप्ये पाशप्' (५।३।४७)–पयस्पाशम्[1]। 'ईषदपरिसमाप्तौ कल्पप्'(५।३।६७)–पयस्कल्पम्, यशस्कल्पम्। 'प्रागिवात्कः' (५।३।७०)–पयस्कम्, यशस्कम्। 'काम्यच्च' (३।१।९)–पयस्काम्यति। यशस्काम्यति।**

**अपदादाविति किम्? पय ᳲकामयते। पय ᳲपिबति।**

**❀ सोऽपदादावित्यनव्ययस्येति वक्तव्यम्। ❀ इह मा भूत्–प्रातः कल्पम्। पुनः कल्पमिति।**

**न्यासः**

**सोऽपदादौ।। पूर्वस्यायमपवादः।** 'अपदादौ' इति सुब्व्यत्ययेन द्विवचनस्य स्थाने एकवचनम्; अन्यथा ह्यपदादित्वं कुप्वोर्विशेषणमिति नोपपद्यते। द्वित्वे सत्यपदाद्योरिति कुर्यात्। **पाशकल्पककाम्येष्विति** सम्भवदर्शनम्, न परिगणनम्; व्यवच्छेद्याभावात्। **पयस्पाशमिति।** 'याप्ये पाशप्'। **पयस्कल्पमिति।** 'ईषदसमाप्तौ कल्पप्' इत्यादिना कल्पप्। **पयस्कमिति।** अज्ञातं पयः—'अज्ञाते' इति कः। **पयस्काम्यतीति।** 'सुप आत्मनः क्यच्' 'काम्यच्च', इति काम्यच्। **पयᳲ कामयत इति।** 'कमेर्णिङ्'। **पयᳲ पिबतीति।** 'पा पाने', पाघ्रादिसूत्रेण पिबादेशः।

**सोऽपदादावनव्ययस्येति वक्तव्यमिति।** 'सोऽपदादौ' इत्यस्मिन् सूत्रेऽनव्ययविसर्जनीयस्य सकारादेशो भवतीत्येतर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'वा शरि' इत्यतो वाग्रहणमनुवर्तते, सा च व्यवस्थितविभाषा, तेनानव्ययस्यैव भविष्यतीति, नाव्ययस्य।

**पदमञ्जरी**

**सोऽपदादौ।।** 'अपदादौ' इति कुप्वोरेतद्विशेषणम्, व्यत्ययेन त्वेकवचनम्। पूर्वस्यायमपवादः। **पाशकल्पककाम्येष्विति।** सम्भवप्रदर्शनमेतत्, न परिगणनम्; अन्यस्यासम्भवात्। **प्रातःकल्पमिति।** अधिकरण-शक्तिप्रधानस्यापि प्रातः शब्दस्य वृत्तिविषये शक्तिमद्वाचित्वादीषदसमाप्त्या योगः, यथा—दोषाभूतमहः, दिवाभूता रात्रिरित्यत्राभूततद्भावयोगः।

**भावबोधिनी**

अपदादि कवर्ग, पवर्ग परे रहते विसर्ग का सकार आदेश होता है—'पाश, कल्प, क और काम्य शब्दों के परे रहते। [ इन चार में सूत्र की प्रवृत्ति सम्भव होने से इन्हें लिखागया है। अतः परिगणन न समझ कर सम्भव समझना चाहिये। ] 'पाप्ये पाशप्' (५।३।९७) [ से पाशप् = पाश प्रत्यय होने पर ]—पयस्पाशम्। [ कुत्सितं पयः—इस अर्थ में पाशप् होता है, कुत्सित जल ] 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' (५।५।६७) सूत्र से कल्पप् = कल्प प्रत्यय होने पर—पयस्कल्पम् यशस्कल्पम्। 'प्रागिवात् कः' (५।३।७०) सूत्र से क प्रत्यय होता है—पयस्कम्, यशस्कम्। 'काम्यच्च' (३।१।९) सूत्र से [ नामधातु रूप बनाने के लिये सुबन्त से काम्यच् = काम्य प्रत्यय होता है। ] पयस्काम्यति। यशस्काम्यति। [ सभी में विसर्ग का स् होता है जिह्वामूलीय और उपध्मानीय नहीं होते हैं। ]

अपदादि (= पद के आदि में न होने वाला) रहने पर—इसका क्या फ़ल है? पयᳲकामयते। पयᳲपिबति। [ इनमें पद के आदि के कवर्ग पवर्ग परे होने से विसर्ग के जिह्वामूलीय और उपध्मानीय आदेश होते हैं। ]

❀ अपदादि कवर्ग, पवर्ग परे स होता है—यह अनव्यय का होता है ऐसा कहना चाहिये। ❀ यहाँ न होने लगे—प्रातःकल्पम्। पुनः कल्पम्। [ कल्पप् प्रत्यय होने से अपदादि कवर्ग रहने पर भी सत्व नहीं होता है क्योंकि 'प्रातः, पुनः'—ये दोनों अव्यय हैं।–]

---

१. यशस्पाशम्—इत्यधिकं पुस्तकान्तरे।

**❀ रोः काम्ये नियमार्थम्। ❀ रोरेव काम्ये, नान्यस्येति नियमार्थं वक्तव्यम्। पयस्काम्यति। यशस्काम्यति। इह मा भूत्–गीः काम्यति। धूःकाम्यति।**

**❀ उपध्मानीयस्य कवर्गे परतः सकार आदेशो भवतीति वक्तव्यम्। ❀ किं प्रयोजनम्? 'उब्जिरुपध्मानीयोपधः पठ्यते' इति दर्शने अभ्युद्गः, समुद्ग इति यथा स्यात्।।**

**न्यासः**

**रोः काम्ये नियमार्थमिति** एतद् ग्रहणकवाक्यम्। **रोरेवेति** अस्यैव विवरण्। वक्तव्यशब्दस्यात्रापि स एवार्थः। व्याख्यानं च पूर्ववदेव कर्तव्यम्। 'रोः' इति विसर्जनीयापेक्षया स्थानषष्ठी। रोर्यो विसर्जनीयस्तस्येत्यर्थः।

**उब्जिरुपध्मानीयोपधः पठ्यत इति**। इह केषाञ्चिद् दर्शनमिदम्—'उब्ज आर्जवे' इति, उपध्मानीयस्य त्वश्रवणम्; कृतजश्त्वनिर्देशात्। अन्येषां तु दर्शनम् 'उद्ज आर्जवे' इति। तात्राद्यपक्ष उब्जेः 'हलश्च' इति घञि 'चजोः कु घिण्ण्यतोः' इति कुत्वे उपध्मानीयस्य 'झलां जश् झशि' इति बकारे अभ्युब्ग समुब्ग इत्यनिष्टं रूपं स्यात्। तस्मादुपध्मानीयस्य कवर्गे परतः सकारो वक्तव्यः, सकारे ह्युपध्मानीयरय कृते जश्त्वेन दकारः, एवमभ्युद्गः समुद्गः—इतीष्टं सिध्यति। द्विर्वचनप्रतिषेधोऽप्युपध्मानीयस्य वक्तव्य एव; अन्यथा ह्युब्जिजिषतीत्यत्र 'अजादेर्द्वितीयस्य' इत्युपध्मानीयस्य द्विर्वचनं प्रसज्येत। इतरस्मिंस्तु दर्शने-असिद्धकाण्डे भ उब्जेर्वक्तव्यः, अन्यथोब्जिजिषति, उब्जितेत्यादि न सिध्येत्। तथा चोक्तम्—'असिद्धे भ उब्जेः' इति। असिद्धवचनमसिद्धत्वाद्भकारस्य। उब्जिजिषतीत्यत्र 'न न्द्राः संयोगादयः' इति द्वितीयस्यैकाचो द्विर्वचनप्रतिषेधो यथा स्यात्। तर्ह्ययं भकारो वक्तव्यः? न वक्तव्यः; निपातनेन सिद्धत्वात्। किं पुनर्निपातनम्? 'भुजन्युब्जौ पाण्युपतापयोः' इति। अत्र हि तर्हि प्राप्नोति—अभ्युद्गः, समुद्ग इति? अकुत्वविषये निपातनमित्यदोषः।।३८।।

**पदमञ्जरी**

**रोः काम्ये नियमार्थमिति**। एतदेव विवृणोति—**रोरेवेति**। **गीः काम्यतीति**। उत्तरसूत्रेण षत्वं न भवति। यदि पुनस्तत्रैवेदमुच्यते? नैवं शक्यम्; षत्वमात्रप्रतिषेधेऽप्यनेन सत्वं प्राप्नोति। **उपध्मानीयस्य चेति**। अस्यैव विवरणम्—**कवर्गे परत इति**। **उब्जिरयमित्यादि**। यथा पुनरव दकारोपध एषितव्यः, तथा 'हयवरट्' इत्यत्रोक्तम्।।३८।।

**भावबोधिनी**

❀ रु का काम्य परे रहते नियमार्थ ग्रहण है। ❀ रु के ही रेफ का काम्य परे सत्व होता है अन्य का नहीं, इस नियम के लिये कहना चाहिये। उदा॰ पयस्काम्यति, यशस्काम्यति। [ पय आत्मनः इच्छति, यश आत्मनः इच्छति—इस अर्थ में 'काम्यच्च' से काम्य = काम्य प्रत्यय होता है, इसीके परे रहते विसर्ग का स् होता है ] इसमें न होने लगे—गीः काम्यति, धूः काम्यति। ] [ यहाँ रेफ का विसर्ग तो है किन्तु यह रु का रेफ नहीं है, स्वतन्त्र रेफ का विसर्ग है। अतः विसर्ग का सत्व नहीं होता है। ]

❀ कवर्ग परे रहते उपध्मानीय का सकार आदेश होता है—ऐसा कहना चाहिये। ❀ क्या प्रयोजन है? 'उब्ज्' धातु उपध्मानीय उपधावाला पढ़ा जाता है, इस दर्शन = मत में 'अभ्युद्गः, समुद्गः—ये जिस प्रकार से बन सकें।

[ भाव यह है—'उब्ज' के मूल रूप में दो प्रकार के मत हैं। (१) 'उब्ज्' ऐसा है, इससे 'हलश्च' सूत्र से घञ् = अ प्रत्यय, 'चजोः कुः घिण्ण्यतोः' सूत्र से ज् का कुत्व ग्, ब् उपध्मानीय का 'झलां जश् झशि' सूत्र से जश्त्व करके 'ब्' होने पर अभि + उब्ग = अभ्युब्गः समुब्गः, ऐसा अनिष्टरूप होने लगेगा। इसलिये कवर्ग परे रहते उपध्मानीय का सकार आदेश कहना चाहिये, इस उपध्मानीय का सकार करने के बाद जश्त्व से सकार का दकार होने पर—अभ्युद्गः, समुद्गः—ऐसा रूप होता है। जो 'उद्ज' ऐसा मानते हैं' उनके मत में 'भुज-न्युब्जौ पाण्युपतापयोः' के आधार पर निपातन से निर्वाह करना चाहिये और यह निपातन वहीं होता है जहाँ कुत्व नहीं होता है।।३८।।

**३८३५. इणः षः।।३९।। (१५३)**

**'अपदादौ' इति वर्त्तते। इण उत्तरस्य विसर्जनीयस्य षकारादेशो भवति कुप्वोरपादाद्योःपरतः, पाशकल्पककाम्येषु। पाश–सर्पिष्पाशम्। यजुष्पाशम्। कल्प–सर्पिष्कल्पम्, यजुष्कल्पम्। क–सर्पिष्कम्, यजुष्कम्। काम्य–सर्पिष्काम्यति, यजुष्काम्यति।**

**'अपदादौ' इत्येव–अग्निः करोति, वायुः करोति। अग्निः पचति, वायुः पचति। 'कुप्वोः' इत्येव–सर्पिस्ते, यजुस्ते।**

**न्यासः**

**इणः षः**। पूर्वेण सकारे प्राप्ते तदपवादः षकारो विधीयते। **सर्पिस्तत्रेति**। 'विसर्जनीयस्य सः' इति स एव भवति।

इतः प्रभृति यदि षकार एवानुवर्तते, न सकारोऽपि; तदा 'नमस्पुरसोर्गत्योः', 'अतः कृकमिकंस' इत्यादौ सकारग्रहणं कर्तव्यम्। क्रियमाणेऽपि यदि षकारस्तत्रानुवर्तते, तदा सोऽपि, प्राप्नोति सङ्करः। अथेतः प्रभृति यदि सकार एवानुवर्तते, न षकारोऽपि, तदा 'इदुदुपधस्य चाप्रत्ययस्य', 'द्विस्त्रिश्चतुरिति कृत्वोऽर्थे', 'इसुसोः सामर्थ्ये', 'नित्यं समासेऽनुत्तरपदस्थस्य'—इत्येतेषु योगेषु षकारग्रहणं कर्तव्यम्। क्रियमाणेऽपि तस्मिन् यदि

**पदमञ्जरी**

**इणः षः**।। पूर्वेण सत्वे प्राप्ते तदपवादः षत्वं विधीयते। अत्र केचिदाहुः "योऽयम् 'सोऽपदादौ' इति सकारः, स एवोत्तरत्र सर्वत्र कुप्वोः प्रकरणे विधीयते, अनेन तु तस्यैव सकाररूपेण उत्तरस्य षत्वं विधीयते, न विसर्जनीयस्य, 'अपदादौ' इति चात्र न सम्बध्यते" इति। स तर्हि सकारः स्थानी निर्देष्टव्यः? नेत्याह,। प्रकृतोऽनुवर्त्तते—'सोऽपदादौ' इति, तस्य 'इणः' इति पञ्चम्या षष्ठी प्रकल्प्यते।

एवमपि वक्ष्यमाणैर्योगैर्विहितस्य सकारस्य षत्वं न प्राप्नोति, अस्मिन्कर्त्तव्ये तेषामसिद्धत्वात्? नैष दोषः; आचार्यप्रवृत्तिर्ज्ञापयति—न योगे योगोऽसिद्धः, किं तर्हि? प्रकरणे प्रकरणमसिद्धमिति; यदयम् 'उपसर्गादसमासेऽपि' इत्यत्र 'असमासेऽपि' ग्रहणं करोति। कथं कृत्वा ज्ञापकम्? अन्तरेणाप्यसमासेपिग्रहणं विशेषानुपादानात्समासासमासयोर्णत्वं भविष्यति, न च समासे 'पूर्वपदात्संज्ञायामगः' इति नियमाण्णत्वस्य निवृत्तिः, नियमे कर्त्तव्ये 'उपसर्गात्' इत्यस्य णत्वस्यासिद्धत्वात्। पश्यति त्वाचार्यः—प्रकरणे प्रकरणमसिद्धमिति, ततः 'असमासेपि' ग्रहणं करोति, तदा हि सह नियमेन सर्वमेव णत्वप्रकरणमेकमिति नियमे कर्तव्ये उपसर्गादिति णत्वस्य सिद्धत्वान्नियमेन व्यावृत्तिः स्यादिति कर्त्तव्यं समासेऽपिग्रहणम्। तदेवं सकारस्य षत्वं विधीयते, न विसर्जनीयस्य; उत्तरत्र च सत्वमेवानुवर्त्तते, न षत्वमिति।

**भावबोधिनी**

'अपदादौ' (अपदादि रहने पर) इसकी अनुवृत्ति होती है। इण् से उत्तरवर्ती विसर्ग का षकार आदेश अपदादि कवर्ग, पवर्ग परे—पाश, कल्प, क, काम्य' शब्दों में होता है। उदा॰ पाश—सर्पिष्पाशम्। यजुष्पाशम्। [ सर्पिः + पाशम्, विसर्ग का षत्व। ] कल्प-सर्पिष्कल्पम्, यजुष्कल्पम्। [ यजुः + कल्पम्, विसर्ग का षकार ] क—सर्पिष्कम्, यजुष्कम्। [ सर्पिः + क, विसर्ग का ष ] काम्य-सर्पिष्काम्यति, यजुष्काम्यति। [ सर्पिः + काम्यति, विसर्ग का षत्व। पाश, कल्प, क, काम्य—इन प्रत्ययों का निर्देश पूर्वसूत्र में किया जा चुका है। पूर्ववर्ती सूत्र से विसर्ग का सत्व प्राप्त है। उसका अपवाद यह षत्व है। ]

अपदादि कवर्ग-पवर्ग परे हीहोता है—अग्निः करोति, वायुः करोति। अग्निः पचति, वायुः पचति। [ इनमें पदादि कवर्ग-पवर्ग परे होने से षत्व नहीं होता है। ] कवर्ग-पवर्ग परे ही—सर्पिस्ते। यजुस्ते। [ इनमें षत्व न होने से ष्टुत्व भी नहीं होता है। ]

**इत उत्तरम् 'सः' इति, 'इणः षः' इति च वर्तते; तत्र इणः परो यो विसर्जनीयस्तस्य षकारो भवति, अन्यस्य सकारो भवति।।**

**३८३६. नमस्पुरसोर्गत्योः।।४०।। (१५४)**

**नमस्, पुरस्–इत्येतयोर्गतिसंज्ञकयोर्विसर्जनीयस्य सकारादेशो भवति कुप्वोः परतः। नमस्कर्ता। नमस्कर्तुम्। नमस्कर्तव्यम्।**

**गत्योरिति किम्? पूः, पुरौ, पुरः करोति।।**

**न्यासः**

सकारोऽप्यनुवर्तते, तदा सोऽपि प्राप्नोति, एषोऽपि सङ्करः प्रसज्येत? इत्याह—**उत्तरमित्यादि**। एतेन सकारषकारयोः करणं यद् देशितं तन्निरस्तम्। यस्तु सङ्करदोषो दर्शितः, तस्याप्यपाकरणमाह—**तत्रेत्यादि**। कथं पुनरुभयोरुत्तरत्र सममनुवृत्तौ सत्यामेष विषयविभागो लभ्यते? मण्डूकप्लुतिन्यायेनानुवर्त्तमानत्वात्।।३९।।

**नमस्पुरसोर्गत्योः**।। 'अपदादौ' इति निवृत्तम्। नमःशब्दस्य 'साक्षात्प्रभृतीनि च' इति गतिसंज्ञा, पुरःशब्दस्य च 'पुरोऽव्ययम्' इत्यनेन।

**पूः, पुरौ, पुरःकरोतीति**। 'पृ पालनपूरणयोः' 'भ्राजभ्रास' इत्यादिना क्विप्, 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वम्, रपरत्वम्, स्वादयः, हल्ङ्यादिलोपः, 'र्वोरुपधाया दीर्घः' इत्येकवचने दीर्घः। पूः, पुरावित्यत्रागतिसंज्ञकत्वात्

**पदमञ्जरी**

अयमपि पक्षो निर्दोष एव, किन्तु षष्ठीप्रकल्पनं ज्ञापकाश्रयणं चेति प्रतिपत्तिगौरवप्रसङ्गाद् **वृत्तिकारेण** नाश्रितः। कस्तर्हि तस्य पक्षः? उत्तरत्र द्वयमप्यनुवर्त्तते—सकारः, षकारश्चेति। यद्येवम्, सर्वत्र द्वयमपि प्राप्नोति—अथ सकारो वानुवर्तते 'इदुदुपधस्य च'' इत्यादौ यत्रेणः परो विसर्जनीयस्तत्रापि सकार एव प्राप्नोति; अथ षकार एवानुवर्त्तते 'नमस्पुरसोर्गत्योः' इत्यादौ यत्रानिणः परो विसर्जनीयस्तत्रापि षकार एव प्राप्नोति? नैष दोषः; 'इणः षः' इति समु५ायस्य स्वरितत्वं प्रतिज्ञायते। यदाह—**इणः ष इति वर्त्तत इति**। ततः षत्वं तावदनिण्विषये न भविष्यति। एवमपि षत्वविषये सत्वमपि प्राप्नोति? न; षकारेण तस्य बाधनात्, चकाराकरणाच्च। यदि परमनुवृत्तिसामर्थ्यात्तत्प्रसङ्गः? तदपि न; उत्तरार्थमप्यनुवृत्तिसम्भवात्। तदिदमुक्तम्—**य इणः परो विसर्जनीयस्तस्य षकार आदेशो भवत्यन्यस्य तु सकार इति**। किमर्थं पुनरिदमारभ्यते, यावता सत्वमेवात्र प्रकरणे विधीयताम्, तस्य त्वादेशसकारत्वात् 'इण्कोः' इति षत्वं भविष्यति? न सिध्यति; 'अपदान्तस्य' इति तत्र वर्त्तते, पदान्तार्थोऽयमारभः।।३९।।

**नमस्पुरसोर्गत्योः**।। अतः प्रभृति 'अपदादौ' इति निवृत्तम्। नमःशब्दस्य तु 'पुरोऽव्ययम्' इति।

**पुरः पश्येति**। 'पृ पालनपूरणयोः', 'भ्राजभास' इत्यादिना क्विप्, तदन्ताच्छस्। अस्य तदन्ततां दर्शयितुम्—**पूः पुरावित्यनयोरुपन्यासः**।।४०।।

**भावबोधिनी**

इस सूत्र के बाद 'सः' यह है इसमें 'इणः षः' इसकी अनुवृत्ति होती है, इसमें इण् से परे जो विसर्ग है उसका षकार होता है, अन्य विसर्ग का सकार होता है। [ अतः दोनों के लक्ष्य अलग-अलग हो जाने से परस्पर सांकर्य नहीं होता है। ]।।३९।।

नमस् और पुरस्—दोनों गतिसंज्ञकों के विसर्ग का सकार आदेश कवर्ग और पवर्ग परे रहते होता है। उदा० नमस्कर्ता, नमस्कर्तुम्, नमस्कर्तव्यम्। [ नमस् + कर्ता, स् का रुत्व, रेफ का विसर्ग, विसर्ग का पुनः सत्व होता है। ]

गतिसंज्ञकों **के**—इसका क्या फल है? पूः, पुरौ, पुरः, + करोति। [ यहाँ पुर् यह प्रातिपदिक नगरवाची है गतिसंज्ञक अव्यय नहीं है। अतः इसके विसर्ग का सत्व नहीं होता है। ]।।४०।।

## ३८३७. इदुदुपधस्य चाप्रत्ययस्य।।४१।। (१५५)

**इकारोपधस्य, उकारोपधस्य चाप्रत्ययस्य विसर्जनीयस्य षकार आदेशो भवति कुप्वोः परतः। निर्दुर्बहिराविश्चतुर्प्रादुस्। निस्–निष्कृतम्, निष्पीतम्। दुस्–दुष्कृतम्, दुष्पीतम्। बहिस्–बहिष्कृतम्, बहिष्पीतम्। आविस्–आविष्कृतम्, आविष्पीतम्। चतुर्–चतुष्कृतम्, चतुष्कपालम्। चतुष्कण्टकम्, चतुष्कलम्। प्रादुस्–प्रादुष्कृतम्, प्रादुष्पीतम्।**

**अप्रत्ययस्येति किम्? अग्निः करोति, वायुः करोति।**

**न्यासः**

पुरःशब्दस्य सत्वं न भवति, तस्मिन्नसति विसर्जनीय एव स्यात्; पक्ष उपध्मानीयोऽपि। पुरः करोतीत्यत्रागतिसंज्ञकत्वात् सकारो न भवति, तस्मिन्नसति विसर्जनीय एव भवति, पक्षे जिह्वामूलीयोऽपि। नमःशब्दस्य तु नमःकृत्वेति प्रत्युदाहरणं वेदितव्यम्। वृत्तिकृता तु सुबोधत्वान्न दर्शितम्।।४०।।

**इदुदुपधस्य चाप्रत्ययस्य**।। इच्च उच्च तौ इदुतौ। इकारोकारावुपधे यस्य स तथोक्तः। **निर्दुर्बहिरित्यादि**। सम्भवदर्शनार्थमेतत्, न परिगणनम्; व्यावर्त्त्याभावात्। **मातुः करोति, पितुः करोतीति**। अत्र यथा न भवति तथा वक्ष्यति। **पुंस्कामा, मुहुःकामेति**। अत्रापि यथा न भवति तथा वक्ष्यति। **चतुष्कपालम्, चतुष्कण्टकमिति**। चतुःशब्दस्य कपाल-कण्टकशब्दाभ्यां बहुव्रीहिः, समाहारे द्विगुर्वा। 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इति स्त्रीलिङ्गता न भवति; 'पात्रादीनां प्रतिषेधः' इति वचनात्। **मातुः करोति पितुः करोतीति** देश्यम्।

**पदमञ्जरी**

**इदुदुपधस्य चाप्रत्ययस्य**।। इदुतावुपधे यस्य स इदुदुपधः समुदायः, तस्य यो विसर्जनीय इति वैयधिकरण्येन सम्बन्धः। अप्रत्ययस्येत्येदपि व्यधिकरणमेव। **निर्दुर्बहिराविश्चतुष्प्रादुरिति**। अन्येषां सम्भवतां प्रतिषेधस्य वक्ष्यमाणत्वान्नेदं परिगणनम्, किं तर्हि? सम्भवप्रदर्शनम्। **चतुष्कपालमिति**। तद्धितार्थे द्विगुः, 'संस्कृतं भक्षाः' इत्यणः 'द्विगोर्लुगनपत्ये' इति लुक्। **चतुष्कण्टकमिति**। बहुव्रीहिः।

**मातुः करोतीत्यादि**। चोद्यम्—अत्र हि मातृ + अस् इति स्थिते 'ऋत उत्' इत्युकारो भवन् 'यो ह्युभयोः स्थाने' इति न्यायेन रपरो भवति, ततश्च 'रात्सस्य' इति प्रत्ययसकारस्य लोपे कृते रेफस्य विसर्जनीयो भवति। परिहरति—**कस्कादिष्विति**। **एकादेशनिमित्तादिति**। कर्मधारयः, एकादेशरूपनिमित्तादित्यर्थः, एकादेशशास्त्रं वा निमित्तं यस्योकारस्य तस्मादित्यर्थः।

**भावबोधिनी**

इकारोपध और उकारोपध अप्रत्यय के विसर्ग का षकार आदेश कवर्ग और पवर्ग परे रहते होता है अर्थात् प्रत्यय से भिन्न जिस शब्द की उपधा में इकार या उकार है ऐसे विसर्गान्त शब्द के विसर्ग का षत्व होता है। निस्, दुस्, बहिस्, आविस्, चतुर्, प्रादुस्। [ इनमें यह षत्व सम्भव है। ] उदा॰ निस्—निष्कृतम् निष्पीतम्। दुस्-दुष्कृतम्, दुष्पीतम्। बहिस्—बहिष्कृतम्, बहिष्पीतम्। आविस्—आविष्कृतम्, आविष्पीतम्। चतुर्—चतुष्कृतम्, चतुष्कपालम्।

चतुष्कण्टकम्। चतुष्कलम्। प्रादुस्—प्रादुष्कृतम्, प्रादुष्पीतम्। [ इनमें स् का रुत्व, और ष् विसर्ग करने के बाद प्रस्तुत सूत्र से षत्व होता है। ]

अप्रत्यय विसर्ग का—इसका क्या फल है? अग्निः करोति, वायुः करोति। [ यहाँ सु प्रत्यय का विसर्ग होने से षत्व नहीं होता है। ]

**मातुः करोति, पितुः करोति। अत्र 'रात्सस्य' (८।२।२४) इति सकारलोपे कृते रेफस्य यो विसर्जनीयः, तस्याप्रत्ययविसर्जनीयत्वात् षत्वं प्राप्नोति? कस्कादिषु (८।३।४८) तु भ्रातुष्पुत्रग्रहणं ज्ञापकम्–'एकादेशनिमित्तत्वात् षत्वप्रतिषेधस्य'। (म.भा.)**

**न्यासः**

मातृपितृशब्दाभ्यां षष्ठ्येकवचनम्, 'ऋत उत्' इत्युत्वमेकादेशः, रपरत्वम्, 'रात् सस्य' इति सलोपः, रेफस्य विसर्जनीयः। स च रेफस्याप्रत्ययत्वात् प्रत्ययविसर्जनीयो न भवति, अतः षत्वं प्राप्नोति। तत्कस्मान्न भवति? इत्याह—**कस्कादिष्वित्यादि**। परीहारः। एकादेशश्चासौ निमित्तं चेति कर्मधारयः। यद्येकादेशादिणो निमित्तभूतात् षत्वं स्यात् कस्कादिषु भ्रातुष्पुत्रशब्दस्य ग्रहणं न कुर्यात्; अनेनैव सिद्धत्वात्, कृतं च, एतदेव ज्ञापयति—**एकादेशनिमित्तात् षत्वं न भवतीति**।

**पुम्मुहुसोरित्यादि**। वक्तव्य इति व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—उत्तरसूत्रेऽन्यतरस्यांग्रहण-मुभयोर्योगयोः शेषभूतं विज्ञायते। सा व्यवस्थितविभाषा, तेन पुमुहुसोर्न भवति। अन्येषां तु नित्यमेव भविष्यति। पुमित्यस्य ग्रहणं रुत्वादेशपक्षमाश्रित्य कृतम्। सकारादेशपक्षे हि विसर्जनीयाभावात् प्रतिषेधवचनमनर्थकं स्यात्। **पुंस्कामेति**। 'पुमः खय्यम्परे' इति रुः, तस्य विसर्जनीयः, तस्यापि विसर्जनीय इति सकारः। जिह्वामूलीयस्तु यथा न भवति तथा पूर्वमेव प्रतिपादितम्। **मुहु≍कामेति**। षत्वे प्रतिषिद्धे जिह्वामूलीयो भवति। क्वचित् **मुहुस्कामेति सकार** पठ्यते। तत्र यथा पुंस्कामेत्यत्र जिह्वामूलीयाभावः प्राक् प्रतिपादितस्तथेहापि प्रतिपाद्यः। **नैष्कुल्यम्, दौष्पुरुष्यमिति** ब्राह्मणादित्वात् ष्यञि कृते तन्निमित्तायां च वृद्धाविदुदुपधत्वाभावात् षत्वं न प्राप्नोति। नि३ष्कुलम्, दु३ष्पुरुषः—इत्यत्रापि 'गुरोरनृतः'—इत्यादिना प्लुते विहिते नैव तत् प्राप्नोति, इदुदुपधत्वाभावादिति यो देशयेत्, तं प्रत्याह—**नैष्कुल्यमित्यादि**। वृद्धेस्तावद्बहिरङ्गत्वं तद्धितापेक्षत्वात्, तद्धितो भवाद्यर्थापेक्षत्वाद्बहिरङ्गः। तेन तदाश्रितापि वृद्धिर्बहिरङ्गा भवति। प्लुतोऽपि दूराद्धूतादावर्थे वाक्यस्य विधीयमानत्वाद्बहिरङ्गः, षत्वं तु वर्णस्य

**पदमञ्जरी**

**पुम्मुहुसोरिति**। अव्युत्पन्नावेताविति प्रतिषेध उच्यते। तत्र पुंसः प्रतिषेधेन नार्थः। षत्वं कस्मान्न भवति? विसर्जनीयाभावात्, उक्तं हि 'सम्पुंकानां सत्वम्' इति, तत्र सत्वस्यासिद्धत्वाभावाद्विसर्जनीयाभावः। तच्चावश्यं सत्वं वक्तव्यम्, रुविधौ विसर्जनीयस्य षत्वप्रतिषेधेऽपि 'कुप्वोः ≍क≍प् पौ च' इत्येव विधिः प्राप्नोति—मुहुः कामो यस्याः सा मुहःकामा तत्र 'कुप्वोः ≍क≍प् पौ च' इत्येष एव विधिर्भवति। क्वचित्तु **मुहुस्कामेति** सत्वं पठ्यते सोऽपपाठः, न ह्यत्र सत्वसम्भवः; सूत्रवार्त्तिकयोरनिबद्धत्वात्। **नैष्कुल्यमिति**। ब्राह्मणादित्वात् ष्यञ्। **नि३ष्कुलं**

**भावबोधिनी**

मातुः करोति, पितुःकरोति। [ मातृ + ङस् = अस्, पितृ + ङस् = अस्—इनमें 'ऋत उत्' सूत्र से ऋ तथा अ इन दोनों का उकार आदेश होने पर रपर होता है—मातुरस्, पितुरस्। ] इनमें 'रात् सस्य' सूत्र से स् का लोप कर देने पर रेफ का जो विसर्ग होता है, वह अप्रत्यय का विसर्ग है अतः षत्व प्राप्त होता है? 'कस्कादिगण' में 'भ्रातुष्पुत्र' शब्द का ग्रहण करना—'एकादेश शास्त्ररूप निमित्त षत्वप्रतिषेध का ज्ञापक बनता है। [ भाव यह है कि 'भ्रातुष्पुत्र' शब्द में षत्व करने के लिये कस्कादिगण (८।३।५०) में इसका पाठ किया गया है। यदि भ्रातृ + ङस् = अस् 'ऋत उत्' से उकार आदेश रपर, स् लोप के बाद भ्रातुर् इसमें रेफ विसर्ग का षत्व यदि इसी सूत्र सेहो जाता तो उस गण में 'भ्रातुष्पुत्र' शब्द का पाठ व्यर्थ होता है। वही पाठ यह ज्ञापित करता है कि जहाँ एकादेशरूप निमित्त के बाद विसर्ग हो वहाँ उस विसर्ग का षत्व नहीं होता है। अतः उसी ज्ञापन से 'मातुःकरोति' आदि में षत्व का वारण हो जाता है। और वहाँ 'भ्रातुष्पुत्र' का पाठ चरितार्थ हो जाता है। ]

**❀ पुम्मुहुसोः प्रतिषेधो वक्तव्यः। ❀ पुंस्कामा। मुहु ≍स्कामा[1]। नैष्कुल्यम्, दौष्कुल्यम्, दौष्पुरुष्यम्। नि३ष्कुलम्, दु३ष्कुलम्। दु३ष्पुरुषः। बहिरङ्गलक्षणयोर्वृद्धिप्लुतयोरसिद्धत्वात् षत्वं प्रवर्त्तते।।**

## ३८३८. तिरसोऽन्यतरस्याम्।।४२।। (१५६)

**तिरसो विसर्जनीयस्यान्यतरस्यां सकारादेशो भवति कुप्वोः परतः। तिरस्कर्ता। तिरस्कर्तुम्। तिरस्कर्तव्यम्। तिरःकर्ता। तिरःकर्तुम्। तिरःकर्तव्यम्।**

**'गतेः' इत्येव–तिरः कृत्वा काण्डं गतः।।**

### न्यासः

पदसम्बन्धिनो विधीयत इत्यल्पापेक्षीत्यन्तरङ्गम्। तेनान्तरङ्गे षत्वे कर्त्तव्ये वृद्धिप्लुतयोर्बहिरङ्गयोरसिद्धत्वात् प्रवर्त्तत एव षत्वम्।।४१।।

**तिरसोऽन्यतरस्याम्**।। 'कुप्वोः ≍क ≍पौ च' इति प्राप्त इदं वचनम्। गतिग्रहणं चेह स्वर्यते। गतिसंज्ञा पुनस्तिरःशब्दस्य 'तिरोऽन्तर्धौ' इत्यनेन।

**तिरः कृत्वा काण्डं गत इति**। तत्रान्तर्धेरविवक्षितत्वाद् गतिसंज्ञा न भवति।।४२।।

### पदमञ्जरी

**दु३ष्कुलमिति**। 'गुरोरनृतः' इत्यादिना प्लुतः। **बहिरङ्गलक्षणयोरिति**। बहिर्भूततद्धितापेक्षत्वाद्वृद्धिर्बहिरङ्गा, प्लुतोऽपि दूराद्धूतादिकमर्थं वाक्यं चापेक्षत इति बहिरङ्गः।।४१।।

**तिरसोऽन्यतरस्याम्**।। 'तिरोऽन्तर्धौ' इति तिरःशब्दस्य गतिसंज्ञा।

**तिरः कृत्वेति**। अत्रान्तर्धेरविवक्षितत्वादगतित्वम्।।४२।।

### भावबोधिनी

❀ पुम् तथा मुहुस् के विसर्ग के षत्व का प्रतिषेध कहना चाहिये ❀ उदा० पुंस्कामा। मुहु≍कामा। [ पुम् + कामा 'पुमः खय्यम्परे' से म् का रु, विसर्ग और प्राप्त षत्व का निषेध करके सकार होता है मुहु≍कामा में जिह्वामूलीय होता है। ]

नैष्कुल्यम्, दौष्कुल्यम्, दौष्पौरुष्यम् [ इन शब्दों में भाव अर्थ में ष्यञ् तद्धित प्रत्यय और आदिवृद्धि करने पर ऐ, औ, के बाद विसर्ग मिलता है। ] नि३ष्कुलम्। दु३ष्कुलम्। दु३ष्पुरुषः। [ इन शब्दो में 'गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्' सूत्र द्वारा अनन्त्य का प्लुत हो जाने से ह्रस्व इकार, उकार से परे विसर्ग न मिलने से षत्व नहीं होना चाहिये? इस शंका का समाधान यह है ] बहिरङ्ग लक्षण वाली वृद्धि और प्लुत दोनों कार्यों के असिद्ध हो जाने के कारण [ ह्रस्व इकार उकार से परे विसर्ग का ] षत्व हो जाता है। [ तद्धित प्रत्यय के लिये भाव आदि अर्थों की अपेक्षा है। और प्लुत के लिये वाक्य की अपेक्षा है। जबकि षत्व के लिये केवल इकार उकार से परे विसर्ग की अपेक्षा है। अतः यह षत्व अन्तरङ्ग है। इसकी कर्तव्यता में बहिरङ्ग दोनों शास्त्र = कार्य वृद्धि और प्लुत असिद्ध हो जाते हैं। अतः इण् से परे षत्व होता है।]।।४१।।

'तिरस्' शब्द के विसर्ग का सकार आदेश कवर्ग और पवर्ग परे रहते विकल्प से होता है। उदा० तिरस्कर्ता। तिरस्कर्तुम्। तिरस्कर्तव्यम्। तिरः कर्ता। तिरःकर्तुम्। तिरःकर्तव्यम्। [ स् न होने पर विसर्ग ही रहता है। ] यह 'कुप्वोः≍क≍पौ च' का बाध करके सत्व करता है।

गतिसंज्ञक का ही सत्व होता है—तिरः कृत्वा काण्डं गतः। [ इसमें अन्तर्धि = व्यवधान अर्थ अविवक्षित है। अतः 'तिरोऽन्तर्धौ' से गतिसंज्ञा नहीं होती है। ]।।४२।।

---

१. 'मुहुस्कामा'—इति मुद्रितः पाठो न्यास-पदमञ्जर्यसम्मतः।

## ३८३९. द्विस्त्रिश्चतुरिति कृत्वोऽर्थे।।४३।। (१५७)

**'षः' इति सम्बद्ध्यते। द्विस्, त्रिस्, चतुर्–इत्येतेषां कृत्वोऽर्थे वर्त्तमानानां विसर्जनीयस्य षकार आदेशो भवति अन्यतरस्यां कुप्वोः परतः। द्विष्करोति, द्विःकरोति। त्रिष्करोति, त्रिःकरोति। चतुष्करोति, चतुःकरोति। द्विष्पचति, द्विःपचति। त्रिष्पचति, त्रिःपचति। चतुष्पचति, चतुःपचति।**

**कृत्वोऽर्थ इति किम्? चतुष्कपालम्, चतुष्कण्टकम्। पूर्वेण नित्यं षत्वं भवति।**

### न्यासः

**द्विस्त्रिश्चतुरिति कृत्वोऽर्थे**।। 'अन्यतरस्याम्' इति वर्तते। चतुःशब्दस्याप्रत्ययविसर्जनीयत्वान्नित्ये षत्वे प्राप्ते इतरयोस्तु विपर्ययादप्राप्ते विकल्पोऽयमारभ्यते। इति शब्दोऽत्र द्विरादीनां विसर्जनीयेन सह सम्बन्धं द्योतयितुमुपात्तः। सम्बन्धो हि षष्ठ्या वा निर्दिश्यते, इतिकरणेन वा। तदिहेतिकरणेन निर्दिष्टः। कृत्वसुचोऽर्थः = कृत्वोऽर्थः, स पुनः क्रियाभ्यावृत्तिगणनम्, एतच्च द्विरादीनां विशेषणम्, तेऽपि विसर्जनीयस्येति दर्शयन्नाह— **द्वित्रिश्चतुरित्यादि**। **द्विष्करोतीति**। 'संख्यायाः क्रियाभ्यावृत्तिगणने' इत्यनुवर्तमाने 'द्वित्रिचतुर्भ्यः सुच्' इति सुच्, तस्य रुत्वम्, तस्य विसर्जनीयः, तस्याप्यनेन पक्षे षत्वम्। **चतुष्करोतीति**। अत्र सुचः सकारस्य 'रात् सस्य' इति लोपः, प्रकृतिरेफस्य विसर्जनीयः। शेषं पूर्ववत्।

**चतुष्कण्टकम्, चतुष्कपालमिति**। अत्र क्रियाभ्यावृत्तिर्नास्ति; चत्वारि कण्टकान्यस्य, चत्वारि कपालान्यस्येति सम्बन्धमात्रविवक्षितत्वात्। तेनात्र विकल्पो न प्रवर्तत इति 'इदुदुपधस्य चाप्रत्ययस्य' इति नित्यमेव षत्वं भवति। ननु चाप्रत्ययस्य विसर्जनीयस्य षत्वमुच्यते, प्रत्ययविसर्जनीयश्चायम्, 'चतेरुरन्' इत्यरन्प्रत्ययान्तत्वाच्चतुःशब्दस्य? नैतत्; 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इत्येषोऽभिप्रायो द्रष्टव्यः। ननु च द्विस्त्रिःशब्दौ सुच्प्रत्ययान्तौ कृत्वोऽर्थ एव वर्तेते, तत्साहचर्याच्चतुःशब्दोऽपि तादृश एव ग्रहीष्यते, तत् किमर्थमेतत्? ज्ञापनार्थम्। एतदनेन ज्ञाप्यते—क्वचित् 'सहचरितासहचरितयोः' इत्येषा परिभाषा नाश्रीयते। तेन 'दीधीवेवीटाम्' इत्यत्र धातुसाहचर्याद् 'इट गतौ' इत्यस्य ग्रहणं न भवति।

### पदमञ्जरी

**द्विस्त्रिश्चतुरिति कृत्वोऽर्थे**।। उभयत्रविभाषेयम्, 'चतुर' इत्यस्याप्रत्ययविसर्जनीयत्वाद् 'इदुदुपधस्य च' इति प्राप्ते, इतरयोरप्राप्ते। 'इसुसोः सामर्थ्ये' इत्यनेन त्वत्र सिद्धिर्न शङ्कनीया; इसः प्रत्ययस्य तत्र ग्रहणात्।

**कृत्वोर्थ इति किमति**। सुजन्ताः कृत्वोऽर्थं न व्यभिचरन्तीति प्रश्नः। चतुःशब्दस्य सुजन्तत्वे प्रमाणं नास्तीत्युत्तरम्। यदि तु साहचर्यं व्यवस्थापकम्, तदा तदर्थमपि कृत्वोऽर्थग्रहणं न कर्त्तव्यम्, क्रियते च? तज्ज्ञापकार्थम्, एतज्ज्ञापयति—न सर्वत्र साहचर्यं व्यवस्थापकमिति। किं सिद्धं भवति? 'दीधीवेवीटाम्' इत्यत्र धातुसाहचर्येणाप्यागमस्येटो ग्रहणं भवति।

### भावबोधिनी

'ष' इसका सम्बन्ध रहता है। द्विस्, त्रिस्, चतुर्—यदि कृत्वसुच् के अर्थ में विद्यमान हैं तो इनके विसर्ग का षकार आदेश कवर्ग, पवर्ग परे रहते विकल्प से होता है। उदा॰ द्विष्करोति, द्विःकरोति। त्रिष्करोति, त्रिःकरोति। चतुष्करोति, चतुःकरोति। [ 'क्रियाभ्यावृत्तिगणने कृत्वसुच्' सूत्र से क्रिया की अभ्यावृत्ति प्रतीत होने पर कृत्वसुच् प्रत्यय होता है। इसी प्रसङ्ग में 'द्वित्रिचतुर्भ्यः सुच्' सूत्र सुच् = स् प्रत्यय करता है। इसी कृत्वर्थक स् का सत्व, विसर्ग और षत्व विकल्प से होता है। पक्ष में विसर्ग ही रहता है। चतुर् + स् में 'रात्सस्य' से स् का लोप होने पर प्रकृति के ही रेफ का विसर्ग और षत्व होता है। ]

कृत्वसुच् के अर्थ में—इसका क्या फल है? चतुष्कपालम्, चतुष्कण्टकम्। [ यहाँ क्रिया की अभ्यावृत्ति अर्थ नहीं है। प्रकृति के विसर्ग का षत्व 'इदुदुपधस्य चाप्रत्ययस्य' से नित्य ही होता है। ]

**'इदुदुपधस्य'(८।३।४१)–इत्यस्यानुवृत्तौ सत्यां कृत्वोऽर्थविषयेण च पदेन विसर्जनीये विशेष्यमाणे 'द्विस्त्रिश्चतुरिति' शक्यमकर्त्तुम्।**

**कृत्वसुजर्थे षत्वं ब्रवीति कस्माच्चतुष्कपाले मा।**
**षत्वं विभाषया भून्ननु सिद्धं तत्र पूर्वेण।।१।।**

**न्यासः**

इदुदुपधस्येत्यादिना द्विस्त्रिश्चतुरिति ग्रहणं प्रत्याचष्टे। एतद्धि एवमर्थं क्रियते—द्विरादीनामेव विसर्जनीयस्य षत्वं यथा स्यात्, पञ्चकृत्वः करोतीत्यत्र मा भूदिति। ननु च 'इदुदुपधस्य' इत्यस्मिन्ननुवर्त्तमाने कृत्वोऽर्थो विषयो यस्य पदस्य तस्य यो विसर्जनीय इत्येवं कृत्वोऽर्थविषयेण पदेन विसर्जनीयो यदा विशेष्यते, तदान्यस्य न प्राप्नोति; द्विरादेरन्यस्येदुदुपधस्य कृत्वोऽर्थवृत्तेः पदस्यासम्भवात्। तस्मादन्तरेणापि द्विरादीनां ग्रहणम्, तेषामेव हि विसर्जनीयस्य षत्वं भविष्यति। द्विस्त्रिश्चतुरिति शक्यमकर्तुम्।

**कृत्वसुजर्थे षत्वं ब्रवीति कस्मादिति**। अस्मिन् षत्वविकल्पविधाने हेतुं कृत्वोऽर्थवचनस्य पृच्छति। कस्मात् 'कृत्वोऽर्थ' इत्येवमुक्त्वेमं षत्वविकल्पं ब्रवीति? किं तत् प्रयोजनं यतो हेतोरिह षत्वविकल्पविधौ कृत्वोऽर्थग्रहणं करोतीत्यर्थः। अत्र वक्ष्यमाण एवाभिप्रायः। अतो हेतुमाह—**चतुष्कपाल इत्यादि**। असति कृत्वोऽर्थग्रहणे चतुष्कपालेऽपि विभाषा षत्वं स्यात्, नित्यं चेष्यते। तस्मादत्र विभाषा षत्वं मा भूदित्येवमर्थं कृत्वोऽर्थ इत्युच्यते।

**पदमञ्जरी**

द्विस्त्रिश्चतुरिति किम्? पञ्चकृत्वः करोतीत्यत्र सत्वं मा भूत्। नैतदस्ति प्रयोजनमित्याह—**इदुदुपधस्येत्यस्यानुवृत्तौ सत्यामित्यदि**। कृत्वोऽर्थो विषयो यस्य तत्तथोक्तम्। कृत्वोर्थे यत्पदं वर्तते तस्य यो विसर्जनीयः—इत्येवं विशेष्यमाण इत्यर्थः। यदि कृत्वोऽर्थग्रहणेन विसर्जनीयो विशेष्येत, तदा चतुरो न स्यात्। एतच्च श्लोकेषु व्यक्तीकरिष्यति।

एवं **श्लोकवार्त्तिककारमतेन** द्विस्त्रिश्चतुर्ग्रहणं प्रत्याख्यातम्। तानेव श्लोकानुदाहरति—**कृत्वसुजर्थे इति**। कस्माद्धेतोः कृत्वसुजर्थे षत्वं ब्रवीति, कृत्वोऽर्थग्रहणस्य किं प्रयोजनमित्यर्थः। अत्र च वक्ष्यमाणोऽभिप्रायः।

**भावबोधिनी**

[ प्रस्तुत सूत्र के 'द्विस्त्रिश्चतुरिति' इस अंश की कोई आवश्यकता नहीं है, इसका प्रत्याख्यान करना चाहिये क्योंकि ] इस सूत्र में 'इदुदुपधस्य' इसकी अनुवृत्ति होनेपर 'कृत्वः' का अर्थ है विषय जिसका ऐसे पद द्वारा विसर्ग को विशेषित कर दिये जाने पर—अर्थात् कृत्वः का अर्थ विषय है जिसका ऐसे पद का जो विसर्ग—ऐसा मान लेने पर 'द्विस्त्रिश्चतुरिति' इसका ग्रहण नहीं भी किया जा सकता है। [ क्योंकि द्वि त्रि तथा चतुर् को छोड़कर अन्य कोई इदुपध या उदुपध शब्द कृत्वः के अर्थ में मिलता ही नहीं है। अतः इन शब्दों केग्रहण के बिना भी इन्हीं तीनों का षत्व होगा अन्यों का नहीं। यही सब भाष्योक्त कारिकाओं द्वारा प्रस्तुत किया जा रहा है। ]

कृत्वसुच् के अर्थ में षत्व किस लिये कह रहे हो [ वह कौनसा प्रयोजन है जिसकी सिद्धि के लिये षत्वविकल्प-विधायक सूत्र में 'कृत्वः के अर्थ का ग्रहण है ]? चतुष्कपालम्—इसमें विकल्प से षत्व न होने लग जाय। [ यदि कृत्वसुच् के अर्थ में—यह नहीं होगा तो तीनों शब्दों के विसर्ग का विकल्प से षत्व होने लगेगा, जबकि 'चतुष्कपालम्' में पूर्व सूत्र से नित्य षत्व इष्ट है, विकल्प से नहीं। इसलिये 'कृत्वोऽर्थे' इसका ग्रहण है। ] इसमें तो पूर्ववर्ती सूत्र से सिद्ध हो जाता है [ क्योंकि जब इससे षत्व नहीं होगा तब 'इदुदुपधस्य च' सूत्र से हो जायगा और 'चतुष्कपालम्' सिद्ध हो जायगा? ]।।१।। ऐसा नहीं कहना चाहिये क्योंकि पूर्व सूत्र से सिद्ध = प्राप्त रहते ही इस से षत्वविकल्प किया जा रहा है [ फलतः 'येन नाप्राप्ते यो विधिराभ्यते स तस्य बाधको भवति' इस परिभाषा के द्वारा पूर्वसूत्र का बाधक होकर यह सूत्र विकल्प से षत्व करने लगेगा। ] कृत्वःके अर्थ में कृत्वोर्थसम्बन्धी प्रत्यय का लोप हो जाने पर अप्रत्यय रेफ का विसर्ग रहता है [ तब कृत्वः के अर्थ में भी पूर्व सूत्र से षत्व नित्य प्राप्त है इसमें

**सिद्धे ह्ययं विधत्ते चतुरः षत्वं यदापि कृत्वोऽर्थे।**
**लुप्ते कृत्वोऽर्थीये रेफस्य विसर्जनीयो हि।।२।।**
**एवं सति त्विदानीं द्विस्त्रिश्चतुरित्यनेन किं कार्यम्।**
**अन्यो हि नेदुदुपधः कृत्वोऽर्थः कश्चिदप्यस्ति।।३।।**

**न्यासः**

येनाभिप्रायेण परं पृष्टवान्, तमाविष्कर्तुमाह—**ननु सिद्धं तत्र पूर्वेणेति**। नन्वित्यप्युपगमे। एतदनेन दर्शयति—भवत्वनेन षत्वं विभाषा, तथापि पूर्वसूत्रेण नित्यं भविष्यति षत्वस्य श्रवणम्; यस्माद् यदाप्यनेन षत्वं न भवति तदापि पूर्वसूत्रेण 'इदुदुपधस्य चाप्रत्ययस्य' इत्यनेन चतुष्कपाले सिद्धं षत्वमिति।

**सिद्धे ह्ययं विधत्त इति**। सिद्धे प्राप्त इत्यर्थः। एतदाचष्टे—'इदुदुपधस्य' इत्यादिना नित्ये षत्वे प्राप्त इमं षत्वविकल्पं विदधाति। नाप्राप्ते तस्माद् येन नाप्राप्तिन्यायेन तस्यायं बाधकः स्यादिति। तदनेन यदुक्तम्—'सिद्धं तत्र पूर्वेण' इति, तन्निराकृतम्। तस्माद्विभाषानिवृत्त्यर्थं कृत्वोऽर्थग्रहणम्। स्यादेतत्—कृत्वोऽर्थविवक्षायां सुचि कृते तस्य यदा विसर्जनीयः क्रियते तदा पूर्वेण न प्राप्नोति, अप्रत्ययस्येति प्रतिषेधात्; ततश्च 'सिद्धे ह्ययं विधत्ते' इति यत् तन्नोपपद्यते, तत् कुतो ह्यनेन विकल्पेन नित्यं षत्वं बाध्येत? इत्याह—**यदापि कृत्वोऽर्थ इत्यादि**। चतुःशब्दो वर्तत इति शेषः। अस्य च 'सिद्धे ह्ययं विधत्ते चतुरः षत्वम्' इत्यनेन प्रकृतेन सम्बन्धः। अस्यार्थः—एतदुक्तं भवति, न केवलं यदा कृत्वोऽर्थवृत्तिश्चतुःशब्दस्तदा पूर्वेण प्राप्ते सतीमं षत्वविकल्पं विधत्ते, अपि तु यदा कृत्वोर्थस्तदापीति। अत्रैवोपपत्तिमाह—**लुप्ते कृत्वोऽर्थीय इत्यादि**। हिशब्दो हेतौ। कृत्वोऽर्थे भवः कृत्वोऽर्थीयः, सुच्, गहादित्वाच्छः। यस्माद् 'रात् सस्य' इति लुप्ते कृत्वोऽर्थीये रेफस्याप्रत्ययस्य विसर्जनीयो भवति तस्मात् कृत्वोऽर्थेऽपि पूर्वेण नित्ये षत्वे प्राप्त इमं षत्वविकल्पं विधत्ते। ततश्च सर्वत्र कृत्वोऽर्थेऽप्यकृत्वोऽर्थेऽपि नाप्राप्ते पूर्वेण षत्वे विकल्प आरभ्यत इति तस्य बाधक एव स्यात्। एवञ्चासति कृत्वोऽर्थग्रहणे चतुष्कपाले विभाषा षत्वं प्रसज्येत। तस्मात् तन्निवृत्त्यर्थं कृत्वोर्थग्रहणमिति स्थितमेतत्।

**पदमञ्जरी**

प्रयोजनमाह—**चतुष्कपाल इति**। चोदयिता स्वाभिप्रायं प्रकाशयति—**ननु सिद्धमिति**। नन्वित्यभ्युपगमे। भवत्वनेन चतुष्कपालेऽपि विभाषा, तथापि नित्यं षत्वं सिद्धम्। कथम्? अनेन मुक्ते 'इदुदुपधस्य च' इति षत्वं भविष्यति।

परिहरति—**सिद्धे ह्ययमिति**। सिद्धे प्राप्त इत्यर्थः। कथं प्राप्तिः? इत्याह—**लुप्ते इति**। चतुरस् इति स्थिते 'रात्सस्य' इति सुचो लोपः, रेफस्य विसर्जनीयः। सोऽयमप्रत्ययविसर्जनीयो भवति, यदि सुचो रुत्वं पूर्वस्य 'रोरि' इति लोपः, रोर्विसर्जनीयो भवति, किन्तु 'ढ्रलोपे' इति दीर्घः प्राप्नोति, रुत्वस्यासिद्धत्वात्, पूर्वमेव च लोपेन भवितव्यम्, एवं च कृत्वोऽर्थग्रहणं कर्तव्यमित्युक्तम्।

**भावबोधिनी**

विकल्प के लिये यहाँ 'कृत्वोऽर्थ' का ग्रहण है। फलतः 'कृत्वोऽर्थ का ग्रहण न रहने पर चतुष्कपालम् में भी विकल्प होने लगता उसे रोकने के लिये 'कृत्वोऽर्थे' का ग्रहण हैं। ] [ पूर्वोक्त व्याख्यान से यह स्पष्ट हो गया कि 'कृत्वोऽर्थे' का ग्रहण रहने से 'चतुष्कपालम्' आदि में विकल्प का प्रसङ्ग नहीं है। ]।।२।। अब प्रश्न है कि उक्तस्थिति में अर्थात् 'कृत्वोऽर्थे' का ग्रहण रहने पर 'द्विस्त्रिश्चतुरिति' इस के ग्रहण का प्रयोजन क्या है? [ क्योंकि अब कोई दूसरा अतिप्रसङ्ग नहीं है जिसे रोकने के लिये इन शब्दों के ग्रहण की कोई आवश्यकता हो। ] क्योंकि कृत्वः के अर्थ में इन सूत्रोक्त तीन को छोड़कर दूसरा कोई भी इदुपध या उदुपध है ही नहीं?।।३।। यदि इन शब्दों का ग्रहण नहीं रहेगा तब विसर्ग ही विशेषित होगा अर्थात् कृत्वः के अर्थ में जो विसर्ग है उसका षत्वविकल्प होगा, परन्तु अब तो 'चतुर्' का षत्व सिद्ध नहीं हो सकेगा क्योंकि यहाँ तो रेफ का विसर्ग है। [ चतुर् + सुच् = स् में 'रात्सस्य' से स् का लोप कर देने के बाद 'चतुर्' प्रकृति के रेफ का ही विसर्ग होता है सुच् का नहीं। फलतः इसमें षत्वविकल्प

**अक्रियमाणे ग्रहणे विसर्जनीयस्तदा विशेष्येत।**
**चतुरो न सिध्यति तथा रेफस्य विसर्जनीयो हि।।४।।**
**तस्मिंस्तु क्रियमाणे युक्तं चतुरो विशेषणं भवति।**
**प्रकृतं पदं तदन्तं तस्यापि विशेषणं न्याय्यम्।।५।।**

**एवं तु क्रियमाणे द्विस्त्रिश्चतुर्ग्रहणे चतुःशब्दस्य कृत्वोऽर्थेऽपि वर्तमानस्य पूर्वेणैव नित्यं षत्वं स्यात्। 'पूर्वत्रासिद्धेः नास्ति प्रतिषेधः; अभावादुत्तरस्य ।। (जै.प.६७)**

**न्यासः**

**एवमित्यादि**। यदि कृत्वोऽर्थग्रहणं क्रियते, एवं तर्हि तस्मिन् सति किमिदानीं द्विस्त्रिश्चतुरित्यनेन कार्यम्? न किञ्चित्; व्यावर्त्याभावात्। तस्मान्न कर्त्तव्यमिदमित्येवाभिप्रायः। स्यादेतत्—असत्यस्मिन् पञ्चकृत्वः करोतीत्यादावपि विभाषा षत्वं स्यात्, अतस्तन्निवृत्तिरनेन क्रियते इति? अत आह—**अन्यो हीत्यादि**। 'इदुदुपधस्य' इत्यनुवर्तते, 'कृत्वोऽर्थे' इति चोच्यते, न च द्विरादिभ्योऽन्य इदुदुपधः कृत्वोऽर्थे वर्तते। तस्मात् सामर्थ्यादेषामेव भविष्यति, नान्येषामित्यनर्थकं द्विरादीनां ग्रहणम्।

**अक्रियमाण इत्यादिना** असति हि द्विरादिग्रहणे यो दोषस्तं दर्शयति। यदि द्विरादिग्रहणं न क्रियेत, तदा विसर्जनीयस्य प्रकृतत्वात्स एव कृत्वोऽर्थग्रहणेन विशेष्यते—कृत्वोऽर्थे यो वर्तते विसर्जनीय इति। कः पुनरेवं सति दोषः स्यात्? इत्यत आह—**चतुरो न सिध्यतीति**। **तथेति**। तथैवं कृत्वोऽर्थग्रहणेन विसर्जनीये विशेष्यमाणे चतुःशब्दस्य विभाषा षत्वं न सिध्यति। किं कारणं न सिध्यति? इत्यत आह— **रेफस्येत्यादि**। हिशब्दो हेतौ। यस्माच्चतुरः 'रात् सस्य' इति सुचः सकारे लुप्ते प्रकृत्यवयवस्य रेफस्य विसर्जनीयः, तस्मान्न सिध्यति। न ह्यसौ विसर्जनीयः कृत्वोऽर्थे वर्त्तते।

**पदमञ्जरी**

इदानीं तदाश्रयणेन द्विस्त्रिश्चतुर्ग्रहणं प्रत्याचष्टे—**एवं सतीति**। **किं कार्यमिति**। न किञ्चिदित्यर्थः। कथम्? इत्याह—**अन्यो हीति**।

इतरोऽसति द्विरादिग्रहणे दोषं दर्शयति—**अक्रियमाण इति**। **विसर्जनीयो विशेष्येतेति**। तस्य कार्यित्वेन प्राधान्यादिति भावः। सम्भावने लिङ्। विशेष्यतां विसर्जनीयः, को दोषः? इत्यत आह-**चतुर इति**। **तथेति**। अनन्तरोक्ते विशेषणप्रकारे चतुरो न सिध्यतीति। कस्मात्? इत्याह—**रेफस्येति**।

क्रियमाणे तु द्विरादिग्रहणे नायं दोषः, इत्याह—**तस्मिंस्त्विति**। इतरयोर्विशेषाभावाच्चतुरो विशेषणं युक्तमित्युक्तम्। प्रत्याख्यानवाद्याह—**प्रकृतं पदमिति**। यदुक्तम्—'कार्यित्वेन प्रधानभूतो विसर्जनीयः' इति, तन्न; सोऽपि प्रकृतस्य पदस्य षत्वमिति, स त्वर्थाद् 'अलोऽन्त्यस्य' इति विसर्जनीयस्य भवतीत्येतावत् पदमेव तु कार्यि, तदिदमुक्तम्-**तदन्तमिति**। **तस्यापीति**। अपिशब्दोऽवधारणे, तस्यैवेत्यर्थः।

**भावबोधिनी**

नहीं होगा। ] परन्तु जब 'द्विस्त्रिश्चतुरिति' इसका ग्रहण है तब तो कृत्वोऽर्थग्रहण चतुःशब्द का विशेषण होगा—कृत्वः के अर्थ में विद्यमान जो चतुर् शब्द उसके विसर्ग का षत्व होता है। अतः द्विः आदि का ग्रहण रहना चाहिये।।४।। 'पदे' प्रकृत है (अनुवृत्ति से बोध्य है पद का सत्व होता है, 'अलोऽन्त्यस्य' से अन्त्य = विसर्ग का षत्व होगा।) अतः पद का विशेषण बनाना उचित है। [ कृत्वोऽर्थीय प्रत्यय का 'चतुः' में लोप हो जाने पर भी 'चतुः' यह पद तो कृत्वोऽर्थ में विद्यमान ही है। अतः षत्व होने में बाधा नहीं है। इससे स्पष्ट है कि 'द्विस्त्रिश्चतुरिति' इसके ग्रहण की आवश्यकता नहीं है।।५।।]

इस उपर्युक्त रीति से तो 'द्विस्त्रिचतुरिति' का ग्रहण करने पर कृत्वः के अर्थ में भी वर्तमान 'चतुः' शब्द का पूर्व सूत्र से ही नित्य षत्व होने लगेगा। क्योंकि 'पूर्व के प्रति पर के असिद्ध हो जाने पर विप्रतिषेध नहीं होता है। क्योंकि उत्तरवर्ती का अभाव हो जाता है'। [ 'इदुदुपधस्य' की प्रवृत्ति-निष्कृतम् आदि में है और प्रस्तुत सूत्र की प्रवृत्ति द्विष्करोति आदि में। परन्तु चतुष्करोति में

**न्यासः**

अथ क्रियमाणेऽपि तस्मिन् कस्मादेष दोषो न भवति? इत्यत आह—**तस्मिन्नित्यादि**। तस्मिन् द्विस्त्रिश्चतुरित्येतस्मिंस्तूपादीयमाने कृत्वोऽर्थग्रहणं चतु:शब्दस्य विशेषणं न्याय्यं भवति। तथा हि—तस्य श्रुतत्वात् स एव विशेष्यते कृत्वोऽर्थे, यो वर्तते चतु:शब्द इति। लुप्तेऽपि कृत्वोऽर्थीये चतु:शब्द: कृत्वोऽर्थ वर्त्तत इति न भवति द्विरादिग्रहणे क्रियमाणेऽपि दोष:। तस्माद् द्विरादिग्रहणं कर्त्तव्यम्—कृत्वोऽर्थग्रहणं तस्य विशेषणं यथा स्यात्। एतदपि न भवति तस्य प्रयोजनमिति दर्शयन्नाह—**प्रकृतं पदं तदन्तमिति**। तदन्तं विसर्जनीयान्तम्। अत: **तस्यापि तद्विशेषणं न्याय्यम्**। उपपत्तिमाह—तदन्तत्वं तु पदस्य विसर्जनीयेन विशेष्यत्वाल्लभ्यते। अपिशब्दोऽवधारणे। तस्यैवेत्यर्थ:। कुत एतत्? व्याप्तिन्यायात्। विसर्जनीये हि विशेष्यमाणे चतुरो न सिध्यति, पदे तु विशेष्यमाणे सर्वत्र भवति। तस्मात् तदेव विशेषयिष्याम:—कृत्वोऽर्थे यद्वर्तते पदमिति। पदे विशेष्यमाणे चतुर: षत्वं सिध्यत्येव। लुप्तेऽपि कृत्वोऽर्थीये चतुरित्येतत् पदं कृत्वोऽर्थे वर्तत इति। तस्मान्नार्थो द्विरादिग्रहणेनेति **श्लोकवार्त्तिककारेण** प्रत्याख्यातं द्विरादिग्रहणम्।

**सूत्रकारस्य** त्वयमभिप्राय:—विसर्जनीयस्य कार्यित्वात् पदेन विशेष्यमाणत्वाच्च प्राधान्यम्। तत्रासति द्विरादिग्रहणे प्राधान्याद् विसर्जनीय एव कृत्वोऽर्थग्रहणेन विशेष्यत इति। तस्मिंस्तु सति तदुपादानसामर्थ्यात् साक्षात् श्रुतत्वाच्च द्विरादेरेव पदस्यैतद्विशेषणम्, न तु स्वरितत्वादनुमितस्य विसर्जनीयस्य। तस्माद् युक्तं द्विरादिग्रहणं कर्तुमिति।

**एवं त्वित्यादिना** ग्रन्थेन द्विस्त्रिश्चतुर्ग्रहणं **सूत्रकारमतेन** स्थापयति। **पूर्वेणेति**। 'इदुदुपधस्य' इत्यादिना। तत्रैतत् स्यात्—'इदुदुपधस्य' इत्यस्यावकाश:—निष्कृतम्, दुष्कृतमिति, अस्यावकाश:—द्विष्करोतीत्यादौ; चतुष्करोतीत्यत्र परत्वात् पूर्वविधिं बाधित्वाऽयमेव विकल्पो भविष्यति? इत्यत आह—**पूर्वत्रासिद्ध इत्यादि**। किं कारणं नास्तीति? अत आह—**अभावादुत्तरस्येति**।।४३।।

**पदमञ्जरी**

एवं **श्लोकवार्त्तिककारेण** प्रत्याख्याते द्विरादिग्रहणे **वृत्तिकार:** स्थापयितुमाह—**एवमिति**। **पूर्वेणेति**। 'इदुदुपधस्य च' इत्यनेन। **नित्यं षत्वं स्यादिति**। अस्य तु द्विस्त्रि:शब्दाववकाशौ। न च परत्वादयमेव विधि: सिद्ध्यतीत्याह—**पूर्वत्रासिद्ध इति**।

**श्लोकवार्त्तिककारस्य** त्वयमभिप्राय:—प्रकरणे प्रकरणमसिद्धम्, न योगे योग:, तेनास्यासिद्धत्वं भवतीति। अथ वा—'इदुदुपधस्य कृत्वोऽर्थवृत्तेर्नप्राप्ते नित्ये षत्वस्यारम्भादपवादत्वमित्यपवादत्वादेव, वचनप्रामाण्यादिति वा सिद्धत्वमिति।

अथ 'सुच:' इत्येव कस्मान्नोक्तम्, किमनेन महता प्रबन्धेन? एवमुच्यमाने सुचि विसर्जनीयो विशेष्येत—सुचो यो विसर्जनीय इति, ततश्च चतुरो न स्यात्। एवं तर्हि सुजन्तस्येति वक्तव्यम्—सुजन्तस्य यो विसर्जनीय इति? एवमपि 'पदस्य' इत्यनुवृत्तेर्यत्र सुजन्तं पदं तत्रैव स्यात्-द्विष्करोति, इह तु न स्यात्-परमद्विष्करोतीति। यत्पदं तन्न सुजन्तम्, तस्मात्सुचोऽविहितत्वात्। यच्च सुजन्तं द्विरिति न तत्पदम्; 'उत्तरपदत्वे चापदादिविधौ' इति पदसंज्ञाया: प्रतिषेधात्।।४३।।

**भावबोधिनी**

परवर्ती विधिहोने से 'विप्रतिषेधे परं कार्यम्' केअनुसार यही विधि पूर्व का बाध कर लेगी अत: विकल्प ही होगा, नित्य नहीं। ऐसा कथन ठीक नहीं है क्योंकि 'पूर्वत्रासिद्धम्' के अनुसार परवर्त्ती विधि असिद्ध है। अत: उसके अभाव के कारण विप्रतिषेध नहीं होगा। फलत: यह पूर्व का बाध नहीं कर सकेगा, नित्य षत्व होने लगेगा। अत: सूत्रकार केमत में 'द्विस्त्रिश्चतुरिति' का ग्रहण आवश्यक ही है। ]।।४३।।

### ३८४०. इसुसोः सामर्थ्ये।।४४।। (१५८)

**'षः' इति सम्बद्ध्यते। इस्, उस्-इत्येतयोर्विसर्जनीयस्यान्यतरस्यां षकारादेशो भवति सामर्थ्ये कुप्वोः परतः। सर्पिष्करोति, सर्पिः करोति। यजुष्करोति, यजुः करोति।**

**सामर्थ्य इति किम्? तिष्ठतु सर्पिः पिब त्वमुदकम्।**

**सामर्थ्यमिह व्यपेक्षा; न पुनरेकार्थीभावः, उभयं वा।।**

**न्यासः**

**इसुसोः सामर्थ्ये**।। यदि 'अर्चिशुचिहुसृपिच्छर्दिच्छादिभ्यः इसिः', 'जनेरुसिः' इत्यनुवर्त्तमाने 'अर्त्तिपृवपियजितनिधनितपिभ्यो नित्' इत्येवं सर्पिः, यजुरादयः शब्दा इसुसप्रत्ययान्ता व्युत्पाद्यन्ते—इति दर्शनम्, ततश्च केनचिदप्राप्त एव षत्वे 'कुप्वोः' इत्यादिना जिह्वामूलीयादिषु प्राप्तेष्विदं वचनम्। अत 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि'—इति दर्शनम्, ततोऽप्रत्ययविसर्जनीयत्वात् 'इदुदुपधस्य चाप्रत्ययस्य' इति नित्ये षत्वे प्राप्तेऽस्यारम्भः। **सामर्थ्ये सतीति**। कुप्वोर्निमित्तत्वेनाश्रयणात् तदादिनव शब्दान्तरेण सह सामर्थ्यं वेदितव्यम्। सर्पिष्करोतीत्यत्र सर्पिः साधनं करोतीत्येवं साध्यां क्रियामपेक्षते, करोत्यर्थोऽपि साध्यः। साधनं सर्पिरित्यस्ति सामर्थ्यम्।

**तिष्ठतु सर्पिः पिब त्वमुदकमिति**। अत्र सर्पिरित्यस्य पिबेत्यनेन सामर्थ्यं नास्ति। तथा हि—पिबेत्येतदुदकमपेक्षते, सर्पिरित्येतत्तु तिष्ठत्विति।

अथ परमसर्पिः कुण्डिकेत्यत्र विभाषया षत्वं समासे कस्मान्न भवति? इत्याह—**सामर्थ्यमिहेत्यादि**। वाशब्दोऽप्यर्थे वर्त्तते, अनेकार्थत्वादव्ययस्य। न पुनरित्यस्यैकार्थीभाव इत्यनेन, उभय इत्यनेन च सम्बन्धः। अवधारणं चात्र द्रष्टव्यम्; व्यवच्छेदकफलकत्वात् सर्ववाक्यानाम्। तदयमत्रार्थः—सामर्थ्यमिह व्यपेक्षैवाश्रीयते, न पुनरेकार्थीभावः, नाप्युभयमिति। तेन समासे न भवति; व्यपेक्षालक्षणस्य सामर्थ्यस्य तत्राभावादिति भावः। ननु

**पदमञ्जरी**

**इसुसोः सामर्थ्ये**।। **तिष्ठत्वित्यादि**। अत्र सर्पिरित्यस्य तिष्ठत्वित्यनेन सम्बन्धः, 'पिब' इत्यस्य तूदकमित्यनेनेति परस्परसम्बन्धाभावादसामर्थ्यम्। **सामर्थ्यमिह व्यपेक्षेति**। अवधारणमत्र द्रष्टव्यम्—**व्यपेक्षैवेति**। प्रयोजनमुत्तरत्र वक्ष्यते। **न पुनरेकार्थीभाव इति**। अत्राप्यवधारणं द्रष्टव्यम्—एकार्थीभाव एव गृह्यत इति यत्तन्न व्यपेक्षैवेत्यर्थः। ननु च सामर्थ्यशब्दः सामान्यशब्दः, न च सामान्यशब्दः प्रकरणादिकमन्तरेण विशेषेऽवतिष्ठते, तत्कथं व्यपेक्षैव सामर्थ्यं गृह्यते, न पुनरेकार्थीभाव इत्युच्यते, उभयं तु कस्मान्न गृह्यते? अत आह—**उभयं वेति**। नेत्येवः, उभयमपि गृह्यत इति यत्तदपि नैवेत्यर्थः। अयं भावः—पदविधित्वादेव समर्थपरिभाषोपस्थानात् सामर्थ्ये लब्धे पुनः सामर्थ्यग्रहणादिष्टस्य व्यपेक्षालक्षणस्यैव सामर्थ्यस्य परिग्रहः; नेतरस्य नाप्युभयोरिति।।४४।।

**भावबोधिनी**

'ष' इसका सम्बन्ध रहता है। 'इस्' तथा 'उस्' इनके विसर्ग का षकारादेश कवर्ग, पवर्ग परे रहते सामर्थ्य में विकल्प से होता है। उदा० सर्पिष्करोति, सर्पिःकरोति। यजुष्करोति, यजुःकरोति। [ सर्पिस्, यजुस् मूल में सकारान्त है। स् का रुत्व, विसर्ग और वैकल्पिक षत्व होता है। पक्ष में विसर्ग होता है। ]

सामर्थ्य में—इसका क्या फल है? तिष्ठतु सर्पिः पिब त्वम् उदकम्। [ यहाँ दो अलग अलग वाक्य हैं अतः 'सर्पिः' इसका 'पिब' के साथ सामर्थ्य नहीं है अपि तु 'तिष्ठतु' के साथ है। ]

## ३८४१. नित्यं समासेऽनुत्तरपदस्थस्य।।४५।। (१५९)

**'इसुसोः' इति वर्तते। समासविषये इसुसोर्विसर्जनीयस्यानुत्तरपदस्थस्य नित्यं षत्वं भवति कुप्वोः परतः। सर्पिष्कुण्डिका। धनुष्कपालम्। सर्पिष्पानम्। धनुष्फलम्।**

**अनुत्तरपदस्थस्येति किम्? परमसर्पिकुण्डिका। परमधनुःकपालम्। पूर्वसूत्रेण विकल्पोऽप्यत्र न भवति।**

**न्यासः**

चोभयसामर्थ्यवाचित्वात् सामर्थ्यशब्दः सामान्यशब्दः, तत्रेदं युक्तं यदेकार्थीभावलक्षणं सामर्थ्यं नाश्रीयते, उभयं तु कथं नाश्रयितुं युक्तम्; न हि सामान्यशब्दाः प्रकरणादिकमन्तरेण विशेषेष्ववतिष्ठन्ते, न चेह प्रकरणादिकमस्ति तथाविधं किञ्चिद् येन व्यपेक्षालक्षणमेव सामर्थ्यं ग्रहीतव्यम्? नैष दोषः, 'कार्यकालं संज्ञापरिभाषम्' इति, इह 'पदस्य' इति वर्तते, तत्र पदाधिकारादेव समर्थपरिभाषाया उपस्थानात् सामर्थ्ये लब्धे यतः सामर्थ्यग्रहणं क्रियते तस्येदं प्रयोजनम्—इष्टसामर्थ्यस्य परिग्रहो यथा स्यात्। इह च व्यपेक्षालक्षणमेवेष्टं सामर्थ्यमिति तदेवाश्रयितुं युक्तम्; नैकार्थीभावः, नाप्युभयमिति।।४४।।

**नित्यं समासेऽनुत्तरपदस्यस्य।। सर्पिष्कुण्डिकेति**। षष्ठीसमासः। एवं **धनुष्कपालमित्या**दावपि।

**परमसर्पिःकुण्डिकेति**। परमसर्पिःशब्दयोः 'सन्महत्' इत्यादिना कर्मधारयं कृत्वा कुण्डिकाशब्देन सह षष्ठीसमासः। परमशब्दापेक्षया सर्पिःशब्द उत्तरपदम्, तत्रस्थश्च विसर्जनीय इति षत्वं न भवति।

ननु च 'इसुसोः सामर्थ्ये' इत्यत्र 'इसुसोः' इति प्रत्ययग्रहणमेतत्, तत्र 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य' इति नियमाद् यत एवेसुसौ विहितौ तदादेरेव ग्रहणेन भवितव्यम्, नाधिकस्य, अधिकश्च परमशब्दः; केवलाद्धि सृपेरिस्प्रत्ययो विहितः, न परमशब्दादेः, एवञ्चोत्तरपदप्रकृतिरेव नास्ति, किं प्रतिषेधेन?

**पदमञ्जरी**

**नित्यं समासेऽनुत्तरपदस्थस्य।। परमसर्पिष्कुण्डिकेति**। ननु च 'अर्चिशुचिहुसृपिच्छदिच्छादिभ्य इसिः', 'जनेरुसिः', 'अर्तिपॄयजितनिधनिवपिभ्यो नित्' इत्येवं सर्पिः, यजुरित्यादयः इसुसन्ता व्युत्पाद्यन्ते, ततश्च प्रत्ययग्रहणपरिभाषया सर्पिरादीनामेवेसुसन्तत्वम्, न परमसर्पिरादीनाम्, तत्कथमत्र प्रसङ्गः; अवश्यं चोणादीनामपि व्युत्पत्तिपक्ष एवाश्रयणीयः; अव्युत्पत्तिपक्षे ह्याश्रीयमाणे सर्पिषा, यजुषेत्यादौ षत्वं न सिद्ध्यति,

**भावबोधिनी**

[ व्याकरणशास्त्र में सामर्थ्य दो प्रकार के हैं (१) एकार्थीभाव रूप और (२) व्यपेक्षारूप। जहाँ समुदाय से विशिष्ट अर्थ प्रतीत होता है ऐसे समासादि में एकार्थीभाव होता है, अन्यथा परस्पर आकाङ्क्षारूप व्यपेक्षा। ] इस सूत्र में व्यपेक्षा रूप सामर्थ्य है एकार्थीभाव रूप नहीं, अथवा दोनों प्रकार का नहीं, केवल व्यपेक्षारूप सार्मर्थ्य ही है। [ अतः समास में यह सूत्र नहीं प्रवृत्त होता है। ]।।४४।।

'इसुसोः' की अनुवृत्ति होती है। समासविषय में अनुत्तरपदस्थ 'इस्', 'उस्' के विसर्ग का कवर्ग, पवर्ग परे रहते नित्य षत्व होता है। उदा॰ सर्पिष्कुण्डिका। धनुष्कपालम्। सर्पिष्पानम्। धनुष्फलम्। [ सर्पिस् धनुस्-शब्दों में स् का रुत्व विसर्ग करने के बाद षत्व होता है। यहाँ 'इस्' और 'उस्' प्रत्ययों के स् का विसर्ग है। ]

अनुत्तरपदस्थ = उत्तरपद में स्थित न हो = इसका क्या फल है? परमसर्पिः कुण्डिका। परमधनुःकपालम्। [ इनमें परम के साथ समास है। उत्तरपद में ये इस् उस् शब्द हैं। अतः षत्व नहीं होता है। ] पूर्वसूत्र से विकल्प भी इन (उत्तरपदस्थों) में नहीं होता है।

**एतदेव 'अनुत्तरपदस्थस्य' इति वचनं ज्ञापकम्—इसुसोः 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेः' (पु.प.२४) इत्ययं नियमो न भवति। तेन वाक्येऽपि—परमसर्पिष्करोति, परमसर्पिः करोति, 'इसुसोः सामर्थ्ये' (८।३।४४) इत्येतद् भवति। व्यपेक्षा च तत्र सामर्थ्यमाश्रितमिति समासे न भवति।।**

## ३८४२. अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य।।४६।। (१६०)

**अकारादुत्तरस्य अनव्ययविसर्जनीयस्य समासेऽनुत्तरपदस्थस्य नित्यं सकारादेशो भवति कृ, कमि, कंस, कुम्भ, पात्र, कुशा, कर्णी—इत्येतेषु परतः। कृ—अयस्कारः। पयस्कारः। कमि—अयस्कामः। पयस्कामः। कंस—अयस्कंसः। पयस्कंसः। कुम्भ—अयस्कुम्भः। पयस्कुम्भः। अयस्कुम्भी,**

**न्यासः**

इत्याह—**एतदेवेत्यादि**। यद्ययमिह नियमः स्यात् 'अनुत्तरपदस्थस्य' इति नोक्तं स्यात्, उक्तञ्च, तस्मादेतज्ज्ञापयति—नायमिह नियमो भवतीति। किमस्य ज्ञापकस्य प्रयोजनम्? इत्याह-**तेनेत्यादि**। यस्मादयमिह नियमो न भवति, तेन हेतुना वाक्येऽधिकस्यापि ग्रहणे सति परमसर्पिः करोति, परमसर्पिष्करोतीत्यत्र पूर्वसूत्रेण षत्वविकल्पो भवति; नियमे तु सति न स्यात्। समासेऽपि तर्हि परमसर्पिःकुण्डिकेत्यत्र षत्वविकल्पेन भवितव्यम्; नियमाभावात्? इत्यत आह—**व्यपेक्षा च तत्रेत्यादि**। चकारोऽवधारणार्थः। इतिकरणो हेतौ। तत्र 'इसुसोः' इत्यादौ सूत्रे सामर्थ्यग्रहणाद् व्यपेक्षैव सामर्थ्यं षत्वविकल्पस्य निमित्तं यस्मादाश्रितं तस्मात् समासे न भवति; तत्र तदभावात्।।४५।।

**अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य**।। 'कुप्वोः ᳲकᳲपौ च' इति प्राप्ते वचनमिदम्। **अयस्कार इति**। 'कर्मण्यण्'। एव**मयस्काम** इत्यत्रापि। 'शीलिकामिभिक्ष्याचरिभ्यो णो वक्तव्यः' इति त्वत्र न प्रवर्त्तते।

**पदमञ्जरी**

अप्रत्ययसकारत्वात्; तस्मादनर्थकमनुत्तरपदग्रहणम्? अत आह—**एतदेवेत्यादि**। ज्ञापनस्य प्रयोजनमाह—**तेनेति**। अथ पूर्वसूत्रेण समासेऽपि विकल्पः कस्मान्न भवति? इत्यत आह—**व्यपेक्षा चेति**। केचित्तु " 'नित्यं समासे' इत्येको योगः, 'अनुत्तरपदस्थस्य' इति द्वितीय इति योगविभागेन समासे सर्वा षत्वप्राप्तिरुत्तरपदस्थस्य प्रतिषिध्यते" इति वदन्तः पूर्वत्र द्विविधेऽपि सामर्थ्ये समाश्रिते न दोषः इत्याहु।।४५।।

**अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य**।। 'कृ, कमीति धातुग्रहणम्। इतरेषां स्वरूपग्रहणम्। **अयस्कार इति**। 'कर्मण्यण्'। **अयस्काम इति**। 'शीलिकामि' इत्यादिना णप्रत्ययः, **अयस्कंसादयः** षष्ठीसमासाः।

**भावबोधिनी**

[ 'इसुसोः सामर्थ्ये' में प्रत्यय इस् उस् हैं, अतः प्रत्ययग्रहण में तदन्त का ग्रहण होने से यह निष्कर्ष निकलता है कि जिससे ये दोनों प्रत्यय होते हैं तदन्तमात्र का ही ग्रहण होगा न अधिक का और न कम का। समास में प्राप्ति सम्भव न होने से 'अनुत्तर-पदस्थस्य' इसके ग्रहण की क्या आवश्यकता? ] यही 'अनुत्तरपदस्य' यह वचन ज्ञापक है कि—'इस् और उस्' में 'प्रत्ययग्रहण में जिसका ग्रहण होता है वह जिससे विहित है उस तदादि का ग्रहण होता है'—यह नियम प्रवृत्त नहीं होता है। [ अतः तदन्तविधि न होने से उत्तरपद में भी 'इस् उस्' का षत्व प्राप्त होगा उसका वारण करने/के लिये यह 'अनुत्तरपदस्थ' का ग्रहण है। ] इस से वाक्य—'परमसर्पिष्करोति, 'परमसर्पिःकरोति' इसमें भी 'इसुसोः सामर्थ्ये' इसकी प्रवृत्ति होती है। [ और विकल्प से षत्व होता है। ] और उसमें व्यपेक्षारूप सामर्थ्य माना गया है अतः समास में यह षत्व नहीं होता है।।४५।।

अकार से उत्तरवर्ती अनुत्तरपदस्थ, अव्ययभिन्न विसर्ग का सकार आदेश समास में—कृ,कमि, कंस, कुम्भ, पात्र, कुशा, कर्णी—इन शब्दों के परे रहते नित्य रूप से होता है। उदा० कृ—अयस्कारः। पयस्कारः। [ अयः + कार = कृ + अण् परे होने

**पयस्कुम्भीत्यत्रापि भवति; 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति' (व्या.प. २९) इति।**

**पात्र–अयस्पात्रम्। पयस्पात्रम्। अयस्पात्री। पयस्पात्री। कुशा–अयस्कुशा। पयस्कुशा। कर्णी–अयस्कर्णी। पयस्कर्णी।**

**शुनस्कर्ण इत्ययं तु कस्कादिषु द्रष्टव्यः।**

**अत इति किम्? गीःकारः। धूःकारः। तपरकरणं किम्? भाःकरणम्। भास्कर इत्ययं तु कस्कादिषु द्रष्टव्यः।**

**अनव्ययस्येति किम्? श्वःकारः। पुनःकारः।**

**न्यासः**

तत्रोपसंख्याने ण्यन्तस्य कमेरुपादानात्, इह त्वण्यन्तस्य। यदा 'आयादय आर्धधातुके वा' इति कमेर्णिङ् नास्ति, तदा कमेरण्यन्तता। **अयस्कंस** इति। षष्ठीसमासः। नु कमेरेव 'वृतॄवदिहनिकमिकषिभ्यः सः' इति से कृते कंस इति भवति, तत्र कमिग्रहणेनैव सिद्धत्वात् कंसग्रहणमनर्थकम्? न; ज्ञापनार्थत्वात्। एतदनेन ज्ञाप्यते—अस्तीदमपि दर्शनम्—'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इति। **अयस्कुम्भ इति**। अयसो विकारः कुम्भ इति समानाधिकरणाधिकारे 'शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च' इति मध्यपदलोपी समासः। षष्ठीसमासो वा। **अयस्कुम्भीति**। गौरादित्वान्ङीष्। अयस्कुम्भवत् समासः।

**अयस्पात्रीति**। पात्रशब्दः ष्ट्रन्प्रत्ययान्तः, तेन 'षिद्गौरादिभ्यश्च' इति ङीष्। **अयस्कुशेति**। अयोविकारोऽत्र न विवक्षितः। तेन जानपदादिसूत्रेण ङीष् न भवति। अय इव कर्णावस्या इत्ययस्कर्णी, 'नासिकोदर' इत्यादिना ङीष्। ईकारान्तस्य कर्णशब्दस्य ग्रहणम्। अतः शुनस्कर्ण इत्यत्र सत्वेन न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**शुनस्कर्ण इत्ययं** त्वित्यादि।

**पदमञ्जरी**

कंसग्रहणमनर्थकम्, कमिग्रहणेनैव सिद्धत्वात्, कंसशब्दो हि 'वृतॄवदिहनिकमिभ्यः सः' इति कमेरेव व्युत्पाद्यते? ज्ञापनार्थं तु, एतत् ज्ञापयति—उणादिषु नावश्यं व्युत्पत्तिकार्यं भवतीति। **अयस्कुम्भीति**। कुम्भशब्दाज्जातिलक्षणो ङीष्। **अयस्पात्रीति**। पात्रशब्दः ष्ट्रन्प्रत्ययान्तः, षित्त्वान्ङीप्। **अयस्कुशेति**। नात्रायोविकारो विवक्षितः, तेन 'जानपद, इति सूत्रेण ङीष् न भवति। **अयस्कर्णीति**। अय इव कर्णौ यस्याः सा अयस्कर्णी, 'नासिकोदर' इत्यादिना ङीष्। **शुनस्कर्ण इत्ययं त्विति**। सूत्रे त्वीकारान्तस्य कर्णीशब्दस्य निर्देशादत्राप्रसङ्गः।

**भावबोधिनी**

से नित्य स् होता है 'कुप्वोः ᳲकᳲपौ च' का अपवाद यह सूत्र है। ] कमि—अयस्कामः। पयस्कामः। कंस—अयस्कंसः, ययस्कंसः। कुम्भ—अयस्कुम्भः, ययस्कुम्भः। अयस्कुम्भी और पयस्कुम्भी—इनमें भी होता है क्योंकि 'जहाँ प्रातिपदिक का ग्रहण रहता है वहाँ लिङ्गविशिष्ट का भी ग्रहण होता है'। वचन ऐसा है।

पात्र—अयस्पात्रम्। पयस्पात्रम्। अयस्पात्री, पयस्पात्री। [ स्त्रीलिङ्ग में ष्ट्रन्प्रत्ययान्त से ङीष् है। ] कुशा-अयस्कुशा। पयस्कुशा। कर्णी-अयस्कर्णी। पयस्कर्णी।

शुनस्कर्णः—यह तो कस्कादिगण में समझना (देखना) चाहिये। [ क्योंकि इस सूत्र में ईकारान्त 'कर्णी' का ही ग्रहण है। ]

अकार से परे—इसका क्या फल है? गीःकारः। धूःकारः। [ यहाँ ई, ऊ से परे है। अतः सत्व नहीं होता है। ] तपरकरण अर्थात् ह्रस्व किसलिये है? भाःकरणम्। [ यहाँ दीर्घ आ से परे होने से सत्व नहीं होता है। ] 'भास्करः' यह तो कस्कादिगण में देखना चाहिये।

**'समासे' इत्येव–यशः करोति। यशः कामयते।**

**'अनुत्तरपदस्थस्य' इत्येव–परमपयःकार। परमपयःकामः।।**

## ३८४३. अधःशिरसी पदे।।४७।। (१६१)

**अधस्, शिरस्–इत्येतयोर्विसर्जनीयस्य समासेऽनुत्तरपदस्थस्य सकार आदेशो भवति पदशब्दे परतः। अधस्पदम्। शिरस्पदम्। अधस्पदी। शिरस्पदी।**

**'समासे' इत्येव–अधः पदम्।**

**'अनुत्तरपदस्थस्य' इत्येव–परमशिरःपदम्।**

**अधस्पदमिति मयूरव्यंसकादित्वात् (२।१।७२) समासः।।**

**न्यासः**

**भाःकरणमिति**। ल्युडन्तेन समासः। यदि तर्हि तपरकरणं न क्रियेत भासं करोतीति दिवादिसूत्रेण **ट** कृते भास्कर इत्यत्रापि भवति? अत आह—**भास्कर इत्ययं त्वित्यादि**। सुबोधम्।।४६।।

**अधःशिरसी पदे**।। **अधःशिरसी** इति। सुब्व्यत्ययेन षष्ठ्याः स्थाने प्रथमा। **पदशब्दे परत इति**। एतेन पद इति स्वरूपस्य ग्रहणम्, न पारिभाषिकस्येति दर्शयति। यदि हि पारिभाषिकस्य ग्रहणं स्यात्, पदग्रहणमनर्थकं स्यात्। समासाधिकारादेव तस्य लब्धत्वादित्यभिप्रायः। **शिरस्पदमिति**। षष्ठीसमासः।।४७।।

**पदमञ्जरी**

**भाःकरणमिति**। षष्ठीसमासः। **भास्कर इत्ययं त्विति**। 'दिवाविभा' इत्यादिना टप्रत्ययः। **जयादित्यस्तु** तस्मिन्सूत्रेऽवोचद्—'भास्करान्तेति प्रत्ययसन्नियोगेन सत्वं निपात्यते' इति। **श्वःकारः, पुनःकाम इति**। घञन्तेन मयूरव्यंसकादित्वात् समासः।।४६।।

**अधःशिरसी पदे**।। **इत्येतयोरिति**। सूत्रे तु षष्ठीस्थाने प्रथमा। पद इति स्वरूपस्य ग्रहणम् न सुप्तिङन्तस्य; तस्य समासाधिकारादेव सिद्धत्वात्। तदाह—**पदशब्दे परत** इति।

**मयूरव्यंसकादित्वात्समास इति**। **अधस्पदमित्यत्र** तु षष्ठीसमासः।।४७।।

**भावबोधिनी**

अनव्यय = अव्ययभिन्न का—इसका क्या फल है? श्वःकारः। पुनः कारः। [ सत्व नहीं होता है क्योंकि अव्यय का विसर्ग है वाक्य है। ]

समास में ही होता है—यशः करोति। यशःकामयते। [ यहाँ समास नहीं है वाक्य है। सत्व नहीं होता है। ] अनुत्तरपदस्थ का ही—परमपयःकारः। परमपयःकामः। [ इनमें उत्तरपदस्थ विसर्ग होने से सत्व नहीं होता है। ]।।४६।।

समास में अनुत्तरपदस्थ अधस् और शिरस् के विसर्ग का सकार आदेश 'पद' शब्द परे रहते होता है। उदा॰ अधस्पदम्। शिरस्पदम्। अधस्पदी। शिरस्पदी। [ अधः पदम् आदि में 'पद' शब्द परे है अतः विसर्ग का स् होता है। लिङ्गविशिष्ट ग्रहण से 'पदी' का भी ग्रहण है। ]

समास में ही होता है—अधः पदम् = [ इस व्यास में नहीं होता है।]

अनुत्तरपदस्थ विसर्ग का ही—परमशिरः पदम्। [ उत्तरपदस्थ शिरस् के विसर्ग का सत्व नहीं होता है। ]

'अधस्पदम्' इसमें 'मयूरव्यंसकादयश्च' सूत्र से समास होता है [ इसमें 'पदस्य अधः' षष्ठी-समास है ]।।४७।।

## ३९४४. कस्कादिषु च।।४८।। (१४४)

**'कस्क'–इत्येवमादिषु च विसर्जनीयस्य सकारः, षकारो वा यथायोगमादेशो भवति कुप्वोः परतः। कस्कः। कौतस्कुतः 'कुत आगतः'(४।३।७४) इत्यण्। भ्रातुष्पुत्रः। शुनस्कर्णः। सद्यस्कालः। सद्यस्क्रीः। क्रीणातेरयं सम्पदादित्वात् (का.वा.) क्विप्प्रत्ययः, तत्र भवः क्रतुः–साद्यस्क्रः। कांस्कान्– 'कानाम्रेडिते' (८।३।१२) इति रुत्वमत्र।**

**सर्पिष्कुण्डिका, धनुष्कपालम्, बर्हिष्पूलम्, यजुष्पात्रमित्येषां पाठः–उत्तरपदस्थस्यापि षत्वं यथा स्यादिति। परमसर्पिःफलमित्येवमादिप्रत्युदाहरणादिति पारायणिका आहुः।**

**भाष्ये, वृत्तौ च 'नित्यं समासेऽनुत्तरपदस्थस्य' (८।३।४५) इत्यत्र परमसर्पिः कुण्डिकेत्येतदेव प्रत्युदाहरणम्। अयस्काण्डः। मेदस्पिण्डः। अविहिते लक्षण उपचारः कस्कादिषु द्रष्टव्यः।।**

### न्यासः

**कस्कादिषु च**।। 'कुप्वोः' इत्यस्यायमपवादः। **यथायोगमिति**। इणः परो यो विसर्जनीयस्तस्य षकारः, यस्त्वन्यस्तस्य सकार इत्येष यथायोगार्थः। **कस्क इति**। सौ परतः 'किमः कः' इति कादेशः, वीप्सायां द्विर्वचनम्। **कौतस्कुत इति**। 'पञ्चम्यास्तसिल्' 'कु तिहोः' इति किमः स्थाने कुभावः, पूर्ववद् द्विरुक्तिः, 'तत आगतः' इत्यणि कृते 'अव्ययानां भमात्रे' इति टिलोपः। **भ्रातुष्पुत्र इति**। यदा समासस्तदा 'ऋतो विद्यायोनिसम्बन्धेभ्यः' इति षष्ठ्या अलुक्। **शुनस्कर्ण** इति संज्ञायाम् 'षष्ठ्या आक्रोश' इत्यलुक्। असंज्ञायां तु समासे श्वकर्ण इत्येव भवति।

ननु च सर्पिष्कुण्डिकादीनाम् 'नित्यं समासेऽनुत्तरपदस्थस्य' इत्येवं षकारः सिद्धः, तत् किमर्थमेषामिह पाठः? इत्यत आह—**एषामित्यादि**। पारायणेन दीव्यन्तीति **पारायणिकाः**, 'तेन दीव्यति' इति ठक्। **भाष्ये वृत्तौ चेति**। अनुत्तरपदस्थस्येति किम्? परमसर्पिःकुण्डिकेति भाष्ये वृत्तौ च प्रत्युदाहृतम्; अतस्तयोरिह पाठो

### पदमञ्जरी

**कस्कादिषु च**।। 'कुप्वोः ≍क≍ पौ च' इत्यस्यापवादः। **यथायोगमिति**। इणः परस्य षत्वम्, अन्यस्य सत्वमित्येष यथायोगार्थः। **कस्क इति**। स्वन्तस्य किमो वीप्सायां द्विर्वचनम्। **कौतस्तुत इति**। कुतःशब्दस्य पूर्ववद् द्विर्वचनम्, तस्मात् 'तत आगतः' इत्यण्, 'अव्ययानां भमात्रे टिलोपः'। **भ्रातुष्पुत्र इति**। 'ऋतो विद्यायोनि-सम्बन्धेभ्यः' इत्यलुक्। **शुनस्कर्ण इति**। 'षष्ठ्या आक्रोशे' इत्यलुक्। पारायणेन दीव्यन्ति = व्यवहरन्तीति पारायणिकाः। पारायणं द्विविधम्—धातुपारायणम्, नामपारायणमिति।

### भावबोधिनी

'कस्क' आदि के समान [ गणपठित ] शब्दों में विसर्ग का सकार अथवा षकार आदेश, जैसा योग हो, वैसा आदेश होता है कवर्ग और पवर्ग परे रहते, अर्थात् इण् से परे हो तो षकार अन्यथा सकार होता है उदा॰ कस्कः। कौतस्कुतः। [ कस्मात् स्थानात्? इस अर्थ में 'कुतस्' बनाकर द्वित्व के बाद 'कुतस्कुतः' बनाकर 'तत आगतः' से अण् होता है। ] भ्रातुष्पुत्रः। शुनस्कर्णः। सद्यस्कालः। सद्यस्क्रीः। क्री-धातु से 'सम्पदादिभ्यश्च' सूत्र से क्विप् प्रत्यय होता है—सद्यस्क्रीः, इससे 'तत्र भवः' अर्थ में अण् प्रत्यय—साद्यस्क्रः। कांस्कान्—इसमें 'कानाम्रेडिते 'इस सूत्र से न् का रुत्व होता है। [ विसर्ग, अनुनासिक, सत्व होते है। ]

सर्पिष्कुण्डिका, धनुष्कपालम्, बर्हिष्पूलम्, यजुष्पात्रम्—इनका पाठ है, जिससे कि उत्तपदस्थ भी इन शब्दों का षत्व हो सके। क्योंकि परमसर्पिः फलम्—इत्यादि प्रत्युदाहरण दिये गये हैं—ऐसा पारायणिक कहते हैं।

भाष्य में और [ किसी प्राचीन ] वृत्ति में 'नित्य' समासेऽनुत्तरपदस्थस्य' इसमें 'परमसर्पिः कुण्डिका'—यही प्रत्युदाहरण दिया गया है। [ अतः 'परमसर्पिःफलम्' और 'परमसर्पिःकुण्डिका' इन दोनों का पाठ इसमें नहीं है ] अयस्काण्डः। मेदस्पिण्डः। जिनका

## ३८४५. छन्दसि वाऽप्राम्रेडितयोः।।४९।। (३६३४)

छन्दसि विषये विसर्जनीयस्य वा सकारादेशो भवति कुप्वोः परतः, प्रशब्दमाम्रेडितं च वर्जयित्वा। अयःपात्रम्, अयस्पात्रम्। विश्वतः पात्रम्, विश्वतस्पात्रम्। उरुणःकारः, उरुणस्कारः।

अप्राम्रेडितयोरिति किम्? 'अग्निः प्रविद्वान्'। (अ.वे. ५।२६।१) 'परुषःपरुषस्परि।' (मै. २।७।१५।२१४)।

**न्यासः**

नाभिमतोऽमीषामिति दर्शयति। **अविहितलक्षण** इत्यादिना कस्कादेराकृतिगणतामाचष्टे। चकारोऽनुक्तसमुच्चयार्थो भवन्नेवमर्थं द्योतयति। विसर्जनीयस्थानिकयोः सकारषकारयोः 'उपचार' इत्येषा संज्ञा विहिता।।४८।।

**छन्दसि वाऽप्राम्रेडितयोः**।। **अयस्पात्रमिति** षष्ठीसमासे कृते 'अतः कृकमि' इत्यादिना नित्ये षत्वे प्राप्तेऽनेन विकल्पो विधीयते। एवं **विश्वतस्पात्र**मित्यादावपि यदा समासः, तदा प्राप्ते। **उरुणस्कार** इत्यत्राप्यसमासत्वादेवाप्राप्तेः। उरुशब्दात् परस्यास्मच्छब्दस्य 'बहुवचनस्य वस्नसौ' इति नसादेशः, 'नश्च धातुस्थोरुषुभ्यः' णत्वम्।

**पदमञ्जरी**

भाष्ये **वृत्तावित्यादिना**ऽनन्तरोक्तमर्थं निराकरोति। **अविहितलक्षण** इत्यादिनाऽऽकृतिगणोऽयमिति दर्शयति। विसर्जनीयस्थानिकयोः सकारषकारयोः उपचार इति संज्ञा।।४८।।

**छन्दसि वाऽप्राम्रेडितयोः**।। **अयस्पात्रमिति**। असमासोऽयम्। समासे हि 'अतः कृकमि' इत्यादिना नित्यं सत्वं प्राप्नोति; अस्य विकल्पस्यासिद्धत्वात्, असमासे चास्य विकल्पस्य चरितार्थत्वात्। यदि वा 'प्रकरणे प्रकरणमसिद्धम्' इति पक्षे समासेऽप्युदाहरणम्, किन्त्वनेन मुक्ते तेन नित्यं प्राप्नोति, तस्मादसमास एवायम्। समासे तु यदि विकल्पो दृश्यते, स छान्दसत्वेनोपपाद्यः। **विश्वतस्पात्रमिति**। अत्राव्ययत्वाद् 'अतः कृकमि' इत्यस्याप्रसङ्गः। **उरुणस्कार इति**। अस्मदो नसादेशः, 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम्। कारशब्दो घञन्तः, अत्रासमासत्वादप्रसङ्गः।

**अग्निः प्रविद्वानिति**। अत्र षत्वप्रसङ्गः, उभयक्रमे तु सकार आदेश इत्युपलक्षणम्। **परुषः परुष इति**। वीप्सायां द्विर्वचनम्। अङ्गमङ्गं परुष्परु, चतुष्पुष्पा विशस्ते—इत्यादस्तु कस्कादिषु द्रष्टव्याः। **हरिकेशः**

**भावबोधिनी**

कोई सूत्र नहीं उन शब्दों को कस्कादि गण में समझ लेना चाहिये अर्थात् यह आकृतिगण है। [ अतः सूत्रस्थ 'च' के बलसे अन्यत्र भी सत्व-षत्व समझने चाहिये। ]

**विमर्श**—सर्पिष्कुण्डिका—आदि शब्दों का पाठ इस लिये किया गया है कि यदि ये शब्द उत्तरपदस्थ हों तो भी षत्व हो सके। इसीलिये इस सूत्र के प्रत्युदाहरण के रूप में 'परमंसर्पिःफलम् यह लिखा गया है। ऐसा पारायण करने वालों का वक्तव्य है।

परन्तु भाष्यकार तथा प्राचीन वृत्तिकार कुछ अलग कहते हैं। उनके अनुसार 'नित्यं समासेऽनुत्तरपदस्थस्य' सूत्र का प्रत्युदाहरण 'परमसर्पिः कुण्डिका' है। अतः सर्पिष्कुण्डिका आदि में तो पूर्ववर्ती सूत्र से ही षत्व होता है, इनका पाठ आवश्यक नहीं है अतः जिनके विसर्ग का सत्व या षत्व किसी अन्य सूत्र से नहीं कहा गया है उन्हीं का पाठ इसमें मानना चाहिये।।४८।।

छन्दस् = वेदविषय में विसर्ग का विकल्प से सकार आदेश कवर्ग और पवर्ग परे रहते होता है प्र शब्द और आम्रेडित (= द्वित्व में बादवाले) शब्द को छोड़कर। उदा० अयःपात्रम्, अयस्पात्रम्। विश्वतः पात्रम्, विश्वतस्पात्रम्। उरु णःकारः, उरु णस्कारः।

प्र और आम्रेडित को छोड़कर—इसका क्या फल है? अग्निः प्रविद्वान्। परुषः परुषः परि। [ प्र और आम्रेडित परे हैं अतः सत्व नहीं होता है। ]

'सूर्यरश्मिर्हरिकेशः पुरस्तात्' (ऋ. १०।१३९।१) 'स नः पावकः'-(ऋ. १।१२।१०) इत्येवमादिषु 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (पु. प.३५) इति सत्वं न भवति।।

**३८४६. कः करत्करतिकृधिकृतेष्वनदितेः।।५०।। (३६३५)**

**कः, करत्, करति, कृधि, कृत-इत्येतेषु परतः अनदितेर्विसर्जनीयस्य सकारादेशो भवति छन्दसि विषये। कः-विश्वतस्कः। करत्-विश्वतस्करत्। करति-पयस्करति। कृधि-'उरुणस्कृधि।' (ऋ. ८।७५।११) कृत-सदस्कृतम्।**

**अनदितेरिति किम्? 'यथा नो अदितिः करत्'।। (ऋ.१।४३।२)**

**न्यासः**

अथेह 'हरिकेशः पुरस्तात्, स नः पावक' इत्यादौ च कस्मान्न भवति? इत्याह—**हरिकेश इत्यादि**।।४९।।

**कःकरत्करतिकृधिकृतेष्वनदितेः**।। वेति निवृत्तम्। **करिति**। कृञो लुङ्, च्लिः, तस्य 'मन्त्रे घस' इत्यादिना लुक्, तिप्, गुणः, रपरत्वम्, हल्ङ्यादिना तिलोपः, रेफस्य विसर्जनीयः, 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडागमाभावः। **करदिति**। कृञो लङ्, 'कृमृदृरुहिभ्यश्छन्दसि' इत्यङ्, 'सृजिदृशोरङि गुणः' इति गुणः, पूर्ववदडागमाभावः। अथ वा-लटः शत्रादेशः, व्यत्ययेन शप्। **करतीति**। लट्, तिप्, [illegible]च्छप्। **कृधीति**। कृञो लोट् 'सेर्ह्यपिच्च' इति सिपो हिरादेशः, तस्य 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति धि[illegible], 'बहुलं छन्दसि' इति विकरणलुक्। **कृतमिति**। निष्ठान्तमेतत्। **विश्वतस्क इति**। 'पञ्चम्यास्तसिल्'। **उरुणस्कृधीति**। पूर्ववन्नसादेशः, णत्वं च। **सदस्कृतमिति**। सदसि कृतमिति 'सप्तमी' इति योगविभागात् समासः।।५०।।

**पदमञ्जरी**

**पुरस्तादित्यादे**रत्रोपयोगं न पश्यामः। कथमत्रैव सूत्रे वाग्रहणात् सत्वषत्वयोर्भावाभावौ प्रतिपादितौ? किमत्र? 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इत्यनेन।।४९।।

**कःकरत्करतिकृधिकृतेष्वनदितेः**।। **करिति**। कृञो लुङ्, 'मन्त्रे घस' इत्यादिना च्लेर्लुक्, तिपो हल्ङ्यादिलोपः, 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः। **करदिति**। कृञ एवं लुङ्, 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेरङ्। **करतीति**। लट्, व्यत्ययेन शप्। **कृधीति**। कृञो लोट्, सेर्हिः, 'बहुलं छन्दसि' इति शपो लुक्, 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः। **कृतमिति**। कृञ एव क्तः। **सकार आदेश इति**। षत्वस्याप्युपलक्षणमेतत्। **विश्वतस्करिति**। अव्यत्वादसमासत्वाच्च 'अतः कृकमि' इत्यस्याप्रसङ्गः। इतरेषु त्वसमासत्वादप्रसङ्गः। शन्न करत्, यथा नः श्रेयसः करदित्यादौ छान्दसत्वात्सत्वाभावः। तथा कृधीत्यत्र सकारधकारकशब्देषु परतस्तैत्तिरीयके सत्वं भवति—तन्म आमनसः कृधि स्वाहा, उरुक्षयाय नः कृधि घृतमन्यासै, शं च नः कृधि क्रत्वे।।५०।।

**भावबोधिनी**

सूर्यरश्मिर्हरिकेशः पुरस्तात्। स नः पावकः—इत्यादि स्थलों में सत्व इसलिये नहीं होता है क्योंकि 'छन्दस् = वेद में सारी विधियाँ विकल्प से होती हैं।।४९।।

कः, करत्, करति, कृधि, कृत—इन शब्दों के परे रहते अनदिति = अदिति शब्द से भिन्न के विसर्ग का सकार (या षकार) आदेश छन्दोविषय में होता है। उदा॰ क—विश्वतस्कः। करत् = विश्वतस्करत्। करति—पयस्करति। कृधि—उरुणस्कृधि। कृत—सदस्कृतम्। [ सभी में विसर्ग का सत्व होता है। 'कः' आदि रूप विभिन्न लकारों, वचनों के हैं। इनका विवेचन पहले सूत्रों में देखा जा सकता है। इसके उदाहरणों में—'विश्वतस्कः इसमें अव्यय और असमास के कारण 'अतः कृ कमि.' की प्राप्ति नहीं है। शेष उदा॰ में असमास के कारण सत्त्व की प्राप्ति नहीं है। अतः यह सूत्र बनाया गया। ]

अनदिति = अदिति से भिन्न के विसर्ग का—इसका क्या फल है? यथा नो अदितिः करत्। [ इसमें सत्व या षत्व नहीं होता है। ]।।५०।।

**३८४७. पञ्चम्याः परावध्यर्थे।।५१।। (३६३६)**

**'छन्दसि' इत्येव। पञ्चमीविसर्जनीयस्य सकारादेशो भवति परौ परतः अध्यर्थे। 'दिवस्परि' प्रथमं जज्ञे'। (ऋ. १०।४५।१) 'अग्निर्हिमवतस्परि'। (अ.वे. ४।९।९) 'दिवस्परि।' (ऋ. १।१२१।१०) महस्परि।**

**पञ्चम्या इति किम्? 'अहिरिव भोगैः पर्येति बाहुम्'। (ऋ.६।७५।१४) पराविति किम्? 'एभ्यो वा एतल्लोकेभ्यः प्रजापतिः समैरयत्।'**

**अध्यर्थ इति किम्? 'दिवः स्पृथिव्याः पर्योज उद्भृतम्।' (ऋ.६।४७।२७)**

**अत्र परिः सर्वतोभावे, अध्यर्थः उपरिभावः।।**

**३८४८. पातौ च बहुलम्।।५२।। (३६३७)**

**पातौ च धातौ परतः पञ्चमीविसर्जनीयस्य बहुलं सकार आदेशो भवति छन्दसि विषये। 'दिवस्पातु। (ऋ.१०।१५८।१) राज्ञस्पातु।**

**न्यासः**

**पञ्चम्याः परावध्यर्थे।। अध्यर्थमिति।** परेरिदं विशेषणम्। **हिमवतस्परीति।** हिमवत उपरीत्यर्थः। पञ्चमी च सुब्व्यत्येन षष्ठ्या स्थाने वेदितव्या।

**दिवः पृथिव्या** इत्यादि सर्वतोभावे परिशब्दोऽत्र वर्तते।।५१।।

**पातौ च बहुलम्। दिवस्पात्विति।** पातेर्लोट्, तिप्, 'एरुः' इत्युत्वम्, अदादित्वाच्छपो लुक्।।५२।।

**पदमञ्जरी**

**पञ्चम्याः परावध्यर्थे।। अध्यर्थ इति।** परेरिदं विशेषणम्। **हिमवतस्परि,** हिमवत उपरीत्यर्थः। व्यत्ययेन षष्ठ्याः स्थाने पञ्चम्याः प्रयोगः।

**पर्योज उद्भृतमिति।** अत्र परिः सर्वतोभावे वर्तते।।५१।।

**पातौ च बहुलम्।।** क्वचित् पठ्यते—**पाताविति धातुनिर्देश इति।** अन्ये तूदाहरणपर्यालोचनया लोडन्तानुकरणं मन्यन्ते।।५२।।

**भावबोधिनी**

'छन्दोविषय में' इसकी अनुवृत्ति होती है। पञ्चमी विभक्ति के विसर्ग का सकार आदेश 'अधि' के अर्थ में विद्यमान 'परि' शब्द के परे रहते होता है। [ अधि—यह 'ऊपर होना' अर्थ में है। जब 'परि' इस अर्थ को सूचित करे तब सत्व होता है। ] उदा॰ 'दिवस्परि प्रथमं जज्ञे'। 'अग्निर्हिमवतस्परि। दिवस्परि। महस्परि'। [ इनमें 'परि' का प्रयोग अधि = ऊपर होना—अर्थ में होने से विसर्ग का सत्व होता है। ]

पञ्चमी का—इसका क्या फल है—अहिरिव भोगैः पर्येति बाहुम्। [ यहाँ तृतीया का विसर्ग होने से सत्व नहीं। ] 'परि' शब्द परे—इसका क्या फल है? एभ्योवा एतल्लोकेभ्यः प्रजापतिः समैरयत्। [ यहाँ 'परि' न होकर 'प्रजापतिः' अथवा 'प्र' शब्द परे है। ]

अधि—के अर्थ में—इसका क्या फल है? दिवः पृथिव्याः पर्योज उद्भृतम्। [ 'परि' शब्द अधि—अर्थ में नहीं है ] इसमें 'परि' शब्द सर्वतोभाव अर्थ में है, जब कि अधि का अर्थ है—ऊपर होना।।५१।।

पाति = पा धातु परे रहते रहते पञ्चमी के विसर्ग का बहुल रूप से सकार आदेश छन्दोविषय में होता है। उदा॰ दिवस्पातु। राज्ञस्पातु। [ सत्व होता है। ]

**न च भवति–परिषदः पातु।।**

**३८४९. षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु।।५३।। (३६३८)**

**षष्ठीविसर्जनीयस्य सकारादेशो भवति पति, पुत्र, पृष्ठ, पार, पद, पयस्, पोष–इत्येतेषु परतः छन्दसि विषये। 'वाचस्पतिं विश्वकर्माणमूतये'।' (ऋ.१०।८१।७) 'पुत्र–दिवस्पुत्राय सूर्याय।' (ऋ.१०।३७।१) पृष्ठ–दिवस्पृष्ठे धावमानं सुपर्णम्।' (अ.वे.१३।२।३७) पार–'अगन्म तमसस्पारम्'। (वा. सं. १२।७३) पद–इळस्पदे समिध्यसे। (ऋ.१०।१९१।१) पयस्–'सूर्यं चक्षुर्दिवस्पयः'। पोष–'रायस्पोषं यजमानेषु धत्तम्'। (ऋ. १०।१२२।८)**

**षष्ठ्या इति किम्? मनुः पुत्रेभ्यो दायं व्यभजत्।।**

**३८५०. इडाया वा।।५४।। (३६३९)**

**इडायाः षष्ठीविसर्जनीयस्य वा सकार आदेशो भवति पत्यादिषु परतश्छन्दसि विषये। इडायास्पतिः, इडायाः पतिः। 'इडायास्पुत्रः, (ऋ.३।२९।३) इडायाः पुत्रः। इडायास्पृष्ठम्, इडायाः पृष्ठम्। इडायास्पारम्, इडायाः पारम्। 'इडायास्पदम्', (वा. सं.४।२२) इडायाः पदम्'। (तै. सं.१।२।५१) इडायास्पयः इडायाः पयः। इडायास्पोषम्, इडायाः पोषम्।।**

### न्यासः

**षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु।। वाचस्पतिमिति।** 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनाद-कृत्यप्यलुक्।।५३।।

**इडाया वा।।** पूर्वेण नित्ये प्राप्ते विकल्पार्थं वचनम्। यद्येवम्, वेत्यनर्थकम्, आरम्भसामर्थ्यादेव विकल्पेनायं विधिर्विज्ञास्यते? नैतत्; असति वाग्रहणे पूर्वो विधिर्बहुलं विज्ञायेत; बहुलग्रहणस्य प्रकृतत्वात्। इह तु वाग्रहणे पूर्वो विधिर्नित्यो विज्ञायेतेति नानर्थकम्।।५४।।

### पदमञ्जरी

**षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु। वाचस्पतिमिति।** 'तत्पुरुषे कृति बहुलम्' इत्यलुक्।।५३।।५४।।

### भावबोधिनी

नहीं भी होता है—परिषदः पातु।।५२।।

षष्ठी के विसर्ग का सकार आदेश—पति, पुत्र, पृष्ठ, पार, पद, पयस्, पोष—इन शब्दों के परे रहते होता है छन्दोविषय में। उदा० पति—वाचस्पतिं विश्वकर्माणमृतये। पुत्र—दिवस्पुत्राय सूर्याय। पृष्ठ—दिवस्पृष्ठे धावमानं सुपर्णम्। पार—अगन्म तमसस्पारम्। पद—इडस्पदे समिध्यसे। पयस्—सूर्यं चक्षुर्दिवस्पयः। पोष—रायस्पोषं यजमानेषु धत्तम्। [ इनमें पति आदि शब्द परे होने से विसर्ग का सत्व होता है। ]

षष्ठी के विसर्ग का—इसका क्या फल है? मनुः पुत्रेभ्यो दायं व्यभजत्। ] [ यहाँ प्रथमा का विसर्ग है। ]।।५३।।

'इडा' शब्द के षष्ठी विभक्ति के विसर्ग का सकार आदेश पति आदि (पूर्वसूत्रोक्त शब्दों) के परे रहते वेदविषय में विकल्प से होता है। उदा० इण्डायास्पतिः, इडायाः पतिः। इडायास्पुत्रः, इडायाः पुत्रः। इडायास्पृष्ठम्, इडायाः पृष्ठम्। इडायास्पारम्, इडायाःपारम्। इडायास्पदम्, इडायाःपदम्। इडायास्पयः इडायाः पयः। इडायास्पोषम्, इडायाः पोषम्। [ सभी में विसर्ग का स् विकल्प से होता है। ]।।५४।।

## ३८५१. अपदान्तस्य मूर्धन्यः।।५५।। (२१०)

**पदाधिकारो निवृत्तः। 'अपदान्तस्य' इति, 'मूर्धन्यः' इति चैतदधिकृतं वेदितव्यमापादपरिसमाप्तेः। वक्ष्यति–'' 'आदेशप्रत्यययोः'। (८।३।५९) सिषेव। सुष्वाप। अग्निषु। वायुषु। अपदान्तस्येति किम्? अग्निस्तत्र, वायुस्तत्र।''**

**'ष' इत्येव सिद्धे मूर्धन्यग्रहणं ढकारार्थम्–अकृढ्वम्, चकृढ्वे।।**

**न्यासः**

**अपदान्तस्य मूर्धन्यः**।। मूर्धनि भवो मूर्धन्यः—'शरीरावयवाद् यत्', 'ये चाभावकर्मणोः' इति प्रकृतिवद्भावः। **सिषेच, सुष्वापेति**। 'षिचिर् क्षरणे', 'ञिष्वप् शये', 'धात्वादेः षः सः' इति सत्वम्, लिट्, तिप्, णल्। स्वपेः 'लिट्यभ्यासस्योभयेषाम्' इति सम्प्रसारणम्।

अथ मूर्धन्यग्रहणं किमर्थम्, न ष इत्येवोच्येत, षकारेकृते सिषेचेत्यादि सिध्यति, लघु च सूत्रं भवति? इत्याह—**ष इत्येवं सिद्धे इति**। यदि ष इत्येवोच्येत, अकृढ्वम्, चकृढ्वे इत्यत्रापि 'इणः षीध्वं लुङ्लिटां धोऽङ्गात्' इति षत्वं प्रसज्येत? ढत्वं चेष्यते, तच्च मूर्धन्यग्रहणे सति सिध्यत्येव। अत्र हि सत्यान्तरतम्यान्नादानुप्रदानस्य घोषवतो महाप्राणस्य धकारस्य तादृशो ढकारो भवति। यदि पुनः 'इणः षीध्वम्' इति सूत्रे ढग्रहणं क्रियते, तदा शक्यत इह सूत्रे मूर्धन्यग्रहमकर्तुम्। तथा च ढग्रहणं न कृतं वैचित्र्यार्थम्। ननु च क्रियमाणेन ढग्रहणेन षकारस्य व्यवच्छिन्नत्वादत उत्तरेषु षग्रहणं कर्तव्यं जायते। जायतां नाम, तथापि मूर्धन्यग्रहणात् स्वरूपग्रहणमेव लाघवं भवति। स्वरूपग्रहणे हि षण्मात्रा भवन्ति—इह 'ष' इत्युक्ते द्वे मात्रे उत्तरसूत्रे 'ढ' इत्युक्ते द्वे 'उत्तरत्र 'ष' इत्युक्ते द्वे। ताः सर्वा सङ्कलिताः षणमात्रा भवन्ति। मूर्धन्यग्रहणे सति सप्त। तस्मात् स्वरूपग्रहणे सति लाघवं भवति। यदि तु सन्तावपि षकारढकारौ प्रकृतौ, तथापि षकारस्य स्वरितत्वात्तस्यैवानुवृत्तिरिति कल्प्यते, तदा सुतरां स्वरूपग्रहणे लाघवं भवति। **अकृढ्वमिति**। 'ह्रस्वादङ्गात्' इति सिचो लोपः।

अथान्तग्रहणं किमर्थम्? 'अपदस्य मूर्धन्यः' इत्युच्यमानेऽपदस्य यः सकारस्तस्य मूर्धन्यो विज्ञायेत। तथा च करिष्यतीत्यादौ न स्यात्; पदसकारत्वात्। क्व तर्हि स्यात्? करिष्यतीत्यादौ यत्र पदसंज्ञा नास्ति। अत्र हि भसंज्ञा पदसंज्ञां बाधेत। तस्मादन्तग्रहणं क्रियते।।५५।।

**पदमञ्जरी**

**अपदान्तस्य मूर्धन्यः**।। मूर्ध्नि भवो मूर्धन्यः, 'शरीरावयवाद्यत्', 'ये चाभावकर्मणोः' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपाभावः। **सुष्वापेति**। 'लिट्यभ्यासस्योभयेषाम्' इति सम्प्रसारणम्।

मूर्धन्यग्रहणमनर्थकम्, 'ष' इत्येव सिद्धम्? अत आह—**ष इत्येव सिद्धे इति**। 'ष' इत्युच्यमाने 'इणः' षीध्वम्' इत्यत्रापि षत्वं प्रसज्यते, ढत्वं चेष्यते। अथात्रैव मूर्धन्यग्रहणं क्रियते, उत्तरेषु योगेषु पुनः षग्रहणं कर्त्तव्यम्। मूर्धन्यग्रहणे तु क्रियमाणे न दोषो भवति।।५५।।

**भावबोधिनी**

'पदस्य' इस अधिकार की निवृत्ति हो जाती है। 'अपदान्तस्य' और 'मूर्धन्यः' इन दोनों की पाद की परिसमाप्ति तक अनुवृत्ति समझनी चाहिये। आगे कहेंगे 'आदेश-प्रत्यययोः' [ इण् और कवर्ग से परे आदेशभूत और प्रत्ययावयव सकार का षकार आदेश होता है। ] उदा॰ सिषेव। [ षिवु के ष का स आदेश 'धात्वादेः षः सः' सूत्र से होता है। लिट् प्रथमपुरुष एकवचन में सिसेव में इण् से परे होने से आदेश स् का ष होता है। इसी प्रकार 'सुष्वाप'—में भी समझना चाहिए। ष्वप् = स्वप् + लिट् आदि होता है। ] अग्निषु, वायुषु। [ अग्नि + सुप्, वायु + सुप्, इनमें प्रत्ययावयव स् है अतः षत्व होता है। ]

**३८५२. सहेः साडः सः।।५६।। (३३५)**

**सहेर्धातोः साड्रूपस्य यः सकारस्तस्य मूर्धन्य आदेशो भवति। जलाषाट्। तुराषाट्। पृतनाषाट्। सहेरिति किम्? सह डेन वर्तते सडः, तस्यापत्यं साडिः।**

**न्यासः**

**सहेः साडः सः।। साड्रूपस्येति**। साडित्येतद्रूपमापन्नस्येत्यर्थः। **जलाषाढिति**। जलं सहत इति 'भजो ण्विः' इत्यनुवर्त्तमाने 'छन्दसि सहः' इति ण्विः, 'अत उपधायाः' इति वृद्धिः, 'हो ढः' इति ढत्वम्, तस्य जश्त्वम् डकारः, 'अन्येषामपि दृश्यते' इति दीर्घः। सकारस्योष्मणो घोषवत आन्तरतम्यात् तादृश एव षकारः। **सह डेनेत्यादि**। डीङः 'सप्तम्यां जनेर्डः' इत्यनुवर्तमाने 'अन्येष्वपि दृश्यते' इति डप्रत्ययः, अपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वात्। सह डेन वर्तत इति 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः, 'वोपसर्जनस्य' इति सहशब्दस्य सभावः, सडस्यापत्यमिति अत इञि 'यस्येति च' इत्यकारलोपः, आदिवृद्धौ च साडिरित्येतद्रूपं भवतीति, असति सहेरित्येतस्मिन् मूर्धन्यः प्रसज्येत। 'अचः परस्मिन् पूर्वविधौ' इत्यकारस्य स्थानिवत्त्वान्नास्ति साडित्येतद्रूपमिति चेत्? न; 'पूर्वत्रासिद्धे न स्थानिवत्' इति स्थानिवद्भावनिषेधात्। नन्वेवमपि नैवात्र साडित्येतद्रूपमस्ति? षत्वे कर्त्तव्ये बहिरङ्गाया वृद्धेरसिद्धत्वात्। इहापि तर्हि न स्यात्—जलाषाडिति? षत्वे कर्त्तव्ये बहिरङ्गाया वृद्धेरसिद्धत्वादेव; सा ह्यङ्गमाश्रित्य भवति, अङ्गसंज्ञा च प्रत्यये सति, प्रत्ययो ह्युपपदाश्रय इति व्यक्तमुपधावृद्धेर्बहिरङ्गत्वम्। षत्वं त्वन्तरङ्गं साड्भूतस्य विधीयत इति 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वात् षत्वं न भविष्यतीति वचनमिदमनर्थकं स्यात्। तस्मान्मा भूद् वचनस्य वैयर्थ्यमिति नेयं परिभाषोपतिष्ठते।

**पदमञ्जरी**

**सहेःसाडः सः।। साड्रूपस्येति**। साडिति रूपं प्राप्तस्येत्यर्थः। **जलाषाडिति**। 'भजो ण्विः', 'छन्दसि सहः' उपधावृद्धिः, ढत्वम्, जश्त्वचर्त्वे, 'अन्येषामपि दृश्यते' इत्युपपदस्य दीर्घः, सकारस्यान्तरतमो मूर्धन्यः षकारः।

**सहेरिति किमिति**। अन्यत्र साडशब्दस्यासम्भवं मन्यमानस्य प्रश्नः। **सह डेनेति**। सडः = वृश्चिकलाङ्गलम्, तस्यापत्यं साडिरिति। साड इत्यत्र तु साड्शब्दस्यानर्थकत्वादप्रसङ्गं मत्वा तद्धितान्तः प्रत्युदाहृतः, तत्र हि यस्येतिलोपे कृते साड्शब्दोऽर्थवान् भवति। न च यस्येतिलोपस्य स्थानिवत्त्वम्: 'पूर्वत्रासिद्धे न स्थानिवत्' इति वचनात्। एवमपि 'षत्वतुकोरसिद्धः' इत्येकादेशस्यासिद्धत्वात् साड्शब्दस्याभावः। तस्मात्सह डेन वर्त्तते इति सड इति पाठः। यस्य नाम्नि डशब्दो वर्त्तते स सडः, यथा—मृड इति, तस्यापत्यं साडिः। नन्वत्रापि बहिर्भूत-

**भावबोधिनी**

'ष' इतने से ही सब कार्य सम्भव था तब 'मूर्धन्य' का ग्रहण—अकृढ्वम्, चकृढ्वे [ में ध् का ] ढ् करने के लिये है। [ क्योंकि 'इणः षीध्वम्' सूत्र से ध का ढ करना है। अन्यथा उसीमें मूर्धन्य ग्रहण करना होगा और यहाँ 'ष' का ग्रहण करना होगा। इसमें गौरव आता है। अतः 'मूर्धन्य' एक शब्द का ही ग्रहण किया गया। ]।।५५।।

'सह्' धातु के 'साड्' रूप का जो सकार उसका मूर्धन्य आदेश होता है। उदा० जलाषाट्। तुराषाट्। पृतनाषाट्। [ जलं सहते—आदि अर्थों में 'सहे च' सूत्र से ण्वि प्रत्यय, सर्वापहारी लोप करने के बाद, उपधावृद्धि, ह् का ढ्, जश्त्व से ड् करने पर उपपद समास 'अन्येषामपि दृश्यते' से दीर्घ होता है—जलासाड्, षत्व करने पर—जलाषाड्। ]

सह् धातु के—इसका क्या फल है? सह डेन वर्तते—इस अर्थ में—सडः, तस्य अपत्यम्—अर्थ में इञ् प्रत्यय—साडिः। [ इसमें न होने लगे। ]

**साड्ग्रहणं किम्? यत्रास्यैतद्रूपं तत्र यथा स्यात्, इह मा भूत्–जलासाहम्। तुरासाहम्।**
**स इति किम्? आकारस्य मा भूत्।।**

## ३८५३. इण्कोः।।५७।। (२११)

**'इण्कोः' इत्येतदधिकृतं वेदितव्यम्। इत उत्तरं यद्वक्ष्यामः, इणः कवर्गाच्चेत्येवं तद्वेदितव्यम्।**

**न्यासः**

**तुरासाहमिति**। द्वितीयैकवचनान्तमेतत्। क्वचित् **जलासाहमिति** पाठः, स त्वयुक्तः; इष्टत्वादिह षत्वस्य। तथा च वक्ष्यति (८.३.११०)—'सवनादिष्वश्वसनिग्रहणमनिणोऽपि षत्वं भवतीति ज्ञापनार्थम्। तेन जलाषाहम्, अश्वषाहमित्येतत् सिद्धं भवति' इति।

**स इति किमिति**। एवं मन्यते—अलोऽन्त्यपरिभाषयान्तस्य तावड् डकारेण भवितव्यम्, अन्तस्य भवन्नान्तरतम्याड् डकारः स्यात्, एतच्चायुक्तम्; डकारस्य डकारविधाने प्रयोजनाभावात्। तस्मादन्तरेणापि सग्रहणं सकारस्यैव भविष्यति। इतरस्तु—'स' इत्येतस्मिन्नसति, 'अनन्त्यविकारेऽन्त्यसदेशस्य' इत्याकारस्य द्विमात्रिकस्यान्तरतम्यात् तादृश ऋकारो मूर्धन्यः स्यादित्यनेनाभिप्रायेणाह—**आकारस्य मा भूदिति**।।५६।।

**इण्कोः**।। 'इण्कोः' इति द्वन्द्वैकवद्भावं कृत्वैकवचनेन निर्देशः। नुमागमस्तु सत्यपि नपुंसकत्वेऽनित्यमागमशासनमिति न क्रियते। इणिति परणकारेण प्रत्याहारग्रहणम्। 'कु' इति कवर्गस्य। कुतः पुनरेतदवसितम्—अनयोर्ग्रहणम्, न पुनरिकारककारोकाराणामिति? व्याख्यानात्। सर्वसन्देहेष्विदमुपतिष्ठते—'भवति हि व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमिति।' **वाक्षु, त्वक्ष्विति**। 'चोः कुः' इति कुत्वम्।

**पदमञ्जरी**

तद्धितापेक्षत्वाद्बहिरङ्गा वृद्धिः, क्व तर्हि स्यात्? **जलाषाडिति**। नन्वत्रापि बहिर्भूत-ण्व्यपेक्षया बहिरङ्गैव वृद्धिः? अथ तत्र वचनाद्भवति, इहापि प्राप्नोति—तुरासाहमिति? तुरासाहं पुरोधायेत्यादौ तु ण्विरेव दुर्लभः, प्रागेव षत्वम्।

**आकारस्य मा भूदिति**। 'अन्त्यस्य मा भूत्' इति तु नोक्तम्; डकारस्य डकारवचने प्रयोजनाभावात्। अथाप्यनन्तरतममूर्धन्यार्थं वचनं स्याद्? एवमप्यपदान्तस्येत्यन्त्यस्य न भविष्यति। नन्वेवमपि 'अलोऽन्त्यस्य' इत्यस्मिन्बाधिते सर्वादेशो मूर्धन्यः प्राप्नोति, तत्किमुच्यते—आकारस्य मा भूदिति? उच्यते; 'अनन्त्यविकारेऽन्त्यसदेशस्य' इत्याकारस्य मूर्धन्यः प्राप्नोति।।५६।।

**इण्कोः**।। 'इण्' इति परेण णकारेण प्रत्याहारः, 'कु' इति कवर्गस्य ग्रहणम्, तयोः समाहारद्वन्द्वे एकवचनम्। नुमागमस्तु सत्यपि नपुंसकत्वे न कृतः, 'अनित्यमागमशास्त्रम्' इति कृत्वा। **वाक्ष्विति**। 'चोः कुः' इति कुत्वे कृते कवर्गात्परः सकारः। वर्गग्रहणम् 'शासिवसिवसीनां च' इत्यत्र घकारस्यापि ग्रहणार्थम्—जक्षतुरिति; अन्यथा चर्त्वस्यासिद्धत्वान्न स्यात्। अथ वचनसामर्थ्यात् चर्त्वस्य सिद्धत्वमाश्रीयेत; चिन्त्यं वर्गग्रहणस्य प्रयोजनम्।

**भावबोधिनी**

साड् का—इसका क्या फल है? जहां पर सह् धातु का यह साड् यह रूप हो वहीं पर षत्व हो सके, यहाँ न हो—जलासाहम् तुरासाहम्। [ यहां साड् नहीं 'साह्' है अतः षत्व नहीं होता है। ]

स् का ष्—इसका क्या प्रयोजन है? आकार का न होने लगे अतः केवल 'स्' व्यञ्जन का ग्रहण है ]।।५६।।

'इण् कोः' इसका अधिकार समझना चाहिये। इसके आगे जिन्हें कहेंगे उन्हें इण् और कवर्ग से परे समझना चाहिये। कहेंगे—'आदेशप्रत्यययोः' (आदेश और प्रत्यय के स् का ष् होता है, यह इण् और कवर्ग से परे का ही होता है। ] सिषेव, सुष्वाप। [ षिवु तथा ष्वप् के ष् का स् आदेश, लिट् प्रथम पुरुष एकवचन का रूप है सिसेव, सुस्वाप इण् से परे आदेशभूत स् का ष होता है। ]

वक्ष्यति–" 'आदेशप्रत्यययोः' (८।३।५९)। सिषेव। सुष्वाप। अग्निषु। वायुषु। कर्तृषु। गीर्षु। धूर्षु। वाक्षु। त्वक्षु। इण्कोरिति किम्? दास्यति। असौ।।

### ३८५४. नुम्विसर्जनीयशर्व्यवायेऽपि।।५८।। (४३४)

**नुम्व्यवायेऽपि, विसर्जनीयव्यवायेऽपि, शर्व्यवायेऽपि इण्कोरुत्तरस्य सकारस्य मूर्धन्यादेशो भवति। व्यवायशब्दः प्रत्येकमभिसम्बद्ध्यते। नुम्व्यवाये तावत्–सर्पींषि, यजूंषि, हवींषि। विसर्जनीयव्यवाये–**

**न्यासः**

**दास्यतीति**। कथं पुनरिदं प्रत्युदाहरणमुपपद्यते, यावता 'अणुदित्सवर्णस्य चाप्रत्ययः' इत्यत्र हकारेण गृह्यमाणेन आकारो गृह्यत इति; अस्ति ह्याकारस्य हकारेण सह सवर्णत्वम्; तुल्यस्थानप्रयत्नत्वात्; स्थानमस्ति ह्यनयोस्तुल्यमिति 'अकुहविसर्जनीयाः कण्ठ्याः' इति। प्रयत्नोऽपि तुल्यः—विवृतं करणमूष्मणां स्वराणाञ्चेति; तस्मात् सत्यपीण्कोरिति प्राप्नोत्येव मूर्धन्यः, 'नाज्झलौ' इति सवर्णसंज्ञाप्रतिषेधादिति चेत्? नैष दोषः; यदयम् 'वयस्यासु मूर्ध्नो मतुप्' इत्यत्राकारादुत्तरस्य सकारस्य मूर्धन्यमकृत्वा निर्देशं करोति, ततोऽवसीयते—हकारो गृह्यमाणो नाकारं ग्राहयति; अन्यथा 'वयस्यासु' इति निर्देश न कुर्यात्। **असाविति**। 'तदोः सः सावनन्त्ययोः' इति दकारस्य सकारः, 'अदस औ सुलोपश्च' इत्यौत्वं सुलोपश्च।।५७।।

**नुम्विसर्जनीयशर्व्यवायेऽपि**।। इण्कोरिति पञ्चमीनिर्देशान्निर्दिष्टग्रहणस्यानन्तर्यार्थत्वाद् व्यवाये सति पूर्वेण न प्राप्नोतीत्यस्यारम्भः। इण्कोरुत्तरस्य सकारस्य मूर्धन्यो भवति। एवं नुम्व्यवाये, विसर्जनीयव्यवाये, शर्व्यवाये।

**पदमञ्जरी**

**दास्यतीति**। ननु च 'नाज्झलौ' इत्यत्रागृहीतसवर्णानामचां ग्रहणम्—इत्यसकृदुक्तम्, ततश्च यथा कुमारी शेते—इत्यत्रेकारशकारयोः सावर्ण्यमप्रतिषिद्धम्, तथा आकारहकारयोरपि, ततः किम्? हकारेणेणाकारस्य ग्रहणात् षत्वप्रसङ्गः? नैष दोषः; हकारो विवृतः, आकारो विवृततरः। एवं हि पठन्ति—विवृतकरणाः स्वराः, तेभ्य एओ, विवृततरौ, ताभ्यामैऔ, ताभ्वामप्याकारः संवृतोकार इति। एवं च कृत्वा 'इष्टकासु', 'वयस्यासु'—इत्यादयो निर्देशा उपपद्यन्ते। **असाविति**। 'अदस औ सुलौपश्च', 'तदोः सः सौ' इत्यादेशसकारोऽयम्, न त्विण्कोः परः।।५७।।

**नुम्विसर्जनीयशर्व्यवायेऽपि**।। 'इण्कोः' इति पञ्चमीनिर्देशात् व्यवाये षत्वं न प्राप्नोतीत्यमारम्भः। नुम्ग्रहणमनुस्वारोलक्षणम्; नुमा व्यवायासम्भवात्, 'नश्चापदान्तस्य झलि' इत्यनुस्वारस्य विधानात्।

**भावबोधिनी**

अग्निषु, वायुषु, कर्तृषु। [ इनमें भी इण् से परे प्रत्यय के अवयव स् का ष्। ] गीर्षु धूर्षु [ इनमें भी इण् से परे है। ] वाक्षु त्वक्षु। [ वाच् + सु, त्वच् + षु, 'चोः कुः' से कुत्व करने पर क् होने से वाक् + सु, त्वक् + सु। कवर्ग से परे होने से स् का षत्व, क् + ष् = क्ष् होता है। ]

इण् और कवर्ग से परे—इसका क्या फल है? दास्यति। असौ। [ इनमें प्रत्यय और आदेश का स् है किन्तु इण् अथवा कवर्ग से परे न होने से षत्व नहीं होता है। ]।।५७।।

नुम् का व्यवधान, विसर्ग का व्यवधान और शर् का व्यवधान रहने पर भी इण् और कवर्ग से उत्तरवर्ती सकार का मूर्धन्य आदेश होता है। सूत्र का 'व्यवाय' शब्द सूत्रघटक सभी के साथ सम्बद्ध होता है। उदा॰ नुम् के व्यवाय = व्यवधान में—सर्पींषि। यजूंषि। हवींषि। [ सार्पस् आदि के नपुंसक लिङ्ग प्रथमा बहुवचन में सर्पिस् + इ में नुम् होने पर भी षत्व होता है। ] विसर्ग के व्यवधान— में सर्पिःषु, यजुःषु, हविःषु। [ सप्तमी बहुवचन में सुप् परे स् का विसर्ग कर देनेपर भी षत्व हो जाता है। ] शर् के

**सर्पिःषु, यजुःषु, हविःषु। शर्व्यवाये–सर्पिष्षु, यजुष्षु, हविष्षु।**

**नुमादिभिः प्रत्येकं व्यवाये षत्वमिष्यते, न समस्तैः। तेनेह न भवति–निंस्से, निंस्स्व इति। 'णिसि चुम्बने' (धा.पा.१०२६)–इत्येतस्यैतद्रूपम्। अत्र हि नुमा, सकारेण, [१]शरा च व्यवधानम्।।**

**न्यासः**

'अपि' इत्येभिः प्रत्येकमभिसम्बध्यते, तेन त्रीणि वाक्यानि सम्पद्यन्ते। वाक्यत्रयस्य प्रयोजनं दर्शयिष्यामः। नुम्ग्रहणं नुम्स्थानिकस्यानुस्वारस्योपलक्षणं द्रष्टव्यम्। न हि नुमा क्वचिद्व्यवायोऽस्ति; सर्वत्र 'नश्चापदान्तस्य झलि' इत्यनुस्वारविधानात्। **सर्पींषीति**। 'नपुंसकस्य झलचः' इति नुम्, 'सान्तमहतः संयोगस्य' इति दीर्घः। **सर्पिःष्विति**। 'वा शरि' इति विसर्जनीयः। **सर्पिष्ष्विति**। वाग्रहणाद् विसर्जनीयमुक्ते 'विसर्जनीयस्य सः' इति पक्षे विसर्जनीयस्य सकारः, परस्य सकारस्य षत्वे कृते पूर्वस्य ष्टुत्वम्।

अथेह कस्मान्न भवति निंस्से, निंस्स्वेति? अत आह—**नुमादिभिरित्यादि**। एतच्च प्रत्येकं हि वाक्यपरिसमाप्तौ लभ्यते। प्रत्येकं हि वाक्यपरिसमाप्तौ त्रीणि वाक्यानि भवन्ति—नुमा व्यवायेऽपीण्कोरुत्तरस्य मूर्धन्यो भवति, एवमन्यत्रापि। 'नुम्विसर्जनीयशर्व्यवायेऽपि' इत्येतद् ग्रहणकवाक्यं तेषामेव निबन्धनम्। तत्रैकेन वाक्येन नुमा व्यवाये मूर्धन्यो विधीयते, द्वितीयेन तु विसर्जनीयव्यवाये, तृतीयेन च शर्भिरिति। तेनेह न भवति नुमा विसर्जनीयादिसहितेन मूर्धन्यः। **निंस्स इति**। 'णिसि चुम्बने', इदित्त्वान्नुम्, लट्, थास्, 'थासः से', अदादित्वाच्छपो लुक्। **निंस्स्वेति**। लोट्' टेरेत्त्वम्, 'सवाभ्यां वामौ'—इत्येकारस्य वकारः। अथापिशब्दः किमर्थः?

**पदमञ्जरी**

अनुस्वारग्रहणमेव तु न कृतम्, नुम्स्थानिकेनैवानुस्वारेण व्यवधाने यथा स्यात्, इह मा भूत्—पुंस्वितिः पुम्स्शब्दात्सुपि 'संयोगान्तस्य लोपः', मकारस्यानुस्वारः। **सर्पींषीति**। 'वा शरि' इति पक्षे विसर्जनीयः। **सर्पिष्ष्विति**। पक्षे सत्वम्, तेनैव व्यवाये षत्वम्, सकारस्य ष्टुत्वम्।

सकारग्रहणे कर्त्तव्ये शरिति प्रत्याहारग्रहणं चिन्त्यप्रयोजनम्।

इह यथा वृषलैर्न प्रवेष्टव्यमिति वृषनिवृत्तिपरायां चोदनायां प्रत्येकं संहतानां च प्रवेशो न भवति, तथा नुमादीनां षत्वाप्रतिबन्धहेतुत्वपरायां चोदनायां प्रत्येकं समुदायेन च व्यवाये षत्वं प्राप्नोतीति तत्र सर्वव्यवायस्य क्वचिदसम्भवात्, कचित्प्रत्येकम्, क्वचिद् द्वाभ्यां व्यवाये षत्वप्रसङ्गः? इत्यत आह—**नुमादिभिः प्रत्येकं व्यवाये इति**। एवं मन्यते—व्यवायशब्दः प्रत्येकमभिसम्बध्यते—नुम्व्यवाये, विसर्जनीयव्यवाये, शर्व्यवाय इति। यथादर्शितमुपक्रमे, तत्र 'इण्कोः' इति पञ्चमीनिर्देशेनानन्तर्ये षत्वप्रतिपादनादनेन च वाक्यत्रयेणैकैकव्यवाये षत्वाभ्यनुज्ञानान् 'येन नाव्यवधानम्' इति न्यायेन अधिकव्यवाये षत्वाभाव इति। **निंस इति**। 'णिसि चुम्बने', अदादिरनुदात्तेत्। **निंस्स्वेति**। लोट्, 'सवाभ्यां वामौ'।।५८।।

**भावबोधिनी**

व्यवधान में भी—सर्पिष्षु, यजुष्णु, हविष्षु। [ सर्पिस् + सुप् में 'वा शरि' से विकल्प से विसर्ग रहता है। पक्ष में स् होता है। दोनों ही व्यवधानों में षत्व होता है। षत्व के कारण ष्टुत्व होने से—'सर्पिष्षु' आदि रूप होते हैं। ]

नुम् आदि के द्वारा प्रत्येक के व्यवधान में षत्व इष्ट है न कि नुम् आदि सभी के एक साथ व्यवाय में। इसलिये यहाँ नहीं होता है—निंस्से, निंस्स्व। 'णिसि चुम्बने धातु का यह रूप है। [ यहाँ ण् का न् होता है, इदित् होने से नुम् होता है। [ निंस्से, निंस्स्व—इनमें ] नुम् और स् = शर् दो का व्यवधान है। अतः षत्व नहीं होता है। वास्तव स् का ही व्यवधान सम्भव है, श् या ष् का नहीं, अतः सूत्र में 'शर्' न कहकर केवल 'स्' कहना चाहिये था। शर् प्रत्याहार का ग्रहण विचित्रता के लिये किया गया है। ]।।५८।।

---

१. क्वचित्तु नेदं पठ्यते, तच्च सम्यक्।

## ३८५५. आदेशप्रत्यययोः।।५९।। (२१२)

**'मूर्धन्यः' इति वर्तते, 'स' इति च। 'आदेशप्रत्यययोः' इति षष्ठी भेदेन सम्बद्ध्यते। आदेशो यः सकारः, प्रत्ययस्य च यः सकारः इण्कोरुत्तरः, तस्य मूर्धन्यो भवति आदेशः। आदेशस्य तावत्–सिषेव। सुष्वाप। प्रत्ययस्य–अग्निषु। वायुषु। कर्तृषु। हर्तृषु।**

**न्यासः**

अव्यवायेऽपि यथा स्यादिति चेत्? नैतदस्ति; सिद्धं ह्यव्यवाये पूर्वेणैव, सिद्धे सत्यारम्भो नियमार्थो विज्ञायेत—नुमादिव्यवाय एव। तथा च सति नुमादिभिरव्यवहितादिण्कोर्न स्यात्? नैतदस्ति; यदि हि नुमादिभिर्व्यवाये मूर्धन्योऽभिमतः स्याद्, 'इण्कोर्नुम्विसर्जनीयशर्व्यवाये' इत्येकमेव योगं कुर्यात्, न कृतवांश्च, तस्माद् योगविभागकरणसामर्थ्यात् पूर्वोऽव्यवायार्थो विज्ञास्यते, नार्थोऽपिशब्देन। यस्य तर्हि एवमर्थमवगच्छतः प्रतिपत्तिगौरवं भवति तं प्रति तत्परीहारार्थोऽपिशब्दः।

सकारग्रहण एव कर्त्तव्ये शरिति प्रत्याहारग्रहणं वैचित्र्यार्थम्। न हि शकारषकाराभ्यां निमित्तकार्यिणोर्व्यवधानमस्ति।।५८।।

**आदेशप्रत्यययोः**।। अत्र चत्वारः पक्षाः सम्भवन्ति—१. आदेशप्रत्यययोरित्युभयत्र सकारापेक्षयाऽवयवयोगा वेयं षष्ठी स्यात्—आदेशावयवो यः सकारः, प्रत्ययावयवो यः सकार इति, २. समानाधिकरणा वा—आदेशस्य सकारस्य, प्रत्ययस्य सकारस्येत्यादेशो यः सकारः, प्रत्ययो यः सकार इति। अथ वा—३. प्रत्यये समानाधिकरणादेशेऽवयवयोगा—प्रत्ययो यः सकारः, आदेशावयवो यः सकार इति। ४. तस्य विपर्ययो वा—आदेशो यः सकारस्तस्य, प्रत्ययावयवो यस्तस्येति। कथं पुनरेका षष्ठी समानाधिकरणा वा स्याद्, अवयवयोगा वा? विषयभेदात्। यथैव हि 'खरवसानयोः' इत्यत्रैकापि सप्तम्यधिकरणभेदाद् भिद्यते, तथेहाप्येकस्या अपि षष्ठ्या विषयभेदो वेदितव्यः। तत्राद्यपक्ष आश्रयमाणे 'नित्यवीप्सयोः' इति स्थाने द्विर्वचने कृते बिसंबिसम्,

**पदमञ्जरी**

**आदेशप्रत्यययोः**।। किमवयवयोगैषा षष्ठी-आदेशस्य यः सकारः, प्रत्ययस्य च यः सकार इति? आहोस्वित्समानाधिकरणे—आदेशो यः सकारः, प्रत्ययो यः सकार इति? तत्राद्ये पक्षे 'सः' इत्यस्यानुवृत्तस्येह वचनविपरिणामो न कर्त्तव्यो भवति, कार्येण त्वादेशप्रत्यययोः साक्षात् श्रुतयोरसम्बन्धः; सकारविशषेणत्वात्। द्वितीये त्वादेशप्रत्यययोः सकारयोरिति द्विवचनं विपरिणम्यम्। कार्येण तु साक्षाच्छ्रुतयोः सम्बन्ध इति वचनदोषसाम्यात्र युक्तितः पक्षविशेषनिर्णयः। तत्रावयवषष्ठी चेद् द्विर्वचने दोषः—बिसंबिसम्, मुसलंमुसलम्। आष्टमिके हि द्विर्वचने स्थाने द्विर्वचनपक्षोऽपि स्थापितः, ततश्च 'नित्यवीप्सयोः' इत्येकस्य विसमित्येतस्य स्थाने बिसंबिसमित्येतस्मिन्नादेशे कृते तस्यावयवः सकारः इति षत्वप्रसङ्गः। अथ द्वितीयः पक्षः? करिष्यति, हरिष्यतीत्यत्र न प्राप्नोति; समुदायो ह्यत्र प्रत्ययः, न सकारमात्रम्! क्व तर्हि स्यात्? यत्र सकारमात्रं प्रत्ययः-इन्द्रो मा वक्षत्, स देवान्यक्षत्; वचियजिभ्यां लेट्, तिप्, 'इतश्च लोपः' इत्यादिनेकारलोपः, 'लेटोऽडाटौ' इत्यट्, 'सिब्बहुलं लेटि' इति सिप्, वचेःकुत्वम्, यजेः षत्वकत्वे। अथापरौ द्वौ पक्षौ—आदेशस्य यः सकारः, प्रत्ययो यः

**भावबोधिनी**

इसमें 'मूर्धन्यः' और 'सः' इनकी अनुवृत्ति होती है। 'आदेश-प्रत्यययोः, इसमें षष्ठी का भेद से सम्बन्ध होता है— आदेश रूप जो सकार और प्रत्यय का अवयव जो सकार, इण् और कवर्ग से उत्तरवर्ती है, उसका मूर्धन्य आदेश होता है। आदेश का उदा० सिषेव। सुष्वाप। [ इनमें षिव् तथा ष्वप के ष् का स् आदेश होता है। पुनः स् का ष् होता है। ] प्रत्यय का सकार—अग्निषु। वायुषु। कर्तृषु। हर्तृषु।

**इन्द्रो मा वक्षत्, स देवान्यक्षदिति (अ.वे. ३।४।६) व्यपदेशिवद्भावात् प्रत्ययस्येति षत्वं भवति। यजतेर्वहतेश्च पञ्चमलकारे परस्मैपदप्रथमैकवचने इकारलोपः, 'लेटोऽडाटौ' (३।४।९४) इत्यट् 'सिब्बहुलं लेटि' इति सिप्, ततः सिद्धम्–यक्षत्, वक्षत् इति।।**

**न्यासः**

मुसलंमुसलमित्यत्रापि षत्वं प्राप्नोति, भवति ह्यत्रादेशावयवः सकारः। 'सर्वस्य द्वे' इति स्थाने द्विर्वचनपक्षोऽप्याश्रित एव। द्वितीये तु करिष्यतीत्यादौ न स्यात्; सकारमात्रस्याप्रत्ययत्वात्। तृतीये तु पक्षे यावाद्ययोर्दोषौ तावुभावपि प्रसज्येते इति त्रिषु पक्षेषु दोषवत्तां दृष्ट्वा चतुर्थं पक्षमाश्रित्याह—**आदेशो यः सकार** इत्यादि।

चतुर्थे पक्षेऽप्याश्रीयमाणे—इन्द्रो मा वक्षत्, स देवान् यक्षदित्यत्र न प्राप्नोति, प्रत्ययो ह्यत्र सकारः, न तु प्रत्ययावयव इत्यत आह—**इन्द्रो मा वक्षदित्यादि**। इतिकरणो हेतौ। यस्मादिहापि व्यपदेशिवद्भावात् प्रत्ययावयवः सकारस्तस्माद् भवति मूर्धन्यः। वक्षदिति—वहेर्लेट्, तिप्, 'इतश्च लोपः परस्मैपदेषु' इतीकारलोपः, 'लेटोऽडाटौ' इत्यट्, 'सिब्बहुलं लेटि' इति सिप्, 'हो ढः', 'षढोः कः सि' इति कत्वम्। यक्षदिति—यजेः 'चोः कुः' इति कुत्वम्—जकारस्य गकारः, तस्य चर्त्वम्—ककारः। शेषं यथायोगं पूर्ववत्।।५९।।

**पदमञ्जरी**

सकार इति; विपर्ययो वा—आदेशो यः सकारः, प्रत्ययस्य यः सकार इति? तत्राद्ये पक्षे तावेव दोषौ यौ पूर्वयोः पक्षयोः बिसंबिसमित्यादौ प्रसङ्गः, करिष्यतीत्यादौ चाप्रसङ्ग इति। तस्मादन्त्यः पक्ष आश्रीयते, तदाह—**आदेशप्रत्यययोरिति षष्ठी भेदेन सम्बध्यत इत्यादि**।

अत्र च ज्ञापकं यदयमुत्तरसूत्रे घसिग्रहणं करोति, तज्ज्ञापति-आदेशे समानाधिकरणा षष्ठी, न व्यधिकरणेति; अन्यथा घसेरादेशत्वादेव तस्य सकारस्यानेनैव षत्वसिद्धेरनर्थकं तत्स्यात्। यच्च 'सात्पदाद्योः' इति सातिप्रतिषधं शास्ति, तज्ज्ञापयति—प्रत्ययेऽवयवषष्ठी, न समानाधिकरणेति; अन्यथा साति-सकारस्याप्रत्ययत्वात् षत्वस्य प्राप्त्यभावादनर्थकं तत्स्यात्। ननु चादेशस्येति षत्वापेक्षया स्थानषष्ठी, प्रत्ययस्येति सकारापेक्षयावयवषष्ठीति सहविवक्षाभावाद् द्वन्द्वानुपपत्तिः? नैष दोषः; पूर्वोक्तात् ज्ञापकद्वयात् सहविवक्षाया अभावेऽपि द्वन्द्वो भविष्यति।

**भावबोधिनी**

[ प्रत्यय का जो सकार—ऐसा मानने पर वहाँ कैसे होगा जहाँ प्रत्यय रूप ही सकार है जैसे ] 'इन्द्रो मा वक्षत्, स देवान् यक्षत्—इनमें व्यवदेशिवद्भाव से प्रत्यय का षत्व होता है। और यज् और वह् धातु से पञ्चम लकार लेट् में प्रथमपुरुष परस्मैपद एकवचन में (तिके) इकार का लोप, 'लेटोऽडाटौं' से अट् आगम, 'सिब्बहुलं लेटि' से सिप् = स्, इसके बाद सिद्ध होता है—यक्षत् वक्षत्। [ यज् और वह् धातुओं से लेट् लकार प्रथमपुरुष एकवचन तिप् यज् + ति, वह् + ति, 'इतश्च' से इकारलोप 'लेटोऽडाटौ' से अट् आगम यज् + अ + त्, वह् + अ + त् 'सिब्बहुलं लेटि' से सिप् = यज् + स् + अ त्, वह् + स् अत्, 'हो ढः' से ह् का ढ्, 'षढोः कः सि' से ढ् का क्—वक् स् अत्, कवर्ग से परे प्रत्यय स् का ष्, क् + ष् = क्ष—'वक्षत्'। यज् स् अत्, 'चोःकुः' से ज् का ग्, चर्त्व से ग् का क्—यक् स् अत् यहाँ भी स् का ष्, क् + ष् = क्ष होने पर—यक्षत्। ]

**विमर्श**—'आदेश-प्रत्यययोः' इसमें एक षष्ठी है। इस कारण यहाँ अर्थ के चार प्रकार संभव है—(१) सकार की अपेक्षा मानकर अवयवयोग वाली षष्ठी है—आदेश का अवयव जो सकार तथा प्रत्यय का अवयव जो सकार—अर्थात् जो आदेशरूप सकार और प्रत्यय रूप सकार है—उसका मूर्धन्य होता है। (२) अथवा समानाधिकरण षष्ठी है—आदेश का जो सकार तथा प्रत्यय का जो सकार—उसका मूर्धन्य होता है। (३) अथवा प्रत्यय अंश में समानाधिकरण षष्ठी है और आदेश अंश में अवयवयोगा—प्रत्यय जो सकार तथा आदेशावयव जो सकार—उसका मूर्धन्य होता है। (४) अथवा उपर्युक्त का उल्टा है अर्थात् प्रत्यय में अवयवयोग और आदेश में समानाधिकरण—प्रत्ययावयव जो सकार और आदेशरूप जो सकार उसका मूर्धन्य होता है। एक ही षष्ठी को दो प्रकार के अर्थों में कैसे माना जा सकता है? समाधान यह है कि विषयभेद से यह मानना सम्भव है। अतः आदेश में समानाधिकरण है—आदेश रूप जो स उसका मूर्धन्य होता है और प्रत्यय में अवयवयोगा है—प्रत्ययावयव जो सकार उसका

## ३८५६. शासिवसिघसीनां च ।।६०।। (२४१०)

**शासि, वसि, घसि–इत्येतेषां च इण्कोरुत्तरस्य सकारस्य मूर्धन्यो भवति। अन्वशिषत्, अन्वशिषताम्, अन्वशिषन्। शिष्टः, शिष्टवान्। वसि–उषितः, उषितवान्। उषित्वा। घसि–जक्षतुः, जक्षुः। 'घसिभसोः' (६।४।१००) इत्युपधालोपः। 'अक्षन् पितरोऽमीमदन्त पितरः।' (वा. सं. १९।३६)**

**न्यासः**

**शासिवसिघसीनाञ्च**।। **अन्वशिषदिति**। 'शासु अनुशिष्टौ', लुङ्, 'सर्त्तिशास्त्यर्त्तिभ्यश्च' इति च्लेरङ्, 'शास इदङ्हलोः' इतीत्त्वम्। **अन्वशिषतामिति**। तसस्ताम्। **शिष्ट इति**। ष्टुत्वम्, पूर्ववदित्त्वम्। **उषित इति**। 'वस निवासे', 'वसतिक्षुधोः' इतीट्, वच्यादिसूत्रेण सम्प्रसारणम्। **जक्षतुः, जक्षुरिति**। 'घस्लृ अदने', यश्चादेशो घसिः—तयोर्द्वयोरपि ग्रहणम्। ननु चादेशस्य लाक्षणिकत्वाद् ग्रहणमयुक्तम्? नैष दोषः; अनित्या हि लक्षणप्रतिपदोक्तपरिभाषा। अनित्यत्वं चास्याः 'यावत्पुरानिपातयोर्लट्' इत्यत्र निपातग्रहणेन ज्ञापितम्। 'भुवश्च महाव्याहृतेः' इत्यत्र महाव्याहृतिग्रहणेन च ज्ञापितम्। अपि चात्र घसिवसोरेकतरस्य लघ्वक्षरत्वात् पूर्वनिपाते कर्त्तव्ये शासेः पूर्वनिपातं कुर्वता शास्त्रनिरपेक्षता सूच्यते—किञ्चिच्छास्त्रमत्र नापेक्षितव्यमित्यमुमर्थं दर्शयितुम्। तेन लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयत इति युक्तमादेशस्यापि ग्रहणमिति। अदेर्लिटि कृते 'लिट्यन्यतरस्याम्' इति घस्लादेशः, 'गमहन' इत्यादिनोपधालोपः, 'द्विर्वचनेऽचि' इति स्थानिवद्भावाद् द्विर्वचनम्, 'कुहोश्चुः' इति चुत्वम्—झकारः, तस्यापि जश्त्वम्—जकारः, घकारस्य चर्त्वम्,—ककारः। तस्य चाश्रयत्वात् सिद्धं भवतीति वेदितव्यम्। **अक्षन्निति**। लुङ्, 'बहुलं छन्दसि' इति घस्लादेशः, झेरन्तादेशः, संयोगान्तलोपः, 'मन्त्रे घसह्वर' इत्यादिना च्लेर्लुक्, 'घसिभसोर्हलि च' इत्युपधालोपः, चर्त्वम्—ककारः।

**पदमञ्जरी**

यदि प्रत्ययावयवस्य षत्वमुच्यते, इन्द्रो मा वक्षत्, स देवान्यक्षदित्यत्र षत्वं न प्राप्नोति, प्रत्यय एवात्र सकारो न तु प्रत्ययस्यावयवः? अत आह—**इन्द्रो मा वक्षदित्यादि**। इह 'अशेः सरन्'—अक्षरमित्यत्र षत्वं भवति, तस्यैवतु 'कृधूमादिभ्यः कित्' इति विहितस्य षत्वं न भवति, कृसरम्, धूसरम्। तथा 'वृतॄवदि' इत्यादिना विहितस्य कक्षमित्यत्र भवति, वर्समित्यत्र न भवति; बहुलवचनात् प्रत्ययसंज्ञाया अभावात्।।५९।।

**शासिवसिघसीनां च**।। **अन्वशिषदिति**। 'सर्तिशास्ति' इत्यादिना च्लेरङ्, 'शास इदङ्हलोः' इतीत्वम्। **उषित इति**। यजादित्वात् सम्प्रसारण्, 'वसतिक्षुधोरिट्'। **जक्षतुः जक्षुरिति**। 'लिट्यन्तरस्याम्' इत्यदेर्घस्लादशः, 'गमहन' इत्युपधालोपः। **अक्षन्निति**। अदेर्लुङ् 'लुङ्सनोर्घस्लृ', 'मन्त्रे घस' 'इत्यादिना च्लेर्लुक्।

**भावबोधिनी**

मूर्धन्य होता है। अतः उपर्युक्त चार पक्षों में अन्तिम पक्ष ही माना जाता है। इससे कोई दोष नहीं होता है। व्यपदेशिवद्भाव को मानकर प्रत्यय में भी प्रत्ययावयव का व्यवहार करना चाहिये। अतः 'इन्द्रो मा वक्षत्, स देवान यक्षत्' आदि में केवल स् भी प्रत्ययावयव हो जाता है। इसका 'ष्' होने में बाधा नहीं है।।५९।।

शास्, वस् और घस् = इन धातुओं के इण् तथा कवर्ग से उत्तरवर्ती सकार का मूर्धन्य आदेश होता है। उदा॰ शासि—अन्वशिषत्, अन्वशिषताम्, अन्वशिषन्, शिष्टः, शिष्टवान्। [ अनु + शास् + लुङ् = ति, तस्, झि के रूप हैं। अट् आगम, च्लि का अङ्—अनु अ शास्, अ + त्, 'शास इदङ्हलोः' सूत्र से आ का इ—अनु अशिस् अ त्, प्रस्तुत सूत्र से स का ष, उ का यण् अन्वशिषत्। शास् + क्त, यहाँ भी इत्व, षत्व, ष्टुत्व होता है—शिष्टः, आदि रूप होते हैं। ] वसि—उषितः, उषितवानः। [ वस् + क्त, क्तवत्, व् का सम्प्रसारण उ, अ, का पूर्वरूप, इट्—उस् इ + त, तवत्, स् का ष्—उषितः, उषितवान्। इसी प्रकार उषित्वा। [ वस् + क्त्वा = त्वा ] घसि—जक्षतुः जक्षुः। [ अद् का भी घस्लृ आदेश होता है और घस् एक स्वतन्त्र धातु भी है।

**अनादेशार्थं वचनम्। घसिर्यद्यप्यादेशः, सकारस्त्वादेशो न भवति।**

**'इण्कोः' इत्येव—शास्ति। वसति। जघास।।**

## ३८५७. स्तौतिण्योरेव षण्यभ्यासात्।।६१।। (२६२७)

**स्तौतेर्ण्यन्तानां च षभूते सनि परतः अभ्यासादिण उत्तरस्य आदेशसकारस्य मूर्धन्यादेशो भवति। तुष्टूषति। ण्यन्तानाम्–सिषेवयिषति। सिषञ्जयिषति। सुष्वापयिषति।**

**न्यासः**

अनादेशार्थं वचनम्' इत्युक्ते यो देशयेद्—युक्तं शासिवसोरनादेशार्थं वचनम्, अनादेशार्थं तु घसिं प्रत्यययुक्तम्, आदेशसकारत्वादिति? तं प्रत्याह—**घसिरित्यादि**। घकारादिवर्णसमुदायो हि घसिरादेशः, सकारस्तु तस्यावयवः, नादेश इत्यादेशघसिमपि प्रत्यनादेशार्थं वचनम्।।६०।।

**स्तोतिण्योरेव षण्यभ्यासात्।। षभूत इति**। 'ष' इतीदं रूपमापन्न इत्यर्थः। **तुष्टूषतीति**। 'इको झल्' इति सनः कित्त्वम्, 'अज्झनगनां सनि' इति दीर्घः, द्विर्वचनम्, 'शर्पूर्वाः खयः' इति खयः शेषः। **सिषेचयिषतीति**। सिचेः 'हेतुमति च' इति णिच्, सन्, इट्, गुणायादेशौ। 'णौ कृतं स्थानिवद्भवति' इति सिचो द्विर्वचनम्।

**पदमञ्जरी**

तत्र युक्तं शासिवस्योरनादेशार्थं वचनमिति, घसेस्त्वयुक्तमादेशत्वात्? इत्यत आह—**घसिर्यद्यप्यादेश इति**। **आदेश इति**। आदेशो यः सकारस्तत्र स्थितमिति भावः। यस्त्वनादेशो घसिस्तस्येह ग्रहणं न भवति; विरलप्रयोगत्वात्।।६०।।

**स्तौतिण्योरेव षण्यभ्यासात्।। षत्वभूत इति**। षत्वं प्राप्ते, कृतषत्व इत्यर्थः। **आदेशसकारस्येति**। प्रत्ययसकारस्त्वसम्भवान्न सम्बध्यते। **सुष्वापयिषतीति**। 'द्युतिस्वाप्योः' इत्यभ्यासस्य सम्प्रसारणम्। **सिसिक्षतीति**। 'सिचि क्षरणे'। **सुसूषत** इति। 'षूङ् प्राणिप्रसवे'। परस्मैपदपाठे तु 'षू प्रेरणे'—इत्यस्य रूपम्।

**भावबोधिनी**

दोनों ग्रहण की जातीं हैं। अद् + लिट्, घस् + लिट्, द्वित्व अभ्यासकार्य घस् + अतुस्, 'गमहनजनखनघसां लोपः' सूत्र से उपधा का लोप, घ् का चर्त्व से क्—ज क् स् अतुस्, प्रस्तुत सूत्र से स् का ष्, क् + ष् = क्ष् जक्षतुस्, स् का सत्व विसर्ग है। ] 'घसिभसोर्हलि' सूत्र से उपधालोप होता है—अक्षन्नमीमदन्त पितरः। [ अद् + लुङ्, घस्लृ आदेश झि = अन्ति, अट् आगम च्लि का लुक् घस् अन्ति, 'घसिभसोर्हलि' से उपधालोप, चर्त्व से घ् का क्— अ क् स् अन्ति, स् का ष्, क् + ष्, = क्ष्, इलोप, संयोगान्त तलोप-अक्षन्। ]

[ घस् स्वतन्त्र धातु भी है और अद् का आदेश भी। अतः आदेश में तो 'आदेशप्रत्यययोः' से भी षत्व सम्भव था। अतः ] अनादेश अर्थात् स्वतन्त्र 'घस्लृ अदने' में ष करने के लिये यहाँ ग्रहण है। यद्यपि घस् तो आदेश किन्तु सकारमात्र तो आदेश नहीं है। [ अतः आदेश न होने से अद् के घस् में भी षत्व नहीं हो पाता। अतः इस 'घस्लृ' का अलगसे ग्रहण है। ]

इण् तथा कवर्ग से परे का ही षत्व—शास्ति। वसति। जघास। [ इनमें इण् या कवर्ग से परे स् नहीं है। ]।।६०।।

स्तौति = स्तु धातु के और णिजन्त धातुओं के षादेशभूत सन् प्रत्यय परे रहते अभ्यास से परवर्ती इण् से उत्तरवर्ती आदेश सकार का मूर्धन्य आदेश होता है। उदा॰ तुष्टूषति। [ ष्टुञ् = स्तु + सन्, 'इको झल्' से सन् कित् होता है अतः 'अज्झनगमां सनि' सूत्र से उ का दीर्घ—स्तू + स, द्वित्व, 'शर्पूर्वाः खयः' सूत्र से खय् शेष, शर् का लोप = तु स्तू स 'आदेशप्रत्यययोः' से प्रत्यय स का षत्व करने पर प्रस्तुत सूत्र से धातु के स् का ष् करने के बाद ष्टुत्व होता है—तुष्टूष + ति। ] णिजन्तों के उदा॰ सिषेवयिषति। [ सिव् + णिच् + सन्। ] सिषञ्जयिषति। [ सन्ज + णिच् + सन् ] सुष्वापयिषति। [ स्वन्ज् + णिच् सन्, अभ्यास का सम्प्रसारणहोता है—सु स्वाप् इ ष, स् का ष्—सुष्वापयिष। लट्, तिप्, आदि सुष्वापयिषति। ]

**'सिद्धे सत्यारम्भो नियमार्थः' (का.प.६२)–स्तौतिण्योरेव षण्यभ्यासाद्यथा स्यात्, अन्यस्य मा भूत्–सिसिक्षति। सुसूषति।**

**एवकारकरणमिष्टतोऽवधारणार्थम्। स्तौतिण्योः षण्येव–इति हि विज्ञायमाने तुष्टावेत्यत्र न स्यात्। इह च स्यादेव–सिसिक्षतीति।**

**षणीति किम्? अन्यत्र नियमो मा भूत्–सिषेच।**

**न्यासः**

**सिसञ्जयिषतीति**। 'सन्ज सङ्गे', सन्, द्विर्वचनम्, 'सन्यतः' इतीत्त्वम्। **सुष्वापयिषतीति**। स्वापेर्ण्यन्तस्य 'द्युतिस्वाप्योः सम्प्रसारणम्' इत्यभ्यासस्य सम्प्रसारणम्।

ननु च सिद्धोऽत्र मूर्धन्यः पूर्वेणैव, तत् किमर्थोऽस्यारम्भः? इत्याह—**सिद्धे सतीत्यादि**। **सिसिक्षतीति**। सिचः सन्, 'इको झल्' इत्यनुवर्त्तमाने 'हलन्ताच्च' इति कित्वाद् गुणाभावः, 'चोः कुः' इति कुत्वम्। **सुसूषत इति**। 'षूङ् प्राणिगर्भविमोचने' 'पूर्ववत्सनः' इत्यात्मनेपदम्। क्वचित् तिप्प्रत्यान्तं **सुसूषतीति** प्रत्युदाहरणम्, तत् 'षु प्रेरणे' इत्यस्य द्रष्टव्यम्।

अथैवकारकरणं किमर्थम्, सिद्धे सत्यारम्भसामर्थ्यादेव नियमो विज्ञास्यते? इत्याह—**एवकारकरणमित्यादि**। कः पुनः स्तौतिण्योः षण्येवेत्यस्मिन्नियमे दोषो यतः स नेष्यते? इत्यत आह—**स्तौतिण्योः षण्येवेत्यादि**। षण्येवेत्यनेनावधारणेन स्तौतिण्योः सम्प्रत्ययेन प्रत्ययान्तरस्य व्यवच्छेदः क्रियते—स्तौतिण्योर्यदि मूर्धन्यो भवति तदा षण्येव, नान्यस्मिन् प्रत्यय इति। ततश्च तुष्टावेति लिटि न स्यात्। इह तु स्यादेव—सिसिक्षतीति; अवधारणेन षत्वस्याव्यवच्छिन्नत्वात्।

**अन्यत्रेत्यादि** । यदि षणीति नोच्येत ततोऽविशेषेण सर्वत्र नियमः स्यात्। ततश्च नियमेन व्यावर्तितत्वाद् यथा सिसिक्षतीत्यत्र न भवत्याभ्यासादुत्तरस्य सकारस्य षत्वम्, तथा सिषेचेत्यत्र लिट्यपि न स्यात्। तस्मात् पणोऽन्यत्र लिडादौ मा भूत्—इत्येवमर्थं षणीत्युच्यते।

**पदमञ्जरी**

यदि सिद्धे सत्यारम्भो नियमार्थः, एवकारस्तर्हि किमर्थः? तत्राह—**एवकारकरणमिति**। अथ विपरीतेऽवधारणे को दोषः? इत्यत आह—**स्तौतिण्योः षण्येवेति**। **इह च स्यादेवेति**। षण्येवेत्यनेन ह्यवधारणेन प्रत्ययान्तरे स्तौतिण्योः षत्वं व्यवच्छिन्नम्, न तु धात्वन्तरस्य षणि, ततश्चाभिहितदोषद्वयप्रसङ्गः।

**सिषेचेति**। षणीत्यनुच्यमाने प्रत्ययमात्रे नियमः स्याद्-अभ्यासात्परस्य यदि षत्वं भवति स्तौतिण्योरेवेति, ततश्च सिषेचेत्यादौ न स्यात्।

**भावबोधिनी**

**विमर्श**—काशिकाकार ने आदेशसकार का मूर्धन्य आदेश लिखा है। पदमञ्जरीकार ने यह स्पष्ट किया कि असम्भव होने के कारण प्रत्यय का सकार नहीं लियाजाता है। परन्तु सिद्धान्तकौमुदी में 'स' सामान्य मानकर—सिषाधयिषति आदि उदा० लिखे गये हैं। वृत्तिकार के अनुसार इस सूत्र का क्षेत्र बहुत सीमित हो जाता है।

(अनु०) आदेश-प्रत्यययोः—इसी से सिद्ध रहते इस प्रस्तुत सूत्र का बनाना नियम के लिये है—स्तु और णिजन्तों का ही षभूत सन् परे अभ्यास के इण् से परवर्ती का षत्व है, अन्य का न हो—सिसिक्षति। सुसूषति। [ यहाँ स्तु और णिजन्त में से कोई नहीं है। अतः इनके स का षत्वनहीं होता है। ]

एवकार का ग्रहण इष्ट अर्थ का अवधारण कराने के लिये है। स्तु और णिजन्त का षण् परे ही होता है—ऐसा विज्ञापित हो जाने पर 'तुष्टाव' इस में षत्व नहीं हो सकेगा। और यहाँ होगा ही—सिसिक्षति। [ अतः पूर्वोक्त प्रथम नियम ही माना जाता है—स्तु तथा णिजन्त का ही षण् परे अभ्यास के इण् से परवर्ती का ष होता है। इस नियम से कोई दोष नहीं रहता है। ]

**को विनतेऽनुरोधः? अविनते नियमो मा भूत्–सुषुप्सति। तिष्ठासति।**

**कः सानुबन्धेऽनुरोधेः? षशब्दमात्रे नियमो मा भूत्–सुषुपिष इन्द्रम्[1]।**

**न्यासः**

**को विनतेऽनुरोध इति**। विनत इति = पूर्वाचार्यसंज्ञा षत्वणत्वयोः। अनुरुध्यत इत्यनुरोधः = प्रयोजनम्। किं प्रयोजनं षत्वस्य यतः कृतषत्वस्येहोपादानं कृतमित्यभिप्रायः। **अविनते नियमो मा भूदिति**। अविनत इति अविद्यमानषत्व इत्यर्थः। सनीत्युच्यमाने सन्मात्रे नियमः स्यात्। तत्र यथा षभूते सन्यन्यधातोरभ्यासाद् मूर्धन्यो न भवति, एवमषत्वभूतेऽपि न स्यात्। तस्मादषत्वभूते नियमो मा भूदित्येवमर्थं विनतस्य ग्रहणम्। **सुषुप्सतीति**। स्वपेः सन्, 'रुदविद' इत्यादिना कित्त्वाद् वच्यादिसूत्रेण सम्प्रसारणम्।

**कः सानुबन्धकेऽनुरोध इति**। नकारोऽनुबन्धः। नकारानुबन्धस्य ग्रहणं किमर्थम्, किं प्रयोजनमित्यर्थः। **षशब्दमात्रे नियमो भूदिति**। 'ष' इत्युच्यमाने यो नाम कश्चित् षशब्दस्तत्र सर्वत्र नियमः स्यात्। सानुबन्धकग्रहणे तत्रैव भवति, नान्यत्र। तेन निरनुबन्धकषशब्देऽन्यस्यापि भवत्येव मूर्धन्यः। **सुषुपिष इन्द्रमिति**। स्वपेर्लिट्, व्यत्ययेनात्मनेपदम्, 'थासः से', 'असंयोगाल्लिट् कित्, इति कित्त्वम्, वच्यादिसूत्रेण सम्प्रसारणम्, क्रादि-

**पदमञ्जरी**

**को विनतेऽनुरोध इति। विनतमिति षत्वणत्वयोः प्रातिशाख्येषु प्रसिद्धिः**—एकवर्णमनोकारं विनते सुस्मेति, नः पर इति यथा। अनुरुध्यते आनुकूल्येन प्राप्यत इत्यनुरोधः = प्रयोजनम्। कृतषत्वस्य **निर्देशे किं** प्रयोजनमित्यर्थः। **सुषुप्सतीति**। 'रुदविद' इत्यादिना सनः कित्त्वम्, 'वचिस्वपि' इत्यादिना **सम्प्रसारणम्।** सनीत्युच्यमाने सन्मात्रे नियमः स्यात्, ततश्च यथा—षत्वभूते सनि धात्वन्तरस्य षत्वं न **भवति,** एवमिहाषत्वभूतेऽपि न स्यात्।

**कः सानुबन्धेऽनुरोध इति**। नकारानुबन्धवतो ग्रहणे किं प्रयोजनमित्यर्थः। णत्वस्य तु प्रयोजनं न पृच्छति तस्य लक्षणप्राप्तत्वात्। **सुषुपिष इन्द्रमिति**। स्वपेर्लिट्, छान्दसत्वाद् 'व्यत्ययो बहुलम्' इति थास्, 'थासः से', 'असंयोगाल्लिट् कित्' इति लिटः कित्त्वात् पूर्ववत्सम्प्रसारणम्, द्विर्वचनम्, क्रादिनियमादिट्, इन्द्रशब्दे परतोऽयादेशः, 'लोपः शाकल्यस्य' इति यलोपः। अत्र नियमाभावादभ्यासात् परस्य षत्वं भवत्येव, **'ष' इत्युच्यमाने** तु यावान् कश्चित् षशब्दस्तत्र सर्वत्र नियमः स्यात्, तस्मात् सानुबन्धकग्रहणम्।

**भावबोधिनी**

षणि = षभूत सन् परे रहते—इसका क्या फल है? अन्यत्र नियम न होने लग जाय—सिषेच। [ यदि षणि नहीं कहेंगे तो प्रत्ययमात्र में नियम हो जाने से—सिषेच में उसी प्रकार षत्व नहीं हो पायेगा जैसे 'सिसिक्षति' में नहीं होता है। षणि' रहने पर यह नियम सन्भिन्न में प्रवृत्त नहीं होगा और 'सिषेच' में षत्व हो जायगा। ]

विनत = कृतषत्व (षणि) के ग्रहण में क्या अनुरोध = प्रयोजन है? अविनत = अकृतषत्व में नियम न हो सके—सुषुप्सति। तिष्ठासति। [ इनमें सन् तो है किन्तु कृतषत्व रूप नहीं है अतः यह सूत्र लागू नहीं होता है। सामान्य सूत्र से स् का ष् होता ही है। ]

(नकार) अनुबन्धसहित (= षणि) के ग्रहण में क्या अनुरोध = प्रयोजन है? हरप्रकार के 'ष' में नियम न लागू हो सके—सुषुपिष इन्द्रम्। [ स्वप् + लिट्, 'व्यत्ययो बहुलम्' से परस्मैपद में आत्मनेपद—थास्, इसका 'से' आदेश, कित् होने से सम्प्रसारण, द्वित्व, अभ्यासलोप, इट्, मूर्धन्य होकर—सुषुपिसे + इन्द्रम्' यहाँ 'एचोऽयावायावः' से ए का अय्, 'लोपः' शाकल्यस्य' से 'य्' लोप प्रत्यय 'स' का षत्व—सुषुपिष इन्द्रम्। ] [ यहाँ ष' है किन्तु सन् का अवशिष्ट रूप नहीं है। अपितु स्वतन्त्र 'स' है अतः नियम नहीं लागू होता है। अभ्यास का मूर्धन्य हो जाता है। ]

---

१. स्वपेर्लिटि 'थासःसे' इति रूपम्—इत्यधिकं पुस्तेकान्तरे।

**अभ्यासादिति किम्? अभ्यासाद् या प्राप्तिस्तस्या नियमो यथा स्यात्, धातोर्या[१] प्राप्तिस्तस्या नियमो मा भूत्—प्रतीषिषति। अधीषिषति।।**

**न्यासः**

नियमादिट्, द्विर्वचनम्, प्रत्ययसकारस्य मूर्धन्यः, इन्द्रशब्दे परतोऽयादेशः, 'लोपः शाकल्यस्य' इति यकारलोपः; सुषुपिष इन्द्रमिति स्थित इह निरनुबन्धके नियमाभावादभ्यासान्मूर्धन्यो भवत्येव।

**अभ्यासस्य या प्राप्तिरित्यादि**। असत्यभ्यासग्रहणे धातोर्य इण् तस्यापि नियमः स्यात्, न चेष्यते। तस्मादभ्यासाद् या प्राप्तिस्तस्या नियमो यथा स्यादित्यभ्यासग्रहणम्। **प्रतीषिषतीति**। प्रतिपूर्वादिणः सन्। **अधीषिषतीति**। अधिपूर्वादिकः सन्, अजादित्वाद् द्वितीयैकाच् 'सन्यङोः' इति द्विरुच्यते, 'सन्यतः' इतीत्वम्, धातूपसर्गयोरेकादेशः; अधीषिष इति, प्रतीषिष इति स्थिते धातुप्राप्तिनियमाभावात् षभूतेऽपि सनि धातोः परस्य सकारस्य मूर्धन्यो भवत्येव।।६१।।

**पदमञ्जरी**

**अभ्यासादिति किमिति**। अभ्यासाद् या प्राप्तिस्तस्या नियमो यथा स्यादुपसर्गाद् या प्राप्तिस्तस्या नियमो मा भूत्; अभिषिषिक्षतीत्येतत्तावदप्रयोजनम्, कथम्? असिद्धमुपसर्गात्षत्वम्, तस्यासिद्धत्वान्नियमो न भविष्यति। स्यादेतत्—यथा 'अत एकहल्मध्ये' इत्यत्र लिटा आदेशो विशेष्यते, तथेह सनाभ्यासः, सनि योऽभ्यासस्तस्मात् स्तौतिण्योरेवेति, तेन यङि योऽभ्यासस्तस्मात्षणि धात्वन्तरस्यापि षत्वं भवति, स्वपेर्यङ्, 'स्वपिस्वमिव्येञां यङि' इति सम्प्रसारणम्, सोषुप्यतेः सन्, इट्, 'अतो लोपः', 'यस्य हलः', सोषुपिषपते—तदेतद्भवति प्रयोजनमिति? तन्न; अन्तरङ्गमत्र षत्वम्, बहिरङ्गो नियमः; तस्मादनर्थकमभ्यासग्रहणमिति प्रश्नः। परिहरति—**प्रतीषिषतीति**। इणो बोधनार्थत्वाद् गम्यादेशाभावोऽजादेरिति सशब्दस्य द्विर्वचनम्, 'सन्यतः' इतीत्वम्। तत्राभ्यासाश्रये प्रत्ययस्य षत्वे कृतेऽस्य नियमस्याभावाद् धात्वाश्रयं षत्वमभ्यासस्य प्रवर्त्तते। ननु षणीति परसप्तमी, ततश्च षणि परे स्तौतिण्योरेवेति षत्वनियमः क्रियमाणस्तुल्यजातीयस्य षण्परस्य सिसिक्षतीत्यादेः षत्वं निवर्तयति। प्रतीषिषतीत्यत्र तु सनि एव द्विर्वचनमति षण्परत्वाभावादयं नियमो न प्रवर्तिष्यते। 'सन्यतः' इतीत्वमपि तर्हि न प्राप्नोति, समुदायस्य सन्रूपत्वात्तस्य च सन्परत्वाभवात्। तस्मात्सन्प्रदेशेषु सत्सप्तमी विज्ञेया, ततश्च यथेत्त्वं प्रवर्त्तते तथा षत्वनियमोऽपि स्यादित्यभ्यासग्रहणम्।।६१।।

**भावबोधिनी**

अभ्यास से परवर्ती—इसका क्या फल है? अभ्यास को मान कर जो षत्व की प्राप्ति हो उसी का नियम जिसप्रकार से हो सके, धातु को मानकर जो प्राप्ति हो उसमें नियम न होने लग जाय—प्रतीषिषति। अधीषिषति।

**विमर्श**—प्रस्तुत सूत्र षत्व के विषय में नियम करताहै—स्तु तथा णिजन्त धातुओं के ही षभूत सन् रहने पर अभ्यास इण् से उत्तरवर्ती सकार का मूर्धन्य होता है। अब सूत्रस्थ प्रत्येक पद के ग्रहण का प्रयोजन विचारणीय है। चूँकि यह सत्व सामान्य पूर्व सूत्र से ही सिद्ध था अतः इस सूत्र को नियमार्थ माना जाता है—(१) स्तु और णिजन्त के ही स का ष करता है' अतः सिसिक्षति, सुसूषति में नहीं होता है क्योंकि इनका ग्रहण नहीं है। (२) चूँकि षणि = षभूतसन् में—इसकी प्रवृत्ति है। अतः जहाँ ऐसा नहीं है वहाँ भी नियम लागूनहीं होता है। अतः 'सिषेच' में सामान्य सूत्र से षत्व हो जाता है। (३) सूत्र में 'सनि' ऐसा न लिखकर षत्व किये गये—'षणि' का उल्लेख है। अतः जहाँ सन् का षत्व नहीं होता है वहाँ के लिये नियम नहीं है। फलस्वरूप—'सुषुप्सति और तिष्ठासति' आदि में सामान्य सूत्र से अभ्यास का षत्व हो जाता है। (४) केवल 'ष' न लिखकर नकार अनुबन्धसहित—'षणि' के ग्रहण का फल यह है कि जहाँ अनुबन्धविशिष्ट स का प्रयोग है जिस किसी प्रकार के स का नहीं है, वहीं नियम लागू होता है। अतः 'सुषुपिष इन्द्रम्' में सामान्यसूत्र से षत्व होता है। (५) अभ्यास इण् से परवर्ती—इसके ग्रहण का फल यह है कि जहाँ अभ्यास को निमित्त मानकर षत्व की प्राप्ति हो वहीं यह लागू है। धात्वादि के इण् को निमित्त मानकर होने वाली प्राप्ति में नहीं। अतः 'प्रतीषिषति' में षत्व होता है। [ प्रति इण् + सन् 'अजादेर्द्वितीयस्य' सूत्र से 'स' का द्वित्व करने पर प्रति इ स स, उपसर्ग और धातु

---

१. 'द्वितीया या' इति पाठान्तरम्।

## ३८५८. स स्विदिस्वदिसहीनां च।।६२।। (२६२८)

**स्विदि, स्वदि, सहि–इत्येतेषां ण्यन्तानां सनि षभूते परतोऽभ्यासादुत्तरस्य सकारस्य सकारादेशो भवति। स्विदि–सिस्वेदयिषति। स्वदि–सिस्वादयिषति। सहि–सिसाहयिषति।**

**सकारस्य सकारवचनं मूर्धन्यनिवृत्त्यर्थम्।।**

## ३८५९. प्राक्सितादड्व्यवायेऽपि।।६३।। (२२७६)

**'सेवसित' (८।३।७०) इति वक्ष्यति। प्राक्सिसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामस्तत्राड्-व्यवायेऽपि मूर्धन्यो भवतीत्येवं तद्वेदितव्यम्, अपिशब्दादनड्व्यवायेऽपि। वक्ष्यति–''उपसर्गात्सुनोति-**

**न्यासः**

**स स्विदिस्वदिसहीनाञ्च**।। 'स' इत्यविभक्तिकोऽयं निर्देशः। नेति प्रतिषेध एव क्रियतामित्यदेशनीयम्; लाघवकृते विशेषाभावात्। **सिस्वेदयिषतीत्यादि**। 'ञिष्विदा गात्रप्रक्षरणे', 'ष्वद स्वर्द आस्वादने', 'षह मर्षणे'— एभ्यो णिच्, ततः सन्।

ननु च सकारस्य सकारविधाने न कश्चिद्विशेषः, तत् किमर्थं सकार उच्यते? इत्याह—**सकारस्येत्यादि**। य एषाम् 'धात्वादे षः स' इति सकारः कृतः, तस्यादेशत्वान्मूर्धन्ये प्राप्ते वचनम्'।।६२।।

**प्राक् सितादड्व्यवायेऽपि**।। 'इण्कोः' इति पञ्चमीनिर्देशान्निर्दिष्टग्रहणस्यानन्तर्यार्थत्वाद् व्यवायेन प्राप्नोतीतीदमारभ्यते। अड्ग्रहणेनागमस्य ग्रहणम्, न प्रत्याहारस्य। एतच्च व्याख्यानाद् वेदितव्यम्। **प्राक्सित-**

**पदमञ्जरी**

**स स्विदिस्वदिसहीनां च**।। 'स' इत्यविभक्तिको निर्देशः। **ण्यन्तानामिति**। षत्वप्राप्तौ सत्वमुच्यते, षत्वप्राप्तिश्च ण्यन्तानामिति सामर्थ्यलभ्यमेतत्, किमर्थं पुनः सकारस्य सकार उच्यते? अत आह—**सकारस्येति**।

नेति प्रतिषेध एव वक्तव्ये सकारवचनं लाघवे विशेषाभावात्।।६२।।

**प्राक् सितादड्व्यवायेऽपि**।। 'इण्कोः' इति पञ्चमीनिर्देशाद्व्यवाये न प्राप्नोतिति वचनम्। अडित्यागमस्य ग्रहणम्, न प्रत्याहारस्य। एतच्च 'हयवरट्' इत्यत्रोपपादितम्। **प्राक् सितसंशब्दनादिति**। 'परिनिविभ्यः सेवसित'

**भावबोधिनी**

का दीर्घ, अभ्यास के अकार का इत्व—प्रती सि स। अब धातु ई को मानकर अभ्यास का षत्व और अभ्यास के इ को मानकर द्वितीय स का षत्व—प्रतीषिष। इसी प्रकार अधि + इण् + स् = अधीषिष बनता है। चूँकि धातु से प्राप्त होने वाले षत्व के विषय में नियम नहीं है अतः षभूत = सन् रहने पर भी अभ्यास का षत्व होने में बाधा नहीं है।।६१।।

स्विदि, स्वदि, सहि—इन णिजन्त धातुओं के षभूत सन् परे रहते अभ्यास से उत्तरवर्ती सकार का सकार आदेश ही होता है। उदा॰ स्विद्—सिस्वेदयिषति। स्वदि-सिस्वादयिषति। सहि-सिसाहयिषति। [ स्विद् + णिच् = स्विदि + स, द्वित्व अभ्यासकार्य—सिस्विदि + स, इट्। णि का गुण ए, अयादेश—सिस्वेदय् इस—इण् परे सन् का षत्व तो होता है किन्तु अभ्यास के स का ष प्राप्त होताहै उसका स आदेश ही कर दिया जाता है। चूँकि ये तीनों धातुयें मूल में षकारादि हैं, आदेश से सकारादि हुई हैं। अतः आदेश के स् का ष् प्राप्त ही है। इसीलिये यह सूत्र बनाया गया है ]

सकार का पुनः सकार ही करना मूर्धन्य आदेश को रोकने के लिये है।।६२।।

'सेवसित' (८।३।७०) यह सूत्र आगे कहा जायगा। 'सित' शब्द के उच्चारण से पहले, यहां से आगे, जिनका उल्लेख किया जायगा, उनमें अट् के व्यवधान में भी मूर्धन्य होता है—ऐसा समझना चाहिये, और 'अपि'—शब्द के बल से अट् का व्यवधान न रहने पर भी मूर्धन्य समझना चाहिये। कहेंगे—'उपसर्गात् सुनोति-सुवति' इससे षत्व—'अभिषुणोति। परिषुणोति। विषुणोति।

**सुवति'' (८।३।६५) इति षत्वम्। अभिषुणोति। परिषुणोति। विषुणोति। निषुणोति। अभ्यषुणोत्। पर्यषुणोत्। व्यषुणोत्। न्यषुणोत्।।**

## ३८६०. स्थादिष्वभ्यासेन चाभ्यासस्य।।६४।। (२२७७)

**'प्राक् सितात्' इति वर्तते। 'उपसर्गात्सुनोति' (८।३।६५) इत्यत्र 'स्थासेनयसेध' इति स्थादयः, तेषु स्थादिषु प्राक् सितसंशब्दनाद् अभ्यासेन व्यवाये मूर्धन्यो भवति, अभ्याससकारस्य च भवतीत्येवं**

**न्यासः**

**संशब्दनादिति**। 'परिनिविभ्यः सेवसितसय' इत्यादितः। उदाहरणान्युत्तरत्र व्युत्पादयिष्यन्ते। अव्यवधानेऽपि यथा स्यादित्येवमर्थोऽपिशब्दः; अन्यथा ह्यसति तस्मिन् यस्यापि तावत् पूर्वेण प्राप्तिरादेशकारस्य, तस्याप्यव्यवाये न स्यात्; तक्रकौण्डिन्यन्यायेन बाधितत्वात्, किं पुनरनादेशसकारस्य सेनयादिसम्बन्धिनो यस्य मूर्धन्यप्राप्तेरत्यन्तासम्भव एव।।६३।।

**स्थादिष्वभ्यासेन चाभ्यासस्य**।। **प्राक्सितादिति वर्त्तत इति**। 'स्थासेनयसेधसिच' इत्यत्र यः स्थाशब्दः, तमादाय प्राक् सितसंशब्दनाद् ये धातवः सूत्रे निर्दिष्टास्ते स्थादयो वेदितव्याः। अत किमर्थमभ्यासव्यवाये षत्वमुच्यते, यावता परितिष्ठासतीत्यादौ 'इण्कोः', 'आदेशप्रत्यययोः' इत्ययं सामान्यलक्षणेन सिद्धं षत्वम्? इत्याह—**अभ्यासेन व्यवाय इत्यादि**। अषोपदेशो यस्तस्य षकारः पूर्वेण न सिध्यतीति तदर्थमभ्यासेन व्यवाये षत्वमुच्यते।

**पदमञ्जरी**

इत्यतः। अपिग्रहणं किम्? अव्यवधानेऽपि यथा स्यात्, अन्यथा विशेषवचनाद्व्यवाय एव स्यात्। **अभ्यषुणोदिति**। 'षुञ् अभिषवे', लङ्, 'स्वादिभ्यः श्नुः', अडागमः, प्रागेव यणादेशात् षत्वम्; कृते वा यणि यकारमेवेणमाश्रित्य षत्वम्।।६३।।

**स्थादिष्वभ्यासेन चाभ्यासस्य**।। द्वे एते वाक्ये—स्थादिष्वभ्यासेन व्यवाये षत्वं भवति; अभ्यासस्य च षत्वं भवति तेष्वेव स्थादिष्विति। तत्राद्यं विध्यर्थम्, द्वितीयं नियमार्थम्। **अषोपदेशार्थमिति**। षोपदेशे तु परितिष्ठासतीत्यादौ सामान्यलक्षणेनैव सिद्धम्। **अभिषिषेणयिषतीति**। सेनयाऽभियातुमिच्छतीति विगृह्य 'सत्यापपाश' इत्यादिना णिच्, टिलोपः, ततः सन्, द्विर्वचनम्, ह्रस्वः, एच 'इग्घ्रस्वादेशे' अव्युत्पन्नः सेनाशब्दः। यद्वा सहेनेन वर्त्तत इति सेना, 'सहस्य सः संज्ञायाम्' इति सादेशः। यदा तु सिनोतेर्नप्रत्यये सेनेति व्युत्पाद्यते तदाऽस्त्येवाभेःषोपदेशत्वमेति। **अभितष्ठाविति**। आदेशसकारस्याप्यस्य षत्वं न सिद्ध्यति;

**भावबोधिनी**

निषुणोति। [ इनमें इण् से परे होने से षत्व होता है। ] अभ्यषुणोत्। पर्यषुणोत्। व्यषुणोत्। न्यषुणोत्। [ अभि + सु, लङ्, अट्, तिप्—अभि अ + सु नु + ति यण् से पूर्व प्रस्तुत सूत्र से षत्व होता है क्योंकि 'इण्कोः' यह अव्यवधान में लगता है। प्रस्तुत सूत्र अट् के व्यवधान में भी षत्व करता है। इसीलिये 'न' का 'ण' भी होता है—अभ्यषु णो + ति, इ का लोप। सामान्यतया तो अभि + अ + सु में यण् आदेश के पहले ही षत्व कर लें। वास्तव में यण् हो जाने पर भी 'अभ्य् अ सु' में य् = इण् मानकर भी षत्व में बाधा नहीं है। ]।।६३।।

'प्राक् सितात्'—इसकी अनुवृत्ति होती है। 'उपसर्गात् सुनोति' (८।३।६५) सूत्र में 'स्थासेनयसेध' ये स्थादि हैं, इन स्था आदि में, 'सित' शब्द के कथन के पूर्व, अभ्यास के व्यवधान में मूर्धन्य होता है और अभ्यास केसकार का (मूर्धन्य) होता है—ऐसा समझना चाहिये। अभ्यास के व्यवधान में षत्व का उदा॰ परितष्ठौ। [ परि + स्था + लिट् = तिप् = णल् = आ, द्वित्व अभ्यास कार्य करने पर परि त स्था + औ। यहाँ अभ्यास = त के व्यवधान में षत्व होता है, फलतः ष्टुत्व से थ् का ठ् होता है—परितष्ठौ। ]

**वेदिव्यम्। अभ्यासेन व्यवाये अषोपदेशार्थं च-अभिषिषेणयिषति, परिषिषेणयिषति। अवर्णान्ताभ्यासार्थं च-अभितष्ठौ। परितष्ठौ। अषोपदेशार्थं च-अभिषिषेणयिषति, परिषिषेणयिषति।**

**षणि प्रतिषेधार्थं च-अभिषिषिक्षति, परिषिषिक्षति।**

**न्यासः**

**अभिषिषेणयिषतीति**। सेनयाऽभियातीति 'सत्यापपाश' इत्यादिना णिच्, इष्ठवद्भावाट्टिलोपः, सन्, पूर्वदिडागमः।

**अवर्णान्ताभ्यासार्थं चेति**। षोपदेशमधिकृत्य तदुक्तम्। यद्यपि तस्य सकार आदेशो भवति, तथापि नैव सामान्यलक्षणेन सिध्यति; अनिणन्तत्वादभ्यासस्य, तेन व्यवधानाच्च। **अभितष्ठाविति**। 'आत औ णलः' इत्यौत्वम्, पूर्ववत् खयः शेषः।

**षणि प्रतिषेधार्थं चेति**। स्तौतिण्योरेवेति नियमेन यत् प्रतिषिद्धं व्यावर्तितं तत् षणि यथा स्यादित्येवमर्थं चेत्यर्थः। किं पुनस्तत् प्रतिषिद्धम्? षत्वम्। अथ वा-प्रतिषेधः प्रतिषिद्धम्, भावे निष्ठा। अर्थशब्दो निवृत्तौ वर्त्तते, यथा—मशकार्थो धूम इति। तदेतदुक्तम्—यः षणि प्रतिषेधः स्तौतिणिभ्यामन्यस्य धातोः षत्वप्रतिषेधः कृतस्तन्निवृत्त्यर्थं चेति। **अभिषिषिक्षतीति**। अत्र यद्यभ्यासेन व्यवाये नोच्येत तदा षत्वं न स्यात्, यथा—सिसिक्षतीत्यत्र।

अभ्यासस्येति किमर्थमुच्यते, यावता चशब्दोऽत्र क्रियते, स चापिशब्दस्यानुकर्षणार्थः, तेनायमर्थो भवति—अव्यवाये व्यवायेऽपीति, एवमन्तरेणाप्यभ्यासस्येति वचनमुपर्गस्थान्निमित्तादुत्तरस्याभ्यासस्य भविष्यति?

**पदमञ्जरी**

इण्कोरभावात्। **अभिषिषिक्षतीति**। यद्यप्ययमादेशसकार इणश्च परः, तथाप्यभ्यासमपेक्ष्य षत्वं न सिद्ध्यति; स्तौतिण्योरेव षणीति नियमात्। अतः षणि यत्प्रतिषिद्धं षत्वं नियमेन व्यावर्तितं तदप्युपसर्गमाश्रित्य भवति।

अथाभ्यासस्येति किमर्थम्, यावताभ्यासेनेत्यत्र क्रियापेक्षायां प्रकरणाव्द्यवाय इति सम्बध्यते, तच्चापिशब्दसन्निहितमेव प्रकृतमिति अव्यवायेऽपि षत्वं भविष्यति पूर्वसूत्रवत्, नार्थः 'अभ्यासस्य' इत्यनेन? अत

**भावबोधिनी**

[ षोपदेश धातुओं का ष आदेश होता है अतः उनमें तो 'आदेशप्रत्यययोः' से ही षत्व सिद्ध है। अतः ] अषोपदेश = जिनमें उपदेशकाल में ष नहीं है उनके लिये भी यह सूत्र है—अभिषिषेणायिषति। परिषिषेणयिषति। [ सेनया अभियाति, परियाति इन अर्थों में 'सत्यापपाशसेना०' आदि सूत्र से णिच्, इष्ठवद्भाव मानने से टि = आलोप अभि सेन् इ, सन्, द्वित्व, अभ्यास कार्य, इट्—अभि सि सेनयि स, उपसर्ग से परे अभ्यास में स का ष और अभ्यास के व्यवधान में भी होने से दोनों सकारों के षकार हो जाते हैं—अभिषिषेनयिष, न का णत्व—अभिषिषेणायिषति। इसी प्रकार परिषिषेणयिषति रूप बनते हैं। ]

और अवर्णान्त धातुओं के अभ्यास के (षत्व के) लिये यह सूत्र है—अभितष्ठौ। [ यहाँ अभि त स्था + औ में इण् या कवर्ग से परे नहीं है। षत्व नहीं प्राप्त है। प्रस्तुत सूत्र करता है। ]

षणि = षभूत सन् में प्रतिषेध जिनका हुआ है उनमें भी षत्व-विधान के लिये भी यह सूत्र है—अभिषिषिक्षति, परिषिषिक्षति। [ अभि सिच् + सन्, द्वित्व, अभ्यास कार्य आदि के बाद—अभि सिसिच् + स च् का कुत्व, स का ष—अभि सि सिक ष—इसमें 'स्तौतिण्योरेव' सूत्रोक्त नियम से षत्व नहीं हो सकता, इस प्रतिषेध को हटाने तथा उनमें भी षत्व करने के लियेभी यह सूत्र है। अतः अभ्यास के व्यवधान वाले द्वितीय स का तथा अभ्यास के स का—दोनों का षत्व होता है—अभि षि षि क् + ष् का क्ष अभिषिषिक्षति। ]

**'अभ्यासस्य' इति वचनं नियमार्थम्–स्थादिष्वेवाभ्याससकारस्य मूर्धन्यो भवति, नान्यत्र। अभिसुसूषति, अभिसिषासति।।**

**३८६१. उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्था-सेनय-सेधसिचसञ्जस्वञ्जाम्।।६५।। (२२७०)**

**'मूर्धन्यः' इति वर्तते, 'स' इति च। उसर्गस्थान्निमित्तादुत्तरस्य सुनोति, सुवति, स्यति, स्तौति, स्तोभति, स्था, सेनय, सेध, सिच, सञ्ज, स्वञ्ज–इत्येतेषां सकारस्य मूर्धन्यादेशो भवति।**

**न्यासः**

'सात्पदाद्योः' इति प्रतिषेधात्र भविष्यतीति चेत्? न; 'उपसर्गात् सुनोति' इत्यस्य षत्वविधानार्थस्य प्रतिषेधार्थत्वात्, तस्मिन्नेव हि प्रतिषेधे प्राप्ते तद्बाधनार्थम् 'उपसर्गात् सुनोति' इत्यस्यारम्भः, तत् कुतः प्रतिषेधस्य प्राप्तिः? इत्याह—**अभ्यासस्य त्वित्यादि**। स्थादिष्वभ्यासस्यैवेति विपरीतनियमो नाशङ्कनीयः, विपरीतनियमे सत्यभ्यासव्यवाये स्थादीनां यन्मूर्धन्यविधानं तदपार्थकमेव स्यात्। **अभिसुसूषतीति**। 'षू प्रेरणे'। **अभिसिषासतीति**। 'षो अन्तकर्मणि'।।६४।।

**उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसन्जस्वन्जाम्**।। 'षूञ् अभिषवे', 'षू प्रेरणे'। सुवतीति शविकरणनिर्देशात् 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति च 'षूङ् प्राणिगर्भविमोचने' 'षूङ् प्रसवे'—इत्येतयोरादादिकदैवादिकयोर्ग्रहणं न भवति। 'षो अन्तकर्मणि', 'ष्टुञ् स्तुतौ ष्टुभ् स्तम्भे', 'ष्ठा गतिनिवृत्तौ'। सेनयतिर्ण्यन्तः पूर्वमेव दर्शितः। 'षिध गत्याम्', 'षिधू शास्त्रे माङ्गल्ये च'—द्वयोरपि ग्रहणम्। एतयोस्तु 'सेधतेर्गतौ' इति प्रतिषेधात् गतेरन्यत्र षत्वं भवतीति वेदितव्यम्। शपा निर्देशः 'षिधु सरांद्धौ' इत्यस्य दैवादिकस्य निवृत्तये। 'षिचिर् क्षरणे' 'सन्ज सङ्गे'। योऽत्र षोपदेशस्तस्य 'आदेशप्रत्यययोः' इति प्राप्तस्य षत्वस्य 'सात्पदाद्योः' इति प्रतिषेधे वचनम्। यस्त्वषोपदेशस्तस्यादित एवाप्राप्तेः। सुनोतीत्येवमादीनां श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः।

**पदमञ्जरी**

आह—**अभ्यासस्येति वचनं नियमार्थमिति**। नियमस्य स्वरूपं दर्शयेति—**स्थादिष्वेवेति**। विपरीतस्तु नियमो न भवति—स्थादिष्वभ्यासस्यैवेति। यदि स्यात्, अभ्यासेन व्यवाये षत्वविधानमनुपपन्नं स्यात्। **अभिसुसूषतीति**। 'षू प्रेरणे', सन्, 'सनि ग्रहगुहोश्च' इतीड्निषेधः। अत्र धातुसकारस्य स्तौतिण्योरेवेति नियमादषत्वम्। अभ्याससकारस्य त्वस्मान्नियमात् षत्वाभावः।।६४।।

**उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसन्जस्वन्जाम्**।। 'षुञ्, अभिषवे' स्वादिः, 'षु प्रेरणे' तुदादिः, 'षो अन्तकर्मणि' दिवादिः, 'ओतः श्यनि' इति लोपः. ष्टुञ् स्तुतौ' अदादिः, 'उतो वृद्धिर्लुकि हलि', ष्टुभ स्तम्भे', अनुदात्तेत्। एतेषां श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः'अभिसोषवीतीत्यादि। 'ष्ठा गतिनिवृत्तौ'। सेनयतिर्ण्यन्तः। शपा निर्देशेन नार्थः; यङोऽसम्भवात्। 'षिध गत्याम्', 'षिधू शास्त्रे माङ्गल्ये च' भौवादिकौ; तत्र

**भावबोधिनी**

'अभ्यासस्य' यह वचन नियम करने के लिये है। स्था आदि धातुओं में ही अभ्यास के सकार का मूर्धन्य होता है अन्य में नहीं। उदा० अभिसुसूषति। अभिसिषासाति। [ अभि षु = सु + सन्, अभि-षो = सो = स + सन्, इट् का निषेध, द्वित्व आदि के बाद षत्व प्राप्त है किन्तु इस सूत्रोक्त नियम के कारण अभ्यास का षत्व नहीं होता है। ]।।६४।।

'मूर्धन्यः' इसकी और 'स' इसकी अनुवृत्ति होती है। उपसर्ग में स्थित निमित्त से उत्तरवर्ती-सुनोति, सुवति, स्यति, स्तौति, स्तोभति, स्था, सेनय, सेध, सिच, सन्ज, स्वन्ज—इनके सकार का मूर्धन्य आदेश होता है।

**सुनोति–अभिषुणोति, परिषुणोति। अभ्यषुणोत्, पर्यषुणोत्।**

**सुवति–अभिषुवति, परिषुवति। अभ्यषुवत्, पर्यषुवत्।**

**स्यति–अभिष्यति, परिष्यति। अभ्यष्यत्, पर्यष्यत्।**

**स्तौति–अभिष्टौति, परिष्टौति। अभ्यष्टौत्, पर्यष्टौत्।**

**स्तोभति–अभिष्टोभते, परिष्टोभते। अभ्यष्टोभत्, पर्यष्टोभत।**

**स्था–अभिष्ठास्यति, परिष्ठास्यति। अभ्यष्ठात्, पर्यष्ठात्। अभितष्ठौ, पारतष्ठौ।**

**न्यासः**

**उपसर्गस्थान्निमित्तादुत्तरस्येत्यादि**। एतनोपसर्गस्थे मूर्धन्यनिमित्ते तात्स्थ्यादुपचारेणोपसर्गशब्दोऽत्र वर्त्तते इति दर्शयति। भवति हि तात्स्थ्यात् ताच्छब्द्यम्, यथा— मञ्चाः क्रोशन्तीत्यत्र। **अभ्यषुणोदिति**। लङ्, 'प्राक्सितादड्व्यवायेऽपि' इति षत्वम्।

**अभिषुवतीति**। 'अचि श्नुधातुभ्रुवाम्' इत्यादिनोवङ्।

**अभिष्यतीति**। 'ओतः श्यनि' इत्योकारलोपः। **अभिष्टौतीति**। अदादित्वाच्छपो लुक्, 'उतो वृद्धिर्लुकि हलि' इति वृद्धिः।

**अभिष्टोभत इति**। अनुदात्तेत्वादात्मनेपदम्। **अभिषिञ्चतीति**। 'शे मुचादीनाम्' इति नुम्।

**अभिषजतीति**। 'दन्शसञ्जस्वञ्जां शपि' इति नकारलोपः। **एवमभिष्वजत** इत्यत्रापि। पूर्ववदात्मनेपदम्।

**पदमञ्जरी**

'सेधतेर्गतौ' इति प्रतिषेधादन्यत्र षत्वम्। शपा निर्देशो यङ्लुग्निवृत्त्यर्थः, दैवादिकनिवृत्त्यर्थश्च 'षिधू संराद्धौ' इति। 'षिच् क्षरणे' तुदादिर्मुचादिः, 'षन्ज सङ्गे', 'ष्वन्ज परिष्वङ्गे', अनुदात्तेत्, 'दंशसञ्जस्वञ्जां शपि' इति नलोपः, सिवादीनां यङ्लुक्यपि भवति, अभिषेषिचीतीत्यादि। एतेषामड्व्यवाये, अभ्यासव्यवाये च यथासम्भवं षत्वम्। 'इण्कोः' इति वर्त्तते, तत्र कवर्गस्यासम्भवादिण इति सम्बध्यते, तत्र यदीणा उपसर्गो विशेष्येत— इणन्तादुपसर्गादिति, इहं न स्यात्—निष्षुणोति, दुष्षुणोतीति। तस्मादुपसर्गेणेण्विशेषणीयः—उपसर्गस्येण इति। ननूपसर्गादिति पञ्चमी, तत्कथमिण्विशेष्यते? न ब्रूमो वैयधिकरण्येन विशेष्यत इति, किं तर्हि? तात्स्थ्यात्ताच्छब्द्यम्—उपसर्गादिणः, उपसर्गस्थादिण इति। तत्र शर्व्यवायस्याश्रितत्वान्निसोऽपि परस्य षत्वं भवति, तदिदमुक्तम्—**उपसर्गस्थान्निमित्तादिति**।

**भावबोधिनी**

उदा॰ (१) सुनोति ('षुञ् अभिषवे' स्वादिगणीय)—अभिषुणोति, परिषुणोति। अभ्यषुणोत्, पर्यषुणोत्। [ 'प्राक्सितादड्व्यवायेऽपि' से अट्व्यवधान में षत्व होता है। यह स्थिति आगे भी समझें ]

(२) सुवति ('षु प्रेरणे' तुदादिगणीय)—अभिषुवति, परिषुवति। अभ्यषुवत्, पर्यषुवत्।

(३) स्यति ('षोऽन्तकर्मणि' दिवादिगणीय)—अभिष्यति, परिष्यति। अभ्यष्यत्, पर्यष्यत्।

(४) स्तौति ('ष्टुञ् स्तुतौ' अदादिगणीय) अभिष्टौति, परिष्टौति। अभ्यष्टौत् पर्यष्टौत्।

(५) स्तोभति ('ष्टुभ स्तम्भे' भ्वादिगणीय)—अभिष्टोभते, परिष्टोभते। अभ्यष्टोभत, पर्यष्टोभत।

(६) स्था [ 'ष्ठा गतिनिवृत्तौ' भ्वादिगणीय ] अभिष्ठास्यति, परिष्ठाष्यति। अभ्यष्ठात् पर्यष्ठात्। अभितष्ठौ, परितष्ठौ। [ लट् लङ् आदि में स्था का तिष्ठ हो जाने से षत्व असम्भव होने के कारण लृट् लुङ्, लिट् के उदा॰ दिये गये हैं। ]

**सेनय–अभिषेणयति, परिषेणयति। अभ्यषेणयत्, पर्यषेणयत्। अभिषिषेणयिषति, परिषिषेणयिषति।**

**सेध–अभिषेधति, परिषेधति। अभ्यषेधत्, पर्यषेधत्।**

**सिच–अभिषिञ्चति, परिषिञ्चति। अभ्यषिञ्चत्, पर्यषिञ्चत्। अभिषिषिक्षति, परिषिषिक्षति।**

**सन्ज–अभिषजति, परिषजति। अभ्यषजत्, पर्यषजत्। अभिषिषङ्क्षति, परिषिषङ्क्षति।**

**स्वन्ज–अभिष्वजते, परिष्वजते। अभ्यष्वजत, पर्यष्वजत। अभिषिष्वङ्क्षते, परिषिष्वङ्क्षते।**

**'सेध' इति शब्विकरणनिर्देशः सिध्यतिनिवृत्त्यर्थः।**

**न्यासः**

**अभिषिष्वङ्क्षत इति**। अत्रापि 'पूर्ववत् सनः' इत्यात्मनेपदम्।

**दधि सिञ्चतीति**। 'सात्पदाद्योः' इति प्रतिषेधः। **निःसेचको देश इति**। अत्र गमिक्रियया निसो योगः, न सिचि क्रिययेति गमिमेव प्रति तस्योपसर्गसंज्ञा, न सिचिं प्रति। 'यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्ति' इति वचनात्। **अभिसावकीयतीति**। सुनोतेण्वुल्। सावकमिच्छतीति 'सुप आत्मनः क्यच्', 'क्यचि च' इतीत्वम्; सावकीय इति स्थितेऽभिना योगः, ततो लट्। अत्रापि सावकीयतिं प्रत्यभेरुपसर्गसंज्ञा; तं प्रतिक्रियायोगात्, न सुनोतिं प्रति; विपर्ययात्। तेन षत्वं न भवति।

**पदमञ्जरी**

**दधि सिञ्चतीति**। 'सात्पदाद्योः' इति प्रतिषेध एवात्र भवति, तदपवादो ह्ययम्।

**निःसेचक इति**। निरयमुसर्ग एव, तत्कथमिदं प्रत्युदाहरणम्? अत आह—**नायं सिचेरुपसर्ग इति**। यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञे भवतः। **अभिसावकीयतीति**। साक्कशब्दात् ण्वुलन्तात्क्यच्, तस्याभिना योगः। सुनोतिना योगे तु भवत्येव, अभिषावकमिच्छति अभिषावकीयतीति। ण्यन्तेऽपि तर्हि णिजर्थेन

**पदमञ्जरी**

(७) सेनय [ सेनया अभियाति, परियाति—अर्थों में णिच् होता है। चुरादिगणीय है। ] अभिषेणयति, परिषेणयति। अभ्यषेणयत्, पर्यषेगयत्। अभिषिषेणयिषति। परिषिषेणयिषति।

(८) सेघ ('षिध गत्याम्' 'षिधू माङ्गल्ये च' भ्वादिगणीय)—अभिषेधति, परिषेधति। अभ्यषेधत् पर्यषेधत्।

(९) सिच ('षिचिर् क्षरणे' तुदादिगणीय)—अभिषिञ्चति, परिषिञ्चति। अभ्यषिञ्चत्, पर्यषिञ्चत्। अभिषिषिक्षति, परिषिषिक्षति।

(१०) सन्ज [ 'षन्ज सङ्गे' भ्वादिगणीय ] अभिषजति, परिषजति। अभ्यषजत्, पर्यषजत्। अभिषिषङ्क्षति, परिषिषङ्क्षति।

(११) स्वन्ज ('ष्वन्ज परिष्वङ्गे' भ्वादिगणीय)—अभिष्वजते, परिष्वजते। अभ्यष्वजत, पर्यष्वजत। अभिषिष्वङ्क्षते, परिषिष्वङ्क्षते। [ 'सन्ज' तथा 'स्वन्ज में' 'दंशसन्जस्वन्जाम्' सूत्र से न् का लोप होने से लडादि में न् या ञ् नहीं रहता है। ]

**विमर्श**—पाणिनीय धातुपाठ में कुछ षोपदेश धातुयें हैं और कुछ सोपदेश। जो षोपदेश हैं उनमें भी 'धात्वादेः षः सः' सूत्र से ष् का स् हो जाता है। अतः उनमें 'आदेशप्रत्यययोः' से षत्व प्राप्त है किन्तु 'सात्पदाद्योः' सूत्र से इस षत्व का निषेध हो जाता है। अतः उनमें षत्व करने के लिये यह सूत्र है। इसके अतिरिक्त जो षोपदेश नहीं है उनमें तो किसी से प्राप्त नहीं है, उनमें भी षत्व के लिये उनका ग्रहण है। 'सुनोति' आदि में जो 'श्तिप्' प्रत्यय के साथ निर्देश है वह यङ्लुक् में षत्ववारण के लिये है। विकरण का उल्लेख उसी विकरण वाली धातु के ग्रहण के लिये है। यहाँ भी अड्व्यवाय और अनड्व्यवाय दोनों में षत्व होता है।

(अनु०) सेध—इसमें शप् विकरण का निर्देश 'सिध्यति' (षिधु संराद्धौ—दिवादिगणीय) की निवृत्ति के लिये है अर्थात् भ्वादिगणीय है दिवादिगणीय नहीं।

**उपसर्गादिति किम्? दधि सिञ्चति। मधु सिञ्चति।**

**निर्गताः सेचका अस्माद् देशात् निःसेचको देश इति नायं सिचेरुपसर्गः। अभिसावकीयतीत्यत्रापि न सुनोतिं प्रति क्रियायोगः, किं तर्हि? सावकीयं प्रति।**

**अभिषावयतीत्यत्र तु सुनोतिमेव प्रति क्रियायोगः, न सावयतिमिति षत्वं भवति।।**

## ३८६२. सदिरप्रतेः।।६६।। (२२७१)

**न्यासः**

यद्येवम्, अभिषावयतीत्यत्रापि न स्यात्, इहापि सावयतिं प्रति विपर्ययात्? इत्यत आह— **अभिषावयतीत्यत्र त्वित्यादि**। अत्र हि प्रागेव सुनोतिरुपसर्गेण योगमनुभूय पश्चात् प्रेषणाध्येषणाद्यर्थेन योगमनुभवन् णिचमुत्पादयति। तस्मादुपसर्गविशिष्टायामेव क्रियायां प्रेष्यते, अध्येष्यते वा। ततः सुनोतिमेव प्रत्यभेरुपसर्गसंज्ञेति भवत्येव षत्वम्।।६५।।

**सदिरप्रतेः**।। 'सात्पदाद्योः' इति प्रतिषेधे प्राप्ते वचनम्। सदिरिति सुब्व्यत्ययेन षष्ठ्याः स्थाने प्रथमा।

**पदमञ्जरी**

प्रैषादिनोपसर्गस्य योगो न प्रकृत्यर्थेनेति षत्वाप्रसङ्गः? अत आह—**अभिषावयतीत्यत्रेति**। अभिषवविषया प्रयुक्तिः, न तु प्रयुक्तेरभिना योग इत्यर्थः। यदा तु प्रयुक्तेरभिना योगः, तदा नैव षत्वं भवति; कितु प्रकृत्यर्थेनासंसृष्टस्य प्रयुक्तिमात्रस्याभिना योगः कीदृश इति चिन्त्यम्।।६५।।

**सदिरप्रतेः**।। 'सदिः' इति षष्ठ्यर्थे प्रथमा। **निषसादेति**। सदिस्वञ्ज्योः परस्य लिटीति प्रतिधेधादभ्यासात् परस्य न भवति।।

**भावबोधिनी**

उपसर्ग से परे—इसका क्या फल है? दधि सिञ्चति। मधु सिञ्चति। [ इनमें 'सात्पदाद्योः' सूत्र से षत्व का प्रतिषेध ही होता है क्योंकि उपसर्ग से परे नहीं है। ]

निर्गताः सेचका अस्माद् देशात् (निकल गये हैं सेचक इस देश से) इस अर्थ में—'निःसेचकः अयं देशः' यहाँ पर 'निर्' यह सिच् धातु का उपसर्ग नहीं है। [ अपि तु गम् धातु का। क्योंकि 'यं प्रति क्रियायुक्ताः तं प्रति एव गति-उपसर्ग-संज्ञका भवन्ति' यह व्यवस्था है। ] 'अभिसावकीयति' यहाँ भी 'सुनोति' इसके साथ 'अभि' इस उपसर्ग का योग नहीं है। तब किसके साथ है? सावकीय के प्रति। ] [ सावकम् इच्छति—इस अर्थ में क्यच् = य प्रत्यय, 'क्यचि च' से अ का ईत्व—सावकीय। इसके बाद 'अभि' उपसर्ग का सम्बन्ध होता है। अतः यहाँ 'सुनोति' केसाथ योग न होने से षत्व नहीं होता है। ]

[ यदि ऐसा है तब तो णिजन्त स्थल में भी 'सु' न रहकर 'सावि' हो जाने से उसमें भी षत्व नहीं होगा? ] अभिषावयति— इसमें तो 'सुनोति' के साथ ही उपसर्ग का योग है, न कि 'सावयति' इसके साथ, अतः षत्व होता ही है। [ भाव यह है कि पहले ही अभि और सु का योग कर लिया जाता है। बाद में प्रेषण या प्रेरणा आदि अर्थ के लिये णिच् किया जाता है। अतः यह अभि 'सु' के साथ ही सम्बद्ध है। काशिका तथा महाभाष्य दोनों में '....न सुनोतिं प्रति क्रियायोगः।....सुनोतिमेव प्रति क्रियायोगः' ऐसा पाठ है। यहाँ 'सुनोति के प्रति क्रियायोग नहीं' यह अर्थ उचित नहीं प्रतीत होता है। अतः 'सुनोति क्रिया के साथ ही उपसर्ग का योग है' ऐसा भाव समझना चाहिये। अथवा 'सुनोति' इसके साथ ही क्रियाद्योतक उपसर्ग का योग है—ऐसी व्याख्या करनी चाहिये। 'अभिसावकीयति' इसमें—सावकमिच्छति—इस अर्थ में 'सावकीय' पहले बनाने के बाद 'अभि' उपसर्ग का योग होने से 'सावकीय' के प्रति ही अभि का उपसर्गत्व है, 'सु' के प्रति नहीं। अतः षत्व नहीं होता है। ]।।६५।।

'प्रति' को छोड़कर अन्य उपसर्गस्थ निमित्त से उत्तरवर्ती 'सद्' धातु के सकार का मूर्धन्य आदेश होता है। उदा० निषीदति, विषीदति न्यषीदत्, व्यषीदत्। निषसाद, विषसाद। [ यहाँ भी यद्यपि 'आदेशप्रत्यययोः' से षत्व प्राप्त है किन्तु 'सात्पदाद्योः' से

**सदेः सकारस्य उपसर्गस्थान्निमित्तादप्रतेरुत्तरस्य मूर्धन्य आदेशो भवति। निषीदति, विषीदति। न्यषीदत्, व्यषीदत्। निषसाद, विषसाद।**

**अप्रतेरिति किम्? प्रतिसीदति।।**

**३८६३. स्तन्भेः।।६७।। (२२७२)**

**'उपसर्गात्' इति वर्तते। स्तन्भेः सकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य मूर्धन्य आदेशो भवति। अभिष्टभ्नाति, परिष्टभ्नाति। अभ्यष्टभ्नात्, पर्यष्टभ्नात्। अभितष्टम्भ, परितष्टम्भ।**

**'अप्रतेः' इत्येतदिह नानुवर्तते, तेनैतदपि भवति–प्रतिष्टभ्नाति, प्रत्यष्टभ्नात्, प्रतितष्टम्भ।।**

**न्यासः**

**निषीदतीति**। 'षद्लृ विशरणगत्यवसादनेषु'। पाघ्रादिसूत्रेण सीदादेशः। **निषसादेति**। 'सदिस्वञ्जोः परस्य लिटि' इति प्रतिषेधादभ्यासात् परस्य न भवति षत्वम्।।६६।।

**स्तन्भेः**।। स्तम्भिः सौत्रो धातुः। स यदि 'अज्दन्त्यपराः सादयः षोपदेशाः' इति लक्षणत्वात् षोपदेशस्तस्य ततः पूर्ववत् षत्वप्रितषेधे प्राप्ते वचनम्। अथ सूत्रे तथा पाठादषोपदेशः, ततोऽप्राप्त एव। **अभिष्टभ्नातीति**। 'स्तम्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च' इति चकारेण श्नाप्रत्ययः समुच्चीयते, 'अनिदिताम्' इत्यनुनासिकलोपः।

**अप्रतेरेतदिह नानुवर्त्तत** इति। एतच्च योगविभागादेव गम्यते; इतरथा हि पूर्वसूत्र एव स्तम्भेर्ग्रहणं कुर्यात्। स्यादेतत्—'अवाच्चालम्बनाविदूर्ययोः' इति षत्वं वक्ष्यति, ततः स्तम्भेरेव यथा स्यात्, सदेर्मा भूदित्येवमर्थो योगविभाग इति? नैतदस्ति; एकयोगेऽपि यस्यालम्बनाविदूर्ये वृत्तिरस्ति, तस्यैव भविष्यति। कस्य चैते स्तः? स्तम्भेरेव।।६७।।

**पदमञ्जरी**

**स्तन्भेः**। स्तम्भिः सौत्रो धातुः। **अभिष्टभ्नातीति**। 'स्तन्भुस्तुन्भुस्न्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च' इति श्नाप्रत्ययः, 'अनिदिताम्' इति नलोपः।।६६।।

**अप्रतेरित्येतदिह नानुवर्त्तत इति**। यद्यनुवर्त्तेत, पूर्वसूत्र एव स्तम्भिग्रहणं कुर्यात्किं योगविभागेन? अस्ति प्रयोजनम्, किम्? 'अवाच्चालम्बनाविदूर्ययोः' इति वक्ष्यति, तत्स्तम्भेर्यथा स्यात्, सदेर्मा भूत्? नैतदस्ति; एकस्मिन्नपि योगे यस्यालम्बनाविदूर्ये स्तः, स एवानुवर्तिष्यते, स्तम्भेरेव च ते सम्भवतः।।६७।।

**भावबोधिनी**

निषेध हो जाता है। अतः प्रस्तुत सूत्र से षत्व किया जाता है। ]

'प्रति' को छोड़कर—इसका क्या फल है? प्रतिसीदति। [ इसमें षत्व नहीं होता है। ]।।६६।।

'उपसर्गात्' इसकी अनुवृत्ति होती है। उपसर्गस्थ निमित्त से उत्तरवर्ती 'स्तम्भ' के सकार का मूर्धन्य आदेश होता है। उदा॰ अभिष्टभ्नाति, परिष्टभ्नाति। [ अभि स्तन्भ् से लट्, तिप्, श्ना = ना विकरण, 'अनिदिताम्' सूत्र से न् का लोप—अभि स्तभ् ना ति, षत्व होने पर ष्टुत्व भी हो जाता है। ] अभ्यष्टभ्नात् पर्यष्टभ्नात्। अभितष्टम्भ, परितष्टम्भ।

'अप्रतेः' इसकी यहाँ अनुवृत्ति नहीं होती है, अतः यहाँ भी षत्व होता है—परिष्टभ्नाति, प्रत्यष्टभ्नात्, प्रतितष्टम्भ।।६७।।

## ३८६४. अवाच्चालम्बनाविदूर्ययोः।।६८।। (२२७३)

**अवशब्दादुपसर्गादुत्तरस्य स्तम्भेः सकारस्य मूर्धन्यादेशो भवति आलम्बनेऽर्थे, आविदूर्ये च। आलम्बनम् आश्रयणम्। अविदूरस्य भाव आविदूर्यम्। आलम्बने तावत्–अवष्टभ्यास्ते। अवष्टभ्य तिष्ठति। आविदूर्ये–अवष्टब्धा सेना। अवष्टब्धा शरत्।**

**आलम्बनाविदूर्ययोरिति किम्? अवस्तब्धो वृषलः शीतेन। अनिगर्थ आरम्भः।।**

## ३८६५. वेश्च स्वनो भोजने।।६९।। (२२७४)

**वेरुपसर्गादवाच्चोत्तरस्य भोजनार्थे स्वनतेः सकारस्य मूर्धन्यादेशो भवति। विष्वणति, व्यष्वणत्, विषष्वाण। अवष्वणति अवाष्वणत्, अवषष्वाण। अभ्यवहारक्रियाविशेषोऽभिधीयते, यत्र स्वननमस्ति।**

### न्यासः

**अवाच्चालम्बनाविदूर्ययोः**।। चकारः स्तम्भेरनुकर्षणार्थः। अनिणर्थोऽयमारम्भः। आलम्बनम् = आश्रयणम्। विदूरम् = विप्रकृष्टम्, ततोऽन्यदविदूरम्। तत् पुनर्यदासन्नं यच्च नाप्यतिदूरं तद्वेतिव्यम्, नासन्नमात्रम्। आसन्नमात्रं यद्यभिमतं स्यात्, तदासन्नग्रहणमेव कुर्यात्। अविदूरस्य भाव आविदूर्यम्। अत एव निपातनान्नञ्पूर्वादपि तत्पुरुषादुत्तरो भावप्रत्ययः, ब्राह्मणादित्वाद्वा। **अवष्टभ्येति**। ल्यबन्तमेतत्। आश्रित्येत्यर्थः। **अवष्टब्धा शरदिति**। आसन्नेत्यर्थः। अथ वा—नाप्यासन्ना, नातिविप्रकृष्टेत्यर्थः। एष त्वर्थभेदः प्रकरणादिगम्यः। निष्ठातकारस्य 'झषस्तथोर्धोऽधः' इति धकारः, 'झलां जश् झशि' इति भकारस्य बकारः।

**अवस्तब्ध** इति। अभ्यर्दित इत्यर्थः।।६८।।

**वेश्च स्वनो भोजने**।। चकारः 'अवात्' इत्यस्यानुकर्षणार्थः। वेरुत्तरस्य स्वनतेरनादेशसकारत्वादप्राप्ते। अवशब्दात् पुनरनिणन्तत्वाच्चाप्राप्त एवेदमारभ्यते। **अभ्यवहारक्रियाविशेषोऽभिधीयत इति**। अनेन भोजनार्थतां

### पदमञ्जरी

**अवाच्चालम्बनाविदूर्ययोः**।। आलम्बनम् = आश्रयणम्। विदूरम् = विप्रकृष्टम्, तदन्यदविदूरम्, तस्य भाव आविदूर्यम्, अत एव निपातनात् नञ्पूर्वादपि तत्पुरुषाद्भावप्रत्ययः। **अवष्टभ्येति**। यष्ट्यादिकमवलम्ब्येत्यर्थः। **अवष्टब्धेति**। आसन्नेत्यर्थः। **अवस्तब्ध इति**। अभ्यर्दित इत्यर्थः।।६८।।

### भावबोधिनी

'अव' उपसर्ग से उत्तरवर्ती 'स्तम्भ' के सकार का मूर्धन्य आदेश आलम्बन और आविदूर्य = पास में, बहुत दूर नहीं, इन अर्थों में होता है। आलम्बन = आश्रयण, अविदूर का भाव = आविदूर्य, विशेष दूर न होना। उदा॰ पहले आलम्बन अर्थ में—अवष्टभ्यास्ते। अवष्टभ्य तिष्ठति। [ अव स्तम्भ् + क्त्वा = ल्यप् = य, न् का लोप, षत्व ष्टुत्व अवष्टभ्य। सहारा लेकर बैठता है—यह अर्थ है। ] आविदूर्य अर्थ में—अवष्टब्धा सेना। अवष्टब्धा शरत्। [ सेना बहुत दूरनहीं है, पास ही है। शरद् ऋतु दूर नहीं है, पास ही है। ]

आलम्बन और आविदूर्य—इन्हीं अर्थों में—इसका क्या फल है? अवस्तब्धः वृषलः शीतेन। [ शीत से वृषल जकड़ गया है। ]

अनिगर्थ = जिसमें इक् = इ उ ऋ नहीं है ऐसे 'अव' उपसर्ग से परे भी षत्व करने के लिये यह सूत्र बनाया गया है।।६८।।

'वि' तथा 'अव' इन उपसर्गों से उत्तरवर्ती 'स्वन' धातु के सकार का मूर्धन्य आदेश भोजन अर्थ में होताहै। उदा॰ विष्वंणति, व्यष्वणत्, विषष्वाण। [ वि स्वन + लट्, शप्, षत्व होने से णत्व भी हो जाता है। ] अवष्वणत्ति, अवाष्वणत्,

**भोजन इति किम्? विस्वनति मृदङ्गः**[१]**।।**

## ३८६६. परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वन्जाम्।।७०।। (२२७५)

**परि, नि, वि–इत्येतेभ्य उपसर्गेभ्य उत्तरेषां सेव, सित, सय, सिवु, सह, सुट्, स्तु, स्वन्ज–इत्येतेषां सकारस्य मूर्धन्य आदेशो भवति। परिषेवते, निषेवते, विषेवते, पर्यषेवत, न्यषेवत, व्यषेवत। परिषिषेविषते निषिषेविषिते। विषिषेविषते।**

**सित–परिषितः, विषितः, निषितः।**

**सय–परिषयः, निषयः, विषयः।**

**सिव्–परिषीव्यति, निषीव्यति, विषीव्यति। पर्यषीव्यत्, न्यषीव्यत्, व्यषीव्यत्। पर्यसीव्यत्, न्यसीव्यत्, व्यसीव्यत्।**

### न्यासः

दर्शयति। **विष्वणतीति**। सशब्दं भुङ्क्त इत्यर्थः। अनेकार्थत्वाद्धातूनां स्वनतिरत्राभ्यावहारक्रियाविशेषे वर्त्तते। **यत्रेत्यादिना** तमेव भोजनविशेषं दर्शयति।।६९।।

**परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वन्जाम्**।। 'षेवृ सेवृ सेवने' इति भ्वादावात्मनेपदिनौ पठ्येते। योऽत्र षोपदेशस्तस्य 'सात्पदाद्योः' इति प्रतिषेधे प्राप्ते, इतरस्य त्वप्राप्त एव षत्वे वचनम्। **सित इति**। 'षिञ् बन्धने' इत्येतस्य पूर्ववत् प्रतिषेधे प्राप्ते वचनम्। अपरे तु स्यतेरपि ग्रहणमिच्छन्ति, तस्यापि क्ते 'द्यतिस्यति'

### पदमञ्जरी

**वेश्च स्वनो भोजने**।। उदाहरणेषु स्वार्थपरित्यागेन भोजनमात्रे स्वनिर्वर्तत इति शङ्कामपनयति—**अभ्यवहारक्रियाविशेष इति**। तमेव विशेषं दर्शयति—**यत्रेति**। **विष्वणतीति**। सशब्दं भुङ्क्त इत्यर्थः।।६९।।

**परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्**।। सेवतिर्भूवादिष्वनुदात्तेत्। **सित इति**। 'षिञ् बन्धने' क्तान्तः। **सय इति**। स एवैरजन्तः, 'षिवु तन्तुसन्ताने' दिवादिः, 'षह मर्षणे' अनुदातेत्।

### भावबोधिनी

अवषष्वाण। [ अव स्वन् + लट् आदि। ] यहाँ अभ्यवहार की क्रियाविशेष अर्थात् एक विशिष्ट रूप से भोजन करना अर्थ प्रतीत होता है जिसमें कि स्वनन = कुछ आवाज होती हो, अर्थात् शब्द करता हुआ खाता है—ऐसी प्रतीति होती है।

भोजन में—इसका क्या फल है? विस्वनति मृदङ्गः। [ यहाँ स्वनन तो है किन्तु भोजन अर्थ नहीं है अतः षत्व नहीं होता है। ]।।६९।।

परि, नि, वि—इन उपसर्गों से उत्तरवर्ती—सेव, सित,सय, सिव, सह, सुट्, स्तु और स्वन्ज—इनके सकार का मूर्धन्य आदेश होता है। उदा० (१) परिषेवते, निषेवते, विषेवते। [ परि, नि, वि—इन उपसर्गों केसाथ 'सेव्' + लट् = त, षत्व होता है। ] पर्यषेवत, न्यषेवत, व्यषेवत। [ परि सेव + लङ् ] परिषिषेविषते, निषिषेविषते, विषिषेविषते। [ परि + सेव + सन्। उपसर्ग से परवर्ती सकार का मूर्धन्य होता है। ]

(२) सित—परिषितः, विषितः, निषितः [ 'षिञ् बन्धने' धातु से क्त प्रत्यय, परि, वि, नि—उपसर्ग से परे षत्व होता है। ]

(३) सय—परिषयः, निषयः विषयः। [ 'षिञ् बन्धने' से अच् प्रत्यय के रूपों में षत्व होता है। क्योंकि 'सय' का ही षत्व है। ]

(४) सिव्—परिषीव्यति, निषीव्यति, विषीव्यति। [ 'षिवु तन्तुसन्ताने' इस दिवादिगणीय का लट्, श्यन्, दीर्घ करने पर षत्व होता है। ] पर्यषीव्यत्, न्यषीव्यत्; व्यषीव्यत्। [ परि + सिव् + लङ्, अट्, इनमें 'सिवादीनां वाड्व्यवायेऽपि' इस अग्रिमसूत्र

---

१. 'अवस्वनति वीणा' इत्यधिकं क्वचित्।

**सह–परिषहते, निषहते, विषहते। पर्यषहत, न्यषहत, व्यषहत। पर्यसहत। न्यसहत। व्यसहत।**

**सुट्–परिष्करोति। पर्यष्करोत्। पर्यस्करोत्।**

**स्तु–परिष्टौति, निष्टौति विष्टौति। पर्यष्टौत्, न्यष्टौत्, व्यष्टौत्। पर्यस्तौत्, न्यस्तौत्, व्यस्तौत्।**

**ष्वञ्ज–'दन्शसन्जस्वन्जाम्' (६।४।२५) इति नलोपः। परिष्वजते, विष्वजते, निष्वजते। पर्यष्वजत, पर्यस्वजत।**

**पूर्वेणैव सिद्धे स्तुस्वन्जिग्रहणमुत्तरार्थम्, अड्व्यवाये विभाषा यथा स्यात्।।**

## ३८६७. सिवादीनां वाड्व्यवायेऽपि।।७१।। (२३५९)

**अनन्तरसूत्रे 'सिवुसहसुट्स्तुस्वञ्जाम्' (८।३।७०) इति सिवादयः। सिवादीनामड्व्यवायेऽपि**

**न्यासः**

इत्यादिनेत्त्वे कृते सित इति रूपम्। किमर्थं पुनस्तस्य ग्रहणम्, यावता 'उपसर्गात् सुनोति' इत्यादिना सिद्धमेव? नियमार्थम्—परिनिविभ्य एवोपसर्गेभ्यो यथा स्यात्, अन्येभ्यो मा भूदिति। **सय इति**। सुनोतेः' 'एरच्' इत्यजन्तस्य ग्रहणमन्यप्रत्ययान्तनिवृत्त्यर्थम्। **सिवु इति**। 'षिवु तन्तुसन्ताने'। पूर्ववत् प्रतिषेधे प्राप्तेऽस्य ग्रहणम्। सहेति **'षह मर्षणे'**। **सुडिति**। 'सुट् कात्पूर्वः' इति सुडागमः, तस्यानादेशसकारत्वादप्राप्त एव षत्व उपादनम्। स्तुस्वञ्जो 'उपसर्गात् सुनोति' इत्यादिनैव सिद्ध उत्तरसूत्रेणाड्व्यवायेऽपि विकल्पो यथा स्यादिति ग्रहणम्। **परिषीव्यतीति**। 'हलि च' इति दीर्घः। **परिष्करोतीति**। 'सम्पर्युपेभ्यः' इत्यादिना सुट्।।७०।।

**सिवादीनां वाड्व्यवायेऽपि**।। सिवादयः प्रत्यासत्तेः 'सिवुसहसुट्स्तुस्वन्जाम्' इति पूर्वसूत्र एव सन्निविष्टा

**पदमञ्जरी**

**सुडिति**। 'सुट् कात्पूर्वः' इत्यस्य ग्रहणम्। स्तुस्वञ्जी उक्तार्थौ, तयोः 'उपसर्गात्सुनोति' इत्यादिनैव सिद्धे पर्यादिपूर्वयोरुत्तरसूत्रेणाड्व्यवाये विकल्पार्थं वचनम्।।७०।।

**सिवादीनां वाऽड्व्यवायेऽपि**।। सिवादयः प्रत्यासत्तेः पूर्वसूत्रे सन्निविष्टा गृह्यन्ते। उभयत्रविभाषेयम्,

**भावबोधिनी**

से अड्व्यवधान में विकल्प से षत्व होने से षकार और सकार दोनों के रूप होते हैं। ] पर्यसीव्यत्, न्यसीव्यत्, व्यसीव्यत्।

(५) सह—परिषहते, निषहते, विषहते। पर्यषहत, न्यषहत, व्यषहत। पर्यसहत, न्यसहत, व्यसहत। [ षह मर्षणे' के रूप हैं। ]

(६) सुट्—परिष्करोति, पर्यष्करोत् पर्यस्करोत्। [ सुट् का स् आदेश भूत नहीं है। अतः षत्व किया गया है। ]

(७) स्तु—परिष्टौति, निष्टौति, विष्टौति, पर्यष्टौत्, न्यष्टौत्, व्यष्टौत्। पर्यस्तौत्, न्यस्तौत्, व्यस्तौत्। [ यहाँ भी अग्रिम सूत्र से अड्व्यवधान में विकल्प से षत्व होता है। ]

(८) स्वन्ज—'दन्श-सन्ज-स्वन्जाम्' से 'न्' का लोप होता है। परिष्वजते, विष्वजते, निष्वजते। पर्यष्वजत पर्यस्वजत।

पूर्व सूत्र (उपसर्गात् ८।३।६५) से ही षत्व के सिद्ध रहते 'स्तु' और 'स्वन्ज' का ग्रहण अग्रिम सूत्र के लिये है जिसके फलस्वरूप अड्व्यवधान में विकल्प से षत्व हो सके। [ यदि इसमें 'स्वन्ज' का ग्रहण नहीं रहेगा तो 'सिवादि' से—'स्तु' 'स्वन्ज' का ग्रहण नहीं हो सकेगा तो 'सिवादि' के अन्तर्गत न हो सकने से अट्व्यवाय में विकल्प से षत्व नहीं हो सकेगा। ]।।७०।।

अव्यवहित पूर्ववर्ती सूत्र में 'सिवु-सह-सुट-स्तु-स्वन्जाम्' ये सिवादि हैं। सिवु आदि के अड्व्यवधान में भी परि, नि वि—उपसर्गों से उत्तरवर्ती सकार का मूर्धन्य आदेश विकल्प से होता है। इसी के अनुसार [ पूर्वसूत्रों में अट्व्यवाय में विकल्प से

**परिनिविभ्य उत्तरस्य सकारस्य वा मूर्धन्यो भवति। तथा चैवोदाहृतम्[१]।।**

## ३८६८. अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु।।७२।। (२३४९)

**अनु, वि, परि, अभि, नि–इत्येतेभ्य उत्तरस्य स्यन्दतेरप्राणिषु सकारस्य वा मूर्धन्यादेशो भवति। अनुष्यन्दते, विष्यन्दते, परिष्यन्दते, अभिष्यन्दते तैलम्। निष्यन्दते। अनुस्यन्दते, विस्यन्दते, परिस्यन्दते, अभिस्यन्दते, निस्यन्दते।**

**अप्राणिष्विति किम्? अनुस्यन्दते मत्स्य उदके। प्राण्यप्राणि-विषयस्यापि स्यन्दतेरयं विकल्पो भवति–अनुष्यन्देते मत्स्योदके, अनुस्यन्देते।**

**'अप्राणिषु' इति पर्युदासोऽयम्, न प्रसज्यप्रतिषेधः।।**

## ३८६९. वेः स्कन्देरनिष्ठायाम् ।।७३।। (२३९८)

**न्यासः**

गृह्यन्ते, न तु गणसन्निविष्टाः। स्तुस्वञ्जोः 'प्राक्सितादड्व्यवाये' इति प्राप्ते, शेषाणामप्राप्ते विभाषेयमारभ्यते।।७१।।

**अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु**।। 'स्यन्दू स्रवणे'। अस्याषोपदेशत्वादप्राप्त एव षत्व इदं वचनम्। **अनुस्यन्दते मत्स्य उदक इति**। अथ कथमिदं प्रत्युदाहरणमुपपद्यते? यद्यप्राणिष्विति प्रसज्यप्रतिषेध आश्रीयते, प्राणिषु न भवतीति। प्रसज्यप्रतिषेधे हि यत्र प्राणिगन्धोऽस्ति तत्र मूर्धन्येन न भविष्यव्यम्। इह चास्ति मत्स्यः प्राणीति षत्वं न प्रवर्त्तते। यदि तु पर्युदास आश्रीयते, प्राणिभ्योऽन्यत्र भवतीति तदा प्राण्यप्राणिसमुदायः प्राणिभ्योऽन्यो भवतीति स्यादेवात्र प्राण्यप्राणिसमुदायात्मके विषये मूर्धन्यः।।७२।।

**वेः स्कन्देरनिष्ठायाम्**।। 'स्कन्दिर् गतिशोषणयोः'। अषोपदेशः अतस्तस्याप्राप्त एव मूर्धन्ये वचनम्।

**पदमञ्जरी**

स्तुस्वञ्ज्योः 'प्राक् सिताद्' इति प्राप्ते, इतरेषामप्राप्ते।।७१।।

**अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु**।। 'स्यन्दू प्रस्रवणे' अनुदात्तेत्।

**अनुस्यन्देते मत्स्योदके इति**। मत्स्यश्चोदकं च मत्स्योदके। 'जातिरप्राणिनाम्' इत्यनेन यत्र सर्वाण्यवयव-पदान्यप्राणिवाचीनि, तत्रैकवद्भावः; इह तु मत्स्यशब्दस्य प्राणिवाचित्वादेकवद्भावाभावः। अत्राप्राणिष्विति.

**भावबोधिनी**

षत्व के ] उदाहरण दिये जा चुके हैं। [ पर्यषीव्यत्, पर्यसीव्यत्, पर्यषहत, पर्यसहत आदि। ]।।७१।।

अनु॰ वि, परि, अभि, नि—इनसे उत्तरवर्त्ती स्यन्द धातु के सकार का मूर्धन्य आदेश विकल्प से प्राणिभिन्न अर्थों में होता है। उदा॰ अनुष्यन्दते, विष्यन्दते, परिष्यन्दते, अभिष्यन्दते तैलम्, निष्यन्दते। [ यहाँ तैल को कर्ता माना गया है। अतः अप्राणी होने से षत्व का विकल्प होता है। ] पक्ष में अनुस्यन्दते, विस्यन्दते, परिस्यन्दते, अभिस्यन्दते, निस्यन्दते।

अप्राणी = प्राणिभिन्न अर्थों में—इसका क्या फल है? अनुस्यन्दते मत्स्य उदके। [ यहाँ मत्स्य प्राणी होने से षत्व नहीं होता है। प्राणी और अप्राणी यदि दोनों विषय हों तो भी स्यन्द का यह षत्व विकल्प होता है—अनुस्यन्देते मत्स्योदके, अनुष्यन्देते। ]

'अप्राणिषु' यह पर्युदास है, प्रसज्यप्रतिषेध नहीं है। [ नञ् का पर्युदास होने पर तद्भिन्न तत्सदृश का ग्रहण होता है। प्रसज्यप्रतिषेध में क्रिया के साथ नञर्थ का अन्वय होता है। अतः प्राणिभिन्न-प्राणिसदृश-मत्स्य को लिया गया है। ]।।७२।।

'वि' उपसर्ग से उत्तरवर्ती 'स्कन्द' धातु के सकार का मूर्धन्य आदेश विकल्प से निष्ठाभिन्न प्रत्यय में होता है। उदा॰ विष्कन्ता, विस्कन्ता। विष्कन्तुम्, विस्कन्तुम्। विष्कन्तव्यम्, विस्कन्तव्यम्। [ यहाँ वि उपसर्ग से परे 'स्कन्द' धातु से तृच्, तुमुन्

१. क्वचित् पुस्तके पूर्वसूत्रोदाहृतान्यड्घटितानि रूपाण्यत्रैवोदाहृतानि।

**वेरुपसर्गादुत्तरस्य स्कन्देः सकारस्य मूर्धन्यो वा भवति अनिष्ठायाम्। विष्कन्ता, विस्कन्ता। विष्कन्तुम्, विस्कन्तुम्। विष्कन्तव्यम्, विस्कन्तव्यम्।**

**अनिष्ठायामिति किम्? विस्कन्नः।।**

## ३८७०. परेश्च।।७४।। (२३९८)

**परिशब्दाच्चोत्तरस्य स्कन्देः सकारस्य वा मूर्धन्यो भवति। परिष्कन्ता, परिष्कन्तुम्, परिष्कन्तव्यम्। परिस्कन्ता, परिस्कन्तुम्, परिस्कन्तव्यम्। पृथग्योगकरणसामर्थ्यात् 'अनिष्ठायाम्' इत्येतन्नानुवर्तते- परिष्कण्णः, परिस्कन्नः।।**

## ३८७१. परिस्कन्दः प्राच्यभरतेषु।।७५।। (३०२६)

**'परिस्कन्द' इति मूर्धन्याभावो निपात्यते प्राच्यभरतेषु प्रयोगविषयेषु। पूर्वेण मूर्धन्ये प्राप्ते तदभावो**

**न्यासः**

**विस्कन्न इति**। 'अनिदिताम्' इत्यनुनासिकलोपः, 'रदाभ्याम्' इत्यादिना नत्वम्।।७३।।

**परेश्च**।। **पृथग् योगकरणसामर्थ्यादित्यादि**। यदि परेरप्युत्तरस्य स्कन्देर्निष्ठायां मूर्धन्यो नाभिमतः स्यात्, ततः 'विपराभ्यां स्कन्देरनिष्ठायाम्' इत्येकयोगमेव कुर्यादित्यभिप्रायः।

चकारः स्कन्देरनुकर्षणार्थः।।७४।।

**परिस्कन्दः प्राच्यभरतेषु**।। पूर्वेण षत्वविकल्पे प्राप्ते तदभावो विधीयते! **परिष्कन्द इति**। पचाद्यच्। 'बह्वच इञः प्राच्यभरतेषु' इत्यत्र प्राचांग्रहणेन भरतानां ग्रहणं न भवतीति ज्ञापितमेतत्। अतः प्राच्यत्वेऽपि भरतानां पृथग्ग्रहणम्।।७५।।

**पदमञ्जरी**

प्रसज्यप्रतिषेधः, तेन प्राण्यप्राणिसमुदायेऽपि प्राण्यस्तीति प्रतिषेधो भवति। अन्ये तु—पर्युदासं मन्यमाना भवितव्यमेवात्र षत्वेनेत्याहुः।

इह पर्यादिग्रहणं शक्यमकर्तुम्, एवं वक्ष्यामि—अन्वभिभ्यां च' इति, चकारात् परिनिविभ्यश्चेति।।७२।।७३।।

**भावबोधिनी**

और तव्यत् प्रत्यय परे रहते द् का चर्त्व और वैकल्पिक त्‌लोप होने से एक तकार और दो तकारों वाले दो-दो रूप होते हैं।]

निष्ठा न हो—इसका क्या फल है—विष्कन्नः। [ विस्कन्द् + क्त, यहाँ षत्व नहीं होता है। 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' सूत्र से दकार और तकार के स्थानों पर दो नकार आदेश हो जाते हैं। ]।।७३।।

'परि' उपसर्ग से उत्तरवर्ती 'स्कन्द' के सकार का मूर्धन्य आदेश विकल्प से होताहै। उदा॰ परिष्कन्ता, परिष्कन्तुम्, परिष्कन्तव्यम्। पक्ष में—परिस्कन्ता, परिस्कन्तुम्, परिस्कन्तव्यम्।

यह सूत्र अलग बनाने के सामर्थ्य के कारण 'अनिष्ठायाम्' इसकी अनुवृत्ति नहीं होती है—परिष्कण्णः, परिस्कन्नः। [ परि + स्कन्द, + क्त, षत्व, द् + त् = न्न, होने पर रूप बनता है। विकल्प से षत्व होता है। यदि इसमें भी अनिष्ठा का सम्बन्ध अभीष्ट होता तो 'विपरिभ्यां स्कन्देरनिष्ठायाम्' यह एक ही सूत्र बनाया जाता। पृथक् सूत्र के कारण परिपूर्वक स्कन्द से निष्ठा में भी षत्वविकल्प होता है। ]।।७४।।

'परिस्कन्द' यहाँ मूर्धन्य का अभाव निपातित होता है प्राच्य भरत देश यदि प्रयोगविषय हों तो। पूर्व सूत्र से मूर्धन्य के प्राप्त रहते यह अभाव निपातित किया जाता है। उदा॰ परिस्कन्दः। [ यहाँ प्राच्य भरत अर्थ है। ] इससे भिन्न अर्थ में—परिष्कन्दः। यह

**निपात्यते। परिस्कन्दः। अन्यत्र परिष्कन्दः। अचि निपातनम्। अथ वा–निष्ठातकारस्यः लोपः।**

**भरतग्रहणं प्राच्यविशेषणम्।।**

## ३८७२. स्फुरतिस्फुलत्योर्निर्निविभ्यः।।७६।। (२५३७)

**स्फुरितस्फूलत्योः सकारस्य निस्, नि, वि–इत्येतेभ्य उत्तरस्य वा मूर्धन्यादेशो भवति। स्फुरति–निष्फुरित, निस्स्फुरित। निष्फुरति, निस्फुरति। विष्फुरति, विष्फुरति। स्फुलति–निष्फुलति, निस्स्फुलति। निष्फुलति, निस्फुलति। विष्फुलति, विस्फुलति।।**

## ३८७३. वेः स्कभ्नातेर्नित्यम्।।७७।। (२२४७)

**वेरुत्तरस्य स्कभ्नातेः सकारस्य नित्यं मूर्धन्यादेशो भवति। विष्कभ्नाति। विष्कम्भिता। विष्कम्भितुम्। विष्कम्भितव्यम्।।**

### न्यासः

**स्फुरतिस्फुलत्योर्निर्निविभ्यः**।। 'स्फुर, स्फुल सञ्चलने' इति तौदादिकौ। एतयोरपि पूर्ववदप्राप्त एव मूर्धन्यो विधीयते। श्तिपा निर्देशो धातुनिर्देशार्थ एव, न यङ्लुग्निवृत्त्यर्थः। न हि यङ्लुक्यभ्यासस्य खयः शेषे कृते निरादिभ्य उत्तरः सकारः सम्भवति।।७६।।

**वेः स्कभ्नातेर्नित्यम्। विष्कम्भितेति**। 'स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च' इति सूत्रे पाठात् सौत्रोऽयं धातुरषोपदेशः। तत्सकारस्याप्राप्त एव मूर्धन्यो विधीयते वेरुत्तरस्य।

नित्यग्रहणं विकल्पनिवृत्त्यर्थम्। श्तिपानिर्देशस्य पूर्ववदेव प्रयोजनम्।।७७।।

### पदमञ्जरी

**परेश्च**।। **पृथग्योगकरणसामर्थ्यादिति**। अन्यथा 'विपरिभ्यां स्कन्देरनिष्ठायाम्' इत्येव ब्रूयात्।।७४।।७५।।७६।।

**वेः स्कभ्नातेर्नित्यम्**।। स्कम्भिः सौत्रो धातुः।।७७।।

### भावबोधिनी

अच् प्रत्यय में निपातित होता है। अथवा निष्ठा के त् का लोप होकर केवल 'अ' बचता है।

भरत का ग्रहण प्राच्य रूप विशेषण वाला है। [ प्राच्य ही भरत हो, प्रतीच्य आदि नहीं, तभी निपातन होता है। ]।।७५।।

निस्, नि और वि इनसे उत्तरवर्ती 'स्फुरति' और 'स्फुलति' के सकार का विकल्प से मूर्धन्य आदेश होता है। उदा॰ स्फुरति—निष्फुरति पक्ष में—निस्स्फुरति। [ यहाँ निस् + स्फुरति में स्फुरति के स् का ष् होने पर ष्टुत्व से निस् का निष् हो जाता है। निष्फुरति, निस्फुरति। [ नि + स्फुरति- ] विष्फुरति, विस्फुरति। [ वि + स्फुरित ] स्फुलति के उदा॰ निष्फुलति, निस्स्फुलति। निष्फुलति, निस्फुलति। विष्फुलति, विस्फुलति। [ सूत्र में 'स्फुरति' 'स्फुलति' श्तिपप्रत्ययान्त का निर्देश धातु के स्वरूप का बोध कराने के लिये है, यङ्लुक् की निवृत्ति के लिये नहीं। क्योंकि यङ्लुक् अभ्यास के खय् = प् फ् केशेष बचने पर निर् आदि से उत्तर सकार मिलना संभव नहीं है। ]।।७६।।

'वि' से उत्तरवर्ती 'स्कभ्नाति' (स्कन्भ सौत्र धातु) के सकार का मूर्धन्य आदेश नित्य होता है। उदा॰ विष्कभ्नाति। विष्कम्भिता। [ वि + स्कम्भ + इट् + तृच् ] विष्कम्भितुम्। विष्कम्भितव्यम्। [ इसमें स् का नित्य मूर्धन्य होता है। 'विष्कभ्नाति' में णत्व की शंका नहीं करनी चाहिये क्योंकि 'षात् पदान्तात्' (८।४।३५) सूत्र से णत्व का निषेध हो जाता है। ]।।७७।।

## ३८७४. इणः षीध्वंलुङ्लिटां धोऽङ्गात्।।७८।। (२२४७)

**'मूर्धन्य' इति वर्तते। इणन्तादङ्गादुत्तरेषां षीध्वंलुङ्लिटां यो धकारस्तस्य मूर्धन्यादेशो भवति। च्योषीढ्वम्। प्लोषीढ्वम्। लुङ्–अच्योढ्वम्। अप्लोढ्वम्। लिट्–चकृढ्वे ववृढ्वे।**

**'इण्कोः' (८।३।५७) इति वर्तमाने पुनरिण्ग्रहणं कवर्गनिवृत्त्यर्थम्। पक्षीध्वम्। यक्षीध्वम्।**

**न्यासः**

**इणः षीध्वंलुङ्लिटां धोऽङ्गात्।। इणन्तादङ्गादुत्तरेषामित्या**दिनेणन्तमङ्गं षीध्वंलुङ्लिटां विशेषणम्। तेऽपि धकारस्येति दर्शयति। अथ धकारस्यैवेणन्तमङ्गं विशेषणं कस्मान्न विज्ञायते—इणन्तादुत्तरो यो धकार इति? एवं मन्यते—इणन्तस्याङ्गस्य धकारविशेषणत्वे सति च्योषीढ्वम्, प्लोषीढ्वमित्यत्र न स्यात्, षीशब्देन व्यवधानात्। अथापि 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' इत्येकेन षीशब्देन व्यवधानेऽपि स्यादेव। एवमपि वचनप्रामाण्यादर्थप्रतिपत्तौ मन्दधियः प्रतिपत्तिगौरवं स्यात्। षीध्वमादिषु विशेष्यमाणेषु नायं दोष इति तेषामेवाङ्गमिणन्तं विशेषणं युक्तम्। गुणत्वादयुक्तमिति चेत्? स्यादेतत्—धकारस्य कार्यित्वात् तैश्च विशेष्यमाणत्वात् प्राधान्यम्, तेषां तु विपर्ययाद् गुणभावः। तस्माद्धकारस्यैवेणन्तमङ्गं विशेषणं न्याय्यम्। एतच्च न; यत्र हि विशेषणेन सह सम्बन्धमनुभूय गुणः प्रधानस्य भूयांसमुपकारं कर्तुं समर्थो भवति, तत्र विशेषणेन च सह तावदप्रधानेन प्रथमं सम्बन्धमनुभवति, पश्चात् प्रधानेन सम्बन्धम्। तथा च—

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्त्तते ।।इति।

**पदमञ्जरी**

**इणः षीध्वंलुङ्लिटां धोऽङ्गात्।। इणन्तादङ्गादुत्तरेषामित्यादिना** इणन्तमङ्गं षीध्वमादीनां विशेषणम्, तेऽपि धकारस्येति दर्शयति। धकारस्य त्विणन्तमङ्गं विशेषणं न भवति—इणन्तादङ्गादुत्तरस्य धस्य स चेत् षीध्वमादीनामिति। तथा हि सति योषिढ्वमित्यादौ वचनसामर्थ्यात्षीशब्देन व्यवाय आश्रयणीयः स्यात्। **अच्योढ्वमिति**। 'धि च' इति सलोपः।

**इण्ग्रहणं कवर्गनिवृत्त्यर्थमिति**। प्रकृतं हीण्ग्रहणं कवर्गेण सम्बद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। **पक्षीध्वमिति**। 'चो कुः' इति कुत्वे कृते ढत्वप्रसङ्गः। **यक्षीध्वमिति**। व्रश्चादिना षत्वे कृते 'षढोः कः सि' इति कत्वम्।

**स्तुध्वे इति**। टेरेत्वम्। **अस्तुध्वमिति**। लङ्। **परिवेविषीध्वमिति**। 'विष्लृ व्याप्तौ' जुहोत्यादिः स्वरितेत्, 'णिजां त्रयाणां गुणः श्लौ' इत्यभ्यासस्य गुणः, 'लिङः सलोपोऽनन्त्यस्य' इति सीयुटः सकारलोपः। अत्र

**भावबोधिनी**

'मूर्धन्यः' इसकी अनुवृत्ति होतीहै। इणन्त अङ्ग से उत्तरवर्त्ती षीध्वम् (प्रत्यय), लुङ् और लिट् का जो धकार उसका मूर्धन्य आदेश होताहै। उदा॰ च्योषीढ्वम्। प्लोषीढ्वम्। [ च्युङ्, प्लुङ्—इन आत्मनेपदी धातुओं से आशीर्लिङ्, ध्वम्, सीयुट् = सीय् आगम, गुण-च्यो सीय् ध्वम्, स् का मूर्धन्य सामान्य सूत्र से प्रत्ययावयव मानकर करने के बाद य् लोप-च्योषीध्वम् प्लो षी ध्वम्—में प्रकृत सूत्र से ध् का ढ् होता है। ] लुङ्—अच्योढ्वम्, अप्लोढ्वम्। लिट्—चकृढ्वे, ववृढ्वे। [ इनमें इणन्त अंग से परे षीध्वम् के ध् का तथा लङ् और लिट् के ध् का ढ् होता है। ]

'इण्कोः' इसकी अनुवृत्ति रहने पर भी पुनः (सूत्र में) 'इण्' का ग्रहण कवर्ग की निवृत्ति के लिये है अर्थात् यह ढत्व केवल इण् से परे ही होता है कवर्ग से परे नहीं। अतः—पक्षीध्वम्। यक्षीध्वम् [ पच् तथा यज् आत्मनेपद आशीर्लिङ्, ध्वम् में ढत्व नहीं होता है। पूर्व सूत्र में 'इण्कोः' यह कवर्गसहित इण् है। अनुवृत्ति मानने पर दोनों की अनुवृत्ति होने पर उक्त प्रयोगों में भी ढत्व प्रसक्त होता है। ]

**षीध्वंलुङ्लिटामिति किम्? स्तुध्वे। अस्तुध्वम्। अङ्गादिति किम्? परिवेविषीध्वम्। अर्थवद्ग्रहणादपि सिद्धम्? तत्तु नाश्रितम्।।**

### न्यासः

इह चेणन्तेनाङ्गेन षीध्वमादयो विशेषिता धकारस्य विशिष्टमुपकारं प्रतिपत्तिगौरवदोषरहितं कार्यविशेषं प्रतिपादयन्ति। तस्मादिण्विशिष्टेनाङ्गेन षीध्वमादय एव विशेष्यन्ते, तैश्च धकार इत्येतदेव युक्तं भवति। **च्योषीढ्वम्, प्लोषीढ्वमिति**। च्युङ्-प्लुङ्भ्यामाशिषि लिङ्, सीयुट्, ध्वम्, 'एकाच:' इत्यादिनेट्प्रतिषेध:, गुण:। **अच्योढ्वम्, अप्लोढ्वमिति**। 'धि च' इति सकारलोप:। **चकृढ्वे, ववृढ्व** इति। कृञो वृञो लिट्। 'कृसृभृवृ' इत्यादिनेट्प्रतिषेध:' द्विर्वचनमभ्यासकार्यम्।

ननु चानुवर्त्तत एवेह 'इण्को:' इति पूर्वकमिण्ग्रहणम्, कथं पुनरिण्ग्रहणं क्रियते? इत्याह— **इणग्रहणमित्यादि**। तद्धि पूर्वकमिण्ग्रहणं कवर्गेण सह सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुत्ति: स्यात्। तस्मात् तन्निवृत्त्यर्थं पुनरिण्ग्रहणमिह क्रियते। **पक्षीध्वम्, यक्षीध्वमिति**। पचियजिभ्यामाशिषि लिङ्, 'चो: कु:' इति कुत्वम्, तस्मिन् कृते कवर्गस्येह निवृत्तत्वान् मूर्धन्यो न भवति। **स्तुध्वमिति**। स्तौतेर्लोट्, अदादित्वाच्छपो लुक्। **अस्तुध्वमिति**। लङ्। **परिवेविषीध्वमिति**। 'विष्लृ व्याप्तौ', विध्यादिलिङ्, सीयुट्, शप्; तस्य 'जुहोत्यादिभ्य:' इति श्लु: 'श्लौ' इति द्विर्वचनम्, 'णिजां त्रयाणाम्' इत्यभ्यासस्य गुण:' लिङ सलोपोऽनन्त्यस्येति सकारस्य लोप:, 'लोपो व्योर्वलि' इति यकारलोप:। अत्र धातुषकारस्य ईध्वंशब्दस्य च य: समुदायस्तदात्मक: षीध्वंशब्दोऽस्ति, न त्वसाविणन्तादङ्गादुत्तर:। तथा हि—वेविषित्यस्याङ्गसंज्ञा, न तु वेवीत्येतावन्मात्रस्य षकारात्पूर्वभागस्य।

**अर्थवद्ग्रहणादप्येतत् सिद्धमिति**। चोदकस्यैतद् वचनम्। गृह्यतेऽनेनेति ग्रहणम्, अर्थवतो ग्रहणमर्थवद्ग्रहण्। तत् पुन: 'अर्थवद्ग्रहणे नानर्थकस्य' इति परिभाषा सूत्रम्। ततोऽपि परिवेविषीध्वमित्येतत् सिद्धम्। अर्थवद्ग्रहणपरिभाषयार्थवत एव षीध्वंशब्दस्य ग्रहणे सत्यस्यैव ढत्वेन भवितव्यम्। न चेह षीध्वंशब्दोऽर्थवान्, किं तर्हि? तदवयव ईध्वंशब्द:, तत् किमेतन्निवृत्त्यर्थेनाङ्गग्रहणेनेत्यभिप्राय:। अत्रोत्तरमाह— **एतत्तु नाश्रितमिति**। एतदिति 'अर्थवद्ग्रहणे नानर्थकस्य' इति परिभाषावचनम्।

अथ वा-गृहीति: = ग्रहणम्-अर्थवतो ग्रहणमिति षष्ठीमिति षष्ठीसमास:। अतोऽप्येतत् **सिद्धमितीह** पूर्वक

### पदमञ्जरी

धातुषकारस्य, ईध्वंशब्दस्य च य: समुदायस्तदात्मक: षीध्वंशब्दोऽस्ति, न त्वसावङ्गादुत्तर:। षकारान्तं ह्यत्राङ्गम्, न तु वेवीत्येतावत्।

### भावबोधिनी

षीध्वं-लुङ्-लिटाम्-इसके ग्रहण का क्या फल है? स्तुध्वम्। [ यहाँ ध्वम् तो हो किन्तु षीध्वम् आदि तीनों में से किसी का न होने से ढत्व नहीं होता है। ] (इणन्त) अङ्ग से परे—इसका क्या फल है? परिवेविषीध्वम् [ 'विष्लृ व्याप्तौ' इस जुहोत्यादिगणीय का विधिलिङ् का रूप है यहाँ द्वित्वादि करने के बाद 'वेविष् + सीय् + ध्वम्' 'लिङ: सलोपोऽनन्त्यस्य' से स् लोप—परिवेविष् इसकी अङ्ग संज्ञा होती है, और यह षकारान्त है न कि इणन्त। अत: ढत्व नहीं होता है। ]

## ३८७५. विभाषेटः।।७९।।

**इणः परस्मादिट उत्तरेषां षीध्वंलुङ्लिटां यो धकारस्तस्य मूर्धन्यादेशो भवति विभाषा। लविषीढ्वम् लविषीध्वम्। पविषीढ्वम्, पविषीध्वम्। लुङ्–अलविढ्वम्, अलविध्वम्। लिट्–लुलुविढ्वे, लुलुविध्वे।**

**इण इत्येव–आसिषीध्वम्।**

**न्यासः**

एवाभिप्रायः। **एतत् तु नाश्रितमित्युत्तरम्।** एतदर्थवतो ग्रहणमिति नाश्रितम्; अर्थवद्ग्रहणपरिभाषाया अनाश्रयणात्। तदनाश्रयणं तु प्रतिपत्तिगौरवदोषपरिहाराय। सूत्रानुपात्तवचनाश्रयेण अभीष्टमर्थं प्रतिपद्यमानस्य मन्दधियः प्रतिपत्तिगौरवं स्यात्। इह त्वङ्गग्रहणे क्रियमाणे सुखत एवाभिमतोऽर्थः प्रतीयते। लिङ्ग्रहण एव कर्तव्ये षीध्वंग्रहणमस्य रूपस्य यो धकारस्तस्य यथा स्यात्। तेनायीध्वम्, स्तुवीध्वमित्यत्र न भवति।।७८।।

**विभाषेटः।।** क्वचित् पूर्वेण नित्ये प्राप्ते, क्वचिदप्राप्ते एव विकल्पार्थं वचनम्। एतच्चोदाहणे व्यक्तीकरिष्यामः। अत्रेण्ग्रहणमिटो विशेषणम्, सोऽपि षीध्वमादीनाम्, तेऽपि धकारस्येति दर्शयन्नाह—**इणः परस्मादित्यादि।** ननु षीध्वमो लिटश्चेडपेक्षं परत्वं न सम्भवति; तस्य तद्ग्रहणेन ग्रहणात्? यद्यपि शास्त्रकृतं न सम्भवति, तथापि श्रुतिकृतं तु सम्भवत्येवेत्यदोषः। **लविषीध्वम्, लविषीढ्वमिति।** अत्र षीध्वंशब्दस्येटि कृते

**पदमञ्जरी**

चोदयति—**अर्थवद्ग्रहणादपीति।** परिहरति—**एतत्त्विति।** एतदर्थवतो ग्रहणमत्र नाश्रितम्। किं कारणम्? न किञ्चित्, नाश्रितमित्येव।।७८।।

**विभाषेटः।।** अत्रेण्ग्रहणमिटो विशेषणम्, सोऽपि षीध्वमादीनाम्, तेऽपि धकारस्येति दर्शयन्नाह—**इणः परस्मादिट इत्यादि।** तत्र षीध्वमो लिटश्च श्रुतिकृतमानन्तर्यम्, शास्त्रकृतं न सम्भवति, इटस्तद्भक्तत्वात्तद्ग्रहणेन ग्रहणात्। अत एवानयोः प्राप्तविभाषेयम्।

तथैव लुङ्यप्यलविढ्वमादौ धि चेति लुप्ते सति सिच्सकारे।
इणन्तङ्गं ध्वमि जातमातः पूर्वस्य नित्यस्य विधेः प्रसङ्गः।।१।।
एवं च धातावनिणन्त इष्टमैधिढ्वमित्यादिषु नित्यढत्वम्।
यदि त्विणन्ताद्विहितस्य ढत्वं तथा न ते ढत्वमधिढ्वमि स्यात्।।२।।

**भावबोधिनी**

उपर्युक्त लक्ष्य में ढत्व का वारण तो 'अर्थवद्ग्रहण' परिभाषा से भी हो जाता है? किन्तु उसका आश्रयण नहीं किया गया है। [ 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्' परिभाषा है। 'षीध्वम्' यह अर्थवान् है किन्तु—'परिवेविष् ईध्वम्' में षीध्वम् अर्थवान् नहीं है अपि तु 'ईध्वम्' ही अर्थवान् है अतः 'षीध्वम्' अर्थवान् के ग्रहण में 'ष् ई ध्वम्' इस अनर्थक अंश का ग्रहण नहीं होगा। अतः 'षीध्वम्' इसका ग्रहण न रहने पर भी कोई दोष नहीं आता है। परन्तु इस परिभाषा का आश्रयण यहाँ पर नहीं किया गया है। ]।।७८।।

इण् से परवर्ती इट् से उत्तरवर्ती षीध्वं, लुङ् और लिट् का जो धकार उसका मूर्धन्य आदेश विकल्प से होता है। उदा० लविषीढ्वम् लविषीध्वम्। [ लू + सीय् ध्वम् इट्, षत्व, लू इ षीय् ध्वम्, य् लोप। यहाँ इणन्त अङ्ग 'लू' से परे इट् के बाद में 'ऊ' का गुण और अव् होता है। यहाँ लव् इ षीध्व में बीच में इट् का व्यवधान हो जाने से इणन्त अङ्ग सेपरे षीध्वं नहीं है। अतः पूर्व सूत्र से अप्राप्त ढत्व का विकल्प से विधान किया गया है। ] पविषीढ्वम् पविषीध्वम्। [ पूञ् का रूप है। ] लुङ्—अलविढ्वम्, अलविध्वम्। [ लू + लुङ्, अट्, ध्वम्, सिच् = स्, इट्—अ लू इ स् ध्वम्, 'धि च' से स् लोप करने पर ध् का ढ् ऊ का गुण, अव् आदेश। ] लिट्—लुलुविढ्वे, लुलुविध्वे।

इणन्त से परे ही होता है—आसिषीध्वम् [ आस् + आशीर्लिङ्, यह इणन्त अङ्ग नहीं है। ]

**अथेह कथं भवितव्यम्–उपदिदीयिध्वे? केचिदाहुः–इणन्तादङ्गादुत्तरस्य इट आनन्तर्यं युटा व्यवहितमिति न भवितव्यं ढत्वेनेति। अपरेषां दर्शनम्–'' 'अङ्गात्' (८।३।७८) इति निवृत्तम्, 'इणः'**

**न्यासः**

तस्य तद्ग्रहणेन ग्रहणाद्व्यवधानं नास्तीति पूर्वेण नित्यं प्राप्नोति। **अलविध्वमिति**। अत्रपि सिच एवेडागमः क्रियते, न लुङ इति तस्य तद्ग्रहणेनाग्रहणात् पूर्वेण न प्राप्नोति। **लुलुविढ्व** इति। अत्रापि लिट एवेडागम इति तस्य तद्ग्रहणेन ग्रहणादसति व्यवधाने पूर्वेण नित्यं प्राप्नोति।

**आसिषीध्वमिति**। 'आस उपवेसने', लिङ्, सीयुट्, धातुसकारस्येणोऽसन्निवेशादिणः परोऽत्रेडागमो न भवति।

**अथेह कथं भवितव्यमिति**। किमत्रानेन विकल्पेन भवितव्यम्? उत नित्येन भवितव्यमित्यभिप्रायः। 'दीङ् क्षये', लिट्, क्रादिनियमादिट्, 'दीङो युडचि क्ङिति' इति युट्, टेरेत्त्वम्। उपदिदीयिध्व इति स्थिते **केचिदाहुर्न भवितव्यमेवात्र ढत्वविकल्पेन;** इणन्तादङ्गादिटो यदानन्तर्यं तस्य युटा व्यवहितत्वात्। समुदायभक्तो ह्यसौ युट् समुदायमेव न व्यवद्धाति, अवयवं तु व्यवदधात्येव। अथ पूर्वेण नित्यं कस्मान्न भवति? अत्रेणन्तादङ्गादुत्तरो लिट्, तत्सम्बन्धी च धकार इति भवितव्यम्। तथा च वृत्तिकृता सूत्रार्थो दर्शितः। अथ तु नेष्यते, ततो विभाषाग्रहणं पूर्वेणासम्बन्धनीयम्। सा च व्यवस्थितविभाषा, तेनेह न भवति। एवमन्यत्र तु नित्यमेव भविष्यति।

**पदमञ्जरी**

*तथा*—लिहिदोग्धिनहां ढत्वघत्वधत्वेषु सत्स्वपि।
इणन्ताद्विहितः षीध्वमिति ढत्वं प्रसज्यते।।३।।

तथेणो लुङि गादेशे विहिते ध्वमि कर्मणि।
अगाध्वं यूयमेतेनेत्यत्र ढत्वं प्रसज्यते।।४।।

एवं 'ब्रूवो वचिः' वक्षीध्वमिति।

इष्यते सर्वमेवैतदिति चेन्नाप्तवागिह।
तस्मात्प्राप्तविभाषैव सर्वत्रेयमिति स्थितम्।।५।।

तथा च तैत्तिरीयके 'तान् रुद्रा अब्रुवन्प्रयूयमजनिढ्वम्' इति ढत्वं प्रयुक्तम्। **लविषीढ्वम्, लविषीध्वमिति**। अन्ये त्विटो विभाषाया वक्ष्यमाणत्वाद् गोवलीवर्दन्यायेन तद्व्यतिरिक्तमिणन्तमङ्गमिह गृह्यत इति वदन्त एधिध्वमित्यादौ ढत्वं नेच्छन्ति, तेषामप्यधिढ्वमित्यत्र भवत्येव, नत्सीध्वमित्यादौ च न भवति।

**आसिषीध्वमिति**। 'आस उपवेशने'। **कथं भवितव्यमिति**। किमत्रानेन विकल्पेन भवितव्यम्, उत नेति प्रश्नार्थः। **उपदिदीयध्व इति**। 'दीङ् क्षये', लिट्, ध्वमि क्रादिनियमादिट्, 'दीङो युडचि क्ङिति' इति युट्। **युटा**

**भावबोधिनी**

अच्छा तो यहां कैसा होगा— उपदिदीयिध्वे। [ भाव यह है कि 'दीङ् क्षये' से लिट् मध्यमपुरुष बहुवचन में दी + ध्वम्, क्रादिनियम मानकर इट्, 'दीङो युडचि क्ङिति' सूत्र से युट् आगम, द्वित्वादि कार्य टि = अम् का एत्व। अब प्रश्न उठता है कि यहाँ ढत्व होना चाहिये अथवा नहीं? ] कुछ आचार्य यह कहते हैं कि—इणन्त अङ्ग से उत्तरवर्ती इट् का आनन्तर्य = अव्यवधान युट् के द्वारा व्यवहित हो जाता है अतः ढत्व नहीं होना चाहिये। ] [ इणन्त अङ्ग—दि दी के बाद युट् = य्, इसके बाद इट् है।

**इत्यनुवर्त्तते, ततश्च यकारादेव इणः परोऽनन्तर इडिति पक्षे भवितव्यं मूर्धन्येन'' इति।।**

## ३८७६. समासेऽङ्गुलेः सङ्गः ।।८०।। (१०१९)

**सङ्गसकारस्याङ्गुलेरुत्तरस्य मूर्धन्य आदेशो भवति समासे। अङ्गुलेः सङ्गः–अङ्गुलिषङ्गः। अङ्गुलिषङ्गा यवागुः। अङ्गुलिषङ्गो गाः सादयति।**

**समास इति किम्? अङ्गुलेः सङ्गं पश्य।।**

## ३८७७. भीरोः स्थानम्।।८१।। (१०२०)

### न्यासः

**अपरेषामित्यादि**। यदाङ्गग्रहणमिह निवृत्तम्, इण इत्येतदेवानुवर्त्तते, तदेणैव केवलेनेडागमो विशेष्यते—**इणः परो य इडिति**। एवञ्चात्र भवितव्यमेव पाक्षिकेण ढत्वेन। भवति ह्यत्र यकारादिण उत्तरोऽनन्तरश्चेडागमः।।७९।।

**समासेऽङ्गुलेः सङ्गः**।। सङ्ग इति षष्ठ्याः स्थाने सुब्व्यत्ययेन प्रथमा। एवमुत्तरत्रापि वेदितव्यम्। 'सात्पदाद्योः' इति प्रतिषेधे प्राप्तेऽस्यारम्भः। एवमुत्तरस्यापि। सञ्जनं सङ्ग इति भावे घञ्, अङ्गुलीषु सङ्गः = संश्लेषोऽस्यां अस्तीति बहुव्रीहिः।।८०।।

**भीरोः स्थानम्**।। **भीरुष्ठानमिति**। अधिकरणसाधनेन स्थानशब्देन षष्ठीसमासः।

### पदमञ्जरी

**व्यवहितमिति**। समुदायभक्ते हि युट् तमेव न व्यवदध्यात्, इटं तु व्यवदधात्येव। **न भवितव्यं ढत्वेनेति**। अनेन विकल्पनेति भावः। पूर्वेण तु नित्यं प्राप्नोत्येव। **अपरेषामिति**। अस्मिन्पक्षे विकल्प एव भवति।।७९।।

**समासेऽङ्गुलेः सङ्गः**।। सङ्ग इति षष्ठ्याः स्थाने प्रथमा। एवमुत्तरेष्वपि योगेषु। सञ्जनं सङ्गः, भावे घञ्, अङ्गुलीषु सङ्गो यस्याः साऽङ्गुलिषङ्गा।

**अङ्गुलेः सङ्ग इति**। अत्र 'शर्व्यवाये' इत्यधिकारात्रसङ्गः। अन्ये तु 'अङ्गुले सङ्गः' इति सम्बुध्यन्तमुदाहरन्ति।।८०।।

**भीरोः स्थानम्**।। **भीरोः स्थानमिति**। पूर्ववत्सम्बुद्ध्यन्तम्, षष्ठ्यन्तं वा।

### भावबोधिनी

यह युट् समुदाय का अवयव है अतः इसका अव्यवधान करेगा, अवयव इट् का तो व्यवधान ही करेगा। अतः प्रस्तुत सूत्र से ढत्व नहीं होना चाहिये। ] दूसरे आचार्यों का दर्शन = विचार यह है—'यहाँ 'अङ्गात्' इसकी निवृत्ति हो चुकी है, 'इणः' इसी की अनुवृत्ति होती है। अब यकार रूप इण् से परे अव्यवहित इट् रहता ही है, अतः पक्ष में मूर्धन्य ढत्व होना ही चाहिये। [ भाव यह कि इस सूत्र में 'अङ्गात्' की अनुवृत्ति नहीं है केवल 'इणः' की है। इण् प्रत्याहार में य् भी है। अतः युट् आगम होने पर भी इणन्त से परे इट् है, अतः इससे परवर्ती ध् का मूर्धन्य ढत्वविकल्प से होने में कोई बाधा नहीं है। काशिकाकार द्वितीयमत मानते हैं। ]।।७९।।

अङ्गुलि शब्द से उत्तरवर्ती 'सङ्ग' के सकार का मूर्धन्य आदेश समास में होता है। उदा॰ अङ्गुलेः सङ्गः—अङ्गुलिषङ्गः। अङ्गुलिषङ्गा यवागूः। [ अङ्गुलिषु सङ्गः = श्लेषः यस्याः सा तादृशी यवागूः, अगुलियाँ लग जाने वाली लपसी ] अङ्गुलिषङ्गः गा आसादयति। [ यहाँ भी अङ्गुलिषु सङ्गः = संश्लेषः यस्य सः यह बहुब्रीहि है। ]

समास में ही—इसका क्या फल है? अङ्गुलेः सङ्गं पश्य। [ यहाँ व्यास में मूर्धन्य नहीं होता है। ]।।८०।।-

'भीरु' से उत्तरवर्ती 'स्थान' के सकार का मूर्धन्य आदेश होता है। उदा॰ भीरुष्ठानम्। [ भीरोः स्थानम्—इसके समास में—भीरुस्थानम्—में षत्व और ष्टुत्व से भीरुष्ठानम् बन जाता है। ]

**स्थानसकारस्य भीरोरुत्तरस्य मूर्धन्यादेशो भवति। भीरुष्ठानम्।**

**समास इत्येव–भीरोः स्थानं पश्य।।**

## ३८७८. अग्नेः स्तुत्स्तोमसोमाः।।८२।। (१२४)

**अग्नेरुत्तरस्य स्तुत्, स्तोम, सोम–इत्येतेषां सकारस्य मूर्धन्यादेशो भवति समासे। अग्निष्टुत्। अग्निष्टोमः। अग्नीषोमः।**

**❁ अग्नेर्दीर्घात्सोमस्येष्यते। ❁ तेनेह न भवति–अग्निसोमौ माणवकौ। तथा च ज्योतिः–अग्निः, सोमः–लताविशेषः–अग्निसोमौ तिष्ठतः।**

### न्यासः

पृथग्योकरणं यथासंख्यभावनिवृत्त्यर्थम्। एकयोगे हि निमित्तनिर्मित्तिनोः साम्येऽपि सत्यस्वरितत्वाद् यथासंख्यभावः स्यात्। अथ तदर्थं स्वरितत्वं प्रतिज्ञायेत? ततो योगविभागकरणं वैचित्र्यार्थम्।।८१।।

**अग्नेः स्तुत्स्तोमसोमाः**।। पदादिसकारत्वात् विप्रतिषेधे प्राप्तेऽयमारभ्यते। एवमुत्तरत्रापि। स्तोम-सोमशब्दौ स्तौतिसुनोतिभ्याम् 'अर्तिस्तु-सु-हु-सृ-धुक्षिभायावापदियक्षिनिभ्यो मन्' इति मन्प्रत्ययं विधाय व्युत्पाद्येते। अव्युत्पत्तिपक्षे त्वादित एवाप्राप्तेऽनयोः षत्वं विधीयते। **अग्निष्टुदिति**। अग्नावुपपदे स्तौतेः क्विप्, 'ह्रस्वस्य' इत्यादिना तुक्, उपपदसमासः। **अग्निष्टोम इति**। षष्ठीसमासः। **अग्निषोमाविति**। द्वन्द्वः, 'ईदग्नेः सोमवरुणयोः'

### पदमञ्जरी

'समासेऽङ्गुलिभीरुभ्यां सङ्गस्थाने' इत्युच्यमाने भ्यामित्यधिकं प्राप्नोति, तस्माद्योगविभागः।।८१।।

**अग्नेः स्तुत्स्तोमसोमाः**।। **अग्निष्टुदिति**। सम्पदादित्वादधिकरणे क्विप्, यत्राग्निः स्तूयते सोऽग्निष्टुत्—क्रतुविशेषः, तत्रेदं भवति—अपि वा सर्वेषु देवताशब्देष्वग्निमेवाभिसन्नमेदिति। **अग्निष्टोम इति**। सोमयागस्य सप्तसंस्थाः; तत्राद्या संस्थोच्यते।

**अग्नेदीर्घादिति**। देवताद्वन्द्वे षत्वमित्यर्थः; तत्रैव दीर्घस्य विधानात्।

**अग्निसोमौ माणवकाविति**। अत्र माणवके संज्ञात्वेन विनियुक्तावग्निसोमशब्दाविति दीर्घाभावात्षत्वाभावः। ज्योतिर्लतयोरपि देवतात्वाभावाद्दीर्घाभावात् षत्वाभावः। **अग्निसोमौ तिष्ठत इति**। **आश्वलायनस्तु** तत्रापि दीर्घषत्वे प्रायुङ्क्त—अग्नीषोमौ प्रणेष्यामीति।।८२।।

### भावबोधिनी

समास में ही होता है—भीरोः स्थानं पश्य। [ इस व्यास में मूर्धन्य नहीं होता है। ]।।८१।।

अग्नि शब्द से उत्तरवर्ती—स्तुत्, स्तोम, सोम इनके सकार का मूर्धन्य समास में होता है। उदा० अग्निष्टुत्, अग्निष्टोमः, अग्नीषोमः। [ अग्निं स्तौति—इस अर्थ में क्विप् प्रत्यय, सर्वापहारी लोप, तुक्, उपपद समास आदि होने के बाद षत्व और ष्टुत्व होता है। अग्नेः स्तोमः—इस षष्ठीसमास में भी मूर्धन्य और ष्टुत्व होता है। अग्निश्च सोमश्च—इस द्वन्द्व में 'ईदग्नेः सोमवरुणयोः' सूत्र से ईत्व करने पर 'अग्नीषोम' में मूर्धन्य होता है। ]

❁ 'अग्नि' इसके दीर्घ = अग्नी से परे ही सोम का मूर्धन्य इष्ट है। ❁ इस कारण यहाँ नहीं होता है—अग्निसोमौ माणवकौ। [ यहाँ दो माणवकों का नाम अग्नि और सोम है। यहाँ देवतावाची न होने से न तो दीर्घ है और न षत्व होता है। ] और इसी प्रकार—ज्योतिः = अग्नि है, सोम = एक लताविशेष है—अग्निसोमौ तिष्ठतः। [ यहाँ भी नहीं होता है। किन्तु आश्वलायन ने यहाँ भी ईत्व और षत्व का प्रयोग किया है—'अग्नीषोमौ प्रणेष्यामि।' ऐसा पदमंजरीकार ने लिखा है। ]

**समास इत्येव–अग्ने सोमः।।**

**३८७९. ज्योतिरायुषः स्तोमः।।८३।। (१०२१)**

**ज्योतिस्, आयुस्–इत्येताभ्यामुत्तरस्य स्तोमसकारस्य मूर्धन्यादेशो भवति समासे। ज्योतिष्टोमः। आयुष्टोमः। [ ज्योतिःष्टोमः, आयुःष्टोमः। ]**

**'समासे' इत्येव–ज्योतिः स्तोमं दर्शयति।।**

**३८८०. मातृपितृभ्यां स्वसा।।८४।। (९८४)**

**मातृ, पितृ–इत्येताभ्यामुत्तरस्य स्वसृसकारस्य समासे मूर्धन्यादेशो भवति। मातृष्वसा। पितृष्वसा।।**

**३८८१. मातुःपितुर्भ्यामन्यतरस्याम्।।८५।। (९८३)**

**न्यासः**

इतीत्त्वम्। **अग्नेर्दीर्घात् सोमशब्दस्य षत्वमिष्यते**। एतच्च 'विभाषेटः' इत्यतो विभाषाग्रहणानुवृत्तेर्लभ्यते। न च तदनुवृत्तावतिप्रसङ्गः स्यात्; व्यवस्थितविभाषाविज्ञानात्।।८२।।

**ज्योतिरायुषः स्तोमः।। ज्योतिःष्टोमः, आयुःष्टोम इति**। षष्ठीसमासः, सकारस्य रुत्वम्, विसर्जनीयः। 'वा शरि' इति पक्षे सकारः, तस्य तकारस्य च ष्टुत्वम्।।८३।।

**मातृपितृभ्यां स्वसा।। मातृपितृभ्यामिति**। 'अभ्यर्हितं पूर्वं निपतति' इति मातृशब्दस्य पूर्वनिपातः। अनादेश-सकारत्वादप्राप्तस्यैव षत्वस्येदं विधानम्। **मातृष्वसा, पितृष्वसेति**। षष्ठीसमासः।।८४।।

**मातुःपितुर्भ्यामन्यतरस्याम्।।** पूर्वेणाप्राप्ते विभाषेयमारभ्यते; मातृपितृभ्यां केवलाभ्यां प्रकृतिप्रत्यय-

**पदमञ्जरी**

**ज्योतिरायुषः स्तोमः।। ज्योतिष्टोम इति**। अत्र 'शर्व्यवाये' इत्यधिकारात् षत्वम्। एवमायुष्टोमेऽपि।।८३।।८४।।

**मातुःपितुर्भ्यामन्तरस्याम्।।** एकदेशविकृतस्यानन्यत्वाद्, 'विसर्जनीयशर्व्यवाये' इत्यधिकाराच्च पूर्वेण नित्ये

**भावबोधिनी**

समास में ही होता है—अग्नेः सोमः। [ इस व्यास में नहीं होता है। ]।।८२।।

ज्योतिस् तथा आयुस्—इन दोनों से उत्तरवर्ती 'स्तोम' के सकार का मूर्धन्य आदेशः समास में होता है। उदा॰ ज्योतिष्टोमः। आयुष्टोमः। [ ज्योतिषः स्तोमः, आयुषः स्तोमः—इसमें षष्ठीसमास, विभक्तिलोप के बाद, स् का सत्व, विसर्ग, 'वा शरि' सूत्र से विकल्प से सत्व। स्तोम के स् का ष्, ष्टुत्व से त का ट। ज्योतिस् ष्टोमः में पुनः ष्टुत्व होने पर—ज्योतिष्टोमः, आयुष्टोमः रूप बनते हैं। विसर्ग का स् न होने पर ज्योतिःष्टोमः, आयुःष्टोमः रूपभी होते हैं। विसर्ग या स् शर् में आते हैं अतः 'शर्व्यवायेऽपि' इसके कारण मूर्धन्य होता है। ]

समास में ही होता है—ज्योतिः स्तोमं दर्शयति। [ यहाँ व्यास में षत्व नहीं होता है। ]।।८३।।

मातृ और पितृ—इनसे उत्तरवर्ती स्वसृ के सकार का मूर्धन्य आदेश समास में होता है। उदा॰ मातृष्वसा। पितृष्वसा। [ मातुः स्वसा, पितुः स्वसा—इस विग्रह में षष्ठीसमास, विभक्तिलोप के बाद स् का ष् होता है। ]।।८४।।

मातुर् और पितुर्—इनसे उत्तरवर्ती स्वसृ शब्द के सकार का मूर्धन्य आदेश समास में विकल्प से होता है। उदा॰ मातुःष्वसा, मातुःस्वसा। पितुःष्वसा, पितुःस्वसा। [ समास करने पर भी 'विभाषा स्वसृपत्योः' सूत्र से विभक्ति का अलुक् होता है। अतः 'मातुः'

**मातुर्, पितुर्–इत्येताभ्यामुत्तरस्य स्वसृशब्दस्यान्यतरस्यां मूर्धन्यादेशो भवति समासे। मातुः ष्वसा, मातुःस्वसा। पितुःष्वसा, पितुःस्वसा।**

**मातुःपितुरिति रेफान्तयोरेतद्ग्रहणम्। एकदेशविकृतस्यानन्यत्वाद् विसर्जनीयान्तात् सकारान्ताच्च षत्वं भवति।**

**समास इत्येव–वाक्ये मा भूत्; मातुः स्वसेत्येव नित्यं भवति।।**

## ३८८२. अभिनिसः स्तनः शब्दसंज्ञायाम्।।८६।। (३१९३)

**न्यासः**

समुदाययोर्मातुःपितुरित्येतयोरन्यत्वात्। **मातुःष्वसा, पितुःष्वसेति**। 'विभाषा स्वसृपत्योः' इत्यलुक् षष्ठ्याः।

उत्तरपदस्य रेफान्तस्य ग्रहणात् तत्साहचर्यात् पूर्वपदस्यापि रेफान्तस्य ग्रहणं विज्ञायत इत्याह— **मातुःपितुरिति रेफान्तयोरित्यादि**। यद्येवम्, रेफस्य विसर्जनीये कृते तस्य 'वा शरि' इति पक्षे सकारे कृते विसर्जनीयान्तात् सकारान्ताच्च न प्राप्नोति? इत्याह—**एकदेशविकृतस्येत्यादि**। यदि रेफान्तयोर्ग्रहणं न स्यात्, ततो यदि विसर्जनीयान्तयोरुपादानं क्रियेत तदा तथाभूताभ्यामेव स्यात्, न सकारान्ताभ्याम्; निर्देशस्य तन्त्रत्वात्। अथापि सकारान्तयोर्ग्रहणं स्यात्; एवमपि तथाभूताभ्यामेव स्यात् न विसर्जनीयान्ताभ्याम्। रेफान्तयोस्तु ग्रहणे स्वसृशब्दे परतो नियोगतो विकारेण भवितव्यमिति निर्देशस्य तन्त्रता नास्ति। तेन विसर्जनीयान्ताभ्यां सकारान्ताभ्याञ्च षत्वं सिध्यति।।८५।।

**अभिनिसः स्तनः शब्दसंज्ञायाम्**।। अनादेशसकारत्वादप्राप्त एव षत्वे वचनम्। 'ष्टन शब्दे' इति

**पदमञ्जरी**

प्राप्ते विकल्पः। **मातुःष्वसेति**। 'विभाषा स्वसृपत्योः' इति षष्ठ्या अलुक्।

**रेफान्तयोरिदं ग्रहणमिति**। तच्चोत्तरपदे स्पष्टं पूर्वपदमपि तत्साहचर्याद्रेफान्तमेव। यद्येवम्, रेफस्य विसर्जनीये कृते तस्य 'वा शरि' इति पक्षे सत्वं कृतेऽरेफान्तत्वान्न प्राप्नोति? अत आह— **एकदेशविकृतस्यानन्यत्वादिति**। यदि तु सकारान्तयोर्ग्रहणं क्रियेत, विसर्जनीयान्तयोर्न स्यात्। विसर्जनीयान्तयोस्तु ग्रहणे भ्यामि परतो निर्देश दुर्घटः स्यात्।।८५।।

**अभिनिसस्तनः शब्दसंज्ञायाम्**।। **अभिनिस् इत्येतस्मादिति**। एतेन समुदायो निमित्तं न प्रत्येकमिति

**भावबोधिनी**

'पितुः' रूप के बाद स्वसृ का षत्व विकल्प से होता है। ]

मातुर् और पितुर्—इन रेफान्तों का ग्रहण है। 'एकदेशविकृत हो जाने पर दूसरा नहीं हो जाता है, अर्थात् वही रहता है' इस नियम से विसर्गान्त और सकारान्त शब्दरूपों से परवर्ती स्वसृ का षत्व होता है। [ भाव यह है कि रेफ का विसर्ग और उसका 'वा शरि' से सत्व कर देने पर रेफान्त नहीं रह जाने से यह सूत्र नहीं लगना चाहिये? समाधान यह है कि केवल रेफ, विसर्ग या स् के रूप परिवर्तन से मूलरूप का परिवर्तन नहीं मानना चाहिये। अतःषत्व में बाधा नहीं है। मातुर् पितुर्—इनको रेफान्त न लेकर सकारान्त या विसर्गान्त लेने पर अनिष्ट होता। ]

समास में ही होता है, इसका फल है—वाक्य में न होने लग जाय—'मातुः स्वसा' यह नित्य सवाला ही होता है।।८५।।

अभि तथा निस्—इन के समुदाय से उत्तरवर्ती 'स्वनति' के सकार का मूर्धन्य आदेश विकल्प से होता है शब्दसंज्ञा के गम्यमान रहने पर। उदा० अभिनिष्टानो वर्णः। अभिनिष्टानो विर्सजनीयः। अभिनिस्तानो वर्णः। अभिनिस्तान विसर्जनीयः।

**अभि, निस्–इत्येतस्मादुत्तरस्य स्तनतिसकारस्य मूर्धन्यादेशो भवति अन्यतरस्यां शब्दसंज्ञायां गम्यमानायाम्। अभिनिष्टानो वर्णः। अभिनिस्तानो वर्णः। अभिनिष्टानो विसर्जनीयः। अभिनिस्तानो विसर्जनीयः[1]।**

**शब्दसंज्ञायामिति किम्? अभिनिस्तनति मृदङ्गः[2]।**

**'समासे' इति अतः प्रभृति निवृत्तम्।।**

## ३८८३. उपसर्गप्रादुर्भ्यामस्तिर्यच्परः।।८७।। (२४७२)

**न्यासः**

भौवादिकस्य ग्रहणम्। 'स्तन गदी देवशब्दे' इत्येतस्य चौरादिकस्य तु न; तस्य ग्रहणे सत्यदन्तत्वाद् 'अत उपधायाः' इति न वृद्धिर्लभ्यते। अभि, निस्—इत्येताभ्यां समस्ताभ्यामेवेदं षत्वं विधीयते। न हि व्यास्ताभ्यामुत्तरस्य तस्य स्तनतेर्मूर्धन्ये कृते शब्दसंज्ञा गम्यते। **अभिनिस इत्येतस्मादित्यादि**। अभिनिसिति योऽयमुपसर्गसमुदायस्तस्मादित्यर्थः। **अभिनिष्टान इति**। अभिनिस्तन्यतेऽनेन, 'अकर्तरि च कारके संज्ञायाम्' इति घञ्, प्रादिसमासः।

ननु च समासाधिकारादेवाभिनिःस्तनतीत्यत्र न भविष्यति, किमेतन्निवृत्त्यर्थेन शब्दसंज्ञाग्रहणेन? इत्यत आह—**समास इत्यतः प्रभृति निवृत्तमिति**।।८६।।

**उपसर्गप्रादुर्भ्यामस्तिर्यच्परः**।। इदमपि पूर्ववदप्राप्ते वचनम्। यश्चाच्च तौ यचौ, यचौ परौ यस्मात् स यच्परः। प्रादुःशब्दस्यानुपसर्गत्वात् पृथग्ग्रहणम्। **अभिषन्तीति**। 'अस भुवि', अदादित्वाच्छपो लुक्,

**पदमञ्जरी**

दर्शयति। **अभिनिष्टानो विसर्जनीय इति**। तथा **चापस्तम्बः**—'व्यक्षरं चतुरक्षरं वा नाम पूर्वमाख्यातोत्तरं दीर्घाभिनिष्ठान्तं घोषवदाद्यन्तरन्तरस्थम्' इति। व्यक्षरं चतुरक्षरं वा नाम कर्त्तव्यम्, कीदृशम्? नामपूर्वम्, नाम प्रातिपदिकमक्रियावचि तत्पूर्वपदम्, आख्यातोत्तरं क्रियावाच्युत्तरपदं दीर्घात्परो योऽभिनिष्टानो विसर्जनीयस्तदन्तं दीर्घान्तं विसर्जनीयान्तं चेत्यन्ये। घोषवान्वर्ण आदिर्यस्य तद्घोषवदादि, अन्तरन्तस्थं यरलवानामन्यतमं मध्ये यस्य तत्तथोक्तमेवंभूतं नाम कर्त्तव्यम्। द्रविणोदा वरिवोदा इत्याद्युदाहरणम्।।८६।।

**उपसर्गप्रादुर्भ्यामस्तिर्यच्परः**।। य् च अच्च यचौ, तौ परौ यस्मात्स यच्परः। यचोरिति सप्तमीनिर्देशेनैव सिद्धे परग्रहणं चिन्त्यप्रयोजनम्। **अभिषन्तीति**। अदादित्वाच्छपो लुक्, 'श्नसोरल्लोपः'।

**भावबोधिनी**

[ अभिनिस्तन्यते अनेन—इस अर्थ में 'अकर्तरि च कारके संज्ञायाम्' इससे घञ् = प्रत्यय, उपधावृद्धि, प्रादिसमास के बाद स् का का ष्, ष्टुत्व से त का ट ]

शब्दसंज्ञा गम्यमान रहने पर—इसका क्या फल है? अभिनिस्तनति मृदङ्गः। [ मृदङ्ग आवाज करता है। इस में शब्दसंज्ञा गम्यमान नहीं है। ]

'समासे' यह अब यहाँ से आगे निवृत्त है अर्थात् इसकी अनुवृत्ति नहीं होती है। [ अतः अभि और निस् इन का समुदाय मानने के लिये 'शब्दसंज्ञा गम्यमान हो' ऐसा लिखा गया। ]।।८६।।

उपसर्ग में स्थित [ मूर्धन्य के ] निमित्त से तथा प्रादुस् शब्द से परवर्ती यकारपरक तथा अच्परक 'अस्ति' के सकार का मूर्धन्य आदेश होता है। उदा॰ अभिषन्ति, निषन्ति, विषन्ति, प्रादुःषन्ति। [ अभि, नि, वि—तीनों में इ = इण् है, तथा प्रादुः शब्द

---

१. विसर्जनीयस्यैषा संज्ञा—इत्यधिकं क्वचित्।

२. क्वचिदयं पाठो नास्ति।

**उपसर्गस्थान्निमित्तात्प्रादुस्शब्दाच्चोत्तरस्य यकारपरस्याच्परस्य चास्तिसकारस्य मूर्धन्यो भवति। अभिषन्ति, निषन्ति, विषन्ति, प्रादुःषन्ति। अभिष्यात्, निष्यात्, विष्यात्, प्रादुःष्यात्।**

**उपसर्गादिति किम्? दधि स्यात्। मधु स्यात्।**

**अस्तीति किम्? अनुसृतम्। विसृतम्।**

**अथासत्यपि अस्तिग्रहणे सकारमेव प्रति उपसर्ग आश्रीयते, प्रादुःशब्दस्य च कृभ्वस्तिष्वेव प्रयोग इत्यन्यत्राप्रसङ्गः? तथाप्येतत् प्रत्युदाहर्तव्यम्–अनुसूते अनुसूः, अनुस्वोऽपत्यम् आनुसेयः। शुभ्रादित्वाड्**

**न्यासः**

'श्नसोरल्लोपः' इत्यकारस्य। **अभिष्यादिति**। लिङ्। **अनुसृतमिति**। 'सृ गतौ'।

ननु च सकारस्य प्रकृतत्वात् तमेव प्रत्युपसर्गत्वमाश्रीयते, न चानुसृतमित्यत्र यः सकारस्तं प्रत्यनुशब्दस्योपसर्गसंज्ञा; तन्मात्रस्याऽक्रियावचनत्वात्, क्रियावचनं च प्रति प्रादीनामुपसर्गसंज्ञाविधानात्, 'यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्ति' इति वचनात्; तस्मादसत्यप्यस्तिग्रहणे नैवात्र मूर्धन्यः प्रसज्येत, तत् किमस्तिग्रहणेन? तत्रैतत् स्यात्—असति तस्मिन् प्रादुःशब्दादुत्तरस्य धात्वन्तरसकारस्य मूर्धन्यः प्राप्नोति, अतस्तन्निवृत्त्यर्थमस्तिग्रहणम्, एतच्च नास्ति; प्रादुःशब्दस्य नियतविषयत्वात्। स हि सर्वदा कृभ्वस्तिविषय एव प्रयुज्यते। तत् कुतोऽयं प्रसङ्ग इति यो देशयितुकामस्तदीयं मतम् **अथेत्यादिना** दर्शयति। प्रत्युदाहरणान्तरं वक्तुकाम आह—**अन्यत्रेति**। अनुसृतमित्यत्र प्रत्युदाहरणे। **तथापीति**। एवमपीत्यर्थः। एतेनैतद्दर्शयति—एवमपि कल्प्यमानेऽस्तिग्रहणस्यानुसेय इत्येतत् प्रत्युदाहरणमस्त्येव। तस्मात् कर्त्तव्यमेवास्तिग्रहणम्। 'षूङ् प्राणिगर्भविमोचने' इत्येतस्मादनुपूर्वात् क्विप्, अनसूत इत्यनुसूः, तस्यापत्यं

**पदमञ्जरी**

**अनुसृतमिति**। कथं पुनरत्र प्रसङ्गः, यावता सकारस्य प्रकृतत्वात्तमेव प्रत्युपसर्गत्वमाश्रयिष्यते; न चात्र सकारं प्रत्युपसर्गत्वमस्ति, तावन्मात्रस्याक्रियावचनत्वात्, तत्किमस्तिग्रहणेन; न च प्रादुःशब्दार्थमस्तिग्रहणं कृतम्, तस्य

**भावबोधिनी**

है। इनसे परे अस् = सन्ति के स् का ष् हो जाता है। ] अभिष्यात्, निष्यात्, विष्यात्, प्रादुःष्यात्। [ यहाँ भी अस् = स्यात् के स् का ष् हो जाता है। द्वितीय उदाहरणों में यकारपरक और प्रथम में अच्परक 'अस्' है। ]

उपसर्ग में स्थित निमित्त से परे—इसका क्या फल है? दधि स्यात्। मधु स्यात्। [ इनमें षत्व का निमित्त इण् तो है किन्तु उपसर्गस्थ नहीं है। ]

अस् धातु का—इसका क्या फल है? अनुसृतम्। विसृतम्। [ यहाँ अस् नहीं सृ धातु है। ]

प्रश्न यह है कि (सूत्र में) 'अस्ति' का ग्रहण न रहने पर भी सकार के ही प्रति उपसर्ग का ग्रहण होता है। [ और अस् का ही अकेला सकार ऐसा संभव है जिसके प्रति 'अभि' आदि उपसर्ग बन सकते हैं क्योंकि यह नियम हैं 'यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्ति।' और 'अनुसृतम्' आदि में अकेले स् के प्रति उपसर्ग न होने से षत्व की प्राप्ति ही नहीं है। ] और प्रादुः शब्द का प्रयोग कृ, भू, अस् परे ही होता है, अतः अन्यत्र कहीं षत्व की प्राप्ति नहीं है [ तब 'अस्ति' के ग्रहण का क्या फल है? ] फिर भी यह प्रत्युदाहरण दिया जा सकता है—अनुसूते— इति अनुसूः तस्या अपत्यम्—इस अर्थ में—आनुसेयः'। यहाँ 'शुभ्रादिभ्यश्च' (४।१।१२३) से ढक् = एय प्रत्यय, 'ढेलोपेऽकद्र्वा' सूत्र से ऊ का का लोप, आदिवृद्धि—'आनु स् एय। ] यहाँ अकेला 'स्' क्रियावाची है, उसके साथ 'अनु' उपसर्गसंज्ञक बना है। मूर्धन्य की सम्भावना है। अतः 'अस्ति' का ग्रहण सूत्र में आवश्यक है। ]

**(४।१।१२३) ढक्, 'ढे लोपोऽकद्र्वा' (६।४।१४७) इत्युवर्णलोपः।**

**यच्पर इति किम्? निस्तः। विस्तः। प्रादुस्तः।।**

**३८८४. सुविनिर्दुर्भ्यः सुपिसूतिसमाः।।८८।। (२४७७)**

**सु, वि, निर्, दुर्-इत्येतेभ्य उत्तरस्य सुपि, सूति, सम-इत्येतेषां सकारस्य मूर्धन्यादेशो भवति। 'सुपि' इति स्वपिः कृतसम्प्रसारणो गृह्यते। सुषुप्तः। विषुप्तः। निःषुप्तः। दुःषुप्तः।**

**'सूति' इति स्वरूपग्रहणम्। सूषूतिः। विषूतिः। निःषूतिः। दुःषूतिः।**

**सम-सुषमम्, विषमम्, निःषमम्, दुःषमम्।**

**न्यासः**

शुभ्रादित्वाड् ढक्, एयादेशः, 'ढे लोपोऽकद्र्वा' इत्यूकारलोपः। अत्र सकारं प्रत्यनुशब्दस्योपर्गसंज्ञेत्यस्तिग्रहणे स्यादेव मूर्धन्यः।।८७।।

**सुविनिर्दुर्भ्यः सुपिसूतिसमाः**।। सुपिसूत्योः 'सात्पदाद्योः' इति निषेधे प्राप्ते। सम—इत्येतदव्युत्पन्नं प्रातिपदिकं सर्वादिषु पठ्यते, तेनास्यादित एवाप्राप्ते षत्वमुच्यते। अथ तु 'षम ष्टम अवैकल्ये' इत्यस्य पचाद्यचि समशब्दो व्युत्पाद्यते, तथा च सति तस्यापि प्रतिषेधे प्राप्त इदं वचनम्। **सुषुप्त इति**। 'ञिष्वप् शये', निष्ठा, वच्यादि सूत्रेण सम्प्रसारणम्, 'एकाचः' इतीट्प्रतिषेधः।

**सुषूतिरिति**। सूतेः सूयतेर्वा 'स्त्रियां क्तिन्'। सूतीति स्वरूपग्रहणम्। यत्रास्यैतद्रूपं नास्ति, तत्र न भवति— सुसूतम्, विसूतमिति। कथं पुनर्ज्ञायते—स्वरूपग्रहणमेतत्, न पुनः सूतेर्लुग्विकरणस्य ग्रहणमिति; भवति तस्यापि

**पदमञ्जरी**

कृभ्वस्तिविषयत्वेन नियतत्वात्, तदेतदाशङ्कते तावत्। **तथापीति**। अनुसुशब्दः शुभ्रादिः, चतुष्पाद्वचन इत्यन्ये, ततो ठक्ठञोरन्यतरः, 'ढे लोपोऽकद्र्वा' इत्यूकारलोपे सकारमात्रस्य क्रियावाचित्वात् षत्वप्रसङ्गः।।८७।।

**सुविनिर्दुर्भ्यः सुपिसूतिसमाः**। सुपीत्यागन्तुक इकारः, न पुनरिका निर्देशः। तत्र 'वचिस्वपि' इति लक्षणप्राप्तेन सम्प्रसारणेन धातोरेवायं निर्देशः स्यात्, ततश्च यत्रास्यैतद्रूपं तत्र षत्वमित्ययमर्थो न लभ्यते। तस्मादागन्तुकेनेकारेण प्रयोगस्थस्य कृतसम्प्रसारणस्य रूपस्येदमनुकरणम्। तदाह—**सुपीति स्वपिः कृतसम्प्रसारणो गृह्यते इति**। एतच्च 'सुपि' इति निर्देशादेव लभ्यते, अन्यथा 'वचिस्वपि' इतिवन्निर्दिशेत्।

**भावबोधिनी**

यच्परक = य् जिससे परे है और अच् जिससे परे है ऐसा 'अस्'—इसका क्या फल है? निस्तः, विस्तः, प्रादुस्तः। [ यहाँ अस् = के बाद य् अथवा अच् नहीं है तकार है। अतः षत्व नहीं होता है। ]।।८७।।

सु, वि, निर् तथा दुर्—इनसे उत्तरवर्ती सुप् (= स्वप), सूति (षू) तथा सम—इन धातुओं के सकार का मूर्धन्य आदेश हो जाता है। सुप् = यह सम्प्रसारण किये स्वप् धातुरूप का ग्रहण है। [ अर्थात् सम्प्रसारणवाला धातुरूप है। अतः इसी का ग्रहण होता है, भिन्न रूप में ष नहीं होता है ] उदा॰ सुषुप्तः। विषुप्तः। निःष्षुप्तः। दुःष्षुप्तः। [ सु, वि, निर्, दुर् के साथ स्वप् + क्त है, 'वचस्वपियजादीनां किति' (६।१।१५) सूत्र से व् का सम्प्रसारण उ, और अ का पूर्वरूप सु सुप् त, षत्व होने पर उक्त रूप होतेहैं। ]

सूति—यह स्वरूपग्रहण है। [ षू से जहाँ क्तिन् करने पर—सूति रूप बनता है वहीं इस सूत्र से षत्व होता है। ] उदा॰ सुषूतिः। विषूतिः। निःषूतिः। दुःषूतिः। [ स्वरूपग्रहण मानने से जहाँ ऐसा रूप नहीं होता है वहाँ षत्व भी नहीं होता है। जैसे—सुसूतम्, विसूतम् आदि। ]

**सुपेः षत्वं स्वपेर्मा भूद्विसुष्वापेति केन न।**
**हलादिशेषान्न सुपिरिष्टं पूर्वं प्रसारणम्।।**

**न्यासः**

'इक्श्तिपौ धातुनिर्देशे' इति शितपि कृते सूतिरित्येष निर्देशः? समशब्देन साहचर्यात् तस्य हीह स्वरूपं गृह्यत इति। यद्यपि सुपिना धातुना साहचर्याद् धातोरपि ग्रहणं युक्तम्, तथापि शब्दपरविप्रतिषेधेन शब्दपरंयत् साहचर्यं तद् बलीय इति समशब्देनैव साहचर्यात् स्वरूपमेव गृह्यते, न सुपिना धातुना साहचर्याद्धातुः।

अथ किमर्थं सुपेः कृतसंप्रसारणस्य षत्वमुच्यते? इत्यत आह—**सुपेः षत्वं स्वपेर्मा भूदित्यादि**। सुस्वापः, विस्वायः, सुस्वपनम्, निःस्वपनम्, दुःस्वपनमित्यत्राकृतसंप्रसारणस्य स्वपेः षत्वं मा भूदित्येवमर्थं स्वपेः कृतसम्प्रसारणस्य षत्वमुच्यते। यद्येवम्, **विसुष्वापेति केन नेति**? स्वपेर्लिट्, तिप्, णल्, द्विर्वचनम्, 'लिट्यभ्यासस्योभयेषाम्' इति सम्प्रसारणम्। कृतसम्प्रसारणस्य स्वपेरभ्यासस्येति केन हेतुना षत्वं न भवति? नास्त्येव स हेतुर्येन हेतुना विसुष्वापेत्यत्र न भविष्यतीत्यभिप्रायः। परस्य तु सकारस्य 'आदेशप्रत्यययोः' इत्यनेन षत्वं भविष्यत्येव, न तद्विषयेयं चिन्ता। **हलादिशेषान्न सुपिरिति**। एतेन येन हेतुना षत्वमत्र न भवति तं दर्शयति। 'लिट्यभ्यासस्योभयेषाम्' इत्येतस्माद्धि सम्प्रसारणात् परत्वाद् हलादिशेषे कृते यद्यपि पश्चात् सम्प्रसारणं क्रियते,

**पदमञ्जरी**

**सूतीति स्वरूपग्रहणमिति**। सूतेः क्तिन्नन्तस्य ग्रहणमित्यर्थः। समेत्यपि स्वरूपग्रहणमेव, न 'षम ष्टम वैक्लव्ये' इति धातोर्ग्रहणम्: इक्श्तिपोरन्यतरस्याभावात्।

अथ किमर्थं स्वपेः सुपि भूतस्य षत्वमुच्यते? **सुपेः षत्वं स्वपेर्मा भूत्**, सुपेः षत्वमुच्यते, स्वपेर्मा भूदिति—विस्वप्नः, विस्वप्नमिति। **विसुष्वापेति**। अथ क्रियमाणेऽपि विकृतग्रहणे **विसुष्वापेति केन न हेतुना** केन विसुष्वापेत्यत्राभ्यासस्य षत्वं न भवति, 'लिट्यभ्यासस्योभयेषाम्' इति सम्प्रसारणे कृते सुपिरूपस्य भावात् प्रागेव हलादिशेषात्, कृते वा तस्मिन्नेकदेशविकृतस्यानन्यत्वादस्ति प्रसङ्गः। **हलादिशेषान्न सुपिः**। द्विर्वचने कृते परत्वाद्धलादि; शेषेण पकारे निवृत्ते वकारस्य सम्प्रसारणम्, ततश्च सुपिरूपस्य कदाचिदप्यभावात् षत्वाभावः। **इष्टं**

**भावबोधिनी**

सम—(यहाँ भी स्वरूप का ग्रहण है)—सुषमम्, विषमम्, निःषमम्, दुःषमम्। [ इसमें भी 'षम ष्टम वैक्लव्ये'—इसका ग्रहण नहीं है अपि तु 'सम' इस शब्दरूप का ही है। ]

[ भाष्योक्त श्लोकवार्तिकों का भाव यहाँ लिखा जा रहा है। ]

[ सुपि—इस रूपवाली ष्वप् धातुका ग्रहण क्यों किया गया है? ] सुप् इस रूपप्राप्त का ही षत्व हो सके—स्वप् इस रूप का न हो सके। [ अतः 'विस्वप्नः, सुस्वप्नः' आदि में षत्व नहीं होता है। ] यदि ऐसी बात है अर्थात् सम्प्रसारणभूत 'सुप्' का ही षत्व होता है तब तो 'विसुष्वाप इसमें प्रथम स् का षत्व क्यों नहीं होता है? [ भाव यह है स्वप् + लिट् = तिप् = णल् = अ, द्वित्व, 'लिट्यभ्यासस्योभयेषाम्' (६।१।१७) इस सूत्र से अभ्यास का सम्प्रसारण होने पर सुप् स्वप् + अ, हलादिशेष, उपधावृद्धि, 'आदेशप्रत्यययोः' (८।३।५९) सूत्र से द्वितीय स् का ष्, होता है। यहाँ सुप् रूप हो जाने पर अभ्यास का षत्व क्यों नहीं होता है? ] 'हलादिः शेषः' (७।४।६०) सूत्र से पकार का लोप हो जाने से 'सुप्' यह न रहकर 'सु' इतना ही बचता है हलादिशेष और सम्प्रसारण में पहले क्या किया जाय? ] पहले सम्प्रसारण करना ही इष्ट है। [ भाव यह है कि 'लिट्यभ्याँसस्योभयेषाम्' (६।१।१७) इस सूत्र में 'उभयेषाम्' का ग्रहण इसीलिये किया गया है कि परवर्ती भी हलादिशेष का बाध करके पहले सम्प्रसारण करना ही इष्ट है। अतः पहले सम्प्रसारण कर देने पर वि सुप् स्वप् + अ में षत्व होना ही चाहिये? ]

**स्थादीनां नियमो नात्र प्राक्सितादुत्तरः सुपिः।**

**न्यासः**

तथापि सुप इति रूपं न भवति; पकारस्याभावात्। तस्मात् षत्वं न भविष्यतीत्यभिप्रायः। तेन सुप इत्यस्य रूपस्याभावः षत्वाभावे हेतुरुक्तः। पूर्वपक्षवादिना तु प्राक्सम्प्रसारणे कृते पश्चाद् हलादिशेषेण पकारो निवृत्त इति मन्यमानेन देशितम्। ननु पश्चादपि पकारस्य निवृत्तिः, नैवायं सुपिर्भवति, पकाराभावात्, तत् किमिति देशितम्? एकदेशविकृतस्यानन्यत्वात् सुपिरेवायमित्यभिप्रायः। यदा तु परत्वाद् हलादिशेषे कृते सम्प्रसारणं भवति, तदैकदेशविकृतस्यानन्यत्वे सुपिरयं न भवति,, न हि तदा सुपेरेव विकारः, किं तर्हि? स्वपेः। अत आह—**इष्टं पूर्वं सम्प्रसारणमिति**। हलादिशेषादिदं पूर्वं सम्प्रसारणमेवेष्यते। तथा ह्युभयेषां ग्रहणं तत्रैवमर्थं कृतम्—परमपि हलादिशेषं बाधित्वा पूर्वं सम्प्रसारणमेव यथा स्यादिति। तस्माद् हलदिशेषात्पूर्वमभ्यासस्य सम्प्रसारणेनैव भवितव्यमित्ययुक्तम्—**हलादिशेषान्न सुपिरिति**। ततश्च 'विसुष्वापेति केन न' इत्येतद् देश्यं तदवस्थमेव।

एवं तर्हि 'स्थादिष्वभ्यासेन चाभ्यासस्य' इति योऽयं नियमः स्थादीनामेवाभ्यासस्य षत्वं प्रवर्तते, नान्येषामित्येस्मान्नियमाद् विसुष्वापेत्यत्राभ्यासस्य षत्वं न भवतीत्यत आह—**स्थादीनामित्यादि**। स्थादिनिमित्तको नियमः स्थादिनियमः स्थादिभिर्व्यपदिश्यते; स्थादिनिमित्तकत्वं तु नियमस्य तानुपादाय विधानात्। स्थादीनां यो नियमः सोऽत्र न प्रवर्त्तते। कथं विसुष्वापेत्यत्राभ्यासस्य षत्वं न भविष्यति? कस्मात् पुनः स्थादिनियमोऽत्र न प्रवर्तते? इत्यत आह—**प्राक् सितादिति**। तेषु पुनर्नियमविधानादिति शेषः। **'स्थादिष्वभ्यासेन चाभ्यासस्य'** इत्यत्र 'प्राक्सितात्' इति वर्त्तते। तेन सेवसितेत्यत्र सितसंशब्दनाद् ये प्राग् व्यवस्थिताः सुनोतिसुवतिस्यतिस्तोभति-प्रभृतयस्तेष्वेवायं नियमः, अतस्तेषामेवाभ्यासस्य षत्वं व्यावर्तयति, नान्येषामिति दर्शयति। सिद्धान्तवादिनस्तु—सामान्येन नियम इत्यभिप्रायः। स्यादेतत्—सुपिरपि प्राक्सितादेव व्यवस्थितः, तेनात्रापि नियमः प्रवर्त्तिष्यते?

**पदमञ्जरी**

**पूर्वं प्रसारणम्।** उक्तं तत्रोभयेषां ग्रहणस्य प्रयोजनम्—परमपि हलादिशेषं बाधित्वा उभयेषां सम्प्रसारणमेव यथा स्यादिति, तेन सम्प्रसारणमेव पूर्वमिष्टम्, विशेषतश्चात्रेष्टम्, अन्यथा षकारवद्वकारोऽपि निवर्त्तेत। न ह्यत्र हेतुरस्ति—षकारो निवर्त्तते वकारोऽवतिष्ठत इति। एवं तर्हि स्थादिष्वेवाभ्यासस्येत्येतस्मादेव नियमादत्र षत्वं न भविष्यति? **स्थादीनां नियमो नात्र।** कि कारणम्? **प्राक्सितादुत्तरः सुपि।** 'प्राक्सितात्' इति तत्र वर्त्तते, तेन प्राक्सिता ये धातवस्तेषां मध्ये स्थादिष्वेवाभ्यासस्य षत्वमिति नियमेन सुनोतिसुवतिस्यतिस्तोभतय एवं निवर्त्यन्ते, सुपिस्त्वयं ततोऽवधेरुत्तरः। एवं तहि 'अर्थवद्ग्रहणे नानर्थकस्य' इत्येवमेतस्य न भविष्यति, स्थाने हि द्विर्वचनेन समुदायोऽर्थवान्, अवयवौ त्वनर्थकौ, द्विष्प्रयोगेऽर्थप्रत्यायनस्यानावर्त्तनाद् द्वाभ्यामर्थः प्रत्याय्यत

**भावबोधिनी**

[ यदि ऐसा कहें कि 'स्थादिष्वभ्यासेन चाभ्यासस्य' (८।३।६४) इस सूत्र से जो यह नियम किया जाता है—'स्था आदि धातुओं के ही अभ्यास का षत्व होता है अन्य का नहीं'—इस नियम के बल से 'विसुस्वप् + अ में षत्व नहीं होता है—तो भीठीक नहीं है क्योंकि ] 'स्थादि के लिये जो नियम कहा गया है वह यहाँ प्रकृत स्थल में नहीं लागू हो सकता क्योंकि वह नियम 'सित' इससे पहले जो पठित है उन्हीं में लगता है जब कि स्वप् = सुप् उनमें बादमें पठित है। ] [ भाव यह है कि 'स्थादिष्वभ्यासेन चाभ्यासस्य' (८।३।६४) इस सूत्र में 'प्राक्सितादड्व्यवायेऽपि' (८।३।६३) से 'प्राक्सितात्' इसकी अनुवृत्ति होने के कारण 'सित' धातु से पूर्व जिन्हें पढ़ा गया है उन्हीं में वह नियम लागू होता है। अतः 'उपसर्गात् सुनोति' से लेकर 'परिनिविभ्यःसेव (सित)' (८।३।७०) तक ही नियम प्रवृत्त है। जबकि प्रस्तुत सुप् धातु तो ८।३।८८ सूत्र में पठित है। अतः षत्व होना हीं चाहिये? यदि ऐसी बात है तब तो 'अर्थवद्-ग्रहणे नानर्थकस्य' इस परिभाषाके बल से षत्व वारित वरना चाहिये। यहाँ द्वित्व होने से दोनों मिलकर ही अर्थवान् है, समुदाय अर्थवान् है अवयव अर्थवान् नहीं है। अतः षत्व नहीं हो सकता—ऐसा कहना भीठीक नहीं है क्योंकि ऐसा

**अनर्थके विषुषुपुः सुपिभूतो द्विरुच्यते।। (म.भा.)**

**'पूर्वत्रासिद्धीयमद्विर्वचने' (पु.प.९२) इति कृते षत्वे ततो द्विर्वचने।।**

**न्यासः**

इत्यत् आह—**उत्तरः सुपिरिति**। सितादित्येतदपेक्षते। सितशब्दादुत्तरः सुपिः पठ्यते, तत् कुतस्तत्र नियमस्य प्रवृत्तिः। अतो नियमेन तदभ्यासस्य षत्वं न व्यावर्त्त्यत इति 'विसुष्वापेति केन न' इत्यविकलं देश्यमेव।

एवं तर्हि 'अर्थवद्ग्रहणे नानर्थकस्य' इत्यर्थवतः सुपेर्ग्रहणात्, इह च तस्यानर्थकत्वात् षत्वं न भविष्यति, न ह्यत्र सुपिरर्थवान्। तथा हि—यदा तावत् स्थाने द्विर्वचनं तदा समुदाय एवार्थवान्, अवयवस्त्वनर्थक एव। यदा तु द्विष्प्रयोगो द्विर्वचनम्, तदापि शब्दस्यावृत्तिः, नार्थस्य, तेन कृतेऽपि द्विर्वचने समुदायस्यैवार्थवत्त्वम्, न तु केवलायाः प्रकृतेः, नापि केवलाभ्यासस्येत्यत आह—**अनर्थके विषुषुपुरिति**। कथं षत्वमिति वाक्यशेषः। यद्यर्थवतः सुपेर्ग्रहणाद् विसुष्वापेत्यत्र षत्वं न भवति, एवं सति विषुषुपुरित्यत्र षत्वं न भविष्यति, अत्रापि ह्यनर्थकत्वान्नैव षत्वेन भवितव्यम्, यथा विसुष्वापेत्यत्र? इत्यत आह—**सुपिभूतो द्विरुच्यत इति**। षुपीत्येतद्रूपमापन्नो द्विरुच्यत इत्यर्थः। स्वपेर्लिट्, उस्, द्विर्चनम्, 'असंयोगाल्लिट् कित्' इति कित्त्वम्, वच्यादिसूत्रेण सम्प्रसारणम्, अनेन षत्वम्। विषुप् + उस् इति स्थित आन्तरतम्यात् षुप्—इत्येतस्य द्विर्वचनम्, एवं षुपिभूते द्विरुच्यमाने विषुषुपुरित्यत्राभ्यासस्य षत्वं सिध्यति। विसुष्वापेत्यत्र षुपिभूतस्य द्विर्वचनं नास्ति; षुपिभूतस्याभावात्। तदेवं कुतः सम्प्रसारणे हि कृते षुपिभूतेन भवितव्यम्? णलः कित्त्वाभावात् सम्प्रसारणमेव नास्ति, कुतः पुनः षत्वम्! तस्मात् सुपीत्येतदेव द्विरुच्यते। यद्यप्युत्तरकालं सम्प्रसारणे कृते सुपीत्येवं भवति, तथाप्यनर्थकत्वात् तस्य मूर्धन्यो न भवतीति। तदेवं यदि कृतसम्प्रसारणस्य षत्वं भवति 'विसुष्वापेति के न' इति देश्यमर्थवद्ग्रहणपरिभाषामाश्रित्य परिहृतम्।

ननु च द्विर्वचने कर्त्तव्ये षत्वमसिद्धम्, तत् किमुच्यते—'षुपिभूतो द्विरुच्यते' इति? अत आह—**पूर्वत्रासिद्धीय इत्यादि**।।८८।।

**पदमञ्जरी**

इत्येकस्यानर्थक्यमेव? तदेतदाह—**अनर्थके विषुषुपुः**। यद्यनर्थकस्य ग्रहणं न भवति, विषुषुपुरिति न सिद्ध्यति? नैषः दोषः; **षुपिभूतो द्विरुच्यते**। अयमभिप्रायः—पूर्वं धातुरुपसर्गेण युज्यते, तत्र द्विर्वचनात् परत्वात्सम्प्रसारणम्, परत्वादेव षत्वम्, कृतषत्वस्यैव तस्य द्विर्वचनमिति।

ननु षत्वस्यासिद्धत्वात्पूर्वं द्विर्वचनमेव प्राप्नोति? अत आह—**पूर्वत्रासिद्धीयमद्विर्वचन इति**।।८८।।

**भावबोधिनी**

मानने पर तो ] अनर्थक 'विषुषुपुः' में कैसे षत्व होगा। [ यहाँ भी अभ्यास का 'सु' इतना अर्थवान् नहीं है समुदाय ही अर्थवान् है। यदि ऐसा है तब तो ] सुपिभूत अर्थात् सम्प्रसारण के बाद द्वित्व होता है। [ यहाँ वि + स्वप् + लिट् = झि = उस् 'असंयोगाल्लिट् कित्' सूत्र से कित्व, 'ग्रहिवचि॰' सूत्र से उ का सम्प्रसारण, अ का पूर्वरूप, अब प्रस्तुत सूत्र से पहले षत्व होता है कि षुप् + उस्, द्वित्व आदि होने पर 'विषुषुपुः' रूप बनता है। विसुष्वाप—में तिप् = णल् कित् न होने से सम्प्रसारण का प्रसङ्ग नहीं है। ]

[ यदि यह कहा जाय कि द्वित्व (६।१।६८) की कर्तव्यता में षत्व (८।३।८८) असिद्ध है तब सुपिभूत का द्वित्व कैसे कहा जाता है? ] 'द्विर्वचन का विषय छोड़कर 'पूर्वत्रासिद्धम्' (८।२।१) यह असिद्ध करता है।' [ अतः षत्व होने में कोई बाधा नहीं है। ]।।८८।।

## ३८८५. निनदीभ्यां स्नातेः कौशले।।८९।। (३०८२)

**नि, नदी–इत्येताभ्यामुत्तरस्य स्नातिसकारस्य मूर्धन्यादेशो भवति कौशले गम्यमाने। निष्णातः कटकरणे। निष्णातो रज्जुवर्तने। नद्यां स्नातीति नदीष्णः। 'सुपि स्थः' (३।२।४) इत्यत्र 'सुपि' इति योगविभागात्कप्रत्ययः।**

**कौशलं इति किम्? निस्नातः। नद्यां स्नातो नदीस्नात इति।।**

## ३८८६. सूत्रं प्रतिष्णातम्।।९०।। (३०८३)

**'प्रतिष्णातम्' इति निपात्यते सूत्रं चेद्भवति। प्रतिष्णातं सूत्रम्। शुद्धमित्यर्थः। प्रतिस्नातमित्येवान्यत्र।।**

### न्यासः

**निनदीभ्यां स्नातेः कौशले**।। 'ष्णा शौचे'। अस्य पूर्ववत् षत्वप्रतिषेधे प्राप्तेऽस्यारम्भः। कौशलम् = नैपुण्यम्। **निष्णातः कटकरण इति**। तत्र कुशल इति गम्यते। **नदीष्ण** इत्यत्रापि नदीस्नाने कुशल इति। 'आतो लोप इटि च' इत्याकारलोपः, उपपदसमासः।

**नदीस्नात** इत्यत्रापि 'सप्तमी' इति योगविभागात् समासः।।८९।।

**सूत्रं प्रतिष्णातम्**।। **प्रतिष्णातमिति**। पूर्ववत् षत्वप्रतिषेधे प्राप्ते निपात्यते। स्नातेरित्यनुवृत्तौ सत्यां सूत्रे प्रतेरित्युच्यमाने कामं प्रतिष्णातमिति सिध्यति, तृजादिष्वपि प्राप्नोति; तस्मादतिप्रसङ्गनिवृत्त्यर्थं प्रतिष्णातमिति निपातनमाश्रितम्।।९०।।

### पदमञ्जरी

**निनदीभ्यां स्नातेः कौशले**।। **निष्णातः कटकरणे इति**। तत्र कुशल इत्यर्थः। **नदीष्ण इति**। नदीस्नाने कुशल इत्यर्थः। कवयस्तु कुशलमात्रे प्रयुञ्जते। **नदीस्नात इति**। 'सप्तमी' इति योगविभागात् समासः।।८९।।

**सूत्रं प्रतिष्णातम्**।। 'सूत्रं प्रतेः' इति वक्तव्ये निपातनाश्रयणं प्रत्ययान्तरे मा भूत्।।९०।।

### भावबोधिनी

नि और नदी—इन से उत्तरवर्ती 'स्ना' धातु के सकार का मूर्धन्य आदेश 'कौशल' अर्थ के गम्यमान रहने पर होता है। उदा॰ निष्णातःकटकरणे। निष्णातः रज्जुवर्तने। [ चटाई बनाने में निष्णात = कुशल है, रस्सी बटने में निष्णात = कुशल है। नि + स्ना + त, षत्व, णत्व होता है। ] नद्यां स्नाति—इस अर्थ में—नदीष्णः। नदी उपपद 'स्ना' धातु से 'सुपि स्थः' (३।२।४)। इस सूत्र में 'सुपि' इस योगविभाग के कारण 'क' = प्रत्यय होता है। [ 'आतो लोप इटि च' इससे 'स्ना' के आ का लोप, 'सप्तमी' इस योगविभाग से समास के बाद षत्व और ष्टुत्व होता है। कवियों द्वारा तो सामान्य रूप से कुशल अर्थ में 'नदीष्ण' शब्द का प्रयोग किया जाता है—'शास्त्रनदी-नदीष्णः' आदि। ]

कौशल अर्थ में—इसका क्या फल है? निस्नातः। नद्यां स्नातः = निस्नातः— नदी में नहाया हुआ—यह अर्थ है। कुशल अर्थ न होने से षत्व नहीं होता है। ]।।८९।।

यदि 'सूत्र' अर्थ है तो 'प्रतिष्णात' यह निपातन से सिद्ध होता है। प्रतिष्णातं सूत्रम्। [ प्रति + स्ना + क्त ] यहाँ प्रतिष्णात का अर्थ—'शुद्ध' यह है = शुद्ध, स्वच्छ, अन्य अर्थ में 'प्रतिस्नातम्' यही होता है। [ यहाँ 'स्ना + क्त' ऐसा निर्देश क्तभिन्न प्रत्यय में षत्ववारण के लिये किया गया है। ]।।९०।।

**३८८७. कपिष्ठलो गोत्रे।।९१।। (३०८४)**

**'कपिष्ठलः' इति निपात्यते गोत्रविषये। कपिष्ठलो नाम यस्य स कापिष्ठलिः पुत्रः। गोत्र इति किम्? कपेः स्थलं कपिस्थलम्।।**

**३८८८. प्रष्ठोऽग्रगामिनि।।९२।। (२९१७)**

**'प्रष्ठः' इति निपात्यते अग्रगामिन्यभिधेये। प्रतिष्ठत इति प्रष्ठोऽश्वः। अग्रतो गच्छतीत्यर्थः।**

**न्यासः**

**कपिलष्ठलो गोत्रे**।। यदि 'ष्ठल स्थाने' इत्ययं धातुः 'अज्दन्त्यपराः सादयः षोपदेशाः' इति लक्षणात् षोपदेशः, तस्य चैतद्रूपं भवति, तदा पूर्ववत् प्रतिषेधे प्राप्ते वचनम्। अथ गणे तथाऽपाठादषोपदेश इति लक्षणादषोपदेशोऽव्युत्पन्नो वा स्थलशब्दः, तदादित एवाप्राप्ते षत्वे वचनम्। **गोत्रविषय इति**। गोत्रविषयश्चेत् कपिष्ठलशब्दो भवतीत्यर्थः। गोत्रग्रहणेन चेह लौकिकं गोत्रं गृह्यते, न पारिभाषिकम्। लोके च ये पुरुषा अपत्यसन्ततेः प्रवर्त्तयितार यत्पूर्विकापत्यसन्ततिर्भवति ते गोत्रमित्यभिधीयन्ते। कश्च कपिष्ठलशब्दो गोत्रविषयः? यः संज्ञाशब्दः प्रवाराध्याये पठ्यते। पारिभाषिकं गोत्रविषयत्वमपत्य - प्रत्ययमन्तरेण न सम्भवतीति पारिभाषिकगोत्रस्येहाग्रहणम्। **कपिष्ठलो नामेति**। स्थलतीति स्थलः, पचाद्यच्, कपिरिव स्थलः = कपिष्ठलः। 'उपमितं व्याघ्रादिभिः' इत्यादिना समासः। व्युत्पत्तिमात्रमेवैतत् कृतम्, न त्ववयवार्थो विद्यते। नामशब्दः संज्ञाशब्दतां कपिष्ठल-शब्दस्य दर्शयितुं प्रयुक्तः। कपिष्ठलशब्दस्याप्रसिद्धत्वात् तदपत्येन प्रसिद्धेन तमाख्यातुमाह—यस्य **कापिष्ठिलिरिति**। यस्य कापिष्ठलिरपत्यं स कपिष्ठलो नामेत्यर्थः।

**कपिस्थलमिति**। कपीनां स्थलं स्थानमित्यर्थः।।९१।।

**प्रष्ठोऽग्रगामिनि**[1]।। प्रशब्दस्यानिणन्तत्वादप्राप्तमेव षत्वं विधीयते। अग्रे गन्तुं शीलं यस्य सोऽग्रगामी =

**पदमञ्जरी**

**कपिष्ठलो गोत्रे**।। गोत्रमिह प्रवराध्यायपठितं गृह्यते, तत्र च स्वसन्तानस्य व्यपदेशहेतुराद्यः पुरुषो गोत्रमित्युच्यते। पारिभाषिकग्रहणे तु कापिष्ठलिरित्यत्रैव स्याद्यत्र गोत्राभिधायी प्रत्ययः। यदि तु गोत्रं न षत्वस्य विषयेण निर्दिष्टम्, किं तर्हि? दर्शनस्य गोत्रे यो दृष्टः कपिष्ठलशब्दः स साधुर्भवति, क्व? यत्र तत्रेत्यश्रीयते, पारिभाषिकेऽपि गोत्रे न दोषः।।९१।।

**भावबोधिनी**

गोत्रविषय रहने पर 'कपिष्ठल' यह शब्द निपातित होता है। [ यहाँ गोत्र शब्द लौकिक लिया जाता है जिसका विवेचन स्मृतियों में गोत्रप्रवाराध्याय में किया गया है न कि व्याकरणशास्त्रीय। ] उदा० कपिष्ठलो नाम यस्य स कापिष्ठलिः पुत्रः। [ जिसका कपिष्ठल ऐसा गोत्रनाम है उसका पुत्र 'कापिष्ठलिः' है। स्थलति इति स्थलः, पचादिगणीय मानकर 'नन्दिग्रहिपचादिभ्यः' सूत्र से अच् प्रत्यय—स्थलः। कपिरिव स्थलः—इस अर्थ में 'उपमितं व्याघ्रादिभिः' (२।१।५६) इससे समास होता है। यह केवल व्युत्पत्ति है। इसका अर्थ यहाँ नहीं लिया जाता है। ]

गोत्र अर्थ में—इसका क्या फल है? कपेः स्थलम् = कपिस्थलम्। [ यहाँ षत्व नहीं होता है। ]।।९१।।

अग्रगामी = आगे चलने वाला—यह अर्थ वाच्य रहने पर 'प्रष्ठः' शब्द निपातित होता है। उदा० प्रतिष्ठते—अर्थ में—प्रष्ठः अश्वः। आगे चलता है—यह अर्थ है। [ प्र स्था—इससे 'सुपि स्थः' सूत्र से क = अ प्रत्यय, आलोप—प्र स्थ् अ = प्रस्थ, षत्व होने पर रूप बनता है। ]

---

१. क्वचित्तु—अग्रगामिणि इति पाठः।

**अग्रगामिनीति किम्? प्रस्थे हिमवतः पुण्ये। प्रस्थो व्रीहीणाम्।।**

**३८८९. वृक्षासनयोर्विष्टरः।।९३।। (३२३३)**

**'विष्टरः' इति निपात्यते वृक्षे आसने च वाच्ये। विपूर्वस्य स्तृणातेः षत्वं निपात्यते। विष्टरो वृक्षः। विष्टरमासनम्।**

**वृक्षासनयोरिति किम्? औलपिवाक्यस्य विस्तरः[1]।।**

**३८९०. छन्दोनाम्नि च ।।९४।। (३२०६)**

**'विष्टारः' इति निपात्यते। विपूर्वात् 'स्तृ'–इत्येतस्माद्धातोः 'छान्दोनाम्नि च (३।३।३४) इत्येवं विहितो घञ् इति 'विष्टरः इत्यपि प्रकृते 'विष्टार' इति विज्ञायते। विष्टारपङ्क्तिः छन्दः। विष्टारो बृहतीछन्दः।**

**न्यासः**

पुरःसर उच्यते। प्रतिष्ठत इति प्रष्ठः, 'सुपि स्थः' इति कप्रत्ययः, पूर्ववदकारलोपः।।९२।।

**वृक्षासनयोर्विष्टरः।। विष्टर इति।** 'स्तृञ् आच्छादने' इत्यस्याज्दन्त्यपरस्यापि षोपदेशत्वं नास्ति; 'सृपिसृजिस्तृस्त्यासेकृसृवर्जम्' इति वचनात्, तेन नाप्राप्तमेव षत्वं निपात्यते। विस्तीर्यत इति विष्टरः, 'ॠदोरप्'। रूढिशब्दोऽयं यथाकथञ्चिद् व्युत्पाद्यते, नात्रावयवार्थं प्रत्यभिनिवेशः कर्त्तव्यः।।९३।।

**छन्दोनाम्नि च।।** छन्दोग्रहणेन बृहत्यादीनां ग्रहणम्; न हि वेदस्य विष्टार इति नाम, किं तर्हि? बृहत्यादीनां वृत्तानाम्। ननु विष्टर इति प्रकृतम्, तत् कथं विष्टार इति निपातयितुं शक्यते? इत्याह—**विपूर्वादित्यादि**। 'प्रे

**पदमञ्जरी**

**प्रष्ठोऽग्रगामिनि।। प्रस्थे हिमवत इति।** 'घञर्थे कविधानम्' इत्यधिकरणे कः।।९२।।

**वृक्षासनयोर्विष्टरः।।** विस्तीर्यत इति विष्टरः, 'प्रथने वावशब्दे' इति घञि प्राप्ते अस्मादेव निपातनादप्। रुढिशब्दत्वाद्वा पचाद्यचि व्युत्पाद्यः। उलपेन कृता टीका औलपी, सा वाक्यस्य विस्तरः, अशब्द इति प्रतिषेधादप्।।९३।।

**छन्दोनाम्नि च।। विष्टार इति निपात्यत इति।** ननु च विष्टर इति प्रकृतम्, तत्कथं विष्टार इति निपात्यते? अत आह—**विपूर्वादिति**।

**भावबोधिनी**

आगे चलने वाला—इस अर्थ में—इसका क्या फल है? हिमवतः पुण्ये प्रस्थे। [ हिमालय की पवित्र चोटी पर—इसमें अग्रगामी अर्थ न होने से षत्व नहीं होता है। इसमें 'घञर्थे कविधानम्' वचन से अधिकरण अर्थ में प्रस्था + क, आलोप हुआ है। ] प्रस्थः व्रीहीणाम्। [ धान्य का एक प्रस्थ = सेर—इसमें षत्व नहीं होता है। ]।।९२।।

वृक्ष और आसन अर्थ वाच्य रहने पर 'विष्टर' यह निपातित होता है। वि उपसर्गपूर्वक स्तृ धातु का षत्व निपातित होता है। उदा॰ विष्टरः वृक्षः। विष्टरम् आसनम्। [ विपूर्वक स्तृ धातु से इसी निपातन के कारण घञ् का अपवाद अप् प्रत्यय अथवा रूढ शब्द मानकर पचादिगणीय अच् प्रत्यय होता है—विस्तृ + अ, गुण, रपर, षत्व, ष्टुत्व होता है। ]

वृक्ष और आसन—इन्हीं अर्थों में—इस का क्या फल है? औलपि-वाक्यस्य विस्तरः [ उलप द्वारा की गयी टीका—औलपी, उसके वाक्य का विस्तर = विस्तार। इसमें षत्व नहीं होता है। ]।।९३।।

छन्द का नाम अर्थ रहने पर 'विष्टार' यह निपातित होता है। वि पूर्वक 'स्तृ' इस धातु से 'छन्दोनाम्नि च' (३।३।३४) इस सूत्र द्वारा किया गया घञ् = अ प्रत्यय है उसके 'विष्टरः' इस रूप का भी यहाँ प्रसङ्ग होने पर 'विष्टारः' ऐसा ही निपातन समझना चाहिये। उदा॰ विष्टारपङ्क्तिः छन्दः। विष्टारो बृहती छन्दः।

---

१. 'विस्तरं वाक्यमाह'—इत्यधिकं क्वचित्।

**छन्दोनाम्नीति किम्। पटस्य विस्तारः।।**

## ३८९१. गवियुधिभ्यां स्थिरः।।९५।। (९६७)

**गवियुधिभ्यामुत्तरस्य स्थिरसकारस्य मूर्धन्यादेशो भवति। गविष्ठिरः। युधिष्ठिरः।**

**गोशब्दादहलन्तादपि एतस्मादेव निपातनात्सप्तम्या अलुग्भवति।।**

### न्यासः

स्त्रोऽयज्ञे' इत्यतः 'स्त्रः' इत्यनुवर्त्तमाने 'प्रथने वावशब्दे' इत्यतो वाविति 'छन्दोनाम्नि च' इतिं स्तृणातेर्घञ् विधीयते। न च घञि विष्टर इत्येतद्रूपमापद्यते। तस्माद् यद्यपि विष्टर इति प्रकृतम्, तथापि निपात्यते। ननु च घञ्यपि विहितेऽस्मादेव निपातनाद् ह्रस्वत्वे कृते विष्टर इति भवत्येव, तत् कथं विष्टार इति शक्यं विज्ञातुम्? 'छन्दोनाम्नि च' इति वचनात्। न हि विष्टर इति छन्दोनाम, किं तर्हि? विष्टार इति।।९४।।

**गवियुधिभ्यां स्थिरः।।** स्थिरशब्दोऽयम् 'अजिरशिशिर' इत्यादिसूत्रेण यदि तिष्ठतेः किरच्प्रत्ययान्तो निपात्यते, तदा 'सात्पदाद्योः' इति प्रतिषेधे प्राप्ते वचनम्। अथाव्युत्पन्नमेव प्रातिपदिकं तदादित एवाप्राप्ते वचनम्। **गविष्ठिरो युधिष्ठर इति**। संज्ञायां समासः। अथ कथं गविष्ठिर इत्यत्र सप्तम्या अलुक, 'हलदन्तात् सप्तम्याः संज्ञायाम्' इति चेत्? न; गोशब्दस्याहलन्तत्वादित्यत आह—**गोशब्दादित्यादि**।।९५।।

### पदमञ्जरी

यदि त्विह छन्दोनाम्नि विष्टार इत्यात्वं क्रियते, घञ्विधौ 'छन्दोनाम्नि च' इति शक्यमकर्त्तुम्, इह वा 'विष्टार' इत्युच्येत, तत्र वा 'छन्दोनाम्नि' इति, को न्वत्र विशेषः, अपर आह—घञ्विधौ वाविति नानुवर्त्तते; तेन प्रस्तारपङ्क्तिः, संस्तारपङ्क्तिरित्यपि भवतीति।।९४।।

**गवियुधिभ्यां स्थिरः।। गविष्ठिरः, युधिष्ठिर इति**। 'संज्ञायाम्' इति सप्तमीसमासः। **गोशब्दादहलन्तादपीति**। यद्यप्यवादेशे कृते सम्प्रति भवति, तथापि उत्पत्तिवेलायामहलन्तत्वान्निपातनमाश्रितम्।।९५।।

### भावबोधिनी

छन्द का नाम रहने पर—इसका क्या फल है? पटस्य विस्तारः। [ वस्त्र की लम्बाई—अर्थ में षत्व नहीं होता है। ]

**विमर्श**—प्रस्तुत सूत्र में छन्दस् शब्द से वेद का नहीं अपितु वृत्तों का ग्रहण होता है क्योंकि प्रस्तुत 'विष्टारपङ्क्ति' एक वैदिक वृत्तविशेष का ही नाम है। यद्यपि यहाँ 'विष्टर' इसका प्रसङ्ग है। अतः 'विष्टारः' यह कैसे कहा जाता है तथापि 'प्रे स्त्रोऽयज्ञे' (३।३।३२) इस सूत्र से 'स्तृ' इसकी अनुवृत्ति और 'प्रथने वावशब्दे' (३।३।३३) सूत्र से 'वि' इसकी अनुवृत्ति करके 'छन्दोनाम्नि' (३।३।३४) इस कृदन्तीय सूत्र से 'स्तृ' धातु से घञ् प्रत्यय करने पर 'विष्टार' यह रूप बनता है। उसी के षत्व का निपातन किया जा रहा है। यद्यपि इस सूत्र के आधार पर 'विष्टर' यह रूप भी कहा जा सकता है तथापि छन्दोविशेष का वाचक 'विष्टर' नहीं अपि तु 'विष्टार' यही शब्द है अतः यही बनाया जाता है।।९४।।

'गवि' और 'युधि' इन से उत्तरवर्ती 'स्थिर' शब्द के सकार का मूर्धन्य आदेश होता है। उदा० गविष्ठिरः। युधिष्ठिरः। [ 'अजिर-शिशिर' (उ.सू. ४२५२) इस औणादिक सूत्र से 'स्था' धातु से किरच् = प्रत्यय, आलोप करने पर 'स्थिर' शब्द निपातित होता है। 'संज्ञायाम्' (६।३।९) सूत्र से समास विभक्ति का अलुक् गवि + स्थिर युधि + स्थिर 'सात्पदाद्योः' (८।३।१०९) सूत्र से षत्व का प्रतिषेध प्राप्त है। प्रस्तुत सूत्र यहाँ षत्व आदेश करता है। फलतः ष्टुत्व के बाद उक्त रूप बनते हैं। ]

[ यद्यपि 'हलदन्तात् सप्तम्याः संज्ञायाम्' (६।३।९) सूत्र हलन्त अथवा अदन्त से सप्तमी का अलुक् करता है तथापि ] इसी निपातन के कारण अहलन्त भी 'गो' शब्द से सप्तमी का अलुक् होता है। [ यद्यपि गो + इ = गव् इ में यह गो हलन्त हो जाता है तथापि मूलरूप में हलन्त न होने से यहाँ निपातन की कल्पना करनी पड़ती है ]।।९५।।

**३८९२. विकुशमिपरिभ्यः स्थलम्।।९६।। (३०८५)**

**वि, कु, शमि, परि–इत्येतेभ्य उत्तरस्य स्थल-सकारस्य मूर्धन्यादेशो भवति। विष्ठलम्। कुष्ठलम्। शमिष्ठलम्। परिष्ठलम्।।**

**३८९३. अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः।।९७।। (२९१८)**

**अम्ब, आम्ब, गो, भूमि, सव्य, अप, द्वि, त्रि, कु, शेकु, शङ्कु, अङ्गु, मञ्जि, पुञ्जि, परमे, बर्हिस्, दिवि, अग्नि–इत्येतेभ्य उत्तरस्य स्थशब्दसकारस्य मूर्धन्यादेशो भवति। अम्बष्ठः। आम्बष्ठः। गोष्ठः।**

**न्यासः**

**विकुशमिपरिभ्यः स्थलम्**।। 'सात्पदाद्योः' इति प्रतषेधे प्राप्ते वचनम्। यथा चैवं तथा 'कपिष्ठलो गोत्रे' इत्यत्र प्रतिपादितम्। **विष्ठलम्, कुष्ठलमिति**। स्थलशब्दः पचाद्यजन्तः, तेन यदा विकुशब्दौ निपातौ समस्येते तदा 'कुगतिप्रादयः' इति समासः। अथानिपातौ पक्षिपृथिवीवचनौ, तदा षष्ठीसमासः। **शमिष्ठलमिति**। शमीनां स्थलमिति समासः। 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति ह्रस्वः। ह्रस्वोचारणं दीर्घपक्षे मा भूदित्येवमर्थम्, अन्यथा हि बहुलवचनाद् दीर्घोऽपि पक्षे विज्ञायेत। **परिष्ठलमिति**। प्रादिसमासः।।९६।।

**अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः**।। येषामत्रोपपदसमासे कृते स्थलशब्द उत्तरपदे सप्तम्या अलुग् भवति, ये चेणन्ताः, तेभ्यः 'इण्कोः' इत्यनेन प्राप्तस्य षत्वस्य पदादिलक्षणप्रतिषेधे प्राप्ते वचनम्। बर्हिःशब्दादपि 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति पदादिलक्षण एव प्रतिषधे

**पदमञ्जरी**

**विकुशमिपरिभ्यः स्थलम्**।। वि, कु, परि—इत्येतेषाम् 'कुगतिप्रादयः' इति समासः, शमीशब्दस्य तु षष्ठीसमासः, 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति ह्रस्वत्वम्। सूत्रे ह्रस्वोच्चारणे ह्रस्वपक्ष एव षत्वं यथा स्यात्। तेन प्रयोगे बहुलवचनाद्यदा ह्रस्वत्वं न भवति, तदा षत्वमपि न भवति।।९६।।

**अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः**।। **स्थशब्दसकारस्येति**। एतेन 'स्थ' इति सूत्रे स्वरूपग्रहणं प्रथमान्तमिति दर्शयति। यदि तु 'आतो धातोः' इति तिष्ठतेराकारलोपं कृत्वा षष्ठ्या निर्देशः स्यात्, तदा गोस्थानम्, भूमिस्थानमित्यादावपि षत्वं स्यादिति भावः। अम्बे तिष्ठत्यम्बष्ठः,

**भावबोधिनी**

वि, कु, शमि और परि—इनसे उत्तरवर्ती 'स्थल' शब्द के सकार का मूर्धन्य आदेश होता है। उदा॰ विष्ठलम्। कुष्ठलम्। शमिष्ठलम्। परिष्ठलम्। [ 'स्थल' यह शब्द पचादिगणीय अजन्त है। वि, कु, परि उपसर्गों की गति संज्ञा करके 'कुगतिप्रादयः' से समास करने पर 'सात्पदाद्योः' (८।३।१०९) से षत्व का प्रतिषेध प्राप्त रहते यह षत्व किया जा रहा है। शमी-स्थल में 'ङ्यापोः संज्ञोच्छन्दसोर्बहुलम्' (६।३।६३) सूत्र से ह्रस्व करने पर शमि + स्थल = शमिष्ठलम् बनता है। सूत्र में ह्रस्व 'शमि' शब्द के ग्रहण के कारण ह्रस्व पक्ष में ही षत्व होता है—'शमीस्थलम्' में नहीं होताहै।]।।९६।।

अम्ब, आम्ब, गो, भूमि, सव्य, अप, द्वि, त्रि, कु, शेकु, शङ्कु, अङ्गु, मञ्जि, पुञ्जि, परमे, बर्हिस्, दिवि, अग्नि—इन अठारह शब्दों से परवर्ती 'स्थ' शब्द के सकार का मूर्धन्य आदेश होता है। उदा॰ अम्बष्ठः। आम्बष्ठः। गोष्ठः। भूमिष्ठः। सव्येष्ठः। [ इसमें 'हलदन्तात् सप्तम्याः' सूत्र से सप्तमी का अलुक् है। ] अपष्ठः। द्विष्ठः। त्रिष्ठः। कुष्ठः। शेकुष्ठः। शङ्कुष्ठः। अङ्गुष्ठः। मञ्जिष्ठः। पुञ्जिष्ठः। परमेष्ठः। बर्हिष्ठः। दिविष्ठः। अग्निष्ठः।

**विमर्श**—सूत्र में 'स्थः' यह क = अ प्रत्ययान्त स्था धातुरूप का अनुकरण है और प्रथमान्त रूप षष्ठ्यर्थ में है। अतः 'स्थः' शब्द के सकार का मूर्धन्य आदेश किया जा रहाहै। इनमें कुछ शब्दों में इण् या कवर्ग से परेनहीं है और कुछ में 'सात्पदाद्योः' सूत्र

**भूमिष्ठः। सव्येष्ठः। अपष्ठः। द्विष्ठः। त्रिष्ठः। कुष्ठः। शेकुष्ठः। शङ्कुष्ठः। अङ्गुष्ठः। मञ्जिष्ठः। पुञ्जिष्ठः। परमेष्ठः। बर्हिष्ठः। दिविष्ठः। अग्निष्ठः।**

**❀ स्थास्थिन्स्थूणामिति वक्तव्यम्। ❀ सव्येष्ठाः। परमेष्ठी। सव्येष्ठृसारथिः।।**

**न्यासः**

प्राप्ते वचनम्। शेषेभ्यस्त्वप्राप्त एव। स्थ इति धातुग्रहणं स्यात्? स्वरुपग्रहणं वा? यदि 'आतो धातोः' इत्याकारलोपं कृत्वा तिष्ठतेः षष्ठ्या निर्देशस्ततो धातुग्रहणम्। अथ सुब्व्यत्ययेन षष्ठ्याः स्थले प्रथमां कृत्वा स्थशब्दस्य कप्रत्ययान्तस्य निर्देशस्तदा स्वरूपग्रहणम्। यदात्र यदि धातोरिह ग्रहणं स्यात्, तदा गोस्थानमित्यादावपि प्रसज्येतेत्यालोच्य स्वरूपग्रहणं दर्शयन्नाह—**इत्येतेभ्य इत्यादि**। उदाहरणेषु गोष्ठ इत्यत्र गोशब्दे प्रथमान्त उपपदे घञर्थे कविधानम्। स्थास्नापाव्यधिहनियुध्यर्थम् 'घञर्थे कविधानम्' इति गावस्तिष्ठन्त्यस्मिन्नित्यधिकरणे कप्रत्ययः। अपतिष्ठतीत्यर्थेऽपष्ठ इत्यत्र 'सुपि स्थः' इति कप्रत्ययः। **आपष्ठ इति क्वचित् पाठः**। तत्र 'अन्येषामपि दृश्यते' इति दीर्घः। अन्यत्रापि सर्वत्र 'सुपि स्थः' इति कप्रत्ययः। यदि कुशब्दो निपातस्तदा प्रथमान्त एतस्मिन्नुपपदे कविधिः, अथानिपातस्तदा सप्तम्यन्ते। अम्बादिषु सप्तम्यन्तेष्वेव। **अम्बष्ठ इति**। 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति ह्रस्वः।

'स्थः' इति स्वरूपग्रहणादन्येषां न प्राप्नोतीतीदमाह—**स्थास्थिन्स्थूणामित्यादि**। एषामपि षत्वं वक्तव्यम्, व्याख्ययेमित्यर्थः। तत्रेदं व्याख्यानम्—सुषामादेराकृतिगणत्वादेषां षत्वं भविष्यतीति। **सव्येष्ठेति**। सव्ये तिष्ठतीति 'दिवेर्ऋः' इत्यनुवर्त्तमाने 'नयतेर्डिच्च' इति डिति च 'सव्ये स्थश्छन्दसि' इति सव्यशब्द उपपदे तिष्ठतेर्ऋप्रत्ययः, डित्त्वाट्टिलोपः, 'तत्पुरुषे' इत्यादिना सप्तम्या अलुक, सव्येष्ठृ इति स्थिते 'ऋदुशनस्पुरोदंशोऽनेहसाम्' इत्यादिनानङ्, 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घः। **परमेष्ठीति**। 'गमेरिनिः' इत्यनुवर्त्तमाने 'परमे स्थः किच्च' इतीनिप्रत्ययः, कित्त्वादालोपः, परमेष्ठिन्निति स्थिते 'सौ च' इति दीर्घः। **सव्येष्ठृसारथिरिति**। पूर्ववत् सव्येष्ठृशब्दं साधयित्वां सारथिशब्देन कर्मधारयः।।९७।।

**पदमञ्जरी**

'सुपि स्थः' इति कप्रत्ययः, 'ङ्यापोः' इति ह्रस्वत्वम्। **आम्बष्ठ इति**। संज्ञेयं जनपदविशेषस्य। **गोष्ठ इति**। 'घञर्थे कविधानम्' इत्यधिकरणे कप्रत्ययः। भूमिष्ठादौ 'सुपि स्थः'। **सव्येष्ठ इति**। 'हलदन्तात्सप्तम्याः' इत्यलुक्।

यदि 'स्थः' इति स्वरूपग्रहणम्, स्थास्थिन्स्थूणां न प्राप्नोतीतीदमाह—**स्थास्थिन्निति**। स्थाशब्दः क्विबन्तः। **सव्येष्ठा इति**। 'ईत्वे वकारप्रतिषेधः' इति वचनात् प्रत्ययलक्षणेनेत्वं न भवति। 'गमेरिनिः' इति वर्त्तमाने 'परमे स्थः किच्च' इति किदिनिप्रत्ययः, परमेष्ठीशब्द इप्रत्ययान्तः बाहुलकादाकारलोपः। सव्ये तिष्ठति सव्येष्ठा सारथिः।।९७।।

**भावबोधिनी**

से निषेध प्राप्त है। उन सभी केलिये यह षत्व किया गया है। सप्तम्यन्त पूर्वपद में कहीं-कहीं सप्तमी का अलुक् भी है। क प्रत्यय अधिकरण अर्थ में 'घञर्थे कविधानम्' इस वचन से होता है। अतः 'स्थः' का अर्थ है—जिसमें रहा जाय। कहीं कहीं सामान्य सुबन्त उपपद मानकर 'सुपि स्थः' सूत्र से भी क प्रत्यय किया जाता है। अतः सर्वत्र एक सा ही अर्थ नहीं देखा जाता है।

❀ (वा॰) स्था, स्थिन् और स्थून्—इनके सकार का मूर्धन्य होता है—ऐसा कहना चाहिये। ❀ उदा॰ सव्येष्ठाः। परमेष्ठी। सव्येष्ठृसारथिः। [ सव्ये तिष्ठति—इस अर्थ में 'सव्ये स्थश्छन्दसि' इस वचन से सव्य उपपद स्था धातु से 'ऋ' प्रत्यय डित् मानने के कारण आ का लोप, समास, विभक्ति का अलुक् 'ऋदुशनस्पुरोदंशोऽनेहसाञ्च' (७।१।९४) सूत्र से ऋ का अनङ्, 'सर्वनामस्थाने चासम्बुद्धौ' (६।४।८) सूत्र से उपधा का दीर्घ, सुलोप, न्लोप सव्येष्ठा। सव्येष्ठा चासौ सारथिः—इस अर्थ में—सव्येष्ठृसारथिः। 'स्था' यह क्विप् प्रत्ययान्त है—'सव्येष्ठाः' में ऐसा पदमंजरीकार मानते है। यहाँ न्यासानुसारी प्रक्रिया लिखी गयी है। परमेष्ठी—इसमें 'स्था' से इन् प्रत्यय होता है। सभी में स् का ष् और ष्टुत्व होता है। ]।।९७।।

## ३८९७. सुषामादिषु च ।।९८।। (१०२२)

**सुषामादिषु शब्देषु सकारस्य मूर्धन्यादेशो भवति। शोभनं साम यस्यासौ सुषामा ब्राह्मणः। दुष्षामा, निष्षामा। निष्षेधः। दुष्षेधः। सुशब्दस्य कर्मप्रवचनीयसंज्ञकत्वान्निर्दुर्शब्दयोश्च क्रियान्तरविषयत्वादनुपसर्गत्वे सति पाठोऽयम्। 'सेधतेर्गतौ' (८।३।११३) इति वा प्रतिषेधबाधनार्थः। सुषन्धिः। दुःषन्धिः। निःषन्धिः। सुष्ठु। दुष्ठु। तिष्ठतेरुणादिष्वेतौ व्युत्पाद्येते।**

**न्यासः**

**सुषमादिषु च**।। क्वचित् षत्वप्रतषेधे प्राप्ते, क्वचिदादित एवाप्राप्ते मूर्धन्यो विधीयते। **सुषामेति**। सामशब्दोऽयम् 'षो अन्तकर्मणि' इत्येतस्मान्मनिन्प्रत्ययं विधाय व्युत्पादितः। तस्य पदादिलक्षणे प्रतिषेधे प्राप्ते तद्बाधनार्थमिह पाठः। **निषामेति**। **दुष्षामेति**। रेफस्य विसर्जनीये कृते यदा 'वा शरि' इति पक्षे सकारः, तदा परस्य षत्वे कृते पूर्वस्य ष्टुत्वम्। ननु च सुषेधादीनां त्रयाणाम् 'उपसर्गात् सुनोति' इत्यादिनैव मूर्धन्यः सिद्धः, तत् किमर्थमिह पठनम्? इत्याह—**सुशब्देत्यादि**। सुशब्दस्य कर्मप्रवचनीयत्वादनुपसर्गत्वे सति सुषेध इति पाठः। निर्दुःशब्दयोस्तु क्रियान्तरविषयत्वादनुपसर्गत्वे सति निःषेधः, दुःषेध इत्ययं पाठ इति संबन्धः कर्त्तव्यः। सुषेधादिषु स्वादीनामुपसर्गत्वं नास्ति, ततो यदि तेषामिह पाठो न क्रियते तदा 'उपसर्गात् सुनाति' इत्यादिनोपसर्गस्थान्निमित्तात् षत्वं विधीयमानं न स्यात्, इष्यते च; तस्मादनुपसर्गान्निमित्तात् षत्वं यथा स्यादित्येवमर्थमेषां सुषेधादीनामिह पाठः। तत्र सुशब्दस्य कर्मप्रवचनीयत्वे सत्युपसर्गसंज्ञा न भवति; एका

**पदमञ्जरी**

**सुषामादिषु च**।। क्वचित् 'सात्पदाद्योः' इति प्रतिषेधे प्राप्ते क्वचिच्चादित एवाप्राप्ते षत्वे सुषामादिषु मूर्धन्यो विधीयते। **दुष्षामेति**। 'विसर्जनीयशर्व्यवायेऽपि' इत्यधिकारादत्र षत्वम्। **सुशब्दस्येत्यादि**। अत्रैवमभिसम्बन्धः—सुदुस्शब्दयोस्तु क्रियाविशेषविषयत्वादनुपसर्गत्वे सति—निषेधः, दुःषेध इति पाठोऽयमिति। तत्र सुशब्दस्य 'सुः पूजायाम्' इति कर्मप्रवचनीयसंज्ञा, सा चोपसर्गसंज्ञाया बाधिका; आकडाराधिकारात्। निर्दुरोरप्युपसर्गत्वाभावः, क्रियान्तरविषयत्वात्। गमिक्रियाविषयौ हि तौ—निर्गतः सेधो निःषेधः, दुर्गतः सेधो दुष्षेध इति। तेन 'उपसर्गात्सुनोति' इत्यादिना नैतेषु षत्वप्राप्तिः। एवं तावत् 'षिधू हिंसासंराद्धयोः' इत्यस्य घञि सेध इति रूपमित्याश्रित्योक्तम्। यदा तु 'षिध गत्याम्' इत्यस्य घञन्तस्य रूपम्? तदाप्याह—**सेधतेर्गताविति प्रतिषेधबाधनार्थं चेति**। सुषन्धिरित्यादौ 'उपसर्गे घोः किः', समः षत्वम्। **उणादिष्वेताविति**। 'पॄभिदिव्यधिधृषिभ्यः कुः' इति वर्तमाने 'अपदुःसुषु स्थः' इति कुप्रत्ययः।

**भावबोधिनी**

सुषामन् आदि शब्दों में सकार का मूर्धन्य आदेश होता है। उदा॰ शोभनं साम यस्य असौ—इस अर्थ में सुषामा [ सुसामन् में षत्व, सु प्रत्यय उपधादीर्घ आदि विभक्ति कार्य होते है। ] दुष्षामा, निष्षामा। [ दुष्टं साम यस्य असौ, निर्गतं साम यस्य यस्माद् वा असौ—सभी में षत्व होता है। निष्षेधः, दुष्षेधः। ] [ निर् + सेध दुर् + सेध, रेफ का विसर्ग, सत्व करने पर सेध का मूर्धन्य होता है, पूर्व स् का ष्टुत्व से षत्व होता है। ] इनमें 'सु' शब्द की ('सुः पूजायाम्' सूत्र से कर्मप्रवचनीय संज्ञा हो जाने से उपसर्ग संज्ञा नहीं रहने से षत्व अप्राप्त था अतः विधान किया गया है। निर् तथा दुर् शब्द अन्यक्रियाविषयक हो जाने से उपसर्ग नहीं रह जाते हैं इसलिये इनका यहाँ पाठ है। अथवा 'सेधतेर्गतौ' (८।३।११३) सूत्र से प्राप्त षत्व के प्रतिषेध का बाध करने के लिये इनका पाठ है। सुषन्धिः। दुःषन्धिः। निःषन्धिः। सुष्ठु। दुष्ठु। स्था धातु से उणादि प्रत्ययों में इन रूपों का व्युत्पादन करना चाहिये। [ सन्धिः—'उपसर्गे घोः कि' से कि = प्रत्यय 'घा' धातु से है। आ का लोप—सम् ध् इ, अनुस्वार, परसवर्ण—सन्धि। सुष्ठु—सु स्था + कु = उ प्रत्यय है। ]

**❀ गौरिषक्थः संज्ञायाम्। ❀ (ग. सू. १७९) 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' (६।३।६३) इति पूर्वपदस्य ह्रस्वत्वम्। प्रतिष्णिका। प्रतिष्णाशब्दादयं कन्प्रत्ययः। जलाषाहम्। नौषेचनम्। दुन्दुभिषेवणम्।**

**न्यासः**

संज्ञेत्यधिकारात्। अनुपसर्गत्वं त्वस्य 'सुः पूजायाम्' इत कर्मप्रवचनीयसंज्ञाविधानात्। निर्दुःशब्दयोस्तूपसर्गत्वाभावः; क्रियान्तरविषयत्वात्। निर्गतः सेधो निष्षेधः, दुर्गतः सेधो दुष्षेध इति—गमिक्रियाविषयौ हि तौ, तस्माद् गमिमेव प्रति तयोरुपसर्गत्वम्, न सेधतिं प्रति; 'यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्ति' इति वचनात्। एवं तावत् 'षिधु संराद्धौ' इत्येतस्य घञि यद्रूपम्—सेध इति, तदा सुषेधादीनामिह पाठोऽनुसर्गार्थः। 'षिध गत्याम्' इति यदा गतौ वर्तमानस्य सेध इत्येतद् भवति, तदा प्रतिषेधबाधनार्थः पाठ इति दर्शयितुमाह—**सेधतेरित्यादि**। अथ वा 'सेधतेर्गतौ' इति प्रतिषेधं वक्ष्यति, स मा भूदित्येवमर्थं एषां पाठः। **सुषन्धिः, निष्षन्धिः, दुष्षन्धिरिति**। एते 'उपसर्गे घोः किः' इति किप्रत्ययान्ताः। तेनैषामनादेशसकारत्वादप्राप्ते षत्वे पाठः। सन्धीयत इति सन्धिः, शोभनः सन्धिरिति प्रादिसमासः-सुषन्धिरिति। एवमन्यत्रापि। **सुष्ठुदुष्ठुशब्दयोस्तु** पदादिलक्षण एव प्रतिषेधे प्राप्ते पाठः। **तिष्ठतेरुणादिष्वेतौ व्युत्पाद्येते इति**। 'कुभ्रश्च' इत्यतः कुग्रहणनुवर्तते। 'मृगय्वादयश्च' इति कुप्रत्ययान्तौ व्युत्पाद्येते।

**गौरिषक्थ इति**। गौरिषक्थशब्दस्य सकारस्य संज्ञायां षत्वं भवति। गौर्याः सक्थीति षष्ठीसमासः। 'अच्प्रत्यन्ववपूर्वात्' इत्यादिसूत्रे अजिति योगविभागादच् समासान्तः। यदा तु बहुव्रीहिः—गौर्या इव सक्थि यस्येति, तदा 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' इति षच्प्रत्ययान्तः। सक्थिशब्दोऽयम् 'असिसञ्जिभ्यां क्थिन्' इति क्थिन्प्रत्ययान्तो व्युत्पाद्यते। तेन प्रतिषेधबाधनार्थो गौरिषक्थशब्दस्य पाठः। अव्युत्पत्तिपक्षे त्वप्राप्त एव षत्वे। **प्रतिष्णिकेति**। अस्यापि प्रतिष्णातीति 'आतश्चोपसर्गे' इति कप्रत्ययः, टाप्, तदन्तात् 'संज्ञायां कन्' 'केऽणः' इति ह्रस्वः, 'प्रत्ययस्थात्' इत्यादिनेत्त्वम्। **जलाषाहमिति**। अनिणन्तार्थः पाठः। अनार्ष पुनरयं लक्ष्यते। तथा हि—सवनादिष्वश्वसनिशब्दग्रहणेन ज्ञापकेनास्य षत्वं प्रतिपादयिष्यते। अपरे त्वश्वसनिशब्दो वा सवनादिज्ञापनार्थः पठितव्यः, इह वा जलाषाहशब्द इति विकल्पदर्शनार्थमिहास्य पाठं समर्थयन्ते। उपलक्षणार्थश्चेतीहास्य पाठः। तेनाश्वषाहमित्यस्यापि पाठो वेदितव्यः। **नौषेचनम्, दुन्दुभिषेवणमिति**। षष्ठीसमासौ। सिचेः, 'षेवृ सेवने' इत्यस्माच्च ल्युटि प्रतिषेधबाधनार्थः पाठः॥

**पदमञ्जरी**

**गौरिषक्थ इति**। 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच्। **प्रतिष्णकेति**। प्रतिपूर्वात्स्नातेः 'आतश्चोपसर्गे' इत्यङ्, तदन्ताट्टाप् ततोऽज्ञातादिषु कः, 'केऽणः' इति ह्रस्वत्वम्, 'प्रत्ययस्थात्' इतीत्वम्। **नौषेचनमिति**। सिचेर्ल्युट्। **दुन्दुभिषेवणमिति**। सेवतेः, सीव्यतेर्वा ल्युट्॥

**भावबोधिनी**

❀ संज्ञा प्रतीत होने पर 'गौरिषक्थ शब्द' होता है। ❀ 'ङ्यापोः संज्ञा-छन्दसोर्बहुलम्' (६।३।६३) सूत्र से पूर्वपद का ह्रस्व होता है। [ गौर्याः सक्थि—यह षष्ठीसमास मानने पर 'समासान्त अच् प्रत्यय है। गौर्याः इव सक्थि यस्य सः—इस बहुव्रीहि मानने पर 'बहुव्रीहौ सक्थ्यक्ष्णौः स्वाङ्गात् षच्' (५।४।११३) सूत्र से षच् प्रत्यय होता है। गौरी + सक्थि में पूर्वपद का ह्रस्व और स का ष होता है। ] प्रतिष्णिका। प्रतिष्णा—इस शब्द से यह कन् प्रत्यय होता है। [ प्रतिपूर्वक 'स्ना' से क + टाप् स् का षत्व, ष्टुत्व, अ का इत्व होता है—'प्रत्ययस्थात् कात् पूर्वस्य इदाप्यसुपः' सूत्र से। ] जलाषाहम्। नौषेचनम्। दुन्दुभिषेवणम्। [ सभी में षत्व होता है। 'जलाषाहम्'—इसके पाठ में मतभेद है। ]

**❀ एति संज्ञायामगात्[१]। ❀ (ग.सू. १८०) एकारपरस्य सकारस्य मूर्धन्यादेशो भवति इण्कोरुत्तरस्यागकारात्परस्य संज्ञायां विषये। हरिषेणः। वारिषेणः। जानुषेणी।**

**एतीति किम्? हरिसक्थम्। संज्ञायामिति किम्? पृथ्वी सेना यस्य स पृथुसेन राजा। अगादिति किम्? विष्वक्सेनः।**

**'इण्कोः' इत्येव–सर्वसेनः।**

**❀ नक्षत्राद्वा[२]। ❀ (ग.सू. १८१) नक्षत्रवाचिनः शब्दादुत्तरस्य सकारस्य वा एति संज्ञायामगकाराद् मूर्धन्यो भवति। रोहिणीषेणः, रोहिणीसेनः। भरणीषेणः, भरणीसेनः।**

**न्यासः**

**एति संज्ञायामित्यादि**। एतत्तद् ग्रहणकवाक्यम्। अस्यैव—**एकारपरस्येत्यादिना विवरणम्**। एकारः परो यस्मादिति बहुव्रीहिः। एतेनैतीत्यस्याः परसप्तमीत्वं दर्शयति। **हरिषेण इति**। हरयः सेना अस्येति बहुव्रीहिः, उपसर्जनह्रस्वत्वम्। **पृथुसेन इति**। 'स्त्रियाः' इत्यादिना पुंवद्भावः। **विष्वक्सेन इति**। विष्वञ्चतीति 'ऋत्विग्' इत्यादिना क्विन्, 'अनिदिताम्' इति नलोपः, 'उगितश्च' इति ङीप्, 'अचः' इत्यकारलोपः, 'चौ' इत दीर्घः। विषूची सेनास्येति बहुव्रीहिः, उपसर्जनह्रस्वत्वम्, 'स्त्रियाः' इत्यादिना पुंवद्भावः, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्, 'झलां जशोऽन्ते' इति जश्त्वम्—गकारः, तस्य 'खरि च' इति चर्त्वम्—ककारः, तस्यासिद्धत्वाद् गकारः॥

**नक्षत्राद्वेति**। पूर्वेण नित्ये प्राप्ते विकल्पोऽयमुच्यत इति।

**पदमञ्जरी**

**एतिसंज्ञायामगादिति गणसूत्रम्**। तद्व्याचष्टे—**एकारपरस्येति**। हरयः सेना अस्य हरिषेणः। परितः सेनास्य परिषेणः। **पृथ्वी सेना यस्येति**। 'स्त्रियाः पुंवत्' इति पूर्वपदस्य पुंवद्भावः।

**नक्षत्राद्वेति**। पूर्वेण नित्ये प्राप्ते विकल्पः। चकारोऽनुक्तसमुच्चयार्थः, आकृतिगणतामस्य सूचयति, तदाह—

**भावबोधिनी**

❀ इण् तथा कवर्ग से उत्तरवर्ती किन्तु गकार से परवर्ती से भिन्न एकारपरक (जिसके बाद एकार है उस) सकार का मूर्धन्य आदेश संज्ञाविषय में होता है। ❀ उदा० हरिषेणः। (हरयः सेना अस्य सः) वारिषेणः। (वारीणि सेना अस्य सः)—इन विग्रहों में बहुव्रीहि समास उपसर्जनह्रस्व, स् का ष्, फलतः णत्व भी होता है) जानुषेणी। [ जानुः सेना अस्याः सा—इस अर्थ में पूर्ववत् कार्य होते हैं स्त्रीलिङ्ग में ङीप् होता है। ]

एकारपरक—इसका क्या फल है? हरिसक्थम्। [ यहाँ सब निमित्त हैं किन्तु स के बाद एकार नहीं है। अतः षत्व नहीं होता है। ] संज्ञाविषय में—इसका क्या फल है? पृथ्वी सेना अस्य सः—पृथुसेनः राजा। [ यहाँ बहुव्रीहि में 'स्त्रियाः पुंवद्भाषित-पुंस्क'—सूत्र से 'पृथ्वी' का पुंवद्भाव होता है। ] यहाँ संज्ञा = रूढ शब्द नहीं है। अतः षत्व नहीं होता है। ] गकार से परे न हो—इसका क्या फल है? विष्वक्सेनः। (विषूची सेना अस्य—इस अर्थ में, उपसर्जन का ह्रस्व, 'स्त्रियाः पुंवद्भाव' से पुंवद्भाव 'विष्वच् सेन' 'क्विन् प्रत्ययस्य कुः' से च् का कुत्व = क्, 'झलां जशोऽन्ते' से जश्त्व से ग्, पुनः 'खरि च' से चर्त्व से ककार होता है किन्तु यह असिद्ध हो जाता है अतः गकार मिलने से परवर्ती स् का मूर्धन्य नहीं होता है। ]

इण् तथा कवर्ग से परवर्ती का ही षत्व होता है—इससे सर्वसेनः। [ यहाँ मूर्धन्य नहीं होता है। ]

❀ नक्षत्रवाची शब्द से उत्तरवर्ती सकार का एकार परे रहते संज्ञाविषय में विकल्प से मूर्धन्य होता है किन्तु गकार से परवर्ती स् को छोडकर। ❀ उदा० रोहिणीषेणः, रोहिणीसेनः। भरणीषेणः, भरणीसेनः। [ रोहिणी सेना यस्य सः' इस अर्थ में बहुव्रीहि, उपसर्जन का ह्रस्व, प्रस्तुत वचन से षत्व के बाद णत्व होता है। षत्वाभावपक्ष में णत्व भी नहीं होता है। ]

१. गणसूत्रमिदं मुद्रितकाशिकायां सिद्धान्तकौमुद्यादिषु चाष्टाध्यायीसूत्ररूपेण पठितम्, तत्तु न्यास-पदमञ्जरीविरुद्धम्।

२. इदं गणसूत्रमेव न त्वष्टाध्यायीसूत्रमिति बोध्यम्।

**अगकारादित्येव–शतभिषक्सेनः। अविहितलक्षणो मूर्धन्यः सुषामादिषु द्रष्टव्यः।।**

## ३८९५. ह्रस्वात्तादौ तद्धिते।।९९।। (१३२५)

**ह्रस्वादुत्तरस्य सकारस्य मूर्धन्यादेशो भवति तादौ तद्धिते परतः। तरप्, तमप्, तय, त्व, तल्, तस्, त्यप्–एतानि प्रयोजयन्ति। तरप्–सर्पिष्टरम्, यजुष्टरम्। तमप्–सर्पिष्टमम्, यजुष्टमम्। तय–चतुष्टये ब्राह्मणानां निकेताः। त्व–सर्पिष्ट्वम्, यजुष्ट्वम्। तल्–सर्पिष्टा, यजुष्टा। तस्–सर्पिष्टः, यजुष्टः। त्यप्–'आविष्ट्यो वर्द्धते'। (ऋ.१।९५।५)**

**न्यासः**

सूत्रे[१] चकारोऽनुक्तसमुच्चयार्थः, स चाकृतिगणतां सुषामादेर्बोधयतीत्यत आह—**अविहितलक्षण इत्यादि**।।९८।।

**ह्रस्वात् तादौ तद्धिते**।। 'अपदान्तस्य' इत्यधिकारात् पदान्तेऽप्राप्ते मूर्धन्ये सतीदमारभ्यते। येषु तकारादिषु तद्धितेषु मूर्धन्येन भवितव्यम्, तान् दर्शयितुमाह—**तरप्तमपावित्यादि**। **सर्पिष्टरमिति**। 'द्विवचनविभज्योपपदे' इत्यादिना तरप्, प्रकृतिसकारस्य रुत्वम्, विसर्जनीयः, तस्यापि 'विसर्जनीयस्य सः' इति सकारः, तस्यानेन षत्वम्, ष्टुत्वम्। **सर्पिष्टममिति**। 'अतिशायने' इत्यदिना तमप्। **चतुष्टय इति**। 'संख्याया अवयवे तयप्', तदन्ताज्जस्, सप्तम्येकवचनं वा। यदा जस् तदा 'जशः शीः' इति शीभावः। क्वचित् **चतुष्टयीति पाठः**,। तत्र हि 'टिड्ढाणञ्' इति ङीप्। **सर्पिष्ट्वम्, सर्पिष्टेति**। 'तस्य भावस्त्वतलौ'। **सर्पिष्ट इति** प्रयोगे 'पञ्चम्यास्तसिल्' इत्यनुवर्त्तमाने 'अपादाने चाहीयरुहोः' इति तसिल्प्रत्ययः। **आविष्ट्य इति**। आविःशब्दाद् भवादावर्थे 'अव्ययात्

**पदमञ्जरी**

**अविहितलक्षण** इति।।९८।।

**ह्रस्वात्तादौ तद्धिते**।। 'अपदान्तस्य' इत्यधिकारादप्राप्तं षत्वं विधीयते, तरबादय एव तावत्तद्धिताः सम्भवन्तीत्याह—**तरप्तमबिति**। **सर्पिष्टरमिति**। सर्पिर्जातेः प्रकर्षाभावेऽपि सहचारिणो गुणस्य गन्धादेः प्रकर्षे प्रत्ययः। **चतुष्टय इति**। 'जसः शी'। **सर्पिष्ट इति**। प्रतिप्रयोगे पञ्चम्यास्तसिः। **आविष्ट्य इति**। अव्ययात्त्यप्' इत्यत्राविःशब्दात् 'छन्दसि' इति वचनात्त्यप्।।

**भावबोधिनी**

गकार से परवर्ती का नहीं होता है—शतभिषक्सेनः। [ यहाँ भी चर्त्व असिद्ध हो जाने से गकार से परे स है अतः षत्व नहीं होता है। ] अविहितलक्षणवाले मूर्धन्य को सुषामादिगण में देखना चाहिये। [ भाव यह है कि जिन शब्दरूपों में षत्व मिलता है किन्तु किसी लक्षण = सूत्र से उसका विधान नहीं किया गया है, या असम्भव है ऐसे शब्द सुषामादिगण में पढ़े समझने चाहिये। अतः यह आकृतिगण है। अविहितः लक्षणेन मूर्धन्यः यस्य सः—यह व्युत्पत्ति उद्योतकार ने की है। ]।।९८।।

ह्रस्व से उत्तरवर्ती सकार का मूर्धन्य आदेश तकारादि तद्धित प्रत्यय परे रहते होता है। तरप्, तमप्, तयप्, त्व, तल्, तस्, त्यप्—इनमें इसका प्रयोजन है। क्रमशः उदा॰ सर्पिष्टरम्, यजुष्टरम्। तमप्—सर्पिष्टमम्, यजुष्टमम्। [ दो के मध्य में प्रकर्ष सूचित करने के लिये तरप् और बहुतों के मध्य में प्रकर्ष सूचित करने के लिये तमप् प्रत्यय होते हैं। यद्यपि सर्पिः जाति का प्रकर्ष सम्भव नहीं है तथा तद्गत गुण = गन्ध आदि का प्रकर्ष मानकर प्रत्यय होता है। इनमें 'अपदान्तस्य मूर्धन्यः' वचन के कारण षत्व अप्राप्त है इसीके लिये यह सूत्र बनाया गया है। ] तय—चतुष्टये ब्राह्मणानां निकेताः। ('संख्याया अवयवे तयप्' सूत्र से तय्प् होता है।) त्व—सर्पिष्ट्वम्, यजुष्ट्वम्। तल्—सर्पिष्टा, यजुष्टा। [ तलन्त स्त्रीलिङ्ग होने से टाप् होता है। ] तस्—सर्पिष्टः, यजुष्टः। [ 'पञ्चम्यास्तसिल्' सूत्र से तसिल् = तस् प्रत्यय पञ्चम्यर्थ में होता है। ] त्यप्—आविष्ट्यो वर्धते। [ आविस् शब्द से भव आदि अर्थो में तयप् प्रत्यय 'अव्ययात्त्यप्' वचन से होता है। ]

---

१. 'सुषामादिषु च' इत्यत्रेत्यर्थः।

**ह्रस्वादिति किम्? गीस्तरा, धूस्तरा। तादाविति किम्? सर्पिस्साद्भवति। प्रत्ययसकारस्य 'सात्पदाद्योः' (८।३।१०९) इति सत्यपि प्रतिषेधे प्रकृतिसकारस्य स्यात्।**

**तद्धित इति किम्? सर्पिस्तरति।**

**❀ तिङन्तस्य प्रतिषेधो वक्तव्यः। ❀ भिन्द्युस्तराम्। छिन्द्युस्तराम्।।**

**न्यासः**

त्यप्'। ननु च 'अमेहक्वतसित्रेभ्यस्त्यब्विधिरव्ययात् स्मृतः' इति तत्र परिगणयति, तत् कथमाविःशब्दात् त्यप्? नैष दोषः, अल्पाच्वतरत्वात् कुशब्दस्य त्रशब्दस्य वा पूर्वनिपाते कर्त्तव्ये तदकरणाल्लक्षणव्यभिचारं दर्शयता सूचितं व्यभिचार्येव तत् परिगणनम्, तेनाविःशब्दादपि भवति।

**सर्पिस्सादिति**। 'विभाषा साति कार्त्स्न्ये, इति सातिः। ननु च 'सात्पदाद्योः' इति वक्ष्यमाणात् प्रतिषेधादेव मूर्धन्यो न भविष्यति, तत्किं तन्निवृत्त्यर्थेन 'तादौ' इत्यनेन। इत्य आह—**प्रत्ययषकारस्येत्यादि**। सादित्यनेन हि सात्प्रत्ययस्य यः सकारः, यश्च पदादिलक्षणस्तयोः षत्वं प्रतिषिध्यते; न तु सात्प्रत्ययात् पूर्वस्य प्रकृतिसकारस्य। ततो यदि 'तादौ' इति नोच्येत, तदा प्रत्ययसकारस्याषत्वे प्रकृतिसकारस्य स्यादेव। तस्मिंश्च सति ष्टुत्वं प्रत्ययसकारस्यापि स्यात्।

**वक्तव्य इति**। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यनम्—इहादिग्रहणं न कर्त्तव्यम्, 'यस्मिन् विधिस्त-दादावल्ग्रहणे' इत्येवं हि तादौ भविष्यति, तत् क्रियते—ग्रन्थाधिक्यादर्थाधिक्यं सूचयतीति तिङन्तस्य प्रतिषेधो यथा स्यादित्येवमर्थम्। अथ वा—'न रपर' इत्यादौ 'न' इति योगविभागः करिष्यते, तेन तिङन्तस्य न भवतीति। अस्मिंस्तु व्याख्याने आदिग्रहणं विस्पष्टार्थम्। **भिन्द्युस्तराम्, छिन्द्युस्तरामिति**। भिदिच्छिदिभ्यां लिङ्, यासुट्, 'झेर्जुस्' 'लिङः सलोपः' इत्यादिना सलोपः; 'उस्यपदान्तात्' इति पररूपत्वम्, 'श्नसोरल्लोप' इत्यकारलोपः, 'तिङश्च' इति तरप्, 'किमेत्तिङव्यय' इत्यादिनामुप्रत्ययः।।९९।।

**पदमञ्जरी**

**सर्पिः स्यादिति**। 'विभाषा सातिः कार्त्स्न्ये'। ननु च 'सात्पदाद्योः' इति प्रतिषेधादेवात्र षत्वं न भविष्यति? इत्यत आह—**प्रत्ययसकारस्येति**।

**भिन्द्युस्तराम्, छिन्द्युस्तरामिति**। भिदिछिदिभ्यां लिङ्, झेर्जुसि यासुट्, 'तिङश्च' इति तरप्, 'किमेत्तिङव्ययघात्' इति आमुप्रत्ययः।

आदिग्रहणं शक्यमकर्तुम्, 'ति' इत्येव 'यस्मिन्विधिस्तदादावल्ग्रहणे', पुंसः प्रतिषेधः, पुंस्त्वम्, पुंस्ता ।।९९।।

**भावबोधिनी**

ह्रस्व से परे ही षत्व होता है—इसका क्या फल है—गीस्तरा, धूस्तरा। [ गिर् तथा धुर् शब्दों से प्रकर्ष अर्थ में तरप् है किन्तु प्रक्रियावश दीर्घ हो जाने से स् का ष् नहीं होता है। ] तकारादि तद्धित परे—इसका क्या फल है? सर्पिस्साद्भवति। [ इसमें 'विभाषा साति कार्त्स्न्ये' सूत्र से 'साति' तद्धित प्रत्यय होता है। यह तकारादि नहीं है। अतः षत्व नहीं होता है। ] यहाँ यद्यपि 'सात्पदाद्योः' (८।३।१०९) सूत्र से प्रत्यय (साति) के सकार के षत्व का प्रतिषेध हो जाता है। तथापि प्रकृति 'सर्पिस्' के स् का ष् होने लगता। [ इसी को रोकने के लिये 'तादौ' का ग्रहण किया गया है। ]

तद्धित परे रहने पर—इसका क्या फल है? सर्पिस्तरति। [ यहाँ धातु परवर्ती होने से षत्व नहीं होता है। ]

❀ तिङन्त स के षत्व का प्रतिषेध कहना चाहिये। ❀ भिन्द्युस्तराम्. छिन्द्युस्तराम्। [ भिद् तथा छिद् से प्रथम पुरुष बहुवचन के रूप हैं। तरप् प्रत्यय परे है। तिङन्त के स् का षत्व नहीं होता है। ]।।९९।।

## ३८९६. निसस्तपतावनासेवने।।१००।। (२४०३)

**निसः सकारस्य मूर्धन्यादेशो भवति तपतौ परतोऽनासेवनेऽर्थे। आसेवनम् = पुनःपुनः करणम्। निष्टपति सुवर्णम्। सकृदग्निं स्पर्शयतीत्यर्थः।**

**अनासेवन इति किम्? निस्तपति सुवर्णं सुवर्णकारः। पुनः पुनरग्निं स्पर्शयतीत्यर्थः। 'निष्टप्तं रक्षः, निष्टप्ता अरातय' (वा.सं.१।७) इत्यत्र सदप्यासेवनं न विवक्ष्यते। छान्दसो वा वर्णविकारः।**

## ३८९७. युष्मत्तत्ततक्षुःष्वन्तःपादम्।।१०१।। (३६४०)

**युष्मत्, तत्, ततक्षुस्–इत्येतेषु तकारादिषु परतः सकारस्य मूर्धन्यादेशो भवति स चेत् सकारोऽन्तःपादं भवति। युष्मदादेशः–त्वम्, त्वाम्, ते, तव। त्वम्–अग्निष्ट्वं नामासीत्। त्वा–अग्निष्ट्वा**

### न्यासः

**निसस्तपतावनासेवने**।। अयमपि पदान्तार्थ आरम्भः। **निष्टपतीति**। 'तप धूपसन्तापे'। रुत्वे विसर्जनीयः, 'विसर्जनीयस्य सः', तस्य मूर्धन्यः, ष्टुत्वम्। अथेह निष्टप्तं—रक्षः, निष्टप्ता अरातय इति निष्ठान्ते तपतौ कस्मान्न भवति, अस्ति ह्यत्रासेवनमिति? अत आह—**निष्टप्तमित्यादि**। न हीह वस्तुनः सत्तैव शब्दव्युत्पत्तेः प्रधानं कारणम्, अपि तु तद्विवक्षा। न चेहासेवनविवक्षास्तीति भवति मूर्धन्यः। यदि तर्ह्यासेवनं विवक्ष्यते तदा न भवितव्यं मूर्धन्येनेत्यत आह—**च्छान्दसो वेत्यादि**। सभावे कृते 'व्यत्ययो बहुलम्' इति पुनः षकारः।।१००।।

**युष्मत्तत्ततक्षुष्वन्तःपादम्**।। अयमपि पदान्तार्थ आरम्भः। **अन्तःपादमिति**। पादस्य मध्ये। विभक्त्यर्थेऽव्ययीभावसमासः। पादग्रहणेन ऋक्पादश्लोकपादयोः सामान्येन ग्रहणम्। तकारादित्वं त्विह युष्मद एव

### पदमञ्जरी

**निसस्तपतानासेवने**।। निस्तप्तं रक्षः, **निस्तप्ता अरातय इत्यत्रेति**। एवमपि कस्याञ्चिच्छाखायां पाठमुपलभ्य परिहार उच्यते। **तैत्तिरीयकास्तु** षत्वमेव पठन्ति।।१००।।

**युष्मत्तत्ततक्षुःष्वन्तःपादम्**।। ततक्षुःष्विति सकारान्तानुकरणात्परस्य सुप्सकारस्य 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति षत्वम्। **तकारादिष्विति**। एतद्युष्मद एव विशेषणम्; इतरयोरव्यभिचारात्। **त्वं त्वा इत्यादि**। एतेषामेव सम्भव इत्यर्थः।

### भावबोधिनी

निस् के सकार का मूर्धन्य आदेश 'तपति' परे रहते अनासेवन अर्थ में होता है। आसेवन = बार-बार करना। उदा॰ निष्टपति सुवर्णम्। एक बार आग में डालता है। [ निस् + तपति, षत्व के कारण ष्टुत्व होता है। ]

आसेवन से भिन्न में—इसका क्या फल है? निस्तपति सुवर्णं सुवर्णकारः। सुनार सोने को बार बार आग का स्पर्श कराता है, आगमें डालता है। [ यहाँ आसेवन अर्थ है अनासेवन नहीं। अतः षत्व नहीं होता है। ] निष्टप्तं रक्षः, निष्टप्ता अरातयः—इनमें आसेवन अर्थ रहने परभी विवक्षित नहीं है। [ अतः षत्व होता है। ] अथवा वैदिक प्रयोग में वर्णविकार = षत्व ष्टुत्व बहुलरूप से होता है।।१००।।

युष्मत्, तत्, ततक्षुस्—इन शब्दों के तकारादि रूप परे रहते पूर्ववर्ती स् का मूर्धन्य आदेश होता है यदि वह स् पाद के

**वर्धयामसि। ते–'अग्निष्टे (आप.गृ. ४।१०।१७)–विश्वमानय'। तव–'अप्स्वग्ने सधिष्टव'। (ऋ. ८।४३।९) तत्–'अग्निष्टद्विश्वमापृणाति'। (ऋ. १०।२।४) ततक्षुस्–'द्यावापृथिवी निष्टतक्षुः'। (ऋ.१०।३१।७)**

**अन्तःपादमिति किम्? 'यन्मे आत्मनो मिन्दाभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणिः (तै.सं.३।२।५।४)।।**

**३८९८. यजुष्येकेषाम्।।१०२।। (३६४१)**

**यजुषि विषये युष्मत्तत्ततक्षुःषु परत एकेषामाचार्याणां मतेन सकारस्य मूर्धन्यादेशो भवति। अर्चिभिष्ट्वम्, अर्चिभिस्त्वम्। 'अग्निष्टेऽग्रम्, अग्निस्तेऽग्रम्'। (तै.३।५।६।२) अग्निष्टत्, (तै.१।१।१४।५) अग्निस्तत्'। (तै. ३।२।५।४) अर्चिर्भिष्टतक्षुः। अर्चिर्भिस्ततक्षुः।।**

**३८९९. स्तुतस्तोमयोश्छन्दसि।।१०३।। (३६४२)**

**न्यासः**

विशेषणम्, नेतरयोः; अव्यभिचारात्। युष्मच्छब्दस्यापि त्वादिष्वादेशेषु तकारादित्वं भवतीत्यत आह—**युष्मदादेशा इत्यादि। अग्निष्ट्वमिति।** 'त्वाहौ सौ' इति त्वादेशः, 'ङे प्रथमयोरम्' इति सोरम्भावः, 'शेषे लोपः'। **अग्निष्ट्वमति।** 'त्वामौ द्वितीयायाः' इति द्वितीयान्तस्य त्वादेशः' **अग्निष्ट इति।** 'तेमयावेकवचनस्य' इति षष्ठ्यन्तस्य तयादेशः। **अग्निष्टवेति।** 'तवममौ ङसि' इति तवदेशः, 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यशभावः। **अग्निष्टदिति।** तच्छब्दोऽयं निपातः, सर्वनाम वा। **निष्टतक्षुरिति।** तक्षेर्लिट्, उस्।

**अग्निस्तत् पुनरिति।** अग्निशब्दोऽत्र पूर्वपादस्यान्ते वर्तते, तेनायं सकारः पादस्यान्ते वर्तते, न पादमध्ये।।१०१।।

**यजुष्येकेषाम्।। यजुषीति।** यजुर्वेदे। अत्र पादा न सम्भवन्तीति। पूर्वेण नाप्राप्ते षत्वमिदमारभ्यते। एकेषांग्रहणं विकल्पार्थम्।।१०२।।

**स्तुतस्तोमयोश्छन्दसि।।** 'सात्पदाद्योः' इति प्रतिषेधे प्राप्तेऽस्यारम्भः।

**पदमञ्जरी**

**अग्निस्तत्पुनराहेति।** अग्निरित्ययं पूर्वस्य पादस्यान्तः—यन्म आत्मनो मिन्दाभूदग्निरिति; तेनायं पादान्ते सकारः, न पादमध्ये।।१०१।।१०२।।

**स्तुतस्तोमयोश्छन्दसि।। पूर्वपदादित्येव सिद्ध इति।** पूर्वपदमिति सामान्येन तत्राश्रीयते, न तु समासावयव

**भावबोधिनी**

मध्य में है तो। उदा॰ युष्मद् के आदेशभूत रूप—त्वम्, त्वाम्, ते, तव। [ ये ही तकारादि हैं। ] त्वम्—अग्निष्ट्वं नामासीत्। (अग्निस् + त्वम्)। त्वा—अग्निष्ट्वा वर्धयामसि। [ अग्निस् त्वा ] ते—अग्निष्टे विश्वमानय। [ अग्निस् ते ] तव—अप्स्वग्ने सधिष्टव। [ सधिस् तव ] तत्—अग्निष्टद् विश्वमापृणाति। [ ततक्षुस्—द्यावापृथिवीनिष्टतक्षुः ] [ निस् ततक्षुः ]

पाद के मध्य में—इसका फल है? यन्म आत्मनो मिन्दाभूदग्निस्तत्पुनराह जातवेदा विचर्षणिः। [ यहाँ अग्निस् शब्द पूर्वपाद के अन्त में है मध्य में नहीं। अतः षत्व, ष्टुत्व नहीं होता है। परवर्ती 'तत्' को मानकर षत्व, ष्टुत्व नहीं होते हैं। ]।।१०१।।

यजुर्वेद के विषय में युष्मत् (के आदेशभूत तकारादिरूप), तत्, ततक्षुस्—इनके परे रहते कुछ आचार्यों के मत में सकार का मूर्धन्य आदेश होता है। [ फलतः अन्यों के मत में नहीं होने से विकल्प सिद्ध होता है। ] उदा॰ अर्चिभिष्ट्वम्, अर्चिभिस्त्ववम्। [ अर्चिभिस् + त्वम् ] अग्निष्टेऽग्रम्, अग्निस्तेऽग्रम्। [ अग्निस् + ते ] अग्निष्टत्, अग्निस्तत्। [ अग्निस् + तत् ] अर्चिभिष्टतक्षुः, अर्चिभिस्ततक्षुः। [ अर्चिभिस् + ततक्षुस्। तक्ष् धातु लिट् लकार प्रथमपुरुष बहुवचन उस् प्रत्यय का रूप—ततक्षुस् है। ]।।१०२।।

'एकेषाम्' = कुछ आचार्यों के मत से'—इसकी अनुवृत्ति होती है। वेदविषय में 'स्तुत' और 'स्तोम' इन शब्दों के सकार का मूर्धन्य आदेश कुछ आचार्यों के मत में होता है। उदा॰ त्रिभिःष्टुतस्य, त्रिभिः स्तुतस्य। गोःष्टोमं षोडशिनम्, गोःस्तोमं षोडशिनम्।

**'एकेषाम्' इति वर्त्तते। स्तुत, स्तोम-इत्येतयोः सकारस्य छन्दसि विषये मूर्धन्यादेशो भवति एकेषामाचार्याणां मतेन। त्रिभिष्टुतस्य, त्रिभिस्तुतस्य। गोष्टोमं (तै.सं. ७।४।११।१) षोडशिनम्, गोस्तोमं षोडशिनम्। (आप.श्रौ. २३।१२।१८)**

**'पूर्वपदात्' इत्येव सिद्धे प्रपञ्चार्थमिदम्।।**

## ३९००. पूर्वपदात्।।१०४।। (३६४३)

**'छन्दसि' इति वर्त्तते, 'एकेषाम्' इति च। पूर्वपदस्थान्निमित्तादुत्तरस्य सकारस्य मूर्धन्यादेशो भवति छन्दसि विषये एकेषामाचार्याणां मतेन। 'द्विषन्धिः' (मै. ३।८।२) द्विसन्धिः। 'त्रिषन्धिः', (मै. ३।८।२) त्रिसन्धिः। मधुष्ठानम्, मधुस्थानम्। 'द्विषाहस्रं चिन्वीत' (तै. ५।६।८।२), द्विसाहस्रं चिन्वीत।**

### न्यासः

ननु चोत्तरसूत्रेणैव नृभिःष्टुतम्, गोभिःष्टोममित्यत्र षत्वं सिध्यति, तत् किमर्थमिदमारभ्यते? स्यादेतत्—समासे सत्येतद् भवति पूर्वपदम्, उत्तरपदमिति, न चात्र समासः, तस्मात् पूर्वपदादित्युत्तरेण न सिध्यतीति? एतच्चासम्यक्; असमासे यत् पूर्वपदं तदपि तत्रापि गृह्यते। वक्ष्यति—'असमासे यदपि पूर्वपदं तदपि गृह्यते' इति? अत आह—**पूर्वपदादित्येवेत्यादि**।।१०३।।

**पूर्वपदात्**।। **द्विषन्धिरिति**। षष्ठीत्पुरुषः, बहुव्रीहिर्वा। **मधुष्ठानमिति**। षष्ठीसमासः। **द्विषाहस्रमिति**। द्वयोः सहस्रयोर्भवति तद्धितार्थ समासः, 'तत्र भवः' इत्यण्, 'संख्यायाः संवत्सरसंख्यस्य च' इत्युत्तरपदवृद्धिः। अथेह कथं षत्वम्—त्रिः षमृद्धत्वायेति; यावता समासे यत् पूर्वपदं तत्र पूर्वपदशब्दो रूढः; न चायं समासः, किं तर्हि?

### पदमञ्जरी

एवेति वाक्येऽपि तेनैव सिद्धं षत्वमिति भावः। ततश्च स्तुतस्तोमग्रहणं प्रपञ्चार्थम्। छन्दोग्रहणं तूत्तरार्थं कर्त्तव्यमेव।।१०३।।

**पूर्वपदात्**।। **असमासेऽपीति**। एतच्च सवनादिषु 'सवनेसवने' इत्यादीनां पाठादेवावसीयते।।१०४।।

### भावबोधिनी

यहाँ 'त्रिभिः स्तुतः' में 'स्तुत' के स् का मूर्धन्य होता है पूर्ववर्ती विसर्ग का रेफ, त्रिभिःष्टुतः, पक्ष में त्रिभिःस्तुतः—ये ही रूप होने चाहिये। एक षकार और एक सकार का रूप समीचीन नहीं प्रतीत होता है। इसी लिये न्यासकार ने 'नृभिःष्टुतम्, गोभिःष्टोमम्' रूपों में अग्रिम सूत्र से ही षत्व की उपपत्ति की शंका की है। अतः काशिका के अधिकांश प्रकाशित पाठ = त्रिभिष्टुतम्, गोष्टोमम् शुद्ध नहीं है। विसर्ग का सत्व और ष्टुत्व करने पर दो षकार वाले—'त्रिभिष्ष्टुतस्य' तथा दो सकारवाले—'त्रिभिस्स्तुतस्य' रूप होने चाहिये। ष् और ष् का वैकल्पिक लोप मानकर एक षवाले और एक सवाले रूप भी हो सकते हैं। ]

'पूर्वपदात्' (८।३।१०४) इस परवर्ती सूत्र से ही प्रस्तुत लक्ष्यों में षत्व के सिद्ध रहते यह सूत्र प्रपञ्चार्थ ही है। [ इसमें 'छन्दसि' इतना अंश अग्रिम सूत्र में अनुवृत्ति के लिये समझना चाहिये। ]।।१०३।।

'छन्दसि' तथा 'एकेषाम्' (वेदमें' तथा 'कुछ आचार्यों के मत से')—इनकी अनुवृत्ति होती है। पूर्वपद में स्थित निमित्त से परवर्ती सकार का मूर्धन्य आदेश वेदविषय में कुछ आचार्यों के मत से होता है। [ फलतः दूसरों के मत से नहीं होने के कारण विकल्प होता है। ] उदा० द्विषन्धिः, द्विसन्धिः। त्रिषन्धिः, त्रिसन्धिः। [ इनमें षष्ठीतत्पुरुष-द्वयोः सन्धिः अथवा बहुव्रीहि—द्वौ सन्धी यस्य, त्रयः सन्धयः यस्य—ये बहुव्रीहि है। विकल्प से मूर्धन्य होता है। ] मधुष्ठानम्, मधुस्थानम्। द्विषाहस्रं चिन्वीत, द्विसाहस्रं चिन्वीत। [ द्वयोः सहस्रयोर्भवति—इस अर्थ में 'तत्र भवः' से अण्, आदिवृद्धि। ]

**असमासेऽपि यत्पूर्वपदं तदपीह गृह्यते। 'त्रिः षमृद्धत्वाय' (ऐ.ब्रा. २।१६), त्रिः समृद्धत्वाय।।**

**३९०१. सुञः।।१०५।। (३६४४)**

**'सुञ्' इति निपात इह गृह्यते, तस्य पूर्वपदस्थान्निमित्तादुत्तरस्य मूर्धन्यादेशो भवति छन्दसि विषये। 'अभी षु णः सखीनाम्।' (४।३१।३) 'उर्ध्व ऊ षु णः ऊतये' (ऋ.१।३६।१३)। [ 'इकः[1] सुञि' (६।३।१३४) इति दीर्घः। 'नश्च धातुस्थोरुषुभ्यः' (८।४।२७) इति णत्वम्[2]।। ]**

**३९०२. सनोतेरनः।।१०६।। (३६७५)**

**न्यासः**

वाक्यम्? इत्यत आह— **असमासेऽपीत्यादि**। कथं पुनरेतल्लभ्यते? व्यवस्थावचनस्येह पूर्वपदस्याश्रयणात्। यथैव हि पूर्वशब्दो लोके रूढिमादाय क्वचित् तु समुदाये वर्त्तते—पूर्वपञ्चाला इति, क्वचिद् व्यवस्थायाम्—अस्मात् पूर्व इति वा; शास्त्रेऽपि। तत इह व्यवस्थाशब्दो गृह्यते। कुतः? व्याप्तेः। रूढिशब्द एव गृह्यमाणे समास एव स्यात्, नासमासे। व्यवस्थाशब्दे तु सर्वत्र भवति।।१०४।।

**सुञः**।। पूर्वपदात्' इत्येवं सिद्धे प्रपञ्चार्थमिदम्। **सुञ् इति निपातो गृह्यत इति**। अथ 'षुञ् अभिषवे' इति धातुः कस्मान्न गृह्यते? एवं मन्यते—यत्रास्य धातोर्ग्रहणमिच्छति तत्र शितपानिर्देशं करोति। शैलीयमाचार्यस्य, यथा—'उपसर्गात् सुनोति' इत्यत्र 'सुनोतेः स्यसनोः' इत्यत्र च। तदिहापि यदि धातोर्ग्रहणमभीष्टं स्यात्, शितपानिर्देशं कुर्यात्, नैव कृतम्, अतो निपातस्येदं ग्रहणमवसीयते। **अभीषुण इति**। षष्ठीबहुवचनस्यास्मच्छब्दस्य 'बहुवचनस्य वस्नसौ' इति नस्, 'इकः सुञि' इति दीर्घः' 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम्।।१०५।।

**सनोतेरनः**।। **अन इति**। अविद्यमानो नकारोऽस्येत्यर्थः। **गोषा इति**। 'षणु दाने'। गां सनोतीति 'जनसनखनक्रमगमो विट्', 'विड्वनोरनुनासिकस्यात्' इत्यात्त्वम्। **गौसनिमिति**। 'स्तम्बशकृतोरिन्' इत्यत इन्नत्यनुवर्त्तमाने 'छन्दसि वनसनरक्षिमथाम्' इतीन्प्रत्ययः।

**पदमञ्जरी**

**सुञः**।। **अभी षुण इति**।। 'इकः सुञिः' इति दीर्घत्वम्, 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम्। क्वचित्तु वृत्तावेवैत्पठ्यते।।१०५।।

**सनोतेरनः**।। **गोषा इति**। 'जनसनखनक्रमगमो विट्', 'विड्वनोरनुनासिकस्यात्'। क्वचित्त्विदमपि वृत्तावेवास्ति।

**भावबोधिनी**

[ यद्यपि पूर्वपद और उत्तरपद इन शब्दों का प्रयोग समास के लिये ही प्रसिद्ध है तथापि इस सूत्र में ] असमास = व्यास स्थल में जो पूर्वपद है उसका भी ग्रहण यहाँ होता है। अतः—त्रिःषमृद्धत्वाय, त्रिःसमृद्धत्वाय। [ इनमें भी वैकल्पिक षत्व होता है। इसीलिये पूर्ववर्ती सूत्र की अनावश्यकता मान कर 'प्रपञ्चार्थ' लिखा माना गया। ]।।१०४।।

'सुञ्' यह निपात शब्द इस सूत्र में गृहीत होता है [ न कि 'षुञ् अभिषवे' यह धातु। ] पूर्वपद में विद्यमान निमित्त से परवर्ती इस 'सुञ्' का मूर्धन्य आदेश वेदविषय में होता है। उदा० अभी षु णः सखीनाम्। ऊर्ध्व ऊ षुणः। ऊतये [ अभि सु नः यहाँ ] इकः सुञि' (६।३।१३४) सूत्र से पूर्ववर्ती इ का दीर्घ आदेश। (प्रस्तुत सूत्र से षत्व) 'नश्च धातुस्थोरुषुभ्यः' (८।४।२७) से षत्व होता है। [ 'नस्' यह 'अस्माकम्' के स्थान पर आदेश हुआ है—'बहुवचनस्य वस्नसौ' इस सूत्र से 'ऊ षु णः' यहाँ भी पूर्ववत् कार्य होते हैं। ]।।१०५।।

नकारान्तभिन्न 'सन्' धातु के सकार का मूर्धन्य आदेश होता है। उदा० गोषाः। नृषाः। [ गां सनोति, नरं सनोति—इन विग्रहों में 'जनसनखनक्रमगमो विट्' सूत्र से विट् प्रत्यय, सर्वापहारी लोप, 'विड्वनोरनुनासिकस्यात्' (६।४।४१) सूत्र से अङ्ग का आकारान्त आदेश, उपपदसमास, विभक्तिलोप, प्रस्तुत सूत्र से षत्व—गोषा, नृषा, प्रथमा एकवचन सु, विसर्ग। ]

---

१.१. पाठोयमनपेक्षितः व्याख्याद्वये तथा दर्शनात्।

**सनोतेरनकारान्तस्य सकारस्य मूर्धन्यादेशो भवति। 'गोषाः'। (ऋ.९।२।१०) 'नृषाः'। (ऋ.९।२।१०)**

**अन इति किम्? 'गोसनिं वाचमुदेयम्'। (अ. वे. ३।२०।१०)**

**'पूर्वपदात्' इत्येव सिद्धे नियमार्थमिदम्।**

**अत्र केचित् सवनादिपाठाद् गोसनिर्नियमस्य फलं न भवतीति सिसानयिषतीति प्रत्युदाहरन्ति। सिसनिषतेरप्रत्ययः, सिसनीरित्यपरे।**

**न्यासः**

ननु 'पूर्वपदात्' इत्येव गोषा इत्यादौ षत्वं सिद्धम्, तत् किमर्थमिदम्? इत्याह—**पूर्वपदादित्येवेत्यादि**। अविद्यमाननकारस्यैव भवति, नान्यस्येत्येष नियमो यथा स्यादित्येवमर्थमेतत्। यद्येवम्, गोसनिमिति न नियमस्य फलम्, सवनादित्वात्? इत्याह—**अत्रेत्यादि**। इतिकरणो हेतौ। यस्मात् सवनादिषु पाठाद् गोसनिशब्दो नियमस्य फलं न भवति, तस्मात् केचित् सिसानयिषतीति प्रत्युदाहरन्ति। **सिसनीरित्यपर इति**। सनोतेर्ण्यन्तस्य सनि रूपम्—सिसानयिषतीति। अत्र यदि नियमार्थमेतन्नोच्येत, तदा स्तौतिण्योरेव षत्वं स्यात्। अस्मिंस्तु सति न भवतीति ण्यन्तस्योदाहरण; अण्यन्तस्य स्तौतिण्योरेवेत्यत एव नियमात् षत्वनिवृत्तेः सिद्धत्वात्। सिसनीरिति—सनोतेः सन्, इट्, द्विर्वचनम्, सनः सकारस्य षत्वम्; सिसनिष इति स्थिते क्विप्, 'अतो लोपः', षत्वस्यासिद्धत्वाद्रुत्वम्, 'र्वोरुपधाया दीर्घ इकः', सिसनीरिति स्थितेऽत्र सनः षत्वभूतस्याभावात् स्तौतिण्योरेवेत्येष नियमो न प्रवर्त्तते। अत्र यदीदं नोच्यते, 'आदेशप्रत्यययोः' इति मूर्धन्यः स्यात्, अस्मिंस्तु सति न भवति॥१०६॥

**पदमञ्जरी**

**गोसनिमिति**। 'छन्दसि वनसनरक्षिमथाम्' इतीन्प्रत्यः। **सिसानयिषतीति**। यद्यप्यण्यन्तः सूत्र उपात्तः, तथाप्यण्यन्तस्य प्रतिषधवचने प्रयोजनं नास्तीति कृत्वा ण्यर्थो विज्ञास्यते। इह तु सिसनीयतीति स्तौतिण्योरेव षणीत्येतस्मान्नियमादप्रसङ्गः षत्वस्य। **सिसनीरिति**। क्विप्यतो लोपः, ततः सुः, हल्ङ्यादिलोपः, सनः सकारस्य षत्वं प्राप्नोति रुत्वं च, तत्र षत्वस्यासिद्धत्वाद्रुत्वम्, 'र्वोरुपधाया दीर्घः' इति दीर्घत्वम्। अत्र सन् षत्वभूतो न भवतीति स्तौतिण्योरेवेत्यस्य नियमस्यायमविषय इति षत्वं प्रसक्तम्, अस्मान्नियमान्न भवति। एतस्मिंश्च प्रयोजने सति सामर्थ्याभावाद् ण्यन्तस्य नियमाभावात् सिषाणयिषतीति षत्वं भवत्येव॥१०६॥

**भावबोधिनी**

अनकारान्त—इस कथन का क्या फल है? गोसनिं वाचमुदीरयन्। [ गां सनोति—इस विग्रह में 'छन्दसि वनिसनिरक्षिमथाम्' (३।२।२७) सूत्र से इन् प्रत्यय होने पर सन् यह नकारान्त ही रहता है। अतः षत्व नहीं होता है। ]

'पूर्वपदात्' (८।३।१०४) इस सामान्य सूत्र से ही [ इसमें भी षत्व के ] सिद्ध रहने पर यह सूत्र नियम करने के लिये बनाया गया है। [ अर्थात् 'अविद्यमान नकारवाले ही सन् का षत्व हो अन्य का नहीं—इसी नियम के लिये यह सूत्र है। ]

यहाँ कुछ विद्वान (यह कहते हैं कि) सवनादिगण में पाठ होने के कारण 'गोसनि' यह रूप नियम का फल नहीं होता है इसलिये 'सिसानयिषति' इसको प्रत्युदाहरण के रूप में देते हैं। दूसरे विद्वान्—'सिसनिषति' = सिसनिष इस सन्नन्त से अप्रत्यय = क्विप् प्रत्यय मानकर 'सिसनीः' ऐसा प्रत्युदाहरण देते हैं।

**विमर्श**—प्रस्तुत सूत्र को नियमार्थ मानने वाले विद्वान् यह कहते हैं कि इस सूत्र का प्रत्युदाहरण 'सिसानयिषति' यह णिजन्तसन्नन्त रूप है—"गोसनिः' यह नहीं है क्योंकि आगे 'न रपर-सृपि-सृजि-स्पृशि-स्पृहि-सवनादीनाम्' (८।३।११०) इस सूत्र में सवनादिगण में 'गोसनि' का पाठ होने से उसी से षत्व का निषेध सिद्ध है। अतः पहले णिजन्त बनाकर सन् प्रत्यय करने पर—'सिसानयिष' में नकारान्त सन् है षत्व नहीं होता है। अन्य विद्वान यह मानते हैं कि सन्नन्त 'सिसनिष' से क्विप्, सर्वापहारी लोप, 'अतो लोपः' से अलोप, सन् के सकार षत्व और रुत्व दोनों प्राप्त है षत्व के असिद्ध होने से रुत्व होता है 'र्वोरुपधाया दीर्घ इकः'

## ३९०३. सहेः पृतनर्ताभ्यां च।।१०७।। (३६४६)

**पृतना, ऋत–इत्येताभ्यामुत्तरस्य सहिसकारस्य मूर्धन्यादेशो भवति। 'पृतनाषाहम्'। (ऋ.६।७२।५) ऋताषाहम्।**

**कचिद् 'सहेः' इति योगविभागं कुर्वन्ति–'ऋतीषह (ऋ.६।१४।४) मि'त्यत्रापि यथा स्यात्। ऋतिशब्दस्य पूर्वपदस्य संहितायामेतद्दीर्घत्वम् षत्वं च।**

**'अवग्रहे तु ऋतिसहमित्येव भवति। चकारोऽनुक्तसमुच्चयार्थः। तेन 'ऋतीषहमिति सिद्धम्।।**

**न्यासः**

**सहेः पृतनर्ताभ्यां च।।** असाडर्थं अनिणर्थञ्च। **पृतनाषाहमिति**। 'छन्दसि सहः' इति ण्विः। **ऋताषाहमिति**। 'अन्येषामपि दृश्यते' इति दीर्घः।

**ऋतीषहमिति**। 'कृत्यल्युटो बहुलम्' इति क्विप्, 'नहिवृतिवृषिव्यधिरुचिसहितनिपु क्वौ' इति दीर्घत्वम्। **संहितायामेतद् दीर्घत्वं षत्वं चेति**। उभयोरपि विधाने संहिताधिकाराद् दीर्घस्य प्रतिपादनम्—ऋतीशब्दस्यायं प्रयोगं इति प्रतिपादनार्थम्; अन्यथा हि ऋतिशब्दान्तरमेवेदमित्याशङ्क्येत। यस्तु मन्यते—वर्णव्यत्ययेनैवात्र षत्वं भविष्यति, तत् किमेतदर्थेन योगविभागेनेति, तं प्रति षत्वस्य सांहितिकत्वं प्रतिपादितम्। यदि हि 'यत्ययो बहुलम्' इति षकारः क्रियते, ततोऽसंहितायामेव स्यात्, न हि तत्र संहिताधिकारोऽस्ति। तस्मात् संहिताधिकारे यथा स्यादिति योगविभागः कर्तव्य इति भावः। **अनुक्तसमुच्चयार्थ इति**। न केवलं साड्भूतस्येण्कोः परस्येति, अपि तु पृतनर्ताभ्याञ्च षत्वं भवतीति। ये तु योगविभागं न कुर्वन्ति, ते ऋतीषहमित्यर्थश्चकारः समुच्चयार्य इति वर्णयन्ति।।१०७।।

**पदमञ्जरी**

**सहेः पृतनर्ताभ्यां च।। योगविभागमिति**। तत्र द्वितीयो योगः पूर्वयोगस्यासर्वविषयत्वज्ञापनार्थः। [1]**संहितायामेवेति**। उभयत्रापि संहिताधिकारादयं विशेषो लभ्यते, 'नहिवृतिवृष' इत्यादिना दीर्घत्वम्।।१०७।।

**भावबोधिनी**

से दीर्घ, विसर्ग होता है—सिसनीः। यहाँ सन् का षत्वभूत षकार न मिल पाने से 'स्तौतिण्योरेव षण्यभ्यासस्य' इस नियम का विषय नहीं बनता है तब प्रस्तुत सूत्र से षत्व प्रसक्त होता है किन्तु इस सूत्र को नियमार्थ मानलेने पर 'सिसनीः' में नकारान्त सन् होने से षत्व नहीं होता है।।१०६।।

पृतना तथा ऋत—इन शब्दों से परे 'सह' धातु के सकार का मूर्धन्य आदेश होता है। उदा० पृतनाषाहम्। ऋताषाहम्। [ छन्दसि सहः' (३।२।६३) सूत्र से 'सह्' धातु से ण्वि प्रत्यय, सर्वापहारी लोप तथा 'अन्येषामपि दृश्यते' (६।३।१३५) सूत्र से पूर्व का दीर्घ होने पर रूप बना—पृतनासाह, ऋतासाह। इण् से उत्तरवर्ती न होने से षत्व प्राप्त नहीं है प्रस्तुत सूत्र से षत्व होने के बाद द्वितीया एकवचन का रूप है। ]

कुछ विद्वान् [ इससूत्र में ] 'सहेः' इतना योगविभाग करते हैं जिससे—'ऋतीषहम्' इसमें भी षत्व हो सके। पूर्वपद 'ऋति' शब्द का संहिता में ही यह दीर्घ ('नहि-वृति-वृषि-व्यधि-सचि-सहि-तनिषु क्वौ' सूत्र से और (प्रस्तुत योगविभाग से) षत्व होता है।

अवग्रह में तो 'ऋतिषहम्' यही होता है। [ न दीर्घ होता है और न षत्व क्योंकि संहिताधिकार में यह सूत्र है। ] सूत्र में च का प्रयोग अनुक्त के समुच्चय के लिये है। इसलिये 'ऋतीषहम्' यह भी सिद्ध है। [ यह कल्पना उनकी है जो योगविभाग नहीं करते हैं। अतः योगविभाग मानना अथवा 'च' को अनुक्तसमुच्चयार्थ मानना चाहिये। ]।।१०७।।

---

१. 'संहितायामेव दीर्घत्वम्' इत्यपि पाठः।

## ३९०४ न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्।।१०८।। (३१६८)

**रेफपरस्य सकारस्य सृपि, सृजि, स्पृशि, सवनादीनां च मूर्धन्यो न भवति। रपर–'विस्रंसिकायाः काण्डं जुहोति'। (मै.सं.२।६।१) 'विस्रब्धः कथयति। सृपि 'पुरा क्रूरस्य विसृपः'। (बा.स.१।२८) सृजि–वाचो विसर्जनात्।**

**स्पृशि-'दिविस्पृशम्। (ऋ.१।१४२।८) स्पृहि–निस्पृहं कथयति।**

**सवनादीनाम्–सवने सवने। सूते सूते। सामेसामे। सवनमुखे सवनमुखे। किं स्यतीति किंसंकिंसम्। अनुसवनमनुसवनम्। 'गोसनिं' (अ. वे.३।२०।१०) गोसनिम्। अश्वसनिमश्वसनिम्। पूर्वपदादिति प्राप्तेः प्रतिषेधः।**

### न्यासः

**न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्**।। रः परो यस्मादिति रपरः। 'सृप्लृ गतौ', 'सृज विसर्गे, 'स्पृश संस्पर्शे', 'स्पृह ईप्सायाम्' चुरादावदन्तः पठ्यते। सवनमादिर्येषामिति बहुव्रीहिः। **विस्रंसिकाया इति**। 'स्रन्सु अवस्रंसने' अस्माद्विपूर्वाद् 'रोगाख्यायां ण्वलु बहुलम्' इति ण्वुल्। **विस्रब्ध इति**। 'स्रन्भु विश्रम्भे', 'अनिदिताम्' इति नलोपः, 'झषस्तथोर्धोऽधः' इति धकारः, 'झलां जश् झशि' इति भकारस्य बकारः। **विसृप इति**। 'सृपितृदोः कसुन्' इति कसुन्। **विसर्जनादिति**। ल्युट्। **दिविस्पृशमिति**। 'स्पृशोऽनुदके क्विन्' इति क्विन्, 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्। **निस्पृह इति**। स्पृहणं स्पृहः, 'एरच्' इत्यच्, णिलोपः; निर्गतः स्पृहो निःस्पृहः। **सवनेसवन इति**। सुनोतेर्ल्युट्, सप्तम्येकवचनम्, वीप्सायां द्विर्वचनम्। **सूतेसूते इति**। 'षूङ् प्राणिगर्भविमोचने' सुवतेर्वा, निष्ठा। **सोमेसोमे इति**। सुञित्येस्माद् 'अर्तिस्तु' इत्यादना सोमशब्दो व्युत्पादितः।

### पदमञ्जरी

**न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्**।। **विस्रंसिकाया इति**। 'रोगाख्यायाम्' इति ण्वुल्। **विस्रब्धमिति**। 'सृम्भु विश्वासे' क्तः, 'यस्य विभाषा' इतीट्प्रतिषेधः' 'अनिदिताम्' इति नलोपः। **विसृप इति**। 'सृपितृदोः कसुन्'।

### भावबोधिनी

रेफ जिसमें पर में है ऐसे सकार का तथा सृप्लृ, सृज्, स्पृश्, स्पृह और सवनादि (गण में पठित धातुओं) के सकार का मूर्धन्य आदेश [ इण् और कवर्ग से परे रहने पर भी ] नहीं होता है। उदा० (१) रपर—'विस्रंसिकायाः काण्डं जुहोति।' | विपूर्वक 'स्रन्स' से ण्वुल् = अक प्रत्यय में रूप है। यहाँ इण् परे स् है किन्तु इसके बाद रेफ होने से षत्व नहीं होता है। | विस्रब्धः। [ विपूर्वक स्रन्भ से क्त प्रत्यय का रूप है। नलोप, 'झषस्तथोर्धोऽधः' सूत्र से त का ध, 'झलां जश् झशि' सूत्र से भ् का ब्—वि स्रब् ध। प्राप्त षत्व का निषेध। ] (२) सृप्—पुरा क्रूरस्य विसृपः। | विपूर्वक सृप् से 'सृपितृदोः कसुन्' सूत्र से कसुन् = अस् प्रत्यय। प्राप्त षत्व का निषेध। ] (३) सृज्—वाचो विसर्जनात्। [ विपूर्वक सृज् + ल्युट् = अन। षत्व का निषेध ] (४) स्पृश—दिविस्पृशम्। [ दिवि उपपद स्पृश् धातु से 'स्पृशोऽनुदके क्विन्' सूत्र से क्विन् प्रत्यय सर्वापहारी लोप, सप्तमी का अलुक् षत्व का निषेध ] (५) स्पृहि—निस्पृहं कथयति। [ स्पृहि + अच्, णि = इलोप—स्पृहः। निर्गतः स्पृहः यस्मात् सः निस्पृहः। निस्पृहम् में क्रियाविशेषण में कर्मत्व और द्वितीया है। प्राप्त षत्व का निषेध। ]

(६) सवनादि—सवनेसवने। [ षूञ् = स् + ल्युट् = अन, सप्तमी एकवचन में वीप्सा में द्वित्व करने पर 'पूर्वपदात्' ८।३।१०९ से प्राप्त षत्व का निषेध। इसी प्रकार अन्य उदाहरणों में भी प्राप्त षत्व का निषेध होता है। ] सूतेसूते। [ षूङ् = सू धातु लट् का प्रयोग ] सोमे सोमे। [ षुञ् = सु से म प्रत्यय ] सवनमुखे सवनमुखे। | सवनस्य मुखम्—षष्ठीसमास के बाद द्वित्व होता

**अश्वसनिग्रहणमनिणोऽपि षत्वमस्तीति ज्ञापनार्थम्। तेन जलाषाहम्, अश्वषाहमित्येतत्सिद्धं भवति।**

**क्वचिदेवं गणपाठः—सवनेसवने। अनुसवनेऽनुसवने। संज्ञायां बृहस्पतिसवः। शकुनिसवनम्। सोमेसोमे। सूतेसूते। संवत्सरेसंवत्सरे। किंसंकिंसम्। बिसंबिसम्। मुसलंमुसलम्। गोसनिमश्वसनिम्। सवनादिः।।**

### ३९०५. सात्पदाद्योः।।१०९।। (२१२३)

**'सात्' इत्येतस्य, पदादेश्च मूर्धन्यादेशो न भवति। 'विभाषा[1] साति कार्त्स्न्ये'। (५।४।५२)**

**न्यासः**

**सवनमुखेसवनमुख इति।** सवनस्य मुखमिति षष्ठीसमासः। **किंसंकिंसमिति।** 'षो अन्तकर्मणि', 'आतोऽनुपसर्गे कः'। तत्र किमो मकारस्यानुस्वारे कृते 'अयोगवाहानमट्सूपदेशादड्व्यवायेऽपि' इति पूर्वपदस्थान्निमित्तात् प्राप्तः। **अनुसवनमनुसवनमिति।** ल्युडन्तमेतत्। अश्वसनेर्व्युत्पत्तिर्गोसनिवत्।

अथाश्वसनिग्रहणं किमर्थम्, न ह्यत्र सकारस्य षत्वं प्राप्नोति, तथा हि पूर्वस्थादिण उत्तरस्य षत्वं प्राप्नोति, न चासाविण उत्तरः सकारः? इत्यत आह—**अश्वसनिग्रहणमित्यादि।** किमेतज्ज्ञापनेन प्रयोजनम्? इत्यत आह—**जलाषाहमित्यादि।** क्वचिद् **बिसंबिसम्, मुसलंमुसलमिति पाठः।** स्थाने द्विर्वचनपक्षे 'आदेशप्रत्यययोः' इत्यादेशसकारत्वात् प्राप्तस्य षत्वस्य प्रतिषेधो वक्तव्यः।।१०८।।

**पदमञ्जरी**

**सवनेसवन** इत्यादौ वीप्सायां द्विर्वचनम्। **किंस इत्यत्र** 'अयोगवाहानामट्सु णत्वं शर्षु जश्भावषत्वे' इति वचनाच्छर्व्यवाये इति षत्वप्रसङ्गः। यथा तु शर्षूपदेशो न कर्तव्यस्तथा 'हयवरट्' इत्यत्रोक्तम्।

अश्वसनिग्रहणमनर्थकमनिणन्तत्वात्? अत आह—**अश्वसनिग्रहणमिति।** ज्ञापनस्य प्रयोजनमाह—**जलाषाहमिति।**।१०८।।

**सात्पदाद्योः।।** आदिग्रहणं शक्यमकर्तुम्, पदादिति पञ्चमीनिर्देशः कर्त्तव्यः—पदात्परस्य सकारस्य नेति। इहापि तर्हि न प्राप्नोति—अग्निषु, वायुषु, त्वक्षु? सातिप्रतिषेधो ज्ञापयति—स्वादौ यत्पदं न तस्मात्प्रतिषेध इति।

**भावबोधिनी**

है। ] किंसंकिंसम्— किं स्यति इस अर्थ में [ 'षोऽन्तकर्मणि' से धातु का आत्व—सा + क = प्रत्यय, धातु के आ का लोप—स। किम् के साथ समास करने पर मकार का अनुस्वार कर देने पर 'अयोगवाहानामट्सु णत्वं शर्षुजश्भावषत्वे' इस वचन से षत्व की प्राप्ति है। प्रतिषेध हो जाता है। ] अनुसवनमनुसवनम्। [ अनुपूर्वक सू से ल्युट् = अन। प्राप्त षत्व का निषेध गोसनिं गोसनिम्। अश्वसनिमश्वसनिम्। इन सभी में 'पूर्वपदात्' (८।३।१०४) से प्राप्त मूर्धन्यादेश का प्रतिषेध होता है। ]

[ अश्वसनिम्—इसका ग्रहण क्यों है क्योंकि यहाँ मूर्धन्य की प्राप्ति ही नहीं है? ] 'अश्वसनिम्' इसका ग्रहण इसलिये किया गया है कि इण् से परे न होने वाले का भी कहीं कहीं षत्व होता है—इसको ज्ञापित करना है। इसीलिये—जलाषाहम्। अश्वषाहम्—इनमें षत्व सिद्ध होता है।

कहीं-कहीं ऐसा गणपाठ मिलता है—सवने-सवने। अनुसवनेऽनुसवने। सञ्ज्ञायाम्—बृहस्पतिसवः। शकुनिसवनम्। सोमेसोमे। सूतेसूते। संवत्सरेसंवत्सरे। किंसंकिंसम्। बिसंबिसम्। मुसलंमुसलम्। गोसनिमश्वसनिम्। ये सवनादि हैं।।१०८।।

'सात्' इस प्रत्यय के तथा पद के आदि के [ इण् कवर्ग से परे ] सकार का मूर्धन्य आदेश नहीं होता है। 'विभाषा साति कार्त्स्न्ये' (५।४।५२) सूत्र से 'साति' के प्रत्ययसकार होने से मूर्धन्य की प्राप्ति है तथा पद के आदि के सकार केआदेश सकार होने

१. क्वचिदयं पाठो नास्ति।

**प्रत्ययसकारत्वात् प्राप्तिः, पदादेश्चादेशसकारत्वात्। सात्–अग्निसात्, दधिसात्, मधुसात्। पदादेः–दधि सिञ्चति। मधु सिञ्चति।।**

**३९०६. सिचो यङि ।।११०।। (२६४०)**

**सिचः सकारस्य यङि परतो मूर्धन्यादेशो न भवति। परिसेसिच्यते। अभिसेसिच्यते।**

**'उपसर्गात्' (८।३।६५) इति या प्राप्तिः सा पदादिलक्षणमेव प्रतिषेधं बाधते, न 'सिचो यङि' इति। तस्मादयं प्रतिषेधः सर्वत्र भवति।**

**यङीति किम्? अभिषिषिक्षति।।**

**न्यासः**

**सात् पत्पदाद्योः**।। 'आदेशप्रत्यययोः' इति षत्वे प्राप्तेऽयं प्रतिषेधः।।१०९।।

**सिचो यङि**।। 'आदेशप्रत्यययोः' इति 'उपसर्गात् सुनोति' इति च प्राप्तस्य षत्वस्यायं प्रतिषेधः। **सेसिच्यत इति**। 'आदेशप्रत्यययोः' इति प्राप्तिः। **अभिसेसिच्यत इति**। अत्र 'उपसर्गात् सुनोति' इत्यादिना।

कथं पुनरत्र प्रतिषेधः प्रवर्तते, यावता 'उपसर्गात्' इत्यादिना सूत्रेण षत्वं प्रतिषेधविषये विधीयते? अत्रोपसर्गस्थान्निमित्ताद् या प्राप्तिः सा यथा 'सात्पदाद्योः' इतीमं पदादिलक्षणप्रतिषेधं बाधते, तथा 'सिचो यङि' इत्येतच्च? इति देश्यमाशङ्क्याह—**उपसर्गाद् या प्राप्तिरित्यादि**। येन नाप्राप्तिन्यायेन पदादिलक्षणस्यैव

**पदमञ्जरी**

तत्रायमप्यर्थः—दधिसिक्, मधुसिगित्यादौ प्रतिषेधः सिद्धो भवति, न ह्ययं सकारः पदादिः। 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति वचनात् पदात्परस्तु भवति, तत्रापि पूर्वपदस्य सुबन्तत्वात्। बहुचस्तु प्रतिषेधः। बहुचस्तु परस्य प्रतिषेधो वक्तव्यः—बहुसेक्ता, न ह्यत्र पदात्परः सकारः।।१०९।।

**सिचो यङि**।। **परिसेसिच्यत इति**। अत्राभ्याससकारस्य 'उपसर्गात्सुनोति' इत्यादिना प्राप्तिः, धातुसकारस्य त्वादेशसकारत्वात् 'स्थादिष्वभ्यासेन च' इत्येतस्माच्च। ननु चोपसर्गात्प्रतिषेधविषये षत्वमारभ्यते, तद्यथैव पदादिप्रतिषेधं बाधते, एवं 'सिचो यङि' इत्येतमपि बाधेत? अत आह—**उपसर्गाद्या प्राप्तिरिति**। येन नाप्राप्ते

**भावबोधिनी**

से प्राप्ति है। उदा॰ अग्निसात्, दधिसात्, मधुसात्। [ यहाँ सात् प्रत्यय का स् इण् से परे है। प्राप्त षत्व का निषेध होता है। ] पदादि स्—दधि सिञ्चति। मधु सिञ्चति। [ षिच् धातु के ष का स आदेश होता है। अतः सिञ्चति का स् आदेशभूत स होने से षत्व प्राप्त है। निषेध होता है। दोनों उदाहरणों में 'आदेशप्रत्यययोः' सूत्र से षत्व की प्राप्ति है। ]।।१०९।।

यङ् परे रहते सिच् धातु के सकार का [ इण् और कवर्ग से परे रहते भी ] मूर्धन्य आदेश नहीं होता है। उदा॰ परिसेसिच्यते। अभिसेसिच्यते। [ सिच् + यङ् द्वित्व, अभ्यासकार्य, उपधागुण आदि के बाद 'आदेशप्रत्यययोः' तथा 'उपसर्गात् सुनोति' से षत्व प्राप्त है। प्रस्तुत सूत्र निषेध कर देता है। ]

'उपसर्गात्' (८।३।६५) इस सूत्र से जो षत्व की प्राप्ति है वह पदादिलक्षण मूर्धन्यादेश के प्रतिषेध का बाध करती है न कि 'सिचो यङि' इस प्रस्तुत सूत्र के प्रतिषेध का। अतः यह प्रतिषेध सर्वत्र होता है।

यङ् परे रहते प्रतिषेध—इसका क्या फल है? अभिषिषिक्षति। [ यहाँ यङ् नहीं सन् परे है। षत्व का प्रतिषेध न होने से दोनों सकार मूर्धन्य हो जाते है। ]

## ३९०७. सेधतेर्गतौ।।१११।। (२२७८)

**गतौ वर्त्तमानस्य सेधतेः सकारस्य मूर्धन्यादेशो न भवति। अभिसेधयति गाः। परिसेधयति गाः। गताविति किम्? शिष्यमकार्यात् प्रतिषेधयति।।**

## ३९०८. प्रतिस्तब्धनिस्तब्धौ च।।११२।। (३०२७)

**न्यासः**

प्रतिषेधस्य बाधा युक्ता, तत्र प्राप्त एवोपसर्गार्थमारभ्यते, 'सिचो यङि' इत्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च। अथवा—'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इत्येवमुपसर्गात् षत्वप्राप्तिः सिचः पदादिलक्षणमेव प्रतिषेधं बाधते, न तु सिचो यङीत्यभिप्रायः।।११०।।

**सेधतेर्गतौ**।। 'उपसर्गात् सुनोति' इति प्राप्तस्य षत्त्वस्य प्रतिषेधः। प्रतिषेधस्याकार्यादिति निवारणे सेधतिर्वर्तते।।१११।।

**प्रतिस्तब्धनिस्तब्धौ च**।। **प्रतिस्तब्धम्, निस्तब्धमिति**। 'स्तम्भेः' इति प्राप्तस्य षत्वस्याभावो

**पदमञ्जरी**

तस्य बाधनं भवति, नाप्राप्ते च पदादिलक्षणे प्रतिषेधे उपसर्गात् षत्वमारभ्यते, 'सिचो यङि' इत्येतस्मिंस्तु प्राप्ते चाप्राप्ते च। अथ वा—'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते न परान्' इति। अनेनैतदपि निरस्तम्—'स्थादिष्वभ्यासेन च' इत्यनेन यथाभिषिषिक्षतीत्यत्र स्तौतिण्योरेवेति नियमं बाधित्वा षत्वं भवति, तथैनमपि प्रतिषेधं बाधित्वा धातुसकारस्य प्रसङ्ग इति।।११०।।

**सेधतेर्गतौ**।। 'उपसर्गात्' इति प्राप्तिः प्रतिषिध्यते।।१११।।

**प्रतिस्तब्धनिस्तब्धौ च**।। 'स्तन्भेः' इति प्राप्तिः प्रतिषिध्यते।।११२।।

**भावबोधिनी**

**विमर्श**—भाव यह है कि षत्व के प्रतिषेध के विषय में 'उपसर्गात्' यह सूत्र बाध कर षत्व कर देता है। अतः वह प्रतिषेधबाधक जैसे 'सात्पदाद्योः' के विषय में प्रवृत्त होकर अपने लक्ष्य में षत्व करता है उसी प्रकार प्रस्तुत सूत्र के विषय में भी प्रवृत्त होगा। अतः 'परिसेसिच्यते' आदि में षत्व वाला रूप ही होना चाहिये? इसका समाधान यह है कि 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इस परिभाषा के अनुसार पदादिलक्षण प्रतिषेध की नित्य प्राप्ति रहते ही उपसर्ग से परे षत्व किया गया है अतः वह उस पदादिलक्षण प्रतिषेध का ही बाधक बन कर वहाँ मूर्धन्य आदेश करायेगा। 'सिचो यङि' इसकी तो प्राप्ति तथा अप्राप्ति दोनों हैं। तब 'उपसर्गात्' यह प्रस्तुत सूत्र के प्रतिषेध का बाध नहीं कर सकेगा। 'क्योंकि' पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इस वचन से केवल 'सात्पदाद्योः के विषय में ही प्रवृत्त होगा। फलतः यङ् परे सिच् के स् का मूर्धन्य सर्वत्र बाधित होता है।।११०।।

गति अर्थ में वर्तमान 'सिध' धातु के सकार का मूर्धन्य आदेश नहीं होता है। [ 'षिधू शास्त्रे माङ्गल्ये च' तथा 'षिधु गत्याम्' दोनों का ग्रहण है। 'धात्वादेः षः सः' सूत्र से ष का स आदेश—सिध ] उदा॰ अभिसेधयति गाः, परिसेधयति गाः। [ इन दोनों में 'उपसर्गात् सुनोति सुवति ......सेधसिचसन्जस्वञ्जाम्' (८।३।३५) सूत्र से षत्व प्राप्त है उसका निषेध किया जाता है। गायों को टहलाता है—यहाँ अर्थ है। ]

गति अर्थ में वर्तमान—इसका क्या फल है? शिष्यम् अकार्यात् प्रतिषेधयति। [ शिष्य को अकार्य से रोकता है। ] इसमें गति अर्थ नहीं अपितु वारण अर्थ होने से निषेध न होकर षत्व होता है ]।।१११।।

'प्रतिस्तब्ध' तथा 'निस्तब्ध' इन दोनों शब्दरूपों का मूर्धन्य आदेश रोकने के लिये निपातन किया जाता है। इनमें स्तन्भेः' (८।३।६७) सूत्र से प्राप्त षत्व का प्रतिषेध किया जाता है। उदा॰ प्रतिस्तब्धः, निस्तब्धः। [ स्तन्भ् धातु से क्त प्रत्यय, 'अनिदितां

**प्रतिस्तब्ध, निस्तब्ध–इत्येतौ मूर्धन्यप्रतिषेधाय निपात्येते। 'स्तन्भेः' (८।३।६७) इति प्राप्तं षत्वं प्रतिषिध्यते। प्रतिस्तब्धः। निस्तब्धः।**

**३९०९. सोढः।।११३।। (२३५८)**

**सहिरयं सोड्भूतो गृह्यते, तस्य सकारस्य मूर्धन्यादेशो न भवति। परिसोढः, परिसोढुम्, परिसोढव्यम्।**

**सोढभूतग्रहणं किम्? परिषहते।।**

**३९१०. स्तन्भुसिवुसहां चङि।।११४।। (२५८०)**

**न्यासः**

निपात्यते।।११२।।

**सोढः**।। 'परिनिविभ्यः' इति प्राप्ते षत्व आरभ्यते। **सोढ इति**। निष्ठायामपि प्रथमैकवचने कृत एतद्रूपं भवति। एतद्ग्रहणाशङ्कानिरासायाह—**सहिरयमित्यादि**। **सोड्भूत इति**। हकारे ढकारे कृते यद्रूपं भवति तत्प्राप्त इत्यर्थः। ढकारस्तु जश्त्वे न श्रूयते। **परिसोढेति**। धत्वढत्वष्टुत्वढलोपेषु कृतेषु 'सहिवहोरोदवर्णस्य' इत्योकारः।।११३।।

**स्तम्भुसिवुसहां चङि**।। अत्राद्यस्य 'स्तन्भेः' इति षत्वे प्राप्ते, इतरयोस्तु 'परिनिविभ्यः' इति प्रतिषेधेऽयमारभ्यते। **अभ्यतस्तम्भदिति**। णिच्, लुङ्, 'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्' णिलोपः, 'चङि' इति द्विर्वचनम्, पूर्ववत् खयः शेषः, अट्, 'प्राक्सितादड्व्यवायेऽपि', 'स्थादिष्वभ्यासेन चाभ्यासस्य' इति व्यवाये

**पदमञ्जरी**

**सोढः**।। **सोड्भूतो गृह्यते इति**। निष्ठान्तस्य प्रथमया निर्देशशङ्कामपाकरोति। **परिसोढेति**। 'परिनिविभ्यः' इति प्राप्ते प्रतिषेधः।।११३।।

**स्तम्भुसिवुसहां चङि**।। अत्राद्यस्य 'स्तम्भेः' इति प्राप्तिः, इतरयोस्तु 'परिनिविभ्यः सेवसित' इति। **अभ्यतस्तम्भदिति**। 'प्राक्सितादड्व्यवायेऽपि' इति 'स्थादिष्वभ्यासेन च' इति प्राप्तिः। **पर्यसीषिवदिति**। अत्रापि

**भावबोधिनी**

हल॰ (६।४।२४) सूत्र से न् का लोप—प्रतिस्तभ् + त, त का धत्व, भ् का जश्त्व ब्—प्रतस्तिब्ध। षत्व का निषेध। ]।।११२।।

[ सह् धातु का ढत्व करके निष्पन्न ] सोढ् रूप वाली 'सह' धातु का यहाँ ग्रहण है। इसके सकार का मूर्धन्य आदेश नहीं होता है। [ सह् से क्त प्रत्यय करने पर प्रथमा एकवचन में 'सोढः' रूप बनता है। उसी का ग्रहण नहीं है अपि तु जहाँ जहाँ सोढ् रूप होता सभीमें षत्व का निषेध होता है। ] उदा॰ परिसोढः, परिसोढुम्, परिसोढव्यम्। [ इनमें 'परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वन्जाम्' (८।३।७०) से प्राप्त षत्व का निषेध होता है। परिपूर्वक 'सह' धातु से क्त, तुमुन् और तव्यत् प्रत्ययों के रूप हैं। सह् + क्त, 'सहिवहोरोदवर्णस्य' (६।३।११०) सूत्र से सह् के अकार का ओकार—सोह् + त, ढत्व, धत्व, ष्टुत्व और ढलोप के बाद ये रूप बनते हैं। ]

सोढ् रूप प्राप्त हुये के ग्रहण का क्या फल है? परिषहते। [ यहाँ षत्वनिषेध नहीं होता है। क्योंकि 'सह्' ही है 'सोढ्' नहीं। ]।।११३।।

स्तन्भु, सिवु, सह—इन तीनों के सकार का षकार आदेश चङ् परे रहने पर नहीं होता है। इनमें 'स्तन्भेः' (८।३।६७) तथा 'परिनिविभ्यः सेवसित' (८।३।७०) सूत्रों से प्राप्त होने वाले षत्व का प्रतिषेध किया जाता है। उदा॰ स्तन्भ—पर्यतस्तम्भत्, अभ्यतस्तम्भत्। सिव—पर्यसीषिवत्। न्यसीषिवत्। सह—पर्यसीषहत्, व्यसीषहत्। [ परिपूर्वक स्तम्भ् णिच् + लुङ् = तिप्, अट्,

**स्तम्भु, सिवु, सह–इत्येतेषां चङि परतः सकारस्य मूर्धन्यादेशो न भवति। 'स्तन्भेः' (८।३।७७) इति 'परिनिविभ्यः' (८।३।७७) इति च प्राप्तो मूर्धन्यः प्रतिषिध्यते। स्तम्भु–पर्यतस्तम्भत्, अभ्यतस्तम्भत्। सिवु–पर्यसीषिवत्, न्यसीषिवत्। सह–पर्यसीषहत्, व्यसीषहत्।**

**❀ स्तम्भुसिवुसहां चङि उपसर्गादिति वक्तव्यम्। ❀ उपसर्गाद्या प्राप्तिस्तस्या एव प्रतिषेधो यथा स्यात्, अभ्यासाद्या प्राप्तिस्तस्या मा भूदिति। तथा चैवोदाहृतम्।।**

## ३९११. सुनोतेः स्यसनोः।।११५।। (२५२४)

**न्यासः**

सत्युपसर्गस्थान्निमित्तात् षत्वं प्राप्तं न भवति। **पर्यसीषिवदित्यादि**। पूर्ववल्लुङादि, सिवेर्लघूपधगुणः, सहेस्तु 'अत उपधायाः' इति वृद्धिः, 'सन्वल्लघुनि' इतीत्त्वे, उभयोः 'णौ चङ्युपधायाः' इति ह्रस्वः, 'दीर्घो लघोः' इति दीर्घः। अत्रापि 'सिवादीनां वाड्व्यवायेऽपि' इत्यड्व्यवाय उपसर्गस्थान्निमित्तात् परेषां प्राप्नोति, तन्न भवति।

**सिवुसहोरित्यादि**। एतयोः सिवुसहोश्चङ्युपसर्गस्थान्निमित्तात् षत्वं प्राप्नोति, तन्मा भूदित्येवमर्थरूपं व्याख्येयमित्यर्थः। किमर्थम्? इत्याह—**उपसर्गाद् या प्राप्तिरित्यादि**। तत्रेदं व्याख्यानम्—'उपसर्गात् सुनोति' इत्यतो मण्डूकप्लुतिन्यायेनोपसर्गादितीहानुवर्त्तते। **तेनोपसर्गाद् या प्राप्तिस्तस्या एव प्रतिषेधो भविष्यतीति। तथा चैवोदाहृतमिति**। यत्तदर्थरूपं व्याख्येयम्, तत्तथोक्तम्। तदर्थरूपमेवोदाहृतमित्यर्थः।।११४।।

**सुनोतेः स्यसनोः।। अभ्यसोष्यदिति**। लृङ्।

**पदमञ्जरी**

'सिवादीनां वाड्व्यवायेऽपि' इति प्राप्तिः।।

**उपसर्गादिति वक्तव्यमिति**। किमर्थम्? इत्याह—**उपसर्गाद्या प्राप्तिरिति**।।११४।।

**सुनोतेः स्यसनोः।। अत्रेत्यादि**। इतिकरणो हेतौ, यस्मात् स्तौतिण्योरेवेति नियमादभ्यासादप्राप्तिः,

**भावबोधिनी**

च्लि = चङ्, परि + अ स्तन्भ् इ + चङ् + अ + ति, 'णिलोप', 'चङि' (६।१।११) सूत्र से धातु का द्वित्व 'शर्पूर्वाः खयः' वचन से खय् शेष, अन्य का लुक् आदि करने के बाद—परि अ त स्तम्भ + अ त्। यहाँ उपसर्ग से परे अभ्यास के सकार का सत्व 'स्थादिष्वभ्यासेन चाभ्यासस्य' (८।३।६४) और 'प्राक्सितादड्व्यवायेऽपि' (८।३।६३) सूत्रों से अट् के व्यवधान में भी षत्व की प्राप्ति है। उसका निषेध प्रस्तुत सूत्र से किया जाता है। परन्तु अभ्यास के बादवाले 'स' का निषेध न होकर 'आदेश-प्रत्यययोः' से मूर्धन्य होता ही है। पर्यतस्तम्भत्। परि + सिव् + णिच् + लुङ् में 'पुगन्तलघूपधस्य च' सूत्र से उपधागुण—परि अ सेव् + णिच् + चङ् + तिप् में द्वित्व, अभ्यसकार्य के बाद 'णौ चङ्युपधायाः' सूत्र से उपधा का ह्रस्व—परि अ सी सिव् अ त। परि सह + णिच् लुङ् में 'अत उपधायाः' सूत्र से उपधाकी वृद्धि—साह + णिच्। 'सन्वल्लघुनि चङ्परेनग्लोपः' सूत्र से सन्वद्भाव, 'सन्यतः' से इत्व परि अ सि साह + अ + त् 'णौ चङ्युपधायाः' से उपधा का ह्रस्व 'दीर्घो लघोः' सूत्र से अभ्यास का दीर्घ-परि असीसहत, 'आदेश-प्रत्यययोः' से बाद वाले स का षत्व यण्—पर्यसीषहत। व्यसीषहत। ]

❀ स्तन्भ, सिव तथा सह का चङ् परे षत्वनिषेध उपसर्ग से परे रहने पर ही होता है—ऐसा कहना चाहिये। ❀ उपसर्ग से परे रहने से जो षत्व की प्राप्ति है उसी का प्रतिषेध जिस प्रकार से हो सके, अभ्यास से परे जो प्राप्ति है उसका प्रतिषेध न हो। इसी प्रकार के उदाहरण भी दिये गये हैं। [ पर्यसीषिवत्, न्यसीषिवत्, व्यसीषहत् ]।।११४।।

सुनोति = सु धातु के सकार का मूर्धन्य आदेश 'स्य' तथा 'सन्' प्रत्यय परे रहते नहीं होता है। उदा॰ अभिसोष्यति। परिसोष्यति। अभ्यसोष्यत् पर्यसोष्यत्। [ अभिपूर्वक 'सुञ् = सु' + लृट् और लृङ् में स्य' प्रत्यय होने पर स का षत्व प्राप्त है उसका निषेध हो जाता है। ]

**सुनोतेः सकारस्य मूर्धन्यादेशो न भवति स्ये सनि च परतः। अभिसोष्यति। परिसोष्यति। अभ्यसोष्यत्। पर्यसोष्यत्।**

**सनि किमुदाहरणम्? अभिसुसूषति। नैतदस्ति प्रयोजनम्, तत्र 'स्तौतिण्योरेव षण्यभ्यासात्' (८।३।७१) इति नियमान्न भविष्यति। इदं तर्हि–अभिसुसूषते? एतदपि नास्ति; 'स्थादिष्वभ्यासेन चाभ्यासस्य' (८।३।६४) इति नियमात्। इदं तर्ह्यभिसुसूषतेरप्रत्ययः अभिसुसूरित्युदाहरणमिति? अत्र हि सन्षभूतो न भवतीत्यभ्यासात् प्राप्तिरस्ति।**

**स्यसनोरिति किम्? सुषाव।।**

### न्यासः

**अभिसुसूषतीति**। सन्, 'इको झल्' इति कित्त्वे गुणाभावः, 'अज्झनगमां सनि' इति दीर्घः। **अत्रेत्यादि**। इतिकरणो हेतौ। अत्र यस्मात् 'स्तौतिण्योरेव षण्यभ्यासात्' इत्यतो नियमादप्राप्ते 'स्थादिष्वभ्यासेन' इति नियमादप्राप्तिस्तस्मादभिसुसूरित्युदाहरन्ति। स्यादेतत्—अत्रापि नास्ति यत् तदप्युदाहरणं नोपपद्यते? इत्यत आह—**सन् षभूतो न भवतीत्यादि**। षभूते हि सनि स्तौतिण्योरेव नियमः, न चात्र सन् षभूतः। तस्मादसति सन्ग्रहणेऽभ्यासस्थान्निमित्ताद् 'आदेशप्रत्यययोः' इति षत्वं प्राप्नोति। अभ्यासग्रहणमुपसर्गात् प्राप्तेरसम्भवात्। अत उपसर्गस्थान्निमित्ताद् धातुसकारस्य षत्वं न प्राप्नोति; अभ्यासेन व्यवहितत्वात्, नाभ्याससकारस्य स्थादिनियमेन व्यावर्त्तितत्वात्। **अभिसुसूरिति**। अभिसुसूष इति स्थिते क्विप्, 'अतो लोपः', षत्वस्यासिद्धत्वाद्रुत्व-विसर्जनीयौ।।११५।।

### पदमञ्जरी

स्थादिष्वेवाभ्यासस्येति नियमादुसर्गादप्यप्राप्तिः, तस्मादभिसुसूरित्युहरन्ति। अथ वा कथं षत्वप्रसङ्गः? अत आह—**अत्र हीति**। यथा चात्र सन्षत्वभूतो न भवति तथा 'सनोतेरनः' इत्यत्रोक्तम्। **अभ्यासात्प्राप्तिरिति**। अभ्यासग्रहणमुपसर्गात्प्राप्तेरसम्भवादभ्यासेन व्यवहितान्न धातुसकारस्य प्रसङ्गः, नाप्यभ्याससकारस्य, स्थादिनियमेन व्यावर्तित्वात्। एवं चात्राभिग्रहणमतन्त्रम्, सुसूरित्येवोदाहर्तव्यम्।।११५।।

### भावबोधिनी

सन् परे रहते कौन सा उदाहरण है? अभिसुसूषति। [ अभि + सु + सन् 'इको झल्' सूत्र से सन् कित् होने से गुण नहीं होता है। 'अज्झनगमां सनि' से उ का दीर्घ अभि सू + स, द्वित्व, अभ्यासकार्य—अभिसुसूषति। ] यह प्रयोजन नहीं है क्योंकि 'स्तौतिण्योरेव षण्यभ्यासात्' (८।३।७१) इसके नियम के कारण षत्व नहीं होगा। [ भाव यह है कि 'स्तौतिण्योरेव षण्यभ्यासात्' (८।३।६१) सूत्र नियमार्थ है—'स्तौतिण्योरेव षण्यभ्यासाद् यथा स्याद् अन्यस्य मा भूत्' इसके कारण षत्वप्राप्ति ही नहीं है तब निषेध कैसा? यदि ऐसी बात है ] तो यह उदा॰ है—अभिसुसूषते। यह भी उदाहरण नहीं बन सकता क्योंकि 'स्थादिष्वभ्यासेन चाभ्यासस्य' (८।३।६४) यह नियम है। [ भाव यह है कि 'स्थादिषु' इस सूत्र में 'अभ्यासस्य' यह वचन नियमार्थ है—'स्थादिषु एव अभ्याससकारस्य मूर्धन्यो भवति नान्यत्र'। चूँकि 'सु' धातु स्थादि के अन्तर्गत नहीं है अतः षत्व की प्राप्ति ही नहीं है तब निषेध कैसा? यदि ऐसी बात है ] तो यह उदाहरण है—अभिसुसूते से अ = क्विप् प्रत्यय—अभिसुसूः। यहाँ सन् षभूत (ष आदेश प्राप्त) नहीं रहता है अतः अभ्यास से परे 'सू' के 'स' को षत्व की प्राप्ति है। [ उसी का निषेध किया जाता है। ]

स्य और सन् परे ही (निषेध होता है)—इसका क्या फल है? सुषाव। [ सु + लिट्, द्वित्व, अभ्यासादि कार्य, वृद्धि, आव् आदेश—'सु साव् अ' में षत्व होता है। ]

## ३९१२. सदिस्वञ्ज्योः परस्य लिटि[1]।।११६।। (२३६१)

**सदि, स्वञ्जि-इत्येतयोर्धात्वोर्लिटि परतः सकारस्य परस्य मूर्धन्यो न भवति। अभिषसाद, परिषसाद, निषसाद, विषसाद। परिषस्वजे परिषस्वजाते, परिषस्वजिरे। अभिषस्वजे। स्वञ्जेः**

**न्यासः**

**सदिस्वञ्ज्योः परस्य लिटि**।। लिटि द्विर्वचने कृते द्वौ सकारौ सम्भवतः। तत्र सदेः 'स्थादिष्वन्यासेन चाभ्यासस्य' इति सत्यप्यभ्यासेन व्यवाये षत्वं प्राप्नोति, स्वञ्जेरपि 'उपसर्गात् सुनोति' इत्यादिना, अतः प्रतिषेधोऽयमारभ्यते। **अभिषस्वज इति**। लिट्, 'लिटस्तझयोरेशिरेच्' इत्येश्, 'अनिदिताम्' इति नलोपः। ननु चासंयोगादिति प्रतिषेधात् स्वञ्जेः परस्य लिटः कित्त्वं नास्ति, तत् कथमत्र नलोपः। इत्यत आह—**स्वञ्जेः**

**पदमञ्जरी**

**सदिस्वञ्ज्योः परस्य लिटि**।। लिटि द्विर्वचने कृते द्वौ सकारौ भवतः, तत्र सदेः 'स्थादिष्वभ्यासेन च' इति वचनात् 'सदिरप्रतेः' इति षत्वप्रसङ्गः, स्वञ्जेरपि 'उपसर्गात्सुनोति' इत्यादिना। **परिषस्वज इति**। कथं पुनरत्र

**भावबोधिनी**

**विमर्श**—सु (षुञ्) से परे स्य और सन् के रहने पर सु के सकार का मूर्धन्य नहीं होता है। इसलिये 'सु' से 'स्य' और सन् दोनों के उदाहरण देने चाहिये। 'स्य' के उदा॰ में कोई विवाद नहीं है। परन्तु 'सन्' के उदाहरण में भाष्यकार द्वारा प्रदर्शित चर्चा काशिकाकार ने भी की है।

पहला उदा॰ 'अभिसुसूषति' यह दिया है जिसमें प्राप्त षत्व का निषेध प्रस्तुत सूत्र से होता है। परन्तु वास्तव में इस उदाहरण में षत्व की प्राप्ति ही नहीं है क्योंकि 'स्तौतिण्योरेव षण्यभ्यासस्य' (८।३।६१) यह सूत्र नियमार्थ है। 'स्तु' तथा णिजन्त धातुओं के ही षभूत सन् परे रहते अभ्यास इण् से परे आदेश के सकार का मूर्धन्य होता है, अन्य का नहीं होता है। चूँकि यह न 'स्तु' है और न णिजन्त, अतः षत्व की प्राप्ति ही नहीं है तब निषेध करना व्यर्थ है।

यदि दूसरा प्रयोजन यह माना जाय—अभिसुसूषते। इसमें प्राप्त षत्व के निषेध के लिये 'सन्' है तो यहाँ भी 'स्थादिष्वभ्यासेन चाभ्यासस्य' (८।३।६।७)) इस सूत्र के नियम के कारण प्राप्ति ही नहीं है। उस सूत्र के दो कार्य हैं—(१) स्थादि धातुओं में अभ्याससंज्ञक के व्यवधान में भी षत्व होता है। यह विध्यंश है। (२) अभ्यास का षत्व होता है किन्तु उन्हीं स्थादि के अभ्यास का स्थादि धातुओं में। 'उपसर्गात् सुनोति-सुवति-स्यति-स्तौति-स्तोभति—स्था-सेनय-सध-सिच-सन्ज-स्वञ्जाम्' (८।३।६५) में स्थादि पठित है। इनमें 'सु' (षुञ्) नहीं है। अतः 'अभिसुसूषते' में भी षत्व की प्राप्ति नहीं है।

सिद्धान्तभूत उदा॰ है—अभिसुसूः। अभिपूर्वक सु से सन्, द्वित्व अभ्यासकार्य के बाद—अभि सुसू + स। इसमें षभूत सन् नहीं रहता है इसलिये 'स्तौतिण्योरेव षण्यभ्यासस्य' (८।३।६१) इस नियम के लागू न होने से अभ्यास से परे स के षत्व की प्राप्ति है उसे रोकने के लिये 'सन्' का ग्रहण है। इसलिये 'अभिसुसू + स में अभ्यास के बाद षत्व नहीं होता है। सन् में सकार का षत्व तो 'आदेश- प्रत्यययोः' (८।३।५९) सूत्र से होता है। किन्तु क्विबन्त होने से 'अतो लोपः' से अलोप करने पर रुत्व (८।३।१५) की दृष्टि में षत्व असिद्ध हो जाने से रुत्व और विसर्ग होने पर—अभिसुसूः बनता है।।११५।।

लिट् परे रहते 'सदि' और 'स्वञ्जि' इन धातुओं के बादवाले द्वितीय सकार का मूर्धन्य आदेश नहीं होता है। उदा॰ अभिषसाद, परिषसाद, निषसाद, विषसाद। परिषस्वजे, परिषस्वजाते, परिषस्वजिरे। अभिषस्वजे। [ परिपूर्वक सद तथा स्वञ्ज् से लिट् में द्वित्वादि के बाद द्वितीय सकार का षत्व प्राप्त है। उसका निषेध होता है। ] स्वञ्ज् इस संयोगान्त से भी लिट् में विकल्प से कित्त्व कुछ आचार्य मानते है इसलिये वैकल्पिक अनुषङ्ग = न् का लोप होता है।

**विमर्श**—यहाँ सूत्र में 'स्वञ्ज' का उल्लेख भाष्यसम्मत नहीं है। भाष्य में 'सदेः परस्य लिटि' इतना ही पाठ है, क्योंकि 'सदो लिटि प्रतिषेधे स्वञ्जेरुपसंख्यानम्' यह वार्तिक भाष्य में पठित है। अभिपूर्वक 'सद्' से लिट् = तिप् = णल्, द्वित्व, अभ्यासादिकार्य करने के बाद--अभि ससाद् अ रूप होता है। 'स्थादिष्वभ्यासेन चाभ्यासस्य' (८।३।६६) इस सूत्र के नियम से अभ्यास का व्यवधान होने पर भी 'सदिरप्रतेः' (८।३।६६) इस सूत्र से द्वितीय सकार का षत्व प्राप्त है। उसका निषेध यह सूत्र करता है। प्रथम सकार का षत्व तो 'सदिरप्रतेः' से होता ही है।

१. 'सदेः परस्य लिटि' इति पाठः भाष्यसम्मतः। 'स्वञ्जि'-ग्रहणं च सूत्रे प्रक्षिप्तम्, वार्तिके तस्य ग्रहणदिति बोध्यम्।

**संयोगान्तादपि विभाषा लिटः कित्त्वमिच्छन्तीति पक्षेऽनुषङ्गलोपः।।**

**३९१३. निव्यभिभ्योऽड्व्यवाये वा छन्दसि।।११७।। (३६४७)**

**नि, वि, अभि–इत्येतेभ्य उपसर्गेभ्य उत्तरस्य सकारस्याड्व्यवाये छन्दसि विषये मूर्धन्यादेशो न भवति वा। न्यषीदत्पिता नः, न्यसीदत्। व्यषीदत्पिता नः, व्यसीदत्। अभ्यषीदत्, अभ्यसीदत्।**

**'सदिष्वन्ज्योः' इति, तदिह नानुवर्त्तते, सामान्येनैव तद्वचनम्।**

**न्यासः**

**संयोगान्तादपि लिटि विभाषा कित्त्वमिच्छन्तीति**। तच्च 'इन्धिभवतिभ्याञ्च' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाद्ः 'विभाषोर्णोः' इत्यतो विभाषाग्रहणानुवृत्तेर्वा। नन्वेवम् 'इन्धिभवतिभ्यां च इत्यत्रापि विभाषा प्रसज्येत? नैवम्; तस्या व्यवस्थितविभाषाविज्ञानात्।।११६।।

**निव्यभिभ्योऽड्व्यवाये वा छन्दसि**।। येन केनचिल्लक्षणेन प्राप्तस्य षत्वस्य प्रतिषेधोऽयमारभ्यते। **न्यसीददिति**। लङ्, 'पाघ्रा' इत्यादिना सीदादेशः। अत्र 'सदिरप्रते' इति प्राप्तिः। **न्यस्तौदिति**। 'उपसर्गात् सुनोति'

**पदमञ्जरी**

नलोपः, यावता संयोगान्तत्वान्नात्र लिटः कित्त्वमस्ति? अत आह—**स्वञ्जेरिति**। एतच्च 'इन्धिभवतिभ्यां च' इत्यत्र व्याख्यातम्, स्वञ्जिग्रहणञ्च वार्त्तिके दर्शनात्सूत्रे प्रक्षिप्तम्, यथाह—'सदो लिटि प्रतिषेधे स्वञ्जेरुपसंख्यानम्' इति।।११६।।

**निव्यभिभ्योऽड्व्यवाये वा छन्दसि**।। प्रकरणेन प्राप्तस्य सत्वमात्रस्य प्रतिषेधः। **न्यष्टौदिति**। 'उतो वृद्धिर्लुकि

**भावबोधिनी**

परि + स्वञ्ज् + लिट् = त = एश् द्वित्वादि के बाद रूप बनता है। यद्यपि यह धातु संयोगान्त है अतः 'असंयोगाल्लिट् कित्' (१।२।५) से कित्त्व की प्राप्ति नहीं है। परन्तु कुछ आचार्य इसमें भी कित्त्व मानते हैं जैसाकि न्यास में लिखा है। अतः 'न्' = अनुषङ्ग का लोप हो जाता है।।११६।।

नि, वि, अभि—इन उपसर्गों से उत्तरवर्ती सकार का अड् के व्यवधान में भी वेदविषय में विकल्प से मूर्धन्य नहीं होता है। [ फलतः दोनों प्रकार के रूप होते हैं। ] उदा॰ न्यषीदत् पिता नः, न्यसीदत्। व्यषीदत् पिता नः, व्यसीदत्। अभ्यषीदत्, अभ्यसीदत्। [ यह सूत्र इस षत्व प्रकरण के सभी सूत्रों से प्राप्त षत्व का वैकल्पिक निषेध वैदिक प्रयोगों में करता है क्योंकि 'सदेः' की अनुवृत्ति नहीं होती है। सद् + लङ् 'पा घ्राध्मा॰' (७।३।७८) सूत्र से 'सद' का 'सीद' आदेश, 'सदिरप्रतेः' (८।३।६६) से प्राप्त षत्व का विकल्प से निषेध, पक्ष में षत्व अतः—न्यसीदत् और न्यषीदत् दोनों प्रकार के रूप होते हैं। ]

'सदिस्वन्ज्योः' यह जो पूर्व सूत्र में है उसकी अनुवृत्ति इस सूत्र में नहीं होती है, सामान्यरूप से ही [ षत्वनिषेध के विकल्प का ] विधान है। [ इसलिये अन्य उदाहरण भी हैं ] व्यष्टौत्, व्यस्तौत्। (दो दो प्रकार के रूप) सिद्ध होते हैं। [ वि + स्तु + लङ्, अडादि कार्य वि अ स्तु + ति 'उतो वृद्धिर्लुकि हलि' (७।३।८९) सूत्र से उ की वृद्धि, 'उपसर्गात् सुनोतिसुवतिस्तौति॰' से प्राप्त

**व्यष्टौत्, व्यस्तौत्; अभ्यष्टौत्, अभ्यस्तौत्–इत्येतदपि सिद्धं भवति।।**

**।।इति श्रीवामनाचार्यविरचितायां काशिकावृत्तौ अष्टमाध्यायस्य तृतीयः पादः।।**

❧ ● ❧

**न्यासः**

इत्यादिना। स्तौतेर्लङ्, अदादित्वाच्छपो लुक्, 'उतो वृद्धिर्लुकि हलि' इति वृद्धिः।।११७।।

**।। इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरण-पञ्जिकायामष्टमाध्यायस्य तृतीयः पादः ।।**

❧ ● ❧

**पदमञ्जरी**

हलि' इति वृद्धिः, 'अभ्यस्थाद्विषोः पूतना अराती'रित्यप्युदाहरणम्।।११७।।

**।।इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यामष्टमस्याध्यायस्य तृतीयः पादः।।**

❧ ● ❧

**भावबोधिनी**

षत्व का विकल्प से निषेध होता है। षत्वपक्ष में ष्टुत्व भी होता है—व्यष्टौत् पक्ष में व्यस्तौत्। ] अभ्यष्टौत्, अभ्यस्तौत्।।११७।।

**।। इस प्रकार श्री वामनाचार्यविरचित 'काशिकावृत्ति' में अष्टम अध्याय का तृतीय पाद सम्पूर्ण हुआ ।।**

**।। इस प्रकार आचार्य जयशङ्करलाल त्रिपाठि-विरचित 'भावबोधिनी' हिन्दी-व्याख्या में काशिकावृत्ति के अष्टम अध्याय का तृतीय पाद सम्पूर्ण हुआ ।।**

**कृपया विश्वनाथस्य गुरु-पितृ-प्रसादतः।**
**तृतीयमष्टमे पादं व्याचष्ट 'जयशङ्करः'।।**

❧ ● ❧

# अथाष्टमाध्याये चतुर्थः पादः

## ३९१४. रषाभ्यां नो णः समानपदे।।१।। (२३५)

**रेफषकाराभ्यामुत्तरस्य नकारस्य णकारादेशो भवति, समानपदस्थौ चेन्निमित्तनिमितिनौ भवतः। आस्तीर्णम्, विस्तीर्णम्, अवपूर्णम्। षकारात्–कुष्णाति, पुष्णाति, मुष्णाति।**

**षग्रहणमुत्तरार्थम्; ष्टुत्वेनैव हि सिद्धमेतत्।**

**समानपद इति किम्? अग्निर्नयति। वायुर्नयति।**

**न्यासः**

**रषाभ्यां नो णः समानपदे।। समानपदस्थौ चेदित्यादि।।** समानशब्दोऽयमेकपर्यायः। समानम् = एकम्, अभिन्नमित्यर्थः। समानञ्च तत् पदञ्चेति कर्मधारयः, तत्र तिष्ठत इति समानपदस्थौ, 'सुपि स्थः' इति कप्रत्ययः। अत्र निमित्तं रेफः, षकारश्च। तन्निमित्तं यस्यास्तीति णत्वभावेन विपरिणतौ साध्यायां स निमित्ती नकारः। तेनैतदुक्तं भवति—यत्र पदे रेफषकारौ स्तस्तत्र यदि नकारोऽपीत्यर्थः। **आस्तीर्णम्, विशीर्णमिति**। 'स्तृञ् आच्छादने', शॄ हिंसायाम्'। व्याङ्पूर्वाभ्यां निष्ठा, 'श्र्युकः किति' इट्प्रतिषेधः, 'ॠत इद् धातोः' इतीत्वम्, रपरत्वञ्च। **अवगूर्णमिति**। 'गुरी उद्यमने', 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषधः, 'हलि च' इति दीर्घः, 'रदाभ्यां निष्ठातो नः' इति तकारस्य नकारः, तस्यानेनैव णत्वम्। **कुष्णाति, पुष्णातीति**। कुष निष्कर्षे', 'पुष पुष्टौ'। श्नाप्रत्ययः। **षग्रहणमुत्तरार्थमिति**। अथैतदर्थमपि कस्मान्न भवति? इत्याह—**ष्टुत्वेनैव सिद्धत्वादिति**। यद्येवम्, कुष्णातीत्यादेरुपन्यासः किमर्थः? उत्तरार्थं षग्रहणं क्रियमाणमेतदर्थमपि भवतीति प्रदर्शनार्थः। असति षग्रहणे कुष्णातीत्येवमादौ ष्टुत्वेनैव सिद्धिर्भवति। सति च तस्मिन्नुत्तरार्थ आरभ्यमाणेऽनेनैव णत्वं कर्तव्यम्। अस्मिन् कर्तव्ये ष्टुत्वस्यासिद्धत्वादन्यत्र चरितार्थत्वान्न च परत्वमुपपद्यते; पूर्वत्रासिद्धीये नास्ति विप्रतिषेधोऽभावादुत्तरस्येति।

**पदमञ्जरी**

**रषाभ्यां नो णः समानपदे।।** निमित्तयोरादेशे चाकार उच्चारणार्थः। समानं च तत्पदं समानपदम्। निमित्तनिमित्तिनोश्चायमाधारनिर्देशः। तदाह—**समानपदस्थौ चेदिति**। एकपर्यायः समानशब्दः। निमित्ते रषौ, निमित्ती नकारः। यद्यप्यसौ प्रागेव सिद्धस्वरूपः, तथापि तत्स्थाने भवतो णकारस्य यन्निमित्तम्, तस्यापि तेन सम्बन्धोऽस्त्येव। णकार एव वा निमित्ती, तस्य तु विधानोत्तरकालं समानपदस्थत्वम्।

**षग्रहणमुत्तरार्थमिति**। अडादिव्यवाये णत्वं वक्ष्यति, तस्मादपि यथा स्यात्। अथेहार्थमपि कस्मान्न भवति? अत आह—**ष्टुत्वेनैव सिद्धमेतदिति**।

**भावबोधिनी**

**प्रणम्य श्रीगणाधीशं काशीशं पितरौ गुरून्।**
**चतुर्थमष्टमे पादं व्याचष्टे 'जयशङ्करः'।।**

अब अष्टम अध्याय में चतुर्थ पाद आरम्भ होता है—

यदि निमित्त (रेफ या षकार) और निमित्ती (नकार) दोनों समान = एकपद में स्थित हों तो रेफ और षकार से उत्तरवर्ती नकार का णकार आदेश होता है। [ निमित्त = जिस रेफ या षकार को कारण मानकर णत्व होना है वे तथा निमित्ती = जिस नकार का णकार आदेश करना है वे दोनों पारिभाषिक एकपद में स्थित होने चाहिये तभी यह णत्व होता है। 'समान' यह 'एक' का पर्यायवाची है। ] रेफ से परे उदा० आस्तीर्णम्, विशीर्णम्, अवपूर्णम् [ आङ् पूर्वक 'स्तृञ् आच्छादने', विपूर्वक 'शॄ हिंसायाम्' तथा अवपूर्वक 'पॄ पूर्णने' धातु से निष्ठा 'क्त' प्रत्यय 'श्र्युकः किति' से इट् का निषेध, 'ॠत इद् धातोः' से ॠ का इत्व, 'उदोष्ठ्यपूर्वस्य' से ॠ

**❀ ऋवर्णाच्चेति वक्तव्यम्। ❀ तिसृणाम्। चतसृणाम्। मातॄणाम्। पितॄणाम्।**

**रश्रुतिसामान्यनिर्देशाद्वा सिद्धम्। वर्णभक्त्या च व्यवधानेऽपि णत्वं भवतीति क्षुभ्नादिषु (८।४।३९) नृनमन–तृप्नोतिग्रहणं ज्ञापकम्।**

**न्यासः**

**ऋवर्णाच्चेति वक्तव्यमित्यादि**।। रषाभ्यां णत्वमुच्यमानमृवर्णान्न प्राप्नोति, तस्य वर्णान्तरत्वात्। न च शक्यते वक्तुम्—ऋवणस्थाद्रेफाद् भविष्यति,वर्णो हि रेफः सूत्रे णत्वं प्रति निमित्तत्वेनाश्रितः। न हि ऋवर्णस्थो रेफो वर्णः, किं तर्हि? वर्णैकदेशः; तदेकदेशकत्वात्, न हि वर्णैकदेशो वर्णग्रहणेन गृह्यते। तथा चोक्तम्[१]—'वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतयस्तेषु तत्कार्यं न भवति। तच्छायानुकारिणो हि ते, न पुनस्त एव। पृथक् प्रयत्ननिर्वर्त्यं वर्णमिच्छन्त्याचार्याः' इति। तस्माद् 'ऋवर्णाच्च' इति वक्तव्यम्। **तिसृणाम्, चतसृणामिति**। 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इत्येतावादेशो भवतः। 'न तिसृचतसृ' इति निषेधात् 'नामि' इति दीर्घत्वं न भवति।

**पदमञ्जरी**

**ऋवर्णाच्चेति वक्तव्यमिति**। रषाभ्यां णत्वमुच्यमानमृकारान्न प्राप्नोति वचनम्। न च शक्यं वक्तुम्—ऋवर्णस्थाद्रेफाद् भविष्यतीति। वर्णो ह्यत्र रेफः सूत्र उपात्तः, षकारेण साहचार्यात्। न च वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते। **तिसृणामिति**। 'न तिसृचतसृ' इति प्रतिषेधात् 'नामि' इति दीर्घत्वाभावः।

तत्तर्हि वक्तव्यम्? नेत्याह—**रश्रुतिसामान्यनिर्देशात्सिद्धमिति**। र इति श्रुतिः—श्रोत्रेणोपलब्धिर्ययोस्ते रश्रुती—वर्णात्मिका चावर्णात्मिका च व्यक्तिः, तयोर्यत्सामान्यं तन्निदिश्यते; न तु वर्णात्मिकैव व्यक्तिरित्यर्थः। नन्वेवमपि ऋकारे त्रयो भागा अभितोऽज्भक्तिर्मध्ये रेफभक्तिर्मात्रा चतुर्भागात्मिका, ततश्च परयाज्भक्त्या व्यवधानान्न प्राप्नोति? 'अड्व्यवाये' इत्येवं भविष्यति। न पराज्भक्तिरट्सन्निविष्टा, सा ह्यर्द्धमात्रा चतुर्भागात्मिका ऋकारभक्तिः। न च तस्याः सवर्णग्रहणेन नाप्यड्ग्रहणेन ग्रहणम्; असवर्णत्वात्, न हि तस्याः स्थानं प्रयत्नो वा पृथगस्ति। तस्मात्सामान्यनिर्देशेऽपि नैव णत्वं सिध्यति, अत आह—**वर्णभक्त्या चेति**। वर्णस्य समुदायस्यावयवभूता या

**भावबोधिनी**

का उ, रपर, 'हलि च' से दीर्घ—अव तीर् + त, विशीर् + त्, 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' सूत्र से 'त' का नकार करने के बाद इसी नकार का णकार आदेश प्रस्तुत सूत्र से होता है—आस्तीर्णम्, विशीर्णम् रूप होते हैं। इसी प्रकार अव पूर्वक 'पूरी आप्यायने' से भी क्त = त, त का न करने के बाद उसी का णकार होता है—अवपूर्णम्। अवगूर्णम्—अव 'गुरी उद्यमने' से क्त, इट् निषेध, 'हलि च' से दीर्घ, त का न, न का ण—अवगूर्णम्। ] षकार से परे उदा॰ कुष्णाति, पुष्णाति, मुष्णाति। [ 'कुष निष्कर्षे' 'पुष् पुष्टौ' 'मुष् मुष्टौ' इन क्र्यादिगणीय धातुओं से लट् = तिप् 'क्र्यादिभ्यः श्ना' से श्ना = ना विकारण, प्रस्तुत सूत्र से 'न्' का णत्व आदेश। ]

[ षकार के योग में नकार का णत्व 'ष्टुना ष्टुः' इस सामान्य सूत्र से ही सिद्ध हैं तब यहाँ उसके ग्रहण का क्या फल है? ] षकार का ग्रहण उत्तरवर्ती सूत्र [ में अनुवृत्ति ] के लिये किया गया है क्योंकि उस षकार के साथ 'न' का णत्व तो ष्टुत्व से ही सिद्ध है।

समानपद में स्थित हों—इसका क्या फल है? अग्निर्नयति, वायुर्नयति। [ यहाँ अग्निर् वायुर् भिन्न भिन्न पद हैं 'नयति' भिन्न है। अतः इनमें णत्व रोकने के लिये 'समानपद' कहा गया है।

❀ ऋवर्ण से परे न का ण होता है—यह भी कहना चाहिये। ❀ उदा॰ तिसृणाम्, चतसृणाम्। मातॄणाम्, पितॄणाम्। [ त्रि का स्त्रीलिङ्ग में तिसृ और चतुर् का चतसृ आदेश—तिसृ + नाम्, चतसृ + नाम्, रेफ नहीं है ऋ को मानकर णत्व होता है। ] 'न तिसृचतसृ' सूत्र से दीर्घ का निषेध हो जाता है। परन्तु मातृ + नाम्, पितृ + नाम् में 'नामि च' से ऋ का दीर्घ होने के बाद णत्व होता है। इसके लिये अलग से ऋवर्ण का ग्रहण है। ]

[ वास्तव में इस अतिरिक्त वचन की आवश्यकता नहीं है क्योंकि ] र-श्रुतिसामान्य के निर्देश से ही यहाँ णत्व सिद्ध है। और वर्णभक्ति = अज्भाग के व्यवधान में भी णत्व होता है इसका ज्ञापक क्षुभ्नादिगण में 'नृनमन्' और 'तृप्नोति' का पाठ है।

१. वृत्तिकृता 'ऐऔच्' इति प्रत्याहारसूत्रे इति शेषः। (द्र. प्रथमभागः)

**अथ वा–ऋवर्णादपि णत्वं भवतीत्येतदेवानेन ज्ञाप्यते।।**

**न्यासः**

**रश्रुतिसामान्यनिर्देशात् सिद्धमिति**। अनेनोपसंख्यानं प्रत्याचष्टे। र इतीह श्रुतिरुपलब्धिर्यस्येति बहुव्रीहिः। अथ वा—श्रूयत इति श्रुतिः, रश्चासौ श्रुतिश्चेति रश्रुतिः। तस्याः केवलाया ऋवर्णस्थायाश्च वर्णत्वावर्णत्व-कृतभेदमुत्सज्य यत् सामान्यं रश्रुतिमात्रं तदिह निर्दिश्यते, न तु वर्णात्मिकैव रेफव्यक्तिः। तेनेह सिद्धं तिसृणामित्यादावपि णत्वम्; ऋवर्णे हि तस्य रश्रुतिसामान्यस्य विद्यमानत्वात्। स्यादेतत्—ऋकारे त्रयोऽज्भागाः सन्ति, तन्मध्यवर्त्ती तुरीयो रेफः, तत्र रश्रुतिसामान्यनिर्देशादपि नैव णत्वं सिध्यति, योऽसौ रेफात् परोऽज्भागस्तेन व्यवधानात्? इत्यत आह—**अवर्णभागित्याति**। यदयं क्षुभ्नादिषु णत्वप्रतिषेधार्थं नृनमन - तृप्नोतिग्रहणं करोति, तेनैतज्ज्ञाप्येत—अवर्णभागव्यवधानेऽपि णत्वं भवतीति, अन्यथैतयोः पाठोनर्थकः स्यात्; प्राप्त्यभावात्, प्राप्तिपूर्वकत्वात् प्रतिषेधानामिति।

इदानीं यद्यपि वर्णात्मिकैव रेफव्यक्तिर्निर्दिश्यते, तथापि णत्वं भवतीति दर्शयितुमाह—**अथ वेत्यादि**। पूर्वं सूत्रोपात्तादृश्रुतिसामान्यनिर्देशादवर्णभागव्यवधानेऽपि णत्वं भवतीति ज्ञापितम्। सम्प्रति तु सूत्रानुपात्तादृवर्णा-दव्यहितत्वाद् भवतीत्येष विशेषः। अथ किमर्थं णग्रहणम्, यावता प्रकृतोऽत्र मूर्धन्योऽनुवर्त्तिष्यते। स एव विधेयः, तत्रान्तरतम्याद् नकारस्य णकार एव भविष्यति? सत्यमेतत्; पूर्वसूत्रे मूर्धन्यग्रहणं निषेधेन सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिराशङ्क्येत। तस्मात् प्रतिषेधशङ्कानिरासार्थं पुनर्णग्रहणं कृतम्। ननु च प्राप्त्यभावा देव प्रतिषेधशङ्का न भविष्यति, प्राप्तिपूर्वका हि प्रतिषेधा भवन्ति, न च केनचिद्रषाभ्यामुत्तरस्य नकारस्य मूर्धन्यप्राप्तिरस्ति? सत्यमेतत्; अस्मादेव प्रतिषेधाद्विधिरनुमीयत इति। अथ वा—अनन्तरसूत्रे 'वा' इति वचनाद् विकल्पेनायं विधिर्विज्ञायते। तस्माद् विकल्पनिवत्त्यर्थम्, विस्पष्टार्थं वा।।१।।

**पदमञ्जरी**

पराज्भक्तिस्तयेत्यर्थः। ननु च नृनमनग्रहणं वृद्ध्यर्थं स्यात्—नृनमनस्यापत्यं नानर्मनिरिति? नैतदस्ति; बहिरङ्गा वृद्धिः, अन्तरङ्गं णत्वम्, 'असिद्धं बहिरङ्गमन्तरङ्गे'।

**अथ वेति**। व्यक्तिनिर्देशेऽपि दोष इत्यर्थः। अपरः प्रकारः—अभितोऽज्भक्ती चतुर्भागात्मिके, मध्ये शुद्धो रेफोऽर्धमात्रात्मकः, तेन व्यक्तिनिर्देशेऽप्यदोष इत्यर्थः। ननु च परयाज्भक्त्या व्यवधानम्? एवं तर्हि उत्तरसूत्रे योगविभागः करिष्यते—'व्यवायेऽपि' इति, व्यवायेऽपि णत्वं भवति; ततः 'अट्कुप्वाङ्नुम्भिः' इति। इदमिदानीं किमर्थम्? नियमार्थम्—वर्णात्मकैर्व्यवाये यदि भवति अडादिभिरेवेति। 'अपदान्तस्य मूर्धन्यः' इत्यधिकारादत्र णग्रहणं शक्यमकर्तुम्। उत्तरत्र च 'पदान्तस्य' इति प्रतिषेधः।।१।।

**भावबोधिनी**

अथवा इस (क्षुभ्नादिगण में पठित उक्त दोनों शब्दों) से यही ज्ञापित होता है कि—ऋवर्ण से परे भी न का णत्व होता है।

**विमर्श**—प्रस्तुत सूत्र में निमित्त के रूप में रेफ और षकार इन वर्णों का ही ग्रहण है जब कि ऋवर्ण से परे भी न का णत्व इष्ट है। इसीके लिये यह वचन पढ़ा गया—'ऋवर्ण से परे भी न का ण होना कहना चाहिये।' वास्तव में इस अतिरिक्त वचन की आवश्यकता नहीं है क्योंकि रेफ में सामान्य रूप से 'र' श्रुति का ग्रहण है वह 'रश्रुति' (र रूपी श्रवण) वर्णात्मक भी हो सकती है और अ-वर्णात्मक भी। दोनों का ग्रहण इष्ट है। परन्तु ऐसा मान लेने पर भी 'ऋ' में 'त्रयोऽज्भागा अभितोज्भक्तिर्मध्ये रेफभक्तिर्मात्रा चतुर्भागात्मिका' इस व्याख्यान के अनुसार रेफ के बाद अज्भक्ति = स्वरभक्ति का भी व्यवधान होने से णत्व नहीं हो सकेगा? इसका उत्तर है 'अड्व्यवाय' मानकर णत्व हो जायेगा।

दूसरा समाधान यह है कि 'क्षुभ्नादिषु च' (८।४।३९) क्षुभ्नादि-गण में 'नृनमन' 'तृप्नोति' शब्दों का पाठ णत्व रोकने के लिये किया गया है। यदि स्वरभक्ति के व्यवधान से ऋ से परे णत्व की प्राप्ति ही नहीं मानेंगे तो इनका पाठ-

## ३९१५. अट्कुप्वाङ्नुम्व्यवायेऽपि ।।२।। (१९७)

**अट्, कु, पु, आङ्, नुम्–इत्येतैर्व्यवायेऽपि रेफषकाराभ्यामुत्तरस्य नकारस्य णकार आदेशो भवति। अड्व्यवाये तावत्–करणम्, हरणम्। किरिणा। गिरिणा। कुरुणा। गुरुणा।**

**कवर्गव्यवाये–अर्केण। मूर्खेण। गर्गेण। अर्घेण।**

**पवर्गव्ययाये–दर्पेण। रेफेण। गर्भेण। चर्मणा। वर्मणा।**

**आङ्व्यवाये–पर्याणद्धम्। निराणद्धम्।**

**'अड्व्यवाये' इति सिद्धे आङ्ग्रहणम् 'पदव्यवाये' (८।४।३२)–इत्यस्य प्रतिषेधस्य बाधनार्थम्।**

**न्यासः**

**अट्कुप्वाङ्नुम्व्यायेऽपि**।। रषाभ्यामिति पञ्चमीनिर्देशान्निर्दिष्टग्रहणस्यानन्तर्यार्थत्वात् पूर्वेणाडादिव्यवधाने सत्यप्राप्तमेव णत्वमनेन विधीयते। **पर्याणद्धमिति**। 'णह बन्धने', निष्ठा, 'नहो धः' इति हकारस्य धकारः, 'झषस्तथोर्धोऽधः' इति तकारस्य धकारः, पूर्वधकारस्य 'झलां जश् झशि' इति दकारः।

ननु चाड्व्यावायेऽत्र णत्वं सिद्धम्, 'अण् सवर्णान् गृह्णाति' इत्याङोऽप्यड्ग्रहणेन ग्रहणात् किमर्थमाङ्ग्रहणम्? इत्याह—**आङ्ग्रहणमित्यादि**। असत्याङ्ग्रहणे 'पदव्यवायेऽपि' इत्याङ्व्यवाये प्रतिषेधः स्यात्। अतस्तद्बाधनार्थमाङ्ग्रहणम्। **बृंहणमिति**। 'वृह बृहि वृद्धौ', 'इदितो नुम् धातोः' इति नुम्, ल्युट् 'नश्चापदान्तस्य झलि' इत्यनुस्वारः।

**पदमञ्जरी**

**अट्कुप्वाङ्नुम्व्यवायेऽपि**।। 'रषाभ्याम्' इति पञ्चमीनिर्देशाद्व्यवाये न प्राप्नोतीत्ययमारम्भः। **पर्याणद्धमिति**। 'णह बन्धने', पर्याङ्पूर्वः निष्ठा 'नहो धः'।

ननु च 'अड्व्यवाये' इत्येवात्र णत्वं सिद्धं तत्किमर्थमाङ्ग्रहणम्? इत्यत आह—**अड्व्यवाय इत्येव सिद्धमिति**। क्वचित्तु **आङ्ग्रहणं पदव्यवायेऽपीत्यस्य बाधनार्थमित्येतावत् पठ्यते। बृंहणमिति**। 'बृहि वृद्धौ', 'इदितो नुम्', 'नश्चापदान्तस्य झलि' इत्यनुस्वारः।

**भावबोधिनी**

व्यर्थ होने लगेगा। वही वैयर्थ्य यह ज्ञापित करता है कि स्वरभक्ति के व्यवधान में भी णत्व होता है। इसे रोकने के लिये 'नृनमन, तृप्नोति' का पाठ सार्थक है।

अथवा उस पाठ से यही ज्ञापित मान लेना चाहिये कि ऋवर्ण से परे भी न का णत्व होता है। अतः यह अतिरिक्त वचन आवश्यक नहीं है।।१।।

अट् (अट् प्रत्याहार के वर्ण) कु = कवर्ग, पु = पवर्ग, आङ् = आ, नुम्—इन (में से किसी एक अथवा अनेक) के व्यवधान रहने पर भी रेफ तथा षकार से उत्तरवर्ती नकार का णकार आदेश होता है। अड् व्यवधान में उदा॰—करणम्। हरणम्। [ कर् + अन, हर् + अन यहाँ रेफ और न के बीच में अ का व्यवधान है। ] किरिणा गिरिणा। कुरुणा। गुरुणा। [ इनमें रेफ तथा न के मध्य में इकार उकार का व्यवधान होने पर भी णत्व होता है। पूर्ववर्ती सूत्र अव्यवधान में ही णत्व करता है। जैसा कि उसके उदाहरण में स्पष्ट है। ]

कवर्ग के व्यवधान में उदा॰—अर्केण। मूर्खेण। गर्गेण। अर्घेण। [ यहाँ रेफ और न के मध्य में कवर्ग = क, ख, ग, घ का व्यवधान होने पर भी णत्व होता है। ङ के व्यवधान का उदा॰ अन्वेष्टव्य है। ]

पवर्ग के व्यवधान में उदा॰ दर्पेण। रेफेण। गर्भेण। चर्मणा, वर्मणा। [ यहाँ रेफ और न के बीच में पवर्ग-प, फ, भ, म का व्यवधान है। ब के व्यवधान के उदा॰ अन्वेषणीय है। 'भर्बुणा' आदि उदाहरण बन सकते हैं। ]

**नुम्व्यवाये–बृंहणम्। बृंहणीयम्।**

**नुम्ग्रहणमनुस्वारोपलक्षणार्थं द्रष्टव्यम्। तेन तृंहणम्, तृंहणीयमित्यत्रानुस्वारव्यवाये नुमभावेऽपि णत्वं भवति। सत्यपि च नुमि यत्रानुस्वारो न श्रूयते, तत्र न भवति–प्रेन्वनम्, प्रेन्वनीयमिति।**

**न्यासः**

कथं पुनरिदं नुम्ग्रहणस्योदाहरणम्, यावतानुस्वारेणात्र व्यवायः, न नुमा; तृंहणमित्यत्रापि नुमोऽभावात्, प्रेन्वनमित्यत्रैव प्रसज्येत, अस्ति ह्यत्र नुमा व्यवायः? इति देश्यमाशङ्क्याह—**नुम्ग्रहणमित्यादि**। अनुस्वारोपलक्षणार्थं ह्यत्र नुम्ग्रहणम्, न नुमः प्रतिपादनार्थम्। तेन किं सिद्धं भवति? इत्याह—**तेनेत्यादि**। **दृंहणमिति**। 'दृह दृन्ह हिंसायाम्', ल्युट्, पूर्ववदनुस्वारः। अत्र नुम्ग्रहणस्यानुस्वारोपलक्षणार्थत्वादसत्यपि नुम्यनुस्वारव्यवाये णत्वं भवत्येव। अपिशब्दोऽयं बृंहणमित्यत्र नुमोऽनुस्वारे तद्व्यवाये णत्वं भवतीत्येवमर्थं द्योतयति। **प्रेन्वनमिति**। 'इवि व्याप्तौ' पूर्ववन्नुम्, तस्याझल्परत्वादनुस्वारो न भवति। अत्राप्यनुस्वारोपलक्षणार्थत्वाद् विद्यमानेऽपि नुम्यनुस्वारव्यवायो नास्तीति णत्वं न प्रवर्तते। यथैव हि 'नक्षत्रं दृष्टवा वाचो विसृज्येरन्' इत्यत्र नक्षत्रदर्शनकालस्योपलक्षणार्थत्वादसत्यपि नक्षत्रादर्शने तस्मिन् कालविशेषे सति वाचो विसृज्यन्ते, सत्यपि च नक्षत्रदर्शने तस्मिन्कालविशेषाभावे वाचो न विसृज्यन्ते; तथेहापि नुम्ग्रहणस्यानुस्वारोपलक्षणार्थत्वादसत्यपि नुमि यत्रानुस्वारव्यवायोऽस्ति तत्र णत्वं भवति, सत्यपि नुमि यत्रानुस्वारव्यवायो नास्ति तत्र न भवतीत्येवमर्थं वेदितव्यम्।

किं पुनरिह समुदायेन वाक्यपरिसमाप्तिः? प्रत्येकं वा? तत्र यदि पूर्वकः पक्ष आश्रीयते, तदा क्वचिदपि न स्यात्। न ह्येकस्मिन्नुदाहरणे सर्वैरडादिभिर्व्यवायः सम्भवति। अथ द्वितीयस्तदा अर्केणेत्यादौ न स्यात्, अनेकेन

**पदमञ्जरी**

यद्येवम्, अनुस्वारेणात्र व्यवायो न नुमा? अत आह—**नुम्ग्रहणमनुस्वारोपलक्षणार्थमिति**। झल्परस्य नुमोऽनुस्वारविधानात्स्थानिना नुमानुस्वार उपलक्ष्यते। एवमपि योऽनुस्वारो नुम्स्थानिको न भवति तद्व्यवाये न प्राप्नोति 'तृंह स्तृंह हिंसार्थौ,, तृंहणमिति? अत आह—**तेनेति**। नात्र नुम्स्थानिकोऽनुस्वार उपलक्ष्यते, किं तर्हि? अनुस्वारमात्रं तेनात्रापि भवतीत्यर्थः। यत्र तर्हि नुम एव श्रवणं नानुस्वारस्य तत्र णत्वं भवति, वा न वा? अत आह—**सत्यपि चेति**। यथा 'नक्षत्रं दृष्ट्वा वाचं विसृजेत्' इति कालविशेषोपलक्षणपरायां चोदनायां सत्यपि दिवा नक्षत्रदर्शने वाग् न विसृज्यते, उपलक्षितस्य कालस्याभावात्; असत्यपि नक्षत्रदर्शने रात्रौ विसृज्यते, तस्य कालस्य भावात्; तथेहापि द्रष्टव्यम्। **प्रेन्वनमिति**। 'इविः प्रीणनार्थः' 'इदितो नुम्', अत्र 'इजादेः सनुमः' इति णत्वप्रसङ्गः।

**भावबोधिनी**

आङ् के व्यवधान में उदा॰ पर्याणद्धम्। निराणद्धम्। [ परि आङ् + णह् = नह् क्त, ह का ध्, त का ध, पूर्वधकार का जश्त्व 'झलां जश् झशि' सूत्र से—परि आ नद् ध, यण्—पर्यानद्ध, आङ् के व्यवधान में णत्व। निर् आङ्, नद्ध—णत्व-निराणद्धम्। ]

यद्यपि आङ् को अट् में मान कर अट् के व्यवधान में ही णत्व सिद्ध हो सकता है तथापि आगे 'पदव्यवायेऽपि' (८।४।३७) सूत्र से पद के व्यवधान में णत्व का निषेध कहा गया है उसे रोकने के लिये स्वतन्त्ररूप से आङ् का ग्रहण है। [ अतः 'आङ्' के पद होने पर भी उसके व्यवधान में इससे णत्व होता ही है। ]

नुम् के व्यवधान में उदा॰ बृंहणम्। बृंहणीयम्। [ 'बृह बृहि वृद्धौ' में इ की इत् संज्ञा करने पर 'इदितो नुम् धातोः' सूत्र से नुम् = न् = अनुस्वार होता है—बृंह् + अन, बृंह् + अनीय। नुम् = अनुस्वार और अट् के व्यवधान में भी णत्व होता है। ]

यहाँ नुम् का ग्रहण अनुस्वार के उपलक्षण के लिये है [ न कि नुम् इसको बताने के लिये। ] इसलिये—तृंहणम्,

**व्यवायोपलक्षणार्थत्वादडादीनामिह व्यस्तैः समस्तैश्च व्यवायेऽपि णत्वं भवति।।**

**न्यासः**

व्यवधानात्? इत्यत आह—**व्यवायोपलक्षणार्थत्वादित्यादि**। इहैषामडादीनां व्यवायोपलक्षणार्थमुपादानम्। तेन व्यवाये णत्वं भवति। कतरस्मिन् व्यवाये? अडादिभिर्यो व्यवायस्तस्मिन्निति। शक्नुवन्ति चैत एकैकाः परस्परसहिताश्च। तमुपलक्षयितुं ये च तदुपलक्षणार्थमुपादीयन्ते तेषामेकेन द्वाभ्यां बहुभिश्च य उपलक्षितः स संगृह्यत एव। तथा हि—देवदत्तयज्ञदत्तविष्णुमित्रैः सह नाध्येतव्यमित्युक्ते देवदत्तादयो ये सहाध्ययनप्रतिषेधोपलक्षणार्थमुपात्तास्तेषामेकेनापि सह नाधीयते, द्वाभ्याम्, बहुभिश्च। तस्मादिहापि व्यवायोपलक्षणार्थत्वाडादीनां तैर्व्यस्तैः, समस्तैश्च व्यवाये णत्वं भवति। **व्यस्तैरिति**। तैरेकैकैव्यवाय उपलक्ष्यते। **समस्तैरिति**। परस्परसहितैः। समस्तग्रहणमनेकोपलक्षणार्थम्। न हि समस्तैर्व्यवायः क्वचित् सम्भवति। एवञ्च क्वचित् प्रत्येकं वाक्यपरिसमाप्तिः, क्वचिद् यथासम्भवं समुदायेन—इत्युक्तं भवति।

अथापिग्रहणं किमर्थम्? अव्यवाये यथा स्यादिति चेत्? न; पूर्वेणैव सिद्धत्वात्? एवं तर्ह्युत्तरार्थमपिग्रहणम्। असति हि तस्मिन्नुत्तरार्थे 'उपसर्गादसमासेऽपि' इत्येतदिहैव स्यात्—प्रणयतीति, यत्रास्ति व्यवायः; इह तु न स्यात्—निर्णयतीति, न ह्यत्राडादीनामेकतमेन व्यवायोऽस्ति।।२।।

**पदमञ्जरी**

इह समुदाये वाक्यपरिसमाप्तिर्दृष्टा, यथा—गर्गाः शतं दण्ड्यन्तामिति, अर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति, प्रत्येकमपि दृष्टा, यथा—वृद्धिगुणसंज्ञे प्रत्येकं भवतः। तत्रेह यदि पूर्वः कल्प आश्रीयते, न क्वचित् स्यात्, न हि समस्तैरडादिभिर्व्यवायः क्वचिदपि सम्भवति। द्वितीये तु अर्हेणेत्यादौ न स्यात्; अटा कवर्गेण च व्यवायात्। अत आह—**व्यवायोपलक्षणार्थत्वादिति**। इह ये यदुपलक्षणायोपादीयन्ते तेषामेकेन द्वाभ्यां बहुभिरप्युपलक्षितः स गृह्यते, तद्यथा—'गर्गैः सह न भोक्तव्यम्' इत्युक्ते प्रत्येकं च सह न भुज्यते, समुदितैरपि, तथेहापि शक्नुवन्त्यडादयः समस्ता व्यस्ताश्च व्यवायमुपलक्षयितुमिति सर्वत्र भवति। अडादिव्यवाये णत्वेऽन्यव्यवाये प्रतिषेधः—आदर्शेन, स्पर्शेन। यद्यप्यत्रान्येनापि व्यवायः, यस्त्वटा व्यवायस्तदाश्रयं णत्वं प्राप्नोति, यत्र त्वनिर्दिष्टैरेव व्यवायस्तत्रैव न स्यात्—कृत्स्नम्, मृघ्नोतीति? नैष दोषः; 'रषाभ्याम्' इत्यत्र 'तस्मात्' इति परिभाषोपस्थानाद्व्यवाये णत्वासङ्गात् सूत्रमिदमारभ्यमाणमडादिव्यवाय एव णत्वमनुजानाति, नान्यव्यवाये: तस्य निर्दिष्टग्रहणेन निवर्तितत्वात्, यदि च निदिष्टव्यतिरिक्तैरपि व्यवाये णत्वं स्यात्, नुम्ग्रहणमनर्थकं स्यात्; केवलेन नुमा व्यवायासम्भवात्।।२।।

**भावबोधिनी**

तृंहणीयम्—इनमें अनुस्वार के व्यवधान में, नुम् का व्यवधान न रहने पर भी णत्व होता है। [ 'तृंह, स्तृहं हिसार्थौ' में मूल रूप से अनुस्वार है तो भी णत्व होता है। ] और नुम् होने पर भी जहाँ उसका अनुस्वार के रूप में श्रवण नहीं होता है वहाँ णत्व नहीं होता है, जैसे—प्रेन्वनम्, प्रेन्वनीयम्। [ प्र पूर्वक 'इवि' प्रीणनार्थे' धातु की इ की इत्संज्ञा, लोप के बाद 'नुम्' होता है। परन्तु इसका अनुस्वार आदेश सम्भव न होने से नुम् के व्यवधान में णत्व नहीं होता है। न्यास में 'दृह दृंह् हिंसायाम्' के दृंहणम्, दृंहणीयम् रूप लिखे हैं। ]

प्रस्तुत सूत्र में अडादि का ग्रहण व्यवाय = व्यवधान के उपलक्षणार्थ है (अर्थात् इनमें किसी का भी व्यवधान होने पर णत्व होता है। अतः) इनमें से अलग अलग एक एक के अथवा समस्त = समुदाय रूप के (अडादि के) व्यवधान रहने पर भी णत्व होता है। [ इनकी तीन स्थितियाँ हो सकती हैं—(१) अडादि में से किसी एक का व्यवधान हो, (२) अनेक अलग अलग व्यवधान करें, (३) सभी एक साथ मिल कर व्यवधान करें। सभी स्थितियों में णत्व होता है इसी को सूचित करने केलिये 'व्यवायेऽपि' इसका उल्लेख किया गया है। इनमें से भिन्न किसी के व्यवधान में णत्व नहीं होता है जैसे—आदर्शेन। किसी का व्यवधान न रहने पर भी णत्व होता है—पूर्णम्, कृष्णः आदि उदा॰ हैं। ]।।२।।

## ३९१६. पूर्वपदात्संज्ञायामगः।।३।। (८५७)

**पूर्वपदस्थान्निमित्तादुत्तरस्य गकारवर्जिताद् नकारस्य णकार आदेशो भवति संज्ञायां विषये। द्रुणसः। वार्ध्रीणसः। खरणसः[१]। शूर्पणखा।**

**संज्ञायामिति किम्? चर्मनासिकः।**

**अग इति किम्? ऋगयनम्।**

**न्यासः**

**पूर्वपदात् संज्ञायामगः**।। रेफादिनिमित्तमिहानुवर्तते, तस्य केवलस्य पूर्वपदत्वं न सम्भवतीति सामर्थ्यात् पूर्वपदस्थान्निमित्तादुत्तरस्येत्येषोऽर्थो विज्ञायत इत्याह—**पूर्वपदस्थान्निमित्तादित्यादि**। **द्रुणस इति**। द्रुरिव नासिकास्येति बहुव्रीहिः। द्रुशब्दोऽत्रशाखावचनः। 'अञ्नासिकायाः संज्ञायां नसञ्चास्थूलात्' इत्यच्समासान्तः, नासिकायाश्च नसादेशः।

**चर्मनासिक इति**। चर्मविकारो नासिकास्येति 'समुदायविकारषष्ठ्याश्च बहुव्रीहिरुत्तरपदलोपश्च' इति समासः, उपसर्जनह्रस्वत्वम्। **ऋगयनमिति**। ऋचोऽयनमिति षष्ठीसमासः।

'अगः' इति शक्यमकर्तुम् 'अणृगयनादिभ्यः' इति निपातनादेव ऋगयनमित्यत्र णत्वाभावः सिद्धः? नैतदस्ति; 'अबाधकान्यपि निपातनानि भवन्ति' इत्युक्तम्, तत्र यद्यग इति नोच्येत, तदा पक्ष ऋगयणमित्यपि

**पदमञ्जरी**

**पूर्वपदात्संज्ञायामगः**।। 'रषाभ्याम्' इति वर्तते, न च तयोः पूर्वपदत्वं सम्भवतीति सामर्थ्यात्पूर्वपदस्थान्निमित्तादुत्तरस्येत्येषोऽर्थो विज्ञायत इत्यह—**पूर्वपदस्थादिति**। रेफषकारान्तात्पूर्वपदादित्ययं त्वर्थो न भवति; व्याख्यानात्। **द्रुणस इति**। द्रुरिव नासिका यस्येति बहुव्रीहिः, 'अञ्नासिकायाः' इत्यञ्प्रत्ययो नसादेशश्च। **वार्ध्रीणस इति**। वर्ध्र्या विकारो वार्ध्री रज्जुः, वार्ध्रीव नासिका यस्य स वार्ध्रीणसः—मृगविशेषः। तत्र पूर्वपदस्योपमाननिष्ठत्वाद्व्यधिकरणत्वात् पुवद्भावाभावः, नस्शब्दः प्रियादिषु वा द्रष्टव्यः। **शूर्पणखेति**। 'नखमुखात्संज्ञायाम्' इति प्रतिषेधः। यदा तु योगो विवक्ष्यते, न संज्ञा—शूर्पाकाराणि नखानि यस्या इति; तदा ङीष् भवति, णत्वं तु न भवति—शूर्पनखी। एवं च णत्वङीषौ न समवेतः—'ततः शूर्पनखीवाक्यात्' इति।

'अगः' इति शक्यमवक्तुम्। कस्मान्न भवति—ऋचामयनमृगयनमिति? निपातनादेतत्सिद्धम्—'अणृगयनादिभ्यः' इति। यथान्यत्रोक्तम्[२]—सर्वनामसंज्ञायां निपातनाण्णत्वाभाव इति।

**भावबोधिनी**

पूर्वपद में स्थित, गकार को छोड़कर [ अन्य किसी भी ], निमित्त से उत्तरवर्ती नकार का णकार आदेश संज्ञाविषय में होता है। उदा॰ द्रुणसः। [ द्रुः = वृक्षशाखा इव नासिका यस्य सः—इस अर्थ में समास करने पर 'अञ्नासिकायाः सञ्ज्ञायां नसञ्चास्थूलात्' (५।४।११८) सूत्र से समासान्त अच् प्रत्यय और नासिका का नस् आदेश करने के बाद प्रस्तुत सूत्र से न का ण होता है—द्रुणसः। इसी प्रकार ] वार्ध्रीणसः। [ वध्र्याः विकारः—वार्ध्री रज्जुः, वार्ध्री इव नासिका यस्य सः = एक विशेष प्रकार का मृग ] खरणसः। [ खरः = गर्दभः इव नासिका यस्य सः, गर्दभ की नाक के समान नाकवाला पुरुष ] शूर्पणखा। [ शूर्प इव नखाः यस्याः सा। समास के बाद 'नखमुखात् संज्ञायाम्' (४।१।१८) सेङीष् का निषेध, टाप्, प्रस्तुत सूत्र से न का ण—शूर्पणखा = रावण की बहिन। ] जब यौगिक अर्थ लेते हैं तब न ङीप् निषेध और न णत्व होता है—'शूर्पनखी' यही बनता है। ]

संज्ञा = नाम अर्थ में—इसका क्या फल है? चर्मनासिकः। [ चर्म इव नासिका यस्य साः। यह सामान्य शब्द है किसी का नाम नहीं। अतः न समासान्त प्रत्यय, न नस् आदेश और न णत्व। ]

१. क्वचिदिदमुदाहरणं नास्ति। २. 'सर्वादीनि' (१।१।२७) सूत्रभाष्ये वार्तिकमिदम्।

**केचिदेतन्नियमार्थं वर्णयन्ति–पूर्वपदात्संज्ञायामेव णत्वं नान्यत्रेति। [१]समासेऽपि हि समानपदे निमित्तनिमित्तिनोर्भावादस्ति पूर्वेण प्राप्तिरिति। स च नियमः पूर्वपदसम्बधादुत्तरपदस्थस्यैव णत्वं निवर्त्तयति–चर्मनासिक इति, न तद्धितपूर्वपदस्थस्य–खारपायणः, मातृभोगीणः, करणप्रिय इति।**

**न्यासः**

विज्ञायेत। तस्मादग इति वक्तव्यम्। अथ किं पुनरिदं नियमार्थम्? उत विध्यर्थम्? इत्यत आह—**केचिदित्यादि**। अपरे विध्यर्थमेतदिति वर्णयन्ति। अतः केचिदित्युक्तम्। ननु पूर्वसूत्रेण निमित्तनिमित्तिनोः समानपदस्थत्वे सति णत्वं विहितम्, न च द्रुणस इत्यादौ समासे कृते निमित्तनिमित्तिनोः समानपदस्थत्वमस्ति; निमित्तस्य पूर्वपदस्थत्वात्, निमित्तिन उत्तरपदस्थत्वाच्च। एवञ्च पूर्वसूत्रेणाप्राप्तिरेव णत्वस्य, तत् कथमस्य नियमार्थतोपपद्यते? इत्यत आह—**समासेऽपीत्यादि**। यद्यपि समासार्थाभ्यां पदाभ्यां या विभक्तिरुत्पन्ना तस्यां लुप्तायामपि तयोः प्रत्येकं प्रत्ययलक्षणेन पदसंज्ञायां सत्यां समासावयवापेक्षयाऽसमानपदतास्ति, तथापि समासाद् या विभक्तिरुत्पन्ना तया समुदायस्य पदसंज्ञायां सत्यां समुदायापेक्षया समानपदतास्त्येव। तस्मात् समासेऽपि समानपदे निमित्तनिमित्तिनोर्भावादस्ति पूर्वेण प्राप्तिः, ततश्च नियमार्थमेतदिति स्थितम्। यद्येवम्, तर्हि यथा चर्मनासिक इत्यत्रोत्तरपदस्थस्य नकारस्य णत्वं न भवति नियमेन व्यावर्तितत्वात्, तथा खरपस्यापत्यं खारपारायणः—'नडादिभ्यः फक्', मातृभोगाय हितो मातृभोगीणः—'आत्मन्विश्वजनभोगोत्तरपदात् खः' इत्यत्र च तद्धितस्थस्यापि न स्यात्, तथा करणं प्रियमस्य करणप्रिय इत्यत्र पूर्वपदस्थस्यापि न स्यात्? अत आह—**सचेत्यादि**। सम्बन्धिशब्दो हि नियतमेव प्रतियोगिनं सन्निधापयन्ति, यथा हि 'मातरि भक्त्या प्रवर्तितव्यम्' इत्युक्ते यद्यपि

**पदमञ्जरी**

**पूर्वपदात्संज्ञायामेवेति**। विपरीतस्तु नियमो न भवति—पूर्वपदादेव संज्ञायामिति, शिवादिषु, सुषेणशब्दस्य पाठात्। सिद्धे सत्यारम्भो नियमाय भवति, कथमत्र सिद्धिः? इत्याह—**समानपदेऽपि हीति**। यद्यपि पूर्वपदस्थं निमित्तमुत्तरपदस्थो निमित्तीति भिन्नपदस्थत्वमप्यस्ति, तथापि समासे कृते ततो या विभक्तिरुत्पद्यते, तया समुदायस्य पदसंज्ञायां सत्यां तस्मिन्समानेऽपि पदे भावादस्त्येव पूर्वेण प्राप्तिः, समानपदत्वं हि तत्राश्रितम्, न भिन्नपदत्वं प्रतिषिद्धम्। तस्मादुपपन्नं नियमार्थत्वम्। यद्येवम्, यथोत्तरपदस्थस्य नकारस्य णत्वं नियमेन व्यावर्त्यते—चर्मनासिक इति; तथा तद्धितपूर्वपदस्थस्यापि व्यावर्त्येत—खरपस्यापत्वम् 'नडादिभ्यः फक्'—खारपायणः, मातृभोगाय हितः 'भोगोत्तरपदात्खः'—मातृभोगीणः, करणं प्रियमस्य करणप्रियः? इत्याह—**स चेति**। सम्बन्धिशब्दो नियतमेव प्रतियोगिनमुपस्थापयति, तद्यथा—मातरि वर्तितव्यं पितरि शुश्रूषितव्यमिति, न

**भावबोधिनी**

पूर्वपद में गकार को छोड़कर—इसका क्या फल है? ऋगयनम्। [ ऋचः अयनम्—षष्ठीसमास, विभक्तिलुक्, ऋक् अयनम्, जश्त्व, ऋगयनम्, ऋ के बाद अट् है किन्तु पूर्वपद में गकार होने से णत्व नहीं होता है। ]

[ यह विधि सूत्र है या नियम सूत्र? इस पर विचार किया जा रहा है। ] कुछ लोग इस सूत्र को नियमार्थ ही प्रतिपादित करते हैं—'पूर्वपदस्थ निमित्त से परे संज्ञाविषय में ही णत्व होता है अन्यत्र नहीं होताहै। समास में भी समान = एक पद में निमित्त (= रेफ षकार आदि) तथा निमित्ती (नकार) होने से पूर्व सूत्र से णत्व की प्राप्ति है। [ उसमें यह नियम कर देता है कि यह णत्व उत्तरपदस्थ न का होगा तो संज्ञाविषय में ही होगा, अन्यत्र नहीं। ] और यह नियम पूर्वपद के सम्बन्ध के कारण उत्तरपदस्थ नकार केही णत्व की निवृत्ति करता है, रोकता है—चर्मनासिकः। [ यहाँ णत्व नहीं होता है। ] न कि तद्धित प्रत्ययस्थ नकार का और न पूर्वपदस्थ नकार का णत्व रोकता है—खारपायणः, भातृभोगीणः, करणप्रियः। [ इनमें णत्व होता ही है। ]

**विमर्श**—समास करने के पूर्व विग्रह वाक्य में पूर्वपद और उत्तरपद दो पद अलग अलग माने जाते हैं परन्तु समास संज्ञा करने के बाद जो विभक्ति आती है वह समुदाय = एक को मानकर ही आती है। अतः उसमें समान = एकपदत्व ही माना जाता है। अतः उसमें समानपदत्व मानकर णत्व की प्राप्ति होती है उसको इस नियम द्वारा ही रोका जा सकता है—'पूर्वपदस्थ निमित्त से परे यदि उत्तरपद के नकार का णत्व हो तो संज्ञा अर्थ में ही हो।'

---

१. 'समासपदे' इति मुद्रितः पाठः।

**'अगः' इति योगविभागेन णत्वप्रतिषेधः, न नियमप्रतिषेध इति।**

**अपरे तु–पूर्वसूत्रे 'समानमेव यन्नित्यं पदं तत्समानपदम्' इत्याश्रयन्ति; समानग्रहणात्। तेषामप्राप्तमेव णत्वमनेन विधीयते। समासे हि पूर्वपदोत्तरपदविभागादसमानपदत्वमप्यस्तीति।।**

### न्यासः

स्वस्यामिति नोच्यते, तथापि स्वस्यां मातरीति गम्यते; तथेहापि पूर्वपदमुत्तरपदमिति सम्बन्धिशब्दावेतौ—सति पूर्वदत्वे उत्तरपदत्वं सम्भवति, सति चोत्तरपदत्वे पूर्वपदत्वं सम्भवति। पूर्वपदसन्निधानादुत्तरपदे सन्निधापिते तस्यैवोत्रपदस्थस्य नकारस्य नियमो णत्वं निवर्त्तयति—चर्मनासिक इत्यादौ, न तद्धितपूर्वपदस्थस्यापि। खारपारायणः, मातृभोगीण इत्यादौ यथायोगं तद्धितपूर्वपदस्थो नकारः, न तूत्तरपदस्थः। अयं तर्ह्यस्मिन्नियमार्थे दोषः—'अगः' इति प्रतिषेधो नियमस्यैव स्यात्, न तु णत्वस्य; नियमवाक्यैकदेशभूतत्वात् प्रतिषेधस्य। ततः संज्ञायामसंज्ञायां च गकाराण्णत्वं स्यात्। अत एवाह—**अग इत्यादि।** अग इति योऽयं प्रतिषेधः स णत्वस्यैव, न नियमस्य। तस्मान्न भवत्येष दोषप्रसङ्गः। कथं पुनर्नियमवाक्यैकदेशभूतः सन्नेष प्रतिषेधो णत्वस्य विज्ञातुं शक्यः? इति प्रश्नावसर इदमुत्तरमाह—**योगविभागेनेत्यादि**। 'पूर्वपदात्संज्ञायाम्' इत्येको योगः, 'अगः' इति द्वितीयः; अनेन यावती काचिण्णत्वस्य प्राप्तिः सा सर्वा प्रतिषिध्यते, न त्वनन्तरमेव कार्यम्; अन्यथा योगविभागस्य वैयर्थ्यं स्यात्।

**अपरे त्वित्यादि**। तुशब्दः पूर्वस्मात् पक्षाद् विशेषं दर्शयति। अपरे त्वाचार्याः पूर्वसूत्रे समानमेव यन्नित्यं पदं तत् समानपदमित्याश्रयन्ति। तदेतदुक्तं भवति—यदावयवापेक्षा क्रियते तदापि यत् समानपदम्; यदापि समुदायापेक्षा क्रियते, तदापि यत् समानपदं तत् समानपदमित्येवं परिगृह्णन्ति। कस्मात्? इत्यत आह—**समानग्रहणादित्यादि**। समानग्रहणं ह्येवमर्थं क्रियते। एकपदाधिकरणत्वे सति निमित्तनिमित्तिनोर्णत्वं यथा स्यात्, भिन्नपदत्वे सति मा भूदिति। एतच्चाप्रयोजनम्; पदग्रहणादेवास्यार्थस्य लब्धत्वात्। यदि भिन्नपदाधारत्वे सति णत्वं

### पदमञ्जरी

चोच्यते—स्वस्यां मातरि स्वस्मिन्पितरीति, अथ च सम्बन्धादेतद् गम्यते—यस्य या माता तस्यमिति, यो यस्य पिता तस्मिन्निति। पूर्वपदम्, उत्तरपदमिति च सम्बन्धिशब्दावेतौ—पूर्वपदमपेक्ष्योत्तरपदं भवति, उत्तरपदं चापेक्ष्य पूर्वपदम्। तत्र सम्बन्धादेतदवगन्तव्यम्—यत्प्रति पूर्वपदमित्येतद्भवति तत्स्थस्य नियम इति। किञ्च प्रत्येतद्भवति? उत्तरपदम्।

### भावबोधिनी

यहाँ यह ध्यान रखना चाहिये कि पूर्वपद के सम्बन्ध के कारण उत्तरपद के नकार के विषय में ही यह नियम प्रवृत्त होता है जैसाकि 'चर्मनासिकः' में होता है। यह नियम न तो तद्धित प्रत्यय के नकार का और न पूर्वपद के नकार का णत्व रोकता है क्योंकि पूर्वपद सापेक्ष शब्द होने से उत्तरपदस्थ नकार के विषय में ही प्रवृत्त होता है। खारपायणः—खरपस्य अपत्यम् इस अर्थ में 'नडादिभ्यःफक्' (४।१।९९) सूत्र से फक् = फ = आयन प्रत्यय होता है। यह प्रत्यय अकेला उत्तरपद नहीं है। णत्व हो जाता है। इसी प्रकार—मातृभोग शब्द से 'भोगोत्तरपदात्खः' (५।१।९) सूत्र से ख = ईन प्रत्यय होताहै। इसकें भी न का ण होता है। करणप्रियः—करणं प्रियं यस्य सः—यहाँ पूर्वपद में ही न का ण करना है, प्रतिषेध नहीं होता है। 'करणप्रियः' यह वाक्यान्वाख्यानपक्ष में ही उदाहरण है। अन्यथा 'करण' शब्द मे सामान्य नियम से ही णत्व सम्भव है।

[ अनु० ] 'अगः' इस योगविभाग से णत्व का ही प्रतिषेध होता है, नियम का प्रतिषेध नहीं है।

**न्यासः**

स्यात्, तदा पदग्रहणमनर्थकं स्यात्; व्यवच्छेद्याभावात्, न ह्यपदस्थौ तौ स्तः। तस्मात् पदग्रहणसामर्थ्यादेवाभिन्नपदयोर्निमित्तनिमित्तिनोर्णत्वं लभ्यते। तत् पदग्रहणादेव समानपदे लब्धे समानग्रहणं क्रियमाणं नियमार्थं भवति—'नित्यं यत्समानपदम्' इत्यभिप्रायः। **तेषामित्यादिना** समानमेव यन्नित्यं पदं तत् पूर्वसूत्रे य आश्रयन्ति, तन्मतेन विध्यर्थतामस्य दर्शयति। स्यादेतत्—समासेऽपि नित्यं समानपदमेवाश्रयो निमित्तनिमित्तिनोः, अतो नियमार्थमेतदुक्तम्, न विध्यर्थम्? इत्यत आह—**समासे हीत्यादि**। समासे ह्यवयवापेक्षयैतत्पूर्वपदमिति, एतदुत्तरपदमिति—एष विभागोऽस्ति, तस्मादसमानपदत्वमप्यस्ति। अपिशब्दात् समानपदत्वमपि। तत्र यदा पूर्वोत्तरपदापेक्षा भवति, तदा पूर्वोत्तरविभागादसमानपदत्वम्। यदा तु समुदायापेक्षा, तदा पूर्वोत्तरविभागाभावात् समानपदत्वम्। अतो न समासे समानपदत्वं नित्यमेव॥३॥

**पदमञ्जरी**

अयं तर्हि दोषः—'अगः' इति नियमस्यैव प्रतिषेधः प्राप्नोति, तेनैकवाक्यत्वात्, न णत्वस्य, ततश्च संज्ञायाञ्च गान्तरे णत्वं प्राप्नोति? अत आह—**अग इति**। 'अगः' इति योऽयं प्रतिषेधः स णत्वस्य, न नियमस्य। अत्र हेतुः—**योगविभागेनेति**। 'पूर्वपदात्संज्ञायाम्' इत्येको योगः, 'अगः' इति द्वितीयः; अनेन च या च यावती च णत्वप्राप्तिः सा सर्वा प्रतिषिध्यते, योगविभागसामर्थ्यात्।

**अपरे त्वित्यादि**। कथं पुनः समानमेवेत्यवधारणं लभ्यते? अत आह—**समानग्रहणादिति**। 'पदे' इत्येव वक्तव्यम्, तत्रापदस्थयोर्निमित्तिनिमित्तनोरसम्भवात् पदग्रहणमेकत्वविवक्षार्थं विज्ञायते। एवं सिद्धे यत्समानग्रहणं क्रियते, तस्यैतत्प्रयोजनं यथैवं विज्ञायेत—समानमेव यत्पदमिति। तेषामेवं ब्रुवतां विध्यर्थमेतद्विज्ञायत इत्याह—**तेषामिति**। विध्यर्थत्वमेवोपपादयति—**समासे हीति**। अथास्मिन्पक्षे खारपायण इत्यत्र कथं णत्वम्, यावता खरपशब्दे खरशब्दस्यापि पदत्वमस्ति, तत्स्थत्वाद्रेफस्य समानपदस्थत्वमेव न भवति? नैष दोषः; यत्र द्वावपि निमित्तनिमित्तिनौ समानपदस्थत्वं व्यभिचरतः, तत्र णत्वाभावः; इह रेफस्य व्यभिचारेऽपि नकारस्य समानपदस्थत्वाव्यभिचाराण्णत्वं प्रवर्त्तते॥३॥

**भावबोधिनी**

**विमर्श**—भाव यह है कि 'पूर्वपद से उत्तरवर्ती नकार का णत्व संज्ञा में ही होता है'—यह नियम कहा गया। अब 'अगः' इसका अर्थ गकार से भिन्न में यह नियम लागू होगा अर्थात् 'अगः' यहाँ नञ् द्वारा नियम का ही निषेध होगा, णत्व का नहीं, क्योंकि प्रतिषेध नियमवाक्य का एकदेश है। फलतः गकार से परे णत्व संज्ञा और असंज्ञा दोनों में होने लगेगा? इसका समाधान यह है 'पूर्वपदात् संज्ञायाम्' यह एक योग है और 'अगः' यह दूसरा। इस द्वितीय योग का ही यही फल होता है जो भी णत्व की प्राप्ति है वह सभी प्रतिषिद्ध हो जाय, गकार से परे णत्वमात्र का निषेध होता है। अतः कोई दोष नहीं रहता।

(अनु॰) दूसरे आचार्य यह कहते हैं—समान ही पद हो अर्थात् जो नित्य पद के रूप में ही प्रयुक्त होता हो वही 'समानपद' होता है। [ अर्थात् चाहे अवयव के रूप में हो चाहे समुदाय के रूप में, वह एक पद ही रहे तो 'समानपद' कहा जाता है— ] ऐसा ज्ञान 'समान' शब्द के ग्रहण से होता है। [ अन्यथा 'पदे' इतने कथन से भी 'एकपदे' इसका ज्ञान हो जाता 'समान' विशेषण की क्या उपयोगिता। वही बतलाता है कि जो नित्य एक पद रूप में हो वही 'समान पद' है। ] इनके मत में प्रस्तुत सूत्र किसी से भी न प्राप्त णत्व का विधान करता है (अर्थात् यह **विधिसूत्र** है नियमसूत्र नहीं।) क्योंकि समास में पूर्वपद तथा उत्तरपद का विभाग होने से असमानपदत्व भी रहता है। [ साथ ही समानपदत्व भी। ऐसी स्थिति में समास में समानपदत्व नित्य नहीं है। उसमें असमानपदत्व-पक्ष में किसी से णत्व की प्राप्ति नहीं है वहाँ प्रस्तुत सूत्र 'गकारवर्जित स्थल वाले नकार के णत्व का विधान ही करता है'। अतः विधि सूत्र ही है। ]॥३॥

**३९१७. वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः।।४।। (१०३९)**

**'पूर्वपदात्संज्ञायाम्' इति वर्तते। पुरगा, मिश्रका, सिध्रका, शारिका, कोटरा, अग्रे–इत्येतेभ्यः पूर्वपदेभ्य उत्तरस्य वन-नकारस्य णकारादेशो भवति संज्ञायां विषये। पुरगावणम्। मिश्रकावणम्। सिध्रकावणम्। शारिकावणम्। कोटरावणम्। अग्रेवणम्।**

**❀ 'सिद्धे सत्यारम्भो नियमार्थः' ❀ (का.प.६२)–एतेभ्य एव परस्य वन-नकारस्य णकारादेशो भवति, नान्येभ्य इति। कुबेरवनम्। शतधारवनम्। असिपत्रवनम्।।**

**न्यासः**

**वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः**।। वनमिति षष्ठीस्थाने सुब्व्यत्ययेन प्रथमा। **पुरगावणमिति** षष्ठीसमासः। 'वनगिर्योः संज्ञायां कोटरार्किशुलुकादीनाम्' इति पूर्वपदस्य दीर्घः। **अग्रेवणमिति**। षष्ठीसमासः। तस्मिन् कृते राजदन्तादित्वाद् वनशब्दस्य परनिपातः। 'हलदन्तात् सप्तम्याः संज्ञायाम्' इति सप्तम्या अलुक्।

ननु च पूर्वेणैव णत्वं सिद्धम्, तत् किमर्थोऽयम्? इत्यत आह—**सिद्ध इत्यादि,** पुरगादिभ्यो वननकारस्यैवेति विपरीतनियमो नाशङ्कनीयः; पुरगादीनां कृतदीर्घाणां निर्देशात्। स ह्येवमर्थः क्रियते—यत्रैषां दीर्घत्वं तत्र नियमो यथा स्यात्, अन्यत्र मा भूदिति। अन्यथा 'वनगिर्योः' इत्यनेनैव दीर्घत्वे सिद्धे दीर्घोच्चारणं गौरवफलमेव केवलं स्यात्। तस्माद् यत्रैषां दीर्घत्वं तत्रैव नियमः। अतो व्यवच्छेद्याभावान्न भवति विपरीतनियमाशङ्का; न हि वनादन्यस्मिन्नमीषां पूर्वपदभूतानां दीर्घत्वमस्ति।।४।।

**पदमञ्जरी**

**वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः**।। 'वनम्' इति षष्ठ्याः स्थाने प्रथमा। उदाहरणे 'वनगिर्योः संज्ञायाम्' इति पूर्वपदस्य दीर्घत्वम्। **अग्रेवणमिति**। षष्ठीसमासे राजदन्तादित्वाद्वनशब्दस्य परनिपातः, 'हलदन्तात्', इति सप्तम्या अलुक्, अथ न संज्ञा ततो राजदन्तादिषु निपादनादलुक्।

**सिद्धे सतीत्यादि**। पुरगादिष्वेतदुच्यते, अग्रेशब्दे त्वसंज्ञायां विध्यर्थमित्यहुः। **एतेभ्य एव वननकारस्येति**। 'एतेभ्यो वननकारस्यैव' इत्ययं तु नियमो न भवति; दीर्घोच्चारणात्। तद्धि दीर्घान्तेष्वयं नियमो भवेदिति। न च वनादन्यत्रोत्तरपदे दीर्घान्तत्वमेषां सम्भवति, यत्रास्य णत्वं दीर्घान्तेषु व्यावर्त्त्येत।।४।।

**भावबोधिनी**

इसमें 'पूर्वपदात् संज्ञायाम्' (पूर्वपदस्थ निमित्त से परे नकार का संज्ञाविषय में ही णत्व होता है)—यह अनुवृत्ति होती है। पुरगा, मिश्रका, सिध्रका, शारिका, कोटरा तथा अग्रे—इतने पूर्वपदों से उत्तरवर्ती 'वन' शब्द के नकार का णत्व आदेश संज्ञाविषय में होता है। उदा० पुरगावणम्। मिश्रकावणम्। सिध्रकावणम्। शारिकावणम्। कोटरावणम्। [ पुरगस्य वनम्, मिश्रकस्य वनम् आदि षष्ठी समास करने के बाद 'वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम्' (६।३।११७) सूत्र से 'पुरग' आदि का दीर्घ आदेश करने के बाद प्रस्तुत सूत्र से न का णत्व होता है। कोटरादिगण में—कोटर। मिश्रक। पुरग। सिध्रक। शारिक—ये शब्द हैं। 'पुरक' तथा 'सारकि' यह पाठान्तर भी प्राप्त है। अतः दोनों पाठ प्रामाणिक हैं। ] अग्रेवणम्। [ वनस्य अग्रे—षष्ठीसमास, 'राजदन्तादिषु परम्' सूत्रनियम से वन का परनिपात ] 'हलदन्तात् सप्तम्याःसंज्ञायाम्' से सप्तमी का अलुक्, प्रस्तुत सूत्र से णत्व। यह ध्यान रखना चाहिये कि ये सभी शब्द संज्ञावाची ही हैं। अन्यथा यौगिक में 'पुरगवनम्' आदि रूप होते हैं। ]

[ इन सभी शब्दों में पूर्ववर्ती सूत्र से ] णत्व के सिद्ध रहते यह सूत्र नियम करने के लिये बनाया गया है 'पुरग आदि पठित शब्दों से ही परे 'वन' शब्द के नकार का णकार आदेश होता है, इनसे भिन्न किसी से परे णत्व नहीं होता है। इसलिये—कुबेरवनम्, शतधारवनम्। असिपत्रवनम्। [ इनमें णत्व नहीं होता है। 'इन शब्दों से परे 'वन' के नकार का ही णत्व होता है अन्य के नकार

## ३९१८. प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि।।५।। (१०५०)

**प्र, निर्, अन्तर्, शर, इक्षु, प्लक्ष, आम्र, कार्ष्य, खदिर, पीयूक्षा–इत्येतेभ्य उत्तरस्य वननकारस्य संज्ञायामसंज्ञायामपि णकारादेशो भवति। प्र–प्रवणे यष्टव्यम्। निर्–निर्वणे प्रतिधीयते। अतर्–अन्तर्वणे। शर–शरवणम्। इक्षु–इक्षुवणम्। प्लक्ष–प्लक्षवणम्। आम्र–आम्रवणम्। कार्ष्य–कार्ष्यवणम्। खदिर–खदिरवणम्। पीयूक्षा–पीयूक्षावणम्।।**

**न्यासः**

**प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि**।। येऽत्रौषधिवनस्पतिशब्दा न भवन्ति प्रादयस्तेभ्यः संज्ञायाम्—यदि पूर्वसूत्रं नियमार्थम्, अथापि विध्यर्थम्—उभयथाप्यप्राप्तणत्वमनेन विधीयते। एवमसंज्ञायामपि विधिपक्षे। नियमपक्षे त्वसंज्ञायां निष्प्रयोजनोऽस्यारम्भः; असंज्ञायां नियमाभावात्, आद्याम्यामेव सूत्राभ्यां यथायोगं णत्वस्य सिद्धत्वात्। इतरेषु शरादिष्विक्षुशरशब्दावोषधिवचनौ। शेषाः प्लक्षादयो वनस्पतिवचनाः। तेभ्यः संज्ञायां विधिपक्षे नियमपक्षे चाप्राप्तं णत्वमनेन विधीयते। असंज्ञायां तु 'विभाषौषधिवनस्पतिभ्यः' इति विभाषाणत्वं प्राप्तं नित्यमनेन विधीयते। असंज्ञायामपीत्यपिशब्दस्य व्यापारं दर्शयति—असत्यपिशब्दे संज्ञाधिकारादसंज्ञायां न स्यात्। अथ तु संज्ञाधिकारं निवर्त्त्य सामान्येन विधिरुच्यते तदा शक्यते संज्ञाग्रहणमकर्तुम्? तत् क्रियते विस्पष्टार्थम्। **प्रवणम्, निर्वणममिति**। प्रगतं वनं निर्गतं वनमिति प्रादिसमासः। **अन्तर्वणमिति**। विभक्त्यर्थेऽयम्, 'अव्ययम्' इत्यादिनाव्ययीभावः। वनस्य मध्य इत्यर्थः। **शरवणमित्यादयश्च** षष्ठी-समासाः।।५।।

**पदमञ्जरी**

**प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि**।। अत्रादितस्त्रिषु संज्ञायामसज्ञायामप्राप्तं णत्वं विधीयते, कथम्? संज्ञायां तावत् 'पूर्वपदात्संज्ञायाम्' इत्येतद्यद्यपि नियमार्थम्, अथापि विध्यर्थम्—उभयथापि अवश्यम् 'वनं पुरगा' इत्यादिसूत्रं नियमार्थम्—पुरगादिष्वेव वननकारस्येति, ततश्च प्रादिष्वप्राप्तिः. असंज्ञायामपि नियमे तावदप्राप्तिः; संज्ञायामेवेति नियमात्। विधावपि संज्ञाया विधानादन्यत्राप्राप्तिरेव। शरादिषु त्वोषधिवनस्पतिवाचिषु संज्ञायामसंज्ञायां चोत्तरसूत्रेण प्राप्तस्य विकल्पस्यापवादः। 'असंज्ञायामपि' इत्यनुच्यमाने 'संज्ञायाम्' इत्यधिकारात्तत्रैव स्यात्। निवर्तिष्यते संज्ञायामिति? यदि निवर्तते, संज्ञायां न प्राप्नोतिः पुरगादिभ्य एव वननकारस्येति नियमात्। अयं तु विधिरसंज्ञायां सावकाशः, संज्ञायामपि परत्वादयमेव विधिर्भविष्यति, 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधः', तस्मादसंज्ञायामपीति वक्तव्यम्। **प्रवणम्, निर्वणमिति**। प्रादिसमासौ। **अन्तर्वणमिति**। विभक्त्यर्थेऽव्ययीभावः, **शरवणादयः** षष्ठीसमासाः।।५।।

**भावबोधिनी**

का नहीं—ऐसा विपरीत नियम नहीं बन सकता क्योंकि सूत्र में 'पुरगा' आदि कृतदीर्घ शब्दों का पाठ है। यह दीर्घ 'वन' शब्द परे संज्ञा में ही कहा गया है। अतः अन्य शब्द परे इन शब्दों का दीर्घ रूप न हो सकने के कारण विपरीत नियम—'इनसे परे वन के नकार का ही णत्व हो'—ऐसा नहीं समझना चाहिये। ]।।४।।

प्र, निर्, अन्तर्, शर, इक्षु, प्लक्ष, आम्र, कार्ष्य, खदिर, पीयूक्षा—इन शब्दों से उत्तरवर्त्ती 'वन' शब्द के नकार का णत्व संज्ञाविषय तथा असंज्ञाविषय दोनों में होता है। उदा॰ प्र—प्रवणे यष्टव्यम्। निर्-निर्वणे प्रतिधीयते। अन्तर्—अन्तर्वणे। शर—शरवणम्। इक्षु—इक्षुवणम्। प्लक्ष—प्लक्षवणम्। आम्र—आम्रवणम्। कार्ष्य—कार्ष्यवणम्। खदिर—खदिरवणम्। पीयूक्षा—पीयूक्षावणम्। [ इन सभी में रेफ या षकार से परे होने से णत्व होता है। ]

**विमर्श**—प्रस्तुत सूत्र से णत्व किये गये शब्द संज्ञा = नाम तथा असंज्ञा = यौगिक दोनों प्रकार के हैं। प्रथम के दो शब्दों में प्रादिसमास है, तृतीय में विभक्त्यर्थ में अव्ययीभाव है, शेष सभी में षष्ठी-तत्पुरुष है। इसके विधिसूत्र अथवा नियमसूत्र होने के विषय में न्यास और पदमञ्जरी में देखना चाहिये।।५।।

**३९१९. विभाषौषधिवनस्पतिभ्यः।।६।। (१०५१)**

**'वनम्' इत्येव। ओषधिवाचि यत्पूर्वपदं वनस्पतिवाचि च तत्स्थान्निमित्तादुत्तरस्य वन-नकारस्य णकार आदेशो भवति विभाषा। ओषधिवाचिभ्यस्तावत्-दूर्वावणम्, दूर्वावनम्। मूर्वावणम्, मूर्वावनम्। वनस्पतिभ्यः-शिरीषवणम्, शिरीषवनम्। बदरीवणम्, बदरीवनम्।**

**❀ द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यम्। ❀ इह मा भूत्-देवदारुवनम्। भद्रदारुवनम्।**

**❀ इरिकादिभ्यः प्रतिषेधो वक्तव्यः। ❀ इरिकावनम्। मिरिकावनम्।**

**न्यासः**

**विभाषौषधिवनस्पतिभ्यः**।। संज्ञायाम् 'वनं पुरगामिश्रका'दिनियमादोषधिवनस्पतिभ्यः परस्य वननकारस्य णत्वेन न भवितव्यमिति पारिशेष्यादसंज्ञायां विभाषा वेदितव्या। परत्वादनया विभाषया संज्ञायामपि भवितव्यमित्येतच्च नाशङ्कनीयम्; नियमे कर्त्तव्ये विभाषाया असिद्धत्वात्। अथ तु संज्ञायामसंज्ञायामपि विभाषेयमिष्यते, तदर्थं यत्नान्तरमास्थेयम्। किं पुनस्तद्? विभाषेति योगविभागकरणम्। योगविभागे सत्येको योगो नियमबाधनार्थो विज्ञायत इति संज्ञायामपि विभाषा सिध्यति। असिद्धत्वं तु योगविभागसामर्थ्यान्न भविष्यति। अत्र समानग्रहणसामर्थ्यात् समानमेव यन्नित्यं पदं तत् समानपदमित्याश्रयन्ति ये, तेषामप्राप्तविभाषेयम्; अन्येषां तु प्राप्तविभाषा। बहुवचननिर्देशस्तु स्वरूपनिरासार्थः। **दूर्वावण**मित्येवमादयः षष्ठीसमासाः।

**द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यमिति**। अक्षरशब्दात्राक्षु वर्तते। द्वे अक्षरे, त्रीणि वाक्षराणि येषां ते द्व्यक्षरत्र्यक्षराः, ओषधिवनस्पतिशब्दाः, तेभ्यः परस्य वननकारस्य णत्वं भवत्येतदर्थरूपं व्याख्येमित्यर्थः। तत्रेदं व्याख्यानम्—व्यवस्थितविभाषाविज्ञानाद् द्व्यक्षरत्र्यक्षरेभ्य एव भवति। एवमुत्तरत्रापि वक्तव्यशब्दस्य व्याख्येयमित्यर्थः। व्याख्यानं तु व्यवस्थितविभाषामाश्रित्य कर्तव्यम्।

**पदमञ्जरी**

**विभाषौषधिवनस्पतिभ्यः**।। 'असंज्ञायामपि' इत्यनुवर्त्तते, तेन संज्ञाऽसंज्ञयार्द्वयोरयं विकल्पः। अन्ये तु **वृत्ता**वनुक्तत्वात्तस्याधिकारं नेच्छन्ति, तेषां संज्ञाविषये पुरगादिभ्य इति नियमत्वेन भवितव्यम्। यदि त्विष्यते यत्नान्तरमास्थेयम्।

इह ये पुष्यन्ति फलन्ति च ते वानस्पत्याः; ये फलन्त्येव न पुष्यन्ति ते वनस्पतयः; उभयेऽपि ते वृक्षा इत्यभिधानविदः। ततश्च वनस्पतिशब्दोपादानेन णत्वं विकल्प्यमानं शिरीषवणमित्यत्रैव स्यात्, शिरीषादयो हि पुष्यन्ति फलन्ति च, तस्माद्वृक्षग्रहणं कर्त्तव्यम्, तदिदमाशङ्कते तावत्—

**भावबोधिनी**

'वनम्' इसकी अनुवृत्ति होती है। ओषधिवाचक और वनस्पतिवाचक जो पूर्वपद उसमें विद्यमान [ णत्व के ] निमित्त से उत्तरवर्ती 'वन' शब्द के नकार का विकल्प से णत्व होता है। पहले ओषधिवाची के उदा॰ दूर्वावणम्, दूर्वावनम्। मूर्वावणम्, मूर्वावनम्। वनस्पतिवाची के उदा॰ शिरीषवणम्, शिरीषवनम्। बदरीवणम्, वदरीवनम्। [ इनमें षष्ठी-समास है। ये शब्द संज्ञा और असंज्ञा दोनों में दोनों रूपों वाले होते हैं। ]

❀ दो अक्षरों = अचों वाले और तीन अक्षरों वाले (औषधि तथा वनस्पति के वाचक) शब्दों से परे 'वन' के न का णत्व कहना चाहिये। ❀ जिससे कि इनमें णत्व न होने लगे—देवदारुवनम्। भद्रदारुवनम्। [ इसमें चार चार अक्षर हैं। अतः णत्व नहीं होता है। ]

❀ इरिका आदि शब्दों से परे वन के न के णत्व का प्रतिषेध कहना चाहिये। ❀ इरिकावनम्। मिरिकावनम्।

[ ओषधि तथा वनस्पति आदि के स्वरूप का प्रदर्शन करते हैं— ]

**फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगाः।**
**ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः।।**
**(इति) सत्यपि [1]भेदे वृक्षवनस्पत्योरिहाभेदेन ग्रहणं द्रष्टव्यम्[1]।**

**न्यासः**

ननु च च शिरीषादयो वृक्षाः, न तु वनस्तपतयः, न तु वनस्पतिग्रहणेन वृक्षस्य ग्रहणं भवति; तेषामत्यन्तभेंदात्। तथा चोक्तं **शास्त्रान्तरे**—'फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगाः' इति, तत् कथं शिरीषवणम्, बदरीवणित्युदाहृतम्? इति यो देशयेत् तं प्रत्याह—**फली वनस्पतिर्ज्ञेय इति**। यद्यप्यनेन श्लोकेन वृक्षवनस्पत्योर्भेदो दर्शितः, तथापि तयोरिहाभेदेन ग्रहणं वेदितव्यम्। अभेदग्रहणे तु तयो**र्भाष्यकारवचन**मेव लिङ्गम्; तथा हि 'लुपि युक्तवद् व्यक्तिवचने' इत्यत्र **भाष्यकारेणोक्तम्**—'व्यक्तिवचने इति किम्? शिरीषाणामदूरभवो ग्रामः शिरीषाः, तेषां वनं शिरीषवनम्'। यद्यत्र 'व्यक्तिवचने' इति नोच्यते, तदा वनस्पतित्वमतिदिश्येत, तत्र 'विभाषौषधिवनस्पतिभ्यः' इति णत्वं प्रसज्येत। यदि चेह वृक्षवनस्पत्योरभेदेन ग्रहणं न स्यात्, ततो वनस्पतित्वातिदेशाद् विभाषा णत्वप्रसञ्जनञ्च नोपपद्यते; शिरीषाणामवनस्पतित्वात्। फली वनस्पतिर्ज्ञेय इति, पुष्पमन्तरेण फलमात्रं यस्यास्तीति स फली वनस्पतिर्ज्ञेय इति—उदुम्बरादयः। **वृक्षाः पुष्पफलोपगा इति**। पुष्पं फलञ्चोपगच्छन्ति = प्राप्नुवन्तीतिपुष्पफलोपगाः। 'अन्तात्यन्त्य' इत्यादौ 'अन्येष्वपि दृश्यते' इत्युपसंख्यानाड्डप्रत्ययः। न च ये पुष्पफले उपगच्छन्ति त एव वृक्षाः, किं तर्हि? येऽन्यतरत् पुष्पं फलं चोपगच्छन्ति तेऽपि वृक्षा एव। तत्र वेतसादयः पुष्पमेवोपगच्छन्ति, प्लक्षादयः फलमेव, आम्रादयस्तूभयम्। तत्र यो वनस्पतिः स नियतं वृक्षो भवति, यस्तु वृक्षः स तु नावश्यं वनस्पतिः; यथा— पुष्पोपगाश्च वृक्षा वेतसादयः फलोपगाश्च प्लक्षादयः, पुष्पफलोपगाश्चाम्रादयः। **ओषध्यः फलपाकान्ता इति**। ओषधिशब्दात् 'कृदिकारादक्तिनः' इति 'सर्वतोऽक्तिन्नर्थादित्येके' इति बह्वादिपाठात् ङीष्। फलापकेनान्तो = विनाशो यासां ताः फलाकान्ता ओषध्यो विज्ञेयाः, कदल्यादयः। **लता गुल्माश्च वीरुध इति**। लताः = प्रतानवत्यो मालत्यादयः। गुल्माः = ह्रस्वस्कन्धास्तरवः। वीरुधः = बहुप्रकाण्डपत्रा विज्ञेयाः।।६।।

**पदमञ्जरी**

**फली वनस्पतिरित्यादि**। फलमेव यस्य न पुष्पं स वनस्पतिः = उदुम्बरादिः, पुष्पोपगा वेतसादयः, फलोपगा उदुम्बरादयः, उभयोपगा आम्रादयश्च वृक्षाः। अन्तात्यन्तादिसूत्रे 'डोऽन्यत्रापि दृश्यते' इति वचनाड्डः। फलपाकेन विनाशो यासां ता ओषध्यः—शाल्यादयः, स लताप्रतानवत्यो मालत्यादयः, गुल्माः = ह्रस्वस्कन्धास्तरवः, बहुकाण्डपत्राः वीरुध इति—यद्यपि वृक्षवनस्पत्योर्भेदः स्मर्यत इति शङ्कां परहरति—**इहाभेदेन ग्रहणं द्रष्टव्यमिति**। अत्र च 'लुपि युक्तवव्द्यक्तिवचने' इत्यत्र **भाष्यकारवचनं** लिङ्गम्। उक्तं हि तत्र—"व्यक्तिवचन इति किम्, शिरीषाणामदूरभवो ग्रामः शिरीषाः, तस्य वनं शिरीषवनमिति—वनस्पतित्वं नातिदिश्यते। यद्यतिदिश्येत, 'विभाषौषधिवनस्पतिभ्यः' इति णत्वं प्रसज्येत" इति। यदि चोक्तो भेद इहाश्रितः स्यात्, शिरीषाणामवनस्पतित्वाद्वनस्पतित्वणत्वयोः प्रसञ्जनं नोपपद्येत।।६।।

**भावबोधिनी**

जिसमें केवल फल ही होते अर्थात् पुष्प नहीं होते हैं उसे 'वनस्पति' समझना चाहिये—(जैसे—गूलर आदि)। जिनमें केवळ पुष्प होते हैं, या फल ही होते है या दोनों होते हैं, उन्हें वृक्ष' कहा जाता है। फल पक जाने के बाद जो नष्ट हो जाती हैं उन्हें 'ओषधी' कहा जाता है। लता = फैलने वाली, गुल्म = छोटे छोटे स्कन्धों = तनों से युक्त होते हैं, वीरुध् = बहुत लम्बी बेल तथा पत्तों से युक्त होतीं हैं।

१. मुद्रितपुस्तके त्वयं पाठोऽप्रासङ्गिकः श्लोकतः पूर्वमेव धृतः।

## ३९२०. अह्नोऽदन्तात्।।७।। (७९१)

**अदन्तं यत्पूर्वपदं तत्स्थान्निमित्तादुत्तरस्याह्नो नकारस्य णकार आदेशो भवति। पूर्वाह्णः। अपराह्णः।**

**अदन्तादिति किम्? निरह्नः। दुरह्नः। 'अह्नोऽह्न एतेभ्यः' (५।४।८८) इत्यह्नादेशः। 'अह्नः' इत्याकारान्तग्रहणाद् 'दीर्घाह्नी शरदि'त्यत्र न भवति।।**

न्यासः

**अह्नोऽदन्तात्**।। 'अह्नः' इति षष्ठ्याः स्थाने प्रथमा पूर्ववत्। समानमेव यन्नित्यं पदं तत् समानग्रहणादाश्रयन्ति ये, तेषां विध्यर्थमेतत्। अन्येषां तु नियमार्थम्। एवमुत्तरत्रापि नियमार्थता विध्यर्थता च यथायोगं वेदितव्या। **पूर्वाह्ण इत्यादि**। पूर्वपरादिसूत्रेणैकदेशी समासः। 'राजाहःसखिभ्यष्टच्' इति टच्समाससान्तः। 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः सवर्णदीर्घः।

**निरह्न इति**। निर्गतमह्न इति प्रादिसमासः। शेषं पूर्वत्। **दीर्घाह्नीति**। दीर्घाण्यहानि यस्यामिति बहुव्रीहिः। टज्विधौ 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः' इत्यतस्तत्पुरुषग्रहणमनुवर्त्तते तेन बहुव्राहौ टञ् न भवति। 'अन उपधालोपिनोऽन्यतरस्याम्' इति ङीप्, 'अल्लोपोऽनः' इत्युपधाकारलोपः। अत्राकारान्तग्रहणान्न भवति णत्वम्। यदि त्वनकारान्तस्य स्यात्, ततः पूर्वाह्ण इत्यत्र प्रत्ययात् प्राक् यथा व्यवस्थित्याह्नो नकारस्य णकारादेशो भवति, तथा दीर्घाह्नी शरदित्यत्रापि स्यात्। अतोऽस्य ग्रहणं हि व्याख्यानाद् विज्ञायते। तपरकरणात् पराजितमहः पराह्न इत्यत्र आकारान्तान्न भवति।

अन्तग्रहणं विस्पष्टार्थम्। तपरेणाकारेण पूर्वपदे विशेष्यमाणे तदन्तविधिर्भविष्यतीति विनाप्यन्तग्रहणं तदन्तता लभ्यत इति।।७।।

पदमञ्जरी

**अह्नोऽदन्तात्**।। **पूर्वाह्ण इति**। अह्नः पूर्वो भाग इति 'पूर्वापर' इत्यादिसूत्रेण समासः, 'राजाहःसखिभ्यष्टच्', 'अह्नोऽह्न एतेभ्यः' इति अह्नादेशः। **निरह्न इति**। निर्गतोऽह्न इति प्रादिसमासः, शेषं पूर्ववत्। **दीर्घाह्नी शरदिति**। बहुव्रीहिरयम्, तेन टज्न भवति; टज्विधौ तत्पुरुषाधिकारात्। 'अन उपधालोपिनोऽन्यतरस्याम्' इति ङीप्, 'अल्लोपोऽनः'। अकारान्तस्य ग्रहणादत्र णत्वं न भवति। यदि तु नकारस्यायं षष्ठ्या निर्देशः स्यात्, अत्रापि णत्वं स्यात्। अकारान्तस्य तु ग्रहणं प्रकरणाद्विज्ञायते। सर्वत्र प्रकरणे स्थानी प्रथमया निदिश्यते-वनम्, वाहनम्, यानमिति। यद्वा-युवादिषु पाठादस्य णत्वाभावः। अवश्यकर्तव्यश्च युवादिषु पाठः; प्रातिपदिकान्तेति विकल्पेन णत्वं मा भूदिति। अन्तग्रहणं ज्ञापकम्—अत्र प्रकरणे न यत्नमन्तरेण वर्णेनापि तदन्तविधिर्भवतीति। तेन 'रषाभ्याम्' इत्यत्र तदन्तविधिर्न भवति।।७।।

भावबोधिनी

इस उपर्युक्त लक्षण में परस्पर भेद रहने पर भी प्रस्तुत सूत्रमें वृक्ष और वनस्पति का अभेदरूप से ग्रहण समझना चाहिये। [ इसलिये 'वनस्पति' शब्द से वृक्ष का भी ग्रहण करना चाहिये। इस अभेदग्रहण में प्रमाण है 'लुपि युक्तवद्व्यक्तिवचने' इस सूत्र का महाभाष्य। उस भाष्य में 'शिरीषवनम्' में वनस्पतित्व के अतिदेश का निषेध किया है। यदि वृक्ष और वनस्पति में प्रस्तुत सूत्र में अभेद न माना जाता तो णत्व की प्राप्ति ही नहीं होती क्योंकि 'शिरीष' तो 'वनस्पति' नहीं माने जा सकते। अतः वही भाष्य इसका प्रमाण है कि इस सूत्र में वृक्ष और वनस्पति में अभेद माना जाता है। ]।।६।।

अदन्त जो पूर्वपद उसमें स्थित (णत्व का) जो निमित्त उससे परे 'अहन्' के नकार का णत्व होता है। उदा० पूर्वाह्णः। अपराह्णः। [ अह्नः पूर्वः भागः—इस विग्रह में 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' सूत्र से समास 'राजाहःसखिभ्यष्टच्' सूत्र से समासान्त टच् प्रत्यय, 'अह्नोऽह्न एतेभ्यः' सूत्र से अहन् का 'अह्न' आदेश—पूर्व अह्न, सवर्णदीर्घ, प्रस्तुत सूत्र से णत्व—पूर्वाह्णः। अपराह्णः। ] [ अह्नः अपरः भागः—इस विग्रह में पूर्वोक्त सारी प्रक्रिया होती है। ]

## ३९२१. वाहनमाहितात्।।८।। (१०५२)

**आहितवाचि यत्पूर्वपदं तत्स्थान्निमित्तादुत्तरस्य वाहननकारस्य णकार आदेशो भवति। इक्षुवाहणम्। शरवाहणम्। दर्भवाहणम्।**

**वाहने यद् आरोपितमुह्यते तदाहितमुच्यते।**

**आहितादिति किम्? दाक्षिवाहनम्। दाक्षिस्वामिकं वाहनमित्यर्थः।**

### न्यासः

**वाहनमाहितात्**।। उह्यतेऽनेनेति करणे ल्युट्। अत एव निपातनादुपधादीर्घः। **इक्षुवाहणमिति**। इक्षूणां वाहनमिति कृद्योगलक्षणायाः कर्मणि षष्ठ्याः समासः। **वाहने यदारोपितं तदाहितमुच्यत इति**। अनेकार्थत्वाद् धातूनां दधातिस्तत्र वर्त्तते, आहितमिति भूतकालोऽत्र न विवक्षितः। 'कृत्यल्युटो बहुलम्' इति कालसामान्ये क्तो विधीयते। तेन यदापि वाहने वाहनार्थमिक्ष्वादिकमारोपितं न भवति, तदर्थं तु केवलमुपकल्पितं भूतलस्थितम्, तदापि भवत्येव। **दाक्षिवाहनमिति**। अत्र दाक्षिस्वामिकवाहनमेव प्रतीयते, न त्वाहितत्वम्। अत एवाह- **दाक्षिस्वामिकं वाहनमित्यर्थ इति**। अत्र शब्दशक्तिहेतुः।।८।।

### पदमञ्जरी

**वाहनमाहितात्**।। उह्यतेऽनेनेति वाहनम् = शकटादि, करणे ल्युट्, अस्मादेव निपातनादुपधावृद्धिः। आहितमारोपितमुच्यते। यदा वाह्यं नारोपितं केवलं सन्निहितं तदा न प्राप्नोति, तदापीष्यते। यदाह— आहितोपस्थितयोरिति वक्तव्यमिति। न वा भूतकालस्याविवक्षितत्वात् स्वामिभावनिवृत्तिपरायां चोदनायामाहितमिति भूतकालो न विवक्ष्यते, तेनाहितादाधायिष्यमाणाच्च भविष्यति। केवलं स्वस्वामिभावविवक्षायामेव न भवति, यथा प्रत्यदाहरणे उक्तम्—**दाक्षिस्वामिकमित्यर्थ इति**। दाक्ष्यादयोऽपि यदा वाह्यत्वेन विवक्ष्यन्ते न स्वामित्वेन, तदा णत्वं भवत्येव।।८।।

### भावबोधिनी

ह्रस्व अकारान्त पूर्वपद से परे—इस का क्या फल है? निरह्णः। दुरह्णः। [ निर्गतः, अह्नः, दुर्गतः अह्नः—इनमें 'कुगतिप्रादयः' से समास आदि के बाद 'अह्न' आदेश। निर् अह्न में अदन्त पूर्वपद न होने से णत्व नहीं होता है। ] इनमें 'अह्नोऽह्न एतेभ्यः' सूत्र से 'अहन्' का 'अह्न' आदेश होता है। 'अह्नः' इस अकारान्त का ग्रहण = उल्लेख होने से 'दीर्घाह्नी शरद्' इसमें णत्व नहीं होता है। [ भाव यह है जहाँ 'अहन्' का अदन्त 'अह्न' ऐसा रूप साथ होता है वहीं णत्व होता है। अतः 'दीर्घाणि अहानि यस्यां सा' इस बहुव्रीहि में समास के बाद समासान्त टच् प्रत्यय न होने से अदन्त नहीं बनता है अपितु 'अन उपधा लोपिनोऽन्यतरस्याम्' सूत्र से ङीप् के बाद 'अल्लोपोऽनः' से उपधा अकार का लोप होने पर 'दीर्घाह्नी' रूप बनता है। इसी प्रकार 'अदन्तात्' में तपरकण के कारण—'पराह्णः' इसमें दीर्घ आकारान्त 'परा' से परवर्ती होने से णत्व नहीं होना चहिये। अतः इस णत्व के लिये दो बातें आवश्यक है (१) अदन्त पूर्वपद और (२) अकारान्त 'अह्न' शब्द। सूत्र में 'अह्नः' यह प्रथमान्तनिर्देश स्थानी का बोधक है न कि षष्ठ्यन्त रूप है ]।।७।।

आहितवाची जो पूर्वपद उसमें स्थित (जो णत्व का) निमित्त (उस) से परे 'वाहन' शब्द के नकार का णत्व आदेश होता है। उदा० इक्षुवाहणम्। शरवाहणम्। दर्भवाहणम्। [ सभी में कर्म में षष्ठी मानकर 'इक्षूणां वाहनम्' आदि समास है। 'उह्यतेऽनेन' इस करण अर्थ में ल्युट् = अन प्रत्यय और इसी निपातन से उपधा की वृद्धि होने से 'वाहन' = बैलगाड़ी आदि अर्थ होता है, भाव अर्थ नहीं है। ]

वाहन = बैलगाड़ी आदि पर रखकर = लादकर जो ढोया जाता है, ले जाया जाता है उसे 'आहित' कहते हैं। [ जैसे— ईक्षु, गन्ना, शर = सरकण्डा, दर्भ = कुश। ]

## ३९२२. पानं देशे।।९।। (१०५३)

**पाननकारस्य पूर्वपदस्थान्निमित्तादुत्तरस्य देशाभिधाने णकार आदेशो भवति। पीयते इति पानम्। 'कृत्यल्युटो बहुलम्' (३।३।११३) इति कर्मणि ल्युट्। क्षीरं पानं येषां ते क्षीरपाणा उशीनराः। मनुष्याभिधानेऽपि देशाभिधानं गम्यते। सुपाराणाः प्राच्याः। सौवीरपाणा बाह्लीकाः। कषायपाणा गन्धाराः।**

**देश इति किम्? दाक्षीणां पानं दाक्षिपानम्।।**

### न्यासः

**पानं देशे।। देशाभिधान इति।** गम्यमान इति शेषः। **क्षीरं पानं येषामिति।** कर्तरि कृद्योगलक्षणा षष्ठी। **क्षीरपाणा उशीनरा इति।** अतिशयोऽत्र प्रतीयते, न तु क्षीरपान - सम्बन्धमात्रम्; तस्यान्यत्रापि सम्भवात्। ननु च क्षीरपाणादयः शब्दा मनुष्ये वर्तन्ते, तत्सामानाधिकरण्यादुशीनरादयोऽपि तत्रैव, तत् कथमिह देशाभिधानं गम्यते? नैतदस्ति; उशीनरादिदेशवासिनां तात्स्थ्यात् तथा प्रतीयमानत्वादुशीनरादिदेशसम्बन्धद्वारेण मनुष्येषूशीनराख्या। उशीनरादयोऽपि शब्दाः प्राग्देशेष्वेव प्रवृत्ताः, पश्चात् तत्सम्बन्धेन मनुष्येषु। तेन मनुष्याभिधाने देशाभिधानं गम्यत इत्युक्तं भवति। यथा—मञ्चाः क्रोशन्तीत्यत्र मञ्चसम्बन्धद्वारेण मनुष्येष्वपि वर्तमाना ये मञ्चशब्दास्तेषां मञ्चाभिधानं गम्यते। यदि तेषां मञ्चाभिधानं न गम्येत, तदा मञ्चाधारविशिष्टाः पुरुषाः कथं प्रतीयेरन्?।।९।।

### पदमञ्जरी

**पानं देशे।। क्षीरं पानं येषामिति।** कर्त्तरि षष्ठी। उशीनरादयः शब्दा देशद्वारेण पुरुषेषु वर्तन्त इति देशाभिधायिनो भवन्ति।

**दाक्षीणां पानमिति।** अत्रापि कर्मसाधन एव पानशब्दः।।९।।

### भावबोधिनी

आहित = लादे जानेवाले पदार्थ के वाचक से परे—इसका क्या फल है? दाक्षिवाहनम्। दाक्षि है स्वामी जिसका ऐसा वाहन = गाड़ी यह अर्थ है। [ इसमें 'आहित' = ढोये जाने वाले माल की प्रतीति न होकर उस वाहन के स्वामी की प्रतीति होने से णत्व नहीं होता है। ]।।८।।

पूर्वपद में विद्यमान [ णत्व के ] निमित्त से परे 'पान' के नकार का णकार आदेश होता है देश = स्थानविशेष के कथन में। पीयते इति पानम् = जिसे पिया जाता है, जो पेय है वह 'पान' है। 'कृत्यल्युटो बहुलम्' सूत्र से पा धातु से कर्म अर्थ में ल्युट् = अन प्रत्यय होकर 'पान' शब्द निष्पन्न हुआ है। क्षीर = दूध है, पान = पेय जिनका वे—क्षीरपाणाः उशीनराः। [ बहुव्रीहि करने पर 'न' का 'ण' होता है। यहाँ क्षीरपीने वाले मनुष्य इस प्रकार का कथन होने पर भी 'देश' = स्थानविशेष की प्रतीति हो जाती है—उशीनर देशवासी क्षीरपान करने वाले होते हैं। सुरापाणाः प्राच्याः। प्राग्देशवासी सुरा पान करने वाले होते हैं। ] सौवीरपाणाः बाह्लीकाः। [ वाह्लीकदेशवासी सौवीर पान करने वाले होते हैं। ] कषायपाणाः गान्धाराः। गान्धारदेशवासी कषैले रस का पान करने वाले होते हैं।

देश अर्थ की प्रतीति में—इसका क्या फल है? दाक्षीणां पानम् = दाक्षिपानम् = दाक्षियों का पीना। [ इससे देश अर्थ की प्रतीति न होने से णत्व नहीं होता है। पान करनेवाले मनुष्यो के माध्यम से ही देशविशेष अर्थ की प्रतीति समझनी चाहिये ]।।९।।

## ३९२३. वा भावकरणयोः।।१०।। (१०५४)

**भावे करणे च यः पानशब्दस्तदीयस्य नकारस्य णकार आदेशो भवति वा पूर्वपदस्थान्निमित्तादुत्तरस्य। क्षीरपाणं वर्त्तते, क्षीरपानम्। कषायपाणम्, कषायपानम्। सुरापाणम्, सुरापानम्। करणे–क्षीरपाणः कंसः। क्षीरपानः।**

**❀ वाप्रकरणे गिरिनद्यादीनामुपसंख्यानम्। ❀ गिरिणदी, गिरिनदी। चक्रणदी, चक्रनदी। चक्र-णितम्बा, चक्र-नितम्बा।।**

## ३९२४. प्रातिपदिकान्तनुम्विभक्तिषु च।।११।। (१०५५)

**न्यासः**

**वा भावकरणयोः**।। अदेशार्थोऽयमारम्भः। **क्षीरपाणमिति**। पीतिः = पानम्, 'नपुंसके भावे क्तः.' इत्यनुवर्तमाने 'ल्युट् च' इति ल्युट्प्रत्ययः। **क्षीरपाणः कंस इति**। पीयतेऽनेनेति पानः, 'करणाधिकरणयोश्च' इति ल्युट्।

**वाप्रकरण इत्यादि**। उपसंख्यानशब्दस्य चेह प्रतिपादनमर्थः। अस्मिन् वाप्रकरणे गिरिनदीप्रभृतीनां यो नकारस्तस्य णत्वप्रतिपादनं कर्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्—उत्तरसूत्रेऽनुक्तसमुच्चयार्थश्चकारः, तेन गिरिनदीप्रभृतीनां यो नकारस्तस्य णत्वं वा भविष्यतीति।।१०।।

**प्रातिपदिकान्तनुम्विभक्तिषु च**।। अन्तशब्दोऽवयववाची। **माषवापिणाविति**। 'बहुलमाभीक्ष्ण्ये' इति णिनिः, न तु सुप्यजातौ णिनिस्ताच्छील्ये' इति; जातिवाचित्वादुपपदस्य। **माषवापाणीत्युपपदसमासः**, माषान्

**पदमञ्जरी**

**वा भावकरणयोः**।। **गिरिनद्यादीनामिति**। संज्ञायां प्राप्ते, असंज्ञायामप्राप्ते—इत्युभयत्रविभाषेय-मित्याहुः।।१०।।

**प्रातिपदिकान्तनुम्विभक्तिषु च**।। **माषवापिणाविति**। 'बहुलमाभीक्ष्ण्ये' इति णिनिः। **माषवापाणीति**। माषान्वपन्तीति 'कर्मण्यण्', 'जश्शसोः शि', 'नपुंसकस्य झलचः' इति नुम्।

**भावबोधिनी**

पूर्वपद में स्थित निमित्त से परे उस 'पान' शब्द के नकार का णकार आदेश विकल्प से होता है जो 'पान' शब्द भाव अथवा करण अर्थ में निष्पन्न हुआ है। भाव में उदा॰ क्षीरपाणं वर्तते, क्षीरपानम्। [ यहाँ पीतिः = पानम्, 'भाव अर्थ में 'क्त' के विषय में 'ल्युट् च' सूत्र से ल्युट् = अन प्रत्यय हुआ है। अतः 'पान' का अर्थ पीना = क्रिया है जबकि पूर्व सूत्र में पान का अर्थ पेय है। ] कषायपाणम्, कषायपानम्। सुरापाणम्; सुरापानम् [ सभी में भाव अर्थ में ल्युट् = अन है। ] करण अर्थ में उदा॰ क्षीरपाणःकंसः, क्षीरपानः। [ पीयतेऽनेन इति पानः, क्षीरस्य पानः = क्षीरपाणः, क्षीरपानः। 'करणाधिकरणयोश्च' इस सूत्र से करण अर्थ में ल्युट् हुआ है। भाव अर्थ न होने से नपुंसकत्व नहीं होता है। ]

❀ विकल्प के प्रकरण में 'गिरिनदी' आदि शब्दों का उपसंख्यान करना चाहिये अर्थात् इनमें भी विकल्प से णत्व कहना चाहिये। ❀ उदा॰ गिरिणदी, गिरिनदी। चक्रणदी, चक्रनदी। चक्रणितम्बा, चक्र-नितम्बा। [ गिरेः नदी, चक्रम् इव नदी, चक्रम् इव नितम्बः यस्याः सा। ]।।१०।।

इसमें 'वा' = विकल्प की अनुवृत्ति होती है। पूर्वपदे में स्थित निमित्त से उत्तरवर्ती, प्रातिपदिक के अन्त में, नुम् में, और विभक्ति (= प्रत्यय) में जो नकार उसका णकार आदेश विकल्प से होता है। क्रमशः उदा॰ प्रातिपदिक के अन्त में—माषवापिणौ, माषवापिनौ। [ माषं वपतः आभीक्ष्ण्येन = पौनःपुन्येन—इस अर्थ में 'बहुलमाभीक्ष्ण्ये' सूत्र से णिनि, उपपदसमास—माषवापिन्

**'वा' इति वर्तते। प्रातिपदिकान्ते नुमि विभक्तौ च यो नकारस्तस्य पूर्वपदस्थान्निमित्तादुत्तरस्य वा णकार आदेशो भवति। प्रातिपदिकान्ते तावत्—माषवापिणौ, माषवापिनौ। नुमि—माषवापाणि, माषवापानि। व्रीहिवापाणि, व्रीहिवापानि। विभक्तौ—माषवापेण, माषवापेन। व्रीहिवापेण, व्रीहिवापेन।**

**पूर्वपदाधिकारादुत्तरपदस्य प्रातिपदिकस्थो योऽन्त्यो नकारस्तस्येदं णत्वमिष्यते। इह हि न भवति—गर्गाणां भगिनी गर्गभागिनी।**

**न्यासः**

वपन्तीति 'कर्मण्यण्', 'जश्शसोः शिः' इति शिरादेशः, 'नपुंसकस्य झलचः' इति नुम् 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घः। **माषवापेणेति**। माषवापशब्दात् तृतीयैकवचनस्य 'टाङसिङसामिनात्स्याः' इतीनादेशः।

अथेह कस्मान्न भवति—गर्गाणां भगिनी गर्गभगिनीति, अत्रापि गर्गशब्दात् परो भगिन्नित्येष शब्दः प्रातिपदिकम्, तस्य चान्तो नकारो भवतीत्यस्ति प्राप्तिः? इत्यत आह—**पूर्वपदाधिकारादित्यादि**। 'पूर्वपदात्संज्ञायामगः' इत्यतः 'पूर्वपदात्' इत्यनुवर्तते, पूर्वपदस्य सम्बन्धिशब्दत्वाद् यदपेक्षया तस्य पूर्वपदत्वं तदेवोत्तरपदमुपस्थापयति। तेन यद्यपीह प्रातिपदिकस्य विशेषो नोपात्तः, तथाप्युत्तरपदं यत् प्रातिपदिकं तदन्तस्य नकारस्यैव णकारादेशो भवति। **इह हि न भवतीति**। हिशब्दो हेतौ। यस्मात् पूर्वपदाधिकारादुत्तरपदं यत् प्रातिपदिकं तदन्तस्यैव नकारस्य णत्वं विज्ञायते, तस्माद् गर्गभगिनीत्यत्र न भवति। न ह्यत्र भगिन्नित्येतच्छब्दरूपमुत्तरपदम्, किं तर्हि? भगिनीत्येष शब्दः, स च प्रातिपदिकं न भवति; 'अप्रत्ययः' इति निषेधात्। न च तस्यान्तो नकारः, किं तर्हि? ईकारः।

ननु गर्गभगिणीत्ययमपि च प्रयोगो दृश्यते, स चैवं सति नोपपद्यते? इत्यत आह—**यदा त्वित्यादि**। यदा तु गर्गाणां भगिनीत्येव व्युत्पत्तिः, तदा न भवितव्यं णत्वेन। यदा तु गर्गस्य भग इति भगशब्देन षष्ठीसमासं कृत्वा,

**पदमञ्जरी**

इह कस्मान्न भवति—गर्गाणां भगिनी गर्गभगिनीति। भगिन्नित्यस्य प्रातिपदिकस्यान्तो नकार इत्यस्ति प्राप्तिः? इत्यत आह—**पूर्वपदाधिकारादिति**। एतच्च 'पूर्वपदात्संज्ञायाम्' इत्यत्रैव व्याख्यातम्। किमिदानीं नैव भवति—गर्गभगिणीति, भवति विवक्षान्तरे शास्त्रान्तरेण नित्यम्, न त्वनेन? इत्याह—**यदा त्विति**। **मातृभोगीणवदिति**। एतदपि तत्रैव व्याख्यातम्।

**भावबोधिनी**

औ, प्रातिपदिक के अन्त में न का ण विकल्प से होता है। बारम्बार उड़द बोने वाले—यह अर्थ है। ] नुम् में उदा॰—माषवापाणि, माषवापानि। [ मा॰षा॰न् वपन्ति इस अर्थ में 'कर्मण्यण्' से अण् प्रत्यय, उपधावृद्धि उपपदसमास—माषवाप + जस् = शि = इ, 'नपुंसकस्य झलचः' सूत्र से नुम्—माषवाप न् इ, 'सर्वनामस्थाने चासम्बुद्धौ' से उपधादीर्घ, नुम् के न् का विकल्प से णत्व। ] इसी प्रकार 'ब्रीहीन् वपन्ति' इस अर्थ में ब्रीहिवापाणि, ब्रीहिवापानि। विभक्ति में न् का उदा॰—माषवापेण, माषवापेन। ब्रीहिवापेण, ब्रीहिवापेन। [ पूर्वोक्त 'माषवाप' तथा 'ब्रीहिवाप' शब्दों के तृतीया एकवचन टा = इन आदेश में विभक्ति में नकार का विकल्प से णकार होता है। ]

[ 'पूर्वपदात् संज्ञायामगः' सूत्र से ] 'पूर्वपद' का अधिकार = अनुवृत्ति होने से [ सापेक्ष शब्द होने के कारण ] उत्तरपद के प्रातिपदिक में स्थित जो अन्तवाला नकार उसी का णत्व इस सूत्र मे इष्ट है। इस कारण इसमें णत्व नहीं होता है—गर्गाणां भगिनी—गर्गभगिनी। [ यहाँ भगिन् ऐसा नकारान्त उत्तरपद नहीं है अपि तु 'भगिनी' ऐसा ईकारान्त है। यह ङीप्प्रत्ययान्त है अतः 'अप्रत्ययः प्रातिपदिकम्' से प्रातिपदिक नहीं होने से णत्वविकल्प नहीं होता है। ]

परन्तु जब ऐसी व्युत्पत्ति की जाय—गर्गाणां भगः—गर्गभगः, गर्गभगः अस्ति अस्याः सा—गर्गभगिणी, तब 'मातृभोगीणः' के समान नित्य ही णत्व होना चाहिये। [ गर्गभगः अस्ति अस्याः—इस अर्थ में स्त्रीलिङ्ग में मत्वर्थक इनि प्रत्यय करने पर

**यदा त्वेवं भवति–गर्गाणां भगो गर्गभगः, गर्गभगोऽस्या अस्तीति गर्गभगिणीति; तदा मातृभोगीणवन्नित्यमेव णत्वेन भवितव्यम्। माषवापिणी, माषवापिनीत्यत्र तु 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' (पु.प६ २) इति कृदन्तेनैव समासे सति प्रातिपदिकस्य उत्तरपदस्यैव[1] सतो[1] नकारो भवति। तथा चात्र नुम्ग्रहणं कृतम्। स हि समुदायभक्तत्वादुत्तरपदस्यान्तो न भवति।**

**न्यासः**

ततः स्त्रियाम् मत्वर्थ इनिः—इति व्युत्पाद्यते तदैवं व्युत्पत्तौ सत्यां यथा मातृभोगीण इत्यत्र नित्यं णत्वं भवति, तथा गर्गभगिणीत्यत्रापि णत्वेन भवितव्यम्। **मातृभोगीणवदित्यनेन** तदापि नानेन सूत्रेण वा णत्वम्, किं तर्हि? लक्षणान्तरेणेति दर्शयति। तेनैतदुक्तं भवति—यदैवं व्युत्पत्तिर्भवति तदा यथा मातृभोगीण इत्यत्र अट्कुप्वादिना नित्यं तद्धितस्य नकारस्य णत्वं भवति; तथा गर्गभगिणीत्यत्रापि। अत्र तद्धितस्थ एव नकारः न तूत्तरपदस्थः। अत एव भिन्नपदस्थता निमित्तनिमित्तनोर्नाशङ्कनाया। यथा 'पूर्वपदात् संज्ञायामगः' इत्यनेन नियमेन णत्वं न निवर्त्यते, तथा तत्रैव प्रतिपादितम्।

यद्युत्तरपदं यत् प्रातिपदिकं तदन्तस्य नकारस्य णकारेण भवितव्यम्, एवं सति माषवापिणी, माषवापिनीत्यत्र विभाषा णत्वं न प्राप्नोतीति, अत्र वापिनीशब्द एवोत्तरपदम् न वापिन्नित्येतच्छब्दः? इत्यत आह- **माषवापिनीत्यत्र त्वित्यादि**। अत्र हि प्राक् सुबुत्पत्तेः कृदन्तेनैव वापिन्नित्यनेन समासे कृते सति प्रातिपदिकस्यान्तो नकारो भवति; वापिन्नित्येतस्य 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकत्वात्। तस्माद् भवत्येवात्र णत्वमिति। कथं पुनः प्राक् सुबुत्पत्तेः समासे सत्युत्तरपदस्यान्तो नकार उपपद्यते, यावता 'सुप्तिङन्तं पदम्' इत्यनेन सुबन्तस्य तिङन्तस्य च पदमित्येषा संज्ञा विहिता, तत्रासत्यां सुबुत्पत्तौ पदत्वमत्र न सम्भवति। कुतः पुनरेतदुत्तरपदमित्येष विशेषः? रूढित्वाददोषः। पूर्वपदोत्तरपदशब्दावेतौ रूढिशब्दौ; यस्मात् समासे कृते यः कश्चिच्छब्दः पूर्वपदमिति प्रसिद्धः; यः

**पदमञ्जरी**

यद्युत्तरपदं प्रातिपदिकं गृह्यते माषवापिणीत्यत्र णत्वं न प्राप्नोति, यदुत्तरपदं वापिनीति न तस्यान्तो नकारः, यस्य चान्तो नकारो वापिन्निति न तदुत्तरपदम्? अत आह—**माषवापिणीत्यादि**। 'उपपदमतिङ्' इत्यत्रैतद्व्याख्यातम्। 'उत्तरपदभूतं प्रातिपदिकं गृह्यते' इत्यत्र ज्ञापकमाह-**तथा चेति**। कथमेतज्ज्ञापकम्? इत्याह—

**भावबोधिनी**

गर्गभगिन् ङीप् = गर्गभगिनी बनने पर 'अट्कुप्वाङ्' सूत्र से णत्व नित्य ही होता है। यहाँ नकार तद्धित प्रत्ययस्थ है उत्तरपदस्थ नहीं। ]

[ यदि उत्तरपद को प्रातिपदिक मान कर णत्व का विकल्प होता है तब तो 'माषवापिणी' इसमें णत्व नहीं हो सकता क्योंकि जो उत्तरपद 'वापिनी' यह है इसके अन्त में 'नकार' नहीं है ईकार है। और जिसके अन्त में नकार है ऐसा 'वापिन्' इतना उत्तरपद नहीं है, तब इसमें णत्वविकल्प कैसे होगा? इसका समाधान यह है ] 'माषवापिणी' 'माषवापिनी' इसमें तो 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' (गतिसंज्ञकों, कारकों तथा उपपदों का कृदन्त के साथ समास सुप् विभक्ति की उत्पत्ति के पूर्व ही अर्थात् प्रातिपदिक अवस्था में ही हो जाता है) इस वचन द्वारा कृदन्त ( वापिन्) इसी के साथ समास होने पर उत्तरपद के प्रातिपदिक रहते ही उसका अन्त नकार रहता है। [ अतः णत्व होता है। ] इसी कारण तो इस सूत्र में नुम् का ग्रहण किया गया है, क्योंकि वह नुम् तो समुदाय का ही अवयव होने से केवल उत्तरपद का अन्त नहीं हो पाता है। [ भाव यह है कि इस सूत्र में 'नुम्' का अलग से ग्रहण यही सूचित करता है कि उत्तरपद प्रातिपदिक का जो अन्त्य नकार उसी का णत्व होता है न कि अन्य किसी नकार का। इसीलिये इसका अलग से ग्रहण है अन्यथा समुदाय का अवयव मानकर प्रातिपदिकान्त नकार मानकर ही णत्व सम्भव था, नुम्ग्रहण की आवश्यकता नहीं थी। ]

---

१. क्वचित्तु 'उत्तरपदस्यान्तो' इति पाठः।

❁ **युवादीनां प्रतिषेधो वक्तव्यः। ❁ आर्ययूना। क्षत्रिययूना। प्रपक्वानि[१]। दीर्घाह्नी शरत्।**

## ३९२५. एकाजुत्तरपदे णः।।१२।। (३०७)

**न्यासः**

कश्चिदुत्तरपदमिति। सा च रूढिर्न सुबन्तेष्वेव समासावयवेषु सम्भवति? किं तर्हि? असुबन्तेष्वपि केषुचिदिति। तत् किमत्र नोपपद्यते पूर्वोत्तरपदव्यवहारः! **तथात्रेत्यादिना** यदुक्तम् 'पूर्वपदाधिकारादुत्तरस्य' इति, तद् द्रढयति। यत एवमुत्तरपदस्य प्रातिपदिकस्य योऽन्त्यो नकारस्तस्यैव णत्वं भवति,नान्यस्येत्यमयत्रार्थः। एवश्च कृत्वा नुम्-ग्रहणं कृतम्। कस्मात् पुनरस्मिन्नर्थे सति नुमो न सिध्यति, यतस्तदुपादानं कृतम्? इत्यत आह-**स हीत्यादि**। अङ्गस्य नुम्विधानात्। माषवापानीत्यत्र समुदायस्याङ्गत्वात् समुदायात्मनोऽङ्गस्य भक्तो नुम्, नोत्तरपदस्य। ततश्चोत्तरपदस्यान्तो नुम् न भवति। तत्र यदि नुम्ग्रहणं न क्रियते, तदा णत्वं न स्यादित्यभिप्रायः। यदि पुनः प्रातिपदिकस्यानुत्तरपदभूतस्यापि योऽन्तो नकारः, तस्य णत्वं विधीयते, तदा नुम्ग्रहणं न कर्त्तव्यमेव; प्रातिपदिकान्तस्येत्येव सिद्धत्वात्। भवति हि माषवापिनीत्यत्रापि समासे सति प्रातिपदिकस्यान्तो नकारः।

**वक्तव्यमिति**। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'वा' इति वर्त्तते, सा च व्यवस्थितविभाषा, तेन युवादीनां णत्वेन न भवितव्यम्। **आर्ययूनेति**। विशेषणसमासः, 'श्वयुवमघोनामतद्धिते' इति सम्प्रसारणम्, 'सम्प्रसारणाच्च' इति पूर्वरूपत्वम्, 'अकः सवर्णे दीर्घः'। **प्रपक्वानीति**। गतिसमासः। चकारस्य पूर्वोक्तमेव प्रयोजनम्।।११।।

**एकाजुत्तरपदे णः**।। **वृत्रहणाविति**। 'ब्रह्मभ्रूण' इति क्विप्। **क्षीरपाणीति**। पिबतेः, पातेर्वा 'आतोऽनुपसर्गे कः' 'आतो लोप इटि च' इत्याकारलोपः। **सुरापाणीति**। पिबतेः 'गापोष्टक्', पातेर्वा पूर्ववत् कः।

**पदमञ्जरी**

**स हीति**। अङ्गस्य नुम्विधीयते, ततश्च तद्भक्तो नुम् तद्ग्रहणेनैव गृह्यते, नोत्तरपदग्रहणेन। यदि च यत्किञ्चन प्रातिपदिकं गृह्येत नोत्तरपदमेव, ततो नुम्ग्रहणमकर्त्तव्यमेव स्यात्; 'समासप्रातिपदिकान्त' इत्येव सिद्धत्वात्।

**आर्ययूनेति**। **विशेषणसमासः**। 'श्वयुवमघोनातद्धिते' इति सम्प्रसारणम्। **प्रपक्वानीति**। गतिसमासः। अत्र 'कुमति च' इति नित्यं णत्वं प्राप्नोति। **दीर्घाह्नी शरदिति**। अयमपि यवादिषु द्रष्टव्य इत्युक्तम्।।११।।

**एकाजुत्तरपदे णः**।। **विकल्पाधिकारनिवृत्तेर्विस्पष्टीकरणार्थमिति**। अन्यथा यद्यप्यत्रारम्भसामर्थ्यान्नित्यो विधिः शक्यो विज्ञातुम्, उत्तरत्र त्वनुवृत्तिः सम्भाव्येत।।१२।।

**भावबोधिनी**

❁ युवन् आदि शब्दों के न् के णत्व का प्रतिषेध कहना चाहिये। ❁ उदा॰ आर्ययूना। क्षत्रिययूना। [ आर्या चासौ युवती च—यह विशेषणसमास, आर्ययुवन् + टाप, 'श्वयुवमघोनामतद्धिते' से व् का सम्प्रसाण उ, अ का पूर्वरूप 'सम्प्रसाराच्च' सूत्र से, आर्य यु उ न् आ, सवर्णदीर्घ, प्राप्तणत्व का निषेध—आर्ययूना। ] प्रपक्वानि। [ 'कुगतिप्रादयः' से गतिसमास नपुंसकलिङ्ग बहुवचन जस् = शि = इ, नुम् करने पर प्राप्त णत्व का निषेध होता है। ] दीर्घाह्नी शरत्। [ दीर्घाणि अहानि यस्यां सा—इस अर्थ में बहुव्रीहि समास होने से समासान्त टच् प्रत्यय नहीं, 'अन उपधालोपिनोऽन्यतरस्याम्' से ङीप्, 'अल्लोपोऽनः' से उपधा अकार का लोप करने के बाद प्राप्त णत्व का निषेध। वास्तव में इसमें तो 'अह्नोऽदन्तात्' इस नियम के कारण ही णत्व नहीं होता है। फिर भी वार्तिककार ने इसका पाठ युवादिगण में कर दिया है। ]।।११।।

एक अच्वाला उत्तरपद है जिसका वह—एकाजुत्तरपद है, उस एकाजुत्तरपद के समास में प्रातिपदिकान्त, नुम् तथा विभक्ति में विद्यमान नकार जो पूर्वपदस्थ निमित्त से उत्तरवर्ती है, उसका णत्व आदेश होता है। उदा॰ वृत्रहणौ। वृत्रहणः। [ वृत्रं हतवान् इस

१. 'परिपक्वानि–' इत्यधिकं क्वचित्।

**एकाजुत्तरपदं यस्य स एकाजुत्तरपदः, तस्मिन्नेकाजुत्तरपदसमासे प्रातिपदिकान्तनुम्विभक्तिषु पूर्वपदस्थान्निमित्तादुत्तरस्य नकारस्य णकार आदेशो भवति। वृत्रहणौ। वृत्रहणः। नुमि–क्षीरपाणि। सुरापाणि। विभक्तौ–क्षीरपेण। सुरापेण।**

**'णः' इति वर्त्तमाने पुनर्णग्रहणं विकल्पाधिकारनिवृत्तेर्विस्पष्टीकरणार्थम्।।**

## ३९२६. कुमति च।।१३।। (१०५६)

**कवर्गवति चोत्तरपदे प्रातिपदिकान्तनुम्विभक्तिषु पूर्वपदस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो**

**न्यासः**

अथ णग्रहणं किमर्थम्, यावता ण इत्यनुवर्त्तत एव? नित्यार्थमिति चेत्? स्यादेतत्—वेति प्रकृतम्, तत्रासति पुनर्णग्रहणे विकल्पः प्रसज्येत, तस्मान्नित्यं यथा स्यादित्येवमर्थं पुनर्णग्रहणं कृतमिति? एतच्चायुक्तम्; पूर्वेणैव विकल्पः सिद्धः। तत्रारम्भसामर्थ्यादेवायं विधिर्नित्यो भविष्यति? इत्यत आह—**ण इत्यनुवर्त्तमान इत्यादि**। विकल्पाधिकारस्यास्वरितत्वाद् या निवृत्तिस्तस्या विस्पष्टार्थं पुनर्णग्रहणम्। असति हि णग्रहणे कश्चिन्मन्दबुद्धिरेवं मन्येत—अनुवर्त्तत एव वाग्रहणम्, तस्मिंस्त्वनुवर्त्तमानेऽप्यारम्भसामर्थ्यादयं विधिर्नित्यो भविष्यति, उत्तरस्तु पाक्षिक एवेति॥१२॥

**कुमति च**।। अनेकाजुत्तरपदार्थ आरम्भः। चकारः 'प्रातिपदिकान्तनुम्विभक्तिषु च' इत्यनुकर्षणार्थः। तेनोत्तरत्रानुवृत्तिर्न भवति चानुकृष्टपरिभाषया। **वस्त्रयुगिणाविति**। 'अत इनिठनौ' इतीनिः। 'कौ' इति कर्त्तव्ये कुमतीति वचनमकवर्गादावपि यथा स्यात्; इतरथा हि 'यस्मिन् विधिस्तदादवल्ग्रहणे' इति कवर्गादेरेव स्यात्। वपनं

**पदमञ्जरी**

**कुमति च**।। अनेकाजुत्तरपदार्थोऽयमारम्भः। **वस्त्रयुगिणाविति**। युगशब्दादिनि कृते पश्चादिन्नन्तेन समासः कर्तव्यः। एवं तर्हि उत्तरपदस्य प्रातिपदिकस्यान्तो नकारो भवति; अन्यथा मातृभोगीणवल्लक्षणान्तरेणैव णत्वं सिद्धं

**भावबोधिनी**

विग्रह में 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (३।२।८७) से क्विप् प्रत्यय, सर्वापहारी लोप, उपपद समास, प्रातिपदिक संज्ञा, वृत्रहन् औ, वृत्रहन् + जस् = अस् यहाँ तक एच् वाला उत्तरपद 'हन्' है, पूर्वपदस्थ रेफ से उत्तरवर्ती होने से णत्व होता है—वृत्रहणौ। यह प्रातिपदिकान्त न् का उदा॰ है। ] नुम् का उदा॰ क्षीरपाणि। सुरापाणि। [ क्षीरं पिबति, पाति वा, सुरां पिबति पाति वा—इस विग्रह में 'आतोऽनुपसर्गे कः' सूत्र से क = अ प्रत्यय, 'आतो लोप इटि च' सूत्र से पा धातु के आ को लोप—क्षीरप, नपुंसक बहुवचन जस् = शि = इ, नुम्, उपधादीर्घ, प्रस्तुत सूत्र से न् का ण—क्षीरपाणि, सुरापाणि। यहाँ एक अच् वाला उत्तर पद 'प' है उसके साथ समास है। ] विभक्ति में न् का उदा॰ क्षीरपेण। सुरापेण। [ पूर्वरीति से 'क्षीरप' 'सुराप' बनाकर तृतीया एकवचन टा = इन विभक्ति = प्रत्यय के न् का ण् होता है। ]

यहाँ [ 'रषाभ्यां णोनः समानपदे' (८।४।१) सूत्र से ] 'णः' (णत्व होता है) इसकी अनुवृत्ति रहने पर पुनः दुबारा 'ण' का ग्रहण वा = विकल्प के अधिकार = अनुवृत्ति की निवृत्ति = रोक को स्पष्ट करने के लिये है। [ भाव यह है 'ण' की अनुवृत्ति के साथ कोई मन्दबुद्धि इसमें विकल्प की भी अनुवृत्ति न समझने लगे—इस भ्रम को रोकने के लिये दुबारा 'ण' का ग्रहण किया गया है। अब आगे भी 'वा' की अनुवृत्ति नहीं होती है। यह नित्य विधि है। ] ॥१२॥

कुमान् = कवर्गवाले उत्तरपद में, प्रातिपदिकान्त, नुम् और विभक्ति में, पूर्वपदस्थ निमित्त से उत्तरवर्ती नकार का णकार आदेश होता है। [ इसमें अनेक अचों वाला उत्तरपद समझना चाहिये। 'च' के कारण 'प्रातिपदिकान्त-नुम् विभक्तिषु च' इसकी अनुवृत्ति इसी सूत्र तक समझनी चाहिये। ] उदा॰ वस्त्रयुगिणौ, वस्त्रयुगिणः। [ युगम् अस्ति अनयोः, येषां वा—इस विग्रह में 'अत इनिठनौ' सूत्र से 'इन्' प्रत्यय करके इन्नन्त युगिन् के साथ 'वस्त्र' का समास करना चाहिये। तभी उत्तरपद प्रातिपदिक का अन्त

**भवति। वस्त्रयुगिणौ, वस्त्रयुगिणः। स्वर्गकामिणौ। वृषगामिणौ। नुमि–वस्त्रयुगाणि। खरयुगाणि। विभक्तौ–वस्त्रयुगेण। खरयुगेण।।**

## ३९२७. उपसर्गादसमासेऽपि णोपदेशस्य।।१४।। (२२८४)

**ण उपदेशे यस्यासौ णोपदेशः। णोपदेशस्य धातोर्यो नकारः तस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति असमासेऽपि, समासेऽपि। प्रणमति। परिणमति[1]। प्रणायकः। परिणायकः।**

**न्यासः**

वापः,कुम्भस्य वापः कुम्भवापः, माषाणां कुम्भवापो माषकुम्भवापः—'अत इनिठनौ' इतीनिः। माषकुम्भवापिणावित्यत्र स्यात्, वस्त्रयुगिणावित्यत्र न स्यादिति।।१३।।

**उपसर्गादसमासेऽपि णोपदेशस्य**।। **णोपदेशस्येति**। ण उपदेशे यस्य स णोपदेशः—गमकत्वाद् वैयधिकरण्ये बहुव्रीहिः। अथ वा-उपदिश्यते = प्रथमत उच्चार्यते इत्युपदेशः, ण उपदेशो यस्येति समानाधिकरण एव बहुव्रीहिः। **प्रणमतीति**। 'णम प्रह्वत्वे शब्दे च'! **प्रणायक इति**। 'णीञ् प्रापणे', ण्वुल्, प्रादिसमासः।

**प्रनायको देश इति**। अत्र गमिं प्रति क्रियायुक्तत्वात् प्रशब्दस्य गमिमेव प्रत्युसर्गत्वम्, न नयतिं प्रति; यं प्रति प्रयुक्ताः प्रादयस्तं प्रति गत्युपसर्गसञ्ज्ञाविधानात्। **असमासेऽपीति किमिति**। विनाप्यनेन विशेषानुपादानात्

**पदमञ्जरी**

स्यात्, 'कौ' इत्युच्यमानेऽपि कवर्गमात्रस्योत्तरपदस्यासम्भवान्मतुबर्थो लभ्यते,नार्थो मतुपा? सत्यम्; 'कौ' इत्युच्यमाने तदादिविधिर्विज्ञायेत—कवर्गादावुत्तरपद इति।।१३।।

**उपसर्गादसमासेऽपि णोपदेशस्य**।। ण उपदेशे यस्य स णोपदेशः। **प्रनायको देश इति**। अत्र गतिक्रिया-योगमात्रमेव प्रति प्रस्योपसर्गत्वम्, न नमतिं प्रति।

**असमासेऽपीति किमिति**। विशेषानुपादानादेव समासासमासयोर्द्वयोरपि भविष्यतीति प्रश्नः। **पूर्वपदाधिकारादिति**। सर्वत्रैवात्र प्रकरणे 'पूर्वपदात्' इति वर्तते, समासे एव पूर्वपदं भवति, तेन समास एव

**भावबोधिनी**

नकार मिलता है, णत्व होता है। ] स्वर्गकामिणौ। वृषगामिणौ। [ यहाँ भी पहले 'इनि' प्रत्ययान्त बनाने के बाद ही समास करना चाहिये, तभी णत्व होता है। ] नुम् में उदा॰ वस्त्रयुगाणि। खरयुगानि। [ वस्त्रयुग + जस् = शि = इ, खरयुग = जस् = शि = इ, नुम् के बाद न् का ण् होता है। वस्त्र में त्र् का संयोग है। ] विभक्ति में णत्व का उदा॰ वस्त्रयुगेण, खरयुगेण। [ वस्त्रयुग + टा = इन विभक्ति में 'न्' है, णत्व होता है। ]

**विमर्श**—'कौ च' इतना सूत्र बनाने पर भी कवर्ग का ज्ञान हो जाता, णत्व हो जाता फिर भी मतुप् = कुमान् ऐसा ग्रहण करने का फल यह है कि 'कौ' ऐसा लिखने पर 'यस्मिन् विधिस्तदादावल्ग्रहणे' इस वचन से केवल वहीं णत्व होता है जहाँ उत्तरपद के आदि में कवर्ग रहता। परन्तु मतुप् = कुमान् का ग्रहण करने से अकवर्गादि शब्द के भी न् का ण होता है जैसा कि उदाहरणों में स्पष्ट है कवर्ग का कोई वर्ण उत्तरपद में होना चाहिये।।१३।।

ण है उपदेश (काल) में जिसके वह णोपदेश है (अर्थात् पाणिनि ने जिसे 'ण' के रूप में आदि में उच्चारित किया है, बाद में उसका 'न' हो गया है)। उपसर्ग में स्थित (णत्व के) निमित्त से उत्तरवर्ती णोपदेश धातु का जो नकार उसका णकार आदेश असमास में भी होता है और समास में भी। उदा॰ प्रणमति। परिणमति। [ 'णम् प्रह्वत्वे शब्दे' धातु के ण का न 'णो नः' (६।१।६५) सूत्र से करने पर 'नम' होता है। 'प्र' उपसर्ग के कारण णत्व होता है। यहाँ समास नहीं है। ] प्रणायकः, परिणायकः। [ 'णीञ् प्रापणे' के ण का न, ण्वुल् = अक ई की बृद्धि ऐ, आय् आदेश—'नायक' के साथ 'प्र' का प्रादिसमास—'कुगतिप्रादयः' सूत्र से। प्रस्तुत सूत्र से न का ण—प्रणायकः, परिणायकः। ]

---

१. प्रणयति, परिणयति, प्रणामकः, परिणामकः-इत्यधिकं पुस्तकान्तरे।

**उपसर्गादिति किम्? प्रगता नायका अस्माद् देशात् प्रनायको देशः।**

**असमासेऽपीति किम्? पूर्वपदाधिकारात् समास एव स्यादिति तदधिकारनिवृत्तिद्योतनार्थम्। णोपदेशस्येति किम्? प्रनर्दति। प्रनर्दकः।।**

## ३९२८. हिनुमीना।।१५।। (२५३०)

**न्यासः**

समासेऽसमासेऽपि भविष्यतीति भावः। **पूर्वपदाधिकारादित्यादि**। पूर्वपदादिति वर्तते। असमासे भवति पूर्वपदत्वम्। रूढिशब्दो हि पूर्वपदशब्दः पूर्वमाश्रितः, स एव चेहानुवर्तते, स च समास एव सम्भवति, ततश्च समासेऽपीत्युच्यमाने **समास एव स्यादिति**। इतिकरणो हेतौ। यस्मादसति तस्मिन्नेष दोषस्तस्मात् तस्य पूर्वपदस्य निवृत्तिं द्योतयितुम् 'असमासेऽपि' इत्युच्यते। द्योतनग्रहणेनैतदाचष्टे—नानेन तस्य निवृत्तिः क्रियते, किं तर्हि? अस्वरितत्वादविद्यमानतैव केवलं प्रकाश्यत इति। तदेतदुक्तं भवति—मन्दबुद्धिर्य एवं प्रतिपत्तुमसमर्थस्तं प्रति विस्पष्टीकरणार्थमसमासेऽपीत्युच्यत इति। **प्रनर्दतीति**। 'नर्द गर्द शब्दे'। सत्यप्यच्परत्वेऽच्परोऽयं णोपदेशो न भवति; 'नृतिनर्दिनक्किनाथृनृवर्जम्' इत्यपवादविधानात्।।१४।।

**हिनुमीना।। प्रहिणोतीति**। 'हि गतौ', 'स्वादिभ्यः श्नुः' गुणः। **प्रहिणोतीति**। 'मी हिंसायाम्', क्र्यादित्वात् श्ना।। **प्रमीणीत इति**। 'ई हल्यघोः' इतीत्वम्। अथ कथं प्रहिणोति प्रमीणीत इत्यत्र णत्वम्, यावता 'हिनुमीना' इति

**पदमञ्जरी**

स्यात्। **तदधिकारनिवृत्तिद्योतनार्थमिति**। नानेन विस्पष्टार्थमसमासेऽपिग्रहणमिच्युते। तथा हि—यद्यप्यस्वरितत्वात् 'पूर्वपदात्' इति निवर्त्तते, तथाप्यसमासेऽपिग्रहणं कर्त्तव्यम्, अन्यथाऽसंज्ञायां समासे न स्यात्; पूर्वपदात्संज्ञायामेवेति नियमादस्य च विधेरसमासे चरितार्थत्वात्। तस्मात्पूर्वपदाधिकारनिवृत्तिद्योनतनमुखेन समासासमासयार्द्वयोरपि यथा स्यादित्यसमासेऽपिग्रहणमित्ययमर्थो द्रष्टव्यः। नन्वसिद्धमुपसर्गणत्वम्, तस्यासिद्धत्वान्नियमो न भविष्यति, तेन 'पूर्वपदात्' इत्यस्मिन्निवृत्ते न कर्त्तव्यमसमासेऽपिग्रहणम्? एवं तर्ह्येतज्ज्ञापयति-न योगे योगोऽसिद्धः, अपि तु प्रकरणे प्रकरणमसिद्धमिति। यदा तु 'पूर्वपदात्संज्ञायाम्' इति सूत्रं नियमार्थमिति पक्षः, तदैतदुच्यते। यदा तु विध्यर्थं तदा नैतदुपपद्यते।।१४।।

**हिनुमीना**।। 'हि गतौ' स्वादिः, 'मीञ् हिंसायाम्' क्र्यादिः, दीर्घान्तः।

**भावबोधिनी**

उपसर्ग में स्थित निमित्त से (उत्तरवर्ती)—इसका क्या फल है? प्रगता नायका अस्माद् देशात्— इस अर्थ में [ बहुव्रीहि समास करने पर ] प्रनायकः देशः बनता है। [ यहाँ 'प्र' इस उपसर्ग का सम्बन्ध 'गम्' धातु क्रिया के साथ है, णीञ् धात्वर्थ क्रिया के साथ नहीं है अतः यह 'गम्' के प्रति ही उपसर्ग माना जायगा, 'नी' के प्रति नहीं, क्योंकि—'उपसर्गाः क्रियायोगे' सूत्र यही सूचित करता है। अतः उपसर्गत्व ही न होने से णत्व की प्राप्ति नहीं होती है। ]

असमास में भी—इस कथन का क्या फल है? 'पूर्वपदात् संज्ञायामगः' इस सूत्र से 'पूर्वपद' का अधिकार = अनुवृत्ति होती है [ और समास में ही पूर्वपद तथा उत्तरपद होते हैं। ] अतः समास में ही यह णत्व हो पाता इसीलिये उस 'पूर्वपदात्' के अधिकार = अनुवृत्ति के रोकने के लिये 'असमास में भी' इसका ग्रहण है। [ फलतः समास हो अथवा न हो, णोपदेश धातु के न का ण होता है। इसीलिये 'प्रणमति' आदि में णत्व होता है। ]

'णोपदेश' (आद्युच्चारणकाल में णकारवाली) इस कथन का क्या फल है? प्रनर्दति। प्रनर्दकः। [ 'नर्द, गर्द शब्दे' धातुपाठ में णोपदेश न होने से णत्व नहीं होता है। ]।।१४।।

उपसर्ग में स्थित निमित्त से उत्तरवर्ती 'हिनु' तथा 'मीना' इनके नकार का णकार आदेश होता है। उदा॰ प्रहिणोति, प्रहिणुतः। प्रमीणाति, प्रमीणीतः। [ 'हि गतौ' इस स्वादिगणीय से 'स्वादिभ्यः श्नु' = नु होने पर 'हिनु' बनता है। 'मी हिंसायाम्' इस

**हिनु, मीना—इत्येतयोरुपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति। प्रहिणोति, प्रहिणुतः। प्रमीणाति, प्रमीणीतः। 'हिनुमीनाग्रहणे विकृतस्यापि भवति;**[1] **अजादेशस्य स्थानिवत्त्वात्।।**

## ३९२९. आनि लोट्।।१६।। (२२३१)

**'आनि' इत्येतस्य लोडादेशस्योपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति। प्रवपाणि परिवपाणि। प्रयाणि। परियाणि।**

**न्यासः**

स्वरूपयोर्ग्रहणम्, न चात्र गुणादौ विकारे कृते ते रूपे स्तः, तस्माच्चात्रैव भवितव्यम—प्रहिणुतः, प्रमीणातीति? अजादेशस्य स्थानिवद्भावाद्, एकदेशविकृतस्यानन्यत्वाद् वा भविष्यतीत्यदोषः। ननु प्रतिषिध्यते स्थानिवद्भावः—'पूर्वत्रासिद्धीये न स्थानिवत्' इति? दोष एवायमस्याः परिभाषायाः, तथा चोक्तम्—अस्या दोषः संयोगादिलोपलत्वणत्वेष्विति। अथ 'हिमीभ्याम्' इत्येवं कस्मान्नोक्तम्? अशक्यमेवं वक्तुम्, अविकरणनकारस्यापि स्यात्-प्रहेनर्दनमिति, प्रमीनर्दनमिति। प्रहिणोतीति प्रहेः, 'अन्येभ्योऽपि दृश्यन्ते' इति विच्, गुणः। प्रमीणातीति प्रमीः, क्विप्। प्रहेर्नर्दनम्, प्रम्यो नर्दनमिति षष्ठीसमासः।।१५।।

**आनि लोट्।। प्रवपाणीति** वपेर्लोट्, मिप्, 'मेर्निः' 'आडुत्तमस्य पिच्च' इत्याट्। **प्रयाणीति**। 'या प्रापणे'।

**प्रवपानि मांसानीति**। प्रकृष्टा वपा येषामिति बहुव्रीहिः, 'जश्शसोः शिः' इति शिरादेशः, 'नपुंसकस्य झलचः' इति नुम्, 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घः—प्रवपानीति। अत्र लोड्ग्रहणान्न भवति। 'प्रातिपदिकान्तनुम्विभक्तिषु च' इत्यनेन तर्हि कस्मान्न भवतीति? भवत्येव पक्षे। ननु चोपसर्गादिति, वर्तते, न चानिं प्रति प्रशब्दस्योपसर्गत्वम्, किं तर्हि? [1]वपिं प्रति, तस्मादुपसर्गत्वाभावादेव न भविष्यतीति किं लोड्ग्रहणेन? नैतदस्ति; मूलोदाहरणेष्वपि तर्हि न स्यात्। अत्र हि धातुं प्रत्युपसर्गत्वम्, नानिं प्रति। तस्मात्

**पदमञ्जरी**

हिनुमीनाग्रहणे विकृतस्योपसंख्यानम्, इहापि यथा स्यात्—प्रहिणोति, प्रमिणीतः? सिद्धं वा स्थानिवत्त्वात्; ईत्वगुणयोः स्थानिवद्भावे सति उपात्तमेव रूपमिति णत्वं भविष्यति। ननु 'पूर्वत्रासिद्धे न स्थानिवत्'? दोष एवायमस्याः परिभाषायाः 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति।।१५।।

**आनि लोट्।। प्रवपाणीति**। वपेर्लोट्, 'मेर्निः'। 'आडुत्तमस्य पिच्च' प्रयाणीति यातेः रूपम्। **प्रवपानीति**। प्रकृष्टा वपा येषु तानि प्रवपानि। आनिलोड्ग्रहणमनर्थकम्; अर्थवद्ग्रहणात्, अर्थवत आनिशब्दस्य ग्रहणम्, न चैषोऽर्थवान्। अनुपसर्गाद्वा, यत् क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञे भवतः, न चैतमानिशब्दं प्रति

**भावबोधिनी**

क्र्यादिगणीय से 'क्र्यादिभ्यः श्ना' से श्ना = ना होने पर 'मीना' बनता है। प्र उपसर्ग से परे होने से णत्व होता है। ]

[ सूत्र में 'हिनु' 'मीना' ऐसे रूपों का ग्रहण है अतः जहाँ ये रूप नहीं होंगे जैसे—'प्रहिनोति, प्रमीनीतः' इनमें णत्व कैसे होगा? ] 'हिनु-मीना' इनके ग्रहण में विकृत = गुण और ईत्वादि प्राप्त का भी णत्व होता है क्योंकि अच् के स्थान पर जो आदेश (गुणरूप और ईत्व रूप है उस) का स्थानिवद्भाव हो जाता है। [ अतः 'हिनोति' 'मीनीतः' भी 'हिनु' 'मीना' समझे जाते हैं। ]।।१५।।

उपसर्गस्थ निमित्त से उत्तरवर्ती 'लोट् के आदेश 'आनि', इसके नकार का णकार आदेश होता है। उदा॰ प्रवपाणि। परिवपाणि प्रयाणि। परियाणि। [ प्रपूर्वक और परापूर्वक 'वप' और 'या' धातुओं से लोट् उत्तमपुरुष एकवचन में मिप् 'मेर्निः' से 'मि' का 'नि', 'आडुत्तमस्य पिच्च' सूत्र से आट् आगम, शप्—प्र वपआनि, सवर्ण दीर्घ, णत्व-प्रवपाणि, परिवपाणि, प्रयाणि। परियाणि। ]

१. 'कृषिं प्रति'–इति मुद्रितः पाठः।

**लोडिति किम्? प्रवपानि मांसानि।।**

**३९३०. नेर्गद-नद-पत-पद-घु-मा-स्यति-हन्ति-याति-वाति-द्राति-प्साति-वपति-वहति-शाम्यति-चिनोति-देग्धिषु च।।१७।। (२२८५)**

**'नि' इत्येतस्योपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति गद, नद, पत, पद, घु, मा, स्यति, हन्ति, याति, वाति, द्राति, प्साति, वपति, वहति, शाम्यति, चिनोति, देग्धि–इत्येतेषु परतः। गद–प्रणिगदति, परिणिगदति। नद–प्रणिनदति, परिणिनदति। पत–प्रणिपतति, परिणिपतति। पद–प्रणिपद्यते, परिणिपद्यते। घु–प्रणिददाति, परिणिददाति। प्रणिदधाति, परिणिदधाति।**

**न्यासः**

सामर्थ्यादिहोपसर्गग्रहणमनुवर्तमानं प्राद्युपलक्षणार्थं विज्ञायते, यथा'अञ्नासिकायाः संज्ञायां नसञ्चास्थूलात्' इति। 'उपसर्गाच्च' इत्यत्रोपसर्गग्रहणं प्राद्युपलक्षणार्थम्। ततश्चासति लोड्ग्रहणे स्यादेव णत्वमिति तन्निवृत्त्यर्थं लोडित्युच्यते। नन्वेवमपि न कर्त्तव्यं लोड्ग्रहणम्, 'अर्थवद्ग्रहणे नानर्थकस्य' इत्यर्थवतो ह्यानिशब्दस्येदं ग्रहणम्, न हि प्रवपानि मांसानीत्यत्रानिशब्दोऽर्थवान्, किं तर्हि? इकारः? एवं तर्ह्येतज्ज्ञापयति—अनित्यैषा परिभाषेति। तेन 'इन्हन्पूषार्यम्णां शौ' इत्यत्रानर्थकस्यापीनो ग्रहणे सति बहुवाग्मीनि ब्राह्मणकुलानीत्यत्रापि दीर्घत्वं सिद्धं भवति।

आनीत्याकारोच्चारणं किमर्थम्? यदाडागमो न भवति तदा शुद्धस्य निशब्दस्य स्यादित्येवमर्थम्।

ननु च नित्यमेवाडागमेन भवितव्यम्, न हि तद्विधौ विकल्पोऽस्ति? एवं तर्ह्येतज्ज्ञापयति—अनित्यमागमशासनमिति। तेनापि 'शाकं पचानस्य सुखा वै मघवन् गृहाः' इत्यादयः प्रयोगाः सिद्धा भवन्तीति।।१६।।

**नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च।।** 'घु' इति घुसंज्ञानाकानां ग्रहण्। 'मा' इति 'माङ् माने', मेङ् प्रणिदाने' इत्येतयोर्ग्रहणम्; न तु 'मीञ् हिंसायाम्'. 'डुमिञ्

**पदमञ्जरी**

क्रियायोगः, तदन्तं तु प्रति भवति। कथं नैवं विज्ञायते—यस्य क्रिया यत्क्रिया, यत्क्रियायुक्ता इति? कथं तर्हि या क्रिया यत्क्रिया यत्क्रियायुक्ता इति, प्रयोगविषया च क्रिया न क्वचिदसंसृष्टातीति समुदायस्याश्रीयत इति आनिशब्दान्तं समुदायं प्रति क्रियायोगः। तत्रायं च सूत्रार्थः—उपसर्गात् परस्यावयवो य आनिशब्दस्तन्नकारस्य णत्वमिति। तदेवं प्रत्याख्यातं लोड्ग्रहणम्।।१६।।

**नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचनोतिदेग्धिषु च।।** 'गामादाग्रहणेष्वविशेषः' इति वचनात् 'मीनातिमिनोतिदीङाम्' इत्यात्वे कृते यन्मारूपम्, यच्च 'मा माने' इति, तेषामपि

**भावबोधिनी**

लोट् के आदेश भूत 'आनि' इस कथन का क्या फल है? प्रवपानि मांससि। [ यहाँ प्रकष्टा वपा येषां तानि—इस बहुव्रीहि में—'प्रवप' शब्द से जस् = शि = इ, नुम्, उपधादीर्घ करने पर 'प्र व प् आनि' होता है। यह लोडादेश नहीं है अपितु नपुंसकलिङ्ग प्रथमा और द्वितीया बहुवचन का रूप है। अतः णत्व नहीं होता है। ]।।१६।।

उपसर्ग में स्थित निमित्त से परे 'नि' इस उपसर्ग के नकार का णकार आदेश होता है—गद, नद, पत, पद, घु = दा धा, मा, स्यति (षोऽन्तकर्मणि) हन्ति, याति, वाति, द्राति, प्साति, वपति, वहति, शाम्यति, चिनोति, और देग्धि—इन धातुओं के परे रहते। क्रमशः उदा० (१) (गद व्यक्तायां वाचि') गद—प्रणिगदति, परिणिगदति। [ प्र + नि + गद + लट्, तिप + शप्, णत्व। परि + निं + गद् + लट्, तिप्, णत्व—परिणिगदति ] (२) (णद अव्यक्ते शब्द) नद—प्रणिनदति, परिणिनदति। [ प्र + नि + नद्

**माङ्–प्रणिमिमीते, परिणिमिमीते। मेङ्–प्रणिमयते, परिणिमयते। ❁ 'मा' इति माङ्मेङो-र्ग्रहणमिष्यते। ❁**

**स्यति–प्रणिष्यति, परिणिष्यति। हन्ति–प्रणिहन्ति, परिणिहन्ति। याति–प्रणियाति, परिणियाति। वाति–प्रणिवाति, परिणिवाति। द्राति–प्रणिद्राति, परिणिद्राति। प्साति–प्रणिप्साति, परिणिप्साति। वपति–प्रणिवपति, परिणिवपति। वहति–प्रणिवहति, परिणिवहति। शाम्यति–प्रणिशाम्यति, परिणिशाम्यति।**

**न्यासः**

प्रक्षेपणे'—इत्येतयोः 'मीनातिमिनोतिदीङां ल्यपि च' इति कृतात्त्वयोः, नापि 'मा माने' इत्येतस्य। ननु च 'गामादाग्रहणेष्वविशेषः' इति सर्वेषामेव ग्रहणेन भवितव्यम्, तत् कथं माङ्मेङोरेव ग्रहणं लभ्यते? नैतदस्ति; इह 'द्वन्द्वे घि' 'अल्पाच्तरम्' इति वचनमनपेक्ष्य 'घु' इत्येतस्य पूर्वनिपातमकुर्वता नात्र वचनानुरोधेन प्रवर्त्तितव्यम्, अपि त्विच्छयेति सूचितम्। तेन यत्रेच्छा भवति स एव गृह्यते। इच्छालक्ष्यानुरोधान्माङ्मेङोरेव ग्रहणं भवतीति युक्तम्। अत एवेच्छया प्रवर्त्तितव्यमिति सूचनाद् यदापि मेङ आत्त्वाभावे मेत्येतद्रूपं न सम्भवति, तदापि तस्य ग्रहणं भवत्येव—प्रणिमयत इति। **प्रणिपद्यत इति**। दिवादित्वाच्छ्यन्, अनुदात्तेत्त्वादात्मनेपदम्।

**प्रणिमिमीत इति**। जुहोत्यादित्वात् श्लुः, 'श्लौ' द्विर्वचनम्, 'भृञामित्' इत्यभ्यासस्येत्त्वम्, 'ई हल्यघोः' इतीत्त्वम्।

**प्रणिष्यतीति**। 'ओतः श्यनि' इत्योकारलोपः,उपसर्गात् सुनोति' इति षत्वम्। **प्रणिहन्तीत्यादिषु प्रणिप्सातीति** पर्यन्तेष्वदादित्वाच्छपो लुक्। **प्रणिशाम्यतीति**। 'शमामष्टानां दीर्घः' इति दीर्घः। **प्रणिदेग्धीति**। 'दिह उपचये', लट्, पूर्ववच्छपो लुक्, 'दादेर्धातोर्घः' इति घत्वम्, 'झषस्तथोर्धोऽधः' इति, धत्वम्, 'झलां जश् झशि' इति जश्त्वम्-गकारः।

**पदमञ्जरी**

ग्रहणप्रसङ्गः? इत्याशङ्क्याह—**माङ्मेङोर्ग्रहणमिष्यत इति**। इष्टिरेवेयम्। **प्रणिष्यतीति**। 'ओतः श्यनि', 'उपसर्गात्सुनोति' इत्यदिना षत्वम्। हन्तिप्रभृतयः सातिपर्यन्ता अदादयः, 'मा माने च'। **प्रणिशाम्यतीति**। 'शमामष्टानां दीर्घः श्यनि'।

**भावबोधिनी**

+ लट्, परि + नि + नद + लट् णत्व होता है ] (३) (पत्लृ पतने) पत—प्रणिपतति, परिणिपतति। (४) ('पदगतौ') पद—प्रणिपद्यते परिणिपद्यते। [ प्र + पद् + श्यन् + लट् ] (५) (दाधा घ्वदाप्) दा—प्रणिददाति, परिणिददाति। प्रणिदधाति, परिणिदधाति। [ यहाँ घुसंज्ञक दा और धा धातुयें ली जाती हैं। ] (६) माङ्—प्रणिमिमीते, परिणिमिमीते, मेङ्—प्रणिमयते, परिणिमयते। इसमें ❁ 'मा' धातु से 'माङ्माने' तथा 'मेङ् प्रणिदाने' दोनों का ग्रहण इष्ट है। ❁ [ मेङ् में आत्व 'आदेच उपदेशेऽशिति' सूत्र से होता है। ]

(७) ('षोऽन्तकर्मणि') स्यति—प्रणिष्यति परिणिष्यति। [ प्र नि + सो + श्यन् + लट् 'ओतः श्यनि' सेओकार का लोप, 'उपसर्गात् सुनोति सुवति स्यति' सूत्र से स् का ष्, प्रस्तुत सूत्र से 'न्' का ण् ] (८) (हन् हिंसागत्योः') हन्ति—प्रणिहन्ति, परिणिहन्ति। [ प्र नि हन् + लट्, शप् का लुक 'अदादिभ्यः' सूत्र से। हन् से लेकर 'प्साति' तक सभी में णत्व प्रस्तुत सूत्र से ] (९) (या प्रापणे) प्रापणमिह गतिः। या—प्रणियाति, परिणियाति। [ प्र + नि + या + लट् अदादि होने से शप् का लुक्, णत्व ] (१०) ('वा गतिगन्धनयोः'। गन्धनं = सूचनम्) वाति—प्रणिवाति। परिणिवाति। [ प्र नि + वा लट् अदादि होने से शप् लुक्, णत्व ] (११) ('द्रा कुत्सायां गतौ') द्राति—प्रणिद्राति परिणिद्राति। [ प्र + नि + द्रा + लट्, शप् लुक् णत्व ] (१२) ('प्सा भक्षणे) प्साति—प्रणिप्साति, प्ररिणिप्साति। [ प्र + नि + प्सा + लट्, शप् लुक्, णत्व। ] (१३) (डुवप बीजसन्ताने') वपति—प्रणिवपति।

**चिनोति–प्रणिचिनोति, परिणिचिनोति। देग्धि–प्रणिदेग्धि, परिणिदेग्धि।**

**❀ अड्व्यवायेऽपि नेर्गदादिषु णत्वमिष्यते। ❀ प्रण्यगदत्, परिण्यगदत्।।**

## ३९३१. शेषे विभाषाऽकखादावषान्त उपदेशे।।१८।। (२२३२)

**न्यासः**

इह गदादीनां सप्तम्या निर्दिष्टत्वात् 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति निर्दिष्टग्रहण-स्यानन्तर्यार्थत्वादड्व्यवधानान्न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**अड्व्यवायेऽपीति**। कथं पुनरिष्यमाणमड्व्यवाये णत्वं लभ्यते? अत्र चकारस्यानुक्तसमुच्चयार्थत्वात्, 'निव्यविभ्योऽड्व्यवायेऽपि' इत्यतो मण्डूकप्लुतिन्यायेन, 'अड्व्यवाये' इत्यस्यानुवृत्तेर्वा। ननु चाटो गदादिभक्तत्वात् तस्य ग्रहणेनैव ग्रहणम्, तत् कुतो व्यवायः? नैतदस्ति: अङ्गस्य ह्यडागम उच्यते, विकरणान्तञ्चाङ्गम्। स ह्यङ्गस्य सङ्घातस्य भक्तः, न गदादिमात्रस्य। अतो न शक्यते गदादिग्रहणेन ग्रहीतुम्।।१७।।

**शेषे विभाषाऽकखादावषान्त उपदेशे**।। 'उपसर्गात्' इति वर्तते। उपसर्गत्वं च यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति भवति। धातुरेव क्रियावाची, तमेव प्रति प्रादीनामुपसर्गत्वम्। ततश्चोपसर्गग्रहणेन धातौ सन्निधापिते

**पदमञ्जरी**

स्यत्यादिषु तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः।

**अड्व्यवायेऽपीति**। अन्यथाङ्गस्याडुच्यते, विकरणान्तं चाङ्गम्, सोऽसौ सङ्घातभक्तोऽशक्यो गदादिग्रहणेन ग्रहीतुमिति न स्यात्। आङा चेति वक्तव्यम्—प्रण्यागददिति। तत्तर्हि वक्तव्यम्? न वक्तव्यम्, 'अट्कुप्वाङ्नुम्व्यवाये' इति वर्त्तते, तेन नेर्गदादीनां चाड्व्यवाये च भविष्यति। प्रन्युपगदतीत्यादौ तु 'पदव्यवायेऽपि' इति प्रतिषेधादप्रसङ्गः।।१७।।

**शेषे विभाषाऽकखादावषान्त उपदेशे**।। 'अकखादावषान्ते' इति चोपसर्गसन्निधापितस्य धातोर्विशेषण-मित्याह—**अकखादिरषान्त उपदेशे यो धातुरिति**।

**भावबोधिनी**

परिणिवपति। (१४) ('वह प्रापणे') वहति—प्रणिवहति। परिणिवहति। (१५) ('शमु उपशमे) शाम्यति—प्रणिशाम्यति। परिणिशाम्यति। [ प्र नि शम् + श्यन् + लट्, 'शमामष्टानां दीर्घःश्यनि' से उपधादीर्घ-प्रणिशाम्यति ] (१६) (चिञ् चयने) चिनोति-प्रणिचिनोति। परिणिचिनोति। (१७) (दिह उपचये) देग्धि—प्रणिदेग्धि, परिणिदेधि। [ प्र नि दिह + लट्, तिप्, अदादि होने से शप्लुक् 'दादेर्धातोर्घः' से ह का घ, 'झषस्तथोर्धोऽधः' से त का ध, 'झलां झश् झशि' से घ् का ग् ]

❀ अट् आगम के व्यवधान में भी 'नि' से गदादि परे रहते 'न' का णत्व इष्ट है। ❀ उदा० प्रण्यगदत्। परिण्यगदत्।

**विमर्श**—'नेर्गद....देग्धिषु च' ऐसा सप्तमी-निर्देश होने से 'तस्मिन्निति निर्दिष्टे पूर्वस्य' परिभाषा सूत्र से अव्यवहित गद आदि रहने पर 'नि' का णत्व होना चाहिये, ऐसी भ्रान्ति हो सकती है। इसका समाधान यह है कि इनमें अट् के व्यवधान में भी णत्व होता है। इसमें प्रमाण क्या है? 'नेर्....देग्धिषु च' यह चकार अनुक्त अर्थ का समुच्चायक है। अथवा 'निंव्यविभ्योड्व्यवायेऽपि' (८।३।११९) सूत्र से मण्डूकप्लुति से 'अड्व्यवायेऽपि' की अनुवृत्ति से अथवा 'अट् कुप्वाङ्' (८।४।२) से ही 'अट् व्यवायेऽपि' इसकी अनुवृत्ति से अट् के व्यवधान में भी णत्व होता है। इस सूत्र में अनेक धातुओं से 'इक्श्तिपौ धातुनिर्देशे' वचन से 'तिप्' प्रत्यय के साथ प्रयोग है। ऐसा निर्देश 'श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च। यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि।।' वचन के अनुसार यङ्लुक् में णत्व का न होना सूचित करने के लिये है। अतः ऐसी धातुओं के यङ्लुक् में 'नि' के न का ण नहीं होता है।।१७।।

'नेः' इसकी और 'उपसर्गात्' इसकी अनुवृत्ति होती है। उपदेशकाल में जो धातु ककारादि या खकारादि नहीं है और षकारान्त नहीं हैं अर्थात् जिस जिस धातु के उपदेश काल में ककार अथवा खकार आदि में नहीं होता है और षकार अन्त में नहीं होता है—

**'नेः' इति वर्त्तते, 'उपसर्गात्' इति च। अककारादिः, अखकारादिः, अषकारान्तश्च उपदेशे यो धातुः स शेषः; तस्मिन्परत उपसर्गस्थान्निमित्तादुत्तरस्य नेर्नकारस्य विभाषा णकार आदेशो भवति। प्रणिपचति, प्रनिपचति। प्रणिभिनत्ति, प्रनिभिनत्ति।**

**अकखादाविति किम्? प्रनिकरोति। प्रनिखादति। अषान्त इति किम्? प्रनिपिनष्टि। उपदेशग्रहणं किम्? इह च प्रतिषेधो यथा स्यात्–प्रनिचकार, प्रनिचखाद, प्रनिपेक्ष्यतीति। इह च मा भूत्–विशेः– प्रणिवेष्टा, प्रणिवेक्ष्यति।।**

**न्यासः**

तस्यैवाकखादित्वमषान्तत्वं च विशेषणं विज्ञायते, इत्यत आह—**अककारादिरखकारादिरषान्त उपदेशे यो धातुरिति**। आद्यन्तग्रहणे उभे अपि विस्पष्टार्थे; 'अकखे अषे' इत्येवं सिद्धत्वात्। यदि सर्वैरेवाककारादिभिस्तदादि-विधिस्तदन्तविधिर्वा स्यात् तदा सर्वेषां द्वन्द्वं कृत्वा 'अकखषे' इत्येवं ब्रूयात्। 'अकखे अषे' इति वचनात् केनचित् तदादिविधिः, केनचित् तदन्तविधिरिति विज्ञायते। अत्र त्वेतावान् सन्देहः स्यात् -केन तदादिविधिः, केन वा तदन्तविधिरिति, स चापि व्यख्यानान्निवर्त्तिष्यत इति।

शेषग्रहणमिति स्पष्टार्थम्। यदि च गदादिषु विभाषा स्यात्, पूर्वयोगो निरर्थकः स्यात्। उपदेशग्रहणमपि स्पष्टार्थमेव। शक्यते तद् हि 'उपसर्गादसमासेऽपि णोपदेशस्य' इत्यतोऽनुवर्त्तयितुमुपदेशग्रहणं मण्डूक्प्लुतिन्यायेन।

**प्रनिपिनष्टीति**। 'पिष्लृ सञ्चूर्णने', 'रुधादिभ्यः श्नम्'। **इह च प्रतिषेध इत्यादि**। **प्रणिपेक्ष्यतीति**। पिषेः षकारस्य 'षढोः कः सि' इति कत्वेऽकखादित्वादषान्तत्वाच्चासत्युपदेशग्रहणे प्रतिषेधो न स्यात्। अस्मिंस्तु सति न भवति, उपदेशे षकारान्तत्वादिति। **इह च मा** भूदिति प्रतिषेध इत्यपेक्ष्यते। **प्रणिवेष्टति**। अत्र 'विश प्रवेशने' इत्येतस्य व्रश्चादिसूत्रेण षत्वे कृते षकारान्तत्वादुपदेशग्रहणेऽसति प्रतिषेधः स्यात्। अस्मिंस्तु सति न भवति। अपि चोपदेशग्रहणेऽसति प्रणिचकार, प्रणिचखादेत्यस्याभ्यासस्य 'कुहोश्चुः' इति चुत्वे प्रतिषेधो न स्यात्: अकखादित्वात्। अस्मिंस्तु सति भवति।।१८।।

**पदमञ्जरी**

आदिग्रहणं शक्यमकर्तुम्, 'अकखे इति वक्तव्यम्, 'यस्मिन्विधिस्तदादावल्ग्रहणे'। अन्तग्रहणं तु कर्त्तव्यम्, असति हि तस्मिन्न ज्ञायेत—केन तदादिविधिः, केन वा तदन्तविधिरिति।

शेषग्रहणं किम्? गदादिषु मा भूत्। यदि तेष्वपि स्यात्, पूर्वयोगो निर्विषयः स्यात्: तस्माच्छेष इति शक्यमवक्तुम्।

**प्रनिपेक्ष्यतीति**। 'षढो कः सि' इति कत्वे कृते सम्प्रत्यषान्तो भवति। **प्रनिचकारेति**। 'कुहोश्चुः' इत्यभ्यासस्य चुत्वे कृते सम्प्रत्ययं न ककारादिर्भवति। **प्रणिवेष्टेति**। 'व्रश्च' इत्यादिषत्वे कृते सम्प्रति षान्तो भवति, उपदेशे त्वषान्तत्वाण्णत्वं भवति।।१८।।

**भावबोधिनी**

वह शेष है, ऐसी धातु के परे रहते, उपसर्ग में स्थित निमित्त से परे 'नि'.के नकार का णकार आदेश विकल्प से होता है। उदा० प्रणिपचति प्रनिपचति। प्रणिभिनत्ति, प्रनिभिनत्ति। [ 'डपचष् पाके' 'भिदिर् विदारणे' इनमें उपदेश में ककार या खकार आदि में नहीं है और षकार अन्त में नहीं है। अत: उपसर्गस्थ निमित्त रेफ से परे नि के न का ण होता है। ]

ककारादि और खकारादि न हो—इसका क्या फल है? प्रनिकरोति। प्रनिखादति। [ 'कृ' और 'खाद' ये ककारादि और खकारादि है। अत: णत्व नहीं होता है। ]

षकारान्त न हो—इसका क्या फल है? प्रनिपिनष्टि। [ 'पिष्लृ सञ्चूर्णने' यह षकारान्त है। अत: णत्व नहीं होता है ]

## ३९३२. अनितेः।।१९।। (२४७८)

**अनितेर्नकारस्योपर्सगस्थान्निमित्तादुत्तरस्य णकारादेशो भवति। प्राणिति। पराणिति।**

## ३९३३. अन्तः।।२०।। (२९८४)

**'अनितेः' इति वर्तते, उपसर्गस्थान्नमित्तादुत्तरस्यानितिनकारस्य पदान्ते वर्तमानस्य णकारादेशो भवति। हे प्राण्। हे पराण्। 'पदान्तस्य' (८।४।३७) इति प्रतिषेधस्यापवादोऽयम्। अन्तश्च पदापेक्षो गृह्यते।**

### न्यासः

**अनितेः**।। **प्राणितीति**। 'श्वस प्राणने', 'अन च, पूर्ववच्छपो लुक्, 'रुदादिभ्यः सार्वधातुके' इतीट्। अनितेरिति श्तिपा निर्देशो धातुनिर्देशार्थ एव, न यङ्लुग्निवृत्त्यर्थः; न ह्यनितेर्यङ्प्राप्तिरस्ति, हलादित्वाभावात्।।१९।।

**अन्तः**।। अन्तशब्दोऽयमवयववचनो वस्त्रान्तवत्। **हे प्राणिति**। क्विबन्तात् सम्बुद्धिः, तस्य हल्ङ्यादिलोपः। सम्बुद्धेरन्यत्र यो नकारः प्रातिपदिकान्तः, तस्य लोपेन भवितव्यमिति सम्बुद्ध्यन्तस्योपन्यासः। सम्बुद्धौ हि 'न ङिसम्बुद्ध्योः' इति प्रतिषेधान्नलोपो न भवति। ननु च पूर्वेणैवात्र णत्वं सिद्धम्, तत् किमर्थमिदमारभ्यते? इत्यत आह—**पदान्तस्येत्यादि**। 'पदान्तस्य' इति प्रतिषेधं वक्ष्यति, तस्यायं पुरस्तादपवाद आरभ्यते। अन्तश्च पदापेक्षया गृह्यते, तत्रैव सम्भवव्यभिचारौ स्तः। न त्वनित्यपेक्षः, व्यभिचाराभावादिति भावः।

### पदमञ्जरी

**अनितेः**।। **प्राणितीति**। 'श्वस प्राणने', 'अन च', रुदादिभ्यस्सार्वधातुके' इतीट्।।१९।।

**अन्तः**।। **अनितेरन्तस्येति**। अनितेः सम्बन्धिनः पदान्तस्य नकारस्येत्यर्थः। **हे प्राणिति**। क्विबन्तात्सम्बुद्धिः, 'न ङिसम्बुद्ध्योः' इति नलोपप्रतिषेधः। अन्यत्र तु पदान्तस्य नकारस्य लोपेन भवितव्यमिति सम्बुद्ध्यन्तमुदाहृतम्। अन्तश्च पदापेक्षो गृह्यत इति। नानित्यपेक्षः; व्यभिचाराभावात्।

### भावबोधिनी

उपदेश में (ककारादि, खकारादि न हो तथा षकारान्त न हों)—इस कथन का क्या फल है? जिस प्रकार से इनमें भी णत्व का प्रतिषेध हो सके—प्रनिचकार, प्रनिचखाद, प्रनिपेक्ष्यति। [ ये निष्पन्न रूपों में ककारादि, खकारादि और षकारान्त नहीं रहतीं तब भी णत्व न हो इसके लिये 'उपदेशे' का ग्रहण है। पिष् + स्य में 'षढोः कः सि' से ष् का क् कर देने पर षान्त रूप नहीं रहता है। ] और इनमें निषेध न होने लगे—प्रणिवेष्टा, प्रणिवेक्ष्यति। [ 'विश् प्रवेशने' धातुके लुट् और लृट् के रूपों में 'व्रश्चभ्रस्ज' (८।२।३६) इस सूत्र से श् का ष् कर देने पर भी उपदेश में षकारान्त न होने से निषेध न होकर णत्व हो जाता है। यदि 'उपदेशे' न रहता तो यहाँ भी निषेध होने लगता। ]।।१८।।

उपसर्ग में स्थित निमित्त से परे 'अनिति' ('अन प्राणने' धातु) के न का ण आदेश होता है। उदा॰ प्राणिति। पराणिति। [ प्र आङ् अन + शप् + लट् = तिप्, शप् का लुक्, 'रुदादिभ्यः सार्वधातुके' इस सूत्र से इट् आगम—प्रा न् इति, णत्व। यह श्तिप् का निर्देश केवल धातुरूप के बोधनार्थ है, यङ्लुक् की निवृत्ति के लिये नहीं है क्योंकि अकारादि होने से यङ् की प्राप्ति ही नहीं होती है। ]।।१९।।

'अनितेः' (अन् धातु के)—इसकी अनुवृत्ति होती है। उपसर्ग में स्थित निमित्त से परे, पदान्त में वर्तमान 'अनिति' = अन् धातु के नकार का णकार आदेश होता है। हे प्राण्! हे पराण्! [ प्र + अन् + क्विप्, सर्वापहारी लोप, सम्बोधन एकवचन सु का 'एङ्ह्रस्वात् सम्बुद्धेः' से लोप—प्र अन्, सवर्णदीर्घ, णत्व। ] 'पदान्तस्य' (८।३।३७) पदान्त नकार का णकार आदेश नहीं होता है। (वक्ष्यमाण) इसका अपवाद यह सूत्र है। 'अन्त' यह पद की अपेक्षा से लिया जाता है अर्थात् पद के अन्त के नकार का णत्व होता है। [ चूँकि 'न ङिसम्बुद्ध्योः' (८।२।८) सूत्र से सम्बोधनके नलोप का प्रतिषेध हो जाने से पद के अन्त में 'न्' सम्भव है। अतएव उसका णत्व किया गया है। ]

**केचित्तु—पूर्वसूत्र एवैतदन्तग्रहणं सामीप्यार्थमभिसम्बध्नन्ति। निमित्तसमीपस्थस्यैकवर्णव्यवहित-स्यानितिनकारस्य पदान्ते वर्तमानस्य णकारादेशो यथा स्यात्। इह मा भूत्—पर्यनितीति। तैर्द्वितीयमपि**

**न्यासः**

**केचिदित्यादि**। केचिदन्तग्रहणं पूर्वयोग एव सम्बध्नन्ति। 'अनितेरन्तः' इत्येकयोगमेव कुर्वन्तीत्यर्थः। किमर्थम्? अन्तग्रहणं सामीप्यार्थम्। सामीप्यमर्थो यस्य तत् तथोक्तम्। समीपमेव सामीप्यम्, चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। तदनेनोदकान्तवत् समीपवचनस्तैरन्तशब्दः समाश्रित इति दर्शयति। किमर्थं पुनस्त एवमन्तशब्दं सम्बध्नन्तीत्याह—**निमित्तसमीपभूतस्येत्यादि**। यदि हि पूर्वसूत्रेऽन्तशब्दः समीपवचनो न सम्बध्येत, तदेहापि स्यात्—पर्यनितीति। तस्मात् प्रकृतस्य णत्वनिमित्तस्य समीपो य एकवर्णव्यवहितः स प्रत्यासन्नो नकारस्तस्यैव णत्वं यथा स्यात्। पर्यनितीत्यत्र निमित्ताद् विप्रकृष्टस्य मा भूदित्येवमर्थं पूर्वसूत्रे समीपवचनमन्तशब्दं सम्बध्नन्ति। एकवर्णव्यवहितस्येत्यनेन सामीप्यमाचष्टे। अनेकवर्णव्यवहितस्य सामीप्यं नोपपद्येतेत्येतद् देश्यं नाशङ्कनीयम्; तस्यापेक्षिकत्वात्। पर्यनितीत्यत्रेवानेकवर्णेन व्यवहितो नकारः; यणादेशे कृते सत्यकारयकाराभ्यां रेफस्य व्यवधानात्। प्राणितीत्यत्र त्वेकादेशे कृते सत्येकेन वर्णेन व्यवहितो नकारः; निमित्तादाकारेणैव केवलेन व्यवधानात्। यो ह्यनेकवर्णव्यवहितः, स एकमपेक्ष्य विप्रकृष्टो भवति; इतरस्तु तमपेक्ष्य सन्निकृष्टः, सोऽप्यव्यवहितमपेक्ष्य विप्रकृष्टो भवति, भवत्येवं यद्यव्यवहितः सम्भवेत्। स चानितेर्न सम्भवतीति न भवति तदपेक्षं विप्रकृष्टत्वम्। ननु च 'अचः परस्मिन् पूर्वविधौ' इत्यत्र पूर्वस्माद् विधिः पूर्वविधिरिति तत्पुरुषस्याश्रयणाण्णत्वे कर्तव्ये सत्येकादेशस्य स्थानिवद्भावात् प्राणितीत्यत्रानेकेन वर्णेनापि व्यवहितो नकारः? 'पूर्वत्रासिद्धीये न स्थानिवत्' इति वचनान्न भवति स्थानिवद्भाव इत्यदोषः। **तैरित्यादि**। येऽत्रान्तशब्दं

**पदमञ्जरी**

**केचित्त्वित्यादि**। 'अनितेरन्तः' इत्येकमेव योगं पठन्ति, समीपवचनं चान्तशब्दमाश्रयन्तीत्यर्थः। किमर्थम्? इत्याह—**निमित्तसमीपस्येति**। ननु च नास्त्येव स विषयो यत्र निमित्तस्य समीपभूतोऽनितेर्नकारः, प्राणितीत्यादावेकादेश कृते आकारेण व्यवायेः, निरणितीत्यत्राकारेण, तत्कथं निमित्तसमीपस्थस्येत्युच्यते? अत आह—**एकवर्णव्यवहितस्येति**। सामर्थ्यादेकवर्णेन व्यवधानमाश्रितमित्यर्थः। न च प्राणितीत्यत्रैकादेशस्य पूर्वस्माद्विधौ स्थानिवद्भावाद् वर्णद्वयव्यवायः शङ्कनीयः; पूर्वत्रासिद्धे स्थानिवत्त्वनिषेधात्। ननु चोक्तम्—'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति? एवं तर्ह्यनित्यः पूर्वस्माद्विधौ स्थानिवद्भावः; 'निष्ठायां सेटि' इति सेड्ग्रहणात्, एतच्च स्थानिवत्प्रकरण एव व्याख्यातम्। **तैरित्यादि**। एकं ह्यन्तग्रहणम्, तच्च, सामीप्यार्थं पर्यनितीत्यत्र णत्वव्यावृत्त्या चरितार्थम्, ततश्च हे प्राणित्यत्र पदान्तस्येति प्रतिषेधः प्राप्नोति; तस्मात्तैर्द्वितीयमप्यन्तग्रहणमावृत्त्या तन्त्रेण वाऽऽश्रयतिव्यम्।

**भावबोधिनी**

कुछ विद्वान् पूर्ववर्ती 'अनितेः' इसी सूत्र में 'अन्तः' का सम्बन्ध सामीप्य अर्थ की प्रतीति कराने केलिये करते हैं' अर्थात् 'अनितेरन्तः' ऐसा एक ही सूत्र मानते हैं जिससे कि निमित्त के समीप में स्थित, एकवर्ण से व्यवहित 'अनिति' = अनधातु का नकार जो पदान्त में वर्तमान है उसका णकार आदेश हो सके। और यहाँ पर न होवे—'पर्यनिति'। [ परि + अनिति, यण्-पर्यनिति में यकार तथा अकार इन दो वर्णों का व्यवधान है। जबकि प्र + अनिति सवर्ण दीर्घ करने पर एक आकार का ही व्यवधान है। ] पूर्वोक्त व्याख्या जो करते है उन्हें भी पदान्त का णत्व करने के लिये दूसरी बार 'अन्तः' ग्रहण का आश्रयण करना ही होगा। [ भाव यह है कि 'अनितेरन्तः' ऐसा एक ही सूत्र मानने पर वह 'अन्त' ग्रहण सामीप्य अर्थ का बोध कराकर, अव्यवहित अर्थ का बोध कराकर 'पर्यनिति' में णत्व का वारण कर चरितार्थ हो जाता है। तब 'हे प्राण्' यहाँ वक्ष्यमाण सूत्र 'पदान्तस्य' से णत्व का निषेध प्राप्त होगा उसे रोकने केलिये दूसरा 'अन्त' ग्रहण करना ही होगा। ]

**पदान्तस्य णत्वार्थमन्तग्रहणमाश्रयितव्यमेव। येषां तु 'पर्यणितीति भवितव्यम्' इति दर्शनम्, तेषां पूर्वसूत्रे नार्थोऽन्तग्रहणेन।।**

## ३९३४. उभौ साभ्यासस्य ।।२१।। (२६०६)

**साभ्यासस्यानितेरुपसर्गस्थान्निमित्तादुत्तरस्योभयोर्नकारयोर्णकार आदेशो भवति। प्राणिणिषति, प्राणिणत्। पराणिणिषति, पराणिणत्।**

**न्यासः**

सामीप्यार्थमाश्रित्यैकयोगं कुर्वन्त, तेषां योगस्य प्राणित्यत्र सावकाशत्वाद् हे प्राणित्यत्र 'पदान्तस्य' इति प्रतिषेधः प्राप्नोति। तस्मात् तैर्द्वितीयमप्यन्तस्य ग्रहणमावृत्त्या तन्त्रेण न्यायेनाश्रयितव्यम्, पदान्तस्य णत्वं यथा स्यात्।

ननु येऽपि योगविभागं कुर्वन्ति, तेऽन्तशब्दमवयवचनमाश्रयन्ति। तैरपि पूर्वसूत्रे सामीप्यवाच्यन्त-ग्रहणमाश्रयितव्यमेव; अन्यथा हि पर्यनतीत्यत्रापि णत्वं स्यात्? इत्यत आह—**येषां त्वित्यादि**। येषामिति योगविभागकारिणाम्। ते ह्यनेकवर्णव्यवहितस्यापि णत्वमिच्छन्त्येव। तस्मान्नार्थस्तेषां पूर्वसूत्रेऽन्तग्रहणेन्।।२०।।

**उभौ साभ्यासस्य**।। नकारोऽयमडादीनामेकोऽपि न भवतीति ततो द्विवचने कृते सत्यभ्यासनकारेण व्यवहितत्वादितरस्य नकारस्य न स्यात्, इष्यते च। तस्मात् तस्यापि यथा स्यादितीदमारभ्यते। **प्राणिणिषतीति**। सन्, इट्, 'अजादेर्द्वितीयस्य' इति 'सन्यङोः' इत्यनेन निशब्दो द्विरुच्यते। **प्राणिणदिति**। ण्यन्ताल्लुङ्, णिलोपः, तस्य 'द्विर्वचनेऽचि' इति स्थानिवद्भावान्निशब्दस्य द्विर्वचनम्।

**पदमञ्जरी**

ननु च चेऽपि योगविभागं कुर्वन्ति, अवयववनं चान्तशब्दमाश्रयन्ति, तैरपि पूर्वसूत्रे सामीप्यवाच्यन्तशब्दः पठितव्य एव; अन्यथा पर्यनितीत्यत्रापि स्यात्? अत आह—**येषां त्विति**। ते नैकवर्णव्यहितस्यापि णत्वमिच्छन्त्येव, तस्मान्नार्थस्तेषां पूर्वसूत्रेऽन्तग्रहणेनेत्यर्थः।।२०।।

**उभौ साभ्यासस्य**।। **प्राणिणिषतीति**। सनि 'अजादेर्द्वितीयस्य' इति निशब्दस्य द्विर्वचनम्। **प्राणिणदिति**। ण्यन्ताल्लुङ्, च्लेश्चङ्, णिलोपः, 'द्विर्वचनेऽचि' इति स्थानिवद्भावान्निशब्दस्य द्विर्वचनम्।

**भावबोधिनी**

[ परन्तु जो आचार्य योगविभाग करते हैं और 'अन्त' शब्द को अवयववाची मानते हैं उन्हें भी पूर्वसूत्र 'अनितेः' इसमें सामीप्यवाची 'अन्त' शब्द का ग्रहण करना ही होगा अन्यथा 'पर्यनिति' इसमें भी णत्व होने लगेगा? इस शंका का समाधान यह है ] जिन आचार्यों के अनुसार 'पर्यणिति ऐसा रूप होना चाहिये' ऐसा मत है उनके लिये पूर्ववर्ती सूत्र में 'अन्तः' इसके ग्रहण की आवश्यकता नहीं है। [ क्योंकि वे तो अनेक वर्णों से व्यवहित भी 'न' का णत्व चाहते ही हैं। ]।।२०।।

उपसर्ग में स्थित निमित्त से उत्तरवर्ती, अभ्याससहित 'अन्' धातु के दोनों नकारों के दो णकार आदेश होते हैं। उदा० प्राणिणिषति। [ प्र अन् + सन्, इट्, दीर्घ, प्रानिस 'अजादेर्द्वितीयस्य' सूत्र से 'सन्यङोः' सूत्र से द्वितीय वर्ण 'नि' का द्वित्व प्रा नि नि स, षत्व, दोनों नकारों के णकार आदेश। ] प्राणिणत्। [ प्र अन् + णिच् + लुङ्, च्लि का चङ्, 'नि' का द्वित्व, णिलोप प्रा नि न् अत्, दोनों न् के ण् ] पराणिणिषति। पराणिणत्। [ परा अन् + सन्, परा अन् + णिच् + लुङ्। ]

'द्विर्वचन के विषय में 'पूर्वत्रासिद्धम्' इसकी प्रवृत्ति नहीं होती है।' इस परिभाषा के रहते पहले [ पूर्वसूत्र से ] किये गये णत्व वाले का ही द्विर्वचन कर देने पर ये 'प्राणिणिषति' आदि रूप इस वर्तमान सूत्र के अभाव में भी सिद्ध हैं [ तब इस सूत्र की क्या आवश्यकता है ]? उक्त परिभाषा नहीं भी मानी जानी चाहिये—इसलिये यह सूत्र बनाया जा रहा है। इसीलिये 'औजढत्' यह रूप सिद्ध होता है।

**विमर्श**—भाव यह है कि—'प्रानिस' इस अवस्था में 'सन्यङोः' (६।१।९) से द्वित्व और 'अनितेः' सूत्र से णत्व प्राप्त होता है। द्वित्व की दृष्टि में णत्व के असिद्ध हो जाने से पहले द्वित्व ही होता है—प्रानिनिस + ति, अब अभ्यास के न का ण तो पूर्वसूत्र

**'पूर्वत्रासिद्धीयमद्विर्वचने' (पु.प९२) इत्येतस्मिन् सति पूर्वेणैव कृतणत्वस्य द्विर्वचने कृते सिद्धमेतदन्तरेणापि वचनम्? एतत्तु नाश्रयतिव्यमिति सूत्रमिदमारभ्यते। तेन[१] औजढदिति सिद्धं भवति[१]।।**

**न्यासः**

**पूर्वत्रासिद्धीमित्यादि**। 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्येतस्मिन्नसति द्विर्वचने कर्त्तव्ये णत्वस्यासिद्धत्वात् प्राग् द्विर्वचनेन भवितव्यम्। अत्रास्मिन् सूत्रेऽसति प्रथमेन नकारेण व्यवाये द्वितीयस्य 'अनितेः' इत्यनेन णत्वं न स्यादिति प्राणिणिषतीत्यादि न सिध्यति। अस्मिंस्तु 'पूर्वत्रासिद्धम्' इत्यस्यापवादे सत्यनितेरित्यनेन परत्वाण्णत्वमेव क्रियते। ततः कृतणत्वस्य द्विर्वचने कृते सिद्धमेवैतदन्तरेणाप्येतत् सूत्रम्। यद्येवम्, किमर्थमिदमारभ्यते? इत्यत आह—**एतत्त्वित्यादि**। शक्यार्थे कृत्यः। इतिकरणो हेतौ। तुशब्दोऽयमवधारणे। यस्मात्तत्तदपवादवचनं नैव शक्यमाश्रयितुम्, तस्मात् सूत्रमिदमारभ्यते। यदि हि तदेवाश्रीयेत, तदेदं सूत्रं न कर्त्तव्यं स्यात्, ततश्चास्यापवादवचनस्यासर्वविषयता न विज्ञायते। एवमूढमाख्यदौजढदित्यत्र पूर्वत्रासिद्धस्याभावाड् ढत्वादीनामसिद्धत्वाद् हत् इत्येतस्य द्विर्वचनं न स्यात्। अस्मिंस्तु सूत्रे सति तस्यापवादवचनस्यासर्वविषयता विज्ञायते। तेनौजढदित्यत्र ढत्वादीनामसिद्धत्वाद् हत् इत्येतस्य द्विर्वचनं भवति।

अथोभाविति किमर्थम्, यावता पूर्वस्य नकारस्य पूर्वसूत्रेणैव णत्वं सिद्धम्, इतरस्य त्वारम्भसामर्थ्यात् अन्तरेणापि 'उभौ' इति वचनं णकारस्य व्यवायेऽप्यनेन भविष्यति? एवं मन्यते—'साभ्यासस्य' इत्येतावत्युच्यमाने यथा 'अजादेर्द्वितीयस्य' इति द्विर्वचनमारभ्यमाणं प्रथमद्विर्वचनस्यापवादो विज्ञायते, तथेहाप्यनडादिव्यवाये द्वितीयस्य नकारस्य णत्वमारभ्यमाणं पूर्वस्यापवादो विज्ञायते।

'साभ्यासस्य' इति वचनं विस्पष्टार्थम्; उभावित्यनेनैव सिद्धत्वात्। न ह्यनभ्यासस्यानितेरुभौ नकारौ सम्भवतः।।२१।।

**पदमञ्जरी**

**पूर्वत्रासिद्धीयमित्यादि**। 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्मिन्नसति प्रानिसतीति स्थिते द्विर्वचनं च प्राप्नोति, णत्वं च, तत्र णत्वस्यासिद्धत्वात्पूर्वं द्विर्वचने कृतेऽभ्यासणकारेण व्यवायाद्धातुनकारस्य णत्वं न स्यात्। अस्मिंस्तु सति परत्वाण्णत्वे कृते कृतणत्वस्यैव द्विर्वचने अन्तरेणाप्येतद्वचनं प्राणिणिषतीत्यादि सिद्धं भवति। यद्येवम्, किमर्थमिदमारभ्यते? इत्याह—**एतत्त्विति**। शक्यार्थे कृत्यः, इतिकरणो हेतौ। तुशब्दोऽवधारणे। यस्मादेतदपवादवचनमेतदर्थं नैव शक्यमाश्रयितुम्, तस्मादेतदारभ्यते। अयमभिप्रायः—अस्य वचनस्यानित्यत्वज्ञापनार्थमिदमारभ्यत इति। तेन—'औजढदित्यत्र ढत्वादीनामसिद्धत्वात् हत् इत्येतद् द्विरुच्यते'—इत्युपपन्नं भवति।

अथ 'उभौ' इति किमर्थम्, यावताभ्यासनकारस्य पूर्वेणैव णत्वं सिध्यति, आरम्भसामर्थ्याद्धातुनकारस्य व्यवायेऽप्यनेन भविष्यति? सत्यम्; व्यवहितस्य सिध्यति, अनन्तरस्य तु तक्रकौडिन्यन्यायान्न स्यादिति 'उभौ' इत्युच्यते।।२१।।

**भावबोधिनी**

से सम्भव है किन्तु इस अभ्यास ण के व्यवधान के कारण द्वितीय 'नि' का णत्व नहीं हो सकता। इसके लिये यह सूत्र बनाना आवश्यक है।

परन्तु यदि 'पूर्वत्रासिद्धीयम् अद्वित्वे' अर्थात् द्वित्व की कर्तव्यता में असिद्धत्व नहीं होता है अतः पहले त्रिपादीस्थ सूत्र से णत्व करने के बाद णकार वाले एकाच् का ही 'सन्यङोः' इस सपादसप्ताध्यायीस्थ सूत्र से द्वित्व किया जाता है तो—प्राणिणिषति। इस स्थिति में प्रस्तुत सूत्र की आवश्यकता नहीं है।

वास्तव में 'पूर्वत्रासिद्धीय' परिभाषा नहीं माननी चाहिये। तभी 'औजढत्' रूप बन पाता है। वह् + क्त सम्प्रसारणादि के बाद

---

१.१. क्वचित् पुस्तकेऽयं पाठो नास्ति।

## ३९३५. हन्तेरत्पूर्वस्य ।।२२।। (३५९)

**अकारपूर्वस्य हन्तिनकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकार आदेशो भवति। प्रहण्यते, परिहण्यते। प्रहणनम्, परिहणनम्।**

**अत्पूर्वस्येति किम्? प्रघ्नन्ति। परिघ्नन्ति। तपरकरणं किम्? चिणि-प्राघानि। पर्यघानि।।**

**न्यासः**

**हन्तेरत्पूर्वस्य**।। हन्तेरित्यवयवलक्षणा षष्ठी। **अत्पूर्वस्येति**। अत्पूर्वो यस्मादिति बहुव्रीहिः। नकारोऽन्यपदार्थः। **प्रहण्यत इति**। 'हन हिंसागत्योः', 'भावकर्मणोः' इत्यात्मनेपदम्। **प्रघ्नन्तीति**। 'गमगहन' इत्यादिनोपधालोपः। 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वम्। **प्राघानीति**। लुङ्, चिण्भावकर्मणोः' इति च्लेश्चिण्, 'अत उपधायाः' इति वृद्धिः' 'चिणो लुक्' इति तकारस्य लुक्। श्तिपा निर्देशो धातुनिर्देशार्थ एव, न यङ्लुग्निवृत्त्यर्थः—प्रजङ्घनीतीति। द्विर्वचने चुत्वे जश्त्वे कृते परस्य नकारस्य जकारेण व्यवधानाण्णत्वं न भविष्यतीति। पूर्वस्य तु 'नश्चापदान्तस्य झलि' इत्यनुस्वारे सत्यनुस्वारीभूतत्वाच्च।

अत इति कर्त्तव्ये 'पूर्वस्य' इति वचनं वैचित्र्यार्थम्[१]।।२२।।

**पदमञ्जरी**

**हन्तेरत्पूर्वस्य**।। हन्तेरित्यवयवषष्ठी, अत्पूर्वो यस्मादिति बहुव्रीहिः, नकारोऽन्यपदार्थः। यद्यपि नकारविशेषणानि प्रथमया निद्दिश्यन्ते—अन्तः, उभाविति, तथापीह षष्ठ्या निर्देशः कृतः। इदं हि न्याप्यं व्यतिक्रमोऽल्पः। **प्रहण्यत इति**। भावे, कर्मणि वा लट्। **प्रघ्नन्तीति**। 'गमहन' इत्युपधालोपः, 'हो हन्तेः' इति कुत्वम्। अत्र 'कुव्यवाये' इति प्रसङ्गः। **प्राघानीति**। 'चिण् भावकर्मणोः' इति चिण्।

श्तिपा निर्देशो धातुनिर्देशार्थ एव, न यङ्लुग्निवृत्त्यर्थः—**प्रजङ्घनीति**। अत्र हि चुत्वे कृते जकारेण व्यवायादेव न भविष्यति।।२२।।

**भावबोधिनी**

'ऊढ' बना कर—'ऊढम् आख्यत्' इस अर्थ में णिच्, णिजन्त से लुङ। च्लि का चङ्, 'चङि' (६।१।११) सूत्र से द्वित्व की कर्तव्यता में (ऊढ शब्द में पहले से किये गये) ढत्व, धत्व, ष्टुत्व तथा ढलोप के असिद्ध हो जाने पर 'णि' परे रहते जो 'ढ्' का लोप होता है उसका स्थानिवद्भाव हो जाने से—'ह्त' इसका द्वित्व होता है। हलादिशेष आदि के बाद 'कुहोश्चुः' से हकार का झकार और 'अभ्यासे चर्च' से झ का जश्त्व जकार—औजढत्। 'णि परे अलोप होने से अग्लोपी होने के 'सन्वल्लघुनि' से सन्वद्भाव तथा इत्व नहीं होता है।

यदि 'पूर्वत्रासिद्धीय' परिभाषा मानी ही जाती तब तो ढत्वादि सिद्ध ही रहते, 'ढ' का द्वित्व होता—औढढत् ऐसा अनिष्ट रूप बनने लगता। इससे सिद्ध है कि पूर्वत्रासिद्धीय परिभाषा अनित्य है। इस विषय में और अधिक जानकारी के लिये 'पूर्वत्रासिद्धम्' सूत्र की काशिका तथा व्याख्यायों में देखें।।२१।।

उपसर्ग में स्थित निमित्त से परे अकारपूर्वक हन्ति (हन् धातु) के नकार का णकार आदेश होता है। उदा॰ प्रहण्यते, परिहण्यते। [ प्र हन् + यक् लट् = कर्म अर्थ में आत्मनेपद—प्र हन् यते, णत्व। ] प्रहणनम्, परिहणनम्। [ प्र हन् + ल्युट् = अन, णत्व ]

अकार पूर्व में हो जिसके ऐसी हन् धातु का—इसका क्या फल है? प्रघ्नन्ति। [ प्र हन् + लट् = झि अन्ति, शप् लुक् 'गमहनजन॰' (६।४।९८) सूत्र से उपधा अकार का लोप—प्र ह् न् अन्ति, 'हो हन्तेर्ञ्णिन्नेषु' सूत्र से ह् का कुत्व घ्। इसमें अकारपूर्व में नहीं होने से णत्व नहीं होता है—प्रघ्नन्ति, परिघ्नन्ति। ] तपरकरण अर्थात् ह्रस्व अकार ही पूर्व में हो—इसका क्या फल है? चिण् में—प्राघानि। पर्यघानि। [ प्र हन् + लुङ् = त, कर्म में 'चिण् भावकर्मणोः' सूत्र से च्लि का चिण् इ आदेश, उपधा अकार की वृद्धि—प्र अट् हान् इ त 'चिणो लुक्' से चिण् से परे त का लुक्, ह् का कुत्व घ्। दीर्घ आ पूर्व में होने से णत्व नहीं होता है—प्राघानि, परि अघानि—यण् पर्यघानि। ]।।२२।।

---

१ त्रिस्पष्टार्थम्—इति पाठान्तरम्।

## ३९३६. वमोर्वा।।२३।। (२४२९)

**'हन्तेः' इति वर्तते। वकारमकारयोः परतो हन्तिनकारस्योपसर्गस्थान्निमित्तादुत्तरस्य वा णकारादेशो भवति। प्रहण्वः, परिहण्वः; प्रहन्वः, परिहन्वः। प्रहण्मः, परिहण्मः; प्रहन्मः, परिहन्मः[1]।।**

## ३९३७. अन्तरदेशे।।२४।। (३९९४)

**अन्तःशब्दादुत्तरस्य हन्तिनकारस्यात्पूर्वस्य णकारादेशो भवति अदेशाभिधाने। अन्तर्हण्यते। अन्तर्हणनं वर्तते।**

**अदेशे इति किम्? अन्तर्हननो देशः।**

**'अत्पूर्वस्य' इत्येव–अन्तर्घ्नन्ति।**

**न्यासः**

**वमोर्वा**।। पूर्वेण नित्ये प्राप्ते विकल्पार्थं वचनम्। वाग्रहणं पूर्वविधीनां नित्यत्व-ज्ञापनार्थम्; अन्यथा हि योगारम्भसामर्थ्यादेवास्य विधेर्नित्यत्वं विज्ञायेत, पूर्वेषां तु विधीनाम् 'शेषे विभाषा' इत्यतो विभाषाग्रहणस्यानुवृत्तेः पाक्षिकत्वं स्यात्। इह तु वाग्रहणे द्वयोर्विभाषयोर्मध्ये ये विधयस्त एव नित्या इति तेषां नित्यत्वं विज्ञायते।।२३।।

**अन्तरदेशे**।। 'अन्तरपरिग्रहे' इत्यत्र 'अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गसंज्ञा वक्तव्या' इत्यनेन णत्वविधावुपसर्गसंज्ञाया विद्यमानत्वाद् 'हन्तेरत्पूर्वस्य' इत्यनेनैव णत्वे सिद्धेऽदेशार्थोऽस्य योगस्यारम्भः। **अन्तर्हणनमिति**। अत्र भावे ल्युट्। मध्ये हननमित्यर्थः। 'अन्तरपरिग्रहे' इति गतिसंज्ञकत्वात् 'कुगतिप्रादयः' इति

**पदमञ्जरी**

**वमोर्वा**।। पूर्वेण नित्ये प्राप्ते विकल्पः।।२३।।

**अन्तरदेशे**।। 'अन्तःशब्दस्याङ्किविधिणत्वेषूपसंख्यानम्' इत्युपसर्गसंज्ञाया भावाद् 'हन्तेरत्पूर्वस्य' इति सिद्धे देशप्रतिषेधार्थं वचनम्। **अन्तर्हननो देश इति**। अधिकरणे ल्युट्।।२४।।

**भावबोधिनी**

'हन्तेः' (हन् धातु के) इसकी अनुवृत्ति होती है। उपसर्गस्थ निमित्त से परे हन्ति = हन् धातु के नकार का णकार आदेश वकार और मकार परे रहते विकल्प से होता है। उदा० प्रहण्वः, परिहण्वः, प्रहन्वः, परिहन्वः। [ प्र हन् + लट् = वस्, विकल्प से णत्व स् का रुत्वविसर्ग ] प्रहण्मः, परिहण्मः, प्रहन्मः, परिहन्मः। [ मस् परे विकल्प करने के लिये यह सूत्र है। ]।।२३।।

'अन्तर्' शब्द से उत्तरवर्ती, अत्पूर्वक (अकार जिसके पूर्व में है ऐसे) हन् धातु के नकार का णकार आदेश होता है देश अर्थ का कथन न रहने पर। उदा० अन्तर्हण्यते। अन्तर्हणनं वर्तते। [ अन्तर् हन् + यक् + लट्, णत्व। अन्तर् हन् + ल्युट् = अन, भाव अर्थ में। ]

अदेश में (= देश अर्थ का कथन न रहने पर) इसका क्या फल है? अन्तर्हननो देशः [ अन्तर् हन् + ल्युट् अधिकरण अर्थ में। अन्तः हन्यते अस्मिन् देशे—इस अर्थ के होने से णत्व नहीं होता है। ]

अत् = (अकार पूर्व में रहे) इसका क्या फल है? अन्तर्घ्नन्ति। [ इसमें अकार का लोप होने से अत्पूर्वक नहीं है। अतः णत्व नहीं होता है। ]

तपरकरण (= ह्रस्व अकार जिसके पूर्व है ऐसा) इस का क्या फल है? अन्तरघानि। [ अन्तर् हन् + लुङ्, च्लि का चिण् करने पर 'अत उपधायाः' से उपधा अकार की वृद्धि होने से 'अत्पूर्वक' नहीं रह जाने से णत्व नहीं होता है। [ वास्तव में 'अन्तःशब्दस्याङ्किविधि-णत्वेषूपसंख्यानम्' इस वचन से 'अन्तर्' की उपसर्ग संज्ञा हो जाने से ] 'हन्तेरत्पूर्वस्य' इसी सूत्र से णत्व सम्भव है। यह सूत्र केवल देश अर्थ से भिन्न अर्थ में णत्व करने के लिये है 'अन्तर्हननो देशः। न्यासकार ने देश अर्थ में भी निपातन से

---

१. पूर्वेण नित्ये प्राप्ते विकल्पः—इत्यधिकः पाठोऽन्यत्र।

**तपरकरणं किम्? अन्तरघानि।।**

## ३९३८. अयनं च।।२५।। (३२९५)

**'अन्तरदेशे' इति वर्तते। अयननकारस्य चान्तःशब्दादुत्तरस्य णकारादेशो भवति अदेशाभिधाने। अन्तरयणं वर्तते। अन्तरयणं शोभनम्।**

**'अदेशे' इत्येव–अन्तरयनो देशः।।**

## ३९३९. छन्दस्यृदवग्रहात् ।।२६।। (३६४८)

**'पूर्वपदात्' इति वर्तते। ऋकारान्तादवग्रहात् पूर्वपदादुत्तरस्य णकारादेशो भवति छन्दसि विषये। 'नृमणाः'। (ऋ. १।१६७।५) 'पितृयाणम्।' (ऋ. १०।२।७) अत्र हि नृमणाः, पितृयाणमिति ऋकारोऽवगृह्यते।**

**न्यासः**

समासः। **अन्तर्हननो देश इति**। अधिकरणे ल्युट। अन्तःशब्दादबन्तस्य हन्तेः-अन्तर्घणो देश इति निपातनादेव देशाभिधानेऽपि णत्वं भवति।।२४।।

**अयनं च**।। **अयनमिति** अयतेः, इणो वा ल्युटि रूपम्। 'कृत्यचः' इत्यनेनैव सिद्धेऽदेशप्रतिविधानार्थं वचनम्। चकारेणादेशग्रहणमुपसर्गग्रहणं चानुकृष्यते। तेषामुत्तरत्रानुवृत्तिनिरासार्थम्।।२५।।

**छन्दस्यृदवग्रहात्**।। अवगृह्यते = विच्छिद्य पठ्यत इत्यवग्रहः। ऋच्चासावग्रहश्चेति ऋदवग्रहः। ऋकारात् अवग्रहात्, पूर्वपदात्-इत्येतास्तिस्रः समानाधिकरणाः पञ्चम्यः। ऋकारमात्रं च पूर्वपदं न भवतीति सामर्थ्यात्

**पदमञ्जरी**

**अयनं च**।। **अन्तरयणमिति**। अयेः, इणो वा ल्युटि रूपम्। 'कृत्यचः' इति सिद्धे इदमपि देशप्रतिषेधार्थं वचनम्।।२५।।

**छन्दस्यृदवग्रहात्**।। अवगृह्यते = विच्छिद्य पठ्यते इत्यवग्रहः, ऋच्छासाववग्रहश्च ऋदवग्रहः। ऋकाराद्, अवग्रहात्, पूर्वपदात्—इति तिस्रोऽपि समानाधिकरणाः पञ्चम्यः। तत्र ऋकारमात्रस्य पूर्वपदस्यासम्भवादृकारेण

**भावबोधिनी**

णत्व का उदाहरण दिया है—अन्तर्घणः देशः। 'अन्तर्घनो देशे' (३।३।७८) सूत्र काशिका में इसपर विचार है। दोनों रूप माने गये हैं। ]।।२४।।

'अन्तरदेशे' (देश अर्थ से भिन्न में अन्तर् शब्द से परे)—इनकी अनुवृत्ति होती है। अन्तर् शब्द से उत्तरवर्ती 'अयन' के नकार का णकार आदेश देशभिन्न के अभिधान (कथन) में होता है। उदा॰ अन्तरयणं वर्तते। अन्तरयणं शोभनम्। [ 'अय् गतौ' या 'इण् गतौ' से धातु से ल्युट् = अन, अन्तर् अयन, णत्व—अन्तरयणम्। ]

अदेशे = (देश का अभिधान न रहने पर) इसका क्या फल है? अन्तरयनो देशः [ यहाँ भाव में ल्युट् और बहुव्रीहि है। इसके उदाहरणों में 'कृत्यचः। (८।४।२९) इस सामान्य सूत्र से ही णत्व संभव है। यह केवल देशभिन्न अर्थ में ही उस का विधान कर देता है, देश अर्थ में निषेध करता है। ]।।२५।।

'पूर्वपदात्' (पूर्वपदस्थ निमित्त से परे) इसकी अनुवृत्ति होती है। ऋकारान्त अवग्रह (= अवगृह्यमाण) पूर्वपद से उत्तरवर्ती नकार का णकार आदेश होता है वेदविषय में' [ अवगृह्यते = विच्छेद करके पढ़ना अवग्रह है। 'ऋकारात्, अवग्रहात् = अवगृह्यमाणात्, पूर्वपदात्—ये तीनों समानाधिकरण हैं। अकेला ऋकार सम्भव न होने से तदन्तविधि मानी जाती हैं। अतः सूत्र का यह अर्थ होता है—अवग्रहभूत जो ऋकार तदन्त जो पूर्वपद उससे परे न का ण वेदविषय में होता है। ] उदा॰ नृमणाः। पितृयाणम्। इनमें 'नृमणाः' और 'पितृयाणम्' के ऋकार का अवग्रह किया जाता है।

**अवग्रहग्रहणं किमर्थमुच्यते, यावता 'संहिताधिकार आ अध्यायपरिसमाप्तेः' (८।२।१०८) इत्युक्तम्? विषयोपलक्षणार्थमवग्रहग्रहणम्। अवगृह्यमाणाद्यथा स्याद्, अनवगृह्यमाणान्मा भूत्। अपदान्ते चावग्रहो नास्ति।।**

## ३९४०. नश्च धातुस्थोरुषुभ्यः।।२७।। (३६४९)

**न्यासः**

पूर्वपदैकदेश ऋकारे पूर्वपदशब्दो वर्त्तत इति दर्शयति। समुदायेषु हि प्रवृत्ताः शब्दाः क्वचिदवयवेष्वपि वर्त्तन्त इति, यथा—पटो दग्ध इत्यत्र पटैकदेशे पदशब्दः। **नृमणा इति**। नरि मनोऽस्येति बहुव्रीहिः। 'अत्वसन्तस्य चाधातोः' इति दीर्घः। **पितृयाणमिति**। यान्त्यनेनेति यानम्, करणे ल्युट्। पितुर्यानमिति षष्ठीसमासः।

**अत्र हीत्यादिना** ऋकारस्यावग्रहत्वं दर्शयति। **अवग्रहग्रहणमित्यादि**। यद्यवग्रहग्रहणं न क्रियते, ततोऽप्यपदान्तादवगृह्यमाणाद् ऋकारात् स्यात्; अस्मिंस्तु सति न भवति। पदान्तस्यैवावग्रहो भवति, नापदान्तस्य। अत्र केषाञ्चिद् दर्शनम्—अत्र 'संहितायाम्' इत्यनुवर्तमानमपि नाभिसम्बध्यते; अवग्रहग्रहणात्। तेन यदावगृह्यत ऋकारस्तदैव णत्वं भवति, नान्यदेति। अपरे तु मन्यते—यथाऽनृत्यन्नपि नर्तनयोग्यत्वान्नर्तक इत्युच्यते, तथाऽनवगृह्यमाणोऽपि ऋकारोऽवग्रहयोग्यत्वादवग्रह इत्युक्तः। अत एतदुक्तं भवति-अवग्रहयोग्याद् ऋकाराण्णत्वं भवति, एवं सत्यवग्रहग्रहणे संहिताधिकारात् संहितायामेव णत्वं भवति, नावग्रहादिति।।२६।।

**नश्च धातुस्थोरुषुभ्यः**।। धातौ तिष्ठतीति धातुस्थः, 'सुपि स्थः' इति कप्रत्ययः। **ऊर्विति, ष्विति** च स्वरूपग्रहणम्। **नसिति**, नासिकादेशस्यास्मदादेशस्य च सामान्येन ग्रहणम्। तत इहास्मदादेश एव कार्यी, नेतरः;

**पदमञ्जरी**

तदन्तविधिः—अवग्रहणभूतो य ऋकारस्तदन्तादिति। संहिताधिकाराच्च संहिताकाल एतेषां णत्वम्; पदकाले चावग्रहः क्रियते, तेनावग्रहयोग्यत्वादृकारोऽवग्रह इत्युक्तः, न तु तद्दशापन्नः। तथा चावग्रहं दर्शयता णत्वं न प्रयुक्तम्। **अनवगृह्यमाणादिति**। अनवग्रहयोग्यादित्यर्थः। **अपदादिति**। पदे ह्यवग्रहः क्रियते, पदमत्र विच्छिद्यत इति दर्शनाय।।२६।।

**नश्च धातुस्थोरुषुभ्यः**।। धातौ तिष्ठतीति धातुस्थो रेफः, षकारश्च। **ऊरु इति** स्वरूपग्रहणम्, **षु इति** कृतषत्वस्य सुञो ग्रहणम्, न सप्तमीबहुवचनस्य; तेन 'इन्द्रो धाता ग्रहेषु न' इत्यत्र न भवति। **नसिति**

**भावबोधिनी**

इसमें 'अवग्रह' (अवगृह्यमाण) ऐसा किसलिये कहा जाता है क्योंकि अध्याय की परिसमाप्ति तक 'संहिता' यह अधिकार कहा गया है? विषय के उपलक्षणार्थ अवग्रह-ग्रहण किया गया है। जिस से कि अवगृह्यमाण (ऋ) से ही हो सके अनवगृह्यमाण से न होने लगे। और अपदान्त = पदान्तभिन्न में अवग्रह नहीं होता है।

**विमर्श**—'तयोर्य्वावचि संहितायाम्' (८।२।१०८) इसका 'संहिता' यह अधिकार इस अष्टम अध्याय की परिसमाप्ति तक चलता है। अतः यह णत्व भी संहिताकाल में होना चाहिये। जबकि अवग्रह पदकाल में ही किया जाता है। पदान्त का ही अवग्रह होता है। अतः इसमें परस्पर संगति नहीं बैठ पाती है। इसकारण 'अवग्रह' (अवग्रह्यमाण) का अर्थ 'अवग्रहयोग्य' समझना चाहिये। इसलिये संहिता और पदान्त का समन्वय हो जाता है। जहाँ अवग्रहयोग्यता है वहाँ सूत्र लगता है।

न्यासकार ने किसी का यह मत लिखा है कि 'संहितायाम्' इसकी अनुवृत्ति होने पर भी इसमें 'अवग्रह' का ग्रहण होने से 'संहितायाम्' का 'संबन्ध' इसमें नहीं किया जाता है। अतः जब अवग्रह होता है तभी णत्व होता है। अन्यथा नहीं।।२६।।

धातुस्थ निमित्त से उत्तरवर्ती और 'ऊरु' शब्द और 'षु' शब्द से उत्तरवर्ती 'नस्' के नकार का णकार आदेश वेदविषय में होता है। उदा॰ पहले धातुस्थ निमित्त से उत्तरवर्ती—अग्ने रक्षा णः। शिक्षा णो अस्मान् [ रक्ष, शिक्ष—ये लोट् मध्यमपुरुष

**'नस्' इत्येतस्य नकारस्य णकारादेशो भवति धातुस्थान्निमित्तादुत्तरस्योरुशब्दात्षुशब्दाच्च छन्दसि विषये। धातुस्थात्तावत्–'अग्ने रक्षा णः'। (ऋ.७।१५।१३) शिक्षा णो अस्मिन्'। (ऋ.७।३२।२६) उरुशब्दात्–'उरु णस्कृधि (ऋ.८।७५।११)'। षुशब्दात्–अभी षुणः सखीनाम्। (ऋ.४।३१।३) ऊर्ध्व ऊ षु ण ऊतये'। (ऋ.१।३६।१३) अस्मदादेशोऽयं नस्शब्दः, 'बहुवचनस्य वस्नसौ' (८।१।२१) इति।।**

## ३९४१. उपसर्गाद् बहुलम्।।२८।। (८५९)

**न्यासः**

इतरस्य धातुस्थादिभ्यःपरस्यासम्भवात्। उत्तरत्र हि नासिकादेशस्य कार्यित्वं भविष्यति। **रक्षा ण इति**। 'रक्ष पालने' इत्यस्माद् धातोर्लोट्, मध्यमपुरुषैकवचनान्तात् परस्यास्मदो द्वितीयान्तस्य 'बहुवचनस्य वस्नसौ' इति नसादेशः, 'द्व्यचोऽतस्तिङः' इति पूर्वपदस्य दीर्घः। **शिक्षाण इति**। 'शिक्ष विद्योपादाने' इत्यस्मात् तथाविधादेवास्मदो नसादेशः। **उरुणस्कृधीति**। कृञो लोट्, सिप्, 'सेर्ह्यपिच्च' इति हिरादेशः, 'श्रुशृणुपृकृभ्यश्छन्दसि' इति हेर्धिरादेशः, 'कः करत्' इत्यादिना विसर्जनीयस्य सत्वम्। **अभीषु ण इति**। 'इकः सुञि' इति दीर्घः, 'सुञः' इति षत्वम्। **एवमूर्ध्व ऊषु** ण इत्यत्राप्युकारस्य 'निपातस्य च' इत्यनेन दीर्घः, सुञः' इति षत्वम्। चकारेण 'छन्दसि' इत्यनुकृष्यत उत्तरत्रानुवृत्तिनिरासार्थम्।।२७।।

**उपसर्गाद् बहुलम्**।। नसादेशस्याक्रियावाचित्वात् तं प्रत्युपसर्गत्वं न सम्भवतीति प्राद्युपलक्षणार्थमेतदुपसर्ग-ग्रहणं विज्ञायते। **प्रण इति**। पूर्ववदस्मदो नस्।

**पदमञ्जरी**

नासिकादेशस्यास्मदादेशस्य च सामान्येन ग्रहणम्, ततोऽत्रास्मदादेश एव कार्यी; तस्यैव धातुस्थादिभ्यः परस्य सम्भवात्, उत्तरसूत्रे तूभयोः कार्यित्वम्। **रक्षा ण इति**। रक्षेति लोण्मध्यमपुरुषैकवचनान्तम्, 'व्यचोऽतस्तिङः' इति दीर्घः। **शिक्षा ण इति**। शिक्षतिर्दानकर्मा छन्दसि। **उरुणस्कृधीति**। कृञो लोट्, सेर्हिः, 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः, 'कः करत्' इत्यादिना विसर्जनीयस्य सत्वम्। **अभीषु ण इति**। 'इकः सुञि' इति दीर्घः। **एवमूषु ण** इत्यत्रापि।।२७।।

**उपसर्गाद्बहुलम्**।। न सम्प्रति क्रियायोगाभावात् प्राद्युपलक्षणमुपसर्गग्रहणम्। **प्रण** इत्यस्मदो नसादेशः, **प्रणस** इति बहुव्रीहिः, 'उपसर्गाच्च' इत्यच् समासान्तः, नासिकायाश्च नस्भावः।

**भावबोधिनी**

एकवचन के रूप हैं। 'द्व्यचोऽतस्तिङः' सूत्र से पूर्व पद का दीर्घ होता है। 'नस्' यह अस्मद् शब्द षष्ठी आदि के बहुवचन का रूप है। क् + ष = क्ष होने से धातु में णत्व का निमित्त है। 'नस्' का 'णस्', स् का रुत्वविसर्ग होता है। ] ऊरु शब्द से परे—उदा॰ ऊरु णस्कृधि। (कृ + लोट् मध्यमपुरुष एकवचन में 'सि' का 'हि' और 'श्रुशृणुपृकृवृभ्यश्छन्दसि' सूत्र से हि का धि—कृधि। उरु नस् कृधि, न का ण, स का रुत्व विसर्ग, पुनः 'कः करत्कृधि॰' इस सूत्र से सत्व। षु शब्द से परे उदा॰—अभी षु णः सखीनाम्। [ अभि सु नस्..., 'इकः सुञि' सूत्र से षत्व, प्रस्तुत सूत्र से 'न' का 'ण' अभी षु णः सखीनाम्। ऊर्ध्व ऊ षु ण ऊतये। [ यहाँ भी 'निपातस्य च' सूत्र से पूर्ववत् दीर्घ, षत्व, णत्व होने के बाद 'णस्' स् का रुत्व, यत्व और उसका लोप होता है। अतः केवल 'ण' बचता है। ]

यह 'नस्' शब्द 'बहुवचनस्य वस्नसौ' (८।२।२१) सूत्र द्वारा अस्मद् शब्द के द्वितीया, चतुर्थी और षष्ठी के बहुवचन के निष्पन्न रूपों के स्थान पर 'नस्' आदेश होता है। [ उसी का ग्रहण है। अन्य किसी 'नस्' रूप का नहीं। ]।।२७।।

उपसर्ग में स्थित निमित्त से उत्तरवर्ती 'नस्' के नकार का णकार आदेश बहुलरूप से होता है। उदा॰ प्रणः शूद्रः। [ प्र नस्। यह भी अस्मद् का आदेशभूत नस् है। णत्व होता है। ] प्रणसः। [ प्रगता नासिका यस्य सः—यह बहुव्रीहि है। 'उपसर्गाच्च' सूत्र

**उपसर्गस्थान्निमित्तादुत्तरस्य नसो नकारस्य णकारादेशो भवति बहुलम्। प्रणः शूद्रः। प्रणसः। प्रणो राजा। न च भवति—'प्र नो मुञ्चतम्।' (ऋ.६।७४।४)**

**बहुलग्रहणाद्भाषायामपि भवति। प्रणसं मुखम्[1]। 'उपसर्गाच्च' (५।४।११९) इति नासिकाया नसादेशः।।**

## ३९४२. कृत्यचः।।२९।। (२८३५)

**कृत्स्थो यो नकारोऽच उत्तरस्तस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति। अन, मान, अनीय,**

**न्यासः**

**प्रणसमिति**। प्रगता नासिका यस्येति बहुव्रीहिः, 'उपसर्गाच्च' इत्यच् समासान्तः, नासिकायाश्च नसादेशः।।२८।।

**कृत्यचः।। कृत्स्थो यो नकारोऽच उत्तर इति**। एतेनाच इति नकारस्येदं विशेषणम्, न तु कृत इति दर्शयति। यदि कृत एव विशेषणं स्यात्, प्रवपणमित्यत्र णत्वं न स्यात्, न ह्यत्र कृदचः परः। नकारस्तु सम्भवत्येव। यदि कृत एतद् विशेषणं स्यात्, तदा 'न भाभूपूकमिगमिप्यायी' इत्यादौ कम्यादीनां ग्रहणमनर्थकं स्यात्;

**पदमञ्जरी**

**उपसर्गादनोत्पर इति** पाठान्तरम्, उपसर्गात्परस्य नसो नकारस्य णत्वं भवति, ओतः परस्य ओकारे वा न भवतीत्यर्थः। उभयथाप्यतिव्याप्त्यव्याप्तिसम्भवाव्द्याख्यात एव पाठो **वृत्तिकारेणाश्रितः**।।२८।।

**कृत्यचः**।। कृत्स्थो यो नकार अच उत्तर इत्यनेनाच इति नकारस्येदं विशेषणम्, न कृत इति दर्शयति। यदि हि कृत एतद्विशेषणं स्यात् प्रापणमित्यादौ न स्यात्, 'न भाभूपूकमिगमिप्यायिवेपाम्' इत्यत्र च कम्यादीनां

**भावबोधिनी**

से समासान्त अच् प्रत्यय होता है और नासिका का नस् आदेश भी होता है— प्र नस् अ, णत्व ]. प्रणः राजा। [ यहाँ भी 'नस्' के न का णत्व होता है। ] यह णत्व नहीं भी होता है—प्र नो मुञ्चतम्।

'बहुल' के ग्रहण के कारण भाषा में भी [ प्रगता नासिका यस्य तत् तादृशम्—इस विग्रह में बहुव्रीहि के बाद ] 'उपसर्गाच्च' सूत्र से [ अच् प्रत्यय और ] नासिका का नस् आदेश होने के बाद णत्व होता है—प्रणसं मुखम्।

**विमर्श**—क्रिया के योग में 'प्र आदि' उपसर्ग माने जाते हैं। अतः अस्मद् के स्थान पर आदेश होने वाले 'नस्' के साथ उपसर्गत्व संभव नहीं है। इसलिये उपसर्गशब्द 'प्र' आदि का उपलक्षण है अर्थात् ये उपसर्ग और अनुपसर्ग दोनों प्रकार के लिये जा सकते हैं। इसीलिये 'नस्' के न का ण होता है। दूसरी बात यह है कि यहाँ 'नस्' का तन्त्र से उच्चारण है। अतः नासिका के स्थान पर आदेश होने वाले 'नस्' का भी णत्व होता है—प्रणसः। तीसरी बात बहुलग्रहण से प्रतीत होती है कि यह णत्व लौकिक भाषा में भी होता है—प्रणसं मुखम्। (उठी हुई नासिका वाला मुख।)

इस सूत्र का एक पाठान्तर भी है—'उपसर्गादनोत्परः'। इसका अर्थ है—उपसर्ग से परे नस् के न का णत्व होता है ओकार से परवर्ती = ओकार परे रहते नहीं भी होता है। परन्तु इस पाठ का खण्डन करते हुये भाष्यकार ने 'उपसर्गाद् बहुलम्' यही पाठ उचित माना है और काशिकाकार ने भी यही स्वीकार किया है। भाष्य में यह विचार है....'एवंतर्हि—उपसर्गाद् बहुलमिति वक्तव्यमिति'। वहाँ खण्डनार्थ एक कारिका भी लिखी है—

अनितेरन्तः पदान्तस्य, यो वा तस्मादनन्तरः।
साभ्यासस्य द्वयोरिष्टं भाविन्यप्योति नेष्यते।। (८।४।२८)।।२८।।

अच् से उत्तरवर्ती कृत्प्रत्यय में स्थित नकार जो कि उपसर्ग में स्थित निमित्त से परे है उसका णकार आदेश होता है। अन, मान, अनीय, अनि, इनि तथा निष्ठा प्रत्ययों के आदेश—इतने णत्व के प्रयोजक हैं अर्थात् इनमें णत्व होता है। क्रमशः उदा०

---

१. क्वचित् पुस्तके 'छन्दसीति निवृत्तम्, तेन भाषायामपि भवति'–इत्यधिकः पाठः।

**अनि, इनि, निष्ठादेश–एते णत्वं प्रयोजयन्ति। अन–प्रयाणम्, परियाणम्। प्रमाणम्, परिमाणम्। मान–प्रयायमाणम्, परियायमाणम्। अनीय–प्रयाणीयम्, परियाणीयम्, अनि–अप्रयाणिः, अपरियाणिः। इनि–प्रयायिणौ, परियायिणौ। निष्ठादेशः–प्रहीणः, परिहीणः; प्रहीणवान्, परिहीणवान्।**

**अच इति किम्? प्रमग्नः, परिभुग्नः। 'भुजो कौटिल्ये' (धा.पा.१४१८), अस्य निष्ठाप्रत्ययः, 'ओदितश्च'. (८।२।४५) इति निष्ठानत्वम्, 'चोः कुः' (८।२।३०) इति कुत्वे सिद्धम्–परिभुग्न इति[१]।**

**न्यासः**

प्राप्त्यभावात्। न ह्येतेभ्यो यः कृद् विधीयते सोऽचः परः सम्भवति; तेषामनजन्तत्वात्। तस्मान्नकारस्येदं विशेषणं युक्तम्। कृत्स्थानां येषां णत्वं सम्भवति, तान् दर्शयितुमाह—**अनमानानीयानीत्यादि**। अन, योरादेशः। मान-आगतमुकः शानच्-कानच्-चानशः। अनीयर्तव्यदादिसूत्रेण यो विहितः। अनिः—'आक्रोशे नञ्यनिः' इति। इनिः—'सुप्यजातौ णिनिस्ताच्छील्ये' इति, 'आवश्यकाधमर्ण्ययोरिनिः' इति; अयञ्च उत्सृष्टानुबन्धः। निष्ठादेशः—'रदाभ्यां निष्ठातो नः' इति प्रकरणे यो विहितः। **प्रयाणमिति**। प्रपूर्वाद् यातेर्ल्युट्। **प्रयायमाणमिति**। कर्मणि लकारः, शानच्, यक्, 'आने मुक' इति मुक्। **प्रयाणीयमिति**। अनीयर्। **अप्रयाणिरिति**। 'आक्रोशे नञ्यनिः'। **प्रयायिणाविति**। 'आतो युक्चिण्कृतोः' इति युक्। **प्रहीण इति**। 'ओहाक् त्यागे', 'ओदितश्च' इति तकारस्य नकारः, 'घुमास्था' इत्यादिनेत्त्वम्।

**प्रमग्न इति**। 'टुमस्जो शुद्धौ', 'मस्जिनशोर्झलि' इति नुम्। स च भवञ्चकारात् पूर्वो भवति; 'मस्जेरन्त्यात् पूर्वं नुममिच्छन्त्यनुषङ्गसंयोगादिलोपार्थम्' इति वचनात्। 'अनिदिताम्' इत्यादिनास्य नकारलोपः, 'स्कोः' इत्यादिना सकारस्य च, 'चोः कुः' इति कुत्वम्। **परिभुग्न इति**। 'भुजो कौटिल्ये'।

**पदमञ्जरी**

प्रतिषेधोऽनर्थकः स्यात्। **अनमानेत्यादि**। सम्भवोदाहरणदर्शनपरम्, न परिगणनम्; अन्यस्यासम्भवात्। **अन इति**। योरनादेशः। **मान** इत्यागतमुक् शानजादिः। तव्यदादिसूत्रविहि**तोऽनीयः**। 'आक्रोशे नञ्यनिः'। 'सुप्यजातौ णिनिः', आवश्यके णिनिः। निष्ठादेशः 'रदाभ्याम्' इति विहितः। **प्रहीण इति**। 'घुमास्था' इत्यादिना ईत्वम्।

**भावबोधिनी**

अन—प्रयाणम्, परियाणम्। [ प्र या + ल्युट् = अन, णत्व। ] प्रमाणम्, परिमाणम्। [ प्र मा + ल्युट् ] मान—[ यह मुगागमसहित शानच, कानच्, चानश् का रूप है। ] प्रयायमाणम्, परियायमाणम्। [ प्र पूर्वक या धातु से कर्म में लट्, आत्मनेपद, शानच् = आन, यक्—प्र या य + आन, 'आने मुक्' सूत्र से मुक् म् आगम, णत्व प्रयायमाणम्, परियायमाणम्। ] अनीयर्—प्रयाणीयम् परियाणीयम् [ प्र या + अनीयर्, णत्व ] अनि—(यह प्रत्यय 'आक्रोशे नञ्यनिः' सूत्र से विहित है) अप्रयाणिः, अपरियाणिः [ इनमें प्र या + अनि—प्रयानि, नञ् समास—अप्रयाणिः, अपरियाणिः बनते हैं।—'अप्रयाणिः ते शठ भूयात्' आदि रूप में आक्रोश व्यक्त करने के लिये प्रयोग होते हैं। ] इनि-प्रयायिणौ, परियायिणौ। [ यहाँ प्र या धातु से 'सुप्यजातौ णिनिः' सूत्र से णिनि = इनि प्रत्यय, 'आतो युक् चिण्कृतोः' सूत्र से युक् आगम होता है। प्र या य् इन्, णत्व। ] निष्ठा—क्त, क्तवत् के स्थान पर आदेश होने वाले—प्रहीणः, परिहीणः। प्रहीणवान्, परिहीणवान्। [ 'ओहाक् त्यागे' धातु से क्त प्रत्यय—'प्र हा त, 'घुमास्था॰' सूत्र से ईत्व, 'ओदितश्च' सूत्र से त का न, प्रस्तुत सूत्र से न का ण। प्र ही + तवत् में भी यही प्रक्रिया होती है। ]

अचः = अच् से परे—इसका क्या फल है? प्रमग्नः, परिभुग्नः। [ मस्जो धातु के टु ओ का लोप प्रमस्ज् + क्त, 'मस्जिनशोर्झलि' सूत्र से नुम् आगम, उसका लोप आदि करने पर 'स्कोः; संयोगाद्योरन्ते च' सूत्र से स् का लोप—प्र म ज् क्त, 'चोः कुः' से ज का कुत्व ग् 'ओदितश्च' सूत्र से 'त' का न, णत्व नहीं होता है क्योंकि अच् से परे न नहीं है, ग् से परे है। ] 'भुजो कौटिल्ये' (इस धातु के ओकार की इत्संज्ञा लोप) निष्ठा क्त प्रत्यय, 'ओदितः' (ओकार की इत्संज्ञावाली धातु से परे त का नत्व,) 'चोः कुः' सूत्र से ज् का कुत्व ग्—'परिभुग्नः' यह बनता है।

---

१.१. क्वचित्तु नायं पाठः।

**❀ कृत्स्थस्य णत्वे निर्विण्णस्योपसंस्थानं कर्त्तव्यम्। ❀ निर्विण्णोऽस्मि खलसङ्गेन। निर्विण्णोऽहमत्र वासेन।।**

## ३९४३. णोर्विभाषा।।३०।। (२८३६)

**ण्यन्ताद्यो विहितः कृत्प्रत्ययः तत्स्थस्य नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य विभाषा णकारादेशो भवति। प्रयापणम्, प्रयापनम्। परियापणम्, परियापनम्। प्रयाप्यमाणम्, प्रयाप्यमानम्, प्रयापणीयम्। प्रयापनीयम्। अप्रयापणिः, अप्रयापनिः। प्रयापिणौ, प्रयापिनौ।**

**विहितविशेषणं किम्? प्रयाप्यमाणमित्यत्र यका व्यवधानेऽपि यथा स्यादिति।।**

### न्यासः

**निर्विण्ण इति**। लाभसत्ताविचारणार्थानां विदीनामन्यतमस्य रूपम्, न 'विद ज्ञाने' इत्यस्य; सेट्त्वात् तस्य। अत्राच उत्तरो न भवति, तस्मान्निर्विण्णस्य सिद्धय उपसंख्यानम = प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्— पूर्वसूत्राद् बहुलग्रहणमनुवर्तते, तेनानचोऽपि परस्य भविष्यतीति।।२९।।

**णोर्विभाषा**।। पूर्वेण नित्ये प्राप्ते विकल्पार्थमिदमारभ्यते। यद्येवम्, विभाषाग्रहणमनर्थकं स्यात्, आरम्भसामर्थ्यादेव विकल्पो विज्ञायते? नैतत्, विपर्ययोऽपि सम्भाव्येत। अयं तु नित्यो विधिः, पूर्वसूत्रं बहुलग्रहणानुवृत्तेर्विभाषेति। **ण्यन्ताद् यो विहित इति**। एतेन 'णेः' इति विहितविशेषणत्वं दर्शयति। तस्य च प्रयोजनं **वृत्तौ** वक्ष्यति। **प्रयाप्यमाणमिति**। 'हेतुमति च' णिच्, 'अर्त्तिह्री' इत्यादिना पुक्।।३०।।

### पदमञ्जरी

**प्रमग्नः, प्रभुग्न इति**। 'ओदितश्च' इति निष्ठानत्वम्। **निर्विण्णस्येति**। अचः परः कृत्स्थो नकारो न भवतीति वचनम्। तत्र परस्य नस्य णत्वम्, पूर्वस्य ष्टुत्वम्।।२९।।

**णोर्विभाषा**।। **ण्यन्ताद्यो विहित इति**। एतेन णेरित्यस्य विहितविशेषणत्वं दर्शयति, प्रयोजनं **वृत्तावेव** वक्ष्यते। अपरः प्रकारः—'अड्व्यवाये' इति वर्तते, तेन ण्यन्तस्य कृतश्चाड्व्यवायेऽपि णत्वस्याभ्यनुज्ञानात् ण्यन्तात्परः कृदित्येवमाश्रीयमाणेऽपि प्रयाप्यमाणमित्यादौ यकारव्यवायेऽपि णत्वसिद्धिरिति।।३०।।

### भावबोधिनी

❀ कृत्प्रत्ययस्थ न के णत्व के प्रसङ्ग में 'निर्विण्ण' शब्द का उपसंख्यान करना चाहिये। ❀

उदा॰ निर्विण्णोऽस्मि खलसंगेन। निर्विण्णोहमत्र वासेन। [ निर् विद् + क्त, 'रदाभ्यां' सूत्र से द और त के स्थान पर नकार—. निर् विन्न। यहाँ 'अच् से परे कृत्प्रत्ययस्थ नकार नहीं है अतः सूत्र से अप्राप्त णत्व करने के लिये यह वचन है। 'विद' धातु का प्रयोग अनेक अर्थों में है, इनमें लाभ, सत्ता, विचारणा अर्थों में विद्यमान ही 'विद्' का ग्रहण है, 'विद् ज्ञाने' इसका ग्रहण नहीं है क्योंकि उसमें इट् होने से ऐसा रूप सम्भव नहीं है। ]।।२९।।

ण्यन्त धातु से विहित जो कृत् प्रत्यय, उसमें स्थित नकार जो कि उपसर्ग में स्थित निमित्त से उत्तरवर्ती है उसका विकल्प से णकार आदेश होता है। उदा॰ प्रयापणम्, प्रयापनम्। परियापणम्, परियापनम् [ प्र + याप् इ (णि) + ल्युट् = अन, णिंका लोप करने के बाद 'कृत्यचः' सूत्र से नित्य प्राप्ति है। उसमें यह विकल्प से णत्व करता है। ] प्रयाप्यमाणम्, प्रयाप्यमानम्। [ प्र या + णिच्, पुक् कर्म में लट् का शानच् = आन, यक् मुक् आगम—प्र यापि य मान, णिलोप, विकल्प से णत्व। ] प्रयापणीयम् प्रयापनीयम्। [ प्र या णिच्, पुक्, अनीयर्, णिलोप, णत्व ]

अप्रयापणिः, अप्रयापनिः। [ प्र या णिच्, पुक्, 'आक्रोश अर्थ में 'अनि' प्रत्यय, णिलोप, विकल्प से णत्व। ] प्रयापिणौ प्रयापिनौ। [ प्र या णिच्, पुक्— प्रयापि णिनि = इन्, णिच् का लोप प्रयाप् इन्, णत्व, द्विवचन का रूप। ]

## ३९४४. हलश्चेजुपधात् ।।३१।। (२८३७)

**'कृत्यचः' इति वर्त्तते। हलादिर्यो धातुरिजुपधस्तास्मात्परो यः कृत्यप्रत्ययः तत्स्थस्य नकारस्याच उत्तरस्योपसर्गस्थान्निमित्तादुत्तरस्य विभाषा णकारादेशो भवति। प्रकोपणम्, प्रकोपनम्। परिकोपणम्, परिकोपनम्।**

**हल इति किम्? प्रेहणम्, प्रोहणम्। इजुपधादिति किम्? प्रवपणम्, परिवपणम्। 'कृत्यचः' (८।४।२९) इति नित्ये प्राप्ते विकल्पः।**

**अच इत्येव–परिभुग्नः।**

**इजुपधस्य सर्वस्य हलन्तत्वादिह हल्ग्रहणमादिविशेषणम्।।**

**न्यासः**

**हलश्चेजुपधात्**।। चकारो विभाषेत्यनुकर्षणार्थः, तेनोत्तरत्र भवति। **प्रकोपणमिति**। 'कुप क्रोधे'।

**प्रेहणम्, प्रोहणमिति**। 'ईह चेष्टायाम्', 'ऊह वितर्के'। अत्र कृत्यचः' इति नित्यमेव भवति। कथं पुनर्ज्ञायते-हल्ग्रहणमिहादेर्विशेषणम्, नत्वन्तस्य? इत्यत आह—**इजुपधस्येत्यादि**। सर्व एवेजुपधा धातवो हलन्ता एवेतीजुपधादेव हलन्तत्वे लब्धे हल्ग्रहणं क्रियमाणमादेर्विशेषणं विज्ञायते।।३१।।

**पदमञ्जरी**

**हलश्चेजुपधात्। प्रकोपणमिति**। 'कुप क्रोधने'। **प्रेहणम्, प्रोहणमिति**। 'ईह चेष्टायाम्', 'ऊह वितर्के'। अत्र 'कृत्यचः' इति णत्वं नित्यमेव भवति।

कथं पुनरसत्यादिग्रहणे हलादिरिति लभ्यते? अत आह—**इजुपधस्येति**। इजुपधस्य हलन्तत्वाव्यभिचारात् सामर्थ्यादादिविशेषणं हल्ग्रहणमित्यर्थः।।३१।।

**भावबोधिनी**

णिजन्त से विहित जो कृत् प्रत्यय—इस कथन का क्या फल है? 'प्रयाप्यमाणम्' इसमें यक् का व्यवधान होने पर भी जिस प्रकार से णत्व हो सके। [ अन्यथा बीच में यक् का व्यवधान होने से णत्व नहीं हो पाता। चूँकि यहाँ 'प्रयापि' इस णिजन्त से ही कर्म में शानच् प्रत्यय विहित है अतः णत्वविकल्प होता है। ]।।३०।।

'कृत्यचः' इसकी अनुवृत्ति होती है। इच् उपधावाला हलादि जो धातु उससे परे जो कृत् प्रत्यय उसमें स्थित नकार जो कि अच् से परे है और उपसर्ग में स्थित निमित्त से परे है उस नकार का विकल्प से णकार होता है। [ जिस धातु के आदि में हल् वर्ण हो, उपधा में इच् वर्ण हो, उससे किये गये कृत् प्रत्यय के नकार का विकल्प से णत्व होता है यदि वह नकार अच् से परे है और उपसर्ग में स्थित निमित्त से परे है। ] उदा० प्रकोपणम्, प्रकोपनम्। [ प्र कुप् + ल्युट् = अन, हलादि और इच् उपधावाली कुप् धातु से 'अन' प्रत्यय में अच् से परे नकार है। आदि में 'प्र' उपसर्ग है, उससे परे 'न' है, विकल्प से णत्व होने से दो रूप बनते है। ] परिकोपणम्, परिकोपनम्। [ परि कुप् + अन ]

हलादि धातु—इसका क्या फल है? प्रेहणम्, प्रोहणम्। [ प्र ईह + ल्युट्, प्र ऊह् + ल्युट् = अन, इनमें अजादि धातु है। अतः 'कृत्यचः' सूत्र से नित्य णत्व होता है। ]

इच् उपधा में हो जिसके उससे—इसका क्या फल है? प्रवपणम्, परिवपणम्, [ प्र वप् + ल्युट् = अन, परिवप् + ल्युट् = अन, इसकी उपधा में अकार है इच् नहीं। अतः नित्य ही णत्व होता है। ]

'कृत्यचः' (८।४।२९) इस सूत्र से [ पूर्व के सभी उदाहरणों में ] णत्व की नित्य प्राप्ति रहते यह विकल्प किया गया है।

अच् से परे ही न का णत्व होता है—परिभुग्नः। [ परि भुज् + त, कुत्व, यह हलादि और इजुपध है, उपसर्ग में निमित्त रेफ है किन्तु 'न' अच् से परे नहीं है। अतः न तो विकल्प से और न ही नित्य णत्व होता है। ]

## ३९४५. इजादेः सनुमः।।३२।। (२८३८)

**'हलः' इति वर्तते, तेनेह सामर्थ्यात्तदन्तविधिः। इजादेः सनुमो हलन्ताद्धातोर्विहितो यः कृत्, तत्स्थस्य नकारस्योपर्गस्थान्निमित्तादुत्तरस्य णकारो भवति। प्रेङ्खणम्। परेङ्खणम्। प्रेङ्गणम्, परेङ्गणम्। प्रोम्भणम्, परोम्भणम्।**

**न्यासः**

**इजादेः सनुमः।। हल इत्यनुवर्त्तत इति**। तदनुवृत्तेः प्रयोजनं वक्ष्यति। ननु च पूर्वसूत्रे हल्ग्रहणमादेर्विशेषणम्, अन्तस्य विशेषणेन चेहार्थः? इत्याह—**तेनेत्यादि**। न हीजादिर्धातुः कश्चिद् हलादिर्विद्यते; सामर्थ्यात्। तेन हल्ग्रहणानुवृत्तेन तदन्तविधिर्भवति। **सनुम इति**। सानुस्वारादित्यर्थः। कुत एतत्? नुम्ग्रहणस्यानुस्वारोपलक्षणार्थत्वात्? कस्मात् पुनरेवं व्याख्यायते? नियमार्थत्वादस्य योगस्य। एवञ्चास्य नियमार्थता भवति यदि नुम्ग्रहणमनुस्वारोपलक्षणार्थं भवति, नान्यथा। असति विधेये नियमार्थता विज्ञायते। यदि नुम्ग्रहणं नुम एव प्रतिपादकं स्यात्, नानुस्वारोपलक्षणार्थं स्यात्। एवञ्च सति यत्र 'कृत्यचः' इत्यनेन न सिध्यति, तत्र स्यादेवास्य विधेयत्वम्। क्वैतेन न सिध्यतीति? 'इवि व्याप्तौ[१]', प्रेन्वनमिति। अत्र यद्यपि च 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इत्यनुवर्त्तते, तथापि तेनात्र न प्राप्नोति; नुम्ग्रहणस्यानुस्वारोपलक्षणार्थत्वात्, इह चानुस्वाराभावात्। तस्मान्नियमार्थतामस्येच्छता नुम्ग्रहणस्यानुस्वारोपलक्षणार्थत्वं वेदितव्यम्। एवं प्रेङ्खणमित्यादौ 'कृत्यचः' इति सिद्धे नियमार्थमेतत् संम्पद्यते। अनुस्वारोपलक्षणार्थता च नुमः 'ईजादेः सनुमः' इति महतः सूत्रस्य प्रणयनादसीयते। यदि हि नुम्ग्रहणं नुम एव प्रतिपादकं स्यान्नानुस्वारोपलक्षणार्थम्, तदानीम् 'इवेः' इत्येवं ब्रूयात्, न हीवेरन्यो धातुरिजादिर्हलन्तः सनुम् सम्भवति। इखिप्रभृतयः सम्भवन्तीति चेत्? न; अनुस्वारे कृते नुमोऽभावात्। **प्रेङ्खणमिति**। 'उख वख' इत्यादौ कवर्गान्त इखिः पठ्यते, तस्येदित्त्वान्नुम्, 'नश्चापदान्तस्य झलि' इत्यनुस्वारः, 'अनुस्वारस्य ययि' इति परसवर्णत्वम्, तस्यासिद्धत्वादनुस्वार एवायम्। **प्रोम्भणमिति**। 'उभ उन्भ पूरणे', पूर्ववदनुस्वारः।

**पदमञ्जरी**

**इजादेः सनुमः।। हल इति वर्तत इति**। प्रयोजनमुत्तरत्र वक्ष्यति। ननु तत्रादिविशेषणं हल्ग्रहणम्, अन्तविशेषणेन चेहार्थः। अत आह—**तेनेति**। इजादेर्हलादित्वासम्भवात्सामर्थ्यम्। **प्रेङ्खणमिति**। 'ईखि गत्यर्थः', इदित्त्वान्नुम्।

ननु चात्रानुस्वारे कृते नायं सनुम्को भवति, काममत्र स्थानिवद्भावात् सिद्ध्यति—प्रोम्भणमिति, अत्र त्वादित एव नुम् भवतीत्यत्र न सिद्ध्यति, औत्पत्तिको हि तत्र नकारः; प्रेन्वनमित्यत्र च प्राप्नोति, यत्र नुमेवाविकृतः श्रूयते;

**भावबोधिनी**

चूँकि इच् को उपधा मानने के लिये सभी हलन्त धातुयें ही संभव हैं अतः यहाँ 'हल्' [ इसमें तदन्त विधि न मानकर ] आदि विशेषण बनता है—हलादि जो इजुपध धातु।।३१।।

'हलः' इसकी अनुवृत्ति होती है। उसके साथ यहाँ सामर्थ्यवश तदन्तविधि मानी जाती है। इजादि (इच् है आदि में जिसके ऐसी) सनुम् = नुमागमसहित हलन्त धातु से किया गया जो कृत् प्रत्यय उसमें स्थित नकार जो कि उपसर्गस्थ निमित्त से उत्तरवर्ती है उसका णकार आदेश होता है। उदा० प्रेङ्खणम्। परेङ्खणम्। प्रेङ्गणम्। परेङ्गणम्। प्रोम्भणम् परोम्भणम्। [ 'इखि गतौ' इकार की इत्संज्ञा लोप के बाद 'इदितो नुम् धातोः' सूत्र से नुम् आगम, न् का अनुस्वार परसवर्ण—प्र इङ्ख + ल्युट् = अन, णत्व। 'इगिगतौ' पूर्ववत् इलोप, नुम् आदि, प्र इङ्ग + ल्युट् = अन, णत्व। 'उम्भ पूर्णे' प्र + उम्भ + ल्युट्, न् का अनुस्वार परसवर्ण न का णत्व। ]

१. 'इवि धिवि प्रीणनार्थे'–इति पाठान्तरम्।

**'सिद्धे सत्यारम्भो नियमार्थः'–इजादेरेव सनुमः, नान्यस्मादिति। प्रमङ्गनम्, परिमङ्गनम्।**

**'हल' इत्यधिकाराद् ण्यन्ते नित्यं विध्यर्थमेतन्न भवति।।**

**न्यासः**

ननु च 'कृत्यचः' इत्येवं सिद्धमत्र, किमर्थमिदमारभ्यते? इत्याह-**सिद्ध इत्यादि**। **प्रमङ्गनमिति**। तत्रैव गत्यर्थवर्गे मगिः पठ्यते। कचित् **प्रमङ्कनमिति** पाठः। स 'मकि मण्डने' इत्यस्य द्रष्टव्यः। ननु चासति विधेये नियमार्थता भवति, इह च णेर्विभाषायां प्राप्तायां नित्यं णत्वं विधेयमस्ति—'विधिनियमसम्भवे हि विधिरेव ज्यायान्' इति, ततो ण्यन्तान्नित्यं विध्यर्थमेतत् कस्मान्न भवति? इत्याह-**हल इत्यधिकारादित्यादि**। पूर्वसूत्राद्धल इत्यनुवर्त्तते, तेन च तदन्तविधिरित्युक्तम्, न हि हलन्तो भवति ण्यन्तो धातुः, किं तर्हि? अजन्तः। न च हलन्तादुच्यमानमजन्ताद् भवितुमर्हति, तस्मान्नेदं ण्यन्ते नित्यं विध्यर्थं भवति। ननु च णिलोपे कृते ण्यन्तोऽपि हलन्तो भवति, ततश्च 'हलः' इत्यधिकारेऽपि स्यादेव विध्यर्थता? नैतदस्ति; विहितविशेषणाश्रयणात्- एतच्चोद्यनिरासायाह-**इजादेः सनुमो हलन्ताद् धातोर्यो विहितः कृदिति**। विहितविशेषणमाश्रितम्।।३२।।

**पदमञ्जरी**

तस्मादिहापि नुम्ग्रहणमनुस्वारोपलक्षणार्थं व्याख्येयम्। नक्षत्रदर्शनन्यायेनेष्टविषये सर्वत्र भविष्यति, अनिष्टे च न भविष्यति, एवं च कृत्वा नियमार्थतोपपद्यते; अन्यथा प्रेन्वनमित्यत्र विध्यर्थता सम्भाव्येत। न च 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इत्येतेन सिद्धिः' तत्रापि नुम्ग्रहणस्यानुस्वारोपलक्षणत्वात्। ननु 'कृत्यचः' इत्यनेनैव सिद्धे नार्थोऽनेन? अत आह—**सिद्धे सतीति**। **प्रमङ्गनमिति**। मगिरपि गत्यर्थ एव। **प्रमङ्कनमिति** पाठे मण्डनार्थः।

ननु च कैमर्थ्यान्नियमो भवति, विधेयं नास्तीति कृत्वा, इह चास्ति विधेयम्, किम्? ण्यन्ताद्विभाषा प्राप्ता, तत्र नित्यं णत्वं विधेयम्? अत आह—**हल इत्यधिकारादिति**। ननु च णिलोपे कृते ण्यन्तोऽपि हलन्तो भवति, ततः किम्? सत्यपि हलधिकारे विध्यर्थता सम्भवति? नैतदस्ति; विहितविशेषणस्याश्रयणात्। एतदेव ह्यभिप्रेत्य **वृत्तिकारेणोक्तम्—'हलन्ताद्धातोर्यो विहितः'** इति।।३२।।

**भावबोधिनी**

[ यहाँ 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इसमें' नुम् ग्रहण होने से उसीसे णत्व सम्भव है, ऐसी शंका होती है। समाधान यह है कि वहाँ 'नुम्' यह अनुस्वार का उपलक्षण = बोधक है। अतः नुम् रूप में नुम् के व्यवाय में णत्व के लिये सूत्र आवश्यक है। इस स्थिति में भी 'कृत्यचः' इसी सूत्र से णत्व के ] सिद्ध रहते इस सूत्र का बनाया जाना नियमार्थ है—इजादि ही सनुम् धातु से परे न का णत्व होता है, अन्य से परे नहीं होता है—प्रमङ्गनम्, परिमङ्गनम्। [ 'मगि गतौ' इकार इत्, नुम्, अनुस्वार, परसवर्ण-प्रमङ्ग + ल्युट् = अन, यह इजादि नहीं है अतः णत्व नहीं होता है। ]

'हलः' इसकी अनुवृत्ति होने के कारण ण्यन्त में नित्य णत्वविधि के लिये यह सूत्र नहीं हो सकता है।

**विमर्श**—इस सूत्र में पूर्वसूत्र से 'हलः' की अनुवृत्ति होती है। अतः इजादि और हलादि ये दोनों बातें एक साथ सम्भव नहीं है क्योंकि इच् और हल् में कोई एक ही आदि में रह सकता है। चूँकि 'इजादि' का शब्दतः ग्रहण है और 'हलः' की अनुवृत्ति है। अतः अनुवृत्तिसामर्थ्य के कारण 'हलः' इससे तदन्तविधि ही इस सूत्र में मानी जाती है।

दूसरी बात यह है कि 'कृत्यचः' इस सामान्य सूत्र से ही णत्व संभव है तो भी इसका बनाया जाना नियमार्थ है—इजादि ही सनुम् धातु से परे न का णत्व होता है, अन्य से परे नहीं।

तीसरी बात यह है कि 'हलः' इसकी अनुवृत्ति है और सामर्थ्यवश तदन्तविधि है—हलन्त। चूँकि णि प्रत्यय होने पर धातु हलन्त न होकर इकारान्त बन जाती है। अतः ण्यन्त से परे भी न का ण नहीं होता है। इसलिये ण्यन्त में नित्य णत्व विधि भी नहीं मानी जा सकती। इसलिये वृत्ति में स्पष्ट लिखा है, इजादि सनुम् हलन्त धातु से विहित कृत् प्रत्ययस्थ न का ण होता है। ण्यन्त में यह संभव नहीं है।।३२।।

## ३९४६. वा निंसनिक्षनिन्दाम्।।३३।। (२८३९)

**'उपसर्गात्' इति वर्तते। निंस, निक्ष, निन्द–इत्येतेषां नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य वा णकारादेशो भवति। प्रणिंसनम्, प्रनिंसनम्, प्रणिक्षणम्, प्रनिक्षणम्। प्रणिन्दनम्, प्रनिन्दनम्। णोपदेशत्वादेतेषां नित्ये प्राप्ते विकल्पः।।**

## ३९४७. न भाभूपूकमिगमिप्यायीवेपाम्।।३४।। (२८४०)

**भा, भू, पू, कमि, गमि, प्यायी, वेप–इत्येतेषामुपसर्गस्थात् निमित्तादुत्तरस्य कृत्स्थस्य नकारस्य णकारादेशो न भवति। भा–प्रभानम्, परिभानम्। भू–प्रभवनम्, परिभवनम्।**

**पू–प्रपवनम्, परिपवनम्। पूग्रहणेन पूञ्ग्रहणं द्रष्टव्यम्[1]। पूङो हि भवत्येव णत्वम्–प्रपवणं सोमस्येति।**

**न्यासः**

**वा निंसनिक्षनिन्दाम्**।। 'णिसि चुम्बने' 'णिक्षि रोषे', 'णिदि कुत्सायाम्'। णोपदेशत्वादेषाम् 'उपसर्ग' इत्यादिना नित्ये प्राप्ते विकल्पार्थमिदमारभ्यते। यद्येवम्, न कर्तव्यं वाग्रहणम्, पृथग्योगकरणादेव विकल्पो भविष्यति? नैतदस्ति; विपर्ययोऽपि विज्ञायेत—अयं विधिर्नित्यः, स विभाषेति। 'उपसर्गादसमासे' इत्यस्यानन्तरमस्मिन् कर्त्तव्य इहास्य करणं पूर्वविधेर्नित्यत्वज्ञापनार्थम्—द्वयोर्विभाषयोर्मध्ये ये वै विधयस्ते नित्या भवन्तीति।।३३।।

**न भाभूपूकमिगमिप्यायीवेपाम्**।। **पूग्रहणेन पूञ्ग्रहणं द्रष्टव्यमिति**। 'पूङ् पवने' इति स्वादौ यः पठ्यते तस्य ग्रहणं नेष्यते। तेन क्रैयादिकस्य चेष्यते। कथम् 'पू' इत्युच्यमाने पूञ एव ग्रहणं लभ्यते? उच्यते; 'कृत्यचः'

**पदमञ्जरी**

**वा निंसनिक्षनिन्दाम्**।। 'णिसि चुम्बने' 'णिक्ष रोपणे', णिदि कुत्सायाम्' णोपदेशत्वादेतेषां नित्ये णत्वे प्राप्ते विकल्पः।।३३।।

**न भाभूपूकमिगमिप्यायीवेपाम्**।। **पूग्रहणेन पूञो ग्रहणमेष्टव्यमिति**। इष्टिरेवेयम्। **ण्यन्तानां चेति**।

**भावबोधिनी**

'उपसर्गात्' (उपसर्गस्थ निमित्त से परे) इसकी अनुवृत्ति होती है। निंस, निक्ष और निन्द—इन धातुओं का नकार जो उपसर्गस्थ निमित्त से उत्तरवर्ती है उसका विकल्प से णत्व होता है। [ ध्यान रखना चाहिये यह सूत्र इन धातुओं के ही न का ण करता है प्रत्यय के न का नहीं। ] उदा० प्रणिंसनम्, प्रनिंसनम्। प्रणिक्षणम् प्रनिक्षणम्। प्रणिन्दनम्, प्रनिन्दनम् ये सभी णोपदेश धातुयें है अत: ('उपसर्गादसमासेऽपि णोपदेशस्य' (८।४।१४) सूत्र से नित्य णत्व की प्राप्ति रहते यह विकल्प किया गया है। [ 'णिसि चुम्बने' 'णिक्षि रोषे' 'णिदि कुत्सायाम्' ण का न, इ की इत्संज्ञालोप नुम्, अनुस्वार आदि—प्रनिंस् + ल्युट् = अन, प्र निक्ष् + अन, प्र निन्द + अन, धातुस्थ न का विकल्प से णत्व। प्रनिक्षणम् में प्रत्यय के न का णत्व षकार के कारण होता है। ]।।३३।।

भा, भू, पू, कमि, गमि, प्यायी और वेप—इन धातुओं का कृत्प्रत्ययस्थ नकार जो उपसर्गस्थ निमित्त से उत्तरवर्ती है, उसका णकार आदेश नहीं होता है। क्रमश: उदा० भा—प्रभानम्, परिभानम्। भू—प्रभवनम्, परिभवनम् [ प्र भा + ल्युट् = अन/प्रभू + ल्युट् = अन, ऊ का गुण, अव् आदेश—प्रभव् अन। सभी में 'कृत्यचः' से णत्व की प्राप्ति है, प्रस्तुत सूत्र से निषेध होता है। ]

पू—प्रपवनम्, परिपवनम्। यहाँ 'पू' के ग्रहण से 'पूञ् पवने' इसका ग्रहण समझना चाहिये। क्योंकि 'पूङ् पवने' इस स्वादिगणीय) से तो णत्व होता ही है—प्रवपणं सोमस्य [ पदमञ्जरीकार 'द्रष्टव्यम् के स्थान पर 'इष्टव्यम्' ऐसा पाठ मानकर भाष्यकार की इष्टि मानते हैं। परन्तु भाष्य में 'भादिषु पूञ्ग्रहणम्' इतना ही पाठ है। ]

---

१. पदमञ्जरीकारः भाष्यस्येष्टिं मत्वा 'द्रष्टव्यम्' इत्यस्य स्थाने 'इष्टव्यम्' इति पाठं स्वीचकार। किन्तु भाष्ये तु 'भादिषु पूञ्ग्रहणम्' इत्येव पाठः।

**कमि–प्रकमनम्, परिकमनम्। गमि–प्रगमनम्, परिगमनम्। प्यायी–प्रप्यायनम्, परिप्यायनम्। वेप–प्रवेपनम्, परिवेपनम्।**

**❁ ण्यन्तानां भादीनामुपसंख्यानं कर्तव्यम्। ❁ प्रभापनम्, परिभापनम्।।**

## ३९४८. षात् पदान्तात्।।३५।। (३३१०)

**षकारांत्पदान्तादुत्तरस्य नकारस्य णकारादेशो न भवति। निष्पानम्। दुष्पानम्। सर्पिष्पानम्। यजुष्पानम्।**

**षादिति किम्? निर्णयः। पदान्तादिति किम्? कुष्णाति। पुष्णाति।**

### न्यासः

इति 'कृति' इति योगविभागात्। योगविभागादिष्टसिद्धिरिति पूङ एव योगविभागेन णत्वं भवतीति। एवं योगविभागेन पूङः परस्य कृत्स्थस्य नकारस्य णत्वेऽसाधिते पारिशेष्यात् पूञ एव ग्रहणं विज्ञायते।

**ण्यन्तानां चेत्यादि**। ण्यन्तानां ग्रहणं शब्दान्तरत्वान्न प्राप्नोति। तस्मादुपसंख्यानं कर्त्तव्यमेवेति। तस्य प्रतिपादनमित्यर्थः। तत्रेदं प्रतिपादनम्—नेति योगविभागः कर्तव्यः, तेन ण्यन्तानामपि न भविष्यतीति। न चैवं सति भादीनां ग्रहणमनर्थकं स्यात्; पूर्वयोगस्यासर्वविषयत्वज्ञापनात्। एवं ह्यतिप्रसङ्गः परिहृतो भवति।।३४।।

**षात् पदान्तात्।। निष्पानम्, दुष्पानमिति**। 'इदुदुपधस्य' इति विसर्जनीयस्य षत्वम्। इह 'कृत्यचः' इत्यनेन प्राप्तिः। **सर्पिष्पानम्, यजुष्पानमिति**। षष्ठीसमासः। 'इसुसोः सामर्थ्ये' इत्यनुवर्तमाने 'नित्यं समासे' इत्यादिना विसजनीयस्य षत्वम्। अत्र 'वा भावकरणयोः' इति प्राप्तिः।

### पदमञ्जरी

ण्यन्तस्याधात्वन्तरत्वान्न प्राप्नोतीति वचनम्, किञ्च ण्यन्तेष्वस्य प्रवृत्तौ पक्षेऽनुवाददोषप्रसङ्गः; 'णेर्विभाषा' इत्येव पक्षे निवृत्तेः सिद्धत्वात्।।३४।।

**षात् पदान्तात्। निष्पानम्, दुष्पानमिति**। 'इदुदुपधस्य च' इति विसर्जनीयस्य षत्वम्, अत्र 'कृत्यचः' इति प्रसङ्गः। **सर्पिष्पानमिति**। कर्मणि षष्ठ्याः समासः। **यजुष्पानमिति**। 'कर्तृकरणे कृता बहुलम्' इति समासः। उभयत्रापि 'नित्यं समासेऽनुत्तरपदस्थस्य' इति षत्वम्, अत्र 'पानं देशे' 'वा भावकरणयोः' इति प्राप्तिः।

### भावबोधिनी

कम—प्रकमनम्। परिकमनम्। [ 'कमु कान्तौ' ] गम—प्रगमनम्, परिगमनम्। [ 'ओप्यायी' ] प्रप्यायनम्। परिप्यायनम्। वेप—प्रवेपनम्। परिवेपनम्। [ टु वेपृ कम्पने ]

❁ ण्यन्त धातुओं का भादि के अन्तर्गत उपसंख्यान करना चाहिये। ❁ [ भाव यह है कि ण्यन्त होने पर वह धात्वन्तर (दूसरी धातु) मान लिया जाता है तब प्रस्तुत सूत्र उनसे निषेध नहीं कर सकेगा। इसलिये अलग से वचन बना कर ण्यन्त भी भादि सेपरे न का णत्व नहीं करना चाहिये। ] उदा० प्रभापनम्। परिभापनम्। [ भा + णिच् = इ, 'अर्ति-ह्री-ब्लीरी०' सूत्र से पुक् = प् आगम् भाप् इ, प्रभापि + ल्युट् = अन, णिलोप। अब प्राप्त णत्व का निषेध होता है। ]।।३४।।

पदान्त षकार से उत्तरवर्ती नकार का णकार आदेश नहीं होता है। उदा० निष्पानम्। दुष्पानम्। सर्पिष्पानम्। यजुष्पानम्। [ निर् आदि उपसर्ग हैं, पा धातु से ल्युट् = अन, 'कृत्यचः' से णत्वप्राप्ति, प्रस्तुत सूत्र से निषेध। निस् इसके स् का विसर्ग, 'इदुदुपधस्य' से षत्व करने पर ष से परे हो जाता है। 'यजुष्पानम् सर्पिष्पानम्' में 'नित्यं समासेऽनुत्तरपदस्थस्य' से स् का ष् होता है। इनमें कर्म में षष्ठी, षष्ठी-समास है। ]

षकार से परे—इसका क्या फल है? निर्णयः। [ निर् + नय यहाँ विसर्ग, सत्त्व, षत्व नहीं होने से णत्व का निषेध न होकर णत्व हो जाता है। ]

**पदे अन्तः पदान्तः–इति सप्तमीसमासोऽयम्, तेनेह न भवति–सुसर्पिष्केण, सुयजुष्केण। 'शेषाद्विभाषा' (५।४।१५४) इति कप्।।**

**३९४९. नशेः षान्तस्य।।३६।। (२५१८)**

**'न' इति वर्तते। नशेः षकारान्तस्य णकारादेशो न भवति। प्रनष्टः, परिनष्टः। षान्तस्येति किम्? प्रणश्यति, परिणश्यति।**

**न्यासः**

'पदान्तात्' इति षष्ठीसमासोऽयमिति मन्यमानो ये देशयेत्-अथेह णत्वप्रतिषेधः कस्मान्न भवति— सुसर्पिष्केणेति, अत्र पदस्यान्तः षकार इति? तं प्रत्याह—**पदेऽन्त इत्यादि**। षष्ठीसमासे हि सति णत्वस्य प्रतिषेधः स्यात्, न चायं षष्ठीसमासः, किं तर्हि? 'सप्तमी' इति योगविभागात् समासः-पदे परभूतेऽन्तः पदान्त इति। न चात्र पदे परभूते षकारोऽन्तः; कशब्दस्यापदसंज्ञकत्वात्। तेनेह न भवति णत्वप्रतिषेधः। शोभनं सर्पिरस्येति बहुव्रीहिः, 'शेषाद्विभाषा' इति कप्।।३५।।

**नशेः षान्तस्य**।। 'उपसर्गादसमासे' इत्यादिना प्राप्तस्य णत्वस्य प्रतिषेधः क्रियते। **प्रनष्ट इति**। 'णश अदर्शने' तस्मान्निष्ठा, 'मस्जिनशोर्झलि' इति नुम्, 'अनिदितां हल उपधायाः क्ङिति'[1] इति नलोपः, व्रश्चादिसूत्रेण षत्वम्। **प्रणश्यतीति**। दिवादित्वाच्छ्यन्।

**पदमञ्जरी**

**पदे अन्त इति**। 'सप्तमी' इति योगविभागात्समासः। **सुसर्पिष्केणेति**। शोभनं सर्पिरस्येति बहुव्रीहिः, कप् 'इणः षः' इति षत्वम्। नायं पदे परतः पूर्वमवस्थितस्यान्तो भवति। पदस्य त्वन्तो भवति; 'स्वादिषु' इति पदसंज्ञाया विधानात्, ततश्च षष्ठीसमासेऽत्रापि प्राप्नोति। कथं पुनर्ज्ञायते—सप्तमीसमासोऽयमिति? अन्तग्रहणात्; अन्यथा वर्णग्रहणे सर्वत्र तदन्तविधिरित्येव षकारान्तात् पदादिति लभ्यते।।३५।।

**नशेः षान्तस्य**।। **प्रनष्ट इति**। 'मस्जिनशोर्झलि' इत्यागतस्य नुमः 'अनिदिताम्' इति नलोपः। व्रश्चादिषत्वम्। ❀ नशेरशः। ❀ अशकारान्तस्य नशेरिति वक्तव्यम्, न तु षान्तस्येति, इहापि यथा स्यात्—प्रनङ्क्ष्यतीति, 'षढोः

**भावबोधिनी**

पदान्त से परे—इसका क्या फल है? कुष्णाति, पुष्णाति। [ कुष् + श्ना = ना + ति में पदान्त ष नहीं है। निषेध न होकर ष्टुत्व हो जाता है। ]

[ 'पदान्तः' में 'पदस्य अन्तः' यह षष्ठी समास है अथवा 'पदे अन्तः' ऐसा सप्तमी? ] 'पदे अन्तः = पदान्तः—यह सप्तमी समास है अर्थात् पदे परे सति पूर्वस्य अन्तः षकारः—पदान्तः षकारः—ऐसा समझना चाहिये, इसीलिये इसमें निषेध नहीं होता है—सुसर्पिष्केण। सुयजुष्केण। 'शेषाद् विभाषा' सूत्र से समासान्त कप् प्रत्यय होता है। [ शोभनं सर्पिः यस्य तेन तादृशेन—इस बहुव्रीहि समास में विभक्तिलोप, समासान्त कप् प्रत्यय 'इणः षः' से स् का ष्—सुसर्पिष्क। यहाँ 'क' यह पद नहीं है अपितु प्रत्यय है। इसलिये 'पदे परतः अन्तः षः' यह न होने से निषेध न होकर णत्व होता है। ]।।३५।।

'न' इसकी अनुवृत्ति होती है। षकारान्त नश् धातु का णकार आदेश नहीं होता है। उदा० प्रनष्टः। परिनष्टः। [ प्रपूर्वक 'णश् अदर्शने' ण का न, प्रनश् + क्त, यहां 'मस्जिनशोर्झलि' सूत्र से नुम् आगम और 'अनिदितां हल उपधायाः क्ङिति' सूत्र से न् का लोप—प्र न श् + त, 'व्रश्चभ्रस्जसृज्' आदि सूत्र से श् का ष्, 'उपसगादसमासेऽपि णोपदेशस्य' सूत्र से णत्व की प्राप्ति प्रस्तुत सूत्र से निषेध होता है। ] षकारान्त नश् धातु का—इसका क्या फल है? प्रणश्यति, परिणश्यति। [ प्र नश् + श्यन् + ति, यहाँ 'व्रश्चादि' सूत्र की प्रवृत्ति न होने से षकारान्त नहीं बनता है। अतः णत्वनिषेध नहीं होता है। णत्व होता है। ]

**अन्तग्रहणं षान्त-भूतपूर्वमात्रस्यापि यथा स्यात्-प्रनङ्क्ष्यति, परिनङ्क्ष्यति।।**

**३९५०. पदान्तस्य ।।३७।। (१९८)**

**पदान्तो यो नकारस्तस्य णकारादेशो न भवति। वृक्षान्, प्लक्षान्, अरीन्, गिरीन्।।**

**३९५१. पदव्यवायेऽपि ।।३८।। (१०५७)**

**पदेन व्यवायः पदव्यवायः पदव्यवधानम्। पदेन व्यवायेऽपि सति निमित्तनिमित्तनोर्नकारस्य णकारादेशो न भवति। माषकुम्भवापेन। चतुरङ्गयोगेन। प्रावनद्धम्। पर्यवनद्धम्। प्रगान्नयामः। परिगान्नयामः।**

**न्यासः**

अथान्तग्रहणं किमर्थम्, यावता 'नशेः षः' इत्युच्यमाने नशौ विशिष्यमाणे 'येन विधिस्तदन्तस्य' इति तदन्तविधौ षान्तस्य णत्वप्रतिषेधो भविष्यति? इत्याह—**अन्तग्रहणमित्यादि। प्रनङ्क्ष्यतीति।** पूर्ववत् षत्वे 'षढोः कः सि' इति कत्वम्। अत्र यद्यन्तग्रहणं न क्रियेत, कत्वे षान्तता नास्तीति प्रतिषेधो न स्यात्। अस्मिंस्तु सति कत्वेऽपि कृते भवति। एतदेव हि तस्य प्रयोजनम्—भूतपूर्वेऽपि षान्ते प्रतिषेधो यथा स्यात्।।३६।।

**पदान्तस्य।।** 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति प्राप्तस्य णत्वस्य प्रतिषेधोऽयमुच्यते। **वृक्षानिति।** 'प्रथमयोः पूर्वसवर्णः' इति दीर्घः, 'तस्माच्छसो नः पुंसि' इति सकारस्य नकारः।।३७।।

**पदव्यवायेऽपि।।** निमित्तनिमित्तिनोः प्रकृतत्वादुभयोरेव व्यवायो विज्ञायते, इत्यत आह—**पदेन व्यवाये सति निमित्तनिमित्तिनोरित्यादि। माषकुम्भवापेनेति।** माषाणां कुम्भः माषकुम्भः, तं वपतीति 'कर्मण्यण्',

**पदमञ्जरी**

कः सि' इति कत्वं भवति। तत्तर्हि तथा वक्तव्यम्? नेत्याह—**अन्तग्रहणमिति।** षकारेण नशेर्विशेषणात् 'षान्तस्य' इति सिद्धे पुनरन्तग्रहणसामर्थ्याद्यः सम्प्रति षान्तो यश्च भूतपूर्वः, तस्य भवति प्रतिषेधः।।३६।।

**पदान्तस्य।।** हे करिन्नित्याद्यप्युदाहरणम्।।३७।।

**पदव्यवायेऽपि।। माषकुम्भवापेनेति।** अत्र केचिदाहुः—यदा माषाणां कुम्भो माषकुम्भः. तस्य वाप इति प्रक्रिया, तदा 'उत्तरपदत्वे चापदादिविधौ' इति प्रत्ययलक्षणप्रतिषेधात् पदत्वाभावान्निषेधावृत्तेर्भवितव्यमेव णत्वेन,

**भावबोधिनी**

अन्त (षान्तस्य)—ग्रहण का क्या फल है? षान्त भूतपूर्वमात्र का निषेध जिस प्रकार से हो सके—प्रनङ्क्ष्यति परिनङ्क्ष्यति। [ प्र नश् + स्य + ति, नुम्, अनुस्वार, 'व्रश्चादि' सूत्र से श् का ष प्रनष् + स्य + ति, 'षढोः कः सि' इससे ष् का क्, कृष् का क्ष् आदेश—प्रनंक्ष्यति। यहाँ षान्तता नहीं है अपितु कान्त है फिर भी पहले कभी षान्त था यह मानकर णत्व का निषेध करने के लिये—अन्त का ग्रहण किया गया है। ]।।३६।।

पदान्त जो नकार उसका णकार आदेश नहीं होता है। उदा० वृक्षान्, प्लक्षान्, अरीन्, गिरीन्। [ इनमें सामान्य सूत्र से णत्व प्राप्त है किन्तु पदान्त नकार होने से णत्व नहीं होता है। ]।।३७।।

पदेन व्यवायः—पदव्यवायः = पद से व्यवधान। निमित्त तथा निमित्ती का पद से व्यवधान रहने पर भी नकार का णकार आदेश नहीं होता है। [ यहाँ निमित्त = र, ष तथा निमित्ती न' का प्रसंग होने से व्यवधान इन्हीं में से किसी का होना चाहिये। ] उदा० माषकुम्भवापेन। चतुरङ्गयोगेन। [ इनमें क्रमशः 'प्रातिपदिकान्तनुम्विभक्तिषु च' (८।४।११) तथा 'कुमति च' (८।४।१३) इन सूत्रों से णत्व प्राप्त है उसका निषेध होता है क्योंकि बीच में एक अन्य पद—'कुम्भ' और 'अङ्ग' का व्यवधान है। ] प्रावनद्धम्। पर्यवनद्धम्। [ इनमें 'अव' का व्यवधान होने से 'उपसर्गादसमासेऽपि' से प्राप्त णत्व का निषेध होता है। ] प्रगान्नयामः।

**❀ पदव्यवायेऽतद्धित इति वक्तव्यम्। ❀ इह मा भूत्–आर्द्रगोमयेण। शुष्कगोमयेण। 'गोश्च पुरीषे' (४।३।१४५) इति मयट्। स्वादौ पूर्वं पदमिति गोशब्दः पूर्वपदम्, तेन व्यवायः।।**

## ३९५२. क्षुभ्नादिषु च ।।३९।। (७९२)

### न्यासः

तदन्तात् तृतीयैकवचनम्। अत्र 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति प्राप्तिः। **चतुरङ्गयोगेनेति**। अत्र 'कुमति च' इति प्राप्तिः। चत्वार्यङ्गान्यस्येति बहुव्रीहिः, तेन योगश्चतुरङ्गयोगः, 'कर्तृकरणे कृता बहुलम्' इति तृतीयासमासः। पूर्वत्र कुम्भशब्देन व्यवायः, उत्तरत्र त्वङ्गशब्देन। **प्रावनद्धमिति**। 'णह बन्धने', निष्ठा, 'नहो धः', 'झषस्तथोर्धोऽधः', 'झलां जश् झशि' इत्येते विधयः कर्त्तव्याः, गतिसमासः। अत्रावशब्देन व्यवायः। णत्वप्राप्तिस्तु 'उपसर्गादसमासेऽपि' इत्यादिना। एवं **प्रगान्नयाम इत्यत्रापि**। व्यवधानं तु गामित्यनेन। इदं तु च्छान्दसमुदाहरणम्। न हि भाषायां व्यवहितानामुपसर्गाणां धातोः प्राक् प्रयोगोऽस्ति, किं तर्हि? 'छन्दसि परेऽपि' इत्यतः 'छन्दसि' इत्यनुवर्त्तमाने 'व्यवहिताश्च' इत्यनेन छन्दसि व्यवहितो भवति। गोशब्दस्यौकारस्य 'औतोऽम्शसोः' इत्यात्त्वम्।

**पदव्यवाये इत्यादि**। योऽयं पदव्यवाये प्रतिषेध उच्यते, सोऽतद्धिते भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-'वा निंसनिक्षनिन्दाम्' इत्यतो मण्डूकप्लुतिन्यायेन वाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा, तेन तद्धिते प्रतिषेधो न भविष्यतीति। **आर्द्रगोमयेणेति**। गोरिदं गोमयम्, 'गोश्च पुरीषे' इति मयट्। आर्द्रं च तद् गोमयं चेति कर्मधारयः। गोशब्देन पदेन व्यवधानम्, पदसंज्ञा चास्य 'स्वादिष्वसर्वनामस्थाने इत्यनेन।।३८।।

**क्षुभ्नादिषु च**।। 'रषाभ्यां नो णः' इत्यादिशास्त्रेण प्राप्तस्य णत्वस्य प्रतिषेधोऽयमुच्यते। 'क्षुभ्ना' इति स्वरूपग्रहणमेतत्, न धातुग्रहणम्; अन्यथा क्षोभणमित्यत्रापि स्यात् प्रतिषेधः। यद्येवम्, क्षुभ्नन्तीत्यत्र

### पदमञ्जरी

तस्मात् कुम्भस्य वापः कुम्भवापः, माषाणां कुम्भवापो माषकुम्भवाप इति प्रक्रियाश्रयेणोदाहरणमिति। अत्र 'कुमति च' इति प्राप्तिः। **प्रावनद्धमिति**। 'उपसर्गादसमासेऽपि' इत्यवशब्दव्यवायेऽपि 'अड्व्यवाये; इति प्राप्तिः। **प्रगान्नयाम इति**। छन्दस्ययं व्यवहितः प्रयोगः। गामिति द्वितीयान्तेन पदेन व्यवायः।

**पदव्यवायेऽतद्धित इति**। योऽयं पदव्यवाये प्रतिषेधः, स तद्धिते यत्पदं तत्र न भवतीति वक्तव्यमित्यर्थः। **आर्द्रगोमयेणेति**। 'गोश्च पुरीषे' इति मयट्, तत्र परतो गोशब्दः 'स्वादिषु' इति पदम्।।३८।।

**क्षुभ्नादिषु च**।। क्षुभ्ना-इति स्वरूपग्रहणम्, न धातुग्रहणम्, तेन क्षोभणमित्यादौ णत्वं भवत्येव। **क्षुभ्नीतः, क्षुभ्नन्तीति**। अत्र त्वील्लोपयोः स्थानिवद्भावादेकदेशविकृतस्यानन्यत्वाद्वा णत्वं न भवति। नृन्नमयतीति नृनमनः।

### भावबोधिनी

परिगान्नयामः। [ ये वैदिक उदाहरण हैं—'प्र गां नयामः' इसमें 'व्यवहिताश्च' सूत्र से व्यवहित प्रयोग में भी 'प्र' 'परि' उपसर्ग हैं। मध्य में 'गाम्' पद का व्यवधान होने से णत्व नहीं होता है। ]

❀ पद के व्यवधान में तद्धितभिन्न पद का व्यवधान रहना चाहिये। ❀ इनमें भी णत्व का निषेध न होने लग जाय—आर्द्रगोमयेण। शुष्कगोमयेण। 'गोश्च' पुरीषे (४.३।१४५) सूत्र से पुरीष अर्थ में मयट् तद्धित प्रत्यय है। [ 'मय' के व्यवधान में भी णत्व होता है निषेध नहीं होता है। ] सु आदि परे रहते पूर्व की पदसंज्ञा [ 'स्वादिष्वसर्वनामस्थाने' इससे ] होती है अतः [ 'मयट् परे ] 'गो' की पद संज्ञा होने से उसके व्यवधान में भी णत्व होता है।।३८।।

[ ८।४।३४ सूत्र से ] 'न' इस की अनुवृत्ति होती है। 'क्षुभ्ना' आदि जैसे शब्दों में अर्थात् क्षुभ्नादिगण में पठित शब्दों में नकार का णत्व आदेश नहीं होता है। उदा० क्षुभ्नाति। [ क्षुभ् से परे होने से 'रषाभ्याम्' से प्राप्त णत्व का निषेध होता है। 'क्षुभ्ना'

**'न' इति वर्तते। 'क्षुभ्ना' इत्येवमादिषु शब्देषु नकारस्य णकारादेशो न भवति। क्षुभ्नाति। अजादेशस्य स्थानिवद्भावादिहापि प्रतिषेधो भवति। क्षुभ्नीतः क्षुभ्नन्ति।**

**नृनमनः। 'पूर्वपदात्संज्ञायाम्' (८।४।३) इति प्राप्तिः। 'छन्दस्यृदवग्रहात्' (८।४।२६) इति च प्राप्नोति।**

**नन्दिन्, नन्दन, नगर–एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति–हरिनन्दी। हरिनन्दनः। गिरिनगरम्।**

**नृतिर्यङि प्रयोजयति–नरीनृत्यते।**

**तृप्नु–तृप्नोति।**

**नर्तन, गहन, नन्दन, निवेश, निवास, अग्नि, अनूप–एतान्युत्तरपदानि प्रयोजयन्ति। परिनर्तनम्,**

**न्यासः**

'श्नाभ्यस्तयोरातः' इत्याकारलोपे कृते, क्षुभ्नीत इत्यत्र 'ई हल्यघोः' इतीत्त्वे कृते णत्वस्य प्रतिषेधो न स्यात्; स्वरूपस्याभावात्? अजादेशस्य स्थानिवद्भावाद्, एकदेशविकृतस्यानन्यत्वाद्वा भविष्यतीत्यदोषः।

**एतान्युत्तरपदानीत्यादि**। एतेन 'पूर्वपदात् संज्ञायामगः' इति प्राप्तिं दर्शयति।

**हरिनन्दीति**। ताच्छील्ये णिनिः। **हरिनन्दन इति**। ल्युडन्तेन समासः। एवं **हरिनगरमित्यत्रापि** नगरेण षष्ठीसमासः।

**नरीनृत्यत इति**। 'रीगृदुपधस्य च' इत्यभ्यासस्य रीगागमः, 'अट्कुप्वाङ्' इत्यादिना प्राप्तिः।

**एवं तृप्नोतीत्यत्रापि**। 'तृप प्रीणने', व्यत्ययेन श्नुः। **परिनर्त्तनम्, परिगहनमिति**। गतिसमासौ। 'कृत्यचः'

**पदमञ्जरी**

**हरिनन्दीति** ताच्छीलिको णिनिः। **हरिनन्दनः, गिरिनगरमिति** षष्ठीसमासौ। **नरीनृत्यत इति**। 'रीगृदुपधस्य च'। **तृप्नोतीति**। छन्दसि व्यत्ययेन श्नुः। **परिनर्त्तनम्, परिगहनमिति**। प्रादिसमासौ। **परिनन्दनमिति**। गतिसमासः।

**भावबोधिनी**

ऐसे स्वरूप का ग्रहण है, 'क्षुभ्' धातु का नहीं। अतः द्विवचन आदि में 'श्नाभ्यस्तयोरातः' सूत्र से आलोप कर देने पर भी 'क्षुभ्नन्ति' में और 'ई हल्यघोः' से आ का ई कर देने पर भी 'क्षुभ्नीतः' में ] अच् के स्थान पर किये गये आदेश—आलोप और ईत्व के स्थानिवद्भाव से इनमें भी णत्व का प्रतिषेध हो जाता है—क्षुभ्नीतः, क्षुभ्नन्ति। [ यदि स्थानिवद्भाव नहीं मानें तो 'एकदेशविकृतमनन्यवत्' वचन से 'ना' मानकर 'क्षुभ्ना' मिल जाने से णत्वनिषेध हो जाता है। ]

नृनमनः। यहां 'पूर्वपदात् संज्ञायामगः' इससे णत्व की प्राप्ति है। और 'छन्दस्यृदवग्रहात्' यह भी प्राप्त है।

नन्दिन्, नन्दन, नगर—ये उत्तरपद संज्ञा में णत्व की प्राप्ति कराकर निषेध करवाते हैं। उदा॰ हरिनन्दी। हरिनन्दनः। गिरिनगरम् [ हरिं नन्दयति—इसमें ताच्छील्य अर्थ में णिनि है। 'हरेः नन्दनः'—इसमें ल्युट् प्रत्ययान्त का समास है। 'हरेः नगरम्' यहाँ षष्ठीसमास है। ]

'नृती' धातु का यङ् में णत्वाभाव प्रयोजित होता है—नरीनृत्यते। [ इसमें 'अट्कुप्वाङ्' से प्राप्त णत्व का निषेध होता है। ]

तृप्नु—तृप्नोति। [ णत्वनिषेध ]

नर्तन। गहन। नन्दन। निवेश। निवास। अग्नि। अनूप—ये उत्तरपद णत्वाभाव के प्रयोजक होते हैं—परिनर्तनम्। परिगहनम्—इनमें संज्ञाविषय में 'संज्ञायामगः' इस सूत्र से णत्व प्राप्त होता है। 'परिनन्दनम्' इसमें 'उपसर्गादसमासेऽपि' इससे णत्व प्राप्त होता है।

**परिगहनमिति, संज्ञायाम्–'पूर्वपदात्संज्ञायाम्' (८।४।३) इति प्राप्नोति। परिनन्दनमित्यत्र 'उपसर्गादसमासेऽपि' (८।४।२४) इति प्राप्नोति।**

**शरनिवेशः। शरनिवासः। शराग्निः। दर्भानूपः–इत्येताः संज्ञाः।**

**❁ आचार्यादणत्वं च। ❁ (ग.सू.१८२) आभार्यभोगीनः। आचार्यानी[1]।**

**❁ इरिकादिभ्यो वनोत्तरपदेभ्यः संज्ञायाम्। ❁ (ग.सू.१८३) इरिका, तिमिर, समीर कुबेर, हरि, कर्मार–इत्युत्तरपदवनशब्दस्थस्य संज्ञायाम्। क्षुभ्नादिराकृतिगणः।**

**अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः।।**

## ३९५३. स्तोःश्चुना श्चुः।।४०।। (१११)

### न्यासः

इति प्राप्तिः। **शरनिवेशादयो दर्भानूपपर्यन्ताः षष्ठीसमासाः।** अनूप इति अनुगता आपो यस्मिन्निति बहुव्रीहिः, 'ऋक्पूरब्धूःपथामानक्षे' इत्यकारः समासान्तः, 'ऊदनोर्देशे' इत्यूत्त्वम्, सवर्णदीर्घत्वम्।

**आचार्यादणत्वं चेति।** चकाराण्णत्वं च, तेन विभाषा सम्पद्यते। व्यवस्थितविभाषाविज्ञानादाचार्येणेति नित्यं णत्वं भवति। **आचार्यभोगीन इति।** 'आत्मन्विश्वजनभोगोत्तरपदात् खः'। अट्कुप्वाङ्' इत्यादिना प्राप्तिः। **एवमाचार्यानीत्यत्रापि।** 'इन्द्रवरुण' इत्यादिना ङीष्, आनुगागमश्च। चकारस्यानुक्तसमुच्चयार्थत्वादपरिसमाप्तिं क्षुभ्नादेर्बोधयतीति मत्वाऽऽह—**क्षुभ्नादिराकृतिगण इति।**।३९।।

**स्तोः श्चुना श्चुः।। शकारचवर्गाभ्यां सन्निपात इत्यादि।** सन्निपाते = आनन्तर्य इत्यर्थः।

### पदमञ्जरी

शरनिवेशादयो दर्भानूपान्तः षष्ठीसमासाः। **आचार्यभोगीनः, आचार्यानीति।** अत्रैवास्य प्रतिषेधः; आचार्येण, आचार्याणामित्यादौ तु भवत्येव। **क्षुभ्नादिराकृतिगण इति।** चकारोऽनुक्तसमुच्चयार्थं एतमेवार्थं सूयचति।।३९।।

**स्तोः श्चुना श्चुः।।** अत्र सन्निपात इत्यध्याहार्यम्। **वृक्षश्शेते इति।** 'वा शरि' इति पक्षे विसर्जनीयस्य सकारः।

### भावबोधिनी

शरनिवेशः। शरनिवासः। शराग्निः। दर्भानूपः—ये सभी संज्ञायें = नाम हैं। ❁

❁ आचार्य शब्द से परे अणत्व भी होता है साथ ही णत्व भी ❁ उदा॰ आचार्यभोगीनः। आचार्यानी। [ केवल इन्हीं में णत्वनिषेध होता है। अतः व्यवस्थित विभाषा होने से अन्यत्र 'आचार्येण' आदि में णत्व भी होता ही है। ]

❁ 'वन' जिनमें उत्तरपद है ऐसे 'इरिका' आदि शब्दों से भी णत्व का निषेध कहना चाहिये। ❁ इरिका, तिमिर, कुबेर, हरि, कर्मार—इनमें उत्तरपद 'वन' शब्दस्थ का निषेध संज्ञा में होता है। [ उसी में णत्वनिषेध होता है। ] अर्थात् 'इरिकावनम्' आदि में 'वन' शब्दस्थ 'न' के णत्व का प्रतिषेध होता है। ] क्षुभ्नादि—यह आकृतिगण है।

अविहितलक्षण = जिसमें किसी से णत्व का विधान नहीं है उसमें भी णत्व का प्रतिषेध क्षुभ्नादिगणीय शब्दों में समझना चाहिये। [ भाव यह है कि यदि णत्व संभावित होने पर भी णत्वाभाव का प्रयोग मिलता है तो उन शब्दों को क्षुभ्नादिगण में पठित समझना चाहिये। ]।।३९।।

सकार और तवर्ग का शकार तथा चवर्ग के साथ सन्निपात = योग में शकार और चवर्ग आदेश होते हैं। 'स्तोः' सकार और तवर्ग का' इनका 'श्चुना' = शकार और चवर्ग के साथ' ऐसा यथासंख्य इष्ट नहीं है। सकार का शकार के साथ तथा चवर्ग के

---

१. 'तथा हायनस्य नेष्यते—त्रिहायनः, चतुर्हायनः। कर्मार इति चोत्तरपदस्य संज्ञायाम्—इत्यधिकं पुस्तकान्तरे।

**सकारतवर्गयोः शकारचवर्गाभ्यां सन्निपाते शकारचवर्गावादेशौ भवतः। स्तोः श्चुनेति यथासंख्यमत्र नेष्यते। सकारस्य शकारेण, चवर्गेण, द्वाभ्यामपि सन्निपाते शकारो भवति। तवर्गस्यापि च शकारेण, चवर्गेण च सन्निपाते चवर्गो भवति। आदेशे तु यथासंख्यमिष्यते–सकारस्य शकारः, तवर्गस्य च चवर्ग इति।**

**सकारस्य शकारेण सन्निपाते–वृक्षश्शेते। प्लक्षश्शेते। तस्यैव चवर्गेण–वृक्षश्चिनोति, प्लक्षश्चिनोति। वृक्षश्छादयति, प्लक्षश्छादयति।**

**तवर्गस्य शकारेण–अग्निचिच्छेते, सोमसुच्छेते। तस्यैव चवर्गेण–अग्निचिच्चिनोति, सोमसुच्चिनोति। अग्निचिच्छादयति, सोमसुच्छादयति। अग्निचिज्जयति, सोमसुज्जयति। अग्निचिज्झकारः,**

**न्यासः**

**वृक्षश्शेत इति**। 'वा शरि' इति विसर्गस्य सकारः, तस्यानेन शकारः।

**मज्जतीति**। 'टुमस्जो शुद्धौ', 'झलां जश् झशि' इति सकारस्य दकारः, तस्यानेन जकारः। श्चुत्वे कर्त्तव्ये जश्त्वस्यासिद्धत्वं नाशङ्कनीयम्; 'मज्जिनशोर्झलि' इत्यत्र मज्जेः कृतचुत्वनिर्देशात्। असिद्धत्वे ह्ययं निर्देशो नोपपद्यते। **भृज्जति, वृश्चतीति**। ग्रह्यादिसूत्रेण सम्प्रसारणम्। **यज्ञः, याच्ञेति**। यजियाचिभ्याम् 'यजयाच' इत्यादिना नङ्।

इह सकारतवर्गौ द्वौ कार्यिणौ, निमित्ते अपि द्वे एव-शकारचवर्गौ ततश्च साम्यात् संख्यातानुदेशः प्राप्नोति, सकारस्य शकारेण सन्निपाते तवर्गस्य चवर्गेण कस्मान्न भवति? इत्याह—**शादित्यादि**। प्राप्तिपूर्वका हि प्रतिषेधा

**पदमञ्जरी**

**मज्जतीति**। 'झलां जश् झशि' इति सकारस्य दकारे कृते तस्य चुत्वम् जकारः। असिद्धत्वं तु जश्त्वस्य न भवति; 'न मु ने' इत्यत्र नेति योगविभागात्। तथा च भृज्जतीनां ङितीति निर्देश उपपद्यते।

इह सकारतवर्गौ कार्यिणौ द्वौ, निमित्ते अपि द्वे एव—शकारचवर्गौ, ततश्च साम्यात्संख्यातानुदेशः प्राप्नोति?

**भावबोधिनी**

साथ, अर्थात् दोनों के ही सन्निपात = योग में शकार आदेश होता है और तवर्ग का भी शकार के साथ,तथा चवर्ग के साथ सन्निपात में चवर्ग होता है। परन्तु आदेश कोटि में यथासंख्य इष्ट ही है—सकार का शकार होता है, तवर्ग का चवर्ग होता है।

सकार का शकार के साथ सन्निपात = योग में उदा॰ वृक्षश्शेते। प्लक्षश्शेते। [ वृक्षः + शेते, प्लक्षः + शेते इनमें 'वा शरि' सूत्र से विसर्ग का सकार करने पर वृक्षस् + शेते होता है। ] इसी सकार का चवर्ग के साथ सन्निपात = योग में उदा॰ वृक्षश्चिनोति। प्लक्षश्चिनोति। [ यहाँ भी विसर्ग का सकार और उसका शकार होता है। ] वृक्षश्छादयति। प्लक्षश्छादयति। [ यहाँ भी स् का श् होता है। वृक्षः + छादयति। प्लक्षः + छादयति। ]

तवर्ग का शकार के साथ सन्निपात = योग में उदा॰ अग्निचिच्छेते। सोमसुच्छेते। [ अग्निचित् शेते, सोमसुत् शेते—इनमें तवर्ग का शकार के साथ सन्निपात होने से तवर्ग का चवर्ग होता है। ] इस तवर्ग का चवर्ग के साथ सन्निपात = योग में उदा॰ अग्निचिच्चिनोति, सोमसुच्चिनोति। [ अग्निचित् + चिनोति, सोमसुत् + चिनोति। ] अग्निचिच्छादयति, सोमसुच्छादयति। [ अग्निचित् + छादयति, सोमसुत् + छादयति। ] अग्निचिज्जयति, सोमसुज्जयति। अग्निचिज्झकारम्, सोमसुज्झकारम्। [ अग्निचित् + जयति, सोमसुत् + झकारम् आदि में जश्त्व के बाद चुत्व ] अग्निचिञ्ञकारः। सोमसुञ्ञकारः। [ अग्निचित् + ञकारः। सोमसुत् + ञकारः। श्चुत्व से त् का च् होता है। 'यरोऽनुनासिकेऽनुनासिको वा' (८।४।४५) इस सूत्र से च् का अनुनासिक ञ् होता है— अग्निचिञ्ञकारः। सोमसुञ्ञकारः।

**सोमसुज्झकारः। अग्निचिञ्ञकारः, सोमसुञ्ञकारः। मस्जेः–मज्जति। भ्रस्जेः–भृज्जति। व्रश्चेः–वृश्चति। यजेः–यज्ञः। याचेः–याच्ञा।**

**'शात्' (८।४।४४) इति प्रतिषेधो ज्ञापकः–संख्यातानुदेशाभावस्य।**

**'स्तोः श्चौ' इति सप्तमीनिर्देशो न कृतः; पूर्वेण परेण च श्चुना सन्निपाते श्चुत्वं यथा स्यादिति।।**

**३९५४. ष्टुना ष्टुः।।४१।। (११३)**

**न्यासः**

भवन्ति। यदि निमित्तं प्रति यथासंख्यं स्यात्, एवं सति शात्परस्य तवर्गस्य चुत्वप्राप्तिरेव नास्तीति 'शात्' इति प्रतिषेधं न कुर्यात्, कृतश्चासौ, अतः स ज्ञापयति—संख्यातानुदेशो न भवतीति।

'स्तो श्चौ' इति लाघवार्थं सप्तम्या निर्देशे कर्त्तव्ये 'श्चुना' इति तृतीयानिर्देशः पूर्वभूतेनापि सन्निपातेन यथा स्यात्-यज्ञः, याच्ञेति। सप्तमीनिर्देशे हि 'तस्मिन्निर्दिष्टे पूर्वस्य' इति परभूतेनैव स्यात्, न पूर्वभूतेन।।४०।।

**ष्टुना ष्टुः।।** अत्रापि संख्यातानुदेशाभावस्य 'तोः षि' इति प्रतिषेधो ज्ञापकः। यद्यत्रापि निमित्तं प्रति संख्यातानुदेशः स्यात्, षकारेण सन्निपाते तवर्गस्य ष्टुत्वमेव न प्राप्नोति। 'तोः षि' इति प्रतिषेधं न कुर्यात्,

**पदमञ्जरी**

इत्याशङ्क्याह—**शादिति प्रतिषेध इति।** श्चुनेति तृतीयानिर्देशः पूर्वभूतेनापि योगे यथा स्यात्—यज्ञः, याच्ञेति। सप्तमीनिर्देशे तु 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परभूतेनैव योगे स्यात्।।४०।।

**ष्टुना ष्टुः।। अट्टतीत्यादि।** 'अत्ट अतिक्रमणहिंसयोः', अद्ड् अभियोगे', तकारदकारोपधयोरेतयोर्गणपाठः क्विबन्तयोः संयोगान्तलोपे कृते तकारदकारयोः श्रवणार्थः, 'न न्द्राः संयोगादयः' इति प्रतिषेधोऽप्यड्डुतेर्भवति।

**भावबोधिनी**

(अनु०) मस्ज—के स् का श्चुत्व—मज्जति। [ 'मस्ज्' यहाँ पहले 'झलां जश् झशि' इस सूत्र से 'स्' का जश्त्व 'द्'—'मद्ज्' अब श्चुत्व से 'द्' का ज् होता है। ]

भ्रस्ज—भृज्जति। [ यहाँ भी पूर्ववत् जश्त्व, श्चुत्व होता है। 'ग्रहिवचि' आदि सूत्र से सम्प्रसारण करने पर रेफ का ऋकार होता है। ] व्रश्च्—वृश्चति। [ यहाँ सम्प्रसारण होता है। 'झश्' परे न होने से जश्त्व नहीं होता है। ] यज् का—यज्ञः। याच् का—याच्ञा। [ इनमें यज् और याच् धातुओं से 'यजयाच' आदि सूत्र से नङ् प्रत्यय करने पर यज् + न याच् + न, तवर्ग न का श्चुत्व ञ् होता है। ज् + ञ = ज्ञ—यज्ञः च् + ञ = याच्ञा। ]

[ यहाँ सकार और तवर्ग ये दो कार्यी = स्थानी हैं और शकार तथा चवर्ग ये दो निमित्त हैं। अतः संख्यासाम्य के कारण ऐसा क्यों न मान लिया जाय कि सकार का शकार के साथ और तवर्ग का चवर्ग के साथ योग रहने पर सकार का शकार और तवर्ग का चवर्ग हो जाय—ऐसी शंका हो सकती है। समाधान यह है कि ] 'शात्' (शकार से परे तवर्ग का चवर्ग नहीं होता है। ऐसा प्रतिषेध सूत्र संख्यात अनुदेश के अभाव का ज्ञापक है अर्थात् श से परे तवर्ग केचवर्ग होने का प्रतिषेधक यह सूत्र ज्ञापित करता है कि सकार और शकार तथातवर्ग और चवर्ग ऐसा क्रम न मान कर दोनों कार्यियों के दोनों ही निमित्त होते हैं।

'स्तोः श्चौ' (सकार-तवर्ग के शकार-चवर्ग परे रहते शकार-चवर्ग होते हैं) ऐसा सप्तमी विभक्ति का निर्देश इसलिये नहीं किया गया जिससे पूर्व के अथवा पर के शकार-चवर्ग के सन्निपात में श्चुत्व हो सके। [ यदि सप्तमीनिर्देश होता तो केवल शकार-चवर्ग परे रहते ही श्चुत्व होता, पूर्व में रहते नहीं होता। तृतीयानिर्देश से पूर्व तथा पर किसी भी रूप में योग रहने पर श्चुत्व होता है। ]।।४०।।

'स्तोः'। (सकार और तवर्ग का) इसकी अनुवृत्ति होती है। सकार तथा तवर्ग का षकार तथा टवर्ग के साथ सन्निपात = योग में षकार और टवर्ग आदेश होते हैं। इस सूत्र में भी पूर्ववर्ती सूत्र के समान ही संख्यात अनुदेश नहीं होता है अर्थात् सकार और

**'स्तोः' इति वर्त्तते। सकारतवर्गयोः षकारटवर्गाभ्यां सन्निपाते षकारटवर्गावादेशौ भवतः। तत्रापि तथैव संख्यातानुदेशाभावः। षकारेण सकारस्य–वृक्षष्षण्डे, प्लक्षष्षण्डे। तस्यैव टवर्गेण–वृक्षष्टीकते, प्लक्षष्टीकते। वृक्षष्ठकारः, प्लक्षष्ठकारः।**

**तवर्गस्य षकारेण–पेष्टा। पेष्टुम्। पेष्टव्यम्। कृषीष्ट। कृषीष्ठाः। तस्यैव टवर्गेण–अग्निचिट्टीकते। सोमसुट्टीकते। अग्निचिट्ठकारः, सोमसुट्ठकारः। अग्निचिड्डीनः, सोमसुड्डीनः। अग्निचिड् ढौकते, सोमसुड् ढौकेते। अग्निचिण्णकारः, सोमसुण्णकारः। अत्ट–अट्टति। अद्ड्–अड्डति।।**

## ३९५५. न पदान्ताट्टोरनाम्।।४२।। (११४)

**न्यासः**

कृतश्चासौ, अतः स एव लिङ्गमिह संख्यातानुदेशाभावस्य। **वृक्षष्टीकत इत**। 'तिकृ टिकृ टीकृ रगि लघि गत्यर्थाः'।

**पेष्टेति**। 'पिष्लृ सञ्चूर्णने'। **कृषीष्ट, कृषीष्ठा इति**। करोतेराशिषि लिङ्, तस्य त–थासौ, सीयुट्, 'लोपो व्योर्वलि' इति यकारलोपः, 'सुट्, 'आदेशप्रत्यययोः' इति षत्वम्, अनेन ष्टुत्वम्। **अग्निचिड्डीन इति**। 'डीङ् विहायसा गतौ' स्वादित्वाद् 'ओदितश्च' इति नत्वम्। **अग्निचिड् ढौकत इति**। 'ढौकृ गतौ'। **अट्टति, अड्ढतीति**। 'अत्ट अतिक्रमणहिंसयोः', 'अद्ड अभियोगे'। तकारदकारोपधयोरेतयोर्गणे पाठः क्विबन्तयोस्तयोः संयोगान्तलोपे तकारदकारयोः श्रवणार्थः।।४१।।

**न पदान्ताद् टोरनाम्**।। 'अनाम्' इति षष्ठीबहुवचनस्यागतनुट्कस्य प्रतिषेधः। **श्वलिट् साय इति**। यदा 'ङः सि धुट्' इति नास्ति, तदैतदुदाहरणम्। **ईट्ट इति**। 'ईड स्तुतौ'। अनुदात्तेत्त्वादात्मनेपदम्, अदादित्वाच्छपो लुक्,

**पदमञ्जरी**

इहापि तृतीयानिर्देशः पूर्वभूतेनापि योगे ष्टुत्वं यथा स्यात्, यथा—द्रोढेति। अत्रापि 'तोः षि' इति प्रतिषेधान्निमित्तिनिमित्तयोः संख्यातानुदेशो न भवति।।४१।।

**न पदान्ताट्टोरनाम्**।। 'अनाम्' इति षष्ठीबहुवचनस्यागतनुट्कस्य प्रतिषेधः। **श्वलिट्साय इति**। धुडभावपक्षे

**भावबोधिनी**

तवर्ग का षकार या टवर्ग किसी के साथ योग रहने पर ष्टुत्व हो जाता है। षकार के साथ सकार के सन्निपात में उदा॰ वृक्षष्षण्डे। प्लक्षष्षण्डे। [ वृक्षः + षण्डे, 'वा शरि' से विसर्ग का सकार करने पर प्रस्तुत सूत्र सकार का ष्टुत्व कर देता है। ] उस षकार का टवर्ग के साथ सन्निपात में उदा॰ वृक्षष्टीकते। प्लक्षष्टीकते। वृक्षष्ठकारः। प्लक्षष्ठकारः। [ यहाँ भी वृक्षः + टीकते में विसर्ग का सकार करने के बाद सकार का ष्टुत्व होता है। ]

तवर्ग का षकार के साथ सन्निपात = योग में उदा॰ पेष्टा। पेष्टुम्। पेष्टव्यम्। कृषीष्ट। कृषीष्ठाः। [ पेष् + तृच् = ता में षकार के साथ तवर्ग का टवर्ग होता है। कृ आत्मनेपद आशीर्लिङ् में त, थास् प्रत्यय, सीयुट् = सीय् आगम, य् लोप, 'सुट्तिथोः' सूत्र से सुट् = आगम—कृ सी स् त। 'आदेशप्रत्यययोः' सूत्र से दोनों सकारों के षकार कृषीष् त, कृषीष्थास्, ष्टुत्व से टकार, ठकार होते हैं—कृषीष्ट, कृषीष्ठाः। ] उस तवर्ग का ही टवर्ग के साथ सन्निपात में उदा॰ अग्निचिट्टीकते। सोमसुट्टीकते। अग्निचिट्ठकारः, सोमसुट्ठकारः। अग्निचिड्डीनः, सोमसुड्डीनः। अग्निचिड्ढौकते। सोमसुड्ढौकते। अग्निचिण्णकारः, सोमसुण्णकारः। [ अग्निचित् + डकारः आदि में जश्त्व कर देने से पहले तकार के दकार और धकार आदेश हो जाते हैं तब ष्टुत्व करने पर तृतीय और चतुर्थ वर्ण डकार और ढकार होते हैं—अग्निचिड्डीनः, अग्निचिड्ढौकते। ] 'अत्ट् अतिक्रमणहिंसयोः' तथा 'अद्ड् अभियोगे' इन धातुओं में भी तवर्ग का टवर्ग करने पर लट् लकार में—'अट्टति' 'अड्डति' रूप होते हैं।।४१।।

पदान्त टवर्ग से उत्तरवर्ती सकार तथा तवर्ग का ष्टुत्व = षकार तथा टवर्ग आदेश नहीं होता है किन्तु 'नाम्' इस शब्द को छोड़कर अर्थात् 'नाम्' के तवर्ग न का टवर्ग ण होता ही है। उदा॰ श्वलिट्साये। मधुलिट् तरति। [ यहाँ पदान्त टवर्ग के बाद सकार

**पदान्ताट्टवर्गादुत्तरस्य स्तोः ष्टुत्वं न भवति 'नाम्' इत्येतद्वर्जयित्वा। श्वलिट्साये। मधुलिट् तरति।**

**पदान्तादिति किम्? 'ईड स्तुतौ' (धा.पा.१०२०)–ईट्टे। टोरिति किम्? सर्पिष्टमम्। अनामिति किम्? षण्णाम्।**

**अत्यल्पमिदमुच्यते। ❀ अनाम्नवतिनगरीणामिति वक्तव्यम्। ❀ षण्णाम्। षण्णवतिः। षण्णगरी।।**

**३९५६. तोः षि ।।४३।। (११५)**

**'न' इति वर्तते। तवर्गस्य षकारे यदुक्तं तन्न भवति। अग्निचित्षण्डे। भवान्षण्डे। महान्षण्डे।।**

**न्यासः**

'खरि च' इति डकारस्य टः। **सर्पिष्टममिति**। 'अतिशायने तमप्', 'ह्रस्वात् तादौ तद्धिते' इति सकारस्य मूर्धन्यः। **षण्णामिति**। 'षट्चतुर्भ्यश्च' इति नुट्, 'झलांजशोन्ते' इति षकारस्य डकारः, 'यरोऽनुनासिकेऽनुनासिको वा' इति डकारस्य णकारः। **षण्णवतिरिति**। षडधिका नवतिरिति शाकपार्थिवादित्वादुत्तरपदलोपिसमासः। **षण्णां नगराणां** समाहारः **षण्णगरी**। 'द्विगोः' इति ङीप्।।४२।।

**तोः षि**।। **अग्निचित् षण्ड इति**। 'अग्नौ चेः' इति क्विप्। **सोमसुत्षण्ड इति**। 'सोमे सुञः' इति क्विप्। अत्र 'षि' इति सप्तमी-निर्देशात् पूर्वभूतेन सन्निपातेन भवत्येव ष्टुत्वमिति—**पेष्टा, पेष्टुमिति**।।४३।।

**पदमञ्जरी**

सकारस्य ष्टुत्वं प्राप्नोति। धुट्पक्षे तु चर्त्वस्यासिद्धत्वात्तस्यैव धकारस्येति।

**ईट्टे इति**। 'ईड् स्तुतौ', अदादिरनुदातेत्।

षड्धिका नवतिः **षण्णवतिः**। षण्णां नगराणां समाहारः **षण्णगरी**।।४२।।

**तोः षि**।। 'षि' इति सप्तमीनिर्देशात् पूर्वभूतेनापि सन्निपाते भवत्येव—लोष्टा, पेष्टेति।।४३।।

**भावबोधिनी**

तथा तवर्ग के षकार तथा टवर्ग नहीं होते हैं। 'श्वलिट् साये' यहाँ 'डः सिधुट्' से धुट् न परे रहते ही यह उदा० है अन्यथा टवर्ग का योग संभव नहीं है। ]

पदान्त से परे—इसका क्या फल है? 'ईड् स्तुतौ' के प्रयोग में—ईट्टे। [ ईड् आत्मनेपद लट् = त, एत्व, ईड्ते, ष्टुत्व से 'त' का 'ट' और 'खरि च' से चर्त्व करने पर ड् का ट्—ईट्टे। पदान्त न होने से ष्टुत्वनिषेध नहीं होता है। ष्टुत्व होता ही है। ]

टवर्ग से परे—इसका क्या फल है? सर्पिष्टमम्। [ सर्पिष् + तमम् यहाँ टवर्ग से परे नहीं है अपि तु षकार से परे है। अतः निषेध न होकर ष्टुत्व होता है। ]

'नाम्' शब्द को छोड़कर इसका क्या फल है? षण्णाम्। [ षष् शब्द षष्ठी बहुवचन, आम् प्रत्यय, 'षट्चतुर्भ्यः' सूत्र से नुट् आगम षष् नाम्, 'झलां जशोऽन्ते' से जश्त्व करने से षकार का डकार—षड् + नाम् 'स्वादिषु' से पद संज्ञा होने से पदान्त टवर्ग से परे तवर्ग है ष्टुत्व नहीं होना चाहिये। किन्तु 'अनाम्' कथन से हो जाता है—षड् णाम्। 'प्रत्यये भाषायां नित्यम्' वार्तिक से ड् का नित्य अनुनासिक करने पर ड् का भी ण् होता है। ]

'अनाम्' यह बहुत कम कहा जा रहा है ❀ नाम्-नवति-नगरी—इनको छोड़कर ऐसा कहना चाहिये, इन तीनों के तवर्ग का टवर्ग होता ही है। ❀ उदा० षण्णाम्। षण्णवतिः। [ षड् + नवतिः ] षण्णगरी। [ षड् + नगरी। तीनों में पदान्त टवर्ग से परे तवर्ग के ष्टुत्व का निषेध नहीं होता है, ष्टुत्व होता ही है। षण्णगरी—यह समाहार में द्विगु है। ]।।४२।।

[ 'न पदान्तात्' सूत्र से ] 'न' (नहीं होता है)—इसकी अनुवृत्ति होती है। षकार परे रहते तवर्ग का जो ष्टुत्व कहा गया है वह नहीं होता है। उदा० अग्निचित्षण्डे। भवान्षण्डे। महान्षण्डे। [ षकार परे होने के कारण तवर्ग का टवर्ग नहीं होता है। 'षि' यह

## ३९५७. शात् ।।४४।।

**'तोः' इति वर्तते। शकारादुत्तरस्य तवर्गस्य यदुक्तं तन्न भवति। प्रश्नः। विश्नः।।**

## ३९५८. यरोऽनुनासिकेऽनुनासिको वा ।।४५।।

**पदान्तग्रहणमनुवर्तते। यरः पदान्तस्यानुनासिके परतो वाऽनुनासिकादेशो भवति। वाङ्नयति, वाग्नयति। श्वलिण्नयति, श्वलिड् नयति। अग्निचिन्नयति, अग्निचिद् नयति। त्रिष्टुम्नयति, त्रिष्टुब्नयति।**

**'पदान्तस्य' इत्येव–वेद्मि। क्षुभ्नाति।**

**❀ यरोऽनुनासिके प्रत्यये भाषायां नित्यवचनं कर्तव्यम्। ❀ वाङ्मयम्[१]। त्वङ्मयम्[१]। व्यवस्थितविभाषाविज्ञानात् सिद्धम्।।**

### न्यासः

**शात्**।। **विश्नः, प्रश्न इति**। 'विच्छ गतौ', 'प्रच्छ ज्ञीप्सायाम्', पूर्ववन्नङ् 'च्छ्वोः शूडनुनासिके च' इति च्छकारस्य शकारः। यद्यपि 'प्रश्ने चासन्नकाले' इति निपातनादेव शात्परस्य तवर्गस्य चुत्वं न भवतीत्येषोऽर्थो लभ्यते, तथापि मन्दधियां प्रतिपत्तिगौरवपरीहारार्थमिदमारभ्यते। अथ वा—'अबाधकान्यपि निपातनानि भवन्ति' इत्युक्तम्। यद्येतन्नारभ्यते, प्रश्ञः, विश्ञ इत्यपि रूपं सम्भाव्येत।।४४।।

**यरोऽनुनासिकेऽनुनासिको वा**।। **पदान्तस्येति**। अनेन 'न पदान्ताट्टोरनाम्' इत्यतः पदान्तग्रहणमनुवर्त्तते, तच्चार्थात् षष्ठ्यन्ततामनुभवतीति दर्शयति। **वाङ्नयतीत्या**दावुदाहरणे 'झलां जशोऽन्ते' इति गकारादौ जश्त्वे कृते तस्यानुनासिकः कर्त्तव्यः। **वाङ्मयमिति**। 'नित्यं वृद्धशरादिभ्यः' इति मयट्। **त्वङ्मयमिति**। अत्रापि 'मयड् वैतयोः' इत्यादिना।।४५।।

### पदमञ्जरी

**शात्**।। **प्रश्नः, विश्न इति**। 'यजयाच' इत्यादिना नङ्, 'च्छ्वोः शूडनुनासिके च' इति छकारस्य शकारः। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति **तैत्तिरीयके** नायं प्रतिषेधो भवति—'अयोऽश्ञाति'। तत्रापि **काठके** भवत्येव—'ब्रह्मचारिणे प्रश्नान् प्रोच्य प्रजिघाय'। स्वाध्यायब्राह्मणे च भवतीति सकलं भद्रमश्नुते।।४४।।

**यरोऽनुनासिकेऽनुनासिको वा**।। 'पदान्तात्' इत्यनुवृत्तं षष्ठ्यन्तं विपरिणम्यते। **वाङ्मयमिति**। 'नित्यं वृद्धशरादिभ्यः' इति मयट्।।४५।।

### भावबोधिनी

सप्तमीनिर्देश है अतः षकार परे रहते ही ष्टुत्वनिषेध होता है। पूर्व में षकार रहने पर ष्टुत्व होता ही है—पेष्टा, पेष्टुम्। ] [ पेष् + ता, पेष् + तुम्—इनमें निषेध नहीं होता है क्योंकि षकार परे नहीं अपितु पूर्व में है। ]।।४३।।

'तोः' (तवर्ग का)—इसकी अनुवृत्ति होती है। शकार से उत्तरवर्ती तवर्ग का जो (श्चुत्व) कहा गया है वह नहीं होता है। उदा॰ प्रश्नः। विश्नः। [ प्रच्छ तथा विच्छ् धातुओं से 'यजयाच-यत-विच्छ-प्रच्छो नङ्' (३।३।९०) सूत्र से 'नङ्' = न प्रत्यय, 'च्छ्वोः शूडनुनासिके च' सूत्र से 'च्छ' का श प्रश् + न, विश् + न, श्चुत्व प्राप्त है। किन्तु श् से परे होने से श्चुत्व का निषेध हो जाता है। ]।।४४।।

'पदान्त' ग्रहण की अनुवृत्ति ('न पदान्ताट्टोरनाम्' सूत्र से) होती है। [ और पञ्चम्यन्त का षष्ठ्यन्त में परिवर्तन होता है। ] पदान्त यर् (प्रत्याहार के वर्ण) का अनुनासिक वर्ण परे रहते विकल्प से अनुनासिक वर्ण आदेश होता है। उदा॰ वाङ्नयति, वाग्नयति। [ वाक् + नयति, जश्त्व, विकल्प से अनुनासिक होने से 'ग्' का पञ्चम वर्ण 'ङ्' हो जाता है। ] श्वलिण्नयति, श्वलिट्नयति। [ श्वलिट् नयति, जश्त्व, विकल्प से अनुनासिक होने से ड् का ण् होता है। ] अग्निचिन्नयति अग्निचिद्नयति। [ अग्निचित् + नयति-जश्त्व, विकल्प से अनुनासिक ] त्रिष्टुम्नयति, त्रिष्टुब्नयति। [ त्रिष्टुप् + नयति, जश्त्व से प् का ब्, विकल्प से अनुनासिक होने से ब् का म् ]

---

१. वाङ्मात्रम्, कियन्मात्रम्—इति मुद्रितः पाठः।

### ३९५९. अचो रहाभ्यां द्वे।।४६।। (५९)

**'यरः' इति वर्तते। अच उत्तरौ यौ रेफहकारौ ताभ्यामुत्तरस्य यरो द्वे(वा) भवतः। अर्क्कः। मर्क्कः। ब्रह्म्मा। अपह्न्नुते।**

**अच इति किम्? किन् ह्नुते। किम् ह्मालयति।।**

### ३९६०. अनचि च।।४७।। (४८)

**न्यासः**

**अचो रहाभ्यां द्वे।। अच उत्तरौ यो रेफहकाराविति।** एतेनाच इति रहोर्विशेषणमिति दर्शयति। **आभ्यामुत्तरस्य यर इति।** अनेनापि रहौ यर्विशेषणमिति। **अर्क्क इति।** 'अर्च पूजायाम्', घञ्, 'चजोः कु घिण्ण्यतोः' इति कुत्वम्। **मर्क्क इति।** मर्चिः सौत्रो धातुः, तस्मात् 'इण् भीकापाशल्यतिमर्चिभ्यः कन्' इति कन्, 'चोः कु' इति कुत्वम्। अत्राकारादुत्तरो रेफः, तस्मादपि परः ककारो यरिति। **बहम्मेति इति।** अत्राप्यकारादेवाच उत्तरो हकारः, तस्मादपि परो मकारो यरिति। **अपह्नुत इति।** अत्राप्यकारादुत्तरो हकारः, पूर्वच्छपो लुक्, तस्मात् परस्य नकारस्य द्विर्वचनम्। **किन् ह्नुत इति।** अत्राच उत्तरो हकारो न भवतीति नकारो न द्विरुच्यते। **किम् ह्मलयतीति।** 'ह्वल ह्मल सञ्चलने', हेतुमण्णिच्। 'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' इति मित्त्वम्, 'मितां ह्रस्वः' इति ह्रस्वत्वम्।।४६।।

**अनचि च।। अनच्परस्येति।** अचोऽन्योऽनच्, अनच् परो यस्मात् सोऽयमनच्परः। **दद्ध्यत्रेति।** अत्राचः परो

**पदमञ्जरी**

**अचो रहाभ्यां द्वे।।** अर्चयतेर्घञ्, कुत्वम्, **अर्क्कः।** मर्चिः सौत्रो धातुः, तस्मात् 'इण्भीकापाशल्यतिमर्चिभ्यः कन्', 'चोः कुः' इति कुत्वम्—**मर्क्कः।** अत्राकारादनन्तरो रेफः, तस्मादपि ककारः। एवमुत्तरेष्वपि द्रष्टव्यम्।।४६।।

**अनचि च।। अनच्परस्येति।** अचोऽन्योऽनच्, स परोयस्मात्सोऽनच्परः। अनेन पर्युदासो दर्शितः, किं

**भावबोधिनी**

पदान्त यर् का ही अनुनासिक होता है—वेद्मि। क्षुभ्नाति। [ यहाँ पद के मध्य में अनुनासिक होने से यरों का अनुनासिक नहीं होता है। ]

● अनुनासिक प्रत्यय परे रहते भाषा में यर् का नित्य अनुनासिक वचन करना चाहिये, अर्थात् विकल्प नहीं करना चाहिये। ● उदा० त्वङ्मयम्। वाङ्मयम्। [ वाच् शब्द से विकार अर्थ में 'नित्यं वृद्धशरादिभ्यः' (४।३।१४४) सूत्र से मयट् प्रत्यय होता है। त्वच् शब्द से 'मयड्वैतयोर्भाषायाम्' (४।३।१४३) सूत्र से विकार अर्थ में मयट् प्रत्यय होता है। अवयवावयविभाव अर्थ में भी यह मयट् होता है। ] प्रत्यय परे होने से नित्य अनुनासिक होता है।

वास्तव में इस सूत्र को व्यवस्थित विभाषा मान लेने से [ प्रत्यय परे रहते विकल्प न होना ] सिद्ध है।।४५।।

'यरः' (यर् का) इसकी अनुवृत्ति [ पूर्व सूत्र से ] होती है। अच् से उत्तरवर्ती जो रेफ तथा हकार उनसे उत्तरवर्ती यर् प्रत्याहार के वर्ण का द्वित्व होता है। उदा० अर्क्कः। मर्क्कः। ब्रह्म्मा। अपह्न्नुते। [ इनमें रेफ तथा हकार से परवर्ती यर् = क्, म्, न् का द्वित्व होता है। ]।

अच् से परे—इसका क्या फल है? ह्नुते। किं ह्मलयति। [ यहाँ ह् से परे है किन्तु यहाँ हकार अच् से परे नहीं है। अतः यर् का द्वित्व नहीं होता है। ]

**विमर्श**—नवीन वैयाकरण द्वित्व को सामान्यतया वैकिल्पक मानते हैं। क्योंकि 'यरोऽनुनासिके' सूत्र से 'वा' की अनुवृत्ति होती है। अतः द्वित्वरहित और द्वित्वसहित दोनों प्रकार के रूप प्रयुक्त होते हैं।।४६।।

'अचः' (अच् से परे)—इसकी तथा 'यरः' (यर् की)—इनकी अनुवृत्ति होती है। अनच्परक = अच् जिससे परे नहीं है ऐसे = अच् से उत्तरवर्ती यर् का द्वित्व विकल्प से होता है अनच् परे रहते, अर्थात् यर् अच् से परे तो होना चाहिये किन्तु यर् से परे

**'अचः' इति वर्तते, 'यरः' इति च। अनच्परस्य अच उत्तरस्य यरो द्वे वा भवतोऽनचि परतः। दद्ध्यत्र। मद्ध्वत्र।**

**अच इत्येव–स्मितम्। ध्मातम्।**

**❁ यणो मयो द्वे भवत इति वक्तव्यम्। ❁ केचिदत्र 'यणः' इति पञ्चमी, 'मयः' इति षष्ठीति व्याचक्षते। तेषामुल्क्का, वाल्म्मीक इत्युदाहरणम्। अपरे तु 'यणः' इति षष्ठी, 'मयः' इति पञ्चमीति, तेषां दध्य्यत्र, मध्व्वत्रेत्युदाहरणम्।**

**❁ शरः खयो द्वे भवत इति वक्तव्यम्। ❁ अत्रापि यदि 'शरः' इति पञ्चमी, 'खयः' इति षष्ठी; तदा स्स्थाली, स्स्थातेत्युदाहरण्। अथ वा–खय उत्तरस्य शरो द्वे भवतः। वत्स्सः, इक्ष्षुः, [१]क्ष्षीरम्, अप्स्सराः।**

**न्यासः**

धकारो यर्, तस्यानचि यकारे परतो द्विर्वचनम्, 'झलां जश् झशि' इति धकारस्य दकारः। **मद्द्ध्वत्रेति**। अत्रानच्परस्य धकारस्य द्विर्वचनम्।

**यणो मय इत्यादि**। अच उत्तरस्य यरो द्विर्वचनमुक्तम्। अनचि यण उत्तरस्य मयोऽचि परतो न प्राप्नोतीत्युपसंख्यायते।

किं पुनरिहोदाहरणम्? इत्याह-**केचित्यादि**। **उल्क्का, वल्म्मीक** इति। यकाराद् यण उत्तरस्य यकारस्य मकारस्य च मयो द्विर्वचनम्। **दध्य्यत्र, मध्व्वत्रेति**। धकारान्मय उत्तरस्य यकारस्य वकारस्य च यणो द्विर्वचनम्।

**शरःखय इत्यादि**। **स्स्थाली, स्स्थातेति**। सकाराच्छर उत्तरस्य खयस्थकारस्य द्विर्वचनम्। **वत्स्स इति**। तकारात् खय उत्तरस्य सकारस्य शरो द्विर्वचनम्। **इक्ष्षुः, [१]क्ष्षीरमिति**। ककारात् खय उत्तरस्य शरः षकारस्य द्विर्वचनम्। **अप्स्सरा इति**। पकारात् खयः परस्य सकारस्य शरो द्विर्वचनम्।

**पदमञ्जरी**

प्रयोजनम्? न किञ्चित्, प्रत्युत दोष एव, अवसाने न सिध्यति—वाक्क्, अच्सदृशस्य वर्णान्तरस्याभावात्, प्रतिपत्तिगौरवप्रसङ्गात्पर्युदास आश्रितः। पक्षान्तरे हि विशेषप्रतिषेधात् सामान्येन विधिरनुमेयः स्यादिति गौरवम्।

**उल्क्का, वल्म्मीक इति**। लकारो यण्, ककारमकारौ यमौ।

**स्स्थालीति** सकारः शर, थकारः खय्। वत्स्सादिषु तकारककारपकाराः खयः, सकारषकारौ शरौ।

**भावबोधिनी**

अच् नहीं होना चाहिये। उदा॰ दद्ध्यत्र। मद्ध्वत्र। [ दधि + अत्र, मधु + अत्र, 'इको यणचि' से इ उ के यण् य् व्—दध्य् अत्र, मध्व् अत्र, यहाँ अच् से परे तथा अनच्परक यर् 'ध का वैकल्पिक द्वित्व, 'झलां जश् झशि' सूत्र से प्रथम ध् का जश्त्व से द् ]

अच् से परवर्ती यर् का ही होता है—स्मितम्। ध्मातम्। [ इनमें स् और ध् अच् से परे नहीं है। अतः द्वित्व नहीं होता है। ]

❁ 'मय् से परे यण् का द्वित्व होता है, ऐसा कहना चाहिये। ❁

कुछ विद्वान् 'यणः' इसमें पञ्चमी और 'मयः' इसमें षष्ठी है—ऐसी व्याख्या करते है अर्थात् यण् से परे यम् का द्वित्व होता है—ऐसी व्याख्या करते हैं। इनके अनुसार—उल्क्का, वल्म्मीकः—ये उदा॰ हैं। [ यण् ल् के बाद मय् = क् और म् का द्वित्व होता है। ]

दूसरे विद्वान् तो 'यणः' इसमें षष्ठी तथा 'मयः' इसमें पञ्चमी मानते है अर्थात् मय् से उत्तरवर्ती यण् का द्वित्व मानते हैं। उनके अनुसार उदा॰ दध्य्यत्र, मध्व्वत्र—ये हैं। [ इनमें मय् = ध् से परे यण् = य् व् का द्वित्व होता है। ]

१.१. 'इक्षुः, क्षीरम्'—इत्येव पाठः समीचीनः, भाष्ये एवमेव दर्शनात्।

**❀ अवसाने च यरो द्वे भवत इति वक्तव्यम्। ❀ वाक्क्, वाक्। त्वक्क्, त्वक्। षट्ट्, षट्। तत्त्, तत्।।**

## ३९६१. नादिन्याक्रोशे पुत्रस्य ।।४८।। (५५)

**आदिनिपरत आक्रोशे गम्यमाने पुत्रशब्दस्य न द्वे भवतः। 'अनचि च' इति प्राप्तिः प्रतिषिध्यते। पुत्रादिनी त्वमसि पापे।**

**न्यासः**

**अवसाने द्वे इत्यादि**। 'अनचि च' इति पर्युदासाश्रयणादिदमुच्यते। प्रसज्यप्रतिषेधे तु 'यरोऽनुनासिकेऽनुनासिको वा' इत्यतो वाग्रहणमनुवर्त्त्य शक्यमिदमकर्तुम्; नैतत्, प्रसज्यप्रतिषेधे हि विधिवाक्यत्वं सूत्रस्य नोपपद्यते, ततश्च केनचिद् द्विर्वचनं स्यात्? तस्मादेव प्रतिषेधवाक्याद्विधिवाक्यतास्यानुमास्यत इत्यदोषः। प्रसज्यप्रतिषेधे सति प्रतिपत्तिगौरवभयात् पर्युदासाश्रयणम्।।४७।।

**नादिन्याक्रोशे पुत्रस्य**। आदिनीति परसप्तमीयम्। अत आह—**आदिनि परत इति**। **पुत्रादिनीति**। पुत्रानत्तुं शीलमस्या इति ताच्छील्ये णिनिः। **पुत्रादिनी, शिशुमारीति**। तत्त्वाख्यानमेतत्, नाक्रोशः।

**तत्परे चेति वक्तव्यम्**। स आदिनिशब्दः परो यस्मात् पुत्रशब्दात् तत्र द्विर्वचनं न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—नेति योगविभागः क्रियते, तेन तत्परे न भविष्यतीति।

**पदमञ्जरी**

**अवसाने इति**। पर्युदासाश्रयणादिदमारब्धम्। प्रसज्यप्रतिषेधे तु परस्य निमित्तस्यानाश्रयणाद् 'वा' इत्यधिकारात्सिद्धम्।।४७।।

**नादिन्याकोशे पुत्रस्य**।। **पुत्रादिनीति**। ताच्छील्ये णिनिः।

**तत्परे चेति**। स आदिनीशब्दो यस्मात्परस्तत्रापि परतः पुत्रशब्दस्य द्विर्वचनं न भवति—पुत्राश्च पौत्राश्च

**भावबोधिनी**

❀ शर् से परे खय् का द्वित्व होता है—ऐसा कहना चाहिये। ❀ इस वचन में भी यदि 'शरः' यहाँ पञ्चमी और 'खयः' यहाँ षष्ठी मानते हैं तो शर् से परे खय् का द्वित्व होता है तब—स्त्थाली, स्त्थाता—ये उदा० हैं। [ स्थाली, स्थाता—इनमें शर् = स् से परे खय् = थ् का द्वित्व, चंर्त्व करने पर—स्त्थाली स्त्थाता होते हैं। ] अथवा इसमें भी 'खयः' में पञ्चमी और 'शरः' में षष्ठी मानते हैं तो खय् से उत्तरवर्ती शर् का द्वित्व होता है—वत्स्सः, इक्ष्ष्षुः, क्ष्षीरम्, अप्स्सराः [ वत्स में, स् का द्वित्व। इक् षु = इक्षु, क्षीरम् = क्ष्षीरम् में खय् क् से परे शर् = ष् का द्वित्व होता है। अतः दो षकार सुनाई देते हैं। वास्तव में यहाँ 'इक्षुः' 'क्षीरम्' ऐसा ही होना उचित है क्योंकि क् ष् संयोग में 'क्ष्' होता ही है। भाष्य में ऐसा ही पाठ है। ]

❀ अवसान में भी यर् का द्वित्व विकल्प से होता है—ऐसा कहना चाहिये। ❀ उदा० वाक्क्, वाक्। त्वक्क्, त्वक्। षट्ट्, षट्। तत्त्, तत्। [ अवसान = अन्तिम वर्ण का द्वित्व विकल्प से होता है। ]

**विमर्श**—'अनचि' यहाँ यदि पर्युदास में नञ् मानते हैं तो अवसान में द्वित्वविधान करना चाहिये। यदि प्रसज्य प्रतिषेध मानते हैं तो इस अन्तिम वचन की आवश्यकता नहीं है क्योंकि 'अच् में नहीं होता है' यह अर्थ होने से अवसान में स्वतः द्वित्व संभव है। अतः लम्बी व्याख्या के भय से पर्युदास मानकर इस वचन को भी कहना लाघवमूलक है।।४७।।

'आदिनी' शब्द परे रहते आक्रोश गम्यमान रहने पर 'पुत्र' शब्द [ के यर् ] का द्वित्व नहीं होता है। 'अनचि च' इस सूत्र से होने वाली द्वित्व की प्राप्ति का प्रतिषेध किया जाता है। उदा० पुत्रादिनी त्वम् असि पापे। [ पुत्र = पुत्र्अ में अच् से परे यर् 'त्' का अनच् 'र्' परे रहते द्वित्व प्राप्त है उसका प्रतिषेध किया गया है। ]

**आक्रोश इति किम्? तत्त्वकथने द्विर्वचनं भवत्येव–पुत्रानत्तीति पुत्त्रादिनी। शिशुमारी व्याघ्री।**

**❁ तत्परे चेति वक्तव्यम्। ❁ पुत्रपुत्रादिनी त्वमसि पापे।**

**❁ वा हतजग्धपर इति वक्तव्यम्। ❁ पुत्त्रहती, पुत्रहती। पुत्त्रजग्धी। पुत्रजग्धी।**

**❁ चयो द्वितीयाः शरि पौष्करसादेः। ❁ चयो द्वितीया भवन्ति शरि परतः पौष्करसादेराचार्यस्य मतेन। तकारस्य थकारः–वथ्सः। ककारस्य खकारः–ख्षीरम्। पकारस्य फकारः–अफ्सराः।**

### न्यासः

**वा हतेत्यादि**। हतजग्धशब्दयोः परतः पुत्त्रस्य वा द्विर्वचनं न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु वाग्रहणमनुवर्त्त्य, नेति योगविभागकरणमाश्रित्य वा कर्त्तव्यम्। न चैवं पुत्रादिनीत्यत्रापि विकल्पः प्रसक्तः व्यवस्थितविभाषाविज्ञानात्। हतञ्च जग्धञ्च तद्—हतजग्धम्, हतजग्धञ्च तत् परञ्चेति हतजग्धपरम्, तस्मिन् हतजग्धपरे। **पुत्रहती पुत्रजग्धीति**। पुत्रो हतः, पुत्रो जग्धोऽनयेति बहुव्रीहिः, 'अस्वाङ्गपूर्वपदाद्' इत्यादिना ङीष्।

**चयो द्वितीया इत्यादि**। चय इति स्थानषष्ठी, खछठथफा इति द्वितीया इत्यस्यार्थः। द्वितीयत्वमेषां वर्णानां प्रथमवर्णपेक्षया भवति। **वथ्स इति**। तकारस्य चयः सकारे शरि परतो द्वितीयस्थकारः। **ख्षीरमिति**। ककारस्य चयः षकारे शरि परतो द्वितीयः खकारः। **अफ्सरा इति** । पकारस्य चयः सकारे शरि परतो द्वितीयः फकारः।।४८।।

### पदमञ्जरी

पुत्रपौत्राः, तानत्तुं शीलमस्याः पुत्रपौत्रादिनी। अन्ये तु 'तत्परे पुत्रशब्दे' इति व्याचक्षाणाः पुत्रपुत्रादिनीत्युदाहरन्ति, तत्र पुत्रस्य पुत्रमत्तीति विग्रहः।

**वा हतजग्धपर इति**। हतजग्धं च तत्परं चेति विशेषणसमासः राजदन्तादित्वात् परशब्दस्य परनिपातः। **पुत्रहतीति**। पुत्रो हतोऽनयेति बहुव्रीहिः, 'अस्वाङ्गपूर्वदाद्वा' इति ङीप्।

**खयो द्वितीय इति**। 'खयः' इति षष्ठी। **द्वितीया इति**। वर्गेषु खकारादयः।।४८।।

### भावबोधिनी

आक्रोश गम्यमान रहने पर—इसको क्यों कहा गया? तत्त्वकथन = सच बात कहने पर तो द्वित्व होता ही है— पुत्रान् अत्ति—इस अर्थ में—पुत्त्रादिनी। अपने बच्चों को ही खा डालने वाली बाघिन। [ यहाँ यथार्थ बात कही गई है। आक्रोश नहीं है। अतः निषेध न होकर यर् = त् का द्वित्व होता है। ]

❁ 'पुत्रादिनी' शब्द परे रहते भी 'पुत्र' के यर् का द्वित्व नहीं होता है—ऐसा कहना चाहिये। ❁ उदा॰ पुत्र-पुत्रादिनी त्वमसि पापे! अरे पापिनी तू पुत्रों तथा उनके पुत्रों अर्थात् पौत्रों को खा डालने वाली हो।

❁ हत तथा जग्ध—इन शब्दों के परे रहते भी 'पुत्र' का द्वित्व विकल्प से होता है—ऐसा कहना चाहिये। ❁ उदा॰ पुत्त्रहती, पुत्रहती। पुत्त्रजग्धी, पुत्रजग्धी। [ इनमें 'पुत्र' के यर् = त् का द्वित्व विकल्प से होता है। ]

❁ पौष्करसादि आचार्य के मत में शर् परे रहते चय् का द्वितीय वर्ण आदेश हो जाता है। ❁ [ पौष्करसादि का मत होने से अन्यों के मत में न होने से विकल्प फलित होता है। ] चय् के द्वितीय वर्ण आदेश होते हैं पौष्करसादि आचार्य के मत से। उदा॰ तकार का द्वितीय वर्ण थकार होता है—(वत्सः) वथ्सः। ककार का खकार होता है—(क्षीरम्), ख्षीरम्। पकार का फकार होता है—(अप्सराः) अफ्सराः।।४८।।

**३९६२. शरोऽचि।।४९।। (३४०)**

**'न' इति वर्तते। शरोऽचि परतो न द्वे भवतः। 'अचो रहाभ्याम्' (८।४।४६) इति प्राप्तिः प्रतिषिध्यते। कर्षति। वर्षति। आकर्षः। अक्षदर्शः।**

**❁ अचीति किम्? दश्‍र्यते। ❁**

**३९६३. त्रिप्रभृतिषु शाकटायनस्य ।।५०।। (५६)**

**त्रिप्रभृतिषु वर्णेषु संयुक्तेषु शाकटायनस्याचार्यस्य मतेन द्वित्वं न भवति। इन्द्रः। चन्द्रः। उष्ट्रः। राष्ट्रम्। भ्राष्ट्रम्।।**

**३९६४. सर्वत्र शाकल्यस्य ।।५१।। (५७)**

**न्यासः**

**शरोऽचि**।। **कर्षतीति**। 'कृष विलेखने'। **वर्षतीति**। 'पृषु वृषु मृषु सेचने'। **आदर्श इति**। 'दृशिर प्रेक्षणे'। अधिकरणे घञ्। **दर्श इति**। अत एव करणे घञ्।।४९।।

**त्रिप्रभृतिषु शाकटायनस्य**।। इन्द्र इत्यादौ 'अनचि च' इति प्राप्तिः। **इन्द्रः, चन्द्रः, मन्द्र इति**। 'इदि परमैश्वर्ये', 'चदि आह्लादे', 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु'। 'स्फायितञ्चि' त्यादिना रक्तप्रत्ययः। **राष्ट्रम्, भ्राष्ट्र इति**। 'राज भ्राज इति दीप्तौ'। सर्वधातुभ्य ष्ट्रन्प्रत्ययः, व्रश्चादिसूत्रेण षत्वम्। शाकटायनग्रहणं पूजार्थम्। नित्य एवायं विधि; अन्यथोत्तरसूत्रेणैव सिद्धत्वादस्यारम्भो निरर्थकः स्यात्।।५०।।

**सर्वत्र शाकल्यस्य**।। अत्रिप्रभृत्यर्थोऽयमारम्भः। **अर्क इत्यादौ** 'अचो रहाभ्यां द्वे' इति प्राप्तिः। आरम्भसामर्थ्यादेवात्रिप्रभृतिष्वपि सिद्धे सर्वत्रग्रहणं पूर्वस्यापि प्राप्ते प्रतिषेधो यथा स्यादित्येवमर्थम्। असति तस्मिंन्

**पदमञ्जरी**

**शरोऽचि**।। **आदर्श इति**। दृशेरधिकणे घञ्। **दर्श इति**। अत्राप्यधिकरणे घञ्। विपरीतलक्षणा चेयम्—न दृश्यतेऽस्मिंश्चन्द्रमा इति दर्श इति।।४९।।

**त्रिप्रभृतिषु शाकटायनस्य**।। **इन्द्र** इत्यादौ नकारदकारयोर्द्विर्वचनाभावः। **भ्राष्ट्रमिति**। 'दीर्घादाचार्याणाम्' इत्यस्यासिद्धत्वात् त्रिप्रभृतिष्वयमेव प्रतिषेधो भवतीति मन्यते।।५०।।

**भावबोधिनी**

'न' की अनुवृत्ति [ 'नादिन्याक्रोशे' सूत्र से ] होती है। अच् परे रहते शर् का द्वित्व नहीं होता है। 'अचो रहाभ्यां द्वे' इससे प्राप्त (रेफ-हकार से परे यर् के) द्वित्व का प्रतिषेध किया जाता है। उदा॰ कर्षति। वर्षति। आकर्षः। अक्षदर्शः। [ इनमें ष और श रेफ से परे है। द्वित्व प्राप्त है उसका निषेध होता है। ]

अच् परे रहते—इसका क्या फल है? दश्‍र्यते। [ दर्श्यते—इसमें शर् के बाद अच् नहीं 'य' है। अतः निषेध न होकर द्वित्व होता है—दश्‍र्श्यते। ]।।४९।।

तीन आदि अर्थात् तीन या इससे अधिक संयुक्त वर्णों में शाकटायन आचार्य के मत से द्वित्व नहीं होता है। उदा॰ इन्द्रः। चन्द्रः। उष्ट्रः। राष्ट्रम्। भ्राष्ट्रम्। [ सभी में अच् से परे यर् है और यर् से परे अनच् है। अतः नकार और दकार के द्वित्व की प्राप्ति है। प्रस्तुत सूत्र से निषेध हो जाता है। यहाँ शाकटायन का ग्रहण पूजार्थ है। अतः यह द्वित्वनिषेध नित्य ही है विकल्प से नहीं। अन्यथा अग्रिम सूत्र का कोई औचित्य नहीं रह जायगा। ]।।५०।।

शाकल्य आचार्य के मत से सर्वत्र द्वित्व नहीं होता है। [ यह सूत्र सभी प्रकार की द्वित्वप्राप्ति का निषेध करता है। ] उदा॰

**शाकल्याचार्यस्य मतेन सर्वत्र द्विर्वचनं न भवति। अर्कः। मर्कः। ब्रह्मा। अपह्नुते।।**

## ३९६५. दीर्घादाचार्याणाम्।।५२।। (५८)

**दीर्घादुत्तरस्याचार्याणां मतेन न द्वित्वं भवति। दात्रम्। पात्रम्। मूत्रम्। सूत्रम्।।**

## ३९६६. झलां जश् झशि ।।५३।। (५२)

**झलां स्थाने जशादेशो भवति झशि परतः। लब्धा, लब्धुम्, लब्धव्यम्। दोग्धा, दोग्धुम्, दोग्धव्यम्। बोद्धा, बोद्धुम्, बोद्धव्यम्।**

**झशीति किम्? दत्तः। दत्थः। दध्मः।।**

### न्यासः

प्रत्यासत्तेः 'अनचि च' इत्यस्या एव प्राप्तेरयं निषेधः स्यात्।

**शाकल्यग्रहणं** पूजार्थम्, न विकल्पार्थम्। विधिरपि योगद्वयेनोच्यते, प्रतिषेधोऽपि। अत्र सामर्थ्यादेव विकल्पो भविष्यति; अन्यथा विधेरनवकाशः स्यात्।।५१।।

**दीर्घादाचार्याणाम्। नित्यार्थोऽयमारम्भः।** अत्रारम्भसामर्थ्यादेव सिद्ध आचार्यग्रहणं पूजार्थम्। दात्रमित्यादौ 'अनचि च' इति प्राप्तिः।।५२।।

**झलां जश् झशि।। लब्धेत्यादि।** लभेस्तृच्-तुमुन्-तव्याः। 'झषस्तथोर्धोऽधः' इति धकारे झशि भकारस्य जश्त्वम् बकारः। **देग्धेति।** 'दिह उपचये', 'दादेर्धातोर्घः' इति हकारस्य घकारः। **बोद्धेति।** जश्त्वेन धकारस्य दकारः।।५३।।

### पदमञ्जरी

**सर्वत्र शाकल्यस्य।।** अत्रिप्रभृत्यर्थोऽयमारम्भः।।५१।।

**दीर्घादाचार्याणाम्। दात्रमित्यादौ** 'अनचि च' इति प्राप्तिः।।५२।।

**झलां जश् झशि।।** उदाहरणेषु भ-घ-धानां ब-ग-दाः।।५३।।

### भावबोधिनी

अर्कः। मर्कः। ब्रह्मा। अपह्नुते। [ इनमें 'अचो रहाभ्यां द्वे' से द्वित्व प्राप्त है उसका निषेध होता है। जहाँ दो यर् हैं वहाँ भी यह द्वित्व-निषेध होता है—अत्रि। ]।।५१।।

दीर्घ से उत्तरवर्ती यर् का द्वित्व नहीं होता है आचार्यों के मत से। उदा० दात्रम्। पात्रम्। मूत्रम्। सूत्रम्। [ सभी में 'अनचि च' सूत्र से यर् = तकार का द्वित्व प्राप्त है। इससे निषेध हो जाता है। इसमें 'आचार्य' का ग्रहण पूजार्थ है क्योंकि सूत्र बनाने से ही निषेध सिद्ध है। ]।।५२।।

झलों के स्थान पर श् आदेश झश् परे रहते होता है। उदा० लब्धा। लब्धुम्। लब्धव्यम्। [ लभ् धातु से तृच्, तुमुन्, तव्यत् प्रत्यय करने पर 'झषस्तथोर्धोऽधः' सूत्र से तकार का धकार करने के बाद प्रस्तुत सूत्र से झल् = भ् का जश् = ब् होता है। ] दोग्धा, दोग्धुम्, दोग्धव्यम् [ दुह से तृच्, तुमुन्, तव्यत् परे रहते पूर्ववत् तकार का धकार, 'दादेर्धातोर्घः' सूत्र से हकार का घकार-दघ् + धा, जश्त्व से घ का ग्, उपधा का गुण—दोग्धा, दोग्धुम्, दोग्धव्यम्। ]बोद्धा, बोद्धुम्, [ बुध् से तृच्, आदि करने पर पूर्ववत् त् का ध्, उपधागुण, झल् = ध का जश् = द् बोद्धा, बोद्धुम्, बोद्धव्यम्। ]

झश् परे रहते-इसका क्या फल है? दत्तः। दत्थः। दध्मः। [ यहाँ दध् के बाद तस्, थस्, मस् है, झश् नहीं है अतः जश्त्व न होकर 'खरि च' सूत्र से चर्त्व करने पर ध् का त् होता है। मस् परे चर्त्व भी नहीं होता है। ]।।५३।।

## ३९६७. अभ्यासे चर्च ।।५४।। (२१८२)

**अभ्यासे वर्त्तमानानां झलां चरादेशो भवति, चकाराज्जश्च। चिखनिषति। चिच्छित्सति। टिठकारयिषति। तिष्ठासति। पिफकारयिषति। बुभूषति। जिघत्सति। डुढौकिषते।**

**❁ प्रकृतिचरां प्रकृतिचरो भवन्ति ❁—चिचीषति। टिटीकिषते। तितनिषति।**

**न्यासः**

**अभ्यासे चर्च**।। चकारेण जश्ग्रहणमनुवर्त्तते, तेनोत्तरत्र तदनुवृत्तिर्न भवति। **चिखनिषतीति**। खनतेः सन्, द्विर्वचनम्, हलादिशेषः, 'कुहोश्चुः' इति चुत्वम्-छकारः, तस्यानेन चकारः। **चिच्छित्सतीति**। छिदेः सन्, द्विर्वचनम्, 'छे च' इति तुक्, चुत्वम्। **टिठकारयिषतीति**। ठकारमाचष्ट इति 'तत्करोति तदाचष्टे' इति णिच्, इष्ठवद्भावाट्टिलोपः, सन्, इट्, गुणः, अयादेशः। **तिष्ठासतीति**। 'शर्पूर्वाः खयः' शेषः। **पिफारयिषतीति**। टिठकारयिषतीत्यनेन तुल्यसाधनम्। अयं तु विशेषः—फकारशब्दाण्णिच्।

**प्रकृतिचरां प्रकृतिचरो भवन्तीति**। जश्त्वबाधनार्थम्। पर्जन्यवल्लक्षणप्रवृत्त्या प्रकृतिरूपाश्चरः प्रकृतिचरः स्थानिनाऽभिन्नारूपा इत्यर्थः। **चिचीषतीति**। 'अज्झनगमां सनि' इति दीर्घः। **तितीर्षतीति**। 'ॠत इद्धातोः' इतीत्त्वं रपरत्वं च, 'हलि च' इति दीर्घः। **जिझकारयिषतीति**। टिठकारयिषतीत्यनेन तुल्यसाधनम्। अत्र झकारशब्दाण्णिजिति विशेषः। **जिघत्सतीति**। अदेः सन्, 'लुङ्सनोर्घस्लृ' इति घस्लादेशः, पूर्ववदभ्यासस्य चुत्वम्—झकारः, तस्य जश्त्वम्—जकारः, 'सः स्यार्धधातुके' इति सकारस्य तकारः। **डुढौकिषत इति**। ढौकतेः सन्।

**पदमञ्जरी**

**अभ्यासे चर्च**।। **चिखनिषतीति**। खनेः सन्, द्विर्वचनम्, 'कुहोश्चुः' इति चुत्वम्—छकारः, तस्य चर्त्वम्—चकारः। **टिठकारयिषतीति**। ठकाररमाचष्ट इति णिच्, टिलोपः, सन्, ठकारस्य टकारः। **तिष्ठासतीति**। 'शर्पूर्वाः खयः इति थकारस्य शेषः, तस्य चर्त्वं तकारः।

**प्रकृतिचरां प्रकृतिचर इति**। जश्त्वबाधनार्थं पर्जन्यवल्लक्षणप्रवृत्त्या प्रकृतिरूपाश्चरः स्थानिनाऽभिन्नरूपा भवन्तीत्यर्थः। एतच्चान्तरमपरिभाषया लभ्यते।

**भावबोधिनी**

अभ्यास में वर्तमान झलों के स्थान पर चर् आदेश होते हैं, साथ ही सूत्रस्थ 'च' के बल से जश् भी होते हैं। [ चर् और जश् होने का निर्णय आगे कहा जायगा। ] उदा० चिखनिषति। [ 'खन्' से सन् 'द्वित्व, अभ्यास कार्य—ख खन् इ स ति, 'कुहोश्चुः' सूत्र से अभ्यास कवर्ग = खकार का छकार आदेश, इस छकार का चर्त्व प्रस्तुत सूत्र से करने पर चकार आदेश—चखन् इसति, 'सन्यतः' से अभ्यास अकार का इत्व, षत्व—चिखनिषति। ] चिच्छित्सति। [ छिदिर् = छिद् + सन्, द्वित्वादि सभी कार्य पूर्ववत् करने पर छिछिद्सति, 'छे च' सूत्र से तुक्, श्चुत्व, प्रस्तुत सूत्र से छकार का चकार, दकार का चर्त्व—चिच्छित्सति। ] टिठकारयिषति। [ ठकारम् आचष्टे—इस अर्थ में णिच्, इष्ठवद्भाव से टिलोप ठ्इ + सन्, द्वित्वादि के बात ठि ठि + इसति, णि का गुण, अय् आदेश, षत्व, प्रस्तुत सूत्र से चर्त्व ठ का ट—टिठकारयिषति। ] तिष्ठासति। [ स्था + सन्, द्वित्वादि के बाद 'शर्पूर्वाः खयः' सूत्र से खय् = थ शेष, शर् का लोप थ स्था + स + ति, अभ्यास का इत्व 'सन्यतः' सूत्र से, थकार का तकार = चर् प्रस्तुत सूत्र से 'इ' से परे स् का षत्व, ष्टुत्व तिष्ठासति। ] पिफारयिषति। [ फकारम् आचष्टे—इस अर्थ में फ + णिच्, शेष सारी प्रक्रिया 'टिठकारायिषति' के समान होती है। केवल चर्त्व फ का प् होता है पिफारयिषति। ] बुभूषति। [ भू + सन्, अभ्यास का जश्त्व = ब बूभूषति ] जिघत्सति। [ अद् + सन्, 'लुङ्सनोर्घस्लृ' सूत्र से अद् का घस् आदेश—घस् + सन्, द्वित्वादि के बाद—घिघस् + स + ति, अभ्यास का जश्त्व जिघस् + सति, 'सस्यार्धधातुके' सूत्र से 'स्' का 'त'—जिघत्, सति। ] डुढौकिषते। [ 'ढौकृ गतौ' से सन्, द्वित्वादि के बाद अभ्यास का जश्त्व करने पर ढ का ड होता है—डुढौकिषते। अन्त के तीन उदा० जश् आदेश के हैं। ]

**❁ प्रकृतिजशां प्रकृतिजशो भवन्ति ❁–जिजनिषते। बुबुधे। ददौ। डिड्ये।।**

## ३९६८. खरि च ।।५५।। (१२१)

**खरि च परतो झलां चरादेशो भवति। [१]जश्ग्रहणं नानुवर्तते; पूर्वसूत्रे चानुकृष्टत्वात्। भेत्ता, भेत्तुम्, भेत्तव्यम्। युयुत्सते। आरिप्सते। आलिप्सते।।**

**न्यासः**

**प्रकृतिजशां प्रकृतिजशो भवन्तीति**। चर्बाधनार्थं पूर्ववत् प्रकृत्या स्थानिनाऽभिन्नरूपा जशः प्रकृतिजशः। **जिजनिषत इति**। 'पूर्ववत् सनः' इत्यात्मनेपदम्। **बुबुध इति** अनुदात्तेत्त्वादात्मनेपदम्, 'लिटस्तझयोरेशिरेच्' इत्येश्। **ददाविति**। 'आत औ णलः' इत्यौत्त्वम्। **डिड्ये इति**। 'डीङ् विहायसा गतौ', पूर्ववदेशादेशः, स्थानिवद्भावाड् डीत्यस्य द्विर्वचनम्।।५४।।

**खरि च**।। **युयुत्सत इति**। 'पूर्ववत् सनः' इत्यात्मनेपदम्। **आरिप्सत इत्यादि**। 'रभिलभिभ्यां सन् 'सनि मीमा' इत्यादिनेस्' 'स्कोः संयोगाद्योरन्ते च' इति सकारलोपः।

समुच्चयार्थश्चकारः—न केवलमभ्यासे चरो भवन्तीति, अपि तु खरि च। असति ह्यस्मिंश्चकारेऽनन्तरविहितं यच्चर्त्वं तत् खरादावभ्यासनिमित्ते प्रत्यये स्यात्—तिष्ठासतीत्यादौ, न तु चखाद—इत्यादावपीति कस्यचिन्मन्दधियो भ्रान्तिः स्यात्।।५५।।

**पदमञ्जरी**

**प्रकृतिजशां प्रकृतिजश इति**। व्याख्यातम्। **डिड्य इति**। डीङो लिटि द्विर्वचने 'एरनेकाचः' इति यण्।।५४।।

**खरि च**।। **युयुत्सत इति**। युधेः सन्, धकारस्य तकारः। **आरिप्सते, आलिप्सत इति**। रभिलभ्योः 'सनि मीमाघु' इत्यादिना अच इस्, 'स्कोः संयोगाद्योः' इति सलोपः, भकारस्य पकारः।।५५।।

**भावबोधिनी**

[ यह शंका होती है कि झल् के अन्तर्गत चर् और जश् दोनों ही आते हैं' तब चर् के स्थान पर जश् या जश् के स्थान पर चर् क्यों न हों जाय? इसका समाधान यह है— ] ❁ प्रकृत्या जो चर् हैं वे अभ्यास में भी प्रकृत्या चर् ही रहते हैं अर्थात् उनका जश्त्व नहीं होता है, ❁ उदा० चिचीषति। टिटीकिषते। तितनिषति। ] [ चिञ्, टीकृ, तनु—इन से सन् प्रत्यय, द्वित्वं, अभ्यासादिकार्य के बाद अभ्यास के झल् का जश्त्व और चर्त्व दोनों प्राप्त है। यहाँ चर् होने से चर् ही रहते हैं। ]

❁ प्रकृत्या जशों के स्थान पर प्रकृत्या जश् ही रहते हैं अर्थात् चर् नहीं होते हैं ❁, उदा० जिजनिषते। बुबुधे। ददौ। डिड्ये। [ जन् + सन्, बुध, दा, डीङ्—इनसे लिट् होता है। यहाँ अभ्यास के जशों का चर् न होकर जश् ही रहते हैं। ]।।५४।।

खर् प्रत्याहार के वर्ण परे रहने पर भी झलों के स्थान पर चर् आदेश होते हैं। इस सूत्र में जश्ग्रहण की अनुवृत्ति नहीं होती है क्योंकि पूर्ववर्ती सूत्र में उसकी अनुवृत्ति हो चुकी है।

**विमर्श**—किसी-किसी संस्करण में 'झल्ग्रहणं' नानुवर्तते' ऐसा पाठ है जो अशुद्ध है क्योंकि स्थानी के रूप में झलों का सम्बन्ध आवश्यक है। अतः 'जश्ग्रहणं नानुवर्तते' यही पाठ मानना उचित है क्योंकि यह सूत्र केवल चर्त्व ही करता है जब कि 'अभ्यासे चर्च' सूत्र चर्त्व और जश्त्व दोनों करता है।

उदा० भेत्ता, भेत्तुम्, भेत्तव्यम्। [ भिद् धतु से तृच्, तुमुन्, तव्यत् प्रत्यय परे रहते झल् द् का चर् त् हो जाता है। ] युयुत्सते। [ युध् + सन् ] आरिप्सते [ आङ् रभ् + सन् ] आलिप्सते। [ आ लभ् + सन्, द्वित्वादि के बाद ब् के स्थान पर चर्त्व से प् हो जाता है। ]।।५५।।

---

१. 'झल्ग्रहणं नानुवर्तते–' इति मुद्रितः पाठोऽसमीचीनः, स्थानित्वेन तस्यानुवृत्तेरावश्यकत्वादिति बोध्यम्।

**३९६९. वावसाने ।।५६।। (२०६)**

**'झलाम्', 'चर्' इति वर्तते। अवसाने वर्तमानानां झलां वा चरादेशो भवति। वाक्, वाग्। त्वक्, त्वग्। श्वलिट्, श्वलिड्। त्रिष्टुप्, त्रिष्टुब्।।**

**३९७०. अणोऽप्रगृह्यस्यानुनासिकः।।५७।। (११०)**

**अणोऽप्रगृह्यसंज्ञस्यावसाने वर्तमानस्य वाऽनुनासिकादेशो भवति। दधिँ, दधि। मधुँ मधु। कुमारीँ, कुमारी।**

**अण इति किम्? कर्तृ। हर्तृ। अप्रगृह्यस्येति किम्? अग्नी। वायू।।**

**३९७१. अनुस्वारस्य ययि परसवर्णः।।५८।। (१२४)**

**न्यासः**

**वावसाने**।। 'झलां जशोऽन्ते' इति नित्ये जश्त्वे प्राप्तेऽवसाने वा चरो विधीयन्ते। वावचनात् पक्षे जश्त्वमपि भवत्येव।।५६।।

**अणोऽप्रगृह्यस्यानुनासिकः**।। 'अणः' इति पूर्वेण णकारेण प्रत्याहारग्रहणम्। अन्यथाऽसन्देहार्थम्, 'अचः' इति कुर्यात्, न च पदान्तहलोऽणः सम्भवन्ति। **दधिँ, मधुँ इति**। 'स्वमोर्नपुंसकात्' इति स्वमोर्लुक्। **अग्नी, वायू इति**। 'प्रथमयोः पूर्वसवर्णः' इति दीर्घः, 'ईदूदेद्द्विवचनम्' इति प्रगृह्यसंज्ञा।।५७।।

**अनुस्वारस्य ययि परसवर्णः**।। **शङ्कितेत्यादि**। 'शकि शङ्कायाम्', 'उछि उच्छे', 'कुडि दाहे', 'टुनदि समृद्धौ', 'कपि चलने'—एभ्यस्तृजादयः, इदित्वान्नुम्, 'नश्चापदान्तस्य झलि' इत्यनुस्वारः, तस्यानेन परसवर्णः।

**पदमञ्जरी**

**वावसाने**।। 'झलां जशोऽन्ते' इति नित्ये जश्त्वे प्राप्ते चर्त्वं विधीयते, वावचनात् पक्षे सोऽपि भवति।५६।।

**अणोऽप्रगृह्यस्यानुनासिकः**।। 'अणः' इति पूर्वेण णकारेण प्रत्याहारः। **अग्नी, वायू इति**। 'ईदूदेत्' इति प्रगृह्यसंज्ञा।।५७।।

**अनुस्वारस्य ययि परसवर्णः**।। **शङ्कितेत्वादि**। 'शकि शङ्कायाम्', 'उछि उञ्छे', 'कुडि दाहे', 'टुनदि

**भावबोधिनी**

'झलाम्' 'चर्' [ 'झलों के' 'चर्' ] इन दोनों की अनुवृत्ति होती है। अवसान में विद्यमान झलों के स्थान पर चर् आदेश विकल्प से होता है। उदा० वाक्, वाग्। त्वक्, त्वग्। श्वलिट्, श्वलिड्। त्रिष्टुप्, त्रिष्टुब्। [ ग्, ड्, भ् के स्थान पर चर्त्व करने पर क्, ट्, प् होते हैं। पक्ष में जश्त्व वाले रूप रहते हैं। 'विरामोऽवसानम्' सूत्र के अनुसार आगे वर्णों का अभाव रहने पर 'अवसान' माना जाता है। अतः जब एक पद के उच्चारण के बाद विलम्ब से अन्य पद उच्चारित हो तो अवसान माना जाता है। ]।।५६।।

अवसान में वर्तमान अप्रगृह्य अण् का विकल्प से अनुनासिक आदेश होता है। उदा० दधिँ, दधि। मधुँ, मधु। कुमारीँ, कुमारी। [ यहाँ अण् = अइउण् के अन्त का विकल्प से अनुनासिक आदेश होता है। अतः एक रूप अनुनासिक चिह्न चन्द्रबिन्दु ँ के साथ और दूसरा अननुनासिक शुद्ध भी रहता है। ]

अण् = अइउ—इसके ग्रहण का क्या प्रयोजन है? कर्तृ, हर्तृ। [ ऋकार अण् में नहीं आता है अतः इसका विकल्प से अनुनासिक नहीं होता है। ] 'अप्रगृह्य' = जिसकी प्रगृह्य संज्ञा नहीं हुई है उसका—इसके ग्रहण का क्या फल है? अग्नी, वायू। [ ये ईदन्त, ऊदन्त द्विवचन रूप हैं। 'ईदूदेदन्तम्' सूत्र से प्रगृह्य संज्ञा होती है। अतः अनुनासिक नहीं होता है। ]।।५७।।

यय् प्रत्याहार का वर्ण परे रहते अनुस्वार का परसवर्ण आदेश होता है। उदा० शङ्किता, शङ्कितुम्, शङ्कितव्यम्। [ 'शकि' धातु के इकार की इत्संज्ञा लोपके बाद 'इदितो नुम् धातोः' सूत्र से नुम् = न् आगम, 'नश्चापदान्तस्य झलि' सूत्र से न् का अनुस्वार

**अनुस्वारस्य ययि परतः परसवर्ण आदेशो भवति। शङ्किता, शङ्कितुम्, शङ्कितव्यम्। उञ्छिता, उञ्छितुम्, उञ्छितव्यम्। कुण्डिता, कुण्डितुम्, कुण्डितव्यम्। नन्दिता, नन्दितुम्, नन्दितव्यम्। कम्पिता, कम्पितुम्, कम्पितव्यम्।**

**इह 'कुर्वन्ति, वृषन्ति'–इत्यत्र णत्वस्यासिद्धत्वात्पूर्वं नकारस्यानुस्वारः क्रियते, तस्यापि परसवर्णेन पुनर्नकार एव भवति, तस्याप्यसिद्धत्वात् पुनर्णत्वं न भवति। एवमनुस्वारीभूतो णत्वमतिक्रामतीति।**

**न्यासः**

**कुर्वन्ति, कृषन्तीति**। करोतेः, 'कृष विलेखने' इत्यस्माच्च तौदादिकात् परस्य लडादेशस्य झेः 'झोऽन्तः' इत्यन्तादेशः।

नकारस्यानुस्वारे तस्य च परसवर्णे नकारे सति 'अट्कुप्वाङ्नुम्' इत्यादिना णत्वं प्राप्नोति, तत् कस्मान्न भवति? इत्याह—**इहेत्यादि**। णत्वमत्रानुस्वारात् पूर्वं स्यात्? पश्चाद्वा? पूर्वं तावन्न भवति, यस्मादनुस्वारे कर्त्तव्ये, णत्वस्यासिद्धत्वम्, अतः पूर्वं नकारस्यानुस्वार एव क्रियते। परसवर्णे नकारे कृते पश्चादपि न भवति; णत्वे कर्त्तव्येऽनुस्वारस्थानिकस्यासिद्धत्वात्। **परसवर्णेनेति**। परसवर्णार्थेन शास्त्रेणेत्यर्थः। भवति हि तादर्थ्यात् ताच्छब्द्यम्। यथा प्रदीपार्था मल्लिका प्रदीप इति। **पुनरिति**। अनुस्वारक्रियाया उत्तरकालमित्यर्थः। **एवमित्यादिनाऽनुस्वारीभूतो नकारो णत्वमतिक्रामतीति** भाष्ये णत्वस्यातिक्रमणमनुस्वारीभूतस्य नकारस्योक्तम्। तदेवासिद्धत्वात् परसवर्णस्य नकारस्य णत्वं न सम्पद्यत इति दर्शयति। **अतिक्रामतीति**। अतिक्रम्य वर्त्तत इत्यर्थः।

**पदमञ्जरी**

समृद्धौ', 'कपि चलने', इदित्त्वान्नुम्, 'नश्चापदान्तस्य झलि' इत्यनुस्वारः, तस्य ककारादिषु परतो यथासंख्यं परसवर्णा वर्गपञ्चमा ङकारादयः।

कुर्वन्ति, कृषन्तीत्यत्र झेरन्तादेशे नकारस्य णत्वं प्राप्नोति, तत्कस्मान्न भवति? इत्याह—**इहेति**। णत्वमनुस्वारात्पूर्वं न भवति, यस्माण्णत्वस्यासिद्धत्वात् पूर्वमनुस्वार एव क्रियते, पश्चादपि न भवति,

**भावबोधिनी**

उसका परसवर्ण = परवर्ती वर्ण के वर्ग का पञ्चम अक्षर होता है। ] उञ्छिता, उञ्छितुम्, उञ्छितव्यम्। [ 'उछि' के इ की इत्संज्ञा के बाद पूर्ववत् सभी प्रक्रिया होती है। पर में चवर्ग होने से अनुस्वार का ञ होता है। ] कुण्डिता, कुण्डितुम्, कुण्डितव्यम्। [ 'कुडि' धातु के इकार की इत्संज्ञा लोप के बाद पूर्वोक्त सभी प्रक्रिया, परवर्ती टवर्ग का पञ्चमवर्ण 'ण' होता है। ] नन्दिता, नन्दितुम्, नन्दितव्यम्। [ 'टु नदि' धातु में भी इलोप, टुलोप तथा पूर्वोक्त सारी प्रक्रिया के बाद परसवर्ण 'न्' होता है। ] कम्पिता, कम्पितुम्, कम्पितव्यम्। [ 'कपि' में इका लोप, सारी प्रक्रिया अनुस्वार का परसवर्ण = पवर्ग का पञ्चम वर्ण 'म्' होता है। ]

'कुर्वन्ति' कृषन्ति—आदि में णत्व के असिद्ध हो जाने से पहले नकार का अनुस्वार किया जाता है, उस अनुस्वार का भी परसवर्ण द्वारा पुनः नकार ही होता है, उस नकार के भी असिद्ध हो जाने से णत्व नहीं होता है। इस प्रकार अनुस्वार बना हुआ नकार णत्व का अतिक्रमण करके रहता है अर्थात् 'न्' ही रहता है।

यय् परे रहते—इसका क्या फल है? अक्रंस्यते। आचिक्रंस्यते। [ इनमें अनुस्वार के बाद सकार है जो 'यय्' में नहीं आता है। अतः परसवर्ण न होकर अनुस्वार ही रहता है। ]

**विमर्श**—कुर्वन्ति, कृषन्ति—आदि शब्दों में रेफ से परे होने के कारण झि के आदेशभूत 'अन्ति' के न् का 'अट्कुप्वाङ्' सूत्र से णत्व क्यों नहीं होता है क्योंकि णत्व के सभी कारण इसमें विद्यमान हैं। इस शंका का समाधान यह है कि णत्व को अनुस्वार करने के पहले होना चाहिये अथवा बाद में? पहले नहीं हो सकता क्योंकि अनुस्वार की कर्तव्यता में णत्व असिद्ध हो जाता है क्योंकि 'मोऽनुस्वारः' (८।३।२३) है और 'अट्कुप्वाङ्' (८।४।२) है, त्रिपादी में भी पूर्व के प्रति पर असिद्ध होता है—

**ययीति किम्? आक्रंस्यते। आचिक्रंस्यते।।**

## ३९७२. वा पदान्तस्य ।।५९।। (१२५)

**पदान्तस्यानुस्वारस्य ययि परतो वा परसवर्णादेशो भवति। तङ्कथञ्चित्रपक्षण्डयमानन्नभः-स्थम्पुरुषोऽवधीत्, तं कथं चित्रपक्षं डयमानं नभःस्थं पुरुषोऽवधीत्।।**

## ३९७३. तोर्लि ।।६०।। (११७)

**तवर्गस्य लकारे परतः परसवर्णादेशो भवति। अग्निचिल्लुनाति। सोमसुल्लुनाति। भवाँल्लुनाति। महाँल्लुनाति।।**

### न्यासः

**आक्रंस्यत इति**। आङ्पूर्वात् क्रमेर्लृट् 'आङ् उद्गमने' इत्यात्मनेपदम्। **आचिक्रंसत इति**। 'पूर्वत् सनः' इत्यात्मनेपदम्।।५८।।

**वा पदान्तस्य**।। वावचनं पूर्वस्य नित्यत्वज्ञापनार्थम्, द्वयोर्विभाषयोर्मध्ये ये वै विधयस्ते नित्या भवन्तीति कृत्वा। असति वाग्रहणे विपर्ययः सम्भाव्येत—पूर्वो विधिर्विभाषा, अयं तु विधिराम्भसामर्थ्यान्नित्य इति।।५९।।

**तोर्लि**।।६०।।

### पदमञ्जरी

अनुस्वारस्थानिकस्यास्य परसवर्णस्य णत्वे कर्त्तव्ये असिद्धत्वात्। **परसवर्णेनेति**। परसवर्णार्थेन शास्त्रेणेत्यर्थः। **एवमित्यादि**। अनुस्वारीभूतो णत्वमतिक्रामतीति भाष्ये यदुक्तं तदेवमुक्तप्रकारेणेत्यर्थः।।५८।।

**वा पदान्तस्य**।। **तङ्कथमित्यादि**। ककारादिषु परतो ङकारादयः क्रमेण भवन्ति।।५९।।

**तोर्लि**।। अत्र तकारस्य शुद्धो लकारः, नकारस्यानुनासिकः।।६०।।

### भावबोधिनी

'पूर्वत्रासिद्धम्' (८।२।१)। इस कारण पहले अनुस्वार ही होता है। अब इस अनुस्वार का परसवर्ण करने पर 'न' हो जाने पर भी णत्व नहीं हो सकता क्योंकि णत्व की कर्तव्यता में अनुस्वारस्थानिक नत्व असिद्ध हो जाता है क्योंकि परसवर्ण-विधायक परवर्ती है और णत्वविधायक पूर्ववर्ती है।

अतः अनुस्वार की कर्तव्यता में णत्व और णत्व की कर्तव्यता में परसवर्ण असिद्ध हो जाने से परसवर्ण 'न' ही रहता है, णत्व नहीं हो सकता। इसी को सरलशब्दों में सिद्धान्त कौमुदीकार ने लिखा है—'कुर्वन्ती' त्यत्र णत्वे प्राप्ते तस्यासिद्धत्वादनुस्वारे परसवर्णे च कृते तस्यासिद्धत्वान्न णत्वम्। ('अनुस्वारस्य ययि परसवर्णः' सूत्र पर)।।५८।।

पदान्त अनुस्वार का यय् परे रहते विकल्प से परसवर्ण आदेश होता है। उदा० तं कथं चित्रपक्षं डयमानं नभःस्थं पुरुषोऽवधीत् [ यहाँ परसवर्ण नहीं है परसवर्ण करने पर पाँचों वर्गों के पञ्चम अक्षर क्रमशः हुये हैं— ] तङ्कथञ्चित्र-पक्षण्डयमानम्नभस्थम्पुरुषोऽवधीत्।'

**विमर्श**—'वा पदान्तस्य' में पदान्त अनुस्वार कहने से 'अनुस्वारस्य ययि परसवर्णः' सूत्र अपदान्त अनुस्वार का नित्य ही परसवर्ण करता है। अतः अपदान्त प्रयोगों में अनुस्वार का प्रयोग अशुद्ध है। यह पदान्तत्व पाणिनीय सूत्रों द्वारा निर्धारित किया गया है।।५९।।

लकार परे रहते तवर्ग का परसवर्ण आदेश होता है। उदा० अग्निचिल्लुनाति। सोमसुल्लुनाति। भवाँल्लुनाति। महाँल्लुनाति। [ जहाँ तवर्ग के अन्य चार अक्षर हैं उनमें तो 'ल्' होता है किन्तु 'न्' के स्थान पर 'अनुनासिक लँ् आदेश ही होता है शुद्ध ल् नहीं क्योंकि स्थानी और आदेश में सादृश्य देखा जाता है। ]।।६०।।

**३९७४. उदः स्थास्तम्भोः पूर्वस्य ।।६१।। (११८)**

**'सवर्णः' इति वर्तते। उद उत्तरयोः स्था, स्तम्भ–इत्येतयोः पूर्वसवर्णादेशो भवति। उत्थाता उत्थातुम्, उत्थातव्यम्। स्तम्भेः खल्वपि–उत्तम्भिता, उत्तम्भितुम्, उत्तम्भितव्यम्।**

**स्थास्तम्भोरिति किम्? उत्स्नाता।**

**❀ उत्पूर्वस्य स्कन्देश्छन्दस्युपसंख्यानम्। ❀ अग्ने दूरमुत्कन्दः।**

**❀ रोगे चेति वक्तव्यम्। ❀ उत्कन्दको नाम रोगः। कन्दतेर्वा धात्वन्तरस्यैतद्रूपम्।।**

**न्यासः**

**उदः स्थास्तम्भोः पूर्वस्य**।। **उत्थातेति**। 'आदेः परस्य' इति सकारस्य महाप्राणस्याघोषस्य तादृश एव पूर्वसवर्णस्थकारः, 'खरि च' इति थकारस्य तकारः, 'अनचि च' इति पूर्वतकारस्य द्विर्वचनम्, 'झरो झरि' इति पक्ष एकस्य लोपः। **उत्तम्भितेति**। स्तम्भिः सौत्रो धातुः। **उत्स्नातेति**। 'ष्णा शौचे'।

पूर्वग्रहणं परसवर्णनिवृत्त्यर्थम्।

**उत्पूर्वस्येत्यादि**। पूर्वसवर्णे कर्त्तव्ये स्कन्देश्छन्दसि विषय उपसंख्यानम्—प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्—'व्यत्ययो बहुलम्' इति व्यत्ययेनोदः परस्य स्कन्देश्छन्दसि विषये पूर्वसवर्णो भविष्यति। **उत्कन्देति**। लोट्, सिप्, 'सेर्ह्यपिच्च' इति हिरादेशः, 'अतो हेः' इति हेर्लुक्।

**रोगे चेत्यादि**। इदमविशेषेण चछन्दसि भाषायां च रोगे वाच्य उदः परस्य स्कन्देः पूर्वसवर्णो भवतीत्येदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—पृषोदरादित्वाद् भविष्यतीति। **उत्कन्दक इति**। 'रोगाख्यायां ण्वुल्बहुलम्' इति ण्वुल्।।६१।।

**पदमञ्जरी**

**उदः स्थास्तभोः पूर्वस्य**।। परसवर्ण इति समस्तमपि सवर्णग्रहणमिह निष्कृष्य सम्बद्ध्यते। **उत्थातेति**। सकारस्य पूर्वसवर्णस्तकारः। अन्ये तु बाह्यप्रयत्नसाम्यात् थकारमिच्छन्ति। तत्र थकारद्वयस्य श्रवणम्। न च पूर्वस्य चर्त्वम्ः, तत्र कर्त्तव्येऽस्य पूर्वसवर्णस्यासिद्धत्वात्।

**रोगे चेतिं वक्तव्यमिति**। इदमविशेषेण छन्दसि, भाषायां च ।।६१।।

**भावबोधिनी**

इसमें 'सवर्णः' इसकी अनुवृत्ति होती है। 'उद्' उपसर्ग से परे 'स्था' और 'स्तम्भ' इनका पूर्वसवर्ण आदेश होता है। उदा॰ उत्थाता, उत्थातुम्, उत्थातव्यम्। 'स्तम्भ्' के उदा॰ उत्तम्भिता, उत्तम्भितुम्, उत्तम्भितव्यम्। [ उद् + स्था इस स्थिति में प्रस्तुत सूत्र से 'स्था' का पूर्वसवर्ण आदेश करना है यह सम्पूर्ण का हो अथवा केवल आदि वर्ण स् का? इसके लिये 'आदेः परस्य' यह सूत्र नियम करता है कि परवर्ती के स्थान में जो कार्य क्रिया जाना है वह उसके आदि वर्ण के ही स्थान पर होता है। अतः केवल् 'स्' का पूर्वसवर्ण होगा। चूँकि स्थानी 'सकार' अघोष और महाप्राण प्रयत्नों वाला है अतः पूर्ववर्ती तवर्ग में भी अघोष तथा महाप्राण 'थकार' ही पूर्वसवर्ण होता है—उद्थ् थाता, 'खरि च' से पूर्वथकार का चर्त्व से तकार, द्, का भी चर्त्व से तकार, 'अनचि च' से पूर्वसवर्ण तकार का द्वित्व 'उत् त् त् थानम्'। 'झरो झरि सवर्णे, से विकल्प से एक त् लोप—उत्थानम्। द्वित्व और लोप दोनों वैकल्पिक है। अतः एक तकारवाला और लोपाभाव पक्ष में दो थकारों वाला रूप होता है—उत्थ्थानम् 'लोपाभावपक्षे तु थकारस्यैव श्रवणं न तु 'खरि च' ति चर्त्वम्, चर्त्वं प्रति थकारस्य (= पूर्वसवर्णस्य) असिद्धत्वात्'—(सिद्धान्तकौमुदी।) उद् + स्तम्भिता में भी पूर्व की प्रक्रिया होती है। ]

'स्था' तथा 'स्तम्भ' का ही पूर्वसवर्ण होता है—इसका क्या फल है? उत्स्नाता। [ उद् + स्नाता में पूर्वसवर्ण नहीं होता है। ]

## ३९७५. झयो होऽन्यतरस्याम् ।।६२।। (११९)

**झय उत्तरस्य हकारस्य पूर्वसवर्णादेशो भवति अन्यतरस्याम्। वाग्घसति, वाग् हसति। श्वलिड् ढसति, श्वलिड् हसति। अग्निचिद्धसति, अग्निचिद् हसति। सोमसुद्धसति, सोमसुद् हसति। त्रिष्टुब्भसति, त्रिष्टुब् हसति।**

**झय इति किम्? प्राङ् हसति। भवान्हसति।।**

## ३९७६. शश्छोऽटि ।।६३।। (१२०)

**'छयः' इति वर्त्तते, 'अन्यतरस्याम्' इति च। झय उत्तरस्य शकारस्य अटि परतश्छकारादेशो भवति अन्यतरस्याम्। वाक्छेते, वाक् शेते। अग्निच्छेते, अग्निचित् शेते। सोमसुच्छेते, सोमसुत् शेते। श्वलिट्छेते श्वलिट् शेते। त्रिष्टुप्छेते, त्रिष्टुप् शेते।**

### न्यासः

**झयो होऽन्यतरस्याम्।। वाग् घसती**त्यादावुदाहरणे हकारस्य महाप्राणस्यान्तरतम्यात् तादृश एव घकारादयो वर्गचतुर्था भवन्ति।

अन्यतरस्यांग्रहणं पूर्वविध्योर्नित्यत्वज्ञापनार्थम्।।६२।।

**शश्छोऽटि।। छत्वममीति वक्तव्यमिति।** अमि परतश्छत्वं भवतीत्येदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'शश्छः' इति योगविभागः क्रियते, तेनाट्प्रत्याहारेऽसन्निविष्टे लकारादावपि भविष्यति, अतोऽटीत्यतिप्रसङ्गतिनिरासाय द्वितीयो योगः—तेनाट्येव परभूते, नान्यत्रेति। योगविभागकरण-

### पदमञ्जरी

**झयो होऽन्यतरस्याम्।।** उदाहरणेषु हकारस्य महाप्राणस्य सोष्मणो घोषवतस्तादृशा एव घकारादयश्चतुर्था भवन्ति।।६२।।

### भावबोधिनी

❁ वेद में उत्पूर्वक 'स्कन्द' के परसवर्ण का उपसंख्यान करना चाहिये। ❁ उदा० अग्ने दूरमुत्कन्दः। [ उद् + स्कन्दः, पूर्वसवर्ण से स् का थ, चर्त्व आदि कार्य होते हैं। ]

❁ रोग अर्थ में भी उद् से परे स्कन्द का पूर्वसवर्ण कहना चाहिये। ❁ उत्कन्दको नाम रोगः। [ यहाँ उद् + स्कन्द ऐसा होने पर पूर्वसवर्ण करना चाहिये। ] अथवा 'कन्द' इस अन्य धातु का ही रूप समझना चाहिये—उत्कन्दः।।६१।।

झय् (प्रत्याहार के वर्ण) से उत्तरवर्ती हकार का पूर्वसवर्ण आदेश विकल्प से होता है। उदा० वाग्घसति, वाग्हसति [ वाक् + हसति। ] [ श्वलिट्+ हसति ] श्वलिड्ढससि, श्वलिड् हसति। अग्निचिद् घसति। अग्निचिद् हसति। सोमसुद्धसति, सोमसुद्हसति। त्रिष्टुब्भसति, त्रिष्टुब्हसति। [ सोमसुत् + हसति, त्रिष्टुप् + हसति—सभी उदाहरणों में पदान्त झल् का जश् करने पर उस वर्ग का तृतीय अक्षर हो जाता है। इसके बाद प्रस्तुत सूत्र से महाप्राण घोष ऊष्म हकार के स्थान पर तत्तवर्ग का इसी प्रकार के प्रयत्नों वाला चतुर्थ वर्ण—घ, ढ्, ध्, भ् होता है। यह पूर्वसवर्ण वैकल्पिक है किन्तु जशत्व नित्य है। अतः दोनों प्रकार के रूप होते हैं। ]

झय् से परे—इसका क्या फल है? प्राङ्हसति। भवान् हसति। [ यहाँ ङ्, न् झय् नहीं है। अतः पूर्वसवर्ण आदेश नहीं होता है। ]।।६२।।

'झयः' (झय् से परे) तथा 'अन्यतरस्याम्' (विकल्प से) इन दोनों की अनुवृत्ति होती है। झय् से उत्तरवर्ती अट्-परक (अट् जिससे परे है ऐसे) शकार का छकार आदेश विकल्प से होता है। [ इसमें झय् + श् + अट् होना चाहिये। ] उदा० वाक्छेते, वाक्शेते [ वाक् + शेते झय् क् से परे शकार है, उसके बाद अट् एकार है। अतः श् का छ् होता है। ]

**❀ छत्वममीति वक्तव्यम्। ❀**

**किं प्रयोजनम्? तच्छ्लोकेन, तच्छ्मश्रुणा—इत्येवमर्थम्।।**

## ३९७७. हलो यमां यमि लोपः।।६४।। (६०)

**'अन्तरस्याम्' इति वर्तते। हल उत्तरेषां यमां यमि परतो लोपो भवति अन्यतरस्याम्। शय्या इत्यत्र द्वौ**

**न्यासः**

सामर्थ्याच्चाम्प्रत्याहारान्तर्गतेऽनट्यपि क्वचिद् भवेत्येष; अन्यथा योगविभागकरणमनिर्थकं स्यात्। अमीति नोक्तम्, वैचित्र्यार्थम्। अत्र 'वा पदान्तस्य' इत्यतः पदान्तग्रहणमनुवर्तते, झयो विशेषणार्थम्। तेन 'शि तुक्' इत्यत्र तुकः पूर्वान्तकरणं छत्वार्थमुपपन्नं भवति; अन्यथा 'डः सि धुट्' इत्यतो धुड्ग्रहणानुवृत्तेः परस्यासिद्धत्वात् पूर्वान्तकरणमनर्थकं स्यात्।।६३।।

**हलो यमां यमि लोपः।। शय्य्येत्यत्र द्वौ यकाराविति।** एकः 'संज्ञायां समज' इत्यादिना विहितस्य क्यपोऽवयवः, अपरस्त्वयङः। **क्रमजस्तृतीय इति।** क्रमः आनुपूर्वी, ततो जातः क्रमजः। स पुनः 'अनचि च'

**पदमञ्जरी**

**शश्छोऽटि।। शश्छोऽमीतीति।** अटीत्यपनीयामीति वक्तव्यमित्यर्थः। **तच्छ्लोकेन, तच्छ्मश्रुणेति।** अत्र लकारमकारपरस्यापि शकारस्य भवति।।६३।।

**हलो यमां यमि लोपः।। द्वौ यकाराविति।** एकः 'संज्ञायां समज' इत्यादिना विहितस्य क्यपः सम्बन्धी, द्वितीयः 'अयङ् यि क्ङिति' इत्ययङादेशस्य। **क्रमजस्तृतीय इति।** क्रमः—आनुपूर्वी, ततो जातः क्रमजः, स च

**भावबोधिनी**

अग्निचिच्छेते, अग्निचित्शेते। सोमसुच्छेते, सोमसुत्शेते। श्वलिट्छेते, श्वलिट्शेते। त्रिष्टुप्छेते, त्रिष्टुप्शेते। [ इसके उदाहरणों में तवर्ग शकार के योग में पहले श्चुत्व से यथाप्राप्त जकार आदि आदेश होते हैं उनके स्थान पर 'खरि च' से चर्त्व होकर चकार होता है। यह चर्त्व अन्यों में भी होता है। ] इसलिये छत्वाभाव पक्षमें—'अग्निचित्, सोमसुत्, श्वलिट्, त्रिष्टुप् + शेते—ये रूप रहते हैं। ]

❀ इसमें 'अटि' के स्थान पर 'अमि' ऐसा कहना चाहिये अर्थात् श् के बाद 'अम्' प्रत्याहार का कोई वर्ण होना चाहिये। ❀

इस परिवर्तन का क्या प्रयोजन है? तच्छ्लोकेन, तच्छ्मश्रुणा—इनमें भी छत्व के लिये। [ तत् + श्लोकेन, तत् + श्मश्रुणा—यहाँ श् के बाद अट् नहीं है अपितु, ल् म् हैं जो अम् में आते हैं। यदि 'अमि' ग्रहण माना जायगा तभी श् का छ् होता है। ]

**विमर्श**—प्रस्तुत सूत्र में 'वा पदान्तस्य' से 'पदान्तस्य' की अनुवृत्ति होती है और पञ्चम्यन्तरूप में विपरिणमित होता है जिससे सूत्र का अर्थ होता है—पदान्त झय् से परे शकार का अम् परे रहते छकार होता है विकल्प से। ऐसा—न्यासकार तथा सिद्धान्तकौमुदीकार मानते हैं। इसीलिये 'शि तुक्' सूत्र से तुक् को पूर्व का अन्त अवयव बनाना सार्थक होता है अन्यथा 'डः सि धुट्' इससे धुट् ग्रहण की अनुवृत्ति से पर के असिद्ध होने से पूर्व का अन्तावयव करना अनर्थक होता। ] इसीलिये 'शि तुक्' (८।३।३१) सूत्र पर काशिकाकार ने लिखा है—'पूर्वान्तकरणं छत्वार्थम्।' यदि पूर्व का अवयव नहीं माना जायगा तो पदान्त झय् से परे 'श' नहीं मिलने पर—'भवाञ्च्छेते' आदि में चर्त्व नहीं हो सकेगा। इस विषय में 'शि तुक्' की काशिका भी देखनी चाहिये।।६३।।

'अन्यतरस्याम्' (विकल्प से) इसकी अनुवृत्ति होती है। हल् से उत्तरवर्ती यम् का यम् परे रहते विकल्प से लोप होता है। उदा॰ शय्य्या—इसमें दो यकार हैं [ क्योंकि शि + क्यप् 'संज्ञायां समजनि' (३।३।९९) सूत्र से क्यप् = य, होता है। इसके बाद 'अयङ् यि क्ङिति' (७।४।२२) सूत्र से इ का अयङ्—श् अय् य + टाप्—शय्या इनमें 'अनचि च' से द्वित्व करने पर ] क्रम = आनुपूर्वी से उत्पन्न = क्रमज तीसरा यकार है—शय्य्या, इसमें मध्यवर्ती य् का लोप विकल्प से होता है—शय्या, शय्य्या।

**यकारौ, क्रमजस्तृतीयः; तत्र मध्यमस्य वा लोपो भवति–शय्या, शय्य्या।**

**अदितेरपत्यमादित्य्य इत्यत्र तकारात्पर एको यकारः, 'यणो मय' इति क्रमजो द्वितीयः, तत्र मध्यमस्य वा लोपो भवति। आदित्यः, आदित्य्यः। आदित्यो देवता अस्य स्थालीपाकस्येति आदित्य्यः, आदित्य इति। अत्रापि द्वौ यकारौ; क्रमजस्तृतीयः; तत्र मध्यमस्य मध्यमयोर्वा लोपो भवति।**

**हल इति किम्? आन्नम्। यमामिति किम्? अग्निः। अर्घ्यम्। यमीति किम्? शार्ङ्ग्म्।।**

**न्यासः**

इत्यनेन यो विहितः, स हि पूर्वयकाराभ्यां पश्चाज्जात इति क्रमजो भवति।

**तकारात् परो यकार एक इति**। 'दित्यदित्यादित्य' इत्यादिना विहितस्य ण्यस्यावयवः। **द्वौ यकाराविति**। एकोऽदितिशब्दात् 'तस्यापत्यम्' इत्यर्थे दित्यदित्यादिसूत्रेण विहितस्य ण्यस्यावयवः। द्वितीयस्त्वादित्यशब्दादेव 'सास्य देवता' इत्यर्थे तेनैव सूत्रेण विहितस्य ण्यस्यावयवः। **क्रमजस्तृतीय इति**। 'यणो मयः' इत्यनेन यो विहितः। **मध्यमस्य मध्यमयोर्वेति**। 'अन्यतरस्याम्' इत्यधिकारात्। यद्येकस्य भवति ततो मध्यमस्य, अथ द्वयोरिति ततो मध्यमयोः। **आन्नमिति**। 'अन्नाण्णः' इति निपातनाद् 'अदो जग्धिर्ल्यप्ति किति' इति न भवति जग्ध्यादेशः, 'रदाभ्याम्' इत्यादिना निष्ठानत्वम्। भवत्ययं नकारो यम्, यमि परतश्च; न च हल उत्तरः, किं तर्हि? अचः। **अर्घ्यमिति**। 'पादार्घाभ्यां च' इति तादर्थ्ये यत्। अत्र घकारो रेफादुत्तरो भवति, यकारे यमि परतः। न त्वयं यम् घकारः; तस्य यम्स्वसन्निवेशात्। **शार्ङ्गमिति**। शृङ्गस्य विकार इत्यण, आदिवृद्धिः, रपरत्वम्। अत्र ङकारो यम् हल उत्तरो भवति, न तु तस्मात् परो यम् गकारः; तस्य यम्प्रत्याहारेऽसन्निवेशात्। नन्वादिवृद्धिस्तद्धिताश्रया बहिरङ्गा भवति? लोपस्त्वन्तरङ्गः, ततश्चान्तरङ्गे लोपे कर्त्तव्ये वृद्धेरसिद्धत्वम्, तस्यां असिद्धत्वात् तदाश्रितस्य रेफस्याप्यसिद्धत्वमेव। एवं च सति ङकारो हल एव परो न भवतीति यत् केचिच्चोदयन्ति, तन्मतमिदं नोपन्यसनीयमेव; मूलोदाहरणेऽपि तथा सम्भवात्।।६४।।

**पदमञ्जरी**

पुनः 'अनचि च' इति द्विर्वचनेन सम्पादितः। **तकारात्पर एको यकार इति**। 'दित्यदित्यादित्य' इत्यादिना विहितस्य ण्यस्य सम्बन्धी। **द्वौ यकाराविति**। एकोऽदितिशब्दात्परस्य ण्यस्य सम्बन्धी, द्वितीय आदित्यशब्दात्।

**आन्नमिति**। भवत्ययं नकारो यम्, यम्परश्च, न तु हलः परः। **अर्घ्यमिति**। 'पादार्घाभ्यां च' इति तादर्थ्ये यत्, भवत्ययं घकारो रेफाद्धलः परो यम्परश्च, न तु यम्। **शार्ङ्गमिति**। शृङ्गस्य विकार इत्यण्, ऋकारस्य रपरा वृद्धिः, अत्र ङकारो यम् भवति हलश्च परः, न तु यम्परः। ननु च बहिरङ्गा वृद्धिः, ततः किम्? हलः परो न भवति? लोपोऽपि बहिरङ्गः; अनेकनिमित्तापेक्षत्वात्।।६४।।

**भावबोधिनी**

अदितेरपत्यम् आदित्यः—इसमें [ 'दित्यदित्यादित्य' सूत्र से ण्य प्रत्यय, टिलोप, आदिवृद्धि—आदित्यः ] तकार से परे एक यकार है 'यणो मयो द्वे वाच्ये' वचन से क्रमज = द्वित्व से उत्पन्न दूसरा यकार है—आदित्य्य, इसमें मध्यवर्ती यकार का विकल्प से लोप होता है—आदित्यः, लोपाभाव पक्षमें—आदित्य्यः। 'आदित्य देवता है इस स्थालीपाक का' इस अर्थ में भी आदित्य्यः, आदित्यः। यहाँ भी दो यकार हैं (एक आदित्य का दूसरा ण्य प्रत्यय का) इसमें क्रमज = द्वित्व द्वारा उत्पन्न तृतीय यकार है, इनमें मध्यम = बीच वाले यकार का अथवा मध्यम = बीच वाले दोनों यकारों का लोप होता है। (विकल्प से)। [ अतः पक्ष में दो अथवा तीन यकारों वाले रूप होते हैं। ]

हल् से परे—इसका क्या फल है? आन्नम्। [ अन्न शब्द से 'अन्नाण्णः' सूत्र से ण = अ प्रत्यय, आदिवृद्धि, आन्न, यहाँ हल् से नहीं अपितु अच् = 'आ' से परे यम् = न् है, उसका लोप नहीं होता है। ] यम् का लोप—इसका क्या फल है? 'अग्निः'। [ ग् यम् नहीं है अतः लोप नहीं होता है। ] अर्घ्यम्। [ यहाँ 'घ्' का लोप नहीं होता है। ] यम् परे रहते—इसका क्या फल है—

## ३९७८. झरो झरि सवर्णे।।६५।। (७१)

**'हलः' इति वर्तते, 'अन्यतरस्याम्' इति च। हल उत्तरस्य झरो झरि सवर्णे परतो लोपो भवति अन्यतरस्याम्। प्रत्तम्, अवत्तमित्यत्र त्रयस्तकाराः, क्रमजश्चतुर्थः; तत्र मध्यमस्य मध्यमयोर्वा लोपो भवति।**

**मरुत्त्त इत्यत्र चत्वारस्तकाराः, क्रमजः पञ्चमः; तत्र मध्यमस्य मध्यमयोर्मध्यमानां वा लोपो भवति। मरुच्छब्दस्य हि उपसंख्यानसामर्थ्याद् 'अच उपसर्गात्तः' (७।४।४७) इति तत्वं भवति।**

**न्यासः**

**झरो झरि सवर्णे**।। **प्रत्तमवत्तमित्यादि**। ददातेः क्तः, 'अच उपसर्गात्तः' इत्याकारस्य तकारः, दकारस्यापि 'खरि च' इति चर्त्वम्। एवं तावत् त्रयस्तकाराः—द्वावादेशौ, एकः प्रत्ययावयवः। 'अनचि च' इति यो निर्वृत्तः स क्रमजश्चतुर्थः। **मध्यमस्य मध्यमयोर्वेति**। पूर्ववदन्तरस्यांग्रहणानुवृत्तेरेव वेदितव्यम्। **मरुत्त इति चत्वारस्तकारा इति**। त्रयः पूर्ववत्, चतुर्थो मरुच्छब्दावयवः, क्रमजः पञ्चम इति 'अनचि च' इति यो विहितः। ननु चाजन्तादुपसर्गात् तत्त्वमुच्यते, न च मरुच्छब्दोऽजन्तः, किं तर्हि? हलन्तः, तत् कथं तत्त्वं भवति? इत्याह—**मरुच्छब्दस्येत्यादि**। 'उपसर्गाः क्रियायोगे' इत्यत्र मरुच्छब्दस्योपसंख्यानमुपसर्गकार्यार्थम्। यदि सत्यामपि तस्यां तत्वं न तदा तस्य वैयर्थ्यं स्यात्। तस्मादुपसंख्यानसामर्थ्यादनजन्तादपि तत्त्वं भवत्येव। तर्हि यथा ह्युपसर्गोपसंख्यानसामर्थ्यात् तत्त्वं भवति, तथा मरुन्नयतीत्यत्रापि 'उपसर्गादसमासेऽपि णोपदेशस्य' इति तकारेणानडादिव्यवाये णत्वं स्यात्। यदीष्यते तदा भवतु। यदि नेष्यते तदा क्षुभ्नादिषु द्रष्टव्यः।

**पदमञ्जरी**

**झरो झरि सवर्णे**।। **त्रयस्तकारा इति**। 'अच उपसर्गात्तः' इत्याकारस्य तकारः, दकारस्यापि चर्त्वं तकारः; एकः प्रत्ययसम्बन्धी, 'अनचि च' इति द्विर्वचने क्रमजश्चतुर्थः। **चत्वारस्तकारा इति**। पूर्वोक्तास्त्रयः, चतुर्थो रुच्छब्दसम्बन्धी, पञ्चमो द्विर्वचनेन सम्पादितः। **मरुच्छब्दस्योपसंख्यानसामर्थ्यादिति**। एतच्च 'मरुच्छब्दस्योपसंख्यानम्' इत्यत्रैव प्रतिपादितम्।

**भावबोधिनी**

शार्ङ्गम्। [ शृङ्गस्य विकारः—इस अर्थ में अण् प्रत्यय, आदिवृद्धि, रपर आदि के बाद 'शार्ङ्गम्' में ङकार यम् है वह हल् से उत्तर तो है किन्तु उसके बाद 'यम्' नहीं है अपितु गकार है अतः 'ङ्' का लोप नहीं होता है। ]।।६४।।

'हलः' (हल् से परवर्ती) इसकी और 'अन्यतरस्याम् (= विकल्प) इसकी अनुवृत्ति होती है। हल् = व्यञ्जन से परवर्ती 'झर्' का सवर्ण झर् परे रहते विकल्प से लोप होता है। उदा॰ प्रत्तम् अवत्तम्'—इनमें तीन तकार हैं और चतुर्थ तकार क्रमज = द्वित्व से उत्पन्न है इन चार तकारों में मध्यवर्ती किसी एक तकार का अथवा दो तकारों का विकल्प से लोप होता है। [ प्र तथा अव उपसर्ग युक्त 'दा' धातु से निष्ठा क्त = त प्रत्यय-प्रदा + त अव दा + त—इस अवस्था में 'अच उपसर्गात्तः' इस सूत्र से 'दा' के अकार का तकार—प्र द् त् त, अवद् त् त 'खरि च' सूत्र से द् का चर्त्व करने पर उसका भी 'त्' होता है—प्र त् त् + त, अ व त् त् + त—इस प्रकार यहाँ तीन तकार हैं—पहले वाले दोनों आदेश से और तीसरा प्रत्यय का है। अब 'अनचि च' इस सूत्र से प्रथम तकार का विकल्प से द्वित्व करने पर क्रमज चतुर्थ तकार भी हो जाता है। चूँकि द्वित्व विकल्प से होता है अतः द्वित्वाभाव पक्ष में केवल मध्यवर्ती एक तकार का लोप और द्वित्व पक्ष में मध्यवर्ती दोनों तकारों का लोप होता है। अतः दो तकारों वाला और तीन तकारों वाला रूप होता है। ]

'मरुत्तः' इसमें चार तकार हैं पञ्चम तकार क्रमज = द्वित्व से जन्य है। इन पाँच में मध्यवर्ती एकका, दो का अथवा तीन का लोप विकल्प से होता है। मरुत् शब्द का [ उपसर्गों में ] उपसंख्यान करने के कारण 'अच उपसर्गात्तः' सूत्र से 'त्' होता है।

**झर इति किम्? शार्ङ्गम्। झरीति किम्? प्रियपञ्च्ञा। अल्लोपस्य च 'पूर्वत्रासिद्धे न स्थानिवत्' (पु.वृ.११२) इति स्थानिवद्भावप्रतिषेधादत्र चकारस्य ञकारे लोपः स्यात्।**

**न्यासः**

**शार्ङ्गमिति**। ङकारो हल उत्तरो भवति झरि च सवर्णे परतः, न त्वयं झरिति न भवति लोपः। **प्रियपञ्च्ञेति**। प्रियाः पञ्चास्येति बहुव्रीहिः, ततस्तृतीयैकवचनम्। 'अल्लोपोऽनः' इत्यकारलोपः, 'स्तो श्चुना श्चुः' इति श्चुत्वं तवर्गस्य। वर्गो वर्गेण सवर्ण इति ञकारश्चवर्गस्य सवर्णः, न त्वयं ञकारो झर्। तेन तस्मिन् परभूते पूर्वस्माद्धलः परस्यापि चकारस्य लोपो न भवति। ननु चाक्रियमाणेऽपि झरीत्येतस्मिन् नैवात्र लोपः प्राप्नोति, निर्दिष्टग्रहणस्यानन्तर्यार्थत्वात् ; अनन्तरे परभूते सवर्णे लोपेन भवितव्यम्, न चात्रानन्तरो ञकारः, पूर्वस्य लोपे कृते 'अचः परस्मिन् पूर्वविधौ' इत्यकारलोपस्य स्थानिवद्भावात् तत् किं झरीत्यनेन? इत्यत आह— **लोपस्येत्यादि**। पूर्वत्रासिद्धीये ह्यल्लोपस्य स्थानिवद्भावः प्रतिषिध्यते। अत्र 'झरि' इत्येतन्नोच्येत यदि, तदात्र लोपः स्यादेव।

**पदमञ्जरी**

**शार्ङ्गन्निति**। भवत्ययं ङकारो हलः परः झरि सवर्णे परतः, न त्वयं झरिति न लुप्यते। **प्रियपञ्च्ञेति**। प्रियाः पञ्चास्येति बहुव्रीहिः, 'वा प्रियस्य' इति प्रियशब्दपूर्वनिपातस्तृतीयैकवचनम्, अल्लोपः, नकारस्य श्चुत्वम्—ञकारः। भवत्ययं चकारो हलः परः स्वयं च झर् सवर्णे च परतः, न तु ञकारो झरिति न लुप्यते। ननु चाल्लोपस्य स्थानिवत्त्वादनन्तरो न भवति सवर्णः, तत्किमेतन्निवृत्त्यर्थेन 'झरि' इत्यनेन? इत्यत आह—**अल्लोपस्येति**।

**भावबोधिनी**

**विमर्श**—'उपसर्गाः क्रियायोगे' (१।४।५८) सूत्र में उपसर्गों का परिचय देते समय एक वचन पढ़ा गया है—'मरुच्छब्दस्योपसंख्यानं कर्तव्यम्' अर्थात् मरुत् को भी उपसर्ग मानकर उपसर्ग-सम्बन्धी कार्य करने चाहिये। इसलिये 'दा' धातु के साथ उपसर्ग के समान 'मरुत्' का योग किया जा सकता है—मरुत् दा + क्त अब अनजन्त भी मरुत् से परे 'दा' के 'आ' का तकार आदेश इसी उपसर्गत्वोपसंख्यान के सामर्थ्य से होता है—मरुत् द् त् + त, चर्त्व करने पर चार तकार होते हैं—मरुत् त् त् त अब 'अनचि च' सूत्र से त् का विकल्प से द्वित्व करने पर क्रमज पञ्चम तकार भी है। प्रस्तुत सूत्र से—(१) मध्यवर्ती एक तकार का लोप करने पर चार तकारों वाला एक रूप, (२) दो तकारों का लोप करने पर तीन तकारों वाला एक रूप, (३) तीन तकारों का लोप करने पर दो तकारों वाला एक रूप होता है।

निष्कर्ष यह है कि पाँच तकारों वाला रूप बन जाने पर स्थिति के अनुसार यह सूत्र तीन बार प्रवृत्त होता है क्योंकि 'हल् से झर् परे सवर्ण झर् तीन बार मिल जाता है। अतः चार रूप बनते हैं। परन्तु 'प्रत्तम्' 'अवत्तम्' इस प्रथम उदाहरण में दो ही बार प्रस्तुत सूत्र की प्रवृत्ति होने से तीन रूप बनते हैं वैकल्पिक होने के कारण लोपपक्ष में और लोपाभावपक्ष में।

(अनु०) झर् का ही लोप—इसका क्या फल है? शार्ङ्गम्। [ शार्ङ्गम्—इसमें ङकार हल् से परे है, सवर्ण झर् 'ग' परे भी है किन्तु 'ङ' झर् नहीं है। अतः ङ का लोप नहीं होता है। ]

झर् परे रहते—इसका क्या फल है? प्रियपञ्च्ञा। [ प्रियाः पञ्च अस्य यह बहुव्रीहि समास है, तृतीया एकवचन का रूप है—प्रिय पञ्चन् + टा = आ 'अल्लोपोऽनः' सूत्र से च के 'अ' का लोप करने पर च् + न् में श्चुत्व होने से—प्रियपञ्च्ञ् आ बनता है। यहाँ चकार हल् से परे झर् है और च् स्वयं झर् भी है सवर्ण परे भी है परन्तु परवर्ती ञ् सवर्ण होने पर भी झर् नहीं है। अतः झर् परे न होने से च् का लोप नही होता है। ] 'पूर्वत्रासिद्धे न स्थानिवत्' इस वचन से अल्लोप के स्थानिवद्भाव का प्रतिषेध हो जाने के कारण यहाँ ञकार परे रहते चकार का लोप होने लगता। [ परन्तु ञकार झर् में नहीं आता है। अतः झर् परे न मिलने से लोप नहीं होता है। यदि अलोप का स्थानिवद्भाव मानलें तो मध्य में अकार का व्यवधान हो जाने से स्वतः च् लोप नहीं होगा, झर् ग्रहण की क्या आवश्यकता? इसका समाधान यह है—'पूर्वत्रासिद्धम्' इस सूत्र के क्षेत्र में स्थानिवद्भाव नहीं होता है। अब अलोप का स्थानिवद्भाव न हो सकने पर प्रिय प ञ् च् ञ् + आ में चकार का लोप प्राप्त ही है। परन्तु 'झर् परे रहते' ऐसा कहने से लोप नहीं हेता है क्योंकि ञकार झर् में नहीं आता है। अतः 'च्' का लोप नहीं होता है। ]

**सवर्ण इति किम्? तर्प्ता, तर्प्तुम्, तर्प्तव्यम्। सवर्णग्रहणसामर्थ्यादिह सङ्ख्यातानुदेशो न भवति, सवर्णमात्रे लोपो विज्ञायते। तेन शिण्ढि, पिण्ढि इति ढकारे डकारस्य लोपो भवति।।**

### न्यासः

**तर्प्तेति**। 'तृप प्रीणने', पकारस्य तकारः स्थानभेदात् सवर्णो न भवति, तेनात्र लोपो न भवति। ननु च निमित्तानां कार्यिणाञ्च साम्यादिह संख्यानुदेशेन भवितव्यम्, तत्रासत्यपि सवर्णग्रहणे तर्प्तेत्यादौ नैव लोपः प्राप्नोति, तत् किं तन्निवृत्त्यर्थेन सवर्णग्रहणेन? इत्यत आह—**सवर्णग्रहणसामर्थ्यादित्यादि**। यद्यत्र यथासंख्यं स्यात्, ततो झकारस्य झकार एव लोपः प्रसज्येत, यावता झकारस्य झकार एव सवर्णः, एवञ्च सति सवर्णग्रहणमनर्थकं स्यात्; व्यवच्छेद्याभावात्। न हि झकारस्यासवर्णो झकारः सम्भवति। तस्मादत्र सवर्णग्रहणसामर्थ्यान्न संख्यातानुदेशो भवति। तेन शिण्ढि, पिण्ढीत्यत्र सवर्णमात्रे ढकारे डकारलोपो भवतीति। 'शिष्लृ विशरणे', पिष्लृ सञ्चूर्णने', लोट्, सिप्, 'सेर्ह्यपिच्च' इति हिरादेशः, श्नम्, 'श्नसोरल्लोपः' इत्यकारलोपः, 'हुझल्भ्यो हेर्धिः' इति धिभावः, 'झलाञ्जश् झशि' इति जश्त्वम्-षकारस्य डकारः, 'नश्चापदान्तस्य झलि' इत्यनुस्वारः, 'ष्टुना ष्टुः' इति धकारस्य ढकारः, 'अनुस्वारस्य ययि परसवर्णः' इति णकारः, अनेन डकारस्य ढकारे लोपः।।६५।।

### पदमञ्जरी

**तर्प्तेति**। 'तृप प्रीणने', पकारस्य तकारः. स्थानभेदात्सवर्णो न भवति। ननु च निमित्तानां कर्यिणां च संख्यासामान्यादिह संख्यातानुदेशे सति नैव तर्प्तेत्यत्र लोपः प्राप्नोति, तत्किमेतन्निवृत्त्यर्थेन सवर्णग्रहणेन? अत आह—**सवर्णग्रहणसामर्थ्यादिति**। न हि यथासंख्येऽसवर्णे झरस्ति, यद्व्यावृत्त्यर्थं सवर्णग्रहणं स्यात्। **शिण्ढि, पिण्ढीति**। 'शिष्लृ विशेषणे', पिष्लृ सञ्चूर्णने'—**रुधादी, लोट्, सेर्हिः**, 'श्नसोरल्लोपः', हेर्धिः, 'झलां जश् झशि' इति षकारस्य डकारः, 'नश्चापदान्तस्य झलि' इत्यनुस्वारः, तस्य परसवर्णो णकारः, धकारस्य ष्टुत्वम्—ढकारः, अनेन डकारस्य ढकारे लोपः।।६५।।

### भावबोधिनी

सवर्ण (झर्) परे रहते-इसका क्या फल है? तर्प्ता, तर्प्तुम्, तर्प्तव्यम्। [ तृप् + तृच्, ऋकार का गुण रपर आदि करने पर 'तर्प्ता' आदि रूप होता है। यहाँ पकार का सवर्ण तकार नहीं है क्योंकि दोनों का उच्चारणस्थान अलग-अलग है। ] सूत्र में 'सवर्णे' इसके ग्रहण के कारण यथासंख्य नियम की प्रवृत्ति नहीं होती है, जिससे सवर्णमात्र = कोई भी सवर्ण झर् परे रहते लोप होता है। इसीलिये 'शिण्ढि' 'पिण्ढि' आदि में ढकार परे रहते भी डकार का लोप होता है।

**विमर्श**—प्रस्तुत सूत्र में लोपरूप कार्य के कार्यी = स्थानी भी झर् हैं और निमित्तरूप से उपात्त भी झर् ही हैं। दोनों की संख्या समान ही है। अतः एक झर् के बाद उसी को परे भी होना होना चाहिये। जैसाकि पहले 'प्रत्तम्' आदि में देखा गया है। ऐसी स्थिति में 'तर्प्ता' आदि में लोप की संभावना नहीं है क्योंकि प् के बाद त् है, भिन्न झर् है। अतः 'सवर्णे' इसका यह प्रत्युदाहरण नहीं होना चाहिये।

उक्त शंका का समाधान यह है कि यदि जैसा झर् वर्ण कार्यी = स्थानी है वैसा ही झर् यदि निमित्त रूप से परवर्ती भी लिया जाय तब तो सूत्र में 'सवर्णे' ग्रहण का कोई फल ही नहीं रह जाता है क्योंकि 'सवर्ण' कथन से किसको रोका जा सकता है। यह 'सवर्णे' ग्रहण ही यह सिद्ध करता है कि जैसा पूर्व में कार्यी है वैसा ही स्थानी = निमित्त नहीं लेना चाहिये। केवल सवर्णसंज्ञक होना चाहिये। इसी कारण 'शिण्ढि' 'पिण्ढि' में ढकार परे रहते डकार का लोप होता है। शिष् पिष् रुधादि गणीय धातुओं से लोट् मध्यमपुरुष, एकवचन में 'सिप्' का 'हि' आदेश—शिष् + हि, श्नम् = न विकरण मित् होने से अच् के बाद होता है—शिनष् + हि, 'श्नसोरल्लोपः' से 'श्न' के अकार का लोप 'हुझल्भ्यो हेर्धिः' सूत्र से 'हि' का 'धि' आदेश, 'झलां जश् झशि' सूत्र से ष् का जश् ड्—पि न् ड् धि। 'नश्चापदान्तस्य झलि' से न् का अनुस्वार 'ष्टुना ष्टुः' से 'ध' का ष्टुत्व से ढकार—शिंड्ढि 'अनुस्वारस्य ययि परसवर्णः' सूत्र से अनुस्वार का परसवर्ण करने से णकार—शिण्ड्ढि। अब प्रस्तुत सूत्र से झर् = ढकार परे रहते झर् = डकार

## ३९७९. उदात्तादनुदात्तस्य स्वरितः।।६६।। (३६६०)

**उदात्तादुत्तरस्यानुदात्तस्य स्वरितादेशो भवति। गार्ग्यः। वात्स्यः। पचति पठति।**

**अस्य स्वरितस्यासिद्धत्वाद् 'अनुदात्तं पदमेकवर्जम्' (६।१।१५८) इत्येतन्न प्रवर्त्तते। तेनोदात्तस्वरितावुभावपि श्रूयेते।।**

**न्यासः**

**उदात्तादनुदात्तस्य स्वरितः।। गार्ग्यो वात्स्य इति।** गर्गवत्सशब्दाभ्याम् 'गर्गादिभ्यो यञ्' इति यञ्, 'ञ्नित्यादेर्नित्यम्' इत्याद्युदात्तत्वम्, 'अनुदात्तं पदमेकवर्जम्' इत शेषस्यानुदात्तत्वम्, तस्य स्वरितो भवति। **पचति, पठतीति।** तिप्शपौ पित्त्वादनुदात्तौ। पकारस्याकारोऽपि धातुस्वरेणोदात्तः। तस्मात् परस्य शबकारस्य स्वरितत्वं भवति।

किं पुनः कारणं सूत्रमिदमिहीच्यते, न 'तित्स्वरितम्' इत्यस्यानन्तरमुच्यताम्, एवं हि स्वरितग्रहणं न कर्त्तव्यं भवति, प्रकृतमेव ह्यनुवर्त्तिष्यते? इत्याह—**अस्येत्यादि।** यदि तत्र क्रियेत, तदा 'अनुदात्तं पदमेकवर्जम्' इत्येतदिह प्रवर्तेत, ततश्चानुदात्तस्वरितौ श्रूयेयाताम्, नोदात्तस्वरितौ। इह तु क्रियमाणे स्वरितस्यासिद्धत्वात् तदाश्रयम् 'अनुदात्तं पदमेकवर्जम्' इति न प्रवर्त्तते, तेन द्वावप्यस्योदात्तस्वरितौ श्रूयते।।६६।।

**पदमञ्जरी**

**उदात्तादनुदात्तस्य स्वरितः।। गार्ग्यः, वात्स्य इति।** 'गर्गादिभ्यो यञ्', ञित्वादाद्युदात्तत्वम्, शेषनिघातः, तस्य स्वरितः। **पचति, पठतीति।** शप्तिपावनुदात्तौ, धातुस्वरः, शबकारस्य स्वरितत्वम्।

'तित्स्वरितम्' इत्यस्यान्तरमिदं वक्तव्यम्, एवं हि स्वरितग्रहणं न कर्त्तव्यं भवति? अत आह—**अस्येति।** यदि तत्र क्रियेत, 'अनुदात्तं पदमेकवर्जम्' इत्येतत्प्रवर्तेत। इह तु करणे न प्रवर्त्तते; स्वरितस्यासिद्धत्वात्। तेन द्वयोरप्युदात्तस्वरितयोः श्रवणं भवति।।६६।।

**भावबोधिनी**

का लोप होता है। यदि 'सवर्णे' ग्रहण नहीं किया जाता तो ढपरे डलोप नहीं हो पाता। अतः स्थान आदि के साम्य से सवर्णमात्र का ग्रहण ही इसमें इष्ट है यथासंख्य नहीं मानना चाहिये।।६५।।

उदात्त स्वर से उत्तरवर्ती अनुदात्त स्वर का 'स्वरित' स्वर हो जाता है। उदा॰ गार्ग्यः। वात्स्यः। पचति। पठति। [ गर्ग + यञ्, ञ् की इत्संज्ञा होने से 'ञ्नित्यादिर्नित्यम्' सूत्र से ञिदन्त का आद्युदात्त होता है। 'अनुदात्तं पदमेकवर्जम्' सूत्र से उस उदात्त को छोड़ कर शेष का निघात = अनुदात्त हो जाता है। उस अनुदात्त का स्वरित आदेश प्रस्तुत सूत्र से किया जाता है इस प्रकार—'गार्ग्यः' आदि में आदि आ उदात्त और 'य' स्वरित रहता हैं। इसी प्रकार पठ् + शप् + तिप्। धातुस्वर से पठ् के पकार का अकार उदात्त है। पित् होने से शप् और तिप् दोनों अनुदात्त हैं। इनमें उदात्त = धातु अकार से परे अनुदात्त शप् का अकार 'स्वरित' हो जाता है। तिप् का इ स्वरित नहीं होता है क्योंकि वह उदात्त से नहीं स्वरित से परे रहता है। ]

यह स्वरित स्वर [ 'पूर्वत्रासिद्धम्' (८।२।१) के कारण पूर्व के प्रति ] असिद्ध हो जाता है—इस कारण [ इसके द्वारा स्वरित किये जाने पर भी ] 'अनुदात्तं पदमेकवर्जम्' यह सूत्र प्रवृत्त नहीं होता है। अतः (पूर्ववर्ती) उदात्त और (इसके द्वारा किया गया) स्वरित ये दोनों सुनाई देते है।

**विमर्श—**'अनुदात्तं पदमेकवर्जम्' (६।१।१५८) सूत्र सपादसप्ताध्यायी का है और यह एक उदात्त अथवा स्वरित को छोड़कर पद के शेष अचों का अनुदात्त = निघात कर देता है। और प्रस्तुत स्वरितविधायक सूत्र त्रिपादी का है। 'पूर्वत्रासिद्धम्' (८।२।१) के अनुस्वार शेषनिघात-विधायक की दृष्टि में स्वरित-विधायक सूत्र असिद्ध है। अतः इससे स्वरित कर दिये जाने पर भी शेषनिघात- विधायक की प्रवृत्ति नहीं हो पाती है। अतः पूर्ववर्ती उदात्त और प्रस्तुत सूत्र से अनुदात्त का किया गया स्वरित, ये दोनों ही सुनाई देतें हैं। यदि असिद्धत्व नहीं होता तो उदात्त का श्रवण नहीं हो पाता।।६६।।

## ३९८०. नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ।।६७।। (३६६१)

**उदात्तोदयस्य स्वरितोदयस्य चानुदात्तस्य स्वरितो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते, अगार्ग्य-काश्यप-गालवानां मतेन। उदात्त उदयो यस्मात्स उदात्तोदयः। उदात्तपर इत्यर्थः। एवं स्वरितोदयः।**

**उदात्तोदयस्तावत्–गार्ग्यस्तत्रं। वात्स्यस्तत्रं। तत्रशब्द आद्युदात्तः, तस्मिन्नुदात्ते परतो गार्ग्यशब्दः स्वरितो न भवति।**

**स्वरितोदयः–गार्ग्यः क्वं। वात्स्यः क्वं। क्वशब्दः स्वरितः, तस्मिन्परतोऽनुदात्तः स्वरितो न भवति।**

### न्यासः

**नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्**।। **उदात्तस्वरितोदयमिति**। उदात्तस्वरितावुदयौ यस्मादिति बहुव्रीहिः। उदयशब्दोऽत्र प्रत्येकमभिसम्बध्यत इति दर्शयितुमाह—**उदात्तोदयस्येत्यादि**। उदयशब्दः परशब्दस्यार्थे वर्ततेऽत्र।

**गार्ग्यस्तत्रेति**। तत्रशब्द आद्युदात्तः। 'सप्तम्यास्त्रल्' इति त्रल्प्रत्ययान्ताल्लित्स्वरेण। **गार्ग्यः क्वेति**। क्वशब्दः स्वरितस्तित्स्वरेण, 'किमोऽत्' इति किम्शब्दादत्प्रत्ययः। किमः क्वादेशः—'क्वाति' इति।

उदात्तस्वरितमिति वक्तव्ये लाघवार्थत्वाद् विस्पष्टार्थत्वा**च्चोदयग्रहणं मङ्गलार्थमिति**। इष्टार्थसिद्धेर्हेतुर्मङ्गलम्, इष्टं पुनरर्थः शास्त्रस्य प्रथनं वीरपुरुषादिता च। तथा चोक्तम्[1]—'यतो मङ्गलादीनि मङ्गलमध्यानि

### पदमञ्जरी

**नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्**।। उदात्तस्वरितावुदयौ यस्मादिति बहुव्रीहिः। उदयशब्दः प्रत्येकमभिसम्बध्यते, यदाह—**उदात्तोदयस्येति**। उदयशब्दः परशब्देन समानार्थः प्रातिशाख्येषु प्रसिद्धः। **तत्रशब्दो** लित्स्वरेणाद्युदात्तः, **क्वशब्दः** 'किमोऽत्' इत्यत्प्रत्ययान्तस्तित्स्वरितः।

### भावबोधिनी

उदात्तोदय तथा स्वरितोदय अनुदात्त का स्वरित आदेश नहीं होता है। [ उदात्त उदय = परे है जिससे वह—उदात्तोदय है अर्थात् उदात्तपरक। स्वरित उदय = परे है जिससे वह—स्वरितोदय है अर्थात् स्वरितपरक। जिस अनुदात्त के बाद उदात्त या स्वरित होता है उस अनुदात्त का स्वरित आदेश नहीं किया जाता है। ] पूर्ववर्ती सूत्रसे प्राप्त स्वरितत्व का इससे निषेध किया जाता है। गार्ग्य, काश्यप, गालव से भिन्न आचार्यो के मत से। [ अर्थात् गार्ग्य आदि इस निषेध से सहमत नहीं हैं। ] उदात्तः उदयः यस्मात् स उदात्तोदयः, उदात्तपरकः, जिससे परे उदात्तहै—यह अर्थ है। इसी प्रकार 'स्वरितः उदयः यस्मात् सः स्वरितोदयः, स्वरितपरकः, जिससे परे स्वरित है। [ उदय शब्द 'परे' के अर्थ में प्रातिशाख्य में प्रयुक्त है। ]

उदा॰ उदात्तोदय—गार्ग्यस्तत्र। वात्स्यस्तत्र। 'तत्र' शब्द आद्युदात्त है, इस उदात्त के परे रहने से गार्ग्य (के यकार के अकार) का स्वरित नहीं होता है। [ गार्ग्य में स्वर पहले बतलाया जा चुका है गा का आ उदात्त है और 'य' का 'अ' अनुदात्त है। 'तत्र' शब्द 'सप्तम्यास्त्रल्' से त्रल् प्रत्ययान्त लित् है। अतः 'लिति' (६।१।१९३) सूत्र से प्रत्यय से पूर्ववर्ती उदात्त है, त का अ उदात्त है—'गार्ग्यस् तत्र' में उदात्तपरक अनुदात्त 'य' का अकार है। इसका स्वरित नहीं होता है। ]

स्वरितोदय का उदा॰ गार्ग्यःक्व? वात्स्यः क्व? 'क्व' शब्द स्वरित है। इसके परे रहते अनुदात्त का स्वरित नहीं होता है। [ किम् से अत् प्रत्यय 'किमोऽत्' से होता है। 'किमः क्व' से किम् का 'क्व' आदेश होता है। तित् प्रत्यय होने से 'तित्स्वरितम्' से 'क्व' शब्द स्वरित है। इसके परे रहते 'गार्ग्य' के यकार के अनुदात्त अकार का स्वरित नहीं होता है। ]

---

१. 'वृद्धिरादैच्' (१।१।१) सूत्रे भाष्ये।

**अगार्ग्यकाश्यपगालवानामिति किम्? गार्ग्यस्तत्र। गार्ग्यः क्व। तेषां हि मतेन स्वरितो भवत्येव। 'उदात्तस्वरितपरस्य' इति वक्तव्य उदयग्रहणं मङ्गलार्थम्। अनेकाचार्यसङ्कीर्तनं पूजार्थम्।।**

## ३९८१. अ अ इति ।।६८।। (११)

**एकोऽत्र विवृतः, अपरः संवृतः, तत्र विवृतस्य संवृतः क्रियते। अकारो विवृतः संवृतो भवति। वृक्षः। प्लक्षः।**

### न्यासः

मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि च' इति। यथा मङ्गलादीन्येवंविधानि भवन्ति तथा मङ्गलावसनान्यपि। मङ्गलार्थ इहोदयशब्दे क्रियमाण उत्तरारम्भो मङ्गलपूर्वको भवति। तेन यद् वक्ष्यति— 'दीर्घप्लुतयोश्चानेन विवृताकारेण ग्रहणं नेष्यते, संवृतेन तु मात्रिकस्य सर्वगुणयुक्तस्याकारस्य ग्रहणमिष्यते' इति तदुपपन्नं भवति। मङ्गलपूर्वकेषु हि कार्येष्वारभ्यमाणेष्वपीष्टार्थसिद्धिर्भवति। उदयशब्दश्चायं लोके वृद्धिशब्द-वन्मङ्गलार्थत्वेन प्रसिद्धः। तस्मात् तस्य ग्रहणं मङ्गलार्थं क्रियते।।६७।।

**अ अ इति**।। एकोऽत्र विवृतः, अपरः संवृतः। तेन स्थान्यादेशयोरुभयो रूपाभेदादपि प्रयत्नभेदाद् भेदो भवति। अत्यन्ताभेदे सत्यकारस्य त्वकारवचनमनर्थकं स्यात्। अत्र यो विवृतः, स स्थानी, यः संवृतः, स आदेशः। अकारो विवृतः, स संवृतो भवति। विवृतप्रयत्नोऽकारः संवृतप्रयत्नो भवति। संवृतप्रयत्नमादेशमनुभवतीत्यर्थः। **वृक्षः प्लक्ष इति**। संवृतप्रयत्नविषयोपदर्शनार्थम्। ननुच विवृतोऽकारो नास्त्येव लोके वेदे च; संवृतस्यैव

### पदमञ्जरी

**उदात्तस्वरितपरस्येति वक्तव्य इति**। एतदप्युपलक्षणम्, उदात्तस्वरितयोरित्येव वक्तव्यमिति, इत एव परशब्दार्थलाभात्। **मङ्गलार्थमिति**। उदयशब्दोच्चारणमेव मङ्गलम्। 'मङ्गलादीनि हि शास्त्राणि प्रथन्ते, मङ्गलमध्यानि मङ्गलान्तानि च वीरपुरुषाणि च भवन्ति आयुष्मत्पुरुषाणि च। इह चादौ वृद्धिशब्दः, मध्ये शिवशब्दः—'शिवशमरिष्टस्य कर' इति, अन्ते चायमुदयशब्दः।।६७।।

**अ अ**।। एकोऽत्र विवृतः, परः संवृतः, द्वावप्यविभक्तकौ, यो विवृतस्स स्थानी, यः संवृतः स आदेशः।

### भावबोधिनी

गार्ग्य, काश्यप तथा गालव इनके मत से नहीं—इसका क्या फल है? गार्ग्यस्तत्र। गार्ग्यः क्व। इनमें गार्ग्य आदि तीनों आचार्यों के मत से [ य के अनुदात्त अकार का ] स्वरित आदेश होता ही है।

'उदात्त-स्वरित-परस्य' [ उदात्तः परो यस्मात् सः, स्वरितः परो यस्मात् सः, तस्य तादृशस्य। ] ऐसा कहने के स्थान पर (पाणिनिद्वारा) 'उदय' का ग्रहण मङ्गलसम्पादनार्थ है। और गार्ग्य आदि अनेक आचार्यों के नाम का उच्चारण उनके प्रति सम्मान प्रकट करने के लिये है। [ भाव यह है कि महाभाष्य पस्पशा आह्निक में यह लिखा है—'मङ्गलादीनि हि शास्त्राणि प्रथन्ते, मङ्गलमध्यानि मङ्गलान्तानि च वीरपुरुषाणि च भवन्ति आयुष्यमत्पुरुषाणि च''। अतः पाणिनिने 'वृद्धिरादैच्' यहाँ आदि में 'वृद्धि' शब्द का, मध्य में 'शिवशमरिष्टस्य करे' (४।४।१४३) सूत्र में शिव और शम् का तथा अन्त में इस सूत्र में 'उदय' शब्द का उच्चारण किया है। इससे परम्परा के प्रति पाणिनि का आदरभाव स्पष्ट प्रतीत होता है। ]।।६७।।

'अ अ'—इस सूत्र में प्रथम एक अकार विवृत है और दूसरा अकार संवृत है। (अर्थात् प्रथम = स्थानी विवृत प्रयत्नवाला है और द्वितीय आदेश संवृत प्रयत्न वाला है) इनमें विवृत अकार संवृत किया जाता है। उदा० वृक्षः। प्लक्षः। [ इनमें स्थानी अ विवृत माना जाता और उसका आदेश संवृत माना जाता है। ]

इस व्याकरणशास्त्र (अष्टाध्यायी) में कार्यविशेष के सम्पादन के लिये अकार को विवृत माना गया है, उस अकार का केवल उसी विवृत रूप में ही प्रयोग न होने लगे अर्थात् संवृत रूप में भी प्रयोग हो सके—इसीलिये यह संवृत की प्रत्यापत्ति = संवृत रूपमें पुनर्विधान किया जा रहा है।

**इह शास्त्रे कार्यार्थमकारो विवृतः प्रतिज्ञातः, तस्य तथाभूतस्यैव प्रयोगो मा भूदिति संवृतप्रत्यापत्तिरियं क्रियते।**

**दीर्घप्लुतयोश्चानेन विवृतेनाकारेण ग्रहणं नेष्यते। तेन 'तयोः संवृतो न भवति।**

**न्यासः**

प्रयागेदर्शनात, तदपार्थकमिदम्? इत्याह-**इहेत्यादि**। यद्यपि लोके वेदे च संवृत एवाकारः, तथापीह व्याकरणे कस्यचित् कार्यस्य सिद्धये विवृतोप्यभ्युपगतः। किं पुनस्तत् कार्यम्? अकारस्य चान्योऽन्यापेक्षया सावर्ण्यम्। एतदुक्तं भवति—ह्रस्व-दीर्घाकारौ सवर्णौ यथा स्यातामित्येवमर्थमकारो विवृतगुणः प्रतिज्ञात इति; अन्यथा यदि संवृतविवृतप्रयत्नौ परस्परं सवर्णौ न स्याताम्, ततश्चाकारो गृह्यमाण आकारं न गृह्णीयात्। एवं च सति दण्डाग्रमित्यादावेव 'अकः सवर्ण दीर्घः' इति दीर्घत्वं स्यात् दण्डाढकमित्यादौ तु न स्यात्। 'अभेदका इह शास्त्रे गुणः' इत्युक्तम्, ततोऽयमदोष इति चेत्? न; सवर्णसंज्ञासूत्रे प्रयत्नभेदस्याप्याश्रितत्वात्; अन्यथा तत्र प्रयत्नग्रहणमनर्थकं स्यात्। यदि तर्हि विवृतः प्रतिज्ञातस्तत् किमर्थं तस्येह प्रत्यापत्तिः क्रियते? इत्याह-**तस्येत्यादि**। **तथाभूतस्येति**। विवृतप्रयत्नभूतस्येत्यर्थः।। प्रत्यापत्तिः = पुनः तस्य संवृतगुणस्याकारस्य स्वरूपात् प्रच्युतस्य पुनः स्वरूपस्य प्रतिलम्भः, मृतस्य प्रत्युज्जीवनवत्।

इहानेन विवृतेनाकारेण गृह्यमाणेनाण्त्वात् सकलमवर्णकुलमुदात्तादिभेदभिन्नमष्टादशप्रकारं गृहीतम्, ततश्च यथा गुणान्तरयुक्तस्य ह्रस्वस्य संवृतो ह्रस्व आदेशो भवति, एवं दीर्घप्लुतयोरपि स्यात्। किञ्चादेशोऽयमकारः संवृत उपात्तः, संवृतस्य चाकारस्याण्त्वं नास्ति; प्रत्याहारेऽसन्निवेशात्, ततश्च यथाण्त्वाभावाद् दीर्घप्लुतौ न गृह्णाति, तथा संवृतमपि मात्रिकं गुणान्तरयुक्तं न गृह्णीयात्; एवञ्च सति यद्गुण उच्चारितस्तद्गुणयुक्तस्यैव प्रत्यापत्तिः स्यात् न गुणान्तरयुक्तस्य? इत्याह—**दीर्घप्लुतयोश्चेत्यादि**। कथं पुनदीर्घप्लुतयोरनेन विवृतेनाकारेण

**पदमञ्जरी**

किमर्थमकारस्याकारो विधीयते? इत्याह—**इहेति**। **कार्यार्थमिति**। तत्पुनः कार्यमकारस्य दीर्घप्लुताभ्यां सवर्णसंज्ञा, अन्यथा प्रयत्नभेदान्न स्यात्, ततश्च ह्रस्वोऽकारो गृह्यमाणो दीर्घप्लुतौ न गृह्णीयात्। तत्र दोषः—'अकः सवर्णे दीर्घः', इहैव स्याद्—ऐन्द्राग्नमिति, इह न स्यात्—दण्डाढकमिति। तस्मादेवमादिकार्यार्थमकार इह शास्त्रे विवृतः प्रतिज्ञायते, तत्र यदीयं प्रत्यापत्तिर्न क्रियेत, तदा तस्य तथाभूतस्यैव प्रयोगः स्यात्, स मा भूदिति प्रत्यापत्तिरिह क्रियते।

इह स्थान्यकारो विवृतोऽण्त्वात् सवर्णानां ग्राहक इति दीर्घप्लुतयोरपि स्थाने संवृतोऽकारः प्राप्नोति, आदेशस्त्वकारः संवृतोऽण् न भवतीति सवर्णानां ग्राहको न प्राप्नोति, भाव्यमानत्वात्; ततश्च यद्गुणः संवृत उच्चारितः, तद्गुण एवाष्टादशभेदभिन्नस्यापि अवर्णस्य प्राप्नोति? इत्याशङ्क्याह—**दीर्घप्लुतयोश्चेति**। **इष्टिरेवेयम्**।

**भावबोधिनी**

दीर्घ तथा प्लुत अकारों का इस [ सूत्रस्थ ] विवृत अकार से ग्रहण करना इष्ट नहीं है। इसलिये उन दीर्घ और प्लुत अकारों का संवृत अकार आदेश नहीं होता है।

(विधीयमान) संवृत द्वारा सभी गुणों वाले एकमात्रिक अकार का ग्रहण इष्ट है। इसलिये वह सभी गुणों से युक्त बन जाता है।

**संवृतेन च सर्वगुणस्य मात्रिकस्य ग्रहणमिष्यते। तेन सर्वगुण प्रत्यापद्यते।।**

### न्यासः

ग्रहणमिष्यमाणमपि न भवति? कथं च संवृतेन सर्वगुणयुक्तस्य मात्रिकस्य ग्रहणमिष्यमाणमपि लभ्यते? पूर्वसूत्र उदयग्रहणादिति पूर्वमेव कारणमुक्तमत्रास्माभिरुदयग्रहणस्य प्रयोजनं वर्णयद्भिः।

तपरकरणनिर्देशमन्ये त्वाहुः। अद् अ इति तपरनिर्देशः कर्त्तव्यः। तथा च भाष्य उक्तम्—'सिद्धं तु तपरनिर्देशात्' इति। तत्र प्रथमोऽकारः तः परो यस्मादिति तपरः, द्वितीयस्तु तादपि परस्तपर इति। तस्य विवृतस्य तपरत्वं दीर्घप्लुतनिवृत्त्यर्थम्, संवृतस्य सर्वगुणयुक्तस्य मात्रिकस्य च ग्रहणार्थमिति।।६८।।

### पदमञ्जरी

यद्वा-तपरनिर्देशात्सिद्धम्, 'अद' इति सूत्रं कर्तव्यम्, तत्र तः परो यस्मादिति पूर्वोऽकारस्तपरः, तात्परस्तपर इति द्वितीयः, ततश्च स्थान्यकारो दीर्घप्लुतौ न ग्रहीष्यति, आदेशस्त्वनणपि गुणान्तरयुक्ताँस्तत्कालान् ग्रहीष्यति। एकशेषनिर्देशो वायं द्रष्टव्यः। अत्र षड्मात्रिका अकाराः स्थानिनो निर्दिश्यन्ते, आदेशा अपि षडेव, तत

### भावबोधिनी

**विमर्श**—'अ' के संवृत और विवृत दोनों प्रयत्न हैं। यदि कहीं एक संवृत और दूसरा विवृत होगा तो वहाँ प्रयत्नभेद के कारण 'तुल्यास्यप्रयत्नं सवर्णम्' से सवर्ण संज्ञा न हो सकने से 'दण्ड + आढकम्' आदि में सवर्णदीर्घ नहीं हो सकता। इसी के लिये 'अइउण्' इस सूत्र के महाभाष्य में 'अकारस्य विवृतोपदेशः आकारग्रहणार्थः' इस वार्तिक द्वारा प्रत्याहारसूत्रघटक अकार का विवृत उपदेश प्रतिज्ञात किया गया है। अब उसी विवृत अकार का संवृत अकार प्रस्तुत सूत्र से किया जा रहा है। यदि ऐसा संवृत नहीं किया जाता तो सर्वत्र केवल विवृत अ का ही प्रयोग होने लगता जबकि 'वृक्षः प्लक्षः' आदि में उच्चारणावस्था में संवृत ही उच्चारित होता है।

अकार के तीन भेद होते हैं—ह्रस्व, दीर्घ, प्लुत। पुनः अनुनासिक अननुनासिक भेद से दो दो भेद होते हैं। पुनः उदात्त, अनुदात्त, स्वरित भेद से तीन तीन भेद होते हैं। यहाँ यह ध्यान रखना चाहिये कि इस सूत्र द्वारा दीर्घ तथा प्लुत विवृत अकार का संवृत अकार नहीं किया जाता है। अपि तु केवल ह्रस्व विवृत का ही ह्रस्व संवृत किया जाता है। इस कारण दीर्घ और प्लुत का कभी भी संवृत उच्चारण नहीं होता है।

प्रस्तुत सूत्र में संवृत द्वारा सभी गुणों से युक्त अकार का ग्रहण इष्ट है। इसलिये विवृत में जो जो गुण उदात्तत्वादि हैं वे सभी विधीयमान संवृत में आ जाते हैं।

उक्त कार्य के लिये पतञ्जलि ने 'अ अ' के स्थान पर 'अद' (अत् अ) ऐसा न्यास सुझाया है जिससे तपरकरण द्वारा भिन्न काल वालों का ग्रहण रोका जा सके।

दूसरे विद्वान् 'अदत्' (अत् अत्) ऐसा न्यास सुझाते हैं। यहाँ 'तपरस्तत्कालस्य' के अनुसार केवल ह्रस्व अ का ही स्थानी और आदेश दोनों के रूप में ग्रहण होगा, दीर्घ और प्लुत का नहीं।

तीसरा समाधान एकशेष द्वारा दिया गया है—'अ अ अ' यहाँ प्रथम स्थानी षण्मात्रिक अकार हैं, द्वितीय 'अ' से आदेश भी षण्मात्रिक हैं। अब इन स्थानी और आदेश दोनों में एकशेष होता है इसमें छह स्थानियों के निर्देश के सामर्थ्य से स्थानी के द्वारा भिन्न कालवाले दीर्घ और प्लुत नहीं लिये जा सकते क्योंकि उनका काल द्विमात्रिक त्रैमात्रिक होता है। अतः एकमात्रिक विवृत का आदेश भी एकमात्रिक संवृत ही होगा। उन छःस्थानियों के स्थान में छः ही संवृत आदेश यथा-संख्य से होंगे, जैसा स्थानी है वैसा आदेश—इस प्रकार कोई अनुपपत्ति नहीं है।

यह सूत्र अष्टाध्यायी में त्रिपादी के अन्त में पढ़ा गया है। अतः 'पूर्वत्रासिद्धम्' (८।२।१) के अनुसार यह संवृत-विधान सभी सूत्रों की दृष्टि में असिद्ध रहता है। सभी अकार शास्त्र में विवृत ही रहते हैं। अतः सवर्णसंज्ञा में कोई बाधा नहीं है। यह संवृत आदेश केवल उच्चारण के लिये है। इसीलिये 'सिद्धान्तकौमुदी में लिखा है—'विवृतमनूद्य संवृतोऽनेन विधीयते। अस्य चाष्टाध्यायीं सम्पूर्णां प्रत्यसिद्धत्वाच्छास्त्रदृष्ट्या विवृतत्वमेव। ('अ अ' सूत्र पर)।।६८।।

**इष्ट्युपसंख्यानवती शुद्धगणा विवृतगूढसूत्रार्था।**
**व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम।।**

**।।इति श्रीवामनाचार्यकृतायां काशिकावृत्तौ अष्टमाध्यमास्य तुरीयः पादः समाप्तश्चायमध्यायो ग्रन्थश्च।।**

ॐ • ॐ

**न्यासः**

**इष्ट्युपसंख्यानवतीत्यादि**श्लोकः पूर्वमेव व्याख्यातः।।

**।। इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरण-पञ्जिकायामष्टमाध्यायस्य चतुर्थः पादः समाप्तः ।।**

ॐ • ॐ

**पदमञ्जरी**

उभयत्रैकशेषः, तत्र षण्णां स्थानिनां निर्देशसामर्थ्यात् स्थानिभिर्दीर्घप्लुतौ भिन्नकालौ न गृह्येते। ततः षण्णां स्थानिनां स्थाने षडादेशः संवृता यथासंख्यं भवन्तीति सर्वेष्टसिद्धिरिति शम्।।६८।।

**।।इति श्रीभट्टहरदत्तमिश्रविरचितायां पदमञ्जर्यामष्टमस्याध्यायस्य चतुर्थः पादः।।**

## ।। समाप्तश्चाष्टमोऽध्यायोग्रन्थश्च ।।

ॐ • ॐ

**भावबोधिनी**

इष्टियों (= सूत्र से असंगृहीत लक्ष्यों के साधुत्वबोधक भाष्यवचनों) तथा उपसंख्यानों = कात्यायनप्रोक्त 'वक्तव्यम्' 'वाच्यम्' आदि वार्तिकों से युक्त, शुद्ध गणपाठ से युक्त, सूत्रों के गूढार्थ को प्रकाशित करने वाली, व्युत्पन्न (व्युत्पत्तिसिद्ध) शब्दरूपों की सिद्धि से युक्त अथवा कहीं कहीं उदाहृत शब्दरूपों की सिद्धि [ को प्रदर्शित करने ] वाली—यह 'काशिका' नामक वृत्ति है। [ इष्टि तथा उपसंख्यान क्रमशः भाष्यवचन तथा वार्तिकवचनों के सूचक हैं। सूत्र शब्द पाणिनिप्रोक्त वचनों का। अतः भाष्य-वार्तिक-तथा सूत्रों इन तीनों का आशय इस 'काशिका' वृत्ति में प्रदर्शित है। ]

**विमर्श**—प्रस्तुत संस्करण के प्रथम भाग पृष्ठ संख्या ३ पर यह श्लोक पहले भी प्रकाशित हो चुका है। वहीं पर इसकी न्यास और पदमञ्जरी व्याख्यायें देखनी चाहिये।

ऐसा प्रतीत होता है 'काशिका' का वैशिष्ट्य प्रदर्शित करने की भावना से आदि में जयादित्य तथा अन्त में वामन ने अर्थात् दोनों ही आचार्यों ने इस श्लोक का उल्लेख किया है।

।। इस प्रकार वामनाचार्यविरचित 'काशिका'-वृत्ति में अष्टम अध्याय का चतुर्थपाद सम्पूर्ण हुआ ।।

**।। इस प्रकार आचार्य जयशङ्कर-लाल-त्रिपाठी द्वारा विरचित 'भावबोधिनी'-हिन्दी-व्याख्या में 'काशिका' वृत्ति के अष्टम अध्याय का चतुर्थपाद सम्पूर्ण हुआ ।।**

ॐ • ॐ

कृपया विश्वनाथस्य गुरु-पितृ-प्रसादतः ।
अष्टमाध्यायपर्यन्ता सम्पूर्णा **'भावबोधिनी'** ॥१॥

भाद्रमासेऽसिते पक्षे पञ्चम्यां मङ्गले दिने ।
काशिकाभिनवा हिन्द्यां व्याख्या पूर्णार्थबोधिनी ॥२॥

ख्याता विप्रगणाः समस्तभुवने ये कान्यकुब्जाभिधा-
स्तेष्वेवोग्रतपा ह्युदारचरितो यागाद्यनुष्ठान-कृत् ।
शास्त्राभ्यासरतो युतो बुधजनैर्दाने सदा तत्पर-
शिशष्यव्यूह-समर्चिताङ्घ्रिकमलो जात**स्त्रिपाठ्यन्वयः** ॥३॥

**अयोध्यानाथाख्यो**ऽजनि विमलमतिकस्तत्र विबुध-
स्ततो जातः ख्यातोऽनुपमचरितः सत्यवचनः ।
सुधीः **'केदाराख्यो'** निजगुणगणैरर्जितयशाः
महात्यागी दानी दिशि दिशि जनैरर्चित-पदः॥४॥

सुतस्तदीयोऽनुपमोऽद्वितीयो **'बनारसीलाल'**-पदाभिधानः ।
चारित्र्यवैदुष्यगुणैः प्रसिद्धिं ह्यवाप्तवानेष समस्तभूमौ ॥५॥

शिवा शिवस्येव तु यस्य पत्नी **'सियादुलारी'** तिपदप्रसिद्धा ।
सुसेव्य मध्येऽत्यजदस्य सार्धं प्रसूय नाना सुतकान् सुसाध्वी ॥६॥

पित्रोरभूदखिलपुण्यतपःप्रभावान्मध्यःसुतः सरलधीः **'जयशङ्कराख्यः'** ।
काशीमुपेत्य विबुधोत्तमप्राप्तशिक्षः सत्**काशिकां** विवृतवान् निजमोदहेतोः ॥७॥

विश्वेश्वरस्य दयया कृपया गुरूणां ह्याशीर्बलेन सुकृतेन च स्वीयपित्रोः ।
सम्पूर्य ग्राह्यवचनैः सह **'काशिकेयं'** भक्त्यार्प्यतेऽद्य शिवयोरनुरञ्जनाय ॥८॥

॥ ॐ शान्तिः शान्तिः शान्तिः ॥

०३६० ● ०३६०

# अष्टमाध्यायस्थ-पाणिनीय-सूत्र-सूची

# काशिकास्थित-वार्त्तिक-भाष्येष्टि-वचनानां वर्णानुक्रमेण सूची[1]



---

१. काशिका में उपलब्ध वार्तिकों तथा भाष्येष्टियों में कहीं-कहीं भेद-निर्णय करना संभव नहीं है। अतएव सभी को एक साथ लिख दिया गया है।

ଔଈ ● ଔଈ